## याज्ञवल्क्यः

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

प्रजापालनं क्षत्रियधर्मः ; ब्राह्मणरक्षणं दानादिना ७१३. दण्डस्य धर्म एव स्वरूपम् ७१४. शुचिः प्राज्ञो राजैव न्यायतो दण्डप्रणयनाधिकृतः, न कामक्रोधादि-वशोऽप्राज्ञो राजा; दण्डप्रणयनविधिः ७१५. राज्यप्राप्ति-स्थितिकरो नयसंक्षेपः ७१६.

राजशिक्षा—

विद्याचतुष्टयाध्ययनं राज्ञः कर्तव्यम् ८७७.

राजदिनकृत्यम्—

समुत्थानं आत्मरक्षणं आयव्ययदर्शनं व्यवहारदर्शनं भोजनं हिरण्यनिक्षेपः मन्त्रिभिः सह चारदर्शनं दूतप्रेषणं बलदर्शनं संध्योपासनं गूढभाषणश्रवणं गीतनृत्यादिसेवा रात्रिभोजनं स्वाध्यायः संवेशनं प्रतिबोधः शास्त्रचिन्तनं दानं च दिनकृत्यानि राज्ञः ९५२.

राज्ञः आत्मरक्षा—

कृतरक्षः कार्याणि पश्येत् ९८०.

राजकर्तव्यानि—

ग्रहाणां पूजनम् ; यज्ञाः कर्तव्याः; दानादिविषयकः राजशासनलेख्यविधिः १११३.

## नारदः

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

वर्णाश्रमधर्मपालनविधिः श्रुतिस्मृत्यविरुद्धस्य जन-हितधर्मस्य प्रवर्तनाधिकारश्च ७१८. प्रजारक्षणव्यवहार-दर्शनात्मरक्षणानि कर्तव्यानि; ब्रह्मक्षत्रे प्रजाधर्माभिरक्षके ७१९. वार्तात्रयीदण्डनीत्यनुसारेण प्रजारक्षणम् ; राष्ट्रे स्त्रीणां रक्षणं राजधर्मः ७२०.

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—

प्रजानां मात्स्यन्यायेनाभिभवस्य परिहारार्थं राजा ८१६. अग्नीन्द्रसोमयमकुबेरपञ्चदेवतात्मको राजा नाव-मन्तव्यः नमस्यश्च, तस्याऽऽज्ञा च नातिक्रमणीया ८१७. राजब्राह्मणयोरधीना जगत्स्थितिः ८१९.

राजप्रकाराः—

राजा त्रिविधः— (१) सम्राट् चक्रवर्ती वा (२) सकरः (३) अकरोऽधीश्वरो वा ८३५.

राज्याधिकारी—

कुलक्रमागते राज्ये ज्येष्ठ औरसः पुत्रोऽधिकृतः ८५६. अनधिकारेण भुज्यमानेऽपि राज्ये नाधिकारो-त्पत्तिः; ज्येष्ठस्यैव राज्याधिकारः, इतरेषां वृत्तिमात्रा-धिकारः ८५७.

राजशिक्षा—

विद्यात्रयानुवर्तनम् ८७८.

राजदिनकृत्यम्—

प्रातः ब्राह्मणदर्शनं अन्येषामभिवादनं च ९५६.

राज्ञः आत्मरक्षा—

आत्मरक्षणस्य कर्तव्यता, विषदायिलक्षणानि ९८०.

## बृहस्पतिः

राजशब्दार्थविचारः—

बलेन प्रजारञ्जको वपुषा दीप्यमानश्च राजपद-वाच्यार्थः ७८६.

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—

राजा सोमाद्यष्टदेवतांशैर्निर्मितः ; राजा वर्णाश्रमाणां नेता निर्मितः ८१९.

राज्याधिकारी—

ज्येष्ठ एव राज्याधिकारी ८५७.

राजदिनकृत्यम्—

मङ्गलशब्दैः प्रतिबोधः संध्योपासनं देवब्राह्मणादि-नमस्कारः शुद्धविश्वस्तपरिवारग्रहणं च; उत्थितस्य कृत-शौचस्य राज्ञः गुरुज्योतिर्विद्वैद्यदेवविप्रपुरोहितपूजा सभा-प्रवेशनं धर्मार्थशास्त्रश्रवणं च कार्याणि ९५७.

राज्ञः आत्मरक्षा—

शुद्धविश्वस्तपरिवारो युक्तः ९८०.

राजकर्तव्यानि—

दानादिविषयकः राजशासनलेख्यविधिः ; जातिदेश-कुलधर्माः पालनीयाः १११५.

राज्ञः आत्मरक्षा—
आत्मा रक्षणीयः ९८०.
राजपुत्ररक्षणम्—
कुमाररक्षणे यत्नः कर्तव्यः १०११.
राजकर्तव्यानि—
स्त्रीणां विवाहः ११२१.

## प्रचेताः

राजदिनकृत्यम्—
राज्ञि राजपुरुषेषु च आशौचापवादः ९५८.

## जैमिनिसूत्रम्

राजशब्दार्थविचारः—
प्रजारक्षणादिगुणयुक्तः क्षत्रिय एव राजपदवाच्यार्थः ७८६.

## मार्कण्डेयस्मृतिः

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—
दुष्टनिग्रहः शिष्टपालनं च राज्ञः कर्तव्यम्; शिष्टपदार्थः ७२७.

## आश्वलायनः

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—
सर्वे धर्मा राजधर्माधीनाः, राजक्षत्रियसार्वभौमपदानां निरुक्तयः; राज्ञा राष्ट्रजनपदग्रामपुरान्तःपुरस्त्र्यादीनि रक्षणीयानि; दण्डप्रणयनविधिः; ब्राह्मणरक्षणविधिः देवतास्थानरक्षणविधिश्च ७२७. प्रजारक्षणं आत्मरक्षणं शरणागतरक्षणं च, प्रजारक्षणे धर्मांशः अरक्षणे पापांशः राजगामी ७२८. राज्ञो नित्यकृत्यानि, सर्वधर्माणां स्थापकत्वं राज्ञः ७२९.
राजशब्दार्थविचारः—
धर्मेण प्रजारञ्जकः क्षत्रियः राजपदवाच्यार्थः ७८६.
राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—
धर्मपर एव राजा पृथिवीपालः; राजा अष्टलोकपालांशसृष्टो नावमन्तव्यः अर्चनीयश्च ८२१.
राजप्रकाराः—
सार्वभौमलक्षणम् ८३५.

इन्द्रियजयः—
जितात्मा राजा एव जगज्जयसमर्थः ९२२.
राज्ञः आत्मरक्षा—
आपदि सर्वस्वदानेन आत्मा रक्षणीयः, आत्मरक्षार्थं दुर्गे वासः सशस्त्ररक्षकैः सह, भोजनादिपरीक्षा ९८१.

## ब्रह्माण्डपुराणम्

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—
राज्ञः श्रेष्ठो धर्मः प्रजापालनं धर्मतः ७२९.

## मार्कण्डेयपुराणम्

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—
शुल्कग्रहणं रक्षणार्थम्; मदालसोक्ता राजनीतिः— पृथ्वीजयः साधुरक्षणं दुष्टहननं गोविप्रार्थे देहत्यागः इत्यादीनि राजकर्तव्यानि ७३०. प्रजारञ्जनं व्यसनत्यागः सर्वत्राविश्वासित्वं कामक्रोधादिजयः काककोकिलभृङ्गबकव्यालमयूरहंसादीनां चरितानुकरणं शक्रार्कादिपञ्चदेवरूपधारणं स्वधर्मे प्रजास्थापनं च राजधर्माः ७३१.
राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—
इन्द्रसूर्ययमसोमवायुरूपो राजा ८२२.
राज्याधिकारी—
ज्येष्ठस्यैव राज्ये सार्वभौमाधिकारः, कनिष्ठभ्रातॄणां अवान्तरराज्याधिकारः ८५७.
इन्द्रियजयः—
जितकामक्रोधादिषट्को राजा एव शत्रुजेता ९२२.

## मत्स्यपुराणम्

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—
ब्रह्मणो राजनीतिः— सतां रक्षणं असतां निग्रहः संग्रामेष्वनिवर्तित्वं अनाथवृत्तिकल्पनं स्वधर्मस्थापनं सर्वत्राविश्वासित्वं बकसिंहादीनामनुकरणं इन्द्रियजयः व्यसनत्यागः सामाद्युपायैः शत्रुवशीकरणं दण्ड्यादण्ड्यविवेकश्च राजकर्तव्यानि ७३२. दण्डलक्षणं व्यापकं दण्डस्वरूपं च, दण्डप्रणयनविधिः ७३६.
राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—
देवतांशसृष्टो राजा, अष्टौ देवव्रतानि राज्ञः ८२२.

## विष्णुपुराणम्



## हरिवंशः



## श्रीमद्भागवतम्



## लिङ्गपुराणम्



## विष्णुधर्मोत्तरपुराणम्

राजदिनकृत्यम्—

संगीतश्रवणेन निद्रात्यागः स्नानं संध्योपासनं यज्ञः देवार्चनं शुभाशुभलक्षणपरिज्ञानं अशुभनाशनं ब्राह्मणामात्यप्रजादर्शनं व्यवहारदर्शनं व्यायामः भोजनं मणिधारणं कोशादिदर्शनं अन्तःपुरप्रवेशश्च ९५८.

राज्ञः आत्मरक्षा—

अविश्वास्याः स्त्रियः, परीक्षितमेव भोजनं कार्यम् ९८४.

## गरुडपुराणम्

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

बृहस्पत्युक्ता राजनीतिः— क्षितिपालनं शत्रुजयः अपीडनेन परराष्ट्रभोगः इन्द्रियजयः युक्तियुक्तशास्त्रयुक्तयोरलङ्घनं षड्विध उत्साहश्च ७४६. सावशेषकार्यकरणम्, अविश्वासित्वं सर्वत्र, मृदुत्वक्रूरत्वादिविवेकः ७४७.

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—

अबलानां बलं राजा ८२५.

राजशिक्षा—

राज्ञः शिक्षा आवश्यिकी ८७९.

## पद्मपुराणम्

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—

सर्वदेवमयो रामो राजा, दुर्बलानां च बलं रामो राजा ८२५. राजा एव धर्मः प्रजापालकश्च ८२६.

राज्याधिकारी—

ज्येष्ठस्यैव राज्याधिकारः ८५९.

## ब्रह्मपुराणम्

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

शिष्टपालनं दुष्टनिग्रहश्च ७४७.

## ब्रह्मवैवर्तपुराणम्

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

शिष्टपालनं दुष्टनिग्रहश्च ७४७.

## अग्निपुराणम्

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

पुष्करोक्ता अग्निकथिता च राजनीतिः— राजशब्दनिरुक्तिः, दुर्गे वसतिः, देवालयनिर्माणं देवपूजनं च, ब्राह्मणपालनं साध्वीपालनं बालानाथरक्षणं च, चौरहृतद्रव्यप्रत्यर्पणम्; अन्तःपुरम्, धर्मार्थकामाः पुरुषार्थाः, इन्द्रियजयः, भृत्यजयः, अनाथरक्षणम्, स्वधर्मरक्षणम्, बकसिंहाद्यनुकरणम् ७४८. दण्डप्रणयनविधिः; चतुर्विधं राजवृत्तं सामान्यधर्मः सद्वृत्तं राजमहात्मवृत्तं च ७४९. राजा सर्वप्राणिनामाजीव्यः, अध्यक्षनियोजनम्, अष्टवर्गानुपालनम्, प्रजानां पञ्चधा भयात् रक्षा, आत्मनः राष्ट्रस्य च रक्षा ७५०.

राजशब्दार्थविचारः—

प्रजानुरञ्जनात् राजा ७८६.

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—

राजा सूर्यादिदेवतारूपः ८२६.

राजशिक्षा—

त्रैविद्येभ्यः विद्याचतुष्टयं राज्ञा अध्येयम् ८७९.

इन्द्रियजयः—

जितेन्द्रिय एव राजा महीपालनसमर्थः ९२३.

राजदिनकृत्यम्—

संगीतेन निद्रात्यागः गूढपुरुषदर्शनं आयव्ययश्रवणं शौचं संध्या पूजा हवनं पितृतर्पणं धेनुदानं सभाप्रवेशनं तत्र अमात्यमन्त्रिब्राह्मणदर्शनं कार्यनिर्णयः मन्त्रणं व्यायामः भोजनं शास्त्रचिन्ता कोशादिदर्शनं अन्तःपुरप्रवेशश्च ९६०.

राज्ञः आत्मरक्षा—

राजरक्षा विषादिभ्यः ९८४.

## देवीभागवतम्

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

दण्डः स्वधर्मस्थापकः ७५०.

राजकर्तव्यानि—

राज्ञो नित्यकृत्यानि ११२३.

## कालिकापुराणम्

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—

राजा मनुष्याणां मित्रम्, राजा सर्वदेवमयः ८२६.

राज्याधिकारी—

औरसादिद्वादशपुत्रेषु औरसस्य राज्येऽधिकारः प्रथमः, तदभावेऽन्येषां क्रमेण पौनर्भवस्वयंदत्तदासान् वर्जयित्वा ८५९.

राजशिक्षा—

वृद्धोपासना वेदशास्त्रश्रवणं च राज्ञा कर्तव्यम् ८७९.

इन्द्रियजयः—

इन्द्रियजयविधिः ९२३.

राजदिनकृत्यम्—

अग्निहोत्रम्, वर्ज्यं स्वापगृहम्, वर्ज्यानि अवर्ज्यानि च भक्ष्याणि, वर्ज्यानि यानानि, वर्ज्यानि श्राद्धानि जीवत्पितृकस्य ९६०.

राज्ञः आत्मरक्षा—

नैकाकी स्यात्, अमात्यादयः परीक्षणीयाः ९८५.

राजपुत्ररक्षणम्—

राजपुत्रे गुणाधानं राजपुत्रस्य महिष्याश्च संशोधनं च कर्तव्यम् १०१२.

राजकर्तव्यानि—

राज्ञो नित्यकृत्यानि ११२४.

## आदिपुराणम्

राजदिनकृत्यम्—

राजादीनां आशौचापवादोपपत्तिः ९६१.

## कामन्दकीयनीतिसारः

राजनीतिप्रणेतारः—

राजनीतिप्रणेता चन्द्रगुप्तमौर्यामात्यो विष्णुगुप्तः ५३२.

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

ग्रन्थप्रस्तावः ७५०. धर्मार्थकामरूपत्रिवर्गस्य युक्त्या सेवनम् ७५१. दण्डलक्षणं दण्डनीतिलक्षणं च; चातुर्वर्ण्यधर्माः ७५२. आश्रमचतुष्टयधर्माः ७५३. सर्ववर्णसाधारणा धर्माः; धर्मप्रवर्तकः धर्मरक्षकश्च राजा ७५६. दण्डप्रणयनविधिः ७५७. यतात्मा राजैव दण्डप्रणयनाधिकृतः ७५९.

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—

राजा जगतो नेता ८२६.

राजशिक्षा—

जितेन्द्रियता विद्यावृद्धोपासना विद्याचतुष्टयाध्ययनं च राज्ञः कर्तव्यम् ८७९. विद्यापरिगणनं विद्यानां लक्षणं प्रयोजनं च ८८३.

इन्द्रियजयः—

नयस्य विनयः शास्त्रनिश्चयो मूलं तस्य चेन्द्रियजयः, शास्त्राधीना च श्रीः; श्रियः कारणं गुणसंघातः ९२४. राज्ञा आत्मनो विनयः प्रथमं ततः अमात्यानां भृत्यानां पुत्राणां प्रजानां च क्रमेण संपाद्यः ९२५. इन्द्रियजयरूपस्य विनयस्य विधिः तत्त्वविवरणसहितः साङ्गः सविस्तरः ९२६. इन्द्रियजयस्य दुष्करत्वम् ९३३. इन्द्रियजयाभावे राज्ञां नाशः ९३५. राज्ञां जितेन्द्रियाणां महीजयः ९३६.

राजदिनकृत्यम्—

नयेन कार्याणि कृत्वा स्वापः ९६१.

राज्ञः आत्मरक्षा—

शरीरं धर्मसाधनं रक्षणीयम्; विषादिभ्यः रक्ष्यः आत्मा; विषपरीक्षा ९८५. प्रसाधनादीनि सुपरीक्षितानि सेव्यानि; यानवाहनमार्गादीनि ज्ञातानि उपयोजनीयानि; परीक्षितो जनः आसन्नवर्ती कर्तव्यः ९८९. दूरात्समाचरणीया जनाः; परिहार्या नौः; जलावगाहनविधिः; उद्यानवनविहरणविधिः ९९०. अगम्यौ देशकालौ ९९१. अन्तर्गृहरक्षा ९९२.

राजपुत्ररक्षणम्—

राज्ञः आत्मरक्षणं कर्तव्यम् १०१२. अविनीतराजपुत्रेषु राज्यनाशः; अविनीतराजपुत्रस्य सुखबन्धनं शासनं च १०१३.

राजकर्तव्यानि—

धर्मनिष्ठस्य महात्मनो राज्ञः विविधं वृत्तम् ११२५.

## शुक्रनीतिः

राजनीतिप्रणेतारः—

स्वयंभूप्रणीतनीतिशास्त्रसारोद्धारः शुक्रेण भार्गवेण कृतः ५३४.

राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च—

दण्डनीतिलक्षणम्; अर्थशास्त्रलक्षणम्; दण्डनीतिशास्त्रानुसारेणैव राज्ञा शासनं कर्तव्यम् ७५९. दण्डप्रणयनविधिः; त्रिविधेन तपसा सात्त्विकेन राजसेन तामसेन च राज्ञः त्रैविध्यम् ७६२. राजा कालस्य कारणम् ७६३. राजा देवांशो रक्षोंशश्च, सप्तगुणो राजा ७६४. नृपसहायगणः नृपांशसदृशः; राज्ञः सद्वृत्तम्; दण्डप्रयोजनम् ७६५. शुक्रोक्तनीतेर्महिमा ७६६.

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः—

प्रजानां नेता आचारप्रेरको राजा; जगतः रक्षणार्थं इन्द्रादिदेवमयो राजा ब्रह्मणा सृष्टः ८३०. प्रजानां दासः स्वामी देवश्च राजा धर्मनीतिपरः ८३१.

राजप्रकाराः—

राजानः सामन्तमाण्डलिकराजमहाराजस्वराट्सम्राट्विराट्सार्वभौमाः अष्टविधा उत्तरोत्तरं वरीयांसः ८३५.

राज्याधिकारी—

औरसो ज्येष्ठः पुत्रोऽदोषः राज्येऽधिकृतः, तदभावे कनिष्ठो भ्राता, तत्पुत्रोऽग्रजः, तदभावे कनिष्ठोऽपि, न राज्यविभागः पुत्रेषु, दत्तादयोऽपि औरसाभावे राज्येऽधिकृताः, मित्रमपि राज्येऽधिकरोति ८६०. जीवता राज्ञा पुत्राय अखिलराज्याधिकारो न देयः ८६१. ज्येष्ठे सति गुणवतोऽपि कनिष्ठस्यानधिकारः ८६२.

राजशिक्षा—

विद्यावृद्धोपासना राज्ञा कर्तव्या, जितेन्द्रियता विद्याचतुष्टयाध्ययनं च राज्ञः कर्तव्यम्; विद्याचतुष्टयस्य लक्षणं प्रयोजनं च ८८८. विद्यानां कलानां च परिगणनम् ८८९. द्वात्रिंशद्विद्यानां स्वरूपम् ८९०. चतुःषष्टिकलानां स्वरूपम् ८९३.

इन्द्रियजयः—

नयस्य विनयः शास्त्रनिश्चयो मूलम्, तस्य इन्द्रियजयः ९३६. राज्ञा आत्मनो विनयः प्रथमम्, ततः पुत्राणां अमात्यानां भृत्यानां प्रजानां च क्रमेण संपाद्यः; इन्द्रियजयविधिः साङ्गः सविस्तरः ९३७. इन्द्रियजयाभावे राज्ञां नाशः; इन्द्रियजये राज्ञां भूमिविजयः ९४०.

राजदिनकृत्यम्—

उत्थाय आयव्ययदर्शनं शौचं संध्यादिकर्म व्यायामः दानं व्यवहारदर्शनं क्रीडा भोजनं वार्ताश्रवणं इत्यादीनि कृत्यानि कालविभागेन ९६१.

राज्ञः आत्मरक्षा—

भोज्यपरीक्षा; रक्षकनियोजनम्; अन्यनृपोऽविश्वसनीयः ९९६. नासावधानः स्यात् ९९७.

राजपुत्ररक्षणम्—

औरसस्य युवराजता प्रशस्ता; राजपुत्ररक्षणं यौवराज्यार्हता च विनयाधानेन १०१४. दुर्वृत्तराजपुत्रस्य सुखबन्धनम्; पितुराज्ञा प्रमाणम् १०१५. राजपुत्रवृत्तम्; राजपदं प्राप्तस्य वृत्तम् १०१७.

राजकर्तव्यानि—

अष्टधा राजवृत्तम्; निन्द्यो राजा ११३९. धर्मरतिकारणानि; प्रजया त्याज्यो राजा; आनृशंस्यादयो धर्माः ११४१. कार्यस्थानगोपनम् ११४३. विशेषनियमानां शासनडिण्डिमैर्ज्ञापनं प्रजाभ्यः राजशासनस्य चतुष्पथे लिखित्वा स्थापनं च ११४४. मार्गसंरक्षणम्; आयस्य षोढा व्ययः; नित्योद्यमशीलता ११४६. दायादानामैकमत्यं श्रेयः, दायादानामधिकाराः ११४७. अतिस्तवनं न श्रोतव्यम्; विचार्या कार्यक्षमता गजाश्वरथपशुभृत्यादीनाम्; दूरस्थवार्ताग्रहणं भृत्यशिक्षणं च, विद्याकलावर्धनं शूरनियोजनं देशनिरीक्षणं इत्यादीनि कर्तव्यानि ११४८. अन्यायवर्तिराज्ञां राज्यहरणम् ११४९. आपद्वृत्तं राज्ञः; दायादसंबद्धकर्तव्याकर्तव्यचिन्ता ११५०. गुणिजनपोषणम्; युगप्रवर्तको राजा ११५१. अन्यनृपेऽविश्वासः कार्यः; स्त्रीपुत्रभृत्यादिषु सावधानता; पुत्रे राज्यभारन्यासकालः;

राजकर्तव्यानि–

बान्धवसंमानः; शरणागतरक्षणम्; आत्मनः स्वास्थ्यस्य रक्षा ११६४.

## अनिर्दिष्टकर्तृकवचनानि

राजनीतिप्रणेतारः–

राजशास्त्रप्रणेतृपरंपरा– ब्रह्मा, नारदः, शक्रः, गुरुः, भार्गवः, भारद्वाजः, विशालाक्षः, भीष्मः, पाराशरः, मनुः, अन्ये ऋषयः, विष्णुगुप्तश्च ५३४.

राजशब्दार्थविचारः–

राज्यकर्ता राजपदवाच्यार्थः ७८६.

राज्ञः प्रयोजनोत्पत्तिप्रशंसाः–

धर्मो राजाधीनः ८३३.

राजप्रकाराः–

अकरप्रकारौ ८३६.

राज्याधिकारी–

राज्येऽधिकृतो लक्षणसंपन्नो ज्येष्ठः पुत्रः, तदभावे ज्येष्ठपौत्रादयः क्रमेण ८६३.

राजदिनकृत्यम्–

दन्तधावनस्नानार्घ्यप्रदानमुखावलोकनघृतपात्रदानानि क्रमेण कार्याणि ९६७.

राज्ञः आत्मरक्षा–

पत्नीतो राजरक्षा; चारभेदे शस्त्रग्रहणम् १००७.

राजपुत्ररक्षणम्–

राजपुत्रो विनेयः १०२०.

राजकर्तव्यानि–

सद्यः कार्यनिर्वर्तनम् ११६४.

# शुद्धिपत्रम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ५५२ | २ | १३ | कच्चित्त | कच्चित्ते |
| ५५४ | १ | १५ | क्षत्रधर्म ...साध्या | सर्वधर्मेभ्यः क्षत्र- धर्म एव श्रेयान् |
| ५६५ | „ | १९ | भ्रणहा | भ्रूणहा |
| ५७० | २ | ३ | काव्यश्चैव | काव्यश्चैव |
| ५८९ | १ | १ | दड | दण्ड |
| ५९६ | २ | १७ | धमाश्च | धर्मांश्च |
| „ | „ | २५ | सवाणि | सर्वाणि |
| ६०२ | „ | २० | त्सवा | त्सर्वा |
| ६०३ | १ | १७ | स्पध | त्स्पर्ध |
| ६०४ | „ | ६ | षाथ | षार्थ |
| ६०५ | „ | ४ | मदु | मृदु |
| „ | „ | १४ | क्रर | क्रूर |
| „ | २ | ६ | कश्च | केश्च |
| ६०६ | „ | १३ | द्धम | द्धर्मं |
| ६१० | १ | १३ | वधय | वर्धय |
| „ | २ | ६ | हि य | हि यं |
| ६१२ | १ | १४ | सूयुाज | सूयुर्जि |
| ६१७ | „ | ३ | वक्ष्यप्रा | वक्ष्यमा |
| ६२२ | २ | ६ | धमति | धर्मेति |
| ६२६ | १ | ५ | प्रह्लादन | प्रह्लादेन |
| „ | „ | ६ | त्रलोक्यं | त्रैलोक्यं |
| „ | २ | ९ | बाह्मण | ब्राह्मण |
| ६२८ | „ | „ | महेन्द्रण | महेन्द्रेण |
| ६३९ | „ | १२ | विश्वमित्र | विश्वामित्र |
| ६४३ | „ | १४ | षडभागं | षड्भागं |
| ६४४ | „ | १९ | भ्रणहा | भ्रूणहा |
| ६५० | „ | १ | स्नेहे नब | स्नेहेन ब |
| „ | „ | २६ | स्नहन | स्नेहेन |
| ६५३ | „ | १२ | सदव | सदेव |
| ६५४ | १ | २३ | फल | फलं |
| ६५७ | २ | ६ | रितर्न | रितैर्न |
| „ | „ | १० | भिनिर्वृ | भिर्निर्वृ |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ६६० | १ | १ | भषितः | भूषितः |
| ६६१ | २ | १३ | बाह्मणैः | ब्राह्मणैः |
| ६६५ | „ | १४ | नशंस | नृशंस |
| ६८१ | „ | १ | सग्रहः | संग्रहः |
| ६८२ | १ | २९ | षुरुषो | पुरुषो |
| ६८४ | „ | २८ | प्रकरणे | प्रकरणे |
| ६९४ | „ | ९ | ब्राह्मण | ब्राह्मण |
| „ | „ | ११ | ब्राह्मण | ब्राह्मण |
| „ | „ | १२ | परिभा | पारिभा |
| ६९५ | २ | १ | म्रियाम | म्रियमा |
| ७१८ | १ | ५ | किल्विष | किल्बिष |
| „ | „ | १८ | श्रति | श्रुति |
| ७१९ | २ | १९ | त्कृतम | त्कृतम् |
| ७२१ | „ | ४ | नपः | नृपः |
| „ | „ | ७ | गहस्य | गृहस्य |
| ७२२ | १ | १४ | नपः | नृपः |
| ७२६ | „ | २४ | समथा | समर्था |
| ७२८ | „ | ६ | ग्निब्र | ग्निर्ब्र |
| „ | „ | १९ | समूल | समूलं |
| ७३० | „ | „ | ध्रवम् | ध्रुवम् |
| „ | „ | ३२ | १८–२७ | ११८–१२७ |
| ७३६ | २ | ८ | षौरुषे | पौरुषे |
| ७३७ | „ | ३ | बिदुर्बु | विदुर्बु |
| ७४५ | „ | १९ | यान्नपः | यान्नृपः |
| „ | „ | २६ | कुलं | कूलं |
| ७४८ | „ | १९ | करिभ्यो | कारिभ्यो |
| ७५५ | „ | २५ | ष्वयङ्गः | ष्वङ्गः |
| ७६२ | १ | ५ | गीष्म | ग्रीष्म |
| ७६५ | २ | २२ | सनिय | संनिय |
| ७६८ | १ | ७ | मुर्खं | मूर्खं |
| „ | २ | १५ | [illegible]धो | लुब्धः |
| ७६९ | „ | १३ | साधभिः | साधुभिः |
| ७७१ | „ | १९ | शौच | शौचं |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ७७२ | १ | १२ | वश्वानरो | वैश्वानरो |
| ७७८ | ,, | १० | दथा | दर्थो |
| ७९४ | ,, | १ | कमल | कमलं |
| ७९९ | २ | १३ | श्रयो | श्रेयो |
| ८०१ | १ | २८ | भामु. | भामु. |
| ८०३ | ,, | ११ | सम्यक | सम्यक् |
| ८११ | २ | २८ | समिप | समीप |
| ८५६ | ,, | ३१ | कात्याायन | कात्यायन |
| ८६७ | ,, | २७ | त्रीयी | त्रयी |
| ८७४ | ,, | ९ | वद्ध | वृद्ध |
| ८७७ | ,, | ८ | त्रविद्यवृद्ध | त्रैविद्यवृद्धे |
| ८७९ | १ | २७ | १११।१९ | ११११।१९ |
| ८८० | ,, | १८ | वद्धोप | वृद्धोप |
| ८८८ | ,, | २३ | सम्यङ | सम्यङ् |
| ८९२ | २ | २ | भेदन | भेदेन |
| ९०१ | ,, | ३३ | द्रब्य | द्रव्यं |
| ९०३ | १ | २४ | भपस्या | भूपस्या |
| ९०८ | २ | २८ | भपते | भूपते |
| ९०९ | ,, | ६ | स्याथ | स्यार्थे |
| ९१० | ,, | २७ | सत्पुरुषो | सत्पुरुषो |
| ९१२ | १ | १८ | च्छद्धा | च्छ्रद्धा |
| ९१३ | २ | २६ | नो खलः | नः खलः |
| ९१५ | ,, | २९ | पशनां | पशूनां |
| ९२० | ,, | ९ | क्राम | काम |
| ९२१ | १ | ७ | इश्वरो | ईश्वरो |
| ९२२ | ,, | ३ | सत्राणि | सूत्राणि |
| ९२५ | २ | १ | मत्री | मैत्री |
| ९२८ | १ | १० | पवग | पवर्गं |
| ९३० | ,, | १५ | सरोधं | संरोधं |
| ९३४ | ,, | २८ | ऽऽम | ऽऽत्म |
| ९३५ | २ | १६ | स्तथव | स्तथैव |
| ९३६ | १ | १ | तथवो | तथैवो |
| ,, | ,, | १९ | नपः | नृपः |
| ९३७ | २ | ५ | नपतिः | नृपतिः |
| ९३८ | १ | ३१ | सामिष | सामिषं |
| ९४३ | २ | १९ | निणये | निर्णये |
| ९४५ | १ | २४ | दुत्तर | दुत्तरं |
| ,, | २ | १२ | बाह्मे | ब्राह्मे |
| ९५१ | ,, | ६ | अक | अर्क |
| ९६० | १ | १२ | संगातन | संगीतेन |
| ,, | ,, | १३ | संध्य | संध्या |
| ,, | ,, | २० | स्वनर्गी | स्वनैर्गी |
| ९६३ | ,, | २८ | भत्य | भृत्य |
| ९६५ | २ | २१ | नुकूल | नुकूलं |
| ९७१ | ,, | ९ | गढः | गूढः |
| ९८९ | १ | १७ | रक्षो | रक्ष्यो |
| ९९४ | ,, | २० | गहग | गृहग |
| ,, | ,, | २१ | प्ररितो | प्रेरितो |
| ९९६ | ,, | ३ | संकलं | सकलं |
| ,, | २ | ४ | बभ्रः | बभ्रुः |
| १००६ | ,, | ५ | कुलिन | कुलीन |
| १००७ | १ | २३ | भजनीयानि | न भजनीयानि |
| ,, | २ | १९ | नुपुरेण | नूपुरेण |
| १०४३ | १ | ३० | जितात्मा | जितामा |
| १०४९ | २ | १२ | व्यमुत्स | व्यमुत्सृ |
| १०५६ | १ | ८ | नोहते | नोपहते |
| १०६९ | २ | ९ | घाम | ग्रामिं |
| १०७४ | ,, | ११ | द्युत | द्यूत |
| १०७५ | ,, | ३३ | श्लाकः | श्लोकः |
| १०८० | १ | २३ | एयं | एवं |
| १०८८ | ,, | ७ | भर्या | भार्या |
| १०९० | ,, | १५ | एव | एवं |
| ११२२ | २ | १९ | तस्नि | तस्मि |
| ,, | ,, | २८ | स्त्रोत्रं | स्तोत्रं |
| ११२६ | ,, | २५ | शुश्रषा | शुश्रूषा |
| ११३७ | ,, | ८ | कारण | कारणा |

# धर्मकोशः

## राजनीतिकाण्डम्

### राजनीतिप्रणेतारः

#### महाभारतम्

राजशास्त्रप्रणेतारः बृहस्पतिप्रभृतयः, राजशास्त्रप्रणेतृ-परंपरा– पितामहः विशालाक्षः बहुदन्तः बृहस्पतिः शुक्रश्चेति क्रमेण

[1]एतत्ते राजधर्माणां नवनीतं युधिष्ठिर ।
बृहस्पतिर्हि भगवान्नान्यं धर्मं प्रशंसति ॥

[2]विशालाक्षश्च भगवान् काव्यश्चैव महातपाः ।
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥

भरद्वाजश्च भगवांस्तथा गौरशिरा मुनिः ।
राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः ॥

एतत् रक्षणं नवनीतं नवनीतवत् सर्वधर्मसारम् । न्याय्यं न्यायादनपेतम् । नीटी.

[3]तस्मिन्पैतामहे शास्त्रे पाण्डवैतदसंशयम् ।
धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः ॥

[4]ततस्तां भगवान्नीतिं पूर्वं जग्राह शंकरः ।
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥

[5]युगानामायुषो ह्रासं विज्ञाय भगवाञ्छिवः ।
संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥

( १ ) भा. १२।५८।१ ; भामु. १२।५८।१ नान्यं (न्याय्यं).

( २ ) भा. १२।५८।२–३.

( ३ ) भा. १२।५९।८५ ; भामु. १२।५९।१४३ तदसंशयम् ( तत्र संशयः ) पू. : १२।५९।७९ उत्त.

( ४ ) भा. १२।५९।८६ ; भामु. १२।५९।८०.

( ५ ) भा. १२।५९।८७ ; भामु. १२।५९।८१ युगाना ( प्रजाना ) महार्थं ( महास्त्रं ).



[1]वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत ।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥

भगवानपि तच्छास्त्रं संचिक्षेप पुरंदरः ।
सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ॥

अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः ।
संचिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं तदुच्यते ॥

[2]अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत् ।
तच्छास्त्रममितप्रज्ञो योगाचार्यो महातपाः ॥

#### कौटिलीयमर्थशास्त्रम्

कौटिलीयार्थशास्त्रे दण्डनीतिप्रणेतृनिर्देशाः

[3]त्रयी वार्ता दण्डनीतिश्चेति मानवाः* ॥
वार्ता दण्डनीतिश्चेति बार्हस्पत्याः ॥
दण्डनीतिरेका विद्येत्यौशनसाः ॥

[4]सहाध्यायिनोऽमात्यान् कुर्वीत दृष्टशौच-सामर्थ्यत्वादिति भारद्वाजः ॥
नेति विशालाक्षः ॥
साधारण एष दोष इति पराशरः ॥
नेति पिशुनः ॥
नेति कौणपदन्तः ॥
नेति वातव्याधिः ॥

* प्रतिप्रणेतृनिर्देशबहुत्वेऽपि फलाभावात् सर्वे न संगृहीताः ।

( १ ) भा. १२।५९।८८–९० ; भामु. १२।५९।८२–८४.

( २ ) भा. १२।५९।९१ ; भामु. १२।५९।८५ महातपाः ( महायशाः ).

( ३ ) कौ. १।२.

( ४ ) कौ. १।८.

नेति बाहुदन्तीपुत्रः ॥

[1]तदन्यः सत्री प्रतिषेधयेदित्याम्भीयाः ॥

[2]चतस्र एव विद्या इति कौटिल्यः ॥

## कामन्दकीयनीतिसारः

राजनीतिप्रणेता चन्द्रगुप्तमौर्यामात्यो विष्णुगुप्तः

[3]वंशे विशालवंशानामृषीणामिव भूयसाम् ।
अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः ॥

( १ ) यत्प्रणीताच्छास्त्रादिदं संचिक्षेप, तस्याऽऽचार्यचाणक्यस्य कुलादिगुणसंपद्वर्णनपूर्वकं पञ्चभिः श्लोकैर्नमस्कारमाह– वंश इत्यादि । विशालवंशानामृषीणामिवाप्रतिग्राहकाणां वंशे यो बभूव तस्मै नम इति संबन्धः । विशालवंशानामित्यनेन अर्थाद्वंशस्य अन्ववायस्य उत्कृष्टतामाह । तपोविद्याद्यविच्छेदादुदितोदितवंशानामित्यर्थः । वंशस्य हि चत्वारो भेदाः– उदितोदितः, उदितानुदितः, अनुदितोदितः, अनुदितानुदितश्चेति । विशालवंश्यानामित्यसंगतार्थः पाठः । एवं ह्यप्रतिग्राहका वंश्याः, तद्व्यतिरिक्तवंश्याभावादन्यपदार्थो न घटते । विशेषणसमासो वा विशालवंश्यानामिति वक्तव्यम् । वंश्यग्रहणमनर्थकम्, अर्थाधिक्याभावात् । विशालवंशभवानामित्यस्मिन् पक्षेऽपि तद्धितप्रत्ययानुपपत्तिः, दिगादिषु केवलवंशशब्दस्य पठितत्वात् । भूयसां प्रभूततराणाम् । तथाहि 'कुलशतमप्रतिग्राहकाणाम्' इति लोकप्रवादः । भुवि विश्रुतो यश्चेति योज्यम् । ( अनेन प्रतीतिं दर्शयति ) । जम.

( २ ) अधिकृतदेवतास्तुत्यनन्तरं पञ्चश्लोककुलकेन परमगुरोरपि नमस्कारमभिधातुमाह– वंश इति । विशालवंश्यानां वंशे यो बभूव तस्मै नम इति संबन्धः । विशालवंशे भवाः विशालवंश्याः । विशालता वंशस्य प्रजाप्राचुर्यात् गुणातिशययोगात् च । गुणातिशयो वंशस्य उदितोदितत्वम् । यत्र वंशे वेदविद्यादिमन्तो ब्राह्मणाः अनुष्ठानसंपन्नाः पूर्वपुरुषा आ चतुर्थादा सप्तमाद्वा, न चापरे, वंशः असौ उदितास्तमितः । तद्विपरीतः अस्तमितोदितः । त( ? य )त्र यथोक्तगुणयुक्ता न पूर्वे न चापरे, सः अस्तमितास्तमितः । तद्विपरीत उदितोदित इति । गुणेन चानेन विशालता वंशस्य ग्राह्या । ऋषीणामिवाप्रतिग्राहकाणाम् । यथा ऋषयः अप्रतिग्राहका निर्द्वन्द्वत्वात्, तथा एते गार्हस्थ्यधर्ममनुपालयन्तोऽपि अप्रतिग्राहकाः । कुटिलत्वात् कुटिर्घट उच्यते । तं धान्यभृतं लान्ति संगृह्णन्ति प्रातःसमये होमाद्यर्थम्, नाधिकम्, अधिकं तु ब्राह्मणानुद्दिश्य सद्यः प्रक्षालयन्ति इति कुटिलाः कुम्भीधान्या इति प्रसिद्धाः । अत एव कुटिलानामपत्यं विष्णुगुप्तः कौटिल्य इत्युक्तः । भूयसां गुणैर्महताम् । बभूव संभूतः । भुवि विश्रुतः न्याय–कौटिल्य–वात्स्यायन–गौतमीयस्मृतिभाष्यचतुष्टयेन प्रकाशितपुरुषार्थचतुष्टयोपाय इति महीतले प्रख्यातः । उनि.

[1]जातवेदा इवार्चिष्मान् वेदान् वेदविदां वरः ।
योऽधीतवान् सुचतुरश्चतुरोऽप्येकवेदवत् ॥

( १ ) जातवेदाः अग्निः, तद्वत् दीप्तिमानिति ब्राह्मतेजःप्रशंसा । वेदांश्चतुरोऽपि अतिचातुर्यात् प्रज्ञागुणाधिक्यादेकवेदवदधीतवानित्यध्ययनसंपत्कथनम् । वेदविदां वरो यश्चेति योज्यम् । अनेन नाध्ययनमात्रं तस्य, तदर्थपरिज्ञानं चोत्कृष्टमिति दर्शयति । जम.

( २ ) स्वानुष्ठानतत्परतां प्रतिपादयितुमाह– जातवेदा इति । जातवेदाः वैश्वानरः स इव अर्चिः ब्रह्मतेजः तेन युक्तः । वेदानिति । सामादींश्चतुरोऽपि अधीतवान् अक्लेशेन । सुचतुर इति । सुष्ठु चातुर्ययुक्तः प्रज्ञातिशयात् परान् अतिसंधत्ते, परैश्च नातिसंधीयते इति । वेदविदां वर इति । न केवलं चतुर्वेदाध्यायी, वेदविदां वेदपरमार्थवेदिनां मध्ये वरः श्रेष्ठः, सम्यग्वेदपरिज्ञानात् । यश्च वेदविदां वरः सः अर्थात् सर्ववित् । तत् नास्ति यत् न स वेद इति । उनि.

---

( १ ) कौ. १।१७.

( २ ) कौ. १।२.

( ३ ) कानी. १।२ ; उनि. वंशाना ( वंश्याना ).

( १ ) कानी. १।३ ; उनि. प्येकवेदवत् ( प्येव सर्ववित् ).

[1]यस्याभिचारवज्रेण वज्रज्वलनतेजसः ।
पपाताऽऽमूलतः श्रीमान् सुपर्वा नन्दपर्वतः ॥

(१) यस्याभिचारवज्रेणेति दैवसंपत्कथनम्, वैदिकेन हि हिंसात्मकेन विधिना नन्दस्योच्छेदात् । वज्रज्वलनतेजस इत्यभिचारहेतुं क्रोधं दर्शयति । स हि राज्ञा नन्देनाग्रासनतिरस्कृतो जातासह्यक्रोधानलस्तमभिचचार । पपाताऽऽमूलत इति । समूलो ननाशेत्यर्थः । मूलं स्थानीयम् । तच्च पञ्चानां द्रव्यप्रकृतीनामुपलक्षणार्थम्, स्वामिप्रकृतिविनाशे हि तदाश्रितस्यापि मूलादिपञ्चकस्य विनाशात् । तेनाभिचारो मूलविनाशस्य कारणम् । अन्यथा तदर्थमारब्धः कथं मूलोच्छित्तयेऽपि स्यात् । अथवा त्रिवर्गसाधनहेतुत्वात् मूलं शरीरम्, तेनैव च ननाश, न द्रव्यादिनेत्यर्थः । श्रीमान् विहितलब्धप्रशमनत्वात् सर्वतः प्रतिष्ठित इत्यर्थः । सुपर्वा, पर्व पञ्चदश्यादि, तत् इज्यादिप्रवर्तनात् शोभनमस्येति । तथा च नन्देन दीयमानं प्रतिग्रहमादित्सुश्चाणक्यस्तिरस्कृत इत्यनेन सूचयति । वृत्तान्तो वा पर्वशब्देनोच्यते । शोभनं चरितमस्येति सुपर्वा । स हि देहसंक्रान्त्या योगी नन्दोऽभूत् । स चैवंवृत्तोऽपि ननाशेत्यभिचारसामर्थ्यं दर्शयति । नन्द एव पर्वतः नन्दपर्वतः, सामन्तादिभिरप्रकम्प्यत्वात् भोगिसमाश्रयत्वाच्च । जम.

(२) न केवलं वेदार्थवित्, तदुक्तकर्मणां अपि अनुष्ठाता तत्फलभोक्ता च इत्येतत् दर्शयितुमाह– यस्येति । आभिमुख्येन साध्यं प्रति साधकप्रयुक्तानां मन्त्राणां मारणाद्यर्थं चारः गमनं अभिचारः, स एव वज्रः, तेन । यस्य संबन्धिना । वज्रज्वलनः वैद्युतवह्निः, तस्य इव तेजो यस्येति । वज्रज्वलनो यथा प्रतिपक्षभूतैः जलैः न उपशाम्यति तद्वत् कौटिल्यकोपाग्निरपि न नन्दादिभिः । पपाताऽऽमूलत इति । मूलं बन्ध्वादिमूलबलम्, तदारभ्य । नन्द इति । नवनवतिकोटीश्वरः पृथिवीपतिः । अत एव श्रीमान् । स एव पर्वतः । सुपर्वेति । पर्वशब्देन ख्यातिरुपलक्षिता । यथा ( ? द्वा ) पञ्चदश्यादिः प्रदेशश्च संधिः पर्व अभिधीयते । तानि शोभनानि यस्य स तथा । पपात पतितः । आ मूलत इति पुनरनुत्थानाय । उनि.

---
(१) कानी. १।४–६.

एकाकी मन्त्रशक्त्या यः शक्त्या शक्तिधरोपमः ।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम् ॥

(१) एकाकी असहायः । मन्त्रशक्त्या ज्ञानबलेन । शक्त्येति प्रभावोत्साहशक्त्येत्यर्थः । अनेन पुरुषकारसंपदं दर्शयति । शक्तिधरोपमः गुहोपमः, अप्रतिहतशक्तिमात्रसाधर्म्यात् । इदमुक्तं भवति– नन्दतिरस्कारामर्षितस्तत्सभायां नन्दात् पृथिवीं पृथक् करोमीति कृतप्रतिज्ञो निर्गत्य राजपुरुषैरनुबध्यमानश्चन्द्रगुप्तसंश्रयादवष्टब्धस्तस्मै नन्दराज्यं प्रतिश्रुत्य नन्दमभिचारवज्रेण व्यापाद्य तद्राज्यमादित्सुरेकाकी ज्ञानबलेन दण्डकोशसंपन्नमाटविकं पर्वतकमुत्साद्य प्रभावोत्साहशक्तिभ्यां राक्षसाद्यमात्याधिष्ठितमौलबलान्मेदिनीमाच्छिद्य चन्द्रगुप्तायोपनीतवानिति पुरुषकारसंपत्कथनम् । नृचन्द्रायेति पुरुषविशेषज्ञत्वात् प्रत्युपकारविषयतां दर्शयति, नन्दभयात् तेन संरक्षितत्वादिति । जम.

(२) यदुक्तं ' सुचतुरः ' तदेव समर्थयन् आह– एकाकीति । प्रभुशक्त्यभावात् अदण्डकोशत्वात् एकाकी शरीरमात्रपरिच्छदः । मन्त्रशक्त्येति । प्रज्ञातिशयचातुर्येण । शक्त्या उत्साहशक्त्या । शक्तिधरोपमः कार्तिकेयसमः । आजहार आहृतवान् । नृषु मध्ये चन्द्राय चन्द्रगुप्ताय मौर्यकुलप्रसूताय । चतुर्थी तादर्थ्ये । मेदिनीं पृथिवीम् । एवं च शास्त्रप्रज्ञागुणयोः प्राधान्यं प्रख्यापितं भवति । उनि.

नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः ।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ॥

(१) नीतिशास्त्रामृतमुद्धृतवानित्यनश्वरकीर्तिसंदर्शनम् । श्रीमानिति । अमात्यसंपदत्र श्रीः, नन्दमुन्मूल्य तदानीं सर्वतः चन्द्रगुप्तप्रतिष्ठापितराज्यत्वात् । एवं च कृतकृत्यत्वात् कीर्तिप्रतिष्ठापनमस्योपपन्नम् । शास्त्रार्थज्ञानसंपद् वा श्रीः, शास्त्रकरणप्रस्तावात् । विष्णुगुप्तायेति सांस्कारिकी संज्ञा, चाणक्यः कौटिल्य इति द्वे

जन्मभूमिगोत्रनिबन्धने । वेधसे इति पृथक् शास्त्रप्रणयनादेव । जम.

(२) शुक्रबृहस्पत्योस्तृतीयं आत्मगुरुं प्रख्यापयितुं दण्डनीतिविषये प्रयोक्तृत्वमभिधाय प्रवक्तृत्वमपि प्रतिपादयितुमाह– नीतीति । प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतायां फलसिद्धौ देशकालानुकूल्ये सति यथासाध्यं उपायसाधनविनियोगलक्षणा क्रिया नीतिः । तदर्थं शास्त्रं नीतिशास्त्रं, कौटिल्यभाष्यमित्यर्थः । तदेव अमृतं तदभ्यासात् नरदेवत्वमवाप्यते इति । श्रीमानिति । ब्रह्मश्रिया युक्तः । अर्थशास्त्रमहोदधेरिति । अर्थ्यन्ते इत्यर्थाः धर्मार्थकामाः । तत्प्रतिपादकं धर्मशास्त्रं अर्थशास्त्रं च प्राजापत्यम् । तथा चोक्तं कामसूत्रे अस्मद्गुरुणा– 'प्रजापतिर्हि प्रजाः सृष्ट्वा तासां स्थितिनिबन्धनं त्रिवर्गस्य शासनमध्यायानां शतसहस्रेण अग्रे प्रोवाच । तस्य एकदेशं स्वायंभुवो मनुः धर्माधिकारिकं पृथक् चकार । बृहस्पतिः अर्थाधिकारिकम्' । तच्च लक्षाध्यायतृतीयांशत्वेन कोटिग्रन्थविस्तृतं संभाव्यते । एवं च अर्थशास्त्रं गाम्भीर्यात् महाप्रमाणत्वाच्च महोदधिरिव । तस्मात् य उदभ्रे उद्धृतवान् तस्मै विष्णुगुप्ताय नमः । उनि.

## शुक्रनीतिः

स्वयंभूप्रणीतनीतिशास्त्रसारोद्धारः शुक्रेण भार्गवेण कृतः

[1]प्रणम्य जगदाधारं सर्गस्थित्यन्तकारणम् ।
संपूज्य भार्गवः पृष्टो वन्दितः पूजितः स्तुतः ॥
पूर्वदेवैर्यथान्यायं नीतिसारमुवाच तान् ।
शतलक्षश्लोकमितं नीतिशास्त्रमथोक्तवान् ॥
स्वयंभूर्भगवाँल्लोकहितार्थं संग्रहेण वै ।
तत्सारं तु वसिष्ठाद्यैरस्माभिर्वृद्धिहेतवे ॥
अल्पायुर्भूभृदाद्यर्थं संक्षिप्तं तर्कविस्तृतम् ॥

ग्रन्थारम्भे विघ्नविघाताय प्रारिप्सितपरिसमाप्तिकामो ग्रन्थकृत् जगदीश्वरप्रणामरूपमङ्गलमाचरन् शिष्यमाह– प्रणम्येत्यादि । सर्गस्थित्यन्तकारणं सृष्टिस्थितिसंहारकर्तारं जगतामाधारं जगदीशं प्रणम्य संपूज्य च पूर्वदेवैः असुरैः यथान्यायं वन्दितः प्रणतः पूजितः स्तुतः पृष्टः वन्दनपूजनस्तवनानन्तरं जिज्ञासितः सन्नित्यर्थः, तान् असुरान् प्रथमं नीतिसारं संक्षिप्तनीतिं उवाच । पूर्वं भगवान् स्वयंभूः विधाता लोकहितार्थं लोकानां हिताय शतलक्षश्लोकमितं नीतिशास्त्रं उक्तवान्, अथ अनन्तरं वसिष्ठाद्यैः अस्माभिः वृद्धिहेतवे अभ्युदयाय अल्पायुर्भूभृदाद्यर्थं अदीर्घजीविराजादिप्रयोजनार्थं संग्रहेण वै संक्षेपार्थमेव तत्सारं तस्य नीतिशास्त्रस्य ब्रह्मप्रोक्तस्य सारं तर्कैः युक्तिभिः विस्तृतं युक्तियुक्तं यथा तथा संक्षिप्तं संकलितम् । शुनीटी.

## अनिर्दिष्टकर्तृकवचनानि

राजशास्त्रप्रणेतृपरंपरा– ब्रह्मा, नारदः, शक्रः, गुरुः, भार्गवः, भारद्वाजः, विशालाक्षः, भीष्मः, पाराशरः, मनुः, अन्ये ऋषयः, विष्णुगुप्तश्च

[1]ब्रह्माऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।
तन्नारदेन शक्रेण गुरुणा भार्गवेण च ॥
भारद्वाजविशालाक्षभीष्मपाराशरैस्तथा ।
संक्षिप्तं मनुना चैव तथा चान्यैर्महर्षिभिः ॥
प्रजानामायुषो ह्रासं विज्ञाय च महात्मना ।
संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये ॥

(१) शुनी. १।१–४.

(१) उनि. १।७.

## गौतमः

दण्डस्य लक्षणं प्रयोजनं च

[1]दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत् ॥

(१) अथ त्वेवमपि व्यवस्थां कुर्वतः ते दौःशील्यान्नावतिष्ठन्ते, ततः- दण्डो दमनादिति । दमयत्यदान्तान् दम्यन्ते वाऽस्मिन्निति दण्डः । यतश्च दमनयोगाद्दण्ड इत्येवं मन्वादय आहुः । यथाऽऽह मनुः- 'देवदानवगन्धर्वा रक्षांसि पतगोरगाः । तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥' (मस्मृ. ७।२३) इति । अतो यो यथा दम्यते वाचा धनादिना वा । यथाऽऽह मनुः- 'धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं तु वधदण्डं त्वतः परम् ॥' (मस्मृ. ८।१२९) इति । एवं कुर्याद्दौःशील्यादिना विकर्मस्थान् । मभा.

(२) दमनयोगाद्दण्डशब्दस्य दण्डत्वमित्याहुर्धर्मज्ञाः । तेनादान्तान् अवश्यान् दमयेत् वशं नयेत् । * गौमि.

आचार्योपदेशात् दण्डाद्वा नियन्त्रितानां स्वकर्मनिष्ठानां वर्णाश्रमाणां इष्टसिद्धिः अनियन्त्रितानां स्वकर्मभ्रष्टानां च अधोगतिः

**[2]वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते ॥**

(१) एवं कृताः प्रजाः कथं प्रवर्तन्ते इत्याह- वर्णा इति । वर्णाः ब्राह्मणादयः अनुपनीताः, आश्रमाः ब्रह्मचार्यादयः, स्वकर्मनिष्ठाः स्वकर्मानुष्ठानपराः, प्रेत्य परलोके, कर्मफलमनुभूय उपभुज्य तत्फलोपभोगस्यावशेषेणेह विशिष्टदेशादिसंबन्धं जन्म प्रतिपद्यन्ते । विशिष्टशब्दः प्रत्येकमभिसंबध्यते- विशिष्टदेशः आर्यावर्तादिः, विशिष्टजातिर्ब्राह्मणादिः, विशिष्टं कुलमध्ययनादिसंपन्नम्, विशिष्टं रूपं प्रियदर्शनत्वम्, विशिष्टमायुः समग्रशतवर्षादि, विशिष्टं श्रुतं वेदार्थविज्ञानसहितम्, विशिष्टं वृत्तं विशिष्टं चारित्रम्, विशिष्टं वित्तं गवाश्वादिलक्षणम्, विशिष्टं सुखं अभिलषितपदार्थस्याविघ्नेनानुभवसिद्धिः, मेधःशब्देनाऽऽरोग्यमुच्यते, विशिष्टारोग्यमभिलषितभक्षणेऽप्यरोगोत्पत्तिः । एवं च ब्रुवता नित्यकर्मणां च कर्ता तत्फलस्य चोपभोक्ता शरीरव्यतिरिक्त आत्मा प्रतिपादितो भवति । तथा च श्रुतिः- 'स एष महानज आत्मा योऽयं विज्ञानमयः कर्ता भोक्ता स उ क्षेत्रज्ञोऽमृतमयः प्राणे प्रतिष्ठितः' इति । तथा च मनुः- 'यो ह्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥' (मस्मृ. १२।१२) इत्यादि । तस्य च नित्यस्य सतः कर्मक्षयात्तदारब्धस्य शरीरस्य पतने तत्कृतं कर्मफलं स्वर्गादि तत्कर्मणैवाऽऽरब्धेन तत्फलोपभोगयोग्येन शरीरेणाहंकारेन्द्रियशक्तिमनःप्राणसहितेनानुभूय औषधादिद्वारेण अन्नमयो भूत्वा रेतोरूपेण परिणम्य तत्स्थेन वायुना पूर्वं मातुरुदरं प्रविष्टेनाऽऽकृष्टः सन् तच्छोणितसहितः पूर्वानुभुक्तशिष्टकर्मानुगृहीतस्य शरीरस्योपादानं जन्मेत्याचक्षते ।

एवं व्यवस्थिते सूत्रार्थे चोद्यते- आश्रमग्रहणमनर्थकम्, वर्णानामेवाश्रमविधानात् आश्रमत्वेऽपि वर्णत्वानपगमाच्च । आश्रमग्रहणे कर्तव्येऽपि विसमासचकारावनर्थकौ, तद्वाच्यस्याभावात् । स्वग्रहणं चानर्थकम्, अनुष्ठानादेव स्वत्वसिद्धेः । कर्मग्रहणमप्यनर्थकम्, कर्मफलमनुभूयेत्यत्र कर्मग्रहणेनैवार्थसिद्धत्वात् । निष्ठाग्रहणमप्यनर्थकम्, बुद्धिपूर्वत्वेन विना तत्करणासंभवात् । प्रेत्येत्यपि न कर्तव्यम्, जन्म प्रतिपद्यन्ते इत्यनेनैवार्थसिद्धत्वात् । फलमनुभूयेति वक्तव्ये कर्मग्रहणमतिरिच्यते, फलस्य

---

* शेषं मभागतम् ।

[1] गौध. ११।३० ; मिता. १।३५४ ; मभा. ; गौमि. ११।२८.

[2] गौध. ११।३१ ; विश्व. १।३५० (ततः शेषेण विशिष्टदेशजाति) एतावदेव ; मभा. ; गौमि. ११।२९ वर्णा आश्रमाश्च स्वकर्म (वर्णाश्रमाः स्वस्वधर्म).

कर्मसाध्यत्वात् । तत इत्येतदप्यनर्थकम्, अधिकारादेव कर्मणः परामर्शसिद्धेः । शेषानुपपत्तिश्च, कृत्स्नस्य कर्मणः फलोपभोगेनोपक्षीणत्वात् । न हि फलदानाभिमुखीभूतस्य कर्मणः एकदेशेनावस्थानमुपपद्यते । न हि क्षीराद्येकदेशेन दध्यादिकार्यारम्भणमिति । न च घृतघटादिवद्वासनाशेषः शेषशब्दवाच्यः, अमूर्तत्वात्कर्मणो वासनाशेषानुपपत्तेः । न चामुत्रानुष्ठितं कर्मेह शेषशब्देनोच्यते, तत्राधिकाराभावात् उपयुक्तेतरार्थत्वासंभवाच्च । न हि फलोपभोगविच्छेदस्यैव शेषत्वमध्यवसितुं युक्तम्, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । कर्मणो हि फलं श्रुतम्, न फलविच्छेदस्य । न च अक्षीणे कर्मण्युपभोगविच्छेदः संभवति, तस्य कर्माश्रितत्वात् । यथा प्रदीपस्तैलाश्रितः तैलक्षयादेव क्षीयते । अपिच तस्योपहन्तारः शलभादयो विद्यन्ते, न तु कर्मफलस्य । तस्मान्न फलविच्छेदस्य शेषशब्दवाच्यता । न च कर्मफलस्यैव विभागं कर्तुं शक्नोति– अनेनामुत्र सुखमनुभोक्ष्ये अनेन विशिष्टदेशादिसंबन्धं लप्स्ये इति, निष्पन्नत्वात् । अनिष्पन्नस्य हि विभागः श्रूयते– इदं व्रीहीणां क्षेत्रमिदं यवानामिति, न तु निष्पन्ना व्रीहयो यवाः क्रियन्ते इति । यदि च स्वकर्मनिष्ठा अप्यमुत्र फलोपभोगशेषेणेह जन्म प्रतिपद्यन्ते एवं मोक्षाभावप्रसङ्गे श्रुतेर्विरोधो भवति 'ब्रह्मविदाप्नोति परम्' 'तमेव विदित्वा अतिमृत्युमेति' इत्यादिकायाः । यदि कर्मशेषेण विशिष्टदेशादिप्राप्तिलक्षणं जन्म भवति, ततो जगद्वैचित्र्यानुपपत्तिप्रसङ्गः, दृश्यते हि तदिति । प्राप्तस्य च कर्मणः फलाभ्युपगमे पुरुषकारोऽपि निष्फल एवेति । तस्माच्छेषशब्दवाच्याभावात् सूत्रेण समस्तेनापि प्रक्रान्तस्यार्थस्यानुपपद्यमानत्वात् असमञ्जसमिदं सूत्रमिति ।

तत्र समाधिः– उभयग्रहणं तावत्कर्तव्यम्, वर्णानामाश्रमाणां च धर्मभेदात् । प्रागुपनयनाद्वर्णाः, ऊर्ध्वमाश्रमा इति । अस्ति चानुपनीतानामपि कैश्चिद्वर्णधर्मैरधिकार इति । असमासो द्वन्द्वपरिग्रहार्थः, मा भूत् समानाधिकरणाशङ्केति । द्वन्द्वपक्षे तूभयपदप्रधानत्वादुभयोरुपादानं सिद्धं भवति इति । सृष्ट्यन्तरजोपसंग्रहार्थश्चशब्दः, तेषामपि स्वकर्मानुष्ठानादुत्कर्षो लभ्यत इति । यथाऽऽह मनुः– 'ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः । स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥' (मस्मृ. १०।६२) इति । स्वग्रहणमपि प्राथमिककल्पोपसंग्रहार्थम् । आपद्विहितस्य प्रायश्चित्तविधानादेवैतत्सिद्धिमिति चेन्न, वर्णान्तरकर्मानुष्ठान एव प्रायश्चित्तविधानम्, न स्वकर्मण एव विगुणस्येति । तथाचोक्तं नारदवाक्यम्– 'आपदं ब्राह्मणस्तीर्त्वा क्षत्रवृत्त्या भृते जने । उत्सृजेत् क्षत्रवृत्तिं तां कृत्वा पावनमात्मनः ॥' (नास्मृ. ४।५९) इत्यादि । तस्माद्विगुणस्य कर्मणः फलप्रतिषेधार्थं स्वग्रहणम् । एवं च विगुणं यत्कर्म न तत्फलसाधनम्, प्रायश्चित्तविधानाभावात् नापि दोषसाधनं चेति द्रष्टव्यम् । निष्ठाग्रहणं सातत्यार्थम्, यो हि आ शरीरनिपातनात् कर्म करोति स एवानेन फलेन संबध्यते इति । प्रेत्यग्रहणं अवश्यम्भावि फलमिति ज्ञापनार्थम्, यथा दृष्टफलैरिह सिद्धिस्तथा अवश्यं तत्राप्यदृष्टफलैरिति । न तु कृतं कर्म निष्फलं भवतीति । कर्मग्रहणं तु केवलं कर्मकृत एवानेन फलेन संबन्धः, न ज्ञानकर्मसमुच्चयकारिण इति । असौ मुक्त एव भवतीति । अनेनैव मोक्षाभावप्रसङ्गचोद्यमपि परिहृतं द्रष्टव्यम् । तत इत्येतदपि कर्मनानात्वप्रतिपादनार्थम् । तस्य तस्य कर्मणः शेषेणातिरेकेण । अतश्च कर्मणां तारतम्यात् फलवैचित्र्ये सति जगद्वैचित्र्यमुपपद्यते इति । तारतम्यं च कर्मणां देशकालशौचद्रव्यश्रद्धापात्राभ्यासविशेषादिति । शेषशब्दश्च कर्मसमुदायापेक्षया द्रष्टव्यः । कथम् ? यत्कर्म स्वर्गफलं (तत्) तत्रैव फलं ददाति, यत्त्वैहिकफलं तेन विशिष्टदेशादिसंबन्धं जन्म भवति, स च तस्य समुदायस्य शेष इति । प्रधानकर्मणोऽग्निहोत्रादेरङ्गभूतं यत्कर्म तच्छेषशब्देनोच्यते । यथा– 'गोदोहनेन पशुकामस्य प्रणयेत्', 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादि । तत्र प्रधानकर्मफलममुत्रोपभुज्यते, अङ्गफलं इहेति । वृक्षवद्वैतद्द्रष्टव्यम् । वृक्षो हि बहुभिः मूलैर्जायते । स यदा छिन्नप्रधानभूयिष्ठमूलो भवति, तदाऽल्पनिःसारमूलत्वात् भारमसहमानः पतति एवं कर्मण्यपि प्रधानरूपे उपभोगादुपक्षीणे शिष्टरूपं

कर्तारं तत्र स्थापयितुमशक्नुवद्विशिष्टदेशादिसंबन्धं फलं ददातीति। घृतघटवद्वा द्रष्टव्यम्। यथा– घृतघटे उपयुक्तेऽपि स्नेहवासनाशेषादग्निना संयुक्तो ज्वलति, एवं कर्मकृदपि वासनाशेषादेव विशिष्टदेशाद्यनुभविष्यतीति। सावयवत्वाच्च कर्मणो वासनोपपद्यत एवेति। सावयवत्वमपि कार्यत्वादिति। 

यत्तूक्तं पुरुषकारोऽनर्थक इति, तत्रोच्यते– पुरुषकारयुक्तस्यैव फलसंबन्धः, तद्विहीनस्यान्नादिसंबन्धोऽपि नास्तीति। तस्मात्फलदानकारणं पूर्वशिष्टम्, संबन्धकारणं पुरुषकार इति नानर्थकः पुरुषकारः। इति सर्वं सूत्रमुपपद्यते एवेति। मभा.

(२) अथैवं शास्त्रवश्यतया राज्ञा च स्वधर्मे स्थाप्यमानानां वर्णानामाश्रमाणां च कथं सिद्धिरित्यत आह– वर्णाश्रमा इति। वर्णाः ब्राह्मणादयः। आश्रमाः ब्रह्मचर्यादयः। ते स्वधर्मनिष्ठाः वर्णप्रयुक्तानाश्रमप्रयुक्तानुभयप्रयुक्तांश्च धर्माननुष्ठितवन्तः प्रेत्य मरणेन लोकान्तरं गत्वा तस्य तस्य कर्मणः फलं स्वर्गादिकमनुभूय, ततः तदनन्तरं शेषेण भुक्तावशिष्टेन कर्मणा विशिष्टदेशादिकान् भु (? भ)क्त्वा जन्म प्रतिपद्यन्ते। तत्र विशिष्टशब्दो देशादिभिः सर्वैः संबध्यते। विशिष्टो देशः आर्यावर्तादिः। विशिष्टजातिः ब्राह्मणजातिः। विशिष्टकुलं अध्ययनादिसंपन्नम्। विशिष्टरूपं कान्तिमत्। विशिष्टायुः सषोडशं वर्षशतम्, 'सहषोडशं वर्षशतमजीवत्' इति दर्शनात्। रोगरहितत्वमपि आयुषो विशेषः। विशिष्टश्रुतम् 'ब्राह्मणश्च बहुश्रुतः' इत्यत्र व्याख्यातम्। विशिष्टवृत्तं अनुपाधि चारित्रम्। विशिष्टवित्तं धर्मार्जितं धर्मे प्रयुज्यमानं च। सुखं निरपायस्थानाधिष्ठानेनानिषिद्धसुखसेवनम्। विशिष्टमेधा ग्रन्थार्थयोर्ग्रहणशक्तिरिति। मेधाशब्दे सकारान्तत्वमार्षम्, सुमेधसो दुर्मेधस इत्यादिष्वेव दर्शनात्। कर्माणि भुज्यमानानि पुण्यान्यपुण्यानि च सशेषाण्येव भज्यन्ते, ऐहिकस्य शरीरग्रहणादेरपि पुण्यापुण्यनिबन्धनत्वात्। गौमि.

**[1]विष्वञ्चो विपरीता नश्यन्ति ॥**

(१) ये पुनः न स्वयं कर्म कुर्वन्ति राज्ञा च न स्थाप्यन्ते, ते विष्वञ्चः तिर्यग्गतयो नश्यन्ति, विशिष्टदेशादिसंबन्धाभावात्। विपरीताः स्वकर्मनिष्ठेतराः। एवं च ब्रुवता ये स्वकर्मनिष्ठास्तेषामुत्तमगतित्वम्, ये राज्ञा स्वधर्मे स्थाप्यन्ते तेषां मध्यमगतित्वम्, ये स्वकर्मनिष्ठा न भवन्ति न राज्ञा च स्थाप्यन्ते तेषामधमगतित्वं च दर्शितं भवति। तथा चोक्तं पुराणे– 'शुभैर्भवति देवत्वं व्यामिश्रैर्जन्म मानुषम्। अशुभैश्चाप्यधोजन्म कर्मभिर्लभते नरः ॥' इति। मभा.

(२) ये वर्णाश्रमाः स्वानि कर्माणि यथावन्नानुतिष्ठन्ति ते विपरीताः विष्वञ्चः नानायोनीर्गच्छन्तो नश्यन्ति, अनर्थपरंपरामनुभवन्तीति। गौमि.

**[2]तानाचार्योपदेशो दण्डश्च पालयते ॥**

(१) तान् अज्ञान् अविहितानुष्ठानेन प्रतिषिद्धसेवनया च नश्यतः वर्णाश्रमिणः आचार्योपदेशः रक्षति, इतरांस्तु दण्ड इति। मभा.

(२) तान् विपरीतान् यथोक्तमकुर्वतः वर्णाश्रमांश्च आचार्योपदेशस्तावत्पालयते। तत्राप्यतिष्ठतो राजदण्डः। गौमि.

## विष्णुः

दण्डेन साधुनेतृप्रयुक्तेन प्रजाविवृद्धिः

**[3]यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः।**
**प्रजास्तत्र विवर्धन्ते नेता चेत्साधु पश्यति ॥**

निर्भयः अप्रतिहतः चरति। वै.

(१) गौध. ११।३२; विश्व. १।३५०; मभा.; गौमि. ११।३०.

(२) गौध. ११।३३; विश्व. १।३५०; मभा.; गौमि. ११।३१.

(३) विस्मृ. ३।९५.

## महाभारतम्

धर्मार्थकामानां उचितः समुच्चयः श्रेयान्

[1]महर्षेः कीर्तने तस्य भीष्मः प्राञ्जलिरब्रवीत् ।
धर्ममर्थं च कामं च त्रीनेतान् योऽनुपश्यति ॥
[2]अर्थमर्थानुबन्धं च धर्मं धर्मानुबन्धनम् ।
कामं कामानुबन्धं च विपरीतान् पृथक् पृथक् ॥
यो विचिन्त्य धिया सम्यग्व्यवस्यति स बुद्धिमान् ।
तदिदं धर्मयुक्तं च हितं चैव कुलस्य नः ॥

अनुबध्यतेऽनेनेत्यनुबन्धः फलं परिणामे सुखकरमेव । अर्थादिकं तद्विपर्ययं वाऽर्थनाशादिकं पश्येत् । अत्यल्पदोषानुसंधानेन महतः फलस्य नाशो न कार्य इत्यभिप्रायः । नीटी.

संक्षेपतः संपूर्णा राजनीतिः ( प्रश्नव्याजेन कृतः राजनीत्युपदेशः सर्वशास्त्रज्ञेन नारदेन युधिष्ठिराय )

वैशम्पायन उवाच–
[3]तथा तत्रोपविष्टेषु पाण्डवेषु महात्मसु ।
महत्सु चोपविष्टेषु गन्धर्वेषु च भारत ॥

अथ तत्रोपविष्टेष्विति । अत्र नारदो युधिष्ठिरं प्रश्नमुखेन राजधर्माननुशास्ति । नीटी.

[4]वेदोपनिषदां वेत्ता ऋषिः सुरगणार्चितः ।
इतिहासपुराणज्ञः पुराकल्पविशेषवित् ॥

तत्र शास्तुः स्वरूपं तावत् व्याचष्टे । अस्यापि कणिकतुल्यता मा भूदिति वेदोपनिषदां वेत्तेति । वेदाः ऋग्यजुःसामाथर्वाणः । उपनिषदः रहस्यविद्याश्चतुर्विधाः । तत्र कर्माङ्गावबद्धोपासनं ' उषा वा अश्वस्य मेध्यस्य शिरः ' ( बृउ. १।१।१ ) इत्यादिशास्त्रविहितं कर्माङ्गेषु अश्वादिषु विराड्दृष्टिकरणम् । प्रतीकोपासनम् ' अन्नं ब्रह्मेत्युपासीत ' ' आदित्यो ब्रह्मेत्यादेशः ' ( छाउ. ३।१९।१ ) इति आदित्यादिमूर्तिषु ब्रह्मदृष्टिकरणम् । अहंग्रहोपासनम् ' त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि ' ( वराहोप. २।३४ ) इति व्यतिहारेण आत्मनो देवतायाश्च अभेदचिन्तनं ज्ञानं ब्रह्मात्मानुभवः । वेदानां कर्मप्रतिपादकानां तदन्तर्गतानामुपनिषदां च वेत्ता पाठतोऽर्थतश्च ज्ञाता । अत एव ऋषिः गन्ता फलं प्रति, वेदोक्तकृत्स्नफलभागी, कृतानुष्ठानत्वात् । अत एव सुरगणार्चितः । इतिहासपुराणे प्रसिद्धे । पुराकल्पः बहुकर्तृकमन्वाख्यानं ' देवासुराः संयत्ता आसन् ' ( शौनकोप. १।१) इत्यादिकं वेदोक्तम् । विशेषः एककर्तृकमन्वाख्यानं परिकृत्याख्यम् ' हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस ' ( ऐब्रा. ३३।१ ) इत्यादि, तस्य योगबलात् प्रत्यक्षदर्शी । नीटी.

न्यायविद्धर्मतत्त्वज्ञः षडङ्गविदनुत्तमः ।
ऐक्यसंयोगनानात्वसमवायविशारदः ॥

न्यायः पञ्चाङ्गमधिकरणम् । यथा ' विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । संगतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः ॥ ' अत्र ' यूपस्य स्वरुं करोति ' इति वाक्यं विषयः । तत्र षष्ठी यूपसंबन्धीतिकर्तव्यतालक्षणार्था उत यूपावयवलक्षणार्थेति संदेहो विशयः । एतावेव पूर्वोत्तरपक्षौ ज्ञेयौ । कल्पनालाघवानुग्रहादुत्तरः सिद्धान्तः । फलमनुष्ठानभेदः । पूर्वपक्षे तक्षणाष्टास्रीकरणादिना काष्ठान्तरं यूपसदृशं निर्मातव्यम् । सिद्धान्ते एकदेशस्य पृथक्करणमात्रमिति । इदमेव पञ्चकं मोक्षधर्मेषूक्तम् । ' सूक्ष्मं सांख्यं क्रमौ चोभौ निर्णयः सप्रयोजनः । पञ्चैतान्यनुजानीहि वाक्यमित्युच्यते बुधैः ॥ ' ( भा. १२।३०८।७९ ) इति । सूक्ष्मं गहनार्थत्वाद्विषयः । सांख्यं एवमेवं वेति विचारः । क्रमः अतिक्रमः सिद्धान्तस्य, पूर्वपक्ष इत्यर्थः । निर्णयः सिद्धान्तः । प्रयोजनं फलम् । इति वाक्यं वाक्यार्थनिर्णयोपायः । एवं पूर्वोत्तरमीमांसाधिकरणानि न्यायः , तद्वित् । धर्मज्ञः मन्वादिप्रणीतशास्त्रतत्त्वज्ञः । षडङ्गवित् । शिक्षा

---

( १ ) भा. १।९९।१८ ; भामु. १।१०५।२०.

( २ ) भा. १।९९।१९–२० ; भामु. १।१०५।२१–२२ सम्यग् ( धीरो ).

( ३ ) भा. २।५।१ ; भामु. २।५।१ तथा ( अथ ).

( ४ ) भामु. २।५।२–९.

कल्पो व्याकरणं छन्दोविचितिर्निरुक्तं ज्योतिषमिति षट् वेदाङ्गानि । अनुत्तमः अत्युत्कृष्टः । ऐक्यसंयोगनानात्वसमवायविशारदः । ऐक्यादित्रयं सर्वेष्वपि शास्त्रेषु समानम् । यथा मीमांसायां ' समिधो यजति ' इत्यादिप्रयाजाद्यङ्गवाक्यानां 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति महावाक्येनैकवाक्यत्वमैक्यम् । संयोगनानात्वं संयोगपृथक्त्वम् । यथा ' दध्ना जुहोति ' इति वाक्यान्नित्यमपि दधि ' दध्नेन्द्रियकामस्य ' इति वाक्यान्तरेणेन्द्रियार्थमपि पृथग्विधीयते । तेन द्वयमपि युगपद्दध्ना साध्यत इति । समवायः एकस्मिन् कर्मण्यनेकेषां धर्माणां संनिपातः । यथा इष्टिपशुसोमात्मके राजसूये इष्ट्यादीनां दर्शादित्रिकद्वयस्येव साक्षात् परमापूर्वजनकत्वे उपनिपातः, न त्वङ्गानामिव परंपरया परमापूर्वोपकारकत्वम् । यद्वा ' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ' (बृउ. ४।४।२२) इति आत्मविविदिषोत्पादकापूर्वे वेदानुवचनादीनामेककार्यकारित्वलक्षणमैक्यम् । नन्वेककर्माङ्गत्वाभावे कथमेषामैक्यमत आह– संयोगनानात्वेति । स्वस्ववाक्योत्पन्नानां पृथक्फलानामप्येषां संयोगपृथक्त्वन्यायेन विविदिषार्थत्वमपि युक्तमेवेत्यर्थः । नन्वेष समुच्चितानामेककार्यकारित्वे समुच्चयासंभवः, राजसूयादीनां ब्राह्मणाद्यनुपयोगित्वात्, प्रत्येकं चेदितरवैयर्थ्यमित्याशङ्क्याऽऽह– समवायविशारद इति । समवायः यथाधिकारं कर्मसंबन्धः । अयमर्थः– ब्राह्मणादीनां राजसूयादिषु अनधिकारान्न तत्प्राप्तिः । विविदिषायाः पापनिवृत्तिफलकैर्नित्यैरेवोत्पत्तेर्न तदर्थं फलतो निषिद्धानां श्येनादीनां प्राप्तिः । अत एव हेतुद्वयात् पवित्रेष्ट्यादिकं काम्यमपि न निवार्यते । नित्यानामपि न सर्वेषां समुच्चयः, विविदिषाख्यदृष्टफलकत्वात् । तस्मान्न सर्वकर्मसमुच्चयः, नापीतरवैयर्थ्यमिति । एवंरूप एव समुच्चयोऽत्र समवायशब्दार्थः । अस्मिंस्त्रये विशारदः विवेकसमर्थः । यद्वा ऐक्यं साधर्म्यात् पृथिव्यादीनां द्रव्यत्वेन रूपेण । संयोगनानात्वं असाधारणधर्मसंबन्धः । तेन पृथिवीत्वजलत्वादिरूपेण भेदोऽपि । समवायः शरीरे पञ्चानामपि भूतानां मेलकः । एतेषां तत्त्वं साधर्म्यं वैधर्म्यं संकरं च ज्ञातुं कुशल इत्यर्थः । नीटी.

**वक्ता प्रगल्भो मेधावी स्मृतिमान्नयवित्कविः ।**
**परापरविभागज्ञः प्रमाणकृतनिश्चयः ॥**

न केवलं ज्ञातुमेव कुशलः किन्तु वक्तुमपीत्याह– वक्तेति । वक्ताऽपि समानाधिकरण (?) एवेत्याह– प्रगल्भ इति । असंबद्धप्रलापी नेत्यर्थः । यतः मेधावी ऊहापोहकुशलः । तादृशोऽपि स्मृतिमान् । अधीतं न नाशितवानित्यर्थः । नयवित् दायविभागादिव्यवहारवित् । कविः अनागतदर्शी । परापरविभागज्ञः परापरयोः ज्ञानकांण्डकर्मकाण्डयोः विभागः यथायोग्यं शिष्येषु विभजनं तज्ज्ञः । यतः प्रमाणकृतनिश्चयः । प्रमाणं प्रत्यक्षानुमानागमादि । तच्च द्विविधं, लौकिकमलौकिकं च । आद्यं घटवह्निस्वर्गादिविषयम् । द्वितीयं निर्विशेषात्मवस्तुतत्त्वविषयम् । तथाहि– अहंकारादिकमात्मनि सुषुप्त्यादौ अदृष्टत्वान्मिथ्येति तत्र प्रत्यक्षं सुप्तौ निर्विशेषत्वम् । तथा द्रष्टृदृश्यौ एकोपादानकौ, भास्यभासकत्वात् श्रोत्रशब्दवत् । भास्यभासकौ च दृश्यद्रष्टारौ, तस्मादेकोपादानकौ । यौ न तथा तौ नैकोपादानकौ, यथा शब्दघ्राणौ इति व्यतिरेकतो वा साध्यसिद्धौ सत्यां उपादानोपादेययोरभेदात् दृङ्मात्रवस्तुतत्त्वमिति सिध्यति अनुमानादप्यात्मनो निर्विशेषत्वम्, घटज्ञानं पटज्ञानमिति दृशिविशेषदर्शनानुभवस्य घटाकाशादिवदौपाधिकत्वात् । तथाऽऽगमोऽपि आत्मनो निर्विशेषत्वे प्रसिद्धः ' अस्थूलमनणु ' (बृउ. ३।८।८) ' निर्गुणं निष्क्रियम् ' (अध्यात्मोप. ६२) इत्यादिः । नीटी.

**पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् ।**
**उत्तरोत्तरवक्ता च वदतोऽपि बृहस्पतेः ॥**

ननु अनुमानबलात् चन्द्रप्रादेशिकत्वप्रत्यक्षं ' यजमानः प्रस्तरः ' इत्यादिरागमश्च शिथिलीक्रियते । अनुमानमपि 'नरशिरःकपालं शुचि, प्राण्यङ्गत्वात्, शङ्खवत्' इत्यादिकं ' नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत् ' इत्यागमेन । तथा च सर्वमपि प्रमाणं सदोषं, अतस्तत्र कृतनिश्चयत्वं दूरापेतमित्याशङ्क्याह– पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् । तत्र परं बोधयितुं प्रवृत्तस्यानुमानवाक्ये प्रतिज्ञादयः पञ्चावयवाः । तत्र

'पर्वतो वह्निमान्' इति प्रतिज्ञा। 'धूमात्' इति हेतुः। 'यथा महानसः' इति दृष्टान्तः उदाहरणम्। 'धूमवांश्चायम्' इत्युपनयः। 'तस्मात् वह्निमान्' इति निगमनम्। अस्मिन् वाक्ये गुणः अनुकूलतर्कः 'यदि वह्निमान्न स्यात्तर्हि धूमवानपि न स्यात्'। दोषः 'ह्रदो वह्निमान्' इत्यादाविवाऽऽश्रयासिद्धिप्रभृतिः। तावुभौ वेत्तीति तथा। तथा चानुमानं प्रत्यक्षागमौ शिथिलीकरोतु। व्रीहिमसूरादौ शुचित्वाशुचित्वविभागस्य शास्त्रैकगम्यत्वात् तत्रानुकूलतर्काभाव एवानुमानबाधकः, न त्वागम इति स्थितम्। तथा च लौकिकप्रमाणाधिकारिणे अपरं कर्मकाण्डमेव विभजते इतरस्य इतरदिति विवेकः। नीटी.

**धर्मकामार्थमोक्षेषु यथावत्कृतनिश्चयः।**
**तथा भुवनकोशस्य सर्वस्यास्य महामतिः॥**

यथावत्कृतनिश्चयः। लौकिकानां प्रमाणानां प्रामाण्यमादाय धर्मार्थकामानां पुरुषार्थत्वनिश्चयः, इतरेषां प्रामाण्यमुपजीव्यमप्युपमृद्य मोक्षरसस्य पुरुषार्थत्वनिश्चयः, तदा लौकिकप्रमाणबाधात् 'वेदा अवेदाः' इति श्रुतेः, 'लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्' इत्यभियुक्तोक्तेश्च। आत्मनिश्चयादर्वागेवेति शेषः। आ आत्मनिश्चयादिति वा छेदः। महामतिः आत्मज्ञः, 'आत्मनो वा अरे दर्शनेन मत्या विज्ञानेनेदं सर्वं विदितम्' (बृउ. २।४।५) इति तस्यैव सार्वज्ञ्यश्रुतेः। नीटी.

**प्रत्यक्षदर्शी लोकस्य तिर्यगूर्ध्वमधस्तथा।**
**सांख्ययोगविभागज्ञो निर्विवित्सुः सुरासुरान्॥**

सांख्ययोगविभागज्ञः। सांख्यं वेदान्तविचारः। योगः चित्तवृत्तिनिरोधः। अनयोर्विभागः उपयोगः। तत्र श्रवणात्मको वाक्यार्थविचारः प्रमाणगतासंभावनानिवृत्त्युपयोगी, मननाख्यः श्रुतस्यार्थस्य तर्केणानुसंधानरूपो विचारः प्रमेयगतासंभावनानिवृत्त्युपयोगी, अद्वैतमेव वेदो वदति, युक्तियुक्तं चैतदेव, इति सांख्यविभागः। निदिध्यासनापरपर्यायो योगः अनात्मसु देहादिष्वात्मप्रत्ययरूपां विपरीतभावनां निवर्त्य ज्ञातृज्ञानज्ञेयाभाववन्तं दृङ्मात्रप्रत्ययं गोचरयति इति योगविभागः। ये तु 'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव। योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम्॥' इति वासिष्ठवचनमुदाहृत्य चित्तनाशाख्यात्मदर्शनस्य द्वावुपायाविति वदन्ति, तेषां 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (शुसं. ३१।१८) इति श्रुतिविरोधः। संवादिभ्रमवद्योगोऽपि ज्ञानं जनयित्वैव फलद इति चेत्तस्योपसर्जनत्वं कर्मणामिव स्यात्। तथा च नोपायान्तरं योग इत्यापतति। वासिष्ठवाक्यं तु क्रमभेदमाह, न तूपायभेदम्। तथा च कृतोपास्तेर्योग उपसर्जनम्, वाक्यार्थसंभवं ज्ञानं प्रधानम्। अकृतोपास्तेस्तु ज्ञानमुपसर्जनम्, योगः प्रधानम्। यथा दृष्टगोपिण्डस्यापि अगृहीतशब्दार्थसंगतिकस्य इयं गौरिति वाक्यमेव गवाज्ञाननुत्, न चक्षुः, तेन विषयीकृतेऽपि गोपिण्डे गोबुभुत्सानुवृत्तेः। एवं साक्षात्कृतत्वंपदार्थस्यापि 'तत्त्वमसि' इति वाक्यमेव संसारानर्थमूलब्रह्माज्ञानस्य निवर्तकं, न मनः, तेन दृष्टेऽपि त्वमर्थे ब्रह्माज्ञानानुवृत्तिदर्शनात्। एवं सास्नादिमती गौरितिलक्षणतो ज्ञातगोपदार्थस्यापि गोपिण्डदर्शनमेव गोबुभुत्सानिवर्तकम्, न तु वाक्यम्। तथा श्रवणादिना ज्ञातब्रह्मपदार्थस्यापि योगादेव दर्शनम्, न तु वाक्यात्। तेन 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृउ. ३।९।२६) इति 'मनसैवानुद्रष्टव्यम्' (बृउ. ४।४।१९) इति च शब्दमनसोः ज्ञानकरणत्वानुवादकश्रुत्योर्व्यवस्था सिध्यति। तदिदमुक्तम्— सांख्ययोगविभागज्ञः इति। विभागो हि द्वयोः समुच्चित्यैककार्यकारित्वे सति संभवति, न तु व्रीहियववद्विकल्पैककार्यकारित्वे, इत्यास्तां तावत्, 'सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।' (भगी. ५।४) इत्यत्र प्रपञ्चयिष्यमाणत्वात्। एवं ब्राह्मया विद्यया संपन्नत्वमुक्त्वा राजयोगविद्यान्तरसंपत्तिमप्याह— निर्विवित्सुः सुरासुरानित्यादिना। निर्विवित्सुः, विवित्सुः विचारं कर्तुमिच्छुः, निर्विवित्सुः तद्विरोधी उभयेषां धीप्रमोषणेन कलहप्रवर्तकः। यद्वा निर्वेदो युद्धादुपरतिः, तं कर्तुमिच्छुः लोकनाशभयादित्यर्थः। एतेन भेदाभिज्ञत्वमुक्तम्। नीटी.

**संधिविग्रहतत्त्वज्ञस्त्वनुमानविभागवित् ।**
**षाड्गुण्यविधियुक्तश्च सर्वशास्त्रविशारदः ॥**

संधिः साम । विग्रहः निग्रहः दण्ड इत्यर्थः । अनुमानविभागवित् । स्वपरशक्तिबलाबले अनुमानतो निश्चित्य विभागः विभजनं परामात्यादिभ्यो धनप्रदानम्, तद्वित् । अनुमाय विभागविदिति गौडाः पठन्ति । एवं च नीतिशास्त्रप्रसिद्धोपायचतुष्टयाभिज्ञत्वमुक्तम् । षाड्गुण्यविधियुक्तश्च । षड्गुणाः संधिविग्रहयानासनद्वैधीभावसमाश्रयाख्याः, त एव षाड्गुण्यम् । स्वार्थे ष्यञ् । तस्य विधिः अज्ञातज्ञापनम्, तेन युक्तः । सर्वदा विजिगीषुभ्यः षाड्गुण्यादिकमुपदिशति, स्वस्य निःशत्रुत्वेऽप्याधिकारिकत्वात् । तत्र संधिविग्रहौ प्रत्येकं द्विविधौ । प्रबलदुर्बलयोर्विजिगीषावतोः समभूमौ युद्धप्रसङ्गे आद्यो विग्रहमिच्छति दण्डेनैव, परः संधिमिच्छति दानेनेति । तयोरेव दुर्बलोऽभेद्यदुर्गाश्रितश्चेद्बलवताऽपि सह देशोल्लुण्ठनादिना विग्रहमिच्छति, इतरस्तु तेन सहाल्पकरग्रहेणापि संधिमेवेच्छति । तथा च दुर्बलद्वारकौ संधिविग्रहावन्यौ प्रबलद्वारकावन्यौ । तदिदमुक्तं रामायणे– 'द्वियोनी संधिविग्रहौ' इति । तत्र प्रबलयोनिर्विग्रहः यानासनयोः प्रयोजकः, दुर्बलयोनिः संधिर्द्वैधीभावसमाश्रययोः । तथोक्तं कामन्दकीये– 'संधेश्च विग्रहस्यापि द्वैगुण्यं संप्रचक्षते । यानासने विग्रहस्य रूपं संधेः परं द्वयम् ॥' इति । द्वौ गुणभूतौ यस्य स द्विगुणः । स च स च तौ, तयोर्भावो द्वैगुण्यम् । तत्र यानं विजिगीषोररिं प्रति यात्रा । आसनं कदाचिच्छक्तिप्रतिबन्धे च तत्रैव शत्रोर्दुर्गमावेष्टय तत्र धान्यादिप्रवेशनं प्रतिबध्नताऽवस्थानम् । बलवता विग्रहे बलवत्तरेण तच्छत्रुणा संधिं कृत्वा उभयत्र दासोऽस्मीति वाचैवाऽऽत्मसर्पणं कर्तव्यम्, न कर्मणेति स द्वैधीभावः । यथोक्तं तत्रैव– 'बलिनोर्द्विषतोर्मध्ये वाचाऽऽत्मानं समर्थयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥' (कानी. ११।२४) इति । अरिणा पीडयमानस्य बलवद्दुर्गभूपालाद्याश्रयणं समाश्रयः । एवं चोपायान्तर्गतौ संधिविग्रहावन्यौ षाड्गुण्यान्तर्गतौ चान्याविति न पुनरुक्तिः । नीटी.

**युद्धगान्धर्वसेवी च सर्वत्राप्रतिघस्तथा ।**
**एतैश्चान्यैश्च बहुभिर्युक्तो गुणगणैर्मुनिः ॥**

युद्धगान्धर्वसेवी तदुभयप्रिय इत्यर्थः । सर्वत्र सर्वासु विद्यासु सर्वेषु कर्मसु च अप्रतिघः अप्रतिहतः, पूर्णशक्तित्वात् । अन्यैः असङ्गत्वकारुण्यादिभिः । मुनिः आत्मतत्त्वानुसंधानवान् । नीटी.

**[1]लोकाननुचरन् सर्वानागमत्तां सभामृषिः ।**
**नारदः सुमहातेजा ऋषिभिः सहितस्तदा ॥**

आगमत् आगतवान् । नीटी.

**[2]पारिजातेन राजेन्द्र रैवतेन च धीमता ।**
**सुमुखेन च सौम्येन देवर्षिरमितद्युतिः ।**
**[3]सभास्थान् पाण्डवान् द्रष्टुं प्रीयमाणो मनोजवः ॥**

**[4]जयाशीर्भिस्तु तं विप्रो धर्मराजानमार्चयत् ॥**

आर्चयत् पूजितवान् । नीटी.

**[5]तमागतमृषिं दृष्ट्वा नारदं सर्वधर्मवित् ।**
**सहसा पाण्डवश्रेष्ठः प्रत्युत्थायानुजैः सह ।**
**अभ्यवादयत प्रीत्या विनयावनतस्तदा ॥**

**[6]तदर्हमासनं तस्मै संप्रदाय यथाविधि ॥**
**गां चैव मधुपर्कं च संप्रदायार्घ्यमेव च ॥**
**[7]अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित् ॥**

---

(१) भा. २।५।२ ; भामु. २।५।१० सभामृषिः (सभां नृप).

(२) भा. २।५।३ ; भामु. २।५।११–१२ रैवतेन (पर्वतेन).

(३) भामु. २।५।१२.

(४) भा. २।५।४ ; भामु. २।५।१३–१४.

(५) भा. २।५।५ ; भामु. २।५।१४.

(६) भामु. २।५।१५.

(७) भा. २।५।५ ; भामु. २।५।१५.

¹तुतोष च यथावच्च पूजां प्राप्य युधिष्ठिरात् ॥
²सोऽर्चितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः ।
धर्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरम् ॥

नारद उवाच–

कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः ।
सुखानि चानुभूयन्ते मनश्च न विहन्यते ॥

कच्चिदर्थाश्च कल्पन्त इति । कच्चिदिति कामप्रवेदने स्वाभिप्रायाविष्करणे । त्वदीयाः अर्थाः स्वकार्ये यागदान-कुटुम्बभरणादौ समर्था भवन्त्विति ममाभिप्राय इत्यर्थः । 'एवं करिष्यामि यथैतदुक्तम्' इत्यन्ते राज्ञाऽङ्गीकृतत्वादुपदेशपरोऽयं ग्रन्थ इत्यवसीयते । अर्थधर्मकाममोक्षान् त्वदीयानविहतानिच्छामीति क्रमेण पादचतुष्टयार्थः । कच्चिदिति सर्वत्र संबन्धनीयम् । तत्रापि मनश्चान्तरात्मनि प्राणिधीयमानं (न) प्रतिहन्यते वृत्त्यन्तरैरित्यन्त्यपादार्थः । नीटी.

³कच्चिदाचरितां पूर्वैर्नरदेव पितामहैः ।
वर्तसे वृत्तिमक्षीणां धर्मार्थसहितां नृषु ॥

त्रिषु उत्तमाधममध्यमेषु ऋत्विक्पुरोहितादिषु धर्मेण सहितां वृत्तिं वर्तसे । दण्ड्यद्वेष्यादिषु अर्थेन सहिताम्, प्रजासु पालनषड्भागहाराभ्यां धर्मार्थसहिताम्, इति विवेकः । धर्मार्थौ च धर्मार्थौ चेति द्वन्द्वैकशेषः, तैः सहितामिति समासः । नीटी.

⁴कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा ।
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ॥

कच्चिदर्थेनेति । अर्थलोभाद्धर्मबाधो नीचानां, धर्मलोभादर्थबाधो विरक्तानां, कामेन प्रीतिसारेण तात्कालिकसुखाभासप्रदर्शनबलेन मोहयता धर्मार्थयोर्बाधः कामुकानां प्रसक्तः । त्वयि राज्यप्रतिकूलानां नीचत्वविरक्तत्वकामुकत्वानामभावमिच्छामीत्यर्थः । नीटी.

(१) भामु. २।५।१६.
(२) भा. २।५।६–७ ; भामु. २।५।१६–१७.
(३) भा. २।५।८ ; भामु. २।५।१८ चरितां (चरितं) मक्षीणां (मक्षुद्रां) नृषु (त्रिषु).
(४) भा. २।५।९ ; भामु. २।५।१९.

¹कच्चिदर्थं च धर्मं च कामं च जयतां वर ।
विभज्य काले कालज्ञ सदा वरद सेवसे ॥

परस्परविरोधिनामेषां कथमेकेनानुष्ठानमित्याशङ्क्य कालभेदेनेत्याह– कच्चिदर्थमिति । 'पूर्वाह्णे चाऽऽचरेद्धर्मं मध्याह्नेऽर्थमुपार्जयेत् । सायाह्ने चाऽऽचरेत्काममित्येषा वैदिकी श्रुतिः ॥' इति दक्षोक्तकालव्यवस्थामास्थाय त्रिवर्गं सेवेतेत्यर्थः । सदावरदेति संबोधनेन परानुग्रहरूपो धर्मः सर्वस्मिन्नपि काले कर्तव्य इति सूचयति । सममिति पाठे अवैषम्येण आत्मसाम्येनेत्यर्थः । नीटी.

²कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथाऽनघ ।
बलाबलं तथा सम्यक् चतुर्दश परीक्षसे ॥

कच्चिद्राजेति । षड्गुणाः 'वक्ता प्रगल्भो मेधावी स्मृतिमान्नयवित् कविः ।' इति नारदस्तुतौ सूचिता वक्तृत्वादयः । अत्र राजगुणेषु वक्तृत्वं चारामात्यादिषु यथायोग्यं कार्योपदेशकौशलम् । प्रागल्भ्यं शत्रुदमनादौ उत्कर्षप्रदर्शनम् । मेधावित्वं तर्ककौशलम् । स्मृतिमान् कविरिति च अतीतानागतयोः परामर्शित्वम् । नयविदिति नीतिशास्त्रवित्त्वम् । एतैः राजगुणैरुपायान् बलाबलं अन्यांश्चतुर्दश त्वं परीक्षसे इति योजना । हे अनघ चतुर्दशभी राजदोषैर्वर्जित । ते च वक्ष्यन्ते– 'नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् । अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ॥ एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् । निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥ मङ्गलाद्यप्रयोगं च प्रत्युत्थानं च सर्वतः । कच्चित्त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश ॥' इति । नास्तिक्यं परलोकापलापः । प्रमादः अनवधानता । दीर्घसूत्रतां चिरक्रियत्वम् । पञ्चवृत्तितां पञ्चेन्द्रियपरवशताम् । अर्थानां प्रयोजनानां एकचिन्तनं एकेनैव चिन्तनम् । अनर्थज्ञैः विपरीतार्थदर्शिभिः सह चिन्तनं मन्त्रः । मङ्गलं उत्सवः । आदिपदाद्देवपूजादि । तस्य अप्रयोगं अननुष्ठानम् । प्रत्युत्थानं च सर्वतः, युगपत्सर्वदिगवस्थितशत्रूद्देशेन दण्डयात्रेति तदर्थः । यद्वा अघं पराजयमूलं विंशतिवर्गः,

(१) भा. २।५।१० ; भामु. २।५।२० कालज्ञ (कालज्ञः).
(२) भा. २।५।११–१२ ; भामु. २।५।२१–२२.

तद्रहित। स च कामन्दकीये उक्तः– 'बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः। भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषयेष्वपि सक्तिमान्। अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ दैवोपहतकश्चैव दैवचिन्तक एव च। दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ अदेशस्थो बहुरिपुर्युक्तोऽकालेन यश्च सः। सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ एतैः संधिं न कुर्वीत विग्रही स्यात्तु केवलम् ॥' (कानी. ९।२३–२७) इति। उपायाः सप्त सामदानभेददण्डमन्त्रौषधेन्द्रजालाख्याः। बलाबलं स्वपरपक्षयोः साम्यम्, परस्य हीनता, स्वस्य वा हीनतेति त्रिविधम्। यथायोगं बुद्ध्यादिभिः सामादयः परीक्षणीयाः। किमनेन शत्रुणा साम कर्तव्यं न वा, कर्तुमारब्धं चेत् सिध्यति न वा, सिद्धं चेदन्ते कुशलं नवेति चारप्रेषणादिना च बलाबलप्रभृतिकं परीक्षणीयम्। तथा चतुर्दश देशादयोऽपि परीक्षणीयाः। ते च नीतिशास्त्रोक्ताः– 'देशो दुर्गं रथो हस्तिवाजियोधाधिकारिणः। अन्तःपुरान्नगणनाः शास्त्रलेख्यधनासवाः ॥ परीक्ष्या ह्यधिपास्तेषां चतुर्दश नरेश्वरैः ॥' इति। योधाः शूराः। अधिकारिणः देशपालदुर्गपालसेनापत्यादयः। गणना अश्वरथधनादीनां संख्या। लेख्यं आयव्ययनिर्णयाय सर्वस्य पत्रारोहकरणम्। धनं पर्याप्तमपर्याप्तं चेति विचार्यम्। आसवाः मद्यवदपकारिणः प्रच्छन्नशत्रवः। असव इति पाठे असुः बलं इत्यर्थः। बलाबलेन सम्यक्त्वमिति (पाठे) स्वीयं परकीयं च देशादिकमुक्तविधेन बलाबलेन बुद्ध्या चारैश्च परीक्षणीयमित्यर्थः। नीटी.

**कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर।**
**तथा संधाय कर्माणि अष्टौ भारत सेवसे ॥**

एतदेवाह– कच्चिदात्मानमिति। आत्मानं प्रबलं परान् दुर्बलान् परीक्ष्य सेवसे राज्यम्। तथा विपरीते जयमूलस्य कोशस्य वृद्धये संधाय परैः सह साम कृत्वा अष्टौ कर्माणि 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरकरादानं(?) शून्यानां च निवेशनम् ॥ अष्टौ संधानकर्माणि प्रयुक्तानि मनीषिभिः ॥' (कानी. ५।७८–७९) इति शास्त्रोक्तानि सेवसे। कुञ्जरबन्धनं बहुभक्षकत्वात्तेषां यथाविभागं ग्रामीणधनैरेव ग्रामे ग्रामे पोषणार्थं बन्धनम्। खनिः रत्नाद्युत्पत्तिस्थानम्, आकरः सुवर्णाद्युत्पत्तिस्थानमिति भेदः, खननमात्रेण धमनादिनाऽभिमुखीकरणेन च तयोस्तल्लाभहेतुत्वात्। नीटी.

**[1]कच्चित्प्रकृतयः षट् ते न लुप्ता भरतर्षभ।**
**आढ्यास्तथा व्यसनिनः स्वनुरक्ताश्च सर्वशः ॥**

कृष्यादिनाऽपि कोशवृद्धिः स्वाम्यादिप्रकृतिसप्तकस्य परैर्धनादिना मोहने कृते सति न भवतीत्यत आह– कच्चित्प्रकृतय इति। सप्त 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥' इति कोशोक्ताः। तत्र स्वामिरूपा प्रकृतिः सप्तविधा 'दुर्गाध्यक्षो बलाध्यक्षो धर्माध्यक्षश्चमूपतिः। पुरोधा वैद्यदैवज्ञौ सप्त प्रकृतयः स्मृताः ॥' इति प्रोक्ताः। बलाध्यक्षः बलस्य चतुरङ्गस्याऽऽहारादिदानेन पालकः। चमूपतिः युद्धे चम्वाः प्रणेता। धर्मः कार्यमात्रम्। अमात्यः मन्त्री। सुहृत् न्यायान्यायविभागकर्ता पर्षद्रूपः। एते न तावका लुप्ताः परैर्मोहिताः मा भूवन्। लुप्यतेर्मोहनार्थस्येदं रूपम्। लुप्ताश्चेद्दुर्गादीनामेव नाशापत्तिरित्यर्थः। अथवा त एवाऽऽढ्याः सन्तो व्यसनिनः द्यूतपानादिरताः मा भूवन्। 'हृष्टो दृप्यति, दृप्तो धर्ममतिक्रामति, धर्मातिक्रमात् पापं करोति।' इति स्मृतेः अस्त्याढ्यस्य व्यसनप्रसक्तिः। तदाऽपि न कोशादीनां वृद्धिः स्यात्। कथं तर्हि स्युः? सर्वप्रकारैः स्वनुरक्ताः अत्यन्तं स्वामिकार्ये प्रीतिमन्तः। नीटी.

**[2]कच्चिन्न तर्कैर्दूतैर्वा ये चाप्यपरिशङ्किताः।**
**त्वत्तो वा तव वाऽमात्यैर्भिद्यते जातु मन्त्रितम् ॥**

दुर्गाध्यक्षादीनां लोभतः विपरीतकार्यकारित्वेन नाशहेतुत्वं प्रसिद्धम्। अमात्यसुहृदोस्तु लोभेन कथं

(१) भा. २।५।१३; भासु. २।५।२३ षट् ते (सप्त).
(२) भा. २।५।१४; भासु. २।५।२४ तर्कैर्दूतैर्वा (कृतकैर्दूतः) वाऽमात्यै (चामात्यै) जातु मन्त्रितम् (मन्त्रितं तथा).

नाशहेतुत्वमित्याशङ्क्य मन्त्रभेदेनेत्याह– कच्चिन्नेत्यादिना । अपरिशङ्किताः येषु दौष्टयशङ्का नास्ति, तैः कृतकैः कृत्रिमैः सुहृद्भूतैः दूतैः उभयवेतनैः तव मन्त्रितं मन्त्रः न भिद्यते प्रकाश्यते कच्चित् । ' तर्कैर्दूतैर्वा ' इति पाठे सम्यगपि मन्त्रितं कुयुक्तिभिर्न विप्लाव्यत इत्यर्थः । त्वत्तो वा कृतकमित्रं प्रति कथयतः अमात्यैर्वा कृतकैः मन्त्रितं भिद्यत इति सर्वत्र संबन्धनीयम् । नीटी.

**[1]मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् ॥**

**[2]कच्चित्संधिं यथाकालं विग्रहं चोपसेवसे ।**
**कच्चिद्वृत्तिमुदासीने मध्यमे चानुवर्तसे ॥**

**[3]कच्चिदात्मसमा बुद्धया शुचयो जीवितक्षमाः ।**
**कुलीनाश्चानुरक्ताश्च कृतास्ते वीर मन्त्रिणः ॥**

मित्रेति । मित्रं सम्यक् परीक्ष्य, तेन सह संमन्त्र्य, बलवता शत्रुणा संधिं, दुर्बलेन सह विग्रहं, मध्यमेन उभयवेतनेन उदासीनेन राज्ञा च सह वृत्तिं साम्येन स्थितिं च कुर्यादिति सार्धश्लोकार्थः । तत्र मित्रं कैर्गुणैः परीक्षेतेत्यत आह– कच्चिदात्मसमा इति । शुद्धाचारत्वं कुलीनत्वं च नैर्मल्यस्यासाधारणं लिङ्गम् । ' शुद्धाः संबोधनक्षमाः ' इत्यत्र ' शुचयो जीवितक्षमाः ' इति पाठे आपन्मग्नस्य राज्ञ उज्जीवने क्षमा इत्यर्थः । नीटी.

**[4]विजयो मन्त्रमूलो हि राज्ञां भवति भारत ।**
**सुसंवृतो मन्त्रधनैरमात्यैः शास्त्रकोविदैः ॥**

**[5]राष्ट्रं सुरक्षितं तात शत्रुभिर्न विलुप्यते ॥**

(१) भामु. २।५।२५.

(२) भा. २।५।१५ ; भामु. २।५।२५–२६ वर्तसे (मन्यसे).

(३) भा. २।५।१६ ; भामु. २।५।२६–२७ पूर्वार्धे (कच्चिदात्मसमा वृद्धाः शुद्धाः संबोधनक्षमाः ।).

(४) भा. २।५।१७ ; भामु. २।५।२७–२८ राज्ञां ( राज्ञो ) सुसंवृतो मन्त्रधनैः ( कच्चित् संवृतमन्त्रैस्ते ).

(५) भामु. २।५।२८.

किमेवंविधेन मन्त्रेणेत्यत आहार्धेन– विजय इति । मन्त्रभेदो मा भूदित्युक्तं, तत्फलमाह– कच्चित्संवृतेति । नीटी.

**[1]कच्चिन्निद्रावशं नैषि कच्चित्काले विबुध्यसे ।**
**कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् ॥**

कच्चिन्निद्रेति । यथाकालं स्वप्नप्रबोधवता ब्राह्मे मुहूर्ते अमात्यादिभिः सह कृतस्य मन्त्रस्य पर्यालोचनं कर्तव्यम्, ' ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् । ' इति स्मृतेः तदा निर्णीतोऽर्थो न विप्लवते इत्यवसायात् । नीटी.

**[2]कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।**
**कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रमनुधावति ॥**

कच्चिन्मन्त्रेति । ' षट्कर्णो भिद्यते मन्त्रः ' इति प्रसिद्धेर्द्वाभ्यामेव मन्त्रयितव्यमित्यर्थः । मन्त्रभेदो न कर्तव्य इत्युक्तं तदुपसंहरति– कच्चित्त इति । नीटी.

**[3]कच्चिदर्थान् विनिश्चित्य लघुमूलान् महोदयान् ।**
**क्षिप्रमारभसे कर्तुं न विघ्नयसि तादृशान् ॥**

स्वाम्यमात्यादिप्रकृतिसप्तकानुग्रहात् कृष्यादिकर्माष्टकसिद्धितश्च कोशवृद्धिरित्युक्तं, तदनुवदति विशेषविधानार्थम्– कच्चिदर्थानिति । अर्थान् अर्थप्राप्त्युपायान् । लघुमूलान् अल्पव्ययसाध्यान् । महोदयान् प्रचुरफलान् । तादृशान् कृष्याद्यारम्भकर्तॄनन्यान् वैश्यादीन् । तेभ्योऽपि करादानेन कोशवृद्धिरेव भवतीति भावः । नीटी.

**[4]कच्चिन्न सर्वे कर्मान्ताः परोक्षास्ते विशङ्किताः ।**
**सर्वे वा पुनरुत्सृष्टाः संसृष्टं ह्यत्र कारणम् ॥**

कच्चिन्न सर्वे इति । कर्मणा अन्त्यन्ते बध्यन्ते इति कर्मान्ताः कृष्यादिकर्मबद्धाः कृषीवलादयः कच्चित्ते परोक्षाः अज्ञाताः न सन्ति । अथवा विशङ्किताः अविश्वास्याः न सन्ति । अथवा पुनरुत्सृष्टाः पुनःपुनस्त्यक्तोपात्ताः ।

(१) भा. २।५।१८ ; भामु. २।५।२९.

(२) भा. २।५।१९ ; भामु. २।५।३० अनुधावति ( परिधावति ).

(३) भा. २।५।२० ; भामु. २।५।३१.

(४) भा. २।५।२१ ; भामु. २।५।३२ ह्यत्र ( चात्र ).

संसृष्टं स्नेहः । 'संसृष्टं त्रिषु संगते' इति मेदिनी । चिरपरिग्रहात् ज्ञाताः विश्वास्याः स्निग्धाश्च कर्मकराः अत्र महोदये कर्मणि कारणं उदयनिमित्तं ज्ञात्वा तादृशानेव संगृह्णीयादित्यर्थः । नीटी.

[१]आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः ॥

[२]कच्चिद्राजकृतान्येव कृतप्रायाणि वा पुनः ।
विदुस्ते वीर कर्माणि नानवाप्तानि कानिचित् ॥

[३]कच्चित्कारणिकाः सर्वे सर्वशास्त्रेषु कोविदाः ।
कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः ॥

एतदेवाहार्धेन– आप्तैरिति । क्रमिकैः वृद्धक्रमागतैः । ते च कृष्यादयश्च । कच्चिदिति । मन्त्रगुप्तिवत् कर्मगुप्तिरपि कर्तव्येत्यर्थः । अनवाप्तानि अनारब्धानि न विदुः कच्चिदिति आवृत्त्या योज्यम् । कोशवृद्ध्युपायमुक्त्वा बलवृद्ध्युपायमाह– कच्चित्कारणिका इति । कारणं ज्ञापनं शिष्येभ्यो विद्याप्रतिपादनम्, तदर्थं चरन्ति ते कारणिकाः कृपद्रोणसदृशा आचार्याः । कारयन्ति शिक्षयन्ति । नीटी.

[४]कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् ॥
कच्चिद् दुर्गाणि सर्वाणि धनधान्यायुधोदकैः ।
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥

[५]एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥

सुहृद्दुर्गामात्यसंपदं क्रमेण त्रिभिराह– कच्चित्सहस्रैरित्यादिभिः । अर्थकृच्छ्रेषु प्रयोजनसंकटेषु । निःश्रेयसं कल्याणम् । नीटी.

(१) भामु. २।५।३३.
(२) भा. २।५।२२ ; भामु. २।५।३३–३४.
(३) भा. २।५।२३ ; भामु. २।५।३४ सर्वे ( धर्मे ).
(४) भा. २।५।२४–२५ ; भामु. २।५।३५–३६.
(५) भा. २।५।२६ ; भामु. २।५।३७ ; राक. १५० पूर्वार्धे ( एकोऽपि शास्त्रवित् प्राज्ञो गुरूणां पर्युपासितः । ) ; राम्र. १३२ पूर्वार्धे ( एकोऽपि शास्त्रवित् प्राज्ञो गुरूणां पर्युपासिता । ).

[१]कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥

षष्ठीं राष्ट्रसंपदमाह– कच्चिदष्टादशान्येष्विति । तीर्थानि मन्त्रिप्रभृतीन्यष्टादश यान्यवगाह्य राजा कृतकृत्यो भवति । तानि चोक्तानि नीतिशास्त्रे– 'मन्त्री पुरोहितश्चैव युवराजश्चमूपतिः । पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा ॥ कारागाराधिकारी च द्रव्यसंचयकृत्तथा । कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥ प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा । धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ॥ षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः । अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ॥ चारान्विचारयेत्तीर्थेष्वात्मनश्च परस्य च । पाखण्डादीनविज्ञातानन्योन्यमितरेष्वपि ॥ मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितम् ॥' इति । एषां तीर्थशब्दवाच्यत्वे हलायुधः– 'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि ॥' इति । परेषामष्टादशसु स्वस्य मन्त्रिपुरोहितयुवराजवर्जं पञ्चदशसु च तीर्थेषु चारान् अन्यैः परस्परं चाविज्ञातान् त्रींस्त्रीन् प्रयुज्य तत्रत्यां वार्तां सर्वचारसंवादे तथ्यां जानीयात् । ज्ञात्वा च स्वप्रजानामनुरञ्जनेन परप्रजानां दुःखितानामभयदानादिना आकर्षणेन च स्वराष्ट्रं वर्धयेदित्युक्तं भवति । नीटी.

[२]कच्चिद्द्विषामविदितः प्रतियत्तश्च सर्वदा ।
नित्ययुक्तो रिपून् सर्वान् वीक्षसे रिपुसूदन ॥

पूर्वोक्तानां गौणस्वामिनां संपदं विवक्षुः मुख्यस्वामिसंपदं तावदाह– कच्चिद्द्विषामिति । अविदितः परकिङ्करैः । प्रतिपन्नः सावधानः । 'प्रतियत्तः' इति पाठे प्रतीकारे यत्नवान् । नित्ययुक्तः नित्योद्योगी । नीटी.

[३]कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुप्रष्टा सत्कृतस्ते पुरोहितः ॥

(१) भा. २।५।२७ ; भामु. २।५।३८.
(२) भा. २।५।२८ ; भामु. २।५।३९ प्रतियत्त ( प्रतिपन्न ).
(३) भा. २।५।२९–३० ; भामु. २।५।४०–४१.

विनयसंपन्नः शिक्षायुक्तः। कुलपुत्रः सत्कुलजः। अनसूयुः परगुणेषु दोषारोपमकुर्वन्। अनुप्रष्टा शास्त्रचर्चाकुशलः। 'असंकीर्णः' इति पाठे सदसद्विवेकवान्। नीटी.

**कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः।**
**हुतं च होष्यमाणं च काले वेदयते सदा॥**

ऋजुः अकुटिलः। नीटी.

**[1]कच्चिदङ्गेषु निष्णातो ज्योतिषां प्रतिपादकः।**
**उत्पातेषु च सर्वेषु दैवज्ञः कुशलस्तव॥**

अङ्गेषु सामुद्रिकशास्त्रोक्तरीत्या अङ्गानां परीक्षायाम्। उत्पातेषु दिव्यभौमशारीरेषु धूमकेतुभूकम्पवामनेत्रस्फुरणादिषु आगाम्यशुभसूचकेषु। नीटी.

**[2]कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः।**
**जघन्याश्च जघन्येषु भृत्याः कर्मसु योजिताः॥**

सेनापत्याकरकोशाध्यक्षकृष्याद्यवेक्षणानि मुख्यमध्यमनीचानि। नीटी.

**अमात्यानुपधातीतान् पितृपैतामहाञ्शुचीन्।**
**श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु॥**

उपधातीतान् छलरहितान्। श्रेष्ठेषु मन्त्रकार्येषु। नीटी.

**[3]कच्चिन्नोग्रेण दण्डेन भृशमुद्वेजितप्रजाः।**
**राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ॥**

**[4]कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा।**
**उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः॥**

पतितमिति व्यतिरेकदृष्टान्तः। नावजानन्ति नावमन्यन्ते। तत्र हेतुः– उग्रप्रतिग्रहीतारम्। उग्रमिति क्रियाविशेषणम्। यद्वा उग्रं हिंस्रं कर्म, तेन प्रतिग्रहीतारं धनस्य, प्रजापीडकमित्यर्थः। यथोक्तम्– 'प्रजापीडनसंतापात्समुद्भूतो महानलः। राज्ञः प्राणान् बलं कोशं नादग्ध्वा विनिवर्तते॥' (यास्मृ. १।३४१) इति। तथा च नाशहेतुकर्मकारिणः अवज्ञैव उचिता, अतस्त्वया तन्न कर्तव्यमित्यर्थः। कामयानं कामतो यानं पर्यटनं यस्य तं स्वैरिणमिव भ्रष्टत्वादरतिप्रदत्वाच्च स्त्रियोऽवमन्यन्ते तद्वत्। नीटी.

**[1]कच्चिद्धृष्टश्च शूरश्च मतिमान् धृतिमाञ्शुचिः।**
**कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव॥**

हृष्टः धनमानादिना। नीटी.

**[2]कच्चिद्बलस्य ते मुख्याः सर्वे युद्धविशारदाः।**
**दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः॥**

धृष्टावदाताः प्रगल्भाः निष्कपटाश्च अत एव विक्रान्ताः जयं कृतवन्तः। एवं गौणस्वामिसंपदमुक्त्वा तद्वृद्धिहेतुमाह– त्वया सत्कृत्य मानिता इत्यादिना। नीटी.

**[3]कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम्।**
**संप्राप्तकालं दातव्यं ददासि न विकर्षसि॥**

भक्तं अहरहर्देयं धान्यादि। वेतनं मासान्तदेयं वित्तम्। विकर्षणं कालातिक्रमः। नीटी.

**[4]कालातिक्रमणाद्ध्येते भक्तवेतनयोर्भृताः।**
**भर्तुः कुप्यन्ति दौर्गत्यात्सोऽनर्थः सुमहान् स्मृतः॥**

**[5]कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः।**
**कच्चित्प्राणांस्तवार्थेषु संत्यजन्ति सदा युधि॥**

दौर्गत्यात् दारिद्र्येण। प्रधानतः मन्त्रिणमारभ्य, मन्त्रिप्रभृतय इत्यर्थः। नीटी.

---

(१) भा. २।५।३१; **भामु.** २।५।४२ ज्योतिषां (ज्योतिषः).

(२) भा. २।५।३२–३३; **भामु.** २।५।४३. श्लोकद्वयस्य मिलित्वा एक एव अङ्कः प्रमादान्मुद्रितः।

(३) भा. २।५।३४; **भामु.** २।५।४४ मुद्वेजितप्रजाः (मुद्विजसे प्रजाः).

(४) भा. २।५।३५; **भामु.** २।५।४५.

(१) भा. २।५।३६; **भामु.** २।५।४६ स्तव (स्तथा).

(२) भा. २।५।३७; **भामु.** २।५।४७ सर्वे युद्ध (सर्वयुद्ध) दृष्टापदाना (धृष्टावदाता).

(३) भा. २।५।३८; **भामु.** २।५।४८ कालं (काले).

(४) भा. २।५।३९; **भामु.** २।५।४९ क्रमणाद्ध्येते (क्रमणादेते) कुप्यन्ति (कुर्वन्ति).

(५) भा. २।५।४०; **भामु.** २।५।५०.

[1]कच्चिन्नैको बहूनर्थान् सर्वशः सांपरायिकान् ।
अनुशास्सि यथाकामं कामात्मा शासनातिगः ॥

सांपरायिकान् संग्रामहितान् शूरान् गजरथतुरगारोहान् पदातींश्च अर्थान् प्रयोजनानि नानुशास्ति । सर्वस्यैकाधिपत्ये तद्भेदेन सर्वनाशो युगपदेव स्यादिति भावः । नीटी.

[2]कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन् ।
लभते मानमधिकं भूयो वा भक्तवेतनम् ॥

[3]कच्चिद्विद्याविनीतांश्च नराञ्ज्ञानविशारदान् ।
यथार्हं गुणतश्चैव दानेनाभ्यवपद्यसे ॥

कच्चित्पुरुषेति । कृतज्ञो भवेदिति ( १ वेति ) भावः । कच्चिद्विद्येति । बुद्धिदान् मानयस्वेति भावः । नीटी.

[4]कच्चिद्दारान् मनुष्याणां तवार्थे मृत्युमेयुषाम् ।
व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ॥

[5]कच्चिद्भयादुपनतं क्लीबं वा रिपुमागतम् ।
युद्धे वा विजितं पार्थ पुत्रवत्परिरक्षसि ॥

कच्चिद्दारानिति जीवतां शूराणां विश्वासार्थं, व्यसनं चेति परलोकार्थम् । तदेवाऽऽह– युद्धे वेति ( १ ) । नीटी.

[6]कच्चित्त्वमेव सर्वस्याः पृथिव्याः पृथिवीपते ।
समश्च नाभिशङ्क्यश्च यथा माता यथा पिता ॥

सर्वस्या इति । प्रजानुकूल्यमपि जयहेतुः । नीटी.

( १ ) भा. २।५।४१ ; भामु. २।५।५१ शास्सि ( शास्ति ).

( २ ) भा. २।५।४२ ; भामु. २।५।५२.

( ३ ) भा. २।५।४३ ; भामु. २।५।५३ भ्यवपद्यसे ( भ्युपपद्यसे ).

( ४ ) भा. २।५।४४ ; भामु. २।५।५४ मेयुषाम् ( मीयुषाम् ).

( ५ ) भा. २।५।४५ ; भामु. २।५।५५ दुपनतं ( दुपगतं ) क्लीबं ( क्षीणं ).

( ६ ) भा. २।५।४६ ; भामु. २।५।५६ समश्च नाभि ( समश्चानभि ).



[1]कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ ।
अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् ॥

एवं विजयहेतुं प्रकृतिसंपदमुक्त्वा विजयकालमाह– कच्चिद्व्यसनिनमिति । व्यसनैः ‘ स्त्री द्यूतं मृगया मद्यं नृत्यं गीतं वृथाटनम् । वाद्यं निन्दा दिवास्वापो व्यसनानि नृणां दश ॥ ’ इत्युक्तैर्युक्तम् । त्रिविधं बलं मन्त्रकोशभृत्यबलानि प्रभुमन्त्रोत्साहशक्तीर्वा । नीटी.

[2]यात्रामारभसे दिष्ट्या प्राप्तकालमरिंदम ॥

[3]पार्ष्णिमूलं च विज्ञाय व्यवसायं पराजयम् ।
बलस्य च महाराज दत्त्वा वेतनमग्रतः ॥
कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परंतप ।
उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः ॥

पार्ष्णिमूलं पार्ष्णिग्राहकः आदिर्यस्य तत् द्वादशविधं मण्डलम् । तच्चोक्तं कामन्दकीये–‘अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः । एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥ ( कानी. ८।४ ) संपन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः । जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥ ( कानी. ८।६) अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । अथारिमित्रमित्रं च विजिगीषोः पुरस्कृताः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ॥ ’ ( कानी. ८।१६–१९ ) इति । विजिगीषुशत्रू, तयोर्मित्रे, तन्मित्रे चेति त्रीणि द्वन्द्वानि क्रमेण पुरतः विजिगीषोः । पृष्ठतः पार्ष्णिग्राहाक्रन्दौ । पार्ष्णिग्राहः पृष्ठरक्षकः । आक्रन्दः प्रोत्साहकः । एतयोरनुग्राहकौ आसारौ तत्तत्पृष्ठगतौ पार्ष्णिग्राहासारः आक्रन्दासारश्च इति दश पुरुषाः । विजिगीषुशत्र्वोः पार्श्वे मध्यमः । सर्वेषां पार्श्वे उदासीनः । इति मण्डलं पार्ष्णिमूलमित्युच्यते । व्यवसायं कृत्यनिश्चयम् । कृत्यं च– ‘ अलब्धवेतनो लुब्धो मानी चाप्यवमानितः ।

( १ ) भा. २।५।४७ ; भामु. २।५।५७.

( २ ) भामु. २।५।५८.

( ३ ) भा. २।५।४८–५१ ; भामु. २।५।५८–६१.

क्रुद्धश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः ॥ यथाभिलषितैः कामैर्भिन्द्यादेतांश्चतुर्विधान् । परकीयान् स्वकीयांस्तु रक्षेद्विजयकामुकः ॥ ' ( कानी. १७।२३-२४ ) इति नीतिशास्त्रोक्तम् । पराजयं पराजयमूलानां व्यसनानां परपक्षे सद्भावं स्वपक्षे चाभावम् । विज्ञाय दिष्ट्या विशेषतो दैवज्ञादिद्वारा ज्ञात्वा । तत्र दैवं व्यसनं पञ्चविधम्, मानुषं च पञ्चविधम् । यथोक्तं कामन्दकीये— ' हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा । इति पञ्चविधं दैवं व्यसनं मानुषं परम् ॥ ( कानी. १३।२० ) अयुक्तेभ्यश्च चोरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम् ॥ ' ( कानी. ५।८२ ) इति । उपच्छन्नानि परैरलक्ष्याणि । रत्नानि उत्कृष्टवस्तूनि । भेदायेत्यर्थः । नीटी.

**कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः ।**
**पराञ्जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान् ॥**

**कच्चित्ते यास्यतः शत्रून् पूर्वं यान्ति स्वनुष्ठिताः ।**
**साम दानं च भेदश्च दण्डश्च विधिवद्गुणाः ॥**

स्वनुष्ठिताः शोभनेन पुरुषेण सम्यगनुष्ठिताः । विधिवद्गुणाः ये सामादयः विधिवत् अनुष्ठिताः सन्तो गुणाः हिताय भवन्ति, अन्यथा विपरीताय । यथोक्तमभियुक्तैः— ' चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया । ' इति । यद्वा सामादयोऽवश्यमनुष्ठेयाः । यतो राज्ञां गुणाः संधिविग्रहयानासनद्वैधीभावसंश्रयाः विधिवत् अग्निहोत्रादिविधिवत् अवश्यानुष्ठेयाः । तदकरणे स्वराष्ट्रभङ्गादिना जातेन प्रजापीडनेन राज्ञां दोषोत्पत्तिः । नीटी.

**[1]कच्चिन्मूलं दृढं कृत्वा यात्रां यासि विशां पते ।**
**तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि ॥**

**[2]कच्चिदष्टाङ्गसंयुक्ता चतुर्विधबला चमूः ।**
**बलमुख्यैः सुनीता ते द्विषतां प्रतिबाधनी ॥**

मूलं स्वराज्यं दृढप्रत्ययिभिः शूरैरधिष्ठितं सत् दृढं परानभिभाव्यं कृत्वा । अष्टाङ्गसंयुक्ता ' रथा नागा हया योधाः पत्तयः कर्मकारकाः । चारा दैशिकमुख्याश्च ध्वजिन्यष्टाङ्गिका मता ॥ ' चतुर्विधबला मौलमैत्रभृत्याटविकैर्बलैर्युक्ता । बलमुख्यैः सेनापतिभिः । प्रतिवर्धिनी प्रातिकूल्येन छेदिनी । नीटी.

**[1]कच्चिल्लवं च मुष्टिं च परराष्ट्रे परंतप ।**
**अविहाय महाराज विहंसि समरे रिपून् ॥**

लवः सस्यच्छेदनकालः । मुष्टिः सस्यानां गोपनकालः, दुर्भिक्षमिति यावत् । ' लूञ् छेदने, मुष् स्तेये ' आभ्यामधिकरणे घक्तिनौ । परराष्ट्रे क्षेत्रस्थेषु सस्येषु सुखलब्धान्नैर्दुर्भिक्षे च राजकुललब्धभक्तोपजीविभिर्निरन्नताक्रान्ताः शत्रवः सुखं जेया इत्यर्थः । नीटी.

**[2]कच्चित्स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव ।**
**अर्थान् समनुतिष्ठन्ति रक्षन्ति च परस्परम् ॥**

स्वपरराष्ट्रेषु । स्वेति दृष्टान्तार्थम् । स्वराष्ट्रे इव परराष्ट्रे प्रविष्टाः बहवः अधिकृताः स्थाने स्थाने स्थिताः स्थानपत्यादयः अर्थान् प्रयोजनानि प्रजावशीकरणकरग्रहणादीनि रक्षन्ति च परस्परं संभूय परकीयमागतं सेनापत्यादिकमभिभूय राष्ट्रं स्वीयांश्च रक्षन्तीत्यर्थः । नीटी.

**[3]कच्चिदभ्यवहार्याणि गात्रसंस्पर्शकानि च ।**
**घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव ॥**

अभ्यवहार्याणि भक्ष्याणि । गात्रसंस्पर्शनानि वस्त्राणि । 'संघर्षणानि' इति पाठे चन्दनागरुकुङ्कुमकस्तूरिकादीनि । घ्रेयाणि उत्तमधूपादीनि । अनुमताः विश्वस्ताः । तव त्वदर्थं रक्षन्ति, न तु देशान्तरोत्पन्नानि तानि स्वयमेव स्वीकुर्वन्तीत्यर्थः । नीटी.

( १ ) **भा.** २।५।५२ ; **भामु.** २।५।६२ मूलं ( बलं ) यात्रां ( परान् ).
( २ ) **भा.** २।५।५३ ; **भामु.** २।५।६३ प्रतिबाधनी ( प्रतिवर्धिनी ).

( १ ) **भा.** २।५।५४ ; **भामु.** २।५।६४ विहंसि ( निहंसि ).
( २ ) **भा.** २।५।५५ ; **भामु.** २।५।६५ समनु ( समधि ).
( ३ ) **भा.** २।५।५६ ; **भामु.** २।५।६६ स्पर्शकानि ( स्पर्शनानि ).

[1]कच्चित्कोशं च कोष्ठं च वाहनं द्वारमायुधम् ।
आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ॥

कोशः धनगृहम् । कोष्ठं धान्यस्थानम् । नीटी.

[2]कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशां पते ।
रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान् ॥

आभ्यन्तरेभ्यः सूदादिभ्यः । बाह्येभ्यः सेनापत्यादिभ्यः । तानुभयान् स्वेभ्यः पुत्रामात्यादिभ्यः, तानपि मिथः पुत्रममात्यादमात्यं च पुत्राद्रक्षसि । नीटी.

कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च ।
प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव ॥

कच्चिन्नेति । पानादिव्यसनजं व्ययं तव पूर्वाह्णे धर्माचरणकाले भृत्या न प्रतिजानन्ति नाऽऽवेदयन्ति । आवेदने हि तदानीमागताः शिष्टाः पुरोहितादयः पानादिदुर्व्यसनासक्तं त्वां ज्ञात्वा त्यजेयुरिति भावः । नीटी.

[3]कच्चिदायस्य चार्धेन चतुर्भागेन वा पुनः ।
पादभागैस्त्रिभिर्वाऽपि व्ययः संशोध्यते तव ॥

सुभिक्षसाम्यदुर्भिक्षेषु आयस्य पादेन पादाभ्यां त्रिभिः पादैर्वा व्ययः संशुध्यते पूर्यते । सर्वथाऽपि कोशवृद्धिः कार्येति भावः । नीटी.

[4]कच्चिज्ज्ञातीन् गुरून् वृद्धान्
वणिजः शिल्पिनः श्रितान् ।
अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् ॥

दुर्गतान् दरिद्रान् । नीटी.

[5]कच्चिदायव्यये युक्ताः सर्वे गणकलेखकाः ।
अनुतिष्ठन्ति पूर्वाह्णे नित्यमायव्ययं तव ॥

(१) भा. २।५।५७ ; भामु. २।५।६७ कोशं (कोशः).

(२) भा. २।५।५८–५९ ; भामु. २।५।६८–६९.

(३) भा. २।५।६० ; भामु. २।५।७० संशोध्यते (संशुध्यते).

(४) भा. २।५।६१ ; भामु. २।५।७१.

(५) भा. २।५।६२ ; भामु. २।५।७२ कच्चिदा (कच्चिच्चा) मायव्ययं (मायं व्ययं).

अनुतिष्ठन्ति निवेदयन्ति । नीटी.

[1]कच्चिदर्थेषु संप्रौढान् हितकामाननुप्रियान् ।
नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् ॥

अनु प्रौढत्वहितकामत्वज्ञानानन्तरं प्रियान् । कर्मभ्योऽपकर्षः अधिकारच्युतिः, सा च पूर्वं किल्बिषमप्राप्य दोषमदृष्ट्वा न कर्तव्येत्यर्थः । नीटी.

कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् ।
त्वं कर्मस्वनुरूपेषु नियोजयसि भारत ॥
कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशां पते ।
अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ॥

अप्राप्तव्यवहाराः अप्रौढाः । नीटी.

[2]कच्चिन्न लुब्धैश्चौरैर्वा कुमारैः स्त्रीबलेन वा ।
त्वया वा पीड्यते राष्ट्रं कच्चित्पुष्टाः कृषीवलाः ॥
[3]कच्चिद्राष्ट्रे तडागानि पूर्णानि च महान्ति च ।
भागशो विनिविष्टानि न कृषिर्देवमातृका ॥

देवमातृका वृष्टिनिष्पाद्यसस्या । नीटी.

[4]कच्चिद्बीजं च भक्तं च कर्षकायावसीदते ।
प्रतिकं च शतं वृद्ध्या ददास्यृणमनुग्रहम् ॥

प्रत्येकं च शतं प्रतिशतमेकं वृद्ध्येति संबन्धः । एकैकः प्रतिमासं वर्धनीय इत्यर्थः । ' पादिकं च शतं वृद्ध्या ' इति पाठे तु वर्षस्य शतचतुर्थांशो वृद्धिः । तथा च किंचिदधिकाद्द्व्युत्तरवृद्धिः ( ? दधिका द्व्युत्तरं वृद्धिः ) । आद्ये सबन्धके वृद्धिः, अन्यत्र निर्बन्धके इति विभागः । ( यत्तु ? ) ' द्विकं त्रिकं चतुष्कं च पञ्चकं च समं शतम् । मासस्य वृद्धिं गृह्णीयात् '

(१) भा. २।५।६३–६५ ; भामु. २।५।७३–७५.

(२) भा. २।५।६६ ; भामु. २।५।७६ लुब्धैश्चौरैः (चौरैर्लुब्धैः) पुष्टाः (तुष्टाः).

(३) भा. २।५।६७ ; भामु. २।५।७७ महान्ति (बृहन्ति).

(४) भा. २।५।६८; भामु. २।५।७८ पूर्वार्धे (कच्चिन्न भक्तं बीजं च कर्षकस्यावसीदति ।) प्रतिकं (प्रत्येकं).

( मस्मृ. ८।१४२ ) इति त्रिकादिपक्षस्तु आधमर्णिकव्यवसायानुसारेणेति ज्ञेयम् । नीटी.

**[१]कच्चित्स्वनुष्ठिता तात वार्ता ते साधुभिर्जनैः ।**
**वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते ॥**

वार्ता कृषिर्वाणिज्यं पाशुपाल्यं कुसीदं चेति चतुर्विधा । नीटी.

**[२]कच्चिच्छुचिकृतः प्राज्ञाः पञ्च पञ्च स्वनुष्ठिताः ।**
**क्षेमं कुर्वन्ति संहत्य राजञ्जनपदे तव ॥**

कच्चिच्छूरा इति । प्रतिग्रामं पञ्च पञ्चेति स्वनुष्ठिताः शोभनं अनुष्ठितं अनुष्ठानं येषां ते तथा । ते च प्रशास्ता, समाहर्ता, संविधाता, लेखकः, साक्षी चेति । समाहर्ता प्रजाभ्यो द्रव्यमुद्गृह्यैकीकृत्य राज्ञेऽर्पयिता । संविधाता प्रजासमाहर्त्रोरेकवाक्यताघटकः । संहत्य एकीभूय । नीटी.

**[३]कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत्कृताः ।**
**ग्रामवच्च कृता रक्षा ते च सर्वे तदर्पणाः ॥**

नगरवदित्यनेन बहुभिः शूरैरधिष्ठिता ग्रामाः । बहुतरैर्नगराणि । बहुतमैः जनपदेश्वरस्थानं पुरसंज्ञम् । ग्रामाः शूद्रजनबहुलाः । आपणादियुक्तं नगरम् । प्रान्ताः सीमास्थाः आटविकानां ग्रामाः । ते च सर्वे त्वदर्पणाः । ते प्रान्तग्रामनगरपुरेशाः त्वय्येव कृताकृतस्य धनस्य चार्पणं निवेदनं येषां ते तथाभूताः । प्रान्ताधिपो ग्रामाधिपतौ, सोऽपि नगराधिपतौ, सोऽपि देशाधिपतौ, सोऽपि साक्षाद्राज्ञि सर्वं निवेदयतीत्यर्थः । नीटी.

**[४]कच्चिद्बलेनानुगताः समानि विषमाणि च ।**
**पुराणचौराः साध्यक्षाश्चरन्ति विषये तव ॥**

( १ ) भा. २।५।६९ ; भामु. २।५।७९.

( २ ) भा. २।५।७० ; भामु. २।५।८० कच्चिच्छुचिकृतः प्राज्ञाः ( कच्चिच्छूराः कृतप्रज्ञाः ).

( ३ ) भा. २।५।७१ ; भामु. २।५।८१ कृता रक्षा ( कृताः प्रान्ताः ) तदर्पणाः ( त्वदर्पणाः ).

( ४ ) भा. २।५।७२ ; भामु. २।५।८२ पुराणचौराः साध्यक्षाः ( पुराणि चौरा निघ्नन्तः ).

विषमाणि सदुर्गाणि निघ्नन्तो ये चरन्ति तान् बलेन सहितः पुराध्यक्षोऽनुद्रवेदित्यर्थः । 'समेषु विषमेष्वपि' इति पाठे, विषमेषु ईतिकालेषु । अतिवृष्ट्यादयः ईतयः । नीटी.

**[१]कच्चित्स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः ।**
**कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥**

आसां वचनम् । आसां पुरश्च गुह्यं न भाषसे । नीटी.

**[२]कच्चिच्चारान्निशि श्रुत्वा तत्कार्यमनुचिन्त्य च ।**
**प्रियाण्यनुभवञ्शेषे विदित्वाऽऽभ्यन्तरं जनम् ॥**

**[३]कच्चिद्द्वौ प्रथमौ यामौ रात्र्यां सुप्त्वा विशां पते ।**
**संचिन्तयसि धर्मार्थौ याम उत्थाय पश्चिमे ॥**

आत्ययिकं अकल्याणम् । पश्चिमे चतुर्थे । तस्मादेव द्वौ प्रथमौ द्वितीयतृतीयावित्यर्थः । नीटी.

**[४]कच्चिद्दर्शयसे नित्यं मनुष्यान् समलंकृतान् ।**
**उत्थाय काले कालज्ञः सह पाण्डव मन्त्रिभिः ॥**

**[५]कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलंकृताः ।**
**अभितस्त्वामुपासन्ते रक्षणार्थमरिंदम ॥**

**[६]कच्चिद्दण्ड्येषु यमवत्पूज्येषु च विशां पते ।**
**परीक्ष्य वर्तसे सम्यगप्रियेषु प्रियेषु च ॥**

यमवत् । स हि दण्ड्येषु क्रूरः, पूज्येषु विनयवान्, तद्वत् । नीटी.

**कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा ।**
**मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि ॥**

( १ ) भा. २।५।७३ ; भामु. २।५।८३.

( २ ) भा. २।५।७४ ; भामु. २।५।८४ पूर्वार्धे ( कच्चिदात्ययिकं श्रुत्वा तदर्थमनुचिन्त्य च । ) विदित्वाऽऽभ्यन्तरं जनम् ( न त्वमन्तःपुरे नृप ).

( ३ ) भा. २।५।७५ ; भामु. २।५।८५ रात्र्यां ( रात्रेः ).

( ४ ) भा. २।५।७६ ; भामु. २।५।८६ दर्शयसे ( दर्शयसे ) कृतान् ( कृतः ) कालज्ञः ( कालज्ञैः ).

( ५ ) भा. २।५।७७ ; भामु. २।५।८७ अभितस्त्वामुपासन्ते ( उपासते त्वामभितो ).

( ६ ) भा. २।५।७८–८० ; भामु. २।५।८८–९०.

आबाधं दुःखम् । नियमेन पथ्याशनादिना । मानसमाबाधम् । नीटी.

कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः ।
सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा ॥

अष्टाङ्गायां विचिकित्सायाम् । 'निदानं पूर्वलिङ्गानि रूपाण्युपशयस्तथा । संप्राप्तिरौषधी रोगी परिचारक एव च ॥' इत्यष्टावङ्गानि । अथवा रोगः, रोगहेतुः, आरोग्यं, आरोग्यहेतुः, तेषां लक्षणानि च । नीटी.

[1]कच्चिन्न मानान्मोहाद्वा कामाद्वाऽपि विशां पते ।
अर्थिप्रत्यर्थिनः प्राप्तानपास्यसि कथंचन ॥

अर्थिनः याचकाः । प्रत्यर्थिनः परंपरागतवृत्तिप्रतिबन्धात् क्षुब्धचित्ताः प्रत्येत्य तदर्थिनः, शत्रवो वा । नशब्दद्वयेन पश्येदेवेति उच्यते । नीटी.

[2]कच्चिन्न लोभान्मोहाद्वा विश्रम्भात्प्रणयेन वा ।
आश्रितानां मनुष्याणां वृत्तिं त्वं संरुणत्सि च ॥

[3]कच्चित्पौरा न सहिता ये च ते राष्ट्रवासिनः ।
त्वया सह विरुध्यन्ते परैः क्रीताः कथंचन ॥

[4]कच्चित्ते दुर्बलः शत्रुर्बलेनोपनिपीडितः ।
मन्त्रेण बलवान् कश्चिदुभाभ्यां वा युधिष्ठिर ॥

कच्चिन्नेति । योऽरिर्बलेन पूर्वं परिपीडित एव, न हतः, स एव कालान्तरे मन्त्रेण उभाभ्यां च मन्त्रबलाभ्यां कच्चिद्बलवान्नेति योजना । 'कच्चित्ते' इति पाठे ते तव बले सैन्ये योऽरिः पूर्वपीडित इत्यादि पूर्ववत् । नीटी.

[5]कच्चित्सर्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः ।
कच्चित्प्राणांस्त्वदर्थेषु संत्यजन्ति त्वया हृताः ॥

(१) भा. २।५।८१ ; भामु. २।५।९१ मानात् (लोभात्) कामात् (मानात्) प्राप्तानपास्यसि (प्राप्तान्न पश्यसि).

(२) भा. २।५।८२ ; भामु. २।५।९२ च (वै).

(३) भा. २।५।८३ ; भामु. २।५।९३.

(४) भा. २।५।८४ ; भामु. २।५।९४ पूर्वार्धे (कच्चिन्न दुर्बलः शत्रुर्बलेन परिपीडितः ।) वा युधिष्ठिर (च कथंचन).

(५) भा. २।५।८५ ; भामु. २।५।९५.

प्रधानतः प्राधान्येन । हृताः दानमानाभ्यां वशीकृताः । 'आहृताः' इति वा पाठः । नीटी.

[1]कच्चित्ते सर्वविद्यासु गुणतोऽर्चा प्रवर्तते ।
ब्राह्मणानां च साधूनां तव निःश्रेयसे शुभा ॥

[2]दक्षिणास्त्वं ददास्येषां नित्यं स्वर्गापवर्गदाः ॥

विद्यासु साधूनां ब्राह्मणानां गुणतः गुणं दृष्ट्वा अर्चा पूजा प्रवर्तते । नीटी.

[3]कच्चिद्धर्मे त्रयीमूले पूर्वैराचरिते जनैः ।
वर्तमानस्तथा कर्तुं तस्मिन् कर्मणि वर्तसे ॥

तथा कर्तुं पूर्वैराचरितवत्कर्तुम् । तस्मिन् त्रयीमूले । नीटी.

[4]कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः ।
गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् ॥

तवाध्यक्षं त्वत्समक्षम् । सदक्षिणं सदक्षिणालाभं यथा स्यात्तथाऽश्नन्ति । नीटी.

कच्चित्क्रतूनेकचित्तो वाजपेयांश्च सर्वशः ।
पुण्डरीकांश्च कात्स्न्येन यतसे कर्तुमात्मवान् ॥
कच्चिज्ज्ञातीन् गुरून् वृद्धान् दैवतांस्तापसानपि ।
चैत्यांश्च वृक्षान् कल्याणान् ब्राह्मणांश्च नमस्यसि ॥

चैत्यान् स्थण्डिलवतो ग्रामसूचकान् वृक्षान् । नीटी.

[5]कच्चिच्छोको न मन्युर्वा त्वया प्रोत्पाद्यतेऽनघ ।
अपि मङ्गलहस्तश्च जनः पार्श्वेऽनुतिष्ठति ॥

शोकः नीचानां, मन्युः श्रेष्ठानाम् । मङ्गलहस्तः मङ्गलप्रदः मन्त्रादिवित् पुरोहितादिः । अनुतिष्ठति स्वस्त्ययनं करोति । नीटी.

(१) भा. २।५।८६ ; भामु. २।५।९६ निःश्रेयसे (नैःश्रेयसी).

(२) भामु. २।५।९६.

(३) भा. २।५।८७ ; भामु. २।५।९७ वर्तमान (यतमान).

(४) भा. २।५।८८-९० ; भामु. २।५।९८-१००.

(५) भामु. २।५।१०१.

[1]कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ ।
आयुष्या च यशस्या च धर्मकामार्थदर्शिनी ॥

या एषा इदानीं वृत्तिरस्ति सैव सार्वदिकी कच्चिदस्तीत्यर्थः । नीटी.

[2]एतया वर्तमानस्य बुद्ध्या राष्ट्रं न सीदति ।
विजित्य च महीं राजा सोऽत्यन्तं सुखमेधते ॥

[3]कच्चिदार्यो विशुद्धात्मा क्षारितश्चौरकर्मणि ।
अदृष्टशास्त्रकुशलैर्न लोभाद्वध्यते शुचिः ॥

कच्चिदार्य इति । आर्यो विशुद्धात्मा च सन्नपि कस्मिंश्चिन्निन्द्ये कर्मणि निमित्ते क्षारितः धनधान्यादिना रिक्तः कृतः 'राजभिः कृतदण्डास्तु शुध्यन्ति मलिना जनाः' इत्यादिशास्त्रप्रामाण्यात् शुचिरपि सन् अदृष्टशास्त्रकुशलैः अनुपासितपण्डितैः मूर्खैरमात्यैः कच्चिन्न वध्यते हन्यते अधिकधनलोभात् । 'अदृष्टः' इति सविसर्गपाठे तु शास्त्रकुशलैरमात्यैरज्ञात इत्यर्थः । नीटी.

[4]दृष्टो गृहीतस्तत्कारी तज्ज्ञैर्दृष्टः सकारणः ।
कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ॥

दुष्टः स्वभावतः, तत्कारी दुष्टकर्मकारी, तज्ज्ञैः चोरान्वेषिभिः कोष्ठपालैः दृष्टः सकारणः चोरितद्रव्यसहितः गृहीतः विधृतश्चेति योजना । नीटी.

[5]व्युत्पन्ने कच्चिदाढ्यस्य दरिद्रस्य च भारत ।
अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः ॥

उत्पन्नानिति । चो वाऽर्थे । आढ्यस्य दरिद्रस्य वाऽर्थान् उत्पन्नान् बीजकणिशन्यायेन स्वल्पकालेनैव बहुगुणां वृद्धिं प्राप्तान् तव अमात्याः मिथ्या अनृतान् चौर्यादिनाऽन्यायेनार्जितानिति कच्चिन्न पश्यन्ति । जनैः पिशुनैः हृताः हृतविवेकाः । पाठान्तरे धनैर्हृताः वशीकृताः । लुब्धो हि लिप्सुः परत्रासन्तमपि दोषमारोप्य तद्वित्तं जिहीर्षतीति प्रसिद्धम् । नीटी.

[1]नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।
अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्तताम् ॥

[2]एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् ।
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥

[3]मङ्गल्यस्याप्रयोगं च प्रसङ्गं विषयेषु च ।
कच्चित्त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश ॥

[4]प्रायशो यैर्विनश्यन्ति कृतमूलाऽपि पार्थिवाः ॥

नास्तिक्यमित्यादि सार्धश्लोकत्रयं व्याख्यातम् * । नीटी.

[5]कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम् ।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥

युधिष्ठिर उवाच-

कथं वै सफला वेदाः कथं वै सफलं धनम् ।
कथं वै सफला दाराः कथं वै सफलं श्रुतम् ॥

नारद उवाच-

अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ।
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥

वैशम्पायन उवाच-

[6]एतदाख्याय स मुनिर्नारदः सुमहातपाः ।
पप्रच्छानन्तरमिदं धर्मात्मानं युधिष्ठिरम् ॥

---

(१) भा. २।५।९१ ; भामु. २।५।१०२.
(२) भा. २।५।९२ ; भामु. २।५।१०३ त्यन्तं सुख (त्यन्तसुख).
(३) भा. २।५।९३ ; भामु. २।५।१०४.
(४) भा. २।५।९४ ; भामु. २।५।१०५ दृष्टो (दुष्टो).
(५) भा. २।५।९५ ; भामु. २।५।१०६ व्युत्पन्ने (उत्पन्नान्) धनैः (जनैः).

---

* व्याख्यानं अस्मिन्नेवाध्याये एकादशे श्लोके द्रष्टव्यम् ।

(१) भा. २।५।९६ ; भामु. २।५।१०७ क्षिप्तचित्तताम् (पञ्चवृत्तिताम्).
(२) भा. २।५।९७ ; भामु. २।५।१०७-१०८.
(३) भा. २।५।९८ ; भामु. २।५।१०८-१०९ पूर्वार्धे (मङ्गलाद्यप्रयोगं च प्रत्युत्थानं च सर्वतः ।).
(४) भामु. २।५।१०९.
(५) भा. २।५।९९-१०१ ; भामु. २।५।११०-११२.
(६) भा. २।५।१०२ ; भामु. २।५।११३ सुमहातपाः (वै महातपाः).

नारद उवाच—

[1]कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् ।
यथोक्तमवहार्यन्ते शुल्कं शुल्कोपजीविभिः ॥

कच्चिदभ्यागता इति । अवहार्यन्ते दाप्यन्ते । शुल्कं राजग्राह्यं करम् । नीटी.

कच्चित्ते पुरुषा राजन् पुरे राष्ट्रे च मानिताः ।
उपानयन्ति पण्यानि उपधाभिरवञ्चिताः ॥

पण्यानि विक्रेयद्रव्याणि । उपधाभिः छलैः । नीटी.

[2]कच्चिच्छृणोषि वृद्धानां धर्मार्थसहिता गिरः ।
नित्यमर्थविदां तात तथा धर्मानुदर्शिनाम् ॥

[3]कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च ।
धर्मार्थं च द्विजातिभ्यो दीयेते मधुसर्पिषी ॥

कृषितन्त्रेषु कृष्युत्पाद्येषु पुष्पफलेषु आर्द्रशुष्कधान्येषु, तथा गोषु जातेषु पुष्पफलेषु दुग्धघृतरूपेषु उत्पन्नेषु सत्सु । मधुसर्पिषी ' अन्नं वै मधु ' इति श्रुतेर्धान्यादिकमन्नं, घृतं च यल्लोके ब्रह्मोत्तरमित्युच्यते । नीटी.

[4]द्रव्योपकरणं कच्चित्सर्वदा सर्वशिल्पिनाम् ।
चातुर्मास्यावरं सम्यङ्नियतं संप्रयच्छसि ॥

द्रव्यं शिल्पिनां वेतनम् । उपकरणं स्वकार्यसाधनसामग्री, यथा चित्रोत्पादने रञ्जकद्रव्यादि । चातुर्मास्यावरं मासचतुष्टयपर्याप्तानधिकम् । नीटी.

[5]कच्चित्कृतं विजानीषे कर्तारं च प्रशंससि ।
सतां मध्ये महाराज सत्करोषि च पूजयन् ॥

(१) भा. २।५।१०३–१०४ ; भामु. २।५।११४–११५.

(२) भा. २।५।१०५ ; भामु. २।५।११६ तथा धर्मानुदर्शिनाम् ( यथाधर्मार्थदर्शिनाम् ).

(३) भा. २।५।१०६ दीयेते ( दीयते ); भामु. २।५।११७.

(४) भा. २।५।१०७ ; भामु. २।५।११८ कच्चित् ( किंचित् ).

(५) भा. २।५।१०८ ; भामु. २।५।११९.

[1]कच्चित्सूत्राणि सर्वाणि गृह्णासि भरतर्षभ ।
हस्तिसूत्राश्वसूत्राणि रथसूत्राणि चाभिभो ॥

सूत्रं संक्षेपवाक्यं व्यवस्था वा । हस्त्यादीनां लक्षणपरीक्षाचिकित्सौषधोद्दीपनमादनादिप्रकारप्रतिपादकग्रन्थ- (? ग्रन्थान्) सिद्धान्तमात्रसंक्षेपयुक्तान् गृह्णासि तत्तदाचार्येभ्यः । नीटी.

[2]कच्चिदभ्यस्यते शश्वद्गृहे ते भरतर्षभ ।
धनुर्वेदस्य सूत्रं च यन्त्रसूत्रं च नागरम् ॥

यन्त्राणि आग्नेयौषधबलेन सीसकांस्यदृषद्गोलप्रक्षेपकाणि लोहमयानि भाषायां नालशब्दाभिधेयानि, तेषां सूत्रं सूचकं शास्त्रम् । नागरं नगरहितम् । नीटी.

[3]कच्चिदस्त्राणि सर्वाणि ब्रह्मदण्डश्च तेऽनघ ।
विषयोगाश्च ते सर्वे विदिताः शत्रुनाशनाः ॥

अस्त्राणि मन्त्रप्रयुक्तानि शस्त्राणि । ब्रह्मदण्डः आभिचारिकविद्या । नीटी.

[4]कच्चिदग्निभयाच्चैव सर्पव्यालभयात्तथा ।
रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ॥

व्यालः सर्पः । व्याघ्रादेरप्येतदुपलक्षणम् । नीटी.

[5]कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान् ।
पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ॥

प्रव्रजितान् जातिबहिष्कृतान् अन्नमात्रार्थिनो दीनान् । नीटी.

[6]षडनर्था महाराज कच्चिच्चत्ते पृष्ठतः कृताः ।
निद्राऽऽलस्यं भयं क्रोधो मार्दवं दीर्घसूत्रता ॥

(१) भा. २।५।१०९ ; भामु. २।५।१२० चाभिभो ( वा विभो ).

(२) भा. २।५।११० ; भामु. २।५।१२१ शश्वद् (सम्यग्) च यन्त्र ( वै यन्त्र ).

(३) भा. २।५।१११ ; भामु. २।५।१२२ योगाश्च ते ( योगास्तथा ).

(४) भा. २।५।११२ ; भामु. २।५।१२३ सर्पव्याल ( सर्वं व्याल ).

(५) भा. २।५।११३ ; भामु. २।५।१२४.

(६) भामु. २।५।१२५.

वैशम्पायन उवाच–

[1]एताः कुरूणामृषभो महात्मा
श्रुत्वा गिरो ब्राह्मणसत्तमस्य ।
प्रणम्य पादावभिवाद्य हृष्टो
राजाऽब्रवीन्नारदं देवरूपम् ॥

युधिष्ठिर उवाच–

[2]एवं करिष्यामि यथा त्वयोक्तं
प्रज्ञा हि मे भूय एवाभिवृद्धा ।
उक्त्वा तथा चैव चकार राजा
लेभे महीं सागरमेखलां च ॥

नारद उवाच–

एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे ।
स विहृत्येह सुसुखी शक्रस्यैति सलोकताम् ॥

उपसंहरति– एवं यो वर्तत इति । नीटी.

क्षत्रधर्मस्वरूपम्, तत्प्रयोजनभूता लोकयात्रा विद्यात्रयसाध्या

[3]त्रैलोक्ये क्षत्रधर्मो हि श्रेयान् वै साधुचारिणाम् ।
नान्यं धर्मं प्रशंसन्ति ये च धर्मविदो जनाः ॥

धर्मार्थकामाः धर्ममूलाः

विदुर उवाच–

[4]त्रिवर्गोऽयं धर्ममूलो नरेन्द्र
राज्यं चेदं धर्ममूलं वदन्ति ॥

सहायाप्तौ विजयः

( विदुर उवाच– )

[5]सोऽहं त्यक्तो धृतराष्ट्रेण राजं-
स्त्वां शासितुमुपयातस्त्वरावान् ।

तद्वै सर्वं यन्मयोक्तं सभायां
तद्धार्यतां यत्प्रवक्ष्यामि भूयः ॥

धार्यतां न विस्मर्तव्यम् । नीटी.

[1]क्लेशैस्तीव्रैर्युज्यमानः सपत्नैः
क्षमां कुर्वन् कालमुपासते यः ।
संवर्धयन् स्तोकमिवाग्निमात्मवान्
स वै भुङ्क्ते पृथिवीमेक एव ॥

उपासते उपास्ते प्रतीक्षते । तृणैः स्तोकं अग्निमिव आत्मानं सहायसंपत्त्या संवर्धयन् एक एव, शत्रूणां कार्त्स्न्येनोच्छेदात् । नीटी.

यस्याविभक्तं वसु राजन् सहायै-
स्तस्य दुःखेऽप्यंशभाजः सहायाः ।
सहायानामेष संग्रहणेऽभ्युपायः
सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥

सहायार्जनोपायमाह– यस्येति । अविभक्तं साधारणम् । वसु वित्तम् । नीटी.

[2]सत्यं श्रेष्ठं पाण्डव निष्प्रलापं
तुल्यं चान्नं सह भोज्यं सहायैः ।
आत्मा चैषामग्रतो नातिवर्ते-
देवंवृत्तिर्वर्धते भूमिपालः ॥

विप्रलापं विगतः प्रलापः अनर्थकं वचो यस्मात् तत्तथा । पूज्यः स्तव्यः । वनवासान्ते बहुना धनेन बहून् सहायान् प्राप्य त्वमेव शत्रूच्छेदं कृत्वा राज्यं पाप्स्यसीत्यर्थः । नीटी.

युधिष्ठिर उवाच–

[3]एवं करिष्यामि यथा ब्रवीषि
परां बुद्धिमुपगम्याप्रमत्तः ।
यच्चाप्यन्यद्देशकालोपपन्नं
तद्वै वाच्यं तत्करिष्यामि कृत्स्नम् ॥

---

( १ ) भा. २।५।११४ ; भामु. २।५।१२६ एताः ( ततः ) हृष्टो ( तुष्टो ).

( २ ) भा. २।५।११५–११६ ; भामु. २।५।१२७–१२८.

( ३ ) भा. २।२०।५ धर्मो हि श्रेयान् वै ( धर्माद्धि श्रेयांसं ) पू. ; भामु. २।२२।५.

( ४ ) भा. ३।५।४; भामु. ३।४।४.

( ५ ) भा. ३।६।१८; भामु. ३।५।१८ पूर्वार्धे ( सोऽहं त्यक्तो धृतराष्ट्रेण राज्ञा प्रशासितुं त्वामुपयातो नरेन्द्र । ).

( १ ) भा. ३।६।१९–२०; भामु. ३।५।१९–२०.

( २ ) भा. ३।६।२१; भामु. ३।५।२१ निष्प्रलापं ( विप्रलापं ) नातिवर्तेदेवंवृ ( न स्म पूज्य एवंवृ ).

( ३ ) भा. ३।६।२२; भामु. ३।५।२२.

ब्रह्मक्षत्रे अन्योन्याश्रिते श्रेयसी

[1]ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णौ दहतः शत्रून् वनानीवाग्निमारुतौ ॥

[2]नाब्राह्मणस्तात चिरं बुभूषे-
दिच्छन्निमं लोकममुं च जेतुम् ।
विनीतधर्मार्थमपेतमोहं
लब्ध्वा द्विजं नुदति नृपः सपत्नान् ॥

अब्राह्मणः ब्राह्मणहीनः नृपः । बुभूषेत् ऐश्वर्यमिच्छेत् । तस्येच्छतोऽपि जयो दुर्लभ इत्यर्थः । विनीतौ सम्यक् शिक्षितौ धर्मार्थौ येन । नीटी.

चरन्नैःश्रेयसं धर्मं प्रजापालनकारितम् ।
नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् ॥

तीर्थं उपायम् । नीटी.

[3]अनूनमासीदसुरस्य कामै-
र्वैरोचनेः श्रीरपि चाक्षयाऽऽसीत् ।
लब्ध्वा महीं ब्राह्मणसंप्रयोगात्
तेष्वाचरन्दुष्टमतो व्यनश्यत् ॥

वैरोचनेः बलेः । नीटी.

[4]नाब्राह्मणं भूमिरियं सभूति-
र्वर्णं द्वितीयं भजते चिराय ।
समुद्रनेमिर्नमते तु तस्मै
यं ब्राह्मणः शास्ति नयैर्विनीतः ॥

[5]कुञ्जरस्येव संग्रामेऽपरिगृह्याङ्कुशग्रहम् ।
ब्राह्मणैर्विप्रहीणस्य क्षत्रस्य क्षीयते बलम् ॥

अङ्कुशग्रहं अङ्कुशेन निगृह्णाति तम् । परिगृह्य वर्जयित्वा । परिर्वर्जने । नीटी.

(१) भा. ३।२७।१० ; भामु. ३।२६।१० उदीर्णौ (उदीर्णे).

(२) भा. ३।२७।११-१२ ; भामु. ३।२६।११-१२.

(३) भा. ३।२७।१३ ; भामु. ३।२६।१३ मतो (मथो).

(४) भा. ३।२७।१४; भामु. ३।२६।१४ विंनीतः (विंनीतम्).

(५) भा. ३।२७।१५ ; भामु. ३।२६।१५ संग्रामेऽपरि (संग्रामे परि) हीणस्य (हीनस्य).

[1]ब्रह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम् ।
तौ यदा चरतः सार्धमथ लोकः प्रसीदति ॥

[2]यथा हि सुमहानग्निः कक्षं दहति सानिलः ।
तथा दहति राजन्यो ब्राह्मणेन समं रिपून् ॥

[3]ब्राह्मणेभ्योऽथ मेधावी बुद्धिपर्येषणं चरेत् ।
अलब्धस्य च लाभाय लब्धस्य च विवृद्धये ॥

बुद्धिपर्येषणं बुद्धेः साकल्येन संग्रहणम् । नीटी.

[4]अलब्धलाभाय च लब्धवृद्धये
यथार्हतीर्थप्रतिपादनाय ।
यशस्विनं वेदविदं विपश्चितं
बहुश्रुतं ब्राह्मणमेव वासय ॥

यथार्हतीर्थे यथायोग्यपात्रे प्रतिपादनाय दानाय । नीटी.

ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर ।
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः ॥

वृत्तिः वर्तनम् । नीटी.

धर्मार्थकामानां सर्वेषां सेवनम्

[5]न धर्मपर एव स्यान्न चार्थपरमो नरः ।
न कामपरमो वा स्यात्सर्वान् सेवेत सर्वदा ॥

क्षत्रधर्मस्वरूपम्, तत्प्रयोजनभूता लोकयात्रा विद्यात्रयसाध्या

[6]मा तात साहसं कार्षीः स्वधर्ममनुपालय ।
स्वधर्मस्थः परं धर्मं बुध्यस्वाऽऽगमयस्व च ॥

गमयस्व बोधपूर्वकमनुतिष्ठ । स्वार्थे णिच् । नीटी.

(१) भा. ३।२७।१६ ; भामु. ३।२६।१६ ब्रह्म (ब्राह्म) अथ (तदा).

(२) भा. ३।२७।१७ ; भामु. ३।२६।१७ रिपून् (रिपुम्)

(३) भा. ३।२७।१८ ; भामु. ३।२६।१८ ब्राह्मणेभ्योऽथ (ब्राह्मणेष्वेव) च विवृद्धये (परिवृद्धये).

(४) भा. ३।२७।१९-२० ; भामु. ३।२६।१९-२०.

(५) भा. ३।३४।३८ ; भामु. ३।३३।३९ ; राक. १४५ परमो वा (पर एव) उत्त.

(६) भा. ३।१४९।२५ ; भामु. ३।१५०।२५ धर्ममनु (धर्मं परि) बुध्यस्वाऽऽग (बुध्यस्व ग).

[1]न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च ।
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि ॥
[2]अधर्मो यत्र धर्माख्यो धर्मश्चाधर्मसंज्ञितः ।
विज्ञातव्यो विभागेन यत्र मुह्यन्त्यबुद्धयः ॥

दुर्जनवधः अधर्मोऽपि धर्म एव । परोपघातकं सत्यं धर्मोऽप्यधर्म एव । नीटी.

[3]आचारसंभवो धर्मो धर्माद्वेदाः समुत्थिताः ।
वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः ॥

आचारः शौचादिः, तेन धर्मः प्राप्यते, ततो वेदाधिगमः, ततो यज्ञानुष्ठानम्, ततो देवताप्रसाद इत्यर्थः । नीटी.

[4]वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः ।
बृहस्पत्युशनोक्तैश्च नयैर्धार्यन्ति मानवाः ॥

यज्ञैर्देवानां नीत्या मनुष्याणां च स्थितिरित्यर्थः । नीटी.

[5]पण्याकरवणिज्याभिः कृष्याऽथो योनिपोषणैः ।
वार्तया धार्यते सर्वं धर्मैरेतैर्द्विजातिभिः ॥

पणः भृतिः, तामर्हतीति पण्या सेवा । 'पणो वराटमाने स्यात्' इत्युपक्रम्य 'व्यवहारे भृतौ धने' इति मेदिनी । वार्ता जीविकार्था वृत्तिः । नीटी.

[6]त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या विजानताम् ।
ताभिः सम्यक्प्रयुक्ताभिर्लोकयात्रा विधीयते ॥

सा च क्रमेण ब्राह्मणस्य त्रयी याजनाध्यापनादिः, वैश्यस्य वार्ता पण्यादिः, क्षत्रियस्य दण्डादिः । नीटी.

[1]सा चेद्धर्मक्रिया न स्यात्त्रयीधर्ममृते भुवि ।
दण्डनीतिमृते चापि निर्मर्यादमिदं भवेत् ॥

सा लोकयात्रा । नीटी.

[2]वार्ताधर्मे ह्यवर्तन्त्यो विनश्येयुरिमाः प्रजाः ।
सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मैः सूयन्ति वै प्रजाः ॥

[3]द्विजानाममृतं धर्मो ह्येकश्चैवैकवर्णिकः ।
यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः ॥

ऋतं सत्यं आत्मज्ञानाख्यम् । एको वर्णः शुक्लः केवलसात्त्विकः । धर्मः योगाख्यः । नीटी.

[4]याजनाध्यापने चोभे ब्राह्मणानां प्रतिग्रहः ।
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम् ॥

[5]शुश्रूषा तु द्विजातीनां शूद्राणां धर्म उच्यते ।
भैक्षहोमव्रतैर्हीनास्तथैव गुरुवासिनाम् ॥

गुरौ त्रिवर्णे वासितं वासः येषां ते शूद्राः । भैक्ष्यादिभिर्हीनाः भवन्ति । नीटी.

[6]क्षत्रधर्मोऽत्र कौन्तेय तव धर्माभिरक्षणम् ।
स्वधर्मं प्रतिपद्यस्व विनीतो नियतेन्द्रियः ॥

क्षत्रधर्मोऽत्र प्रकरणे उच्यते । स च तव धर्मोऽत्र लोके । नीटी.

[7]वृद्धैः संमन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः ।
सुस्थितः शास्ति दण्डेन व्यसनी परिभूयते ॥

---

(१) भा. ३।१४९।२६ ; भामु. ३।१५०।२६ धर्मो वै (धर्मार्थौ) शक्यो (शक्यौ).

(२) भा. ३।१४९।२७ ; भामु. ३।१५०।२७ विज्ञातव्यो (स विज्ञेयो).

(३) भा. ३।१४९।२८ ; भामु. ३।१५०।२८ धर्माद्वेदाः समुत्थिताः (धर्मे वेदाः प्रतिष्ठिताः).

(४) भा. ३।१४९।२९ ; भामु. ३।१५०।२९ नोक्तैश्च नयै (नःप्रोक्तैर्नयै).

(५) भा. ३।१४९।३० ; भामु. ३।१५०।३० कृष्याऽथो योनि (कृष्या गोजावि).

(६) भा. ३।१४९।३१ ; भामु. ३।१५०।३१.

(१) भा. ३।१४९।३२ ; भामु. ३।१५०।३२ क्रिया (कृता).

(२) भा. ३।१४९।३३ ; भामु. ३।१५०।३३ वर्तन्त्यो (वर्तिन्यो) धर्मैः (धर्मे).

(३) भा. ३।१४९।३४ ; भामु. ३।१५०।३४ नाममृतं (तीनामृतं).

(४) भा. ३।१४९।३५ ; भामु. ३।१५०।३५ पने चोभे ब्राह्मणानां (पनं विप्रे धर्मश्चैव).

(५) भा. ३।१४९।३६ ; भामु. ३।१५०।३६ तु द्वि (च द्वि) भैक्ष (भैक्ष्य) वासिनाम् (वासिताः).

(६) भा. ३।१४९।३७ ; भामु. ३।१५०।३७ धर्माभि (धर्मोऽत्र).

(७) भा. ३।१४९।३८ ; भामु. ३।१५०।३८ सुस्थितः (आस्थितः).

आश्रितः अनुगृहीतः । नीटी.

[1]निग्रहानुग्रहैः सम्यग्यदा राजा प्रवर्तते ।
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ॥

[2]दण्डनीतिस्त्रयी विद्या तेन लोका भवन्त्युत ॥

लोकः परलोकः । नीटी.

धर्मार्थकामाः त्रिवर्गः धर्ममूलः

[3]त्रिवर्गयुक्ताः प्राज्ञानामारम्भा भरतर्षभ ।
धर्मार्थावनुरुध्यन्ते त्रिवर्गासंभवे नराः ॥

[4]पृथक्तु विनिविष्टानां धर्मं धीरोऽनुरुध्यते ।
मध्यमोऽर्थं कलिं बालः काममेवानुरुध्यते ॥

अर्थे कलिं कलहहेतुम् । नीटी.

[5]इन्द्रियैः प्रसृतो लोभाद्धर्मं विप्रजहाति यः ।
कामार्थावनुपायेन लिप्समानो विनश्यति ॥

अनुपायेन हीनोपायेन । नीटी.

[6]कामार्थौ लिप्समानस्तु धर्ममेवाऽऽदितश्चरेत् ।
न हि धर्मादपैत्यर्थः कामो वाऽपि कदाचन ॥
उपायं धर्ममेवाहुस्त्रिवर्गस्य विशां पते ।
लिप्समानो हि तेनाऽऽशु कक्षेऽग्निरिव वर्धते ॥

युगचतुष्टयात्मकस्य कालस्य राजा कारणम्

[7]दण्डनीतिः स्वधर्मेण चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति ॥

दण्डनीतिः स्वामिना प्रयुक्तेति संबन्धः । धर्मेभ्यः धर्मार्थे नियच्छति निर्बन्धं करोति दण्डनीतिरेव । नीटी.

[1]दण्डनीत्यां यदा राजा सम्यक्कात्स्न्र्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥

[2]कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥

राजा धर्मं अधर्मं वा प्रवर्तयन् कृतत्रेतादियुगरूपस्य कालस्य कारणम् । एवं च सर्वस्मिन्नपि काले धर्मादितारतम्याद्युगचतुष्टयमस्तीति भावः । नीटी.

[3]राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥

[4]कृतस्य कारणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः कारणाद्राजा स्वर्गं नात्यन्तमश्नुते ।
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ॥

[5]कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥

[6]ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
राजदोषेण हि जगत्स्पृश्यते जगतः स च ॥

जगतः दोषेण स च राजा स्पृश्यते । नीटी.

अत्यन्तसुखोपायाः धर्मार्थकामाः अन्योन्यानुबन्धाः

राम उवाच–

[7]धर्मः सुचरितः सद्भिः सह द्वाभ्यां नियच्छति ।
अर्थश्चात्यर्थलुब्धस्य कामश्चातिप्रसङ्गिनः ॥

[8]धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन् ।
धर्मार्थकामान्योऽभ्येति सोऽत्यन्तं सुखमश्नुते ॥

---

(१) भा. ३।१४९।३९; भामु. ३।१५०।३९ भवति (भवन्ति) मर्यादा (मर्यादाः) स्थिता (स्थिताः).

(२) भा. ३।१९८।२३; भामु. ३।२०७।२४ लोका भवन्त्युत (लोको भवत्युत).

(३) भा. ५।१२२।३२; भामु. ५।१२४।३४ युक्ताः (युक्त) मारम्भा (मारम्भो).

(४) भा. ५।१२२।३३; भामु. ५।१२४।३५ पृथक्तु (पृथक्च).

(५) भा. ५।१२२।३४; भामु. ५।१२४।३६ प्रसृतो (प्राकृतो).

(६) भा. ५।१२२।३५–३६; भामु. ५।१२४।३७–३८.

(७) भा. ५।१३०।१३; भामु. ५।१३२।१४ नीतिः स्वधर्मेण (नीतिश्च धर्मेभ्यः).

(१) भा. ५।१३०।१४; भामु. ५।१३२।१५.

(२) भा. ५।१३०।१५; भामु. ५।१३२।१६.

(३) भा. ५।१३०।१६; भामु. ५।१३२।१७.

(४) भा. ५।१३०।१७; भामु. ५।१३२।१८–१९ कारणा (करणा).

(५) भामु. ५।१३२।१९.

(६) भा. ५।१३०।१८; भामु. ५।१३२।२०.

(७) भा. ९।५९।१७; भामु. ९।६०।२१ सह (स च) सिङ्गनः (सङ्गिणः).

(८) भा. ९।५९।१८; भामु. ९।६०।२२.

नियच्छति नियममेति । अर्थकामाभ्यां धर्मः संकोचमेतीत्यर्थः । धर्मार्थौ कामेनापीडयन्, धर्मकामावर्थेनापीडयन्, कामार्थौ धर्मेण चापीडयन्नित्यर्थः । नीटी.

धर्मार्थकामानामर्थ एव प्रधानः

वैशम्पायन उवाच-

[1]अथार्जुन उवाचेदमधिक्षिप्त इवाक्षमी ।
अभिनीततरं वाक्यं दृढवादपराक्रमः ॥

अथार्जुनः दृढौ युक्तिशक्त्युपेतौ वादपराक्रमौ उक्तिविक्रमौ यस्य स तथा । नीटी.

[2]दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः ।
स्मयमानो महातेजाः सृक्किणी संलिहन् मुहुः ॥

अर्जुन उवाच-

[3]अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमम् ।
यत्कृत्वाऽमानुषं कर्म त्यजेथाः श्रियमुत्तमाम् ॥

अमानुषमिति च्छेदः । नीटी.

[4]शत्रून् हत्वा महीं लब्ध्वा स्वधर्मेणोपपादिताम् ।
हतामित्रः कथं सर्वं त्यजेथा बुद्धिलाघवात् ॥

दुःखं स्वजनवधात् कृच्छ्रं परवीरजयात् वैक्लव्यं मौढ्यं धर्मलब्धस्य त्यागादित्याह- शत्रूनिति । शत्रून् शातयितॄन् परान् हत्वा प्रविनाश्य, शत्रून् शातयितव्यान् स्वीयान् हत्वा घातयित्वा इति च द्वयोरेकेन वाक्येन संग्रहः । नीटी.

[5]क्लीबस्य हि कुतो राज्यं दीर्घसूत्रस्य वा पुनः ।
किमर्थं च महीपालानवधीः क्रोधमूर्छितः ॥

(१) भा. १२।८।१ ; भामु.

(२) भा. १२।८।२ ; भामु. १२।८।२ संलिहन् मुहुः (परिसंलिहन्).

(३) भा. १२।८।३ ; भामु.

(४) भा. १२।८।४ ; भामु. १२।८।४ हतामित्रः (एवंविधं).

(५) भा. १२।८।५ ; भामु.

क्लीबस्य स्वीयवधे कातरस्य । दीर्घसूत्रस्य परवधे अलसस्य । एवं चेन्महीपालानुभयपक्षीयान् किमर्थमवधीः । अतोऽपि क्लीबोऽसीत्यर्थः । नीटी.

[1]यो ह्याजिजीविषेद्भैक्ष्यं कर्मणा नैव केनचित् ।
समारम्भान् बुभूषेत हतस्वस्तिरकिंचनः ।
सर्वलोकेषु विख्यातो न पुत्रपशुसंहितः ॥

एतदेव स्पष्टयति- यो हीति । सार्धश्लोको वाक्यम् । हि प्रसिद्धम् । यः पुमान् हतस्वस्तिः नष्टकल्याणः, अकिंचनः दरिद्रः, अत एव क्रमात् सर्वलोकेषु न विख्यातः पुत्रपशुसंहितः पुत्रादिभिराश्लिष्टश्च न भवति, स भैक्ष्यमाजिजीविषेत् उपजीवितुमिच्छेत्, स कर्मणा पौरुषेण कस्यचिदपि परस्य, समारभ्यन्ते इति समारम्भाः अर्थाः, तान्नैव बुभूषेत नैव प्राप्तुमिच्छेत् । त्वं तु प्राप्तकल्याणः संपन्नः ख्यातः पुत्राद्याश्लिष्टश्च पौरुषेणार्थाँल्लब्ध्वा भैक्ष्येण जीवितुमिच्छसीतिं विपर्यस्तबुद्धिरसीति भावः। नीटी.

[2]कापालीं नृप पापिष्ठां वृत्तिमास्थाय जीवतः ।
संत्यज्य राज्यमृद्धं ते लोकोऽयं किं वदिष्यति ॥

कापालीं भिक्षापात्रवतीं इमां वृत्तिं जीविकां आसाद्य राज्यं संत्यज्य जीवतस्ते इति संबन्धः । नीटी.

[3]सर्वारम्भान् समुत्सृज्य हतस्वस्तिरकिंचनः ।
कस्मादाशंससे भैक्ष्यं चर्तुं प्राकृतवत्प्रभो ॥

सर्वारम्भान् सर्वार्थान् धर्मादीन् । प्राकृतवत् मूढवत् । नीटी.

[4]अस्मिन्राजकुले जातो जित्वा कृत्स्नां वसुंधराम् ।
धर्मार्थावखिलौ हित्वा वनं मौढ्यात्प्रतिष्ठसे ॥

(१) भा. १२।८।६ ; भामु. १२।८।६ केनचित् (कस्यचित्).

(२) भा. १२।८।७ ; भामु. १२।८।७ मास्थाय (मासाद्य).

(३) भा. १२।८।८ ; भामु. १२।८।८ चर्तुं (कर्तुं).

(४) भा. १२।८।९-१० ; भामु.

यदीमानि हवींषीह विमथिष्यन्त्यसाधवः ।
भवता विप्रहीणानि प्राप्तं त्वामेव किल्बिषम् ॥

धर्महानिं व्युत्पादयति— यदीति । अस्माकं राज्ये अनधिकारात् अधिकारिणस्तवैव धर्मलोपजं किल्बिषं भवतीत्यर्थः । नीटी.

[1]आकिंचन्यमनाशास्यमिति वै नहुषोऽब्रवीत् ।
कृत्वा नृशंसा ह्यधने धिगस्त्वधनतामिह ॥

अर्थस्तु धर्मादीनां चतुर्णामपि मूलमिति सर्वथा स न त्याज्य इत्याह— आकिंचन्यमित्यादिना । 'आकिंचन्यं मुनीनां च राज्यादप्यधिकं मतम्' इति यद्वाक्यं तदुद्दिश्य नहुषो राजा अधनतामिह धिगस्त्विति अब्रवीत् । अधने धनाभावे निमित्ते सति अगस्त्यशापात् सर्पीभावदशायां नृशंसं निर्दयं भीमसेनादिमनुष्यग्रासरूपं कर्म कृत्वा दारिद्र्यं पापहेतुत्वान्निन्दितवानित्यर्थः । नीटी.

[2]अश्वस्तनमृषीणां हि विद्यते वेद तद्भवान् ।
यं त्विमं धर्ममित्याहुर्धनादेष प्रवर्तते ॥

एतदपि ऋषीणामेवोचितं न राज्ञामित्याह— अश्वस्तनमिति । 'वयमेवास्य लोकस्य विनाशे कारणं स्मृताः' (भा. १२।७।२१) इति यदुक्तं तत्राह— यं त्विममित्यादि । नीटी.

[3]धर्मं संहरते तस्य धनं हरति यस्य यः ।
ह्रियमाणे धने राजन् वयं कस्य क्षमेमहि ॥

वयं क्षत्रियाः कस्य भ्रातुः पितुर्वा अपराधं क्षमेमहि । न कस्यापीत्यर्थः । नीटी.

[4]अभिशस्तवत्प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ।
दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति ॥

क्षमायां दोषमाह— अभिशस्तमिति । अभिशस्तवदित्यर्थः । शंसितुं प्रशंसितुम् । नीटी.

[5]पतितः शोच्यते राजन्निर्धनश्चापि शोच्यते ।
विशेषं नाधिगच्छामि पतितस्याधनस्य च ॥

[6]अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवाऽऽपगाः ॥

[7]अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप ।
प्राणयात्रा हि लोकस्य विनाऽर्थं न प्रसिध्यति ॥

मुमुक्षूणां प्राणयात्राप्यर्थाधीना इति मोक्षोऽप्यर्थादेव भवतीत्याशयः । नीटी.

[4]अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥

[5]यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥

[6]अधनेनार्थकामेन नार्थः शक्यो विवित्सता ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥

[7]धर्मः कामश्च स्वर्गश्च हर्षः क्रोधः श्रुतं दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥

---

(१) भा. १२।८।११ ; भामु. १२।८।११ अनाशास्यं (मुनीनां च) कृत्या नृशंसा (कृत्वा नृशंसं).

(२) भा. १२।८।१२ ; भामु.

(३) भा. १२।८।१३ ; भामु. १२।८।१३ यस्य यः (यस्य सः).

(४) भा. १२।८।१४ ; भामु. १२।८।१४ शस्तवत् (शस्तं) दारिद्र्यं (दरिद्रं) लोके कः (लोके न).

(१) भा. १२।८।१५ ; भामु.

(२) भा. १२।८।१६ ; भामु. ; राक. ८७ विवृद्धेभ्यस्ततस्ततः (प्रवृद्धेभ्य इतस्ततः) ; राप्र. २५९ राकवत्.

(३) भा. १२।८।१७ ; भामु. १२।८।१७ यात्रा हि (यात्राऽपि) विनाऽर्थं न प्रसिध्यति (विना ह्यर्थं न सिध्यति) ; राक. ८७ यात्रा हि (यात्राऽपि) विनाऽर्थं न प्र (विनाऽर्थेन न) ; राप्र. २५९ यात्रा हि (यात्रा च) शेषं राकवत्.

(४) भा. १२।८।१८ ; भामु. १२।८।१८ व्युच्छिद्यन्ते (विच्छिद्यन्ते).

(५) भा. १२।८।१९ ; भामु.

(६) भा. १२।८।२० ; भामु. १२।८।२० विवित्सता (विधित्सितुम्) ; राक. ८७ नार्थः शक्यो विवित्सता (चेतुं धर्मो न शक्यते) ; राप्र. २५९ राकवत्.

(७) भा. १२।८।२१ ; भामु.

[1]धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्तते ।
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥

[2]नाधनो धर्मकृत्यानि यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलाद्गिरिनदी यथा ॥

[3]यः कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः ।
स वै राजन् कृशो नाम न शरीरकृशः कृशः ॥

कृशार्थः क्षीणार्थः ।　　　　　　　　　　नीटी.

[4]अवेक्षस्व यथान्यायं पश्य देवासुरं यथा ।
राजन् किमन्यज्ज्ञातीनां वधादृध्यन्ति देवताः ॥

यत्तूक्तं ज्ञातीनां परस्परं युद्धे हतानां हन्तॄणां च श्रेयो नास्तीति तच्छिष्टाचारदर्शनेन दूषयति– अवेक्षस्वेत्यादिना ।　　　　　　　　　　नीटी.

[5]न चेद्धर्तव्यमन्यस्य कथं तद्धर्ममारभेत् ।
एतावानेव वेदेषु निश्चयः कविभिः कृतः ॥

अन्यस्य परस्य धनं चेन्न हर्तव्यं तत् तर्हि राजा कथं धर्ममाचरेत् । तस्य वृत्त्यन्तराभावान्न कथञ्चिदित्यर्थः ।　　　　　　　　　　नीटी.

[6]अध्येतव्या त्रयी विद्या भवितव्यं विपश्चिता ।
सर्वथा धनमाहार्यं यष्टव्यं चापि यत्नतः ॥

आहार्यं स्वधर्मेणार्जनीयम् । तस्य च प्रयोजनं यष्टव्यमित्युक्तम् ।　　　　　　　　　　नीटी.

[1]द्रोहाद्देवैरवाप्तानि दिवि स्थानानि सर्वशः ।
द्रोहात्किमन्यज्ज्ञातीनां गृद्ध्यन्ते येन देवताः ।
इति देवा व्यवसिता वेदवादाश्च शाश्वताः ॥

[2]अधीयन्ते तपस्यन्ति यजन्ते याजयन्ति च ।
कृत्स्नं तदेव च श्रेयो यदप्याददतेऽन्यतः ॥

[3]न पश्यामोऽनपहृतं धनं किंचित्क्वचिद्वयम् ।
एवमेव हि राजानो जयन्ति पृथिवीमिमाम् ॥

ननु परद्रव्यापहारे दोषोऽस्तीत्याशङ्क्याऽऽह– कृत्स्नमिति । यदेव धनं राजानः अन्यतः परस्मात् आददते तदेव तेषां श्रेयः श्रेयस्करम् । अन्यथा अनपकृतं अपकारवर्जितं धनं राज्ञां नास्त्येवेत्यर्थः । यज्ञार्थं पशुबीजादिवधादिव परद्रव्यापहारादपि राज्ञां न दोषोऽस्तीति भावः ।　　　　　　　　　　नीटी.

[4]जित्वा ममत्वं ब्रुवते पुत्रा इव पितुर्धने ।
राजर्षयो जितस्वर्गा धर्मो ह्येषां निगद्यते ॥

[5]यथैव पूर्णादुदधेः स्यन्दन्त्यापो दिशो दश ।
एवं राजकुलाद्वित्तं पृथिवीं प्रतितिष्ठति ॥

निरुच्यते उत्कृष्टत्वेन कीर्त्यते । स्यन्दन्ति प्रस्रवन्ति ।
　　　　　　　　　　नीटी.

---

(१) भा. १२।८।२२; भामु. १२।८।२२ वर्तते (वर्धते).

(२) भा. १२।८।२३ ; भामु. १२।८।२३ गिरिनदी (अभि नदी); राक. ८७ कृत्यानि (कार्याणि) गिरिनदी यथा (इव महत्सरः); राप्र. २५९ कृत्यानि (कार्याणि) गिरिनदी यथा (इव महाभरः).

(३) भा. १२।८।२४ ; भामु. १२।८।२४ कृशाश्वः (कृशार्थः).

(४) भा. १२।८।२५ ; भामु. १२।८।२५ ज्ञातीनां (जातीनां) ऋध्यन्ति (गृध्यन्ति).

(५) भा. १२।८।२६ ; भामु.

(६) भा. १२।८।२७ ; भामु. १२।८।२७ विद्या (नित्यं).

(१) भा. १२।८।२८ द्वितीयार्धं नास्ति ; भामु १२।८।२८–२९.

(२) भा. १२।८।२९ ; भामु. १२।८।२९–३० तपस्यन्ति (ऽध्यापयन्ते) च श्रेयो (तच्छ्रेयो).

(३) भा. १२।८।३० ; भामु. १२।८।३०–३१ हृतं (कृतं) जयन्ति (यजन्ति).

(४) भा. १२।८।३१ ; भामु. १२।८।३१–३२ ममत्वं (ममेयं) धने (धनम्) उत्तरार्धे (राजर्षयोऽपि ते स्वर्ग्यो धर्मो ह्येषां निरुच्यते ।).

(५) भा. १२।८।३२–३३ ; भामु. १२।८।३२–३४.

आसीदियं दिलीपस्य नृगस्य नहुषस्य च ।
अम्बरीषस्य मान्धातुः पृथिवी सा त्वयि स्थिता ॥

[1]स त्वां द्रव्यमयो यज्ञः संप्राप्तः सर्वदक्षिणः ।
तं चेन्न यजसे राजन् प्राप्तस्त्वं देवकिल्बिषम् ॥

[2]येषां राजाऽश्वमेधेन यजते दक्षिणावता ।
उपेत्य तस्यावभृथं पूताः सर्वे भवन्ति ते ॥

[3]विश्वरूपो महादेवः सर्वमेधे महामखे ।
जुहाव सर्वभूतानि तथैवाऽऽत्मानमात्मना ॥

किंच परवित्तापहारोऽस्य परोद्धरणार्थमेवेत्याह– येषामिति । येषां माण्डलिकानां प्रजादीनां च द्रव्यापहर्ता राजा यजते ते सर्वे तदवभृथे पूता भवन्तीत्यन्वयः । विश्वरूप इति । ' ब्रह्मणे ब्राह्मणमालभेत ' इत्यादिशास्त्रात् ब्राह्मणादीनां भूतानां च स्वदेहस्य च होमः यज्ञार्थं क्रियते । तत्र कियान् द्रव्यापहार इति भावः । नीटी.

[4]शाश्वतोऽयं भूतिपथो नास्यान्तमनुशुश्रुम ।
महान् दाशरथः पन्था मा राजन् कापथं गमः ॥

एवमनादिरनन्तश्चायं यज्ञियः पन्था इत्याह– शाश्वत इति । दाशरथः । एकः पशुः, द्वौ पत्नीयजमानौ, त्रयो वेदाः, चत्वार ऋत्विजः, इति दश रथाश्च प्रचरन्ति यस्मिन् स दशरथः, स एव दाशरथः । नीटी.

दण्डस्य प्रयोजनं लोकमर्यादास्थापनम्, दण्डस्य व्यापकं लक्षणं प्रकाराश्च

[5]नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते ।
नादण्डस्य प्रजा राज्ञः सुखमेधन्ति भारत ॥

(१) भा. १२।८।३४ ; भामु. १२।८।३४–३५ देव (राज्य).

(२) भा. १२।८।३५ ; भामु. १२।८।३५–३६ अवभृथं (अवभृथे).

(३) भा. १२।८।३६ ; भामु.

(४) भा. १२।८।३७ ; भामु. १२।८।३७ नास्यान्त (नास्त्यन्त) कापथं (कुपथं).

(५) भा. १२।१४।१४ भूमि (भूति) ; भामु. १२।१४।१४.

वैशम्पायन उवाच–

[1]याज्ञसेन्या वचः श्रुत्वा पुनरेवार्जुनोऽब्रवीत् ।
अनुमान्य महाबाहुं ज्येष्ठं भ्रातरमीश्वरम् ॥

[2]दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥

' नादण्डः क्षत्रियो भाति ' इति द्रौपद्युक्तिमुपबृंहयति– दण्ड इति । नीटी.

[3]धर्मं संरक्षते दण्डस्तथैवार्थं नराधिप ।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥

[4]दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते ।
एतद्विद्वन्नुपादत्स्व स्वभावं पश्य लौकिकम् ॥

उपाधत्स्व दण्डमिति शेषः । लौकिकं भावं लोकव्यवहारं पश्यंस्व पश्य । यद्वा शोभनश्चासावलौकिकश्च तं भावं शास्त्रैकगम्यमानन्दात्मानमन्तर्दृष्ट्या पश्य बहिश्च दण्डमुपाधत्स्व । तेन सहदेवोक्तोऽर्थः प्रदर्शितो भवति । नीटी.

[5]राजदण्डभयादेके पापाः पापं न कुर्वते ।
यमदण्डभयादेके परलोकभयादपि ॥

[6]परस्परभयादेके पापाः पापं न कुर्वते ।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥

सांसिद्धिके पशुवत् दण्डार्हस्वभावे । नीटी.

दण्डस्यैव भयादेके न खादन्ति परस्परम् ।
अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥

(१) भा. १२।१५।१ ; भामु. १२।१५।१ मीश्वरम् (मच्युतम्).

(२) भा. १२।१५।२. ; भामु.

(३) भा. १२।१५।३ ; भामु. १२।१५।३ पूर्वार्धे (दण्डः संरक्षते धर्मं तथैवार्थं जनाधिप ।) ; राप्र. २८७ संरक्षते (च रक्षते).

(४) भा. १२।१५।४ ; भामु. १२।१५।४ उत्तरार्धे (एवं विद्वन्नुपाधत्स्व भावं पश्यस्व लौकिकम् ।) ; राप्र. २८७ दण्डेन रक्ष्यते (दण्डोऽभिरक्षति) पू.

(५) भा. १२।१५।५ ; भामु.

(६) भा. १२।१५।६–८ ; भामु.

**यस्माददान्तान्दमयत्यशिष्टान् दण्डयत्यपि ।**
**दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥**

दण्डशब्दार्थमाह– यस्मादिति । दमयति ताडनादिना, दण्डयति वित्तमपहरति । नीटी.

**[1]वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।**
**दानदण्डः स्मृतो वैश्यो निर्दण्डः शूद्र उच्यते ॥**

भुज्यते इति भुजं भक्तं, तन्मात्रार्पणं, वेतनप्रदानमित्यर्थः । दानं राज्ञे द्रव्यार्पणम् । निर्दण्डः दास्यमेव कारयेत्, न त्वस्य दण्डोऽस्ति, 'शूद्रं तु कारयेद्दास्यम्' (मस्मृ. ८।४१३) इति मनूक्तेः । एतच्चाल्पापराधे ज्ञेयम् । नीटी.

**[2]असंमोहाय मर्त्यानामर्थसंरक्षणाय च ।**
**मर्यादा स्थापिता लोके दण्डसंज्ञा विशां पते ॥**

**[3]यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः ।**
**प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥**

श्यामः, दृढाभिघातेन दण्ड्यस्यान्ध्यजनकत्वात् । लोहिताक्षः, दण्डयितुः क्रोधातिशयात् । सूद्यतः सुतरामुद्यतः । साधु यथापराधम् । नीटी.

### दण्डो लोकधारको भयात्मको हिंसान्वितश्च, हिंसाऽहिंसाविचारः, हिंसया विना जीवनधारणस्य अशक्यता

**[4]ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।**
**दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥**

**[5]नाभीतो यजते राजन्नाभीतो दातुमिच्छति ।**
**नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥**

(१) भा. १२।१५।९ वाचा (वाचि); भामु. १२।१५।९ दानदण्डः स्मृतो वैश्यो (दानदण्डाः स्मृता वैश्या); राप्र. २८७.

(२) भा. १२।१५।१०; भामु.; राप्र. २८७.

(३) भा. १२।१५।११ सूद्यतः (सूनृतः); भामु. १२।१५।११ मुह्यन्ति (मुह्यन्ते); राप्र. २८७ भामुवत्.

(४) भा. १२।१५।१२; भामु. १२।१५।१२ प्रस्थोऽथ (प्रस्थश्च); राप्र. २८७.

(५) भा. १२।१५।१३; भामु.; राप्र. २८७ पू.

**[1]नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।**
**नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥**

महतीं इन्द्रलोकादिम् । मत्स्यघातीवेत्यनपकारिणामपि वधः कार्य इत्यत्र दृष्टान्तः । नीटी.

**[2]नाघ्नतः कीर्तिरस्तीह न वित्तं न पुनः प्रजाः ।**
**इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ॥**

**[3]य एव देवा हन्तारस्ताँल्लोकोऽर्चयते भृशम् ।**
**हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः ॥**

**[4]हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः ।**
**वसवो मरुतः साध्या विश्वेदेवाश्च भारत ॥**

**[5]एतान्देवान्नमस्यन्ति प्रतापप्रणता जनाः ।**
**न ब्रह्माणं न धातारं न पूषाणं कथंचन ॥**

**[6]मध्यस्थान्सर्वभूतेषु दान्ताञ्शमपरायणान् ।**
**यजन्ते मानवाः केचित्प्रशान्ताः सर्वकर्मसु ॥**

**[7]न हि पश्यामि जीवन्तं लोके कंचिदहिंसया ।**
**सत्त्वैः सत्त्वानि जीवन्ति दुर्बलैर्बलवत्तराः ॥**

**[8]नकुलो मूषकानत्ति विडालो नकुलं तथा ।**
**बिडालमत्ति श्वा राजञ्श्वानं व्यालमृगस्तथा ॥**

व्यालमृगः चित्रव्याघ्रः । नीटी.

(१) भा. १२।१५।१४; भामु. १२।१५।१४ दारुणम् (दुष्करम्); राप्र. २८७ घातीव (घाती च) शेषं भामुवत्.

(२) भा. १२।१५।१५; भामु.; राप्र. २८७.

(३) भा. १२।१५।१६; भामु.; राप्र. २८७.

(४) भा. १२।१५।१७; भामु.; राप्र. २८८.

(५) भा. १२।१५।१८; भामु.; राप्र. २८८.

(६) भा. १२।१५।१९; भामु. १२।१५।१९ यजन्ते (जयन्ते); राप्र. २८८ शम (श्रम) प्रशान्ताः (प्रशस्ताः).

(७) भा. १२।१५।२०; भामु. १२।१५।२० सत्त्वानि (सत्त्वा हि); राप्र. २८८.

(८) भा. १२।१५।२१; भामु. १२।१५।२१ मूषका (मूषिका); राप्र. २८८.

[1]तानत्ति पुरुषः सर्वान् पश्य धर्मो यथागतः ।
प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत् ॥
[2]विधानं देवविहितं तत्र विद्वान्न मुह्यति ।
यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ॥
यथा (सृष्टः!) 'शौर्यं तेजो धृतिर्दाक्ष्यम्' इत्याद्युक्तस्वभावः क्षत्रियः सृष्टोऽसि धात्रा । नीटी.
[3]विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः ।
विना वधं न कुर्वन्ति तापसाः प्राणयापनम् ॥
विनीतौ अपनीतौ क्रोधहर्षौ यैस्ते मन्दाः क्षत्रियाः । नीटी.
[4]उदके बह्वः प्राणाः पृथिव्यां च फलेषु च ।
न च कश्चिन्न तान् हन्ति किमन्यत्प्राणयापनात् ॥
[5]सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्ययः ॥
स्कन्धपर्ययः देहस्य विपर्ययः । नीटी.
[6]ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः ।
वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः ॥
[7]भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनण्डजान्पशून् ।
मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च ॥
[8]दण्डनीत्यां प्रणीतायां सर्वे सिध्यन्त्युपक्रमाः ।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥
ततो दण्डयुक्ता नीतिः दण्डनीतिः, तस्यां प्रणीतायां प्रवर्तितायाम् । नीटी.

(१) भा. १२।१५।२२ ; भामु. १२।१५।२२ धर्मो (कालो) ; राप्र. २८८.
(२) भा. १२।१५।२३ ; भामु. १२।१५।२३ देव (दैव) ; राप्र. २८८ देव (वेद).
(३) भा. १२।१५।२४ ; भामु. ; राप्र. २८८ विना वधं न (नावधेन हि) उत्त.
(४) भा. १२।१५।२५ ; भामु. ; राप्र. २८८ च फलेषु (पर्वतेषु).
(५) भा. १२।१५।२६ ; भामु. ; राप्र. २८८.
(६) भा. १२।१५।२७ ; भामु. ; राप्र. २८८ विगत (विनीत).
(७) भा. १२।१५।२८ ; भामु. ; राप्र. २८८.
(८) भा. १२।१५।२९ ; भामु. ; राप्र. २८९.



[1]दण्डश्चेन्न भवेल्लोके व्यनशिष्यन्निमाः प्रजाः ।
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥
अभक्ष्यन् भक्षयेयुः । नीटी.
[2]सत्यं चेदं ब्रह्मणा पूर्वमुक्तं
दण्डः प्रजा रक्षति साधु नीतः ।
पश्याग्नयश्च प्रतिशाम्यन्त्यभीताः
संतर्जिता दण्डभयाज्ज्वलन्ति ॥
संतर्जिताः फूत्कारेण । नीटी.
[3]अन्धं तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥
[4]येऽपि संभिन्नमर्यादा नास्तिका वेदनिन्दकाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनोपनिपीडिताः ॥
भोगाय पालनाय मर्यादाया इति शेषः । नीटी.
[5]सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
दण्डस्य हि भयाद्भीतो भोगायेह प्रकल्पते ॥
[6]चातुर्वर्ण्याप्रमोहाय सुनीतनयनाय च ।
दण्डो विधात्रा विहितो धर्मार्थावभिरक्षितुम् ॥
सुनीतिनयनाय विनयप्रापणाय । नीटी.
[7]यदि दण्डान्न बिभ्येयुर्वयांसि श्वापदानि च ।
अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हवींषि च ॥

(१) भा. १२।१५।३० ; भामु. १२।१५।३० व्यनशिष्यन्निमाः (विनश्येयुरिमाः) शूले मत्स्यानिवापक्ष्यन् (जले मत्स्यानिवाभक्ष्यन्) ; राप्र. २८९ भामुवत्.
(२) भा. १२।१५।३१ ; भामु. १२।१५।३१ शाम्यन्त्यभीताः (शाम्य भीताः) ; राप्र. २८९ भामुवत्.
(३) भा. १२।१५।३२ ; भामु. १२।१५।३२ प्रज्ञायेत (प्राज्ञायत) ; राप्र. २८९.
(४) भा. १२।१५।३३ ; भामु. १२।१५।३३ दण्डेनोप (दण्डेनाऽऽशु) ; राप्र. २८९ भामुवत्.
(५) भा. १२।१५।३४ ; भामु. १२।१५।३४ नैरः (जनः) भोगायेह प्रकल्पते (भोगायैव प्रवर्तते) ; राप्र. २८९ भामुवत्.
(६) भा. १२।१५।३५ ; भामु. १२।१५।३५ वर्ण्याप्रमोहाय सुनीत (वर्ण्यप्रमोदाय सुनीति) र्थावभि (र्थौ भुवि) ; राप्र. २८९ पूर्वार्धं भामुवत्, र्थावभि (र्थौ चानु).
(७) भा. १२।१५।३६ ; भामु. ; राप्र. २८९ बिभ्ये (लभ्ये).

[1]न ब्रह्मचार्यधीयीत कल्याणी गौर्न दुह्यते ।
न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत् ॥

कल्याणीं अपत्यवतीं न दुहेत लोकः । उद्वहनं न गच्छेत् किन्तु व्यभिचरेदेव । नीटी.

[2]विश्वलोपः प्रवर्तेत भिद्येरन् सर्वसेतवः ।
ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ॥

विष्वग्लोपः सर्वोच्छेदः । सेतवः मर्यादाः । ममत्वं परिच्छिन्नं न जानीयुः, सर्वः सर्वत्र ममत्वं कुर्यादित्यर्थः । नीटी.

[3]न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥

तिष्ठेयुः अनुतिष्ठेयुः । नीटी.

[4]चरेयुर्नाऽऽश्रमे धर्मं यथोक्तं विधिमाश्रिताः ।
न विद्यां प्राप्नुयात्कश्चिद्यदि दण्डो न पालयेत् ॥

आश्रिताः आश्रमिणः । नीटी.

[5]न चोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः ।
युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ॥

[6]न प्रेष्या वचनं कुर्युर्न बालो जातु कर्हिचित् ।
तिष्ठेत्पितृमते धर्मे यदि दण्डो न पालयेत् ॥

[7]दण्डे स्थिताः प्रजाः सर्वा भयं दण्डं विदुर्बुधाः ।
दण्डे स्वर्गो मनुष्याणां लोकोऽयं च प्रतिष्ठितः ॥

(१) भा. १२।१५।३७ ; भामु. १२।१५।३७ कल्याणी गौर्न दुह्यते ( कल्याणीं न दुहेत गाम् ) ; राप्र. २८९ भामुवत्.

(२) भा. १२।१५।३८ ; भामु. १२।१५।३८ विश्वलोपः ( विष्वग्लोपः ) ; राप्र. २८९ भामुवत्.

(३) भा. १२।१५।३९ ; भामु. ; राप्र. २९०.

(४) भा. १२।१५।४० ; भामु.

(५) भा. १२।१५।४१ ; भामु.

(६) भा. १२।१५।४२ ; भामु. १२।१५।४२ बालो ( बाला ) तिष्ठेत्पितृमते ( न तिष्ठेद्युवती ) ; राप्र. २९० कर्हिचित् ( कस्यचित् ) शेषं भामुवत्.

(७) भा. १२।१५।४३ ; भामु. १२।१५।४३ दण्डं ( दण्डे ) च प्रति ( सुप्रति ) ; राप्र. २९० दण्डं ( दण्डे ).

[1]न तत्र कूटं पापं वा वञ्चना वाऽपि दृश्यते ।
यत्र दण्डः सुविहितश्चरत्यरिविनाशनः ॥

[2]हविः श्वा प्रपिबेद्धृष्टो दण्डश्चेन्नोद्यतो भवेत् ।
हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत् ॥

[3]यदिदं धर्मतो राज्यं विहितं यद्यधर्मतः ।
कार्यस्तत्र न शोको वै भुङ्क्ष्व भोगान्यजस्व च ॥

[4]सुखेन धर्मं श्रीमन्तश्चरन्ति शुचिवाससः ।
संवसन्तः प्रियैर्दारैर्भुञ्जानाश्चान्नमुत्तमम् ॥

[5]अर्थे सर्वे समारम्भाः समायत्ता न संशयः ।
स च दण्डे समायत्तः पश्य दण्डस्य गौरवम् ॥

[6]लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम् ।
अहिंसा साधुहिंसेति श्रेयान्धर्मपरिग्रहः ॥

गोष्ठप्रविष्टव्याघ्रादेरहिंसा गवामेव हिंसा भवति । अतः एतयोर्मध्ये धर्मस्य परिग्रहः आर्तत्राणं श्रेयान् । नीटी.

[7]नात्यन्तगुणवान्कश्चिन्न चाप्यत्यन्तनिर्गुणः ।
उभयं सर्वकार्येषु दृश्यते साध्वसाधु च ॥

(१) भा. १२।१५।४४ ; भामु. ; राप्र. २९० त्यरिविनाशनः ( ते रिपुबाधनः ).

(२) भा. १२।१५।४५ ; भामु. १२।१५।४५ पिबेद्धृष्टो ( लिहेद्दृष्ट्वा ) ; राप्र. २९० श्वा प्रपिबेद्धृष्टो (श्वाऽपि लिहेद्दृष्ट्वा ).

(३) भा. १२।१५।४६ ; भामु. १२।१५।४६ यदिदं ( यदीदं ).

(४) भा. १२।१५।४७ ; भामु. १२।१५।४७ संवसन्तः प्रियैर्दारैः ( संवर्षन्तः फलैर्दानैः ).

(५) भा. १२।१५।४८ ; भामु. ; राप्र. २९० दण्डे स ( दण्डस ).

(६) भा. १२।१५।४९ ; भामु. १२।१५।४९ अहिंसा साधु ( अहिंसाऽसाधु ).

(७) भा. १२।१५।५० ; भामु. १२।१५।५० पूर्वार्धे ( नात्यन्तं गुणवत्किंचिन्न चाप्यत्यन्तनिर्गुणम् । ) साधु च ( साधु वा ).

[1]पशूनां वृषणं छित्त्वा ततो भिन्दन्ति नस्तकान् ।
कृषन्ति बहवो भारान्बध्नन्ति दमयन्ति च ॥

मस्तकं भिन्दन्ति शृङ्गवृद्धिर्मा भूदिति । नस्तकानिति पाठे नासिकाः । नीटी.

[2]एवं पर्याकुले लोके विपथे जर्जरीकृते ।
तैस्तैर्न्यायैर्महाराज पुराणं धर्ममाचर ॥

जर्जरीकृते दण्डेन । तदभावे भारवहनादिकार्यं न स्यादतः पुराणमेव धर्ममाचर । न त्वत्र प्रवाहायातं हिंसादिदोषमवेक्षस्वेति भावः । नीटी.

[3]यज देहि प्रजा रक्ष धर्मं समनुपालय ।
अमित्राञ्जहि कौन्तेय मित्राणि परिपालय ॥

[4]मा च ते निघ्नतः शत्रून्मन्युर्भवतु भारत ।
न तत्र किल्बिषं किंचित्कर्तुर्भवति भारत ॥

मन्युः दैन्यम् । नीटी.

[5]आततायी हि यो हन्यादाततायिनमागतम् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ॥

आततायी शस्त्रपाणिः । मन्युः क्रोधः मन्युं क्रोधं आर्च्छति आ सर्वतः ऋच्छति प्राप्नोति, 'मन्युः कर्ता नाहं कर्ता' इति श्रुतेस्तत्र न भ्रूणहा भवतीत्यर्थः । नीटी.

[6]अवध्यः सर्वभूतानामन्तरात्मा न संशयः ।
अवध्ये चाऽऽत्मनि कथं वध्यो भवति केनचित् ॥

वस्तुतस्तु अवध्य एव आत्मा, देहस्तु शालवदनात्मा, तेन देहेन देहे निहते नाऽऽत्मा हन्ता वा वध्यो वेत्याह– अवध्य इत्यादिना । नीटी.

[1]यथा हि पुरुषः शालां पुनः संप्रविशेन्नवाम् ।
एवं जीवः शरीराणि तानि तानि प्रपद्यते ॥

[2]देहान्पुराणानुत्सृज्य नवान्संप्रतिपद्यते ।
एवं मृत्युमुखं प्राहुर्ये जनास्तत्त्वदर्शिनः ॥

राजधर्मः प्रजापालनं धर्मरक्षणं च

व्यास उवाच–

[3]प्रजानां पालनं धर्मो राज्ञां राजीवलोचन ।
धर्मः प्रमाणं लोकस्य नित्यं धर्मानुवर्तनम् ॥

[4]अनुतिष्ठस्व वै राजन् पितृपैतामहं पदम् ।
ब्राह्मणेषु च यो धर्मः स नित्यो वेदनिश्चितः ॥

तत् तस्मात् धर्ममनुतिष्ठस्व, पदं पालयेति च संबन्धः । नीटी.

[5]तत्प्रमाणं प्रमाणानां शाश्वतं भरतर्षभ ।
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ॥

[6]तथा यः प्रतिहन्त्यस्य शासनं विषये नरः ।
स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ॥

[7]प्रमाणमप्रमाणं यः कुर्यान्मोहवशं गतः ।
भृत्यो वा यदि वा पुत्रस्तपस्वी वाऽपि कश्चन ।
पापान् सर्वैरुपायैस्तान्नियच्छेद्घातयेत वा ॥

---

(१) भा. १२।१५।५१ ; भामु. १२।१५।५१ नस्तकान् ( मस्तकम् ) कृषन्ति ( वहन्ति ).

(२) भा. १२।१५।५२ ; भामु. १२।१५।५२ विपथे ( वितथैः ).

(३) भा. १२।१५।५३ ; भामु.

(४) भा. १२।१५।५४ ; भामु. १२।१५।५४ तु भारत ( तु पार्थिव ).

(५) भा. १२।१५।५५ ; भामु. १२।१५।५५ मृच्छति ( मार्च्छति ).

(६) भा. १२।१५।५६ ; भामु. १२।१५।५६ केनचित् ( कस्यचित् ).

(१) भा. १२।१५।५७ ; भामु.

(२) भा. १२।१५।५८ ; भामु. १२।१५।५८ ये जनाः ( जना ये ).

(३) भा. १२।३२।२ ; भामु. १२।३२।२ वर्तनं ( वर्तिनः ).

(४) भा. १२।३२।३ ; भामु. १२।३२।३ वै राजन् ( तद्राजन् ) च यो ( तपो ).

(५) भा. १२।३२।४ ; भामु. १२।३२।४ प्रमाणानां ( ब्राह्मणानां ).

(६) भा. १२।३२।५ ; भामु. १२।३२।५ तथा यः प्रतिहन्त्यस्य ( यः स्वयं प्रतिहन्ति स्म ) नरः ( रतः ).

(७) भा. १२।३२।६ ; भामु. १२।३२।६–७ वाऽपि (वाऽथ) घातयेत ( शातयीत ).

शातयीत मारयेत् । नीटी.

[1]अथोऽन्यथा वर्तमानो राजा प्राप्नोति किल्बिषम् ।
धर्मं विनश्यमानं हि यो न रक्षेत्स धर्महा ॥
ते त्वया धर्महन्तारो निहताः सपदानुगाः ।
स्वधर्मे वर्तमानस्त्वं किं नु शोचसि पाण्डव ।
राजा हि हन्याद्द्याच्च प्रजा रक्षेच्च धर्मतः ॥

राजधर्मः जीवलोकधारकः लोकसंस्थापकः
चतुर्विधपुरुषार्थसाधनं च

**वैशम्पायन उवाच–**

[2]प्रणिपत्य हृषीकेशमभिवाद्य पितामहम् ।
अनुमान्य गुरून्सर्वान्पर्यपृच्छद्युधिष्ठिरः ॥

गुरून् कृपव्यासादीन् । पर्यपृच्छत्, धर्मानिति शेषः । नीटी.

[3]राज्यं वै परमो धर्म इति धर्मविदो विदुः ।
महान्तमेतं भारं च मन्ये तद्ब्रूहि पार्थिव ॥

धर्मः प्रजापालनात्मकः । परमः सर्वधर्मश्रेष्ठः । एतं धर्मं भारं दुर्वहं मन्ये । नीटी.

[4]राजधर्मान्विशेषेण कथयस्व पितामह ।
सर्वस्य जीवलोकस्य राजधर्माः परायणम् ॥

परायणं आश्रयः । नीटी.

[5]त्रिवर्गोऽत्र समासक्तो राजधर्मेषु कौरव ।
मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ॥

त्रिवर्गः धर्मार्थकामात्मकः, राजधर्मेषु दण्डनीतौ, समासक्तः समाश्रितः । नीटी.

(१) भा. १२।३२।७–८ ; भामु. १२।३२।७–९.

(२) भा. १२।५६।१ ; भामु.

(३) भा. १२।५६।२ ; भामु. १२।५६।२ राज्यं (राज्ञां).

(४) भा. १२।५६।३ ; भामु. १२।५६।३ धर्माः (धर्मः).

(५) भा. १२।५६।४ ; भामु. १२।५६।४ त्रिवर्गोऽत्र (त्रिवर्गो हि).

[1]यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा ।
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥

प्रग्रहणं नियन्त्रणम् । नीटी.

[2]अत्र वै संप्रमूढे तु धर्मे राजर्षिसेविते ।
लोकस्य संस्था न भवेत्सर्वं च व्याकुलं भवेत् ॥

संस्था मर्यादा व्यवस्था । नीटी.

[3]उदयन् हि यथा सूर्यो नाशयत्यासुरं तमः ।
राजधर्मास्तथाऽलोक्यामाक्षिपन्त्यशुभां गतिम् ॥

अलोक्यां अप्रकाशात्मिकां अशुभां गतिं नरकं निक्षिपन्ति दूरीकुर्वन्ति । तथा च स्मृतिः– 'राजभिः कृतदण्डास्तु शुध्यन्ति मलिना जनाः । कृतार्थाश्च ततो यान्ति स्वर्गं सुकृतिनो यथा ॥' इति । नीटी.

राज्यार्हः राजा– नित्योत्थानशीलः उत्पथगामिगुरुपुत्रादित्यागी
सत्याहिंसादियमोपेतः पुरुषार्थचतुष्टयरतः चारनियोक्ता
दशवर्गवेत्ता सहायसंपन्नः प्रजाहितरतः जितेन्द्रियश्च

**भीष्म उवाच–**

[4]नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर ।
प्रशाम्यते च राजा हि नारीवोद्यमवर्जितः ॥

अस्यैवाध्यायस्य सूत्रभूतस्योत्तरो ग्रन्थो वृत्तिरूपः । तत्र उत्थानेन यतेथाः इत्युक्तं तद्विवृणोति– नित्येति । नीटी.

[5]भगवानुशना चाऽऽह श्लोकमत्र विशां पते ।
तमिहैकमना राजन् गदतस्त्वं निबोध मे ॥

(१) भा. १२।५६।५ ; भामु.

(२) भा. १२।५६।६; भामु. १२।५६।६ अत्र वै संप्रमूढे तु (तत्र चेत्संप्रमुह्येत) व्याकुलं भवेत् (व्याकुलीभवेत्).

(३) भा. १२।५६।७; भामु. १२।५६।७ त्यासुरं (त्यशुभं) क्यामाक्षि (क्यां निक्षि).

(४) भा. १२।५७।१ ; भामु. १२।५७।१ प्रशाम्यते च (प्रशस्यते न).

(५) भा. १२।५७।२ ; भामु. १२।५७।२ तमिहैक (तदिहैक) स्त्वं (स्तं).

यत् श्लोकमाह तत् तस्मात् तं श्लोकं निबोध । नीटी.

[1]द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥

अप्रवासिनं वेदाध्ययनार्थं ब्राह्मणं यतिं वा । नीटी.

[2]तदेतन्नरशार्दूल हृदि त्वं कर्तुमर्हसि ।
संधेयानपि संधत्स्व विरोध्यांश्च विरोधय ॥

विरोधय पर्वतादौ तेषां विशेषेण रोधं कुरु । नीटी.

[3]सप्ताङ्गे यश्च ते राज्ये वैपरीत्यं समाचरेत् ।
गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव सः ॥

सप्त स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि अङ्गानि यस्य तस्य सप्ताङ्गस्य । विपरीतं यस्य कस्यचिदप्यङ्गस्य प्रतिकूलम् । नीटी.

[4]मरुत्तेन हि राज्ञाऽयं गीतः श्लोकः पुरातनः ।
राज्याधिकारे राजेन्द्र बृहस्पतिमतः पुरा ॥

[5]गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥

शाश्वतः अप्रतिसमाधेयः पर्वतारोहणादिर्गुरोः । अन्यस्य तु वध एव । नीटी.

[6]बाहोः पुत्रेण राज्ञा च सगरेणेह धीमता ।
असमञ्जाः सुतो ज्येष्ठस्त्यक्तः पौरहितैषिणा ॥

[7]असमञ्जाः सरय्वां प्राक्पौराणां बालकान्नृप ।
न्यमज्जयदतः पित्रा निर्भर्त्स्य स विवासितः ॥

(१) भा. १२।५७।३ ; भामु. १२।५७।३ द्वावेतौ (द्वाविमौ).

(२) भा. १२।५७।४ ; भामु. १२।५७।४ नपि ( नभि ).

(३) भा. १२।५७।५ ; भामु. १२।५७।५ पूर्वार्धे ( सप्ताङ्गस्य च राज्यस्य विपरीतं य आचरेत् । ).

(४) भा. १२।५७।६ ; भामु. १२।५७।६ राज्ञाऽयं ( राज्ञा वै ) राज्याधि ( राजाधि ) मतः ( मते ).

(५) भा. १२।५७।७ ; भामु. १२।५७।७ परित्यागो विधीयते ( दण्डो भवति शाश्वतः ).

(६) भा. १२।५७।८ ; भामु. १२।५७।८ सगरेणेह ( सगरेण च ).

(७) भा. १२।५७।९ ; भामु. १२।५७।९ प्राक् ( स ).

[1]ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः ।
मिथ्या विप्रानुपचरन्संत्यक्तो दयितः सुतः ॥

लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः ।
सत्यस्य रक्षणं चैव व्यवहारस्य चाऽऽर्जवम् ॥

न हिंस्यात्परवित्तानि देयं काले च दापयेत् ।
विक्रान्तः सत्यवाक्क्षान्तो नृपो न चलते पथः ॥

न हिंस्यात् करार्थं क्षेत्रेषु धान्यानि रुद्ध्वा वृष्ट्यादिना न नाशयेत् । देयं भृत्यानां वेतनम् । विक्रान्तः पराक्रमी । क्षान्तः क्षमावान् । पथः शुभमार्गात् । नीटी.

[2]गुप्तमन्त्रो जितक्रोधः शास्त्रार्थगतनिश्चयः ।
धर्मे चार्थे च कामे च मोक्षे च सततं रतः ॥

आत्मवान् जितचित्तः । शास्त्रार्थे कृतनिश्चयः निःसंदेहः । सततं नित्यम् । पूर्वाह्णे धर्मं मध्याह्नेऽर्थमपराह्णे कामममपररात्रे योगं चेति नित्यं सर्वानपि सेवेत । नीटी.

[3]त्रय्या संवृतरन्ध्रश्च राजा भवितुमर्हति ।
वृजिनस्य नरेन्द्राणां नान्यत्संवरणात्परम् ॥

वृजिनं संकटम् । अरक्षणात् मन्त्रस्यागोपनात् अन्यन्नास्ति । नीटी.

[4]चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता ।
धर्मसंकररक्षा हि राज्ञां धर्मः सनातनः ॥

धर्माणां संकरः व्यत्ययः, तस्मात्प्रजानां रक्षा धर्मसंकररक्षा । नीटी.

(१) भा. १२।५७।१०-१२ ; भामु.

(२) भा. १२।५७।१३ ; भामु. १२।५७।१३ गुप्तमन्त्रो ( आत्मवांश्च ) गत ( कृत ).

(३) भा. १२।५७।१४ ; भामु. १२।५७।१४ त्रय्या ( त्रय्यां ) रन्ध्रश्च ( मन्त्रश्च ) वृजिनस्य ( वृजिनं च ) त्संवरणा ( च्चारक्षणा ).

(४) भा. १२।५७।१५ ; भामु. १२।५७।१५ रक्षा हि ( रक्षा च ).

[1]न विश्वसेच्च नृपतिर्न चात्यर्थं न विश्वसेत् ।
षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्याऽवलोकयेत् ॥

न विश्वसेत् । चात् विश्वसेदप्याप्तेषु । तेष्वपि अत्यर्थं न विश्वसेत् । षण्णां गुणानां भावः षाड्गुण्यम् । ते च– बलवति स्थायिनि यानिनः संधिः, समबले विग्रहः युद्धादिः, दुर्बले यानं तदीयदुर्गाद्याक्रमणम्, एवं स्थायिनो बलवति यायिनि आसनं दुर्गादावेव स्वरक्षणम्, मध्यमे द्वैधीभावः अर्धेन दण्डेन दुर्गाश्रयणं अर्धेन परेषां धान्यादिनिरोधनम्, दुर्बले समाश्रयः मित्रान्तरमाश्रित्य तेन सह युद्धं कर्तव्यम् । एतेषु कर्तव्येषु गुणान् जयावहान् दोषान् पराजयावहांश्चार्थान् कोशदण्डादिपौष्कल्यादीन् बुद्ध्या स्वयमेव निश्चिनुयात् । नीटी.

[2]द्विट्छिद्रदर्शी नृपतिर्नित्यमेव प्रशस्यते ।
त्रिवर्गविदितार्थश्च युक्तचारोपधिश्च यः ॥

द्विषः शत्रोः सप्तसु राज्याङ्गेषु स्वप्रवेशद्वारशैथिल्यं तत् द्विट्छिद्रम् । एवं स्वस्य सप्तसु राज्याङ्गेषु यत्परप्रवेशद्वारशैथिल्यं तत् परच्छिद्रम् । द्विट्छिद्रदर्शी स्यात् । एतच्च स्वच्छिद्रगोपनस्याप्युपलक्षणम् । त्रिवर्गे धर्मादौ विदितार्थः ज्ञाततत्त्वः । युक्तः चारः प्रच्छन्नः स्पशः उपधिः परकीयानाममात्यादीनामुत्कोचदानादिना भेदनं च येन स युक्तचारोपधिः । तत्र चारनियोजनस्थानान्युक्तानि नीतिशास्त्रे– 'मन्त्री पुरोहितश्चैव युवराजश्चमूपतिः । पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा ॥ कारागाराधिकारी च द्रव्यसंचयकृत्तथा । कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥ प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा । धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ॥ षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः । अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ॥ चारान्विचारयेत्तीर्थे स्वात्मनश्च परस्य च । पाषण्डादीनविज्ञातानन्योन्यमितरेष्वपि । मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितम् ॥' नीटी.

[1]कोशस्योपार्जनरतिर्यमवैश्रवणोपमः ।
वेत्ता च दशवर्गस्य स्थानवृद्धिक्षयात्मनः ॥

दशवर्गः 'अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः' इति प्रकृतिपञ्चकं स्वपक्षे परपक्षे चेति दशको वर्गः, स च उभयोः साम्यं चेत् स्थानं स्थितिः तत्कर्ता, स्वस्याधिकश्चेद्वृद्धिकर्ता, परस्याधिकश्चेत्क्षयकर्ता । नीटी.

[2]अभृतानां भवेद्भर्ता भृतानां चान्ववेक्षकः ।
नृपतिः सुमुखश्च स्यात्स्मितपूर्वाभिभाषिता ॥

[3]उपासिता च वृद्धानां जिततन्द्रीरलोलुपः ।
सतां वृत्ते स्थितमतिः सन्तो ह्याचारदर्शिनः ॥

[4]न चाऽऽददीत वित्तानि सतां हस्तात्कदाचन ।
असद्भ्यस्तु समादद्यात्सद्भ्यः संप्रतिपादयेत् ॥

[5]स्वयं प्रहर्ता दाता च वश्यात्मा वश्यसाधनः ।
काले दाता च भोक्ता च शुद्धाचारस्तथैव च ॥

[6]शूरान्भक्तानसंहार्यान् कुले जातानरोगिणः ।
शिष्टाञ्छिष्टाभिसंबन्धान्मानिनो नावमानिनः ॥

[7]विद्याविदो लोकविदः परलोकान्ववेक्षकान् ।
धर्मेषु निरतान्साधूनचलानचलानिव ॥

[8]सहायान्सततं कुर्याद्राजा भूतिपुरस्कृतः ।
तैस्तुल्यश्च भवेद्भोगैश्छत्रमात्राज्ञयाऽधिकः ॥

---

(१) भा. १२।५७।१६ ; भामु. १२।५७।१६ चात्यर्थं न (चात्यर्थं च).

(२) भा. १२।५७।१७; भामु. १२।५७।१७ त्रिवर्ग (त्रिवर्गे).

(१) भा. १२।५७।१८; भामु.

(२) भा. १२।५७।१९ ; भामु. १२।५७।१९ भृतानां चान्व (भृतानामन्व).

(३) भा. १२।५७।२० ; भामु. १२।५७।२० तन्द्री (तन्द्रि) सन्तो ह्याचारदर्शिनः (संतोष्यश्चारुदर्शनः).

(४) भा. १२।५७।२१ ; भामु. १२।५७।२१ असद्भ्यस्तु (असद्भ्यश्च) संप्रति (तु प्रति).

(५) भा. १२।५७।२२ ; भामु. १२।५७।२२ वश्य (रम्य).

(६) भा. १२।५७।२३ ; भामु. १२।५७।२३ मानिनो नाव (मानिनोऽनव).

(७) भा. १२।५७।२४ ; भामु. १२।५७।२४ धर्मेषु (धर्मे च).

(८) भा. १२।५७।२५ ; भामु. १२।५७।२५ पुरस्कृतः (परिष्कृतः) तैस्तुल्यश्च (तैश्च तुल्यो).

शूरान् सहायान् कुर्यादिति तृतीयेनान्वयः । असंहार्यान् परैरप्रतार्यान् । शिष्टाभिसंबन्धान् शिष्टपरिवारान् । अनवमानिनः अवमानं परस्याकुर्वतः । अचलान् स्थिरान् । अचलानिव पर्वतानिव । छत्रमात्रेण सहिता या आज्ञा 'इदमित्थं कुरु इदं न' इति, तयाऽधिकः । अन्यत्सर्वं शूरैः समानं भुञ्जीत । नीटी.

[1]प्रत्यक्षा च परोक्षा च वृत्तिश्चास्य भवेत्सदा ।
एवं कृत्वा नरेन्द्रो हि न खेदमिह विन्दति ॥

इयं च शूरेषु राज्ञो वृत्तिः प्रत्यक्षा परोक्षा च समा भवेत् । संनिहितेष्वसंनिहितेषु वा तुल्या स्यादित्यर्थः । नीटी.

[2]सर्वातिशङ्की नृपतिर्यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बाध्यते ॥

सर्वाभिशङ्की सर्वत्राकृतविश्वासः । सर्वहरः सर्वस्वापहारी । अनृजुः अनृतापराधारोपकृत्, यतो लुब्धः । नीटी.

[3]शुचिस्तु पृथिवीपालो लोकचित्तग्रहे रतः ।
न पतत्यरिभिर्ग्रस्तः पतितश्चावतिष्ठते ॥

[4]अक्रोधनोऽथाव्यसनी मृदुदण्डो जितेन्द्रियः ।
राजा भवति भूतानां विश्वास्यो हिमवानिव ॥

[5]प्राज्ञो न्यायगुणोपेतः पररन्ध्रेषु तत्परः ।
सुदर्शः सर्ववर्णानां नयापनयवित्तथा ॥

[6]क्षिप्रकारी जितक्रोधः सुप्रसादो महामनाः ।
अरोगप्रकृतिर्युक्तः क्रियावानविकत्थनः ॥

(१) भा. १२।५७।२६ ; भामु. १२।५७।२६ सदा (समा) कृत्वा (कुर्वन्) नरेन्द्रो हि (नरेन्द्रोऽपि).

(२) भा. १२।५७।२७ ; भामु. १२।५७।२७ सर्वाति (सर्वाभि) बाध्यते (बध्यते).

(३) भा. १२।५७।२८ ; भामु. १२।५७।२८ पतित (परित).

(४) भा. १२।५७।२९ ; भामु. १२।५७।२९ ऽथाव्यसनी (ह्यव्यसनी).

(५) भा. १२।५७।३० ; भामु. १२।५७।३० न्याय (त्याग).

(६) भा. १२।५७।३१ ; भामु. १२।५७।३१ अरोग (अरोष).

[1]आरब्धान्येव कार्याणि न पर्यवसितानि च ।
यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तमः ॥

[2]पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति स राजा राजसत्तमः ॥

अगूढविभवा यस्य पौरा राष्ट्रनिवासिनः ।
नयापनयवेत्तारः स राजा राजसत्तमः ॥

स्वकर्मनिरता यस्य जना विषयवासिनः ।
असंघातरता दान्ताः पाल्यमाना यथाविधि ॥

असंघातरताः संघाते शरीरे प्रीतिमन्तो न भवन्ति, किंतु तत्साध्ये धर्मे एवेत्यर्थः । नीटी.

[3]वश्या नेया विनीताश्च न च संघर्षशीलिनः ।
विषये दानरुचयो नरा यस्य स पार्थिवः ॥

नेयाः विनेतुं योग्याः । संघर्षः पराभिभवः, तच्छीलिनो न । नीटी.

[4]न यस्य कूटकपटं न माया न च मत्सरः ।
विषये भूमिपालस्य तस्य धर्मः सनातनः ॥

कूटं दम्भः । कपटं अनृतम् । मत्सरः परोत्कर्षासहिष्णुत्वम् । नीटी.

[5]यः सत्करोति ज्ञानानि नेयः पौरहिते रतः ।
सतां धर्मानुगस्त्यागी स राजा राज्यमर्हति ॥

ज्ञानानि ज्ञानयुक्तान् पण्डितान् । ज्ञेये शास्त्रार्थे परस्य हितावहे रतः, न तु हिंसामये । त्यागी दाता । नीटी.

(१) भा. १२।५७।३२; भामु. १२।५७।३२ कार्याणि न (कार्याणि सु) दृश्यन्ते (दृश्यन्ति).

(२) भा. १२।५७।३३–३५; भामु.

(३) भा. १२।५७।३६; भामु. १२।५७।३६ विनीता (विधेया).

(४) भा. १२।५७।३७; भामु. १२।५७।३७ कूटकपटं (कूटं कपटं).

(५) भा. १२।५७।३८ ; भामु. १२।५७।३८ नेयः पौर (ज्ञेये पर) धर्मा (वर्त्मा).

[1]यस्य चारश्च मन्त्रश्च नित्यं चैव कृताकृते ।
न ज्ञायते हि रिपुभिः स राजा राज्यमर्हति ॥

कृताः अप्यकृताः इव इति कृताकृताः । नीटी.

[2]श्लोकश्चायं पुरा गीतो भार्गवेण महात्मना ।
आख्याते रामचरिते नृपतिं प्रति भारत ॥

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥

प्रथमं श्रेष्ठम् । असति अशुभे । नीटी.

[3]तद्राजन्राजसिंहानां नान्यो धर्मः सनातनः ।
ऋते रक्षां सुविस्पष्टां रक्षा लोकस्य धारणम् ॥

[4]प्राचेतसेन मुनिना श्लोकौ चेमावुदाहृतौ ।
राजधर्मेषु राजेन्द्र ताविहैकमनाः शृणु ॥

रक्षैव राज्ञः कर्म, तामकुर्वन् राजा त्याज्य इत्याह–प्राचेतसेनेति । नीटी.

प्रजाया अरक्षिता राजा त्याज्यः मनुष्येण

षडेतान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥

राजनीतिसारसंग्रहः

भीष्म उवाच–

[5]एतत्ते राजधर्माणां नवनीतं युधिष्ठिर ।
बृहस्पतिर्हि भगवान्नान्यं धर्मं प्रशंसति ॥

(१) भा. १२।५७।३९ ; भामु. १२।५७।३९ चारश्च मन्त्रश्च (चाराश्च मन्त्राश्च) कृते ( कृताः ) ज्ञायते ( ज्ञायन्ते ).

(२) भा. १२।५७।४०–४१ ; भामु.

(३) भा. १२।५७।४२ ; भामु. १२।५७।४२ तद्राजन्राजसिंहानां ( तद्राज्ये राज्यकामानां ) सुवि (तु वि ) धारणम् ( धारिणी ).

(४) १२।५७।४३–४५ ; भामु.

(५) भा. १२।५८।१ ; भामु. १२।५८।१ नान्यं ( न्याय्यं ).

एतत् रक्षणं नवनीतं नवनीतवत्सर्वधर्मसारम् । न्याय्यं न्यायादनपेतम् । नीटी.

[1]विशालाक्षश्च भगवान्काव्यश्चैव महातपाः ।
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥
भरद्वाजश्च भगवांस्तथा गौरशिरा मुनिः ।
राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः ॥

[2]रक्षामेव प्रशंसन्ति धर्मं धर्मभृतां वर ।
राज्ञां राजीवताम्राक्ष साधनं चात्र वै शृणु ॥

अत्र रक्षणे साधनं युक्तिम् । नीटी.

[3]चारश्च प्रणिधिश्चैव काले दानममत्सरः ।
युक्त्यादानं न चाऽऽदानमयोगेन युधिष्ठिर ॥

चारः गुप्तस्पशः । प्रणिधिः प्रकटस्पशः । दानं भक्तवेतनयोः । युक्तेः आदानम् । अयोगेन अनुपायेन आदानं करग्रहणं न च । नीटी.

[4]सतां संग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम् ।
अनार्जवैरार्जवैश्च शत्रुपक्षस्य भेदनम् ॥
साधूनामपरित्यागः कुलीनानां च धारणम् ।
निचयश्च निचेयानां सेवा बुद्धिमतामपि ॥

निचेयानां संग्राह्याणां धान्यादीनां निचयः संग्रहः । नीटी.

बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम् ।
कार्येष्वखेदः कोशस्य तथैव च विवर्धनम् ॥
पुरगुप्तिरविश्वासः पौरसंघातभेदनम् ।
केतनानां च जीर्णानामवेक्षा चैव सीदताम् ॥
द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः ।
अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणम् ॥

(१) भा. १२।५८।२–३; भामु.

(२) भा. १२।५८।४; भामु. १२।५८।४ वै ( मे ).

(३) भा. १२।५८।५ ; भामु. १२।५८।५ ममत्सरः ( ममत्सरात् ).

(४) भा. १२।५८।६–१० ; भामु. १२।५८।६–१०. अत्रत्यः श्लोकक्रमस्तु आदर्शश्लोकक्रमाद्भिन्नः ।

अविश्वासः यामिकादीनामपि । पौराणां संघातस्य परैर्वाणिज्यादिच्छलेन वशीकृतस्य भेदनं विघटनम् । केतनानां गृहादीनाम् । द्विविधस्य, शारीरदण्डोऽर्थदण्डश्चेति भेदात् । नीटी.

[1]उपजापश्च भृत्यानामात्मनः परदर्शनात् ।
अविश्वासः स्वयं चैव परस्याऽऽश्वासनं तथा ॥

उपजापः परैः स्वभृत्यानां भेदनम् । अविश्वासः भृत्यानामेव । नीटी.

[2]नीतिधर्मानुसरणं नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं नित्यं चानार्यवर्जनम् ॥

उत्थानं उद्योगः । अनार्यं हीनकर्म कदर्यत्वादि, तद्वर्जनम् । नीटी.

[3]उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
राजधर्मस्य यन्मूलं श्लोकांश्चात्र निबोध मे ॥

[4]उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः ।
उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च ॥

[5]उत्थानधीरः पुरुषो वाग्धीरानधितिष्ठति ।
उत्थानधीरं वाग्धीरा रमयन्त उपासते ॥

वाग्वीरान् पण्डितान् । उत्थानमेव महत्पाण्डित्यमित्यर्थः । नीटी.

[6]उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः ।
धर्षणीयो रिपूणां स्याद्भुजङ्ग इव निर्विषः ॥

(१) भा. १२।५८।११ ; भामु. १२।५८।११ परदर्शनात् (पुरदर्शनम्).

(२) भा.. १२।५८।१२ ; भामु.

(३) भा. १२।५८।१३ ; भामु. १२।५८।१३ यन्मूलं (तन्मूलं).

(४) भा. १२।५८।१४ ; भामु.

(५) भा. १२।५८।१५ ; भामु. १२।५८।१५ धीरः (वीरः) ग्धीरा (ग्वीरा) धीरं वाग्धीरा (वीरान् वाग्वीरा).

(६) भा. १२।५८।१६ ; भामु. १२।५८।१६ धर्षणीयो रिपूणां स्याद् (प्रधर्षणीयः शत्रूणां).



[1]न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ।
अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च ॥

[2]एकाश्वेनापि संभूतः शत्रुर्दुर्गसमाश्रितः ।
तं तं तापयते देशमपि राज्ञः समृद्धिनः ॥

एकाङ्गेन हस्त्यश्वरथपादातानामन्यतमेनापि संभूतः संपन्नः । समृद्धिनः समृद्धिमतः । नीटी.

[3]राज्ञो रहस्यं यद्वाक्यं जयार्थं लोकसंग्रहः ।
हृदि यच्चास्य जिह्मं स्यात्कारणार्थं च यद्भवेत् ॥

[4]यच्चास्य कार्यं वृजिनमार्जवेनैव धार्यते ।
दम्भनार्थाय लोकस्य धर्मिष्ठामाचरेत्क्रियाम् ॥

स्वीयेन आर्जवेन राज्ञो यद्रहस्यं वाक्यं, यो वा जयार्थे लोकसंग्रहः, यच्चास्य कारणेन शत्रुजयादिहेतुना जिह्मं कपटं, यच्च वृजिनं हीनं कार्यं, तत्सर्वं समीकुर्यादित्याह द्वाभ्याम्– राज्ञ इति । दम्भनार्थे संघातार्थम् । नीटी.

[5]राज्यं हि सुमहत्तन्त्रं दुर्धार्यमकृतात्मभिः ।
न शक्यं मृदुना वोढुमाघातस्थानमुत्तमम् ॥

अकृतात्मभिः क्रूरैः । नीटी.

[6]राज्यं सर्वामिषं नित्यमार्जवेनेह धार्यते ।
तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर ॥

मिश्रेण क्रौर्यमार्दवाभ्याम् । नीटी.

यद्यप्यस्य विपत्तिः स्याद्रक्षमाणस्य वै प्रजाः ।
सोऽप्यस्य विपुलो धर्म एवंवृत्ता हि भूमिपाः ॥

(१) भा. १२।५८।१७ ; भामु.

(२) भा. १२।५८।१८ ; भामु. १२।५८।१८ एकाश्वे (एकाङ्गे) समाश्रितः (मुपाश्रितः) तं तं (सर्वं).

(३) भा. १२।५८।१९ ; भामु. १२।५८।१९ यद्वाक्यं (तद्वाक्यं) जयार्थं (यथार्थं) त्कारणार्थं (त्कारणेन).

(४) भा. १२।५८।२० ; भामु. १२।५८।२० नैव धार्यते (नेह निर्जयेत्) दम्भनार्थाय (दम्भनार्थं च).

(५) भा. १२।५८।२१ ; भामु. १२।५८।२१ दुर्धार्यमकृतात्मभिः (धार्यते नाकृतात्मभिः) माघात (मायास).

(६) भा. १२।५८।२२–२३ ; भामु.

[1]एष ते राजधर्माणां लेशः समनुवर्णितः ।
भूयस्ते यत्र संदेहस्तद्ब्रूहि वदतां वर ॥

राज्योत्पत्तेरितिहासः— प्रथमं राज्यहीना मराजका लोकसंस्था धर्मनिष्ठा, तदुत्तरं लोभमोहादिभिर्धर्मनाशः, लोकधारणार्थं ततः पितामहकृता दण्डनीतिरिति, पैतामहदण्डनीतिप्रतिपाद्या विषयाः

भीष्म उवाच—
[2]नियतस्त्वं नरश्रेष्ठ शृणु सर्वमशेषतः ।
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् ॥
[3]नैव राज्यं न राजाऽऽसीन्न दण्डो न च दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति च परस्परम् ॥

दण्डः दमनम् । दाण्डिकः दण्डप्रणेता । नीटी.

[4]पालयानास्तथाऽन्योन्यं नरा धर्मेण भारत ।
खेदं परममाजग्मुस्ततस्तान्मोह आविशत् ॥

धर्मेणैव, न तु मातृवत्स्नेहेन भृत्यवद्वेतनेन वा । खेदं श्रमम् । मोहः वैचित्यम् । नीटी.

[5]ते मोहवशमापन्ना मानवा मनुजर्षभ ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् ॥

प्रतिपत्तिविमोहात् ज्ञानलोपात् । नीटी.

[6]नष्टायां प्रतिपत्तौ तु मोहवश्या नरास्तदा ।
लोभस्य वशमापन्नाः सर्वे भारतसत्तम ॥

[1]अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः ।
कामो नामापरस्तत्र समपद्यत वै प्रभो ॥
[2]तांस्तु कामवशं प्राप्तान्रागो नाम समस्पृशत् ।
रक्ताश्च नाभ्यजानन्त कार्याकार्यं युधिष्ठिर ॥

प्रथमं ज्ञानलोपः, ततो मोहः, ततो लोभः, लोभाद्विषयाभिलाषः, अभिलषितसंयोगात् इन्द्रियप्रीत्याख्यः कामः, ततस्तद्विषये रागः, रागात्कर्तव्याकर्तव्यप्रतिपत्तिशून्यत्वम्, ततः पुनर्मोह इत्यादि चक्रमाह— नष्टायामिति त्रिभिः । नीटी.

[3]अगम्यागमनं चैव वाच्यावाच्यं तथैव च ।
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यजन् ॥

नात्यजन् दुष्टमदुष्टं च सर्वे स्वीचक्रुरित्यर्थः । नीटी.

[4]विप्लुते नरलोकेऽस्मिंस्ततो ब्रह्म ननाश ह ।
नाशाच्च ब्रह्मणो राजन्धर्मो नाशमथागमत् ॥

ब्रह्म वेदः । धर्मः यज्ञः । नीटी.

[5]नष्टे ब्रह्मणि धर्मे च देवास्त्रासमथागमन् ।
ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः ॥
[6]प्रपद्य भगवन्तं ते देवा लोकपितामहम् ।
ऊचुः प्राञ्जलयः सर्वे दुःखशोकभयार्दिताः ॥
[7]भगवन्नरलोकस्थं नष्टं ब्रह्म सनातनम् ।
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् ॥

---

(१) भा. १२।५८।२४ ; भामु. १२।५८।२४ वदतां वर ( कुरुसत्तम ).

(२) भा. १२।५९।१३ ; भामु. १२।५९।१३ नरश्रेष्ठ ( नरव्याघ्र ).

(३) भा. १२।५९।१४ ; भामु. १२।५९।१४ नैव ( न वै ) दण्डो न च ( च दण्डो न ) रक्षन्ति च (रक्षन्ति स्म).

(४) भा. १२।५९।१५ ; भामु. १२।५९।१५ पालयाना ( पाल्यमाना ) परममा ( परमुपा ).

(५) भा. १२।५९।१६ ; भामु. १२।५९।१६ मानवा ( मनुजा ).

(६) भा. १२।५९।१७ ; भामु. १२।५९।१७ तु ( च ) भारत ( भरत ).

(१) भा. १२।५९।१८ ; भामु. १२।५९।१८ समप ( प्रत्यप ).

(२) भा. १२।५९।१९ ; भामु. १२।५९।१९ नाम समस्पृशत् ( नामाभिसंस्पृशत् ) कार्यं ( कार्ये ).

(३) भा. १२।५९।२० ; भामु.

(४) भा. १२।५९।२१ ; भामु. १२।५९।२१ केऽस्मिंस्ततो ब्रह्म ( के वै ब्रह्म चैव ).

(५) भा. १२।५९।२२ ; भामु. १२।५९।२२ देवास्त्रासमथागमन् ( देवांस्त्रासः समाविशत् ).

(६) भा. १२।५९।२३ ; भामु. १२।५९।२३ प्रपद्य ( प्रसाद्य ) देवा ( देवं ) शोकभयार्दिताः ( वेगसमाहताः ).

(७) भा. १२।५९।२४ ; भामु. १२।५९।२४ नष्टं ( ग्रस्तं ).

[1]ब्राह्मणश्च प्रणाशेन धर्मोऽप्यनशदीश्वर ।
ततः स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर ॥

मर्त्यैः समतां याताः स्म स्वाहाद्यभावेन क्षीणाः स्म इत्यर्थः । नीटी.

[2]अधो हि वर्षमस्माकं मर्त्यास्तूर्ध्वप्रवर्षिणः ।
क्रियाव्युपरमात्तेषां ततोऽगच्छाम संशयम् ॥

नराः यजमानाः हविर्धाराभिरूर्ध्वप्रवर्षिणः । ततश्चान्नाभावान्नश्याम इत्यर्थः । नीटी.

[3]अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह ।
त्वत्प्रभावसमुत्थोऽसौ प्रभावो नो विनश्यति ॥

नः अस्माकं स्वभावः ऐश्वर्यसत्यसंकल्पत्वादिकम् । नीटी.

[4]तानुवाच सुरान्सर्वान् स्वयंभूर्भगवांस्ततः ।
श्रेयोऽहं चिन्तयिष्यामि व्येतु वो भीः सुरर्षभाः ॥

[5]ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।
यत्र धर्मस्तथैवार्थः कामश्चैवानुवर्णितः ॥

[6]त्रिवर्ग इति विख्यातो गण एष स्वयंभुवा ।
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गणः ॥

पृथगर्थः त्रिवर्गफलापेक्षया विपरीतफलः । पृथग्गुणः त्रिवर्गसाधनापेक्षया विपरीतसाधनः । नीटी.

[7]मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्त्वं रजस्तमः ।
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ॥

(१) भा. १२।५९।२५ ; भामु. १२।५९।२५ मोंऽप्य (मों व्य).

(२) भा. १२।५९।२६ ; भामु. १२।५९।२६ मर्त्या (नरा) ततोऽग (ततो ग).

(३) भा. १२।५९।२७ ; भामु. १२।५९।२७ प्रभावो (स्वभावो).

(४) भा. १२।५९।२८; भामु.

(५) भा. १२।५९।२९ ; भामु. १२।५९।२९ वातु (वाभि).

(६) भा. १२।५९।३० ; भामु. १२।५९।३० पृथग्गणः (पृथग्गुणः).

(७) भा. १२।५९।३१ ; भामु. १२।५९।३१ स्यापि (स्यास्ति).

मोक्षस्य त्रिवर्गः धर्मादिरन्यो निष्कामः । धर्मादेर्भेदश्च सत्त्वादिगुणप्राधान्यनिमित्त इत्यर्थः । दण्डात्स्थानं साम्यं वणिजां वृद्धिस्तपस्विनां क्षयश्चोराणां च भवतीत्याहार्धेन– स्थानमिति । नीटी.

[1]आत्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च ।
सहायाः कारणं चैव षड्वर्गो नीतिजः स्मृतः ॥

नीतिजान् षड्गुणानाह– आत्मेति । आत्मा चित्तम् । नीतिबलात् प्रजानां चित्तं दुःस्थितमपि सुस्थितं भवति । कुदेशोऽपि सुदेशो भवति । कलिरपि कृतं भवति । उपायाः साधनानि । कृत्यं कृतिनिर्वर्त्यं प्रयोजनम् । सहायाः सुहृदादयः । एते सर्वे विकला अपि सकला भवन्ति । तत्र कारणं नीतिजः षड्वर्गः नीतिप्रोत्तम्भितश्चित्तादिरित्यर्थः । नीटी.

[2]त्रयी चाऽऽन्वीक्षिकी चैव वार्ता च भरतर्षभ ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥

त्रयी कर्मकाण्डः । आन्वीक्षिकी ज्ञानकाण्डः । वार्ता कृषिवाणिज्यादि जीविकाकाण्डः । दण्डनीतिः पालनविद्या । एते धर्मादयस्तत्र ब्रह्मकृतशतसहस्राध्याये दर्शिताः । नीटी.

[3]अमात्यरक्षाप्रणिधी राजपुत्रस्य रक्षणम् ।
चारश्च विविधोपायः प्रणिधिश्च पृथग्विधः ॥

भेदशङ्कया अमात्यानामपि रक्षा कर्तव्या । तदर्थं प्रणिधिः गुप्तश्चारः । स च चारो विविधोपायः ब्रह्मचार्यादिवेषधारी प्रणिधेयः । पृथग्विधः एकैकस्मिन् स्थाने पृथक्पृथग्वेषास्त्रयस्त्रय इति । नीटी.

[4]साम चोपप्रदानं च भेदो दण्डश्च पाण्डव ।
उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ॥

सामादिचतुष्टयं उपेक्षा च पञ्चमीत्युपायाः । नीटी.

(१) भा. १२।५९।३२ ; भामु.

(२) भा. १२।५९।३३ ; भामु.

(३) भा. १२।५९।३४ ; भामु. १२।५९।३४ रक्षणम् (लक्षणम्) प्रणिधिश्च (प्रणिधेयः).

(४) भा. १२।५९।३५ ; भामु. १२।५९।३५ पूर्वार्धे (साम भेदः प्रदानं च ततो दण्डश्च पार्थिव ।).

[1]मन्त्रश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च ।
विभ्रंशश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत्फलम् ॥

विभ्रमः भेदार्थे । नीटी.

[2]संधिश्च विविधाभिख्यो हीनो मध्यस्तथोत्तमः ।
भयसत्कारवित्ताख्यः कार्त्स्न्येन परिवर्णितः ॥

भयेन संधिः हीनः । सत्कारेण मध्यमः । वित्तग्रहणेन उत्तमः । तत्त्रयं संधिकारणं वर्णितम् । नीटी.

[3]यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः ।
विजयो धर्मयुक्तश्च तथाऽर्थविजयश्च ह ॥

चत्वारः मित्रवृद्धिः कोशसंचयश्च स्वस्य, मित्रनाशः कोशहानिश्च परस्येति । नीटी.

[4]आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः ।
लक्षणं पञ्चवर्गस्य त्रिविधं चात्र वर्णितम् ॥

आसुरो विजयः सौप्तिके गतः । पञ्चवर्गः ' अमात्यराष्ट्रदुर्गाणि बलं कोशश्च पञ्चमः ' । त्रिविधं उत्तममध्यमाधमभेदेन । नीटी.

[5]प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः ।
प्रकाशोऽष्टविधस्तत्र गुह्यस्तु बहुविस्तरः ॥

(१) दण्ड्यन्ते अशिष्टाः अनेन इति व्युत्पत्त्या दण्डशब्दो बलवचनः । राप्र. २७६

(२) दण्डः सेना । ' दण्डोऽस्त्री लगुडे पुमान् ' इत्युपक्रम्य ' सैन्ये काले मानभेदे ' इति मेदिनी । नीटी.

[1]रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ।
विष्टिर्नावश्चराश्चैव देशिकाः पथि चाष्टकम् ॥

(१) विष्टिः बलात्कारेण आकृष्टः कर्मकरः । देशिकाः देशे भवाः पुरुषाः । * राक. ९५

(२) विष्टिः विष्टिगृहीता भारवाहाः । चराः चाराः । देशिकाः उपदेष्टारो गुरवः । नीटी.

[2]अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु ।
जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः ॥

जङ्गमाः महावृश्चिकादिजाः, अजङ्गमाः रक्तशृङ्गिकादयः । नीटी.

[3]स्पर्शे चाभ्यवहार्ये चाप्युपांशुर्विविधः स्मृतः ।
अरिर्मित्रमुदासीन इत्येतेऽप्यनुवर्णिताः ॥

स्पर्शे वस्त्रादौ, अभ्यवहार्ये अन्नादौ, उपांशुः अभिचारादिरिति विविधो विषयोगरूपो दण्डः । नीटी.

[4]कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह ।
आत्मरक्षणमाश्वासः स्पशानां चान्ववेक्षणम् ॥

मार्गगुणाः ग्रहनक्षत्रादिमार्गगुणाः । भूमिगुणाः चतुरशीतिभूबलानि यामलोक्तानि । आत्मरक्षणं मन्त्रयन्त्रादिना । सर्गाणां रथादिनिर्माणानाम् । नीटी.

[5]कल्पना विविधाश्चापि नृनागरथवाजिनाम् ।
व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ॥

कल्पनाः बलपुष्टिकराः योगाः । विविधाभिख्याः चक्रव्यूहक्रौञ्चव्यूहादिनानानामानः । नीटी.

---

(१) भा. १२।५९।३६ ; भामु. १२।५९।३६ विभ्रंश (विभ्रम).

(२) भा. १२।५९।३७ ; भामु. १२।५९।३७ विविधा (त्रिविधा) ख्यः (ख्यं) वर्णितः (वर्णितम्).

(३) भा. १२।५९।३८ ; भामु.

(४) भा. १२।५९।३९ ; भामु.

(५) भा. १२।५९।४० ; भामु. १२।५९।४० गुह्यस्तु (गुह्यश्च) ; राक. ९५ दण्डोऽथ परिशब्दितः (दण्डोऽत्र परिकल्पितः) गुह्यस्तु बहुविस्तरः (गुह्यश्च बलवत्तरः) ; राप्र. २७६ राकवत्.

* राप्र. राकानुवादः ।

(१) भा. १२।५९।४१ ; भामु. १२।५९।४१ पथि चाष्टकम् (इति चाष्टमम्) ; राक. ९५ पाण्डव (भारत) उत्तरार्धे (विष्टिर्नाविचाराश्चैव देशिका इति चाष्टमः ।) ; राप्र. २७६ पाण्डव (भारत) उत्तरार्धे (विष्टिर्नाविचराश्चैव देशिका इति चाष्टमः ।).

(२) भा. १२।५९।४२ ; भामु.

(३) भा. १२।५९।४३ ; भामु. १२।५९।४३ श्चमु (श्च उ).

(४) भा. १२।५९।४४ ; भामु. १२।५९।४४ स्पशानां (सर्गाणां).

(५) भा. १२।५९।४५ ; भामु.

[1]उत्पाताश्च निपाताश्च सुयुद्धं सुपलायनम् ।
शस्त्राणां पायनज्ञानं तथैव भरतर्षभ ॥

उत्पाताः ग्रहयुद्धादयः धूमकेत्वादयश्च । निपाताः उल्कापातभूमिकम्पादयः । शस्त्राणां पालनं तीक्ष्णीकरणम् । नीटी.

[2]बलव्यसनमुक्तं च तथैव बलहर्षणम् ।
पीडनास्कन्दकालश्च भयकालश्च पाण्डव ॥

आपदां समूहः आपदं, तस्य कालः आपदकालः । नीटी.

[3]तथा खातविधानं च योगसंचार एव च ।
चौराटव्यबलैश्चोग्रैः परराष्ट्रस्य पीडनम् ॥

आख्यातं अभिमन्त्रितदुन्दुभिध्वनिना प्रयाणादिकथनम् । योगः पताकादिमन्त्रणादि । तयोः संचारः श्रवणदर्शनाभ्यां परमोहनम् । एतत्सर्वं तत्र उक्तमिति सर्वत्र योज्यम् । नीटी.

[4]अग्निदैर्गरदैश्चैव प्रतिरूपकचारकैः ।
श्रेणिमुख्योपजापेन वीरुधश्छेदनेन च ॥

गरदैः विषदैः । प्रतिरूपकं प्रतिमा, तत्कारकैः तद्द्वारा कार्मणकारिभिः कौलिकैः । श्रेणिमुख्याः बलाध्यक्षादयः, तेषामुपजापः भेदनं तेन । वीरुधश्छेदनेन धान्याद्युच्छेदेन । नीटी.

[5]दूषणेन च नागानामाशङ्काजननेन च ।
आरोधनेन भक्तस्य पथश्चोपार्जनेन च ॥

नागानां दूषणं मन्त्रतन्त्रौषधादिना, तेन । प्रत्ययोपार्जनेन विश्वासोत्पादनेन च । परराष्ट्रस्य पीडनमुक्तमिति प्रपूर्वेण संबन्धः । नीटी.

[1]सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धिसमञ्जसम् ।
दूतसामर्थ्ययोगश्च राष्ट्रस्य च विवर्धनम् ॥

समञ्जसं समत्वम् । नीटी.

अरिमध्यस्थमित्राणां सम्यक् चोक्तं प्रपञ्चनम् ।
अवमर्दः प्रतीघातस्तथैव च बलीयसाम् ॥

[2]व्यवहारः सुसूक्ष्मश्च तथा कण्टकशोधनम् ।
शमो व्यायामयोगश्च योगो द्रव्यस्य संचयः ॥

कण्टकशोधनं खलानामुन्मूलनम् । श्रमः मल्लक्रीडा । व्यायामयोगः आयुधप्रयोगाभ्यासः । त्यागः दानम् । नीटी.

[4]अभृतानां च भरणं भृतानां चान्ववेक्षणम् ।
अर्थकाले प्रदानं च व्यसनेष्वप्रसङ्गिता ॥

अप्रसङ्गिता असंबन्धः । नीटी.

[5]तथा राजगुणाश्चैव सेनापतिगुणाश्च ये ।
कारणस्य च कर्तुश्च गुणदोषास्तथैव च ॥

राजगुणाः उत्थानादयः । सेनापतिगुणाः मौलतादयः । नीटी.

[6]दुष्टेङ्गितं च विविधं वृत्तिश्चैवानुजीविनाम् ।
शङ्कितत्वं च सर्वस्य प्रमादस्य च वर्जनम् ॥

---

(१) भा. १२।५९।४६ ; भामु. १२।५९।४६ यनम् (यितम्) पायन (पालनं).

(२) भा. १२।५९।४७ ; भामु. १२।५९।४७ मुक्तं (युक्तं) उत्तरार्धे (पीडा चापदकालश्च पत्तिज्ञानं च पाण्डव ।).

(३) भा. १२।५९।४८ ; भामु. १२।५९।४८ तथा खात (तथाऽऽख्यात) योग (योगः) चौराटव्यबलै (चोरैराटविकै).

(४) भा. १२।५९।४९ ; भामु. १२।५९।४९ चारकैः (कारकैः).

(५) भा. १२।५९।५० ; भामु. १२।५९।५० माशङ्का (मातङ्क) आरोध (आराध) पथश्चो (प्रत्ययो).

(१) भा. १२।५९।५१ ; भामु. १२।५९।५१ योगश्च राष्ट्रस्य च (संयोगात्सराष्ट्रस्य).

(२) भा. १२।५९।५२ ; भामु.

(३) भा. १२।५९।५३ ; भामु. १२।५९।५३ शमो (श्रमो) योगो (त्यागो) संचयः (संग्रहः).

(४) भा. १२।५९।५४ ; भामु. १२।५९।५४ अर्थकाले प्र (अर्थस्य काले) नेष्वप्र (ने चाप्र).

(५) भा. १२।५९।५५ ; भामु. १२।५९।५५ ये (ह) कारणस्य च कर्तुश्च (कारणं च त्रिवर्गस्य).

(६) भा. १२।५९।५६ ; भामु. १२।५९।५६ दुष्टेङ्गितं (दुश्चेष्टितं) जीविनाम् (वर्तिनाम्).

[1]अलब्धलिप्सा लब्धस्य तथैव च विवर्धनम् ।
प्रदानं च विवृद्धस्य पात्रेभ्यो विधिवत्तथा ॥

[2]विसर्गोऽर्थस्य धर्मार्थमर्थार्थं कामहेतुना ।
चतुर्थो व्यसनाघाते तथैवात्रानुवर्णितः ॥

पात्रेभ्यः प्रदानं प्रथमम् । विसर्गः दानम् । धर्मार्थे यज्ञार्थे द्वितीयम् । काम्यं तृतीयम् । व्यसनाघाते चतुर्थम् । नीटी.

[3]क्रोधजानि तथोग्राणि कामजानि तथैव च ।
दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह ॥

मृगयाऽक्षास्तथा पानं स्त्रियश्च भरतर्षभ ।
कामजान्याहुराचार्याः प्रोक्तानीह स्वयंभुवा ॥

[4]वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च ।
आत्मनो निग्रहस्त्यागोऽथार्थदूषणमेव च ॥

परिशेषात् वाक्पारुष्यादीनि षट् क्रोधजानि । आत्मनः देहस्य । नीटी.

[5]यन्त्राणि विविधान्येव क्रियास्तेषां च वर्णिताः ।
अवमर्दः प्रतीघातः केतनानां च भञ्जनम् ॥

अवमर्दः परचक्रेण देशादेः पीडनम् । नीटी.

[6]चैत्यद्रुमाणामामर्दो रोधःकर्मान्तनाशनम् ।
अपस्करोऽथ गमनं तथोपास्या च वर्णिता ॥

---

(१) भा. १२।५९।५७ ; भामु. १२।५९।५७ लिप्सा (लाभो) त्तथा (त्ततः).

(२) भा. १२।५९।५८ ; भामु. १२।५९।५८ अर्थार्थं कामहेतुना (कामहैतुकमुच्यते) चतुर्थो (चतुर्थं) वर्णितः (वर्णितम्).

(३) भा. १२।५९।५९-६० ; भामु.

(४) भा. १२।५९।६१; भामु. १२।५९।६१ गोऽथाथ (गो ह्यर्थ).

(५) भा. १२।५९।६२ ; भामु.

(६) भा. १२।५९।६३ ; भामु. १२।५९।६३ (चैत्यद्रुमावमर्दश्च रोधः कर्मानुशासनम् । अपस्करोऽथ वसनं तथोपायाश्च वर्णिताः ॥ ).

कर्मान्तः कृष्यादिफलम्, तत्रानुशासनं रोधः (?) । अपस्करः उपकरणानि । वसनं कवचादिकम् । उपायाः तन्निर्माणे युक्तयः । नीटी.

[1]पणवानकशङ्खानां भेरीणां च युधां वर ।
उपार्जनं च द्रव्याणां परमर्म च तानि षट् ॥

तानि द्रव्याणि षट् 'मणयः पशवः पृथ्वी वासो दास्यादि काञ्चनम्' इति । नीटी.

[2]लब्धस्य च प्रशमनं सतां चैव हि पूजनम् ।
विद्वद्भिरेकीभावश्च प्रातर्होमविधिज्ञता ॥

[3]मङ्गलालम्भनं चैव शरीरस्य प्रतिक्रिया ।
आहारयोजनं चैव नित्यमास्तिक्यमेव च ॥

मङ्गलं स्वर्णादिकं, तस्य आलम्भनं स्पर्शः । प्रतिक्रिया अलंकरणम् । नीटी.

एकेन च यथोत्थेयं सत्यत्वं मधुरा गिरः ।
उत्सवानां समाजानां क्रियाः केतनजास्तथा ॥

एकस्याप्युत्थानप्रकारः । केतनजाः गृहजाः क्रियाः ध्वजारोहणाद्याः । नीटी.

[4]प्रत्यक्षा च परोक्षा च सर्वाधिकरणेषु च ।
वृत्तिर्भरतशार्दूल नित्यं चैवान्ववेक्षणम् ॥

अधिकरणेषु जनोपवेशनस्थानेषु चत्वरादिषु । नीटी.

[5]अदण्ड्यत्वं च विप्राणां युक्त्या दण्डनिपातनम् ।
अनुजीविस्वजातिभ्यो गुणेषु परिरक्षणम् ॥

---

(१) भा. १२।५९।६४ ; भामु. १२।५९।६४ युधां वर (युधिष्ठिर) परमर्म (परिमर्दः).

(२) भा. १२।५९।६५ ; भामु. १२।५९।६५ चैव हि (चैवाभि) प्रातर्होम (दानहोम).

(३) भा. १२।५९।६६-६७ ; भामु.

(४) भा. १२।५९।६८ ; भामु. १२।५९।६८ क्षा चै (क्षाश्च) षु च (ष्वथ) वृत्तिर्भ (वृत्तेर्भ).

(५) भा. १२।५९।६९ ; भामु. १२।५९।६९ जीविस्व (जीवी स्व) गुणेषु परिरक्षणम् (गुणेभ्यश्च समुद्भवः).

जातितो गुणतश्च समुद्भवः मान्यत्वम् । नीटी.

[1]रक्षणं चैव पौराणां स्वराष्ट्रस्य विवर्धनम् ।
मण्डलस्था च या चिन्ता राजन् द्वादशराजिका ॥

द्वादशानां राज्ञां समूहो द्वादशराजिका मध्यस्थस्य विजिगीषोश्चतुर्दिक्षु चत्वारोऽरयस्तेभ्योऽपरे चत्वारो मित्राणि तेभ्यः परे चत्वार उदासीना इति । नीटी.

[2]द्वासप्ततिमतिश्चैव प्रोक्ता या च स्वयंभुवा ।
देशजातिकुलानां च धर्माः समनुवर्णिताः ॥

द्वासप्ततिविधा वैद्यशास्त्रप्रसिद्धा प्रतिक्रिया संस्कारः शौचाभ्यङ्गादिः । नीटी.

[3]धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णितः ।
उपायश्चार्थलिप्सा च विविधा भूरिदक्षिणाः ॥

हे भूरिदक्षिण । नीटी.

[4]मूलकर्मक्रिया चात्र माया योगश्च वर्णितः ।
दूषणं स्रोतसामत्र वर्णितं च स्थिराम्भसाम् ॥

मूलकर्माणि कोशवृद्धिकराणि कृष्यादीनि, तेषां क्रिया करणप्रकारः । नीटी.

[5]यैर्यैरुपायैर्लोकश्च न चलेदार्यवर्त्मनः ।
तत्सर्वं राजशार्दूल नीतिशास्त्रेऽनुवर्णितम् ॥

[6]एतत्कृत्वा शुभं शास्त्रं ततः स भगवान्प्रभुः ।
देवानुवाच संहृष्टः सर्वाञ्शक्रपुरोगमान् ॥

[1]उपकाराय लोकस्य त्रिवर्गस्थापनाय च ।
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता ॥

दण्डेन सहिता ह्येषा लोकरक्षणकारिका ।
निग्रहानुग्रहरता लोकाननु चरिष्यति ॥

[2]दण्डेन नीयते चेयं दण्डं नयति चाप्युत ।
दण्डनीतिरिति प्रोक्ता त्रीँल्लोकाननुवर्तते ॥

नीयते पुरुषार्थफलाय इदं जगत्, दण्डं नयति प्रणयति अनया चेति वा । नीटी.

[3]षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु ।
महत्त्वात्तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा ॥

दण्डसामर्थ्यादेव लोके नीत्यादिकं दृश्यत इत्यर्थः । नीटी.

[4]नयचारश्च विपुलो येन सर्वमिदं ततम् ।
आगमश्च पुराणानां महर्षीणां च संभवः ॥

आगमादिकं चात्र ग्रन्थे कीर्तितम् । नीटी.

तीर्थवंशश्च वंशश्च नक्षत्राणां युधिष्ठिर ।
सकलं चातुराश्रम्यं चातुर्होत्रं तथैव च ॥

[5]चातुर्वर्ण्यं तथैवात्र चातुर्वेद्यं च वर्णितम् ।
इतिहासोपवेदाश्च न्यायः कृत्स्नश्च वर्णितः ॥

---

(१) भा. १२।५९।७०; भामु. १२।५९।७० स्वराष्ट्रस्य (राष्ट्रस्य च).

(२) भा. १२।५९।७१; भामु. १२।५९।७१ पूर्वार्धे (द्वासप्ततिविधा चैव शरीरस्य प्रतिक्रिया ।).

(३) भा. १२।५९।७२; भामु. १२।५९।७२ वर्णितः (वर्णिताः) उपायश्चा (उपायाश्चा) दक्षिणाः (दक्षिण).

(४) भा. १२।५९।७३; भामु. १२।५९।७३ सामत्र (सां चैव) च स्थिरा (चास्थिरा).

(५) भा. १२।५९।७४; भामु. १२।५९।७४ कश्च (कस्तु) स्त्रेऽनु (स्त्रेऽभि).

(६) भा. १२।५९।७५; भामु.

(१) भा. १२।५९।७६-७७; भामु.

(२) भा. १२।५९।७८; भामु. १२।५९।७८ चेयं (चेदं) चाप्युत (वा पुनः) प्रोक्ता (ख्याता) काननु (कानभि).

(३) भा. १२।५९।७९; भामु. १२।५९।७९ पू.: १२।५९।१३८ उत्त.

(४) भा. १२।५९।८०-८१; भामु. १२।५९। १३८-१४०.

(५) भा. १२।५९।८२; भामु. १२।५९।१४०-१४१ चातुर्वेद्यं च वर्णितम् (चातुर्विद्यं च कीर्तितम्) हासोप (हासाश्च).

[1]तपो ज्ञानमहिंसा च सत्यासत्ये नयः परः।
वृद्धोपसेवा दानं च शौचमुत्थानमेव च ॥

[2]सर्वभूतानुकम्पा च सर्वमत्रोपवर्णितम्।
भुवि वाचोगतं यच्च तच्च सर्वं समर्पितम् ॥

[3]तस्मिन्पैतामहे शास्त्रे पाण्डवैतदसंशयम्।
धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः ॥

युगह्रासानुसारेण क्रमेण विशालाक्षपुरंदरबृहस्पति-
शुक्रैः कृताः पैतामहदण्डनीतेः संक्षेपाः

[4]ततस्तां भगवान्नीतिं पूर्वं जग्राह शंकरः।
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥

[5]युगानामायुषो ह्रासं विज्ञाय भगवाञ्शिवः।
संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥

संचिक्षेप संक्षिप्तं कृतवान्। नीटी.

[6]वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥

वैशालाक्षं बाहुदन्तकं बार्हस्पत्यमित्युत्तरोत्तरसंक्षिप्त-
दण्डनीतिग्रन्थनामानि। नीटी.

भगवानपि तच्छास्त्रं संचिक्षेप पुरंदरः।
सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ॥

अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः।
संचिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं तदुच्यते ॥

(१) भा. १२।५९।८३; भामु. १२।५९।१४१–१४२.

(२) भा. १२।५९।८४; भामु. १२।५९।१४२–१४३ वाचोगतं (चाधोगतं).

(३) भा. १२।५९।८५; भामु. १२।५९।७९ उत्त.: १२।५९।१४३ वैतदसंशयम् (वैतन्न संशयः) पू.

(४) भा. १२।५९।८६; भामु. १२।५९।८०.

(५) भा. १२।५९।८७; भामु. १२।५९।८१ युगाना (प्रजाना) महार्थं (महास्त्रं).

(६) भा. १२।५९।८८–९०; भामु. १२।५९।८२–८४.

[1]अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत्।
तच्छास्त्रममितप्रज्ञो योगाचार्यो महातपाः ॥

[2]एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः।
संक्षिप्तमायुर्विज्ञाय मर्त्यानां ह्रासि पाण्डव ॥

नव सार्ववर्णिकाः साधारणा धर्माः, चतुर्णां वर्णानां
पृथक् धर्मा वृत्तयश्च, स्वाध्यायः ब्राह्मणस्य
प्रजापरिपालनं क्षत्रियस्य पशुसंवर्धनं
वैश्यस्य द्विजसेवा शूद्रस्य
मुख्यो धर्मः

वैशम्पायन उवाच–

[3]ततः पुनः स गाङ्गेयमभिवाद्य पितामहम्।
प्राञ्जलिर्नियतो भूत्वा पर्यपृच्छद्युधिष्ठिरः ॥

[4]के धर्माः सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक्।
चतुर्णामाश्रमाणां च राजधर्माश्च के मताः ॥

सर्ववर्णानां अनुलोमविलोमजादीनाम्। चातुर्वर्ण्यस्य ये आश्रमाः ब्राह्मणस्य चत्वार आश्रमाः, क्षत्रियस्य त्रयः, वैश्यस्य द्वौ, शूद्रस्यैक इति, तेषाम्। नीटी.

[5]केन स्विद्वर्धते राष्ट्रं राजा केन विवर्धते।
केन पौराश्च भृत्याश्च वर्धन्ते भरतर्षभ ॥

[6]कोशं दण्डं च दुर्गं च सहायान्मन्त्रिणस्तथा।
ऋत्विक्पुरोहिताचार्यान् कीदृशान् वर्जयेन्नृपः ॥

(१) भा. १२।५९।९१; भामु. १२।५९।८५ महातपाः (महायशाः).

(२) भा. १२।५९।९२; भामु. १२।५९।८६ ह्रासि पाण्डव (ह्रासमेव च).

(३) भा. १२।६०।१; भामु.

(४) भा. १२।६०।२; भामु. १२।६०।२ चतुर्णामाश्र (चातुर्वर्ण्याश्र).

(५) भा. १२।६०।३; भामु. १२।६०।३ स्विद (वै व).

(६) भा. १२।६०।४; भामु.

[1]केषु विश्वसितव्यं स्याद्राज्ञां कस्यांचिदापदि ।
कुतो वाऽऽत्मा दृढो रक्ष्यस्तन्मे ब्रूहि पितामह ॥
भीष्म उवाच-
[2]नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्वा धर्मान्वक्ष्यामि शाश्वतान् ॥
[3]अक्रोधः सत्यवचनं संविभागः क्षमा तथा ।
प्रजनः स्वेषु दारेषु शौचमद्रोह एव च ॥
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः ।
ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ॥

सर्ववर्णधर्मानाह– अक्रोध इति सार्धेन । नीटी.

[4]दममेव महाराज धर्ममाहुः पुरातनम् ।
स्वाध्यायोऽध्यापनं चैव तत्र कर्म समाप्यते ॥

तत्र अध्ययने तावतैव नैष्ठिकः कृतार्थो भवतीत्यर्थः । नीटी.

[5]तं चेद्वित्तमुपागच्छेद्वर्तमानं स्वकर्मणि ।
अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् ॥
[6]कुर्वीतापत्यसंतानमथो दद्याद्यजेत च ।
संविभज्य हि भोक्तव्यं धनं सद्भिरितीष्यते ॥

स्वयमुपागते वित्ते दारक्रियापूर्वकं अपत्यसंतानमिच्छेत्स इत्याह द्वाभ्याम्– तं चेदिति । नीटी.

[7]परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥

[1]क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि भारत ।
दद्याद्राजा न याचेत यजेत न तु याजयेत् ॥
[2]नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवधे रणे कुर्यात्पराक्रमम् ॥
[3]ये च क्रतुभिरीजानाः श्रुतवन्तश्च भूमिपाः ।
य एवाऽऽहवजेतारस्त एषां लोकजित्तमाः ॥
[4]अविक्षतेन देहेन समराद्यो निवर्तते ।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥
[5]वधं हि क्षत्रबन्धूनां धर्ममाहुः प्रधानतः ।
नास्य कृत्यतमं किंचिदन्यद्दस्युनिबर्हणात् ॥
[6]दानमध्ययनं यज्ञो योगः क्षेमो विधीयते ।
तस्माद्राज्ञा विशेषेण योद्धव्यं धर्ममीप्सता ॥
[7]स्वेषु धर्मेष्ववस्थाप्य प्रजाः सर्वा महीपतिः ।
धर्मेण सर्वकृत्यानि समनिष्ठानि कारयेत् ॥
[8]परिनिष्ठितकार्यः स्यान्नृपतिः परिपालनात् ।
कुर्यादन्यन्न वा कुर्यादैन्द्रो राजन्य उच्यते ॥
[9]वैश्यस्यापीह यो धर्मस्तं ते वक्ष्यामि भारत ।
दानमध्ययनं यज्ञः शौचेन धनसंचयः ॥
[10]पितृवत्पालयेद्वैश्यो युक्तः सर्वपशूनिह ।
विकर्म तद्भवेदन्यत्कर्म यद्यत्समाचरेत् ।
रक्षया स हि तेषां वै महत्सुखमवाप्नुयात् ॥

---

(१) भा. १२।६०।५ ; भामु. १२।६०।५ द्राज्ञां (द्राज्ञा) दृढो (दृढं).
(२) भा. १२।६०।६ ; भामु. १२।६०।६ नमस्कृत्वा (नमस्कृत्य).
(३) भा. १२।६०।७–८ ; भामु.
(४) भा. १२।६०।९ ; भामु. १२।६०।९ योऽध्यापनं (वाभ्यसनं).
(५) भा. १२।६०।१० ; भामु. १२।६०।१० चेद्वित्त (चेद्द्विज).
(६) भा. १२।६०।११; भामु. १२।६०।११ हि (च) तीष्यते (तीर्यते).
(७) भा. १२।६०।१२; भामु. १२।६०।१२ दन्यन्न (दन्यत्र).

(१) भा. १२।६०।१३ ; भामु. १२।६०।१३ द्राजा (द्राजन्) न तु (न च).
(२) भा. १२।६०।१४ ; भामु.
(३) भा. १२।६०।१५ ; भामु. १२।६०।१५ ये च (ये तु).
(४) भा. १२।६०।१६ ; भामु.
(५) भा. १२।६०।१७ ; भामु. १२।६०।१७ वधं (एवं) धर्मं (मार्गं).
(६) भा. १२।६०।१८; भामु. १२।६०।१८ योगः (राज्ञां).
(७) भा. १२।६०।१९; भामु. १२।६०।१९ सम (शम).
(८) भा. १२।६०।२० ; भामु. १२।६०।२० स्यात् (तु).
(९) भा. १२।६०।२१; भामु. १२।६०।२१ स्यापीह (स्यापि हि) भारत (शाश्वत).
(१०) भा. १२।६०।२२ ; भामु. १२।६०।२२–२३ सर्वप (सर्वान् प) यद्यत् (यत्स).

[1]प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् ।
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥

[2]तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् ॥

षण्णां धेनूनां रक्षको वैश्यः एकस्याः क्षीरं स्ववेतनं हरेत्, शतस्य रक्षको वर्षे एकं गोवृषभमिथुनं वेतनं हरेत् । नीटी.

[3]लये च सप्तमो भागस्तथा शृङ्गे कला खुरे ।
सस्यस्य सर्वबीजानामेषा सांवत्सरी भृतिः ॥

वाणिज्ये तु लब्धात्सप्तमं भागं धनिकाद्धरेत् । गवयादिशृङ्गवाणिज्ये लाभात्सप्तममेव । खुरे पशुविशेषखुरे महामूल्ये कला षोडशो भागः । एवं सस्यानामपि सप्तममेवांशं हरेत् । नीटी.

[4]न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथंचन ॥

[5]शूद्रस्यापि हि यो धर्मस्तं ते वक्ष्यामि भारत ।
प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत् ॥
तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते ।
तेषां शुश्रूषणाच्चैव महत्सुखमवाप्नुयात् ॥

[6]शूद्र एतान्परिचरेत्त्रीन्वर्णाननसूयकः ।
संचयांश्च न कुर्वीत जातु शूद्रः कथंचन ॥

[7]पापीयान्हि धनं लब्ध्वा वशे कुर्याद्गरीयसः ।
राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः ॥

कुर्वीत संचयानित्यपकृष्यते । धार्मिकः कर्मप्रधानः, न तु भोगलोभप्रधानः । नीटी.

(१) भा. १२।६०।२३ ; भामु. १२।६०।२३-२४ ददे (ददौ).
(२) भा. १२।६०।२४ ; भामु. १२।६०।२४-२५.
(३) भा. १२।६०।२५ ; भामु. १२।६०।२५-२६ लये च सप्तमो भागः (लब्धाच्च सप्तमं भागं) सस्यस्य (सस्यानां).
(४) भा. १२।६०।२६ ; भामु. १२।६०।२६-२७.
(५) भा. १२।६०।२७-२८ ; भामु. १२।६०।२७-२९.
(६) भा. १२।६०।२९ ; भामु. १२।६०।२९-३० ननसूयकः (ननुपूर्वशः).
(७) भा. १२।६०।३० ; भामु. १२।६०।३०-३१,

[1]तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
अवश्यभरणीयो हि वर्णानां शूद्र उच्यते ॥

[2]छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे ॥

औशीरं वेष्टनं वीरणमूलकृता छदिः । यातयामानि भुक्तभोगानि जीर्णानीति यावत् । नीटी.

[3]अधार्याणि विशीर्णानि वसनानि द्विजातिभिः ।
शूद्रायैव विधेयानि तस्य धर्मधनं हि तत् ॥

[4]यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्प्यां तस्य तु तेनाऽऽहुर्वृत्तिं धर्मविदो जनाः ।
देयः पिण्डोऽनपेताय भर्तव्यौ वृद्धदुर्बलौ ॥

द्विजातीनां मध्ये यं कंचित्प्रति । तेन द्विजातिना । नीटी.

[5]शूद्रेण च न हातव्यो भर्ता कस्यांचिदापदि ।
अतिरेकेण भर्तव्यो भर्ता द्रव्यपरिक्षये ।
न हि स्वमस्ति शूद्रस्य भर्तृहार्यधनो ह्यसौ ॥

अतिरेकेण स्वकुटुम्बपोषणादाधिक्येन । भर्ता पोष्टा । अन्यत्र भृत्यार्जितमपि धनं शूद्रस्य स्वामिनैव हार्यम् । यथोक्तम्– 'त्रय एवाधना राजन्भार्या दासस्तथा सुतः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥' (मस्मृ. ८।४१६) इति । तस्माद्युक्तमुक्तम् 'भर्तृहार्यधनो हि सः' इति । नीटी.

(१) भा. १२।६०।३१ ; भामु. १२।६०।३१-३२ अवश्य (अवश्यं).
(२) भा. १२।६०।३२ ; भामु. १२।६०।३२-३३.
(३) भा. १२।६०।३३ ; भामु. १२।६०।३३-३४ विधेयानि (प्रदेयानि).
(४) भा. १२।६०।३४ ; भामु. १२।६०।३४-३५ यश्च कश्चि (यं च कंचि) तस्य तु तेनाऽऽहु (तेन तु ते प्राहु) पेताय (पत्याय).
(५) भा. १२।६०।३५ ; भामु. १२।६०।३६-३७ च न (तु न) ह्यसौ (हि सः).

यज्ञस्य श्रद्धामूलत्वाद् ब्राह्मणानुमत्या शूद्रसहितानां सर्वेषां वर्णानां श्रौते स्मार्ते च यज्ञेऽधिकारः

[1]उक्तस्त्रयाणां वर्णानां यज्ञस्त्र्यैव भारत ।
स्वाहाकारनमस्कारौ मन्त्रः शूद्रे विधीयते ॥

तस्य शूद्रस्य चामन्त्रको यज्ञोऽस्तीत्यर्थः । नीटी.

[2]ताभ्यां शूद्रः पाकयज्ञैर्यजेत व्रतवान्स्वयम् ।
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ॥

पाकयज्ञैः क्षुद्रयज्ञैः ग्रहशान्तिवैश्वदेवादिभिः यजेत अव्रतवान् श्रौतव्रतोपायहीनः । 'अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम् । पुष्कलानि तु चत्वारि पूर्णपात्रं प्रचक्षते ॥' इत्युक्तलक्षणपूर्णपात्रमयी । यज्ञे गवामिव पूर्णपात्राणामेव गणना यज्ञानुसारेण । मन्त्रास्तेषां पौराणिका नाममन्त्रा वा प्रणववर्जिता इति सर्वं शूद्रपद्धत्युक्तं द्रष्टव्यम् । नीटी.

[3]शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ।
ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ॥

सहस्राणां शतं लक्षं पूर्णपात्राणि । ऐन्द्राग्नस्य विधिर्यथा श्रौते चरोः पशोर्वा विधिस्तथैवामन्त्रकमस्य विधानं, तेन । नीटी.

[4]अतो हि सर्ववर्णानां श्रद्धायज्ञो विधीयते ।
दैवतं हि महच्छ्रद्धा पवित्रं यजतां च यत् ॥

ननु 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतेः कथमस्यामन्त्रोऽपि यज्ञ इत्याशङ्क्याऽऽह– यत इति । सर्ववर्णानां त्रैवर्णिकानां यो यज्ञः स तस्यैव शूद्रस्यैव भवति, तस्य तत्सेवकत्वात् । यथा हि श्रद्धया गुर्वग्नीन् परिचरतः उपकोसलस्याग्नयो ब्रह्मविद्यां दत्तवन्तः, एवं श्रद्धया ब्राह्मणादीनाराधयतः शूद्रस्यापि ब्राह्मणकृतयज्ञफलभागित्वमस्त्येवेत्यर्थः । सार्धः श्लोकः । नीटी.

[1]दैवतं परमं विप्राः स्वेन स्वेन परस्परम् ।
अयजन्निह सत्रैस्ते तैस्तैः कामैः सनातनैः ॥

[2]संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ।
देवानामपि ये देवा यद्ब्रूयुस्ते परं हि तत् ।
तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया ॥

सृष्टयः संतानानि । तेन सर्वेषां वर्णानां ब्राह्मणजत्वादस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः । यद्ब्रूयुस्ते तत् ते तव परं हितम् । वर्णैः सशूद्रैः सर्वयज्ञाः श्रौताः स्मार्ताश्च न काम्यया स्वभावात् संसृज्यन्ते इति पूर्वस्योपसंहारः । नीटी.

[3]ऋग्यजुःसामवित्पूज्यो नित्यं स्याद्देववद्द्विजः ।
अनृग्यजुरसामा तु प्राजापत्य उपद्रवः ॥

[4]यज्ञो मनीषया तात सर्ववर्णेषु भारत ।
नास्य यज्ञहनो देवा ईहन्ते नेतरे जनाः ।
तस्मात्सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ॥

अत्र हेतुमाह– ऋगिति । द्विजः त्रैवर्णिकः पूज्यः शूद्रेण । उपद्रवतीति तत्समीपगामित्वादुपद्रवः दासः शूद्रः, स वेदहीनोऽपि प्राजापत्यः प्रजापतिदेवताकः, यथा आग्नेयो ब्राह्मणः ऐन्द्रः क्षत्रियस्तद्वत् । तथा च मानसे देवतोद्देशेन द्रव्यत्यागात्मके यज्ञे सर्वे वर्णा अधिक्रियन्ते इत्यर्थः । अस्य मानसयज्ञकर्तुः देवा इतरे जनाश्च न ईहन्ते इति न, अपि तु श्रद्धापूतत्वात्सर्वेऽप्यस्य यज्ञे भागं कामयन्ते इत्यर्थः । 'नास्य यज्ञस्य ते' इति पाठे

---

(१) भा. १२।६०।३६ ; भामु. १२।६०।३७ यज्ञस्त्र्यैव (यज्ञस्तस्य च) नमस्कारौ (वषट्कारौ) विधीयते (न विद्यते).

(२) भा. १२।६०।३७ ; भामु. १२।६०।३८ ताभ्यां (तस्माद्) त व्रत (ताव्रत).

(३) भा. १२।६०।३८ ; भामु. १२।६०।३९.

(४) भा. १२।६०।३९ ; भामु. १२।६०।४०–४१ पूर्वार्धे (यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत । अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते ॥).

(१) भा. १२।६०।४० ; भामु. १२।६०।४१–४२ परमं (हि परं) सनातनैः (समाहिताः).

(२) भा. १२।६०।४१ ; भामु. १२।६०।४२–४३ हि तत् (हितम्).

(३) भा. १२।६०।४२ ; भामु. १२।६०।४४ तु (च).

(४) भा. १२।६०।४३ ; भामु. १२।६०।४४–४५ यज्ञहनो (यज्ञकृतो) तस्माद् (ततः). 'नास्य यज्ञस्य ते' इति नीलकण्ठीटीकायां पाठान्तरम् ।

एनं यज्ञं देवा अपि कर्तुं न ईहन्ते न समर्था भवन्तीति योज्यम् । नीटी.

[1]स्वं दैवतं ब्राह्मणाः स्वेन नित्यं
परान्वर्णानयजन्नेवमासीत् ।
आरोचिता नः सुमहान्स धर्मः
सृष्टो ब्रह्मणा त्रिषु वर्णेषु दृष्टः ॥

नन्वग्निहीनस्य शूद्रस्य कथं पाकयज्ञेष्वधिकार इत्याशङ्क्याऽऽह– स्वं दैवतमिति । ब्राह्मणस्त्रयाणामपि वर्णानां स्वं असाधारणं दैवतम् । अतः कारणात् ते स्वे आत्मीया ब्राह्मणाः परान् वर्णानुद्दिश्य न अयजन्निति नैव आसीत्, अपि तु 'अमुककामेन अमुकशर्मणाऽहं वृतोऽमुकयज्ञेन यक्ष्ये' इत्युद्देशं कृत्वा अयजन्नेव यागं कृतवन्त एव इत्येवमेवाऽऽसीदेवं पुराकल्पप्रदर्शनमुखेनायं विधिर्ज्ञेयः । अयजन्निति परस्मैपदप्रयोगस्तु परगामित्वात्क्रियाफलस्य युक्तः । अधरः नीचः वैवाहिकात् श्रौताचान्यत्वात् वितानः अग्नीनां विस्तरः । तस्य अग्नयो लौकिका एव पञ्चकुण्डीविधानादौ ज्ञेयाः । एककुण्डपक्षे त्वेक एव लौकिकः । स वा ( ? च ) 'अथ खलु यत्र क्व च होष्यन्त्स्यात्' इत्युपक्रम्य 'अग्निं प्रतिष्ठाप्य' (आगृ. १।३।१) इति गृह्यकारैर्दर्शितः । संसृष्ट इति । तत्रापि मन्त्रसंसर्ग उच्यते । वैश्यः वैश्यगृहादानीतः । श्रौतेऽपि 'विट्कुलाद्वित्तवतो वा' इति वैश्यगृहाद्दक्षिणाग्न्यर्थमग्न्यानयनं दृश्यते । यस्मादेवं तस्मात् ब्राह्मणस्त्रिष्वपि वर्णेषु यज्ञः सृष्टः येन सः, यज्ञस्रष्टा भवतीत्यर्थः । पाठान्तरे वैश्यपदे विभक्तिलोप आर्षः । नीटी.

[2]तस्माद्वर्णा ऋजवो जातिधर्माः
संसृज्यन्ते तस्य विपाक एषः ।
एकं साम यजुरेकमृगेका
विप्रश्चैकोऽनिश्चयस्तेषु दृष्टः ॥

यस्मात्त्रिषु वर्णेषु ब्राह्मणो यज्ञस्रष्टा, तस्मात्सर्वेऽपि वर्णाः ऋजवः साधवः एव, यज्ञसंयोगात् । एवं धर्मसाम्येऽपि ज्ञातिसाम्यं नास्तीत्याशङ्क्याऽऽह– ज्ञातिवर्णा अपि क्षत्रियवैश्यशूद्राः तस्य ब्राह्मणस्यैव विकारे क्षत्रियादिकन्यासूत्पन्ने मूर्धाभिषिक्तादौ संसृज्यन्ते एव । तेन धर्मतो जन्मतश्च सर्वे वर्णा ब्राह्मणसंसृष्टा इति स्थितम् । तत्र हेतुमाह– एक इति । तेषु तत्त्वनिश्चये क्रियमाणे एको विप्रो ब्रह्मैव प्रथमो ब्राह्मणः सृष्टः जातः । ब्राह्मणसंततित्वात्सर्वेऽप्येते ब्राह्मणा एवेत्यर्थः । तत्र दृष्टान्तः– एकं सामेति । 'अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' इति श्रुतेरेकं अकाररूपमेव अक्षरं यथा सामादिरूपं तथा ब्रह्मैव ब्राह्मणादिरूपमित्यर्थः । नीटी.

[1]अत्र गाथा यज्ञगीताः कीर्तयन्ति पुराविदः ।
वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ॥

वैखानसानां वानप्रस्थानां गाथाः यज्ञस्तुतिश्लोकाः यज्ञगीताः विष्णुगीताः । नीटी.

[2]उदितेऽनुदिते वाऽपि श्रद्दधानो जितेन्द्रियः ।
वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ॥
[3]यत्स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम् ।
बहूनि यज्ञरूपाणि नानाकर्मफलानि च ॥

'रौद्रं गवि सद्वायव्यमुपावसृष्टम्' (ऐब्रा. २५।१) इत्यादिबह्वृचब्राह्मणे षोडशकमग्निहोत्रमुक्तम् । तत्र 'मारुतं विष्यन्दमानम्' इति स्कन्नमपि मरुद्दैवत्यं भवतीति तत् पूर्वं आद्यं अग्निहोत्रं, यत् अस्कन्नं यथाविधि हुतं उत्तरं सर्वोत्कृष्टम् । बहूनीति रौद्रादीनि । नीटी.

[4]तानि यः संविजानाति ज्ञाननिश्चयनिश्चितः ।
द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति ॥

---

(१) भा. १२।६०।४४ ; भामु. १२।६०।४६ ब्राह्मणाः ( ब्राह्मणः ) उत्तरार्धे ( अधरो वितानः संसृष्टो वैश्यो ब्राह्मणस्त्रिषु वर्णेषु यज्ञसृष्टः । ).

(२) भा. १२।६०।४५ ; भामु. १२।६०।४७ जातिधर्माः ( ज्ञातिवर्णाः ) विपाक एषः ( विकार एव ) कोऽनिश्चयस्तेषु दृष्टः ( को निश्चये तेषु सृष्टः ).

(१) भा. १२।६०।४६ ; भामु. १२।६०।४८.

(२) भा. १२।६०।४७ ; भामु. १२।६०।४९.

(३) भा. १२।६०।४८ ; भामु. १२।६०।५०.

(४) भा. १२।६०।४९ ; भामु. १२।६०।५१ संवि (संप्र).

तानि षोडश अग्निहोत्ररूपाणि । नीटी.

[२]स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः ।
यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम् ॥

यज्ञं विष्णुं यष्टुं यज्ञदानादिना आराधितुम् । नीटी.

[३]ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम् ।
सर्वथा सर्ववर्णैर्हि यष्टव्यमिति निश्चयः ।
न हि यज्ञसमं किंचित्त्रिषु लोकेषु विद्यते ॥

ऋषय इति सार्धः । नीटी.

[३]तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयता ।
श्रद्धापवित्रमाश्रित्य यथाशक्ति प्रयच्छता ॥

श्रद्धापवित्रं यथा स्यात्तथा यष्टव्यमिति संबन्धः । आश्रित्य शास्त्रमिति शेषः । नीटी.

ब्राह्मण एव आश्रमचतुष्टयाधिकारी

भीष्म उवाच–

[४]आश्रमाणां महाबाहो शृणु सत्यपराक्रम ।
चतुर्णामिह वर्णानां कर्माणि च युधिष्ठिर ॥

[५]वानप्रस्थं भैक्षचर्यां गार्हस्थ्यं च महाश्रमम् ।
ब्रह्मचर्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैर्वृतम् ॥

वानप्रस्थमिति । पाठक्रमो न विवक्षितः । चतुर्थं संन्यासम् । तं च जटाधारणसंस्कारमवाप्य चेति चो भिन्नक्रमः । चात् मुण्डिनं च वदन्ति । नीटी.

वानप्रस्थाधिकारः

[६]जटाकरणसंस्कारं द्विजातित्वमवाप्य च ।
आधानादीनि कर्माणि प्राप्य वेदमधीत्य च ॥

(१) भा. १२।६०।५०; भामु. १२।६०।५२.

(२) भा. १२।६०।५१ ; भामु. १२।६०।५३ सर्ववर्णैर्हि (सर्वदा वर्णैः) निश्चयः (निर्णयः).

(३) भा. १२।६०।५२ ; भामु. १२।६०।५४ प्रयच्छता (यथेच्छया).

(४) भा. १२।६१।१ ; भामु. १२।६१।१ मिह वर्णानां (मपि नामानि).

(५) भा. १२।६१।२ ; भामु. १२।६१।२ चर्यां (चर्यं).

(६) भा. १२।६१।३ ; भामु. १२।६१।३ करण (धरण).

द्विजातित्वमवाप्य वेदमधीत्य आधानादीनि कर्माणि प्राप्य वानप्रस्थाश्रमं गच्छेदित्यन्वयः । नीटी.

[१]सदारो वाऽप्यदारो वा आत्मवान्संयतेन्द्रियः ।
वानप्रस्थाश्रमं गच्छेत्कृतकृत्यो गृहाश्रमात् ॥

[२]तत्राऽऽरण्यकशास्त्राणि समधीत्य स धर्मवित् ।
ऊर्ध्वरेताः प्रजायित्वा गच्छत्यक्षरसात्मताम् ॥

आरण्यकानां वानप्रस्थानां शास्त्राणि शासनानि समधीत्य सम्यगनुष्ठानेन प्राप्य । अक्षरसात्मतां कैवल्यम् । नीटी.

[३]एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसाम् ।
कर्तव्यानीह विप्रेण राजन्नादौ विपश्चिता ॥

एतानि द्विजत्वावाप्त्यादीनि । एवशब्दः प्रकारान्तरं मोक्षप्राप्तौ वारयति । नीटी.

चरितब्रह्मचर्यस्य ब्राह्मणस्य संन्यासाधिकारः

चरितब्रह्मचर्यस्य ब्राह्मणस्य विशां पते ।
भैक्षचर्यास्वधीकारः प्रशस्त इह मोक्षिणः ॥

'ब्रह्मचर्यादेव प्रव्रजेत्' इति श्रुतेर्मध्यममाश्रमद्वयमनित्यमित्याह– चरितेति । नीटी.

[४]यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥

[५]निराशीः स्यात्सर्वसमो निर्भोगो निर्विकारवान् ।
विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मताम् ॥

विकाराः कामसंकल्पादयः, तद्वच्चित्तम्, तद्रहितो निर्विकारवान् अकुमनस्क इत्यर्थः । नीटी.

(१) भा. १२।६१।४ ; भामु.

(२) भा. १२।६१।५ ; भामु. १२।६१।५ प्रजायित्वा (प्रव्रजित्वा).

(३) भा. १२।६१।६–७ ; भामु.

(४) भा. १२।६१।८ ; भामु. १२।६१।८ निरग्नि (निराशी).

(५) भा. १२।६१।९ ; भामु.

गृहस्थाश्रमस्य श्रेष्ठता

[1]अधीत्य वेदान् कृतसर्वकृत्यः
संतानमुत्पाद्य सुखानि भुक्त्वा ।
समाहितः प्रचरेद्दुश्चरं तं
गार्हस्थ्यधर्मं मुनिधर्मदृष्टम् ॥

गृहिणो मुक्तिमाह– अधीत्येति । समाहितः योगयुक्तः सन् गार्हस्थ्यधर्मे यः प्रचरेत्सोऽपि अक्षरसात्मतां गच्छतीति पूर्वेण संबन्धः । नीटी.

[2]स्वदारतुष्ट ऋतुकालगामी
नियोगसेवी नशठो नजिह्मः ।
मिताशनो देवपरः कृतज्ञः
सत्यो मृदुश्चानृशंसः क्षमावान् ॥

असमाहितं प्रत्याह– स्वदारेति । शठः धूर्तः । जिह्मः कुटिलः । नीटी.

[3]दान्तो विधेयो हव्यकव्येऽप्रमत्तो
अन्नस्य दाता सततं द्विजेभ्यः ।
अमत्सरी सर्वलिङ्गिप्रदाता
वैताननित्यश्च गृहाश्रमी स्यात् ॥

विधेयः गुरुशास्त्राज्ञापालकः । अप्रमत्तः अवहितः । सर्वेभ्यो लिङ्गयुक्तेभ्य आश्रमेभ्यः प्रदाता अन्नादेः । लिङ्गप्रदातेति मध्यमपदलोपी समासः । वैतानं श्रौतकर्म, तत्र नित्यः । नीटी.

[4]अथात्र नारायणगीतमाहु-
र्महर्षयस्तात महानुभावाः ।
महार्थमत्यर्थतपःप्रयुक्तं
तदुच्यमानं हि मया निबोध ॥

( १ ) भा. १२।६१।१०; भामु. १२।६१।१० तं (यो) दृष्टम् ( जुष्टम् ).

( २ ) भा. १२।६१।११ ; भामु. १२।६१।११ तुष्ट ऋतु ( तुष्टस्त्वृतु ) देवपरः ( देवरतः ).

( ३ ) भा. १२।६१।१२ ; भामु. १२।६१।१२ अन्नस्य ( ह्यन्नस्य ) लिङ्गि ( लिङ्ग ).

( ४ ) भा. १२।६१।१३ ; भामु. १२।६१।१३ मत्यर्थ (मत्यन्त).

[1]सत्यार्जवं चातिथिपूजनं च
धर्मस्तथाऽर्थश्च रतिश्च दारे ।
निषेवितव्यानि सुखानि लोके
ह्यस्मिन्परे चैव मतं ममैतत् ॥

[2]भरणं पुत्रदाराणां वेदानां पारणं तथा ।
सतां तमाश्रमं श्रेष्ठं वदन्ति परमर्षयः ॥

[3]एवं हि यो ब्राह्मणो यज्ञशीलो
गार्हस्थ्यमध्यावसते यथावत् ।
गृहस्थवृत्तिं प्रविशोध्य सम्यक्
स्वर्गे विशुद्धं फलमाप्नुते सः ॥

वृत्तिं जीविकां प्रविशोध्य शुद्धां कृत्वा, न्यायागतेन धनेन जीवन्नित्यर्थः । नीटी.

तस्य देहपरित्यागादिष्टाः कामाक्षया मताः ।
आनन्त्यायोपतिष्ठन्ति सर्वतोक्षिशिरोमुखाः ॥

तस्य गृहस्थस्य देहपरित्यागात्समाहितश्चेदिहैव देहाभिमानत्यागात्, असमाहितस्य मरणानन्तरम् । इष्टाः कामाः विषयाः हार्दाकाशे स्वर्गे वा उपतिष्ठन्ति । कामाः अक्षयाः इति छेदः । संधिरार्षः । सर्वतोक्षिशिरोमुखा इत्यनेन कामानां किङ्कराणामिव वश्यत्वमुक्तम् । यत्र यत्र देशे काले वा योग्यमयोग्यं वा संकल्पयति तत्सर्वं सद्य उपतिष्ठतीत्यर्थः । नीटी.

नैष्ठिकब्रह्मचर्यम्

[4]खादन्नेको जपन्नेकः सर्पन्नेको युधिष्ठिर ।
एकस्मिन्नेव आचार्ये शुश्रूषुर्मलपङ्कवान् ॥

ब्रह्मचारिणोऽपि कैवल्यमाह– स्मरन्निति । सर्वान् देवान् मन्त्रांश्च । नीटी.

( १ ) भा. १२।६१।१४ ; भामु. १२।६१।१४ रतिश्च दारे ( रतिः स्वदारैः ).

( २ ) भा. १२।६१।१५ ; भामु. १२।६१।१५ पारणं ( धारणं ) सतां तमा ( वसतामा ).

( ३ ) भा. १२।६१।१६-१७ ; भामु.

( ४ ) भा. १२।६१।१८ ; भामु. १२।६१।१८ खादन् ( स्मरन् ) सर्पन्ने ( सर्वाने ) आचार्ये ( चाचार्ये ).

[1]ब्रह्मचारी व्रती नित्यं नित्यं दीक्षापरो वशी ।
अविचार्य तथा वेदं कृत्यं कुर्वन्वसेत्सदा ॥

दीक्षा नियमविशेषस्वीकारः । वेदं वेदान्तान् । कृत्यं कर्तुमर्हं ध्यानयोगम् । नीटी.

[2]शुश्रूषां सततं कुर्वन्गुरोः संप्रणमेत च ।
षट्कर्मस्वनिवृत्तश्च नप्रवृत्तश्च सर्वशः ॥

तदविरोधेन शुश्रूषां च कुर्वन् । निवृत्तः निवृत्तिमान् । नीटी.

[3]न चरत्यधिकारेण सेवितं द्विषतो न च ।
एषोऽऽश्रमपदस्तात ब्रह्मचारिण इष्यते ॥

अधिकारेण निग्रहानुग्रहेण । नीटी.

ब्राह्मणेन कर्तव्यानि वर्ज्यानि च कर्माणि, कर्मानुरूपो ब्राह्मण्यादिगुणः, अतः शूद्रकर्मा ब्राह्मणः शूद्रो मन्तव्यः, ब्राह्मणाधीनं वर्णधर्माणां पालनम्

युधिष्ठिर उवाच–

[4]शिवान्सुखान्महोदर्कानहिंस्राँल्लोकसंमतान् ।
ब्रूहि धर्मान्सुखोपायान्मद्विधानां सुखावहान् ॥

भीष्म उवाच–

[5]ब्राह्मणस्येह चत्वार आश्रमा विहिताः प्रभो ।
वर्णास्ताननुवर्तन्ते त्रयो भरतसत्तम ॥

उक्तविशेषणविशिष्टा ब्राह्मणस्यैव धर्मा इत्याशयेनाह– ब्राह्मणस्येति । एतेन गृहस्थस्यापि ब्राह्मणस्य हिंस्रो धर्मः कामकार एव, न विधिचोदित इति दर्शितम् । वक्ष्यति च मोक्षधर्मेषु– 'पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति' इति । त्रयो हिंसापरा वर्णास्तान्नानुवर्तन्ते । नीटी.

[1]उक्तानि कर्माणि बहूनि राजन्
स्वर्ग्याणि राजन्यपरायणानि ।
नेमानि दृष्टान्तविधौ स्मृतानि
क्षात्रे हि सर्वं विहितं यथावत् ॥

नानुवर्तन्ते इत्येतत् प्रपञ्चयति– उक्तानीत्यादिना । राजन्यानां परायणानि युद्धजयादीनि दृष्टान्तविधौ त्वया पृष्टस्य प्रतिवचनेन योग्यानि । यतः क्षात्रे विहितं विधिप्रधानं, प्रवृत्तिशास्त्रमिति यावत् । तत्कथं निवृत्तिप्रधानैर्ब्राह्मणधर्मैः समत्वमेतीत्यर्थः । नीटी.

[2]क्षात्राणि वैश्यानि च सेवमानः
शौद्राणि कर्माणि च ब्राह्मणः सन् ।
अस्मिँल्लोके निन्दितो मन्दचेताः
परे च लोके निरयं प्रयाति ॥

[3]या संज्ञा विहिता लोके दासे शुनि वृके पशौ ।
विकर्मणि स्थिते विप्रे तां संज्ञां कुरु पाण्डव ॥

[4]षट्कर्मसंप्रवृत्तस्य आश्रमेषु चतुर्ष्वपि ।
सर्वधर्मोपपन्नस्य संभूतस्य कृतात्मनः ॥

[5]ब्राह्मणस्य विशुद्धस्य तपस्यभिरतस्य च ।
निराशिषो वदान्यस्य लोका ह्यक्षरसंज्ञिताः ॥

षट् कर्माणि– प्राणायामः, प्रत्याहारः, ध्यानम्, धारणा, तर्कः, समाधिरिति । इज्यादीनामाश्रमान्तरेष्वयोगात्सर्वाश्रमयोग्यान्येतान्येव षट् कर्माणि । सर्वधर्मः

(१) भा. १२।६१।१९ ; भामु. १२।६१।१९ अविचार्य (परिचार्य).

(२) भा. १२।६१।२० ; भामु. १२।६१।२० स्वनिवृत्त (सु निवृत्त) नप्रवृत्त (न प्रवृत्त).

(३) भा. १२।६१।२१; भामु. १२।६१।२१ सेवितं (सेवेत).

(४) भा. १२।६२।१ ; भामु.

(५) भा. १२।६२।२ ; भामु. १२।६२।२ णस्येह (णस्य तु) आश्रमा (स्त्वाश्रमा) स्ताननु (स्तान्नानु) भरत (भारत).

(१) भा. १२।६२।३ ; भामु.

(२) भा. १२।६२।४ ; भामु. १२।६२।४ सेवमानः (सेव्यमानः).

(३) भा. १२।६२।५ ; भामु. १२।६२।५ तां संज्ञां कुरु (सैव संज्ञा च).

(४) भा. १२।६२।६ ; भामु. १२।६२।६ संभूतस्य (संवृतस्य).

(५) भा. १२।६२।७ ; भामु. १२।६२।७ संज्ञिताः (संमिताः).

अहिंसा । संवृतस्य अचपलस्य । कृतात्मनः जितचित्तस्य । तपसि विचारे । अक्षरसंमिताः अक्षयाः । नीटी.

[1]यो यस्मिन्कुरुते कर्म यादृशं येन यत्र च ।
तादृशं तादृशेनैव स गुणं प्रतिपद्यते ॥

ननु एवं ब्राह्मणः स्वधर्मं त्यक्त्वा किमिति हीनधर्मे रमते इत्याशङ्क्याऽऽह– य इति । यः पुमान् यस्मिन् अवस्थाविशेषे यत्र देशे काले वा येन फलेन निमित्तेन यत्कर्म करोति साधु असाधु वा, तत्सकलं लोभाच्चिराभ्यासाच्च सगुणमेवेति प्रतिपद्यते । न त्विदं निन्द्यमिति ततो विरज्यते इत्यर्थः । नीटी.

[2]वृद्ध्या कृषिवणिक्त्वेन जीवसंजीवनेन च ।
वेत्तुमर्हसि राजेन्द्र स्वाध्यायगणितं महत् ॥

तान्येवाऽऽह– वृद्ध्येति । जीवैः संजीवनं मृगयाजीवित्वम्, तेन । महदपि स्वाध्यायगणितं वेदाभ्यसनं वृद्ध्यादिभिः समानमिति वेत्तुमर्हसि उक्तहेतोरित्यर्थः । नीटी.

[3]कालसंचोदितः कालः कालपर्यायनिश्चितः ।
उत्तमाधममध्यानि कर्माणि कुरुतेऽवशः ॥

अभ्यासात्कर्माणि रोचन्ते चेदुत्तमान्येव तानि कुतो नाभ्यस्यन्ते इत्याशङ्क्याऽऽह– कालेति । कालेन पर्येति आविर्भवतीति कालपर्यायः प्राग्भवीयो वासनासमूहः, तेन निश्चितः । तेन कालेन प्रेरितः तदनुगुणं कर्म करोति, यतः अवशः कालाद्यधीनः । नीटी.

[4]अन्तवन्ति प्रदानानि पुरा श्रेयस्कराणि च ।
स्वकर्मनिरतो लोको ह्यक्षरः सर्वतोमुखः ॥

(१) भा. १२।६२।८ ; भामु. १२।६२।८ स गुणं (सगुणं).

(२) भा. १२।६२।९ ; भामु.

(३) भा. १२।६२।१० ; भामु. १२।६२।१० कालः (लोकः).

(४) भा. १२।६२।११ ; भामु. १२।६२।११ प्रदानानि (प्रधानानि) लोको (लोके).

एवं चेत् कृतं विधिनिषेधाभ्यामित्यत आह– अन्तवन्तीति । पुरा श्रेयस्कराणि प्राचीनानि पुण्यापुण्यानि यानि प्रधानानि देहारम्भकाणि तानि अन्तवन्ति । देहस्यैव अन्तवत्त्वात् देहसंबन्धि यत्सुखदुःखाद्यागमनं तदपरिहार्यम् । अन्यत्र तु शुभाशुभप्रवृत्त्यादौ लोकः स्वकर्मनिरतः स्वस्याभीष्टं यत्कर्म रागादिविषयभूतं तत्रैव निरतः तत्राऽऽयत्तः सर्वतोमुखः प्रवृत्तौ वा स्वतन्त्रः अक्षरः जीवः तत्र तत्र कामकारेण प्रवर्तते । अतो विधिनिषेधशास्त्रस्यास्त्येवार्थवत्त्वमित्यर्थः । नीटी.

भीष्म उवाच–

[1]ज्याकर्षणं शत्रुनिबर्हणं च
कृषिर्वणिज्या पशुपालनं च ।
शुश्रूषणं चापि तथाऽर्थहेतो-
रकार्यमेतत्परमं द्विजस्य ॥

सेव्यं तु ब्रह्मषट्कर्म गृहस्थेन मनीषिणा ।
कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते ॥

[2]राजप्रैष्यं कृषिधनं जीवनं च वणिज्यया ।
कौटिल्यं कौलटेयं च कुसीदं च विवर्जयेत् ॥

कौटिल्यं अनार्जवम् । कौलटेयं कुलटाप्रधानं जारकर्म पारदार्यं वा । अन्ये तु कौटिलीयमिति पाठं प्रकल्प्य मात्सर्यमिति व्याचक्षते । कुसीदं वृद्धिजीविकाम् । नीटी.

[3]शूद्रो राजन्भवति ब्रह्मबन्धु-
र्दुश्चारित्र्यो यश्च धर्मादपेतः ।
वृषलीपतिः पिशुनो नर्तकश्च
ग्रामप्रैष्यो यश्च भवेद्विकर्मा ॥

(१) भा. १२।६३।१-२ ; भामु.

(२) भा. १२।६३।३ ; भामु. १२।६३।३ प्रैष्यं (प्रेष्यं) वणिज्यया (वणिक्पथा).

(३) भा. १२।६३।४ ; भामु. १२।६३।४ रित्र्यो (रित्रो) नर्तकश्च ग्रामप्रैष्यो (नर्तनश्च राजप्रेष्यो).

[1]जपन् वेदानजपंश्चापि राजन्
समः शूद्रैर्दासवच्चापि भोज्यः ।
एते सर्वे शूद्रसमा भवन्ति
राजन्नेतान् वर्जयेद्देवकृत्ये ॥

राजप्रेष्यादिः वेदान् जपन् अजपन्वा शूद्र इव पङ्क्तेर्बहिर्भोजनीय एवेति भावः । नीटी.

[2]निर्मर्यादे चाशने क्रूरवृत्तौ
हिंसात्मके त्यक्तधर्मस्ववृत्ते ।
हव्यं कव्यं यानि चान्यानि राजन्
देयान्यदेयानि भवन्ति तस्मिन् ॥

[3]तस्माद्धर्मो विहितो ब्राह्मणस्य
दमः शौचं चाऽऽर्जवं चापि राजन् ।
तथा विप्रस्याऽऽश्रमाः सर्व एव
पुरा राजन् ब्रह्मणा वै निसृष्टाः ॥

[4]यः स्याद्दान्तः सोमप आर्यशीलः
सानुक्रोशः सर्वसहो निराशीः ।
ऋजुर्मृदुरनृशंसः क्षमावान्
स वै विप्रो नेतरः पापकर्मा ॥

[5]शूद्रं वैश्यं राजपुत्रं च राजन्
लोकाः सर्वे संश्रिता धर्मकामाः ।
तस्माद्वर्णाञ्जातिधर्मेषु सक्तान्
मत्वा विष्णुर्नेच्छति पाण्डुपुत्र ॥

[6]लोके चेदं सर्वलोकस्य न स्या-
च्चातुर्वर्ण्यं वेदवादाश्च न स्युः ।
सर्वाश्चेज्याः सर्वलोकक्रियाश्च
सद्यः सर्वे चाऽऽश्रमस्था न वै स्युः ।

धर्मेष्वसक्तान्विष्णुर्नेच्छति चेत् का हानिरत आह—लोक इति । लोके स्वर्गे । इदं सुखादि । आश्रमस्थाश्च स्वधर्मे न तिष्ठेयुः । स्वर्गादिकं सर्वं विष्णुप्रसादादेव, तदभावे सर्वं कृतं कर्म व्यर्थमिति भावः । नीटी.

शूद्रस्यापि संन्यासातिरिक्ताश्रमत्रयाधिकारः

[1]यश्च त्रयाणां वर्णानामिच्छेदाश्रमसेवनम् ।
कर्तुमाश्रमदृष्टांश्च धर्मांस्ताञ्शृणु पाण्डव ॥

यो राजा त्रयाणां ब्राह्मणवैश्यशूद्राणां स्वराज्ये आश्रमधर्मसेवनं यथोक्तं इच्छेत्, तेनावश्यज्ञातव्यान् धर्मान् शृणु । नीटी.

[2]शुश्रूषाकृतकृत्यस्य कृतसंतानकर्मणः ।
अभ्यनुज्ञाप्य राजानं शूद्रस्य जगतीपते ॥
[3]अल्पान्तरगतस्यापि दशधर्मगतस्य वा ।
आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम् ॥

शुश्रूषोः वेदान्तेष्वनधिकारात्पुराणद्वारा आत्मानं श्रोतुमिच्छोः । कृतकार्यस्य यावच्छरीरसामर्थ्यं सेवितत्रैवर्ण्यस्य । कृतसंतानकर्मणः जातपुत्रस्य । अभ्यनुज्ञातो राज्ञा इत्यभ्यनुज्ञातराजः, तस्य ।

अल्पान्तरगतस्य आचारनिष्ठया त्रैवर्णिकसमस्य । दशधर्मगतस्येति मत्तप्रमत्तादीन्प्रकृत्य 'दश धर्मं न जानन्ति' इत्युक्तेः अत्र योगधर्मानभिज्ञस्य ग्रहणम् । तस्यापि आश्रमाः सर्वे विहिताः । शूद्रोऽपि नैष्ठिकं ब्रह्मचर्यं वानप्रस्थं वा सकलविक्षेपककर्मत्यागरूपं संन्यासं वाऽनुतिष्ठेदेव । निराशिषं शान्तिदान्त्यादिकल्याणगुणरहितम् । नीटी.

क्षत्रियवैश्यशूद्राणामपि संन्यासेऽधिकारोऽनुमतः

[4]भैक्षचर्यां न तु प्राहुस्तस्य तद्धर्मचारिणः ।
तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव हि ॥

---

(१) भा. १२।६३।५ ; भामु.
(२) भा. १२।६३।६ ; भामु. १२।६३।६ चाशने (चाशुचौ) तस्मिन् (चास्मै).
(३) भा. १२।६३।७ ; भामु. १२।६३।७ चं चाऽऽर्जवं (चमार्जवं).
(४) भा. १२।६३।८; भामु. १२।६३।८ प आर्य (पश्चार्य).
(५) भा. १२।६३।९; भामु. १२।६३।९ जातिधर्मेषु सक्तान् (शान्तिधर्मेष्वसक्तान्).
(६) भा. १२।६३।१० ; भामु.

(१) भा. १२।६३।११; भामु. १२।६३।११ कर्तुमाश्रम (चातुराश्रम्य).
(२) भा. १२।६३।१२ ; भामु. १२।६३।१२ शुश्रूषाकृतकृत्यस्य (शुश्रषोः कृतकार्यस्य) ज्ञाप्य राजानं (ज्ञातराजस्य).
(३) भा. १२।६३।१३ ; भामु.
(४) भा. १२।६३।१४; भामु. १२।६३।१४ भैक्षचर्यां न तु (भैक्ष्यचर्यां ततः).

भैक्ष्यचर्या पारिव्राज्यम् । तस्य शूद्रस्य तद्धर्मचारिणः तान् पूर्वोक्तान् स्वधर्मान् चरतीति तथाभूतस्य तथा वैश्यस्य राजपुत्रस्य च भैक्ष्यचर्यां प्राहुरित्यन्वयः । नीटी.

[1]कृतकृत्यो वयोतीतो राज्ञः कृतपरिश्रमः ।
वैश्यो गच्छेदनुज्ञातो नृपेणाऽऽश्रममण्डलम् ॥
[2]वेदानधीत्य धर्मेण राजशास्त्राणि चानघ ।
संतानादीनि कर्माणि कृत्वा सोमं निषेव्य च ॥
पालयित्वा प्रजाः सर्वा धर्मेण वदतां वर ।
राजसूयाश्वमेधादीन्मखानन्यांस्तथैव च ॥
[3]समानीय यथापाठं विप्रेभ्यो दत्तदक्षिणः ।
संग्रामे विजयं प्राप्य तथाऽल्पं यदि वा बहु ॥
[4]स्थापयित्वा प्रजापालं पुत्रं राज्ये च पाण्डव ।
अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ ॥
[5]अर्चयित्वा पितॄन्सम्यक्पितृयज्ञैर्यथाविधि ।
देवान्यज्ञैर्ऋषीन्वेदैरर्चित्वा चैव यत्नतः ॥
[6]अन्तकाले च संप्राप्ते य इच्छेदाश्रमान्तरम् ।
आनुपूर्व्याश्रमान्राजन् गत्वा सिद्धिमवाप्नुयात् ॥
[7]राजर्षित्वेन राजेन्द्र भैक्षचर्याध्वसेवया ।
अपेतगृहधर्मोऽपि चरेज्जीवितकाम्यया ॥

राजा ऋषित्वेन मन्त्रार्थद्रष्टृत्वेन वेदान्तश्रवणकर्तृत्वेन हेतुना भैक्ष्यचर्यामिच्छेदिति पूर्वेण संबन्धः, न तु सेवया श्रवणमकुर्वन्, नान्नमात्रार्थमित्यर्थः । तदकुर्वंस्तु जीवितकाङ्क्षया भैक्ष्यचर्यां चरेदेवेत्यर्थः । नीटी.

(१) भा. १२।६३।१५; भामु. १२।६३।१५ मण्डलम् (संश्रयम्).
(२) भा. १२।६३।१६-१७; भामु.
(३) भा. १२।६३।१८; भामु. १२।६३।१८ समानीय (आनयित्वा).
(४) भा. १२।६३।१९; भामु.
(५) भा. १२।६३।२०; भामु. १२।६३।२० रर्चित्वा चैव (रर्चयित्वा तु).
(६) भा. १२।६३।२१; भामु. १२।६३।२१ आनुपू (सोऽनुपू).
(७) भा. १२।६३।२२; भामु. १२।६३।२२ भैक्षचर्याध्वसेवया (भैक्ष्यचर्यां न सेवया).

[1]न चैतन्नैष्ठिकं कर्म त्रयाणां भरतर्षभ ।
चतुर्णां राजशार्दूल प्राहुराश्रमवासिनाम् ॥

एतत् भैक्ष्यम् । नैष्ठिकं नित्यम् । त्रयाणां राजादीनाम् । तेषामाश्रमसंन्यासो नित्यो नास्ति, अपि तु विक्षेपककर्मत्यागरूपः काम्य एवास्तीत्यर्थः । स च चतुर्णामप्याश्रमाणामस्तीति प्राहुः । नीटी.

सर्वे धर्मा राजधर्माधीनाः राजधर्मेण रक्षिताश्च, राजधर्महानौ सर्वधर्माणां हानिः

[2]बह्वायत्तं क्षत्रियैर्मानवानां
लोकश्रेष्ठं धर्ममासेवमानैः ।
सर्वे धर्माः सोपधर्मास्त्रयाणां
राज्ञो धर्मादिति वेदाच्छृणोमि ॥

राजधर्मं प्रशंसति— बाह्वायत्तमित्यादिना । नीटी.

[3]यथा राजन् हस्तिपदे पदानि
संलीयन्ते सर्वसत्त्वोद्भवानि ।
एवं धर्मान्राजधर्मेषु सर्वान्
सर्वावस्थं संप्रलीनान्निबोध ॥
अल्पाश्रयानल्पफलान्वदन्ति
धर्मानन्यान्धर्मविदो मनुष्याः ।
महाश्रयं बहुकल्याणरूपं
क्षात्रं धर्मं नेतरं प्राहुरार्याः ॥
[4]सर्वे धर्मा राजधर्मप्रधानाः
सर्वे धर्माः पाल्यमाना भवन्ति ।
सर्वत्यागो राजधर्मेषु राजन्
त्यागे चाऽऽहुर्धर्ममग्र्यं पुराणम् ॥

सर्वेषां त्यागिनां षड्भागहारी राजाऽपि सर्वत्यागी भवतीत्यर्थः । नीटी.

(१) भा. १२।६३।२३; भामु. १२।६३।२३ भरतर्षभ (भूरिदक्षिण).
(२) भा. १२।६३।२४; भामु. १२।६३।२४ बह्वा (बाह्वा).
(३) भा. १२।६३।२५-२६; भामु.
(४) भा. १२।६३।२७; भामु. १२।६३।२७ धर्माः पाल्य (वर्णाः पाल्य) सर्वत्यागो (सर्वस्त्यागो) त्यागे चाऽऽहुर्धर्ममग्र्यं (त्यागं धर्मं चाऽऽहुरग्र्यं).

[1]मज्जेत्त्रयी दण्डनीतौ हतायां
सर्वे धर्मा न भवेयुर्विरुद्धाः ।
सर्वे धर्माश्चाऽऽश्रमाणां गताः स्युः
क्षात्रे त्यक्ते राजधर्मे पुराणे ॥
[2]सर्वे त्यागा राजधर्मेषु दृष्टाः
सर्वा दीक्षा राजधर्मेषु चोक्ताः ।
सर्वे योगा राजधर्मेषु चोक्ताः
सर्वे लोका राजधर्मान्प्रविष्टाः ॥
[3]यथा जीवाः प्रकृतौ वध्यमाना
धर्माश्रितानामुपपीडनाय ।
एवं धर्मा राजधर्मैर्वियुक्ताः
सर्वावस्थं नाऽऽद्रियन्ते स्वधर्मम् ॥

यथेति । जीवाः मृगादयः प्राकृतैर्वध्यमानाः हन्तॄणां धर्मस्य श्रुतदृष्टादीनां च नाशाय भवन्ति । एवं राजधर्मैर्नीत्यादिभिर्वियुक्ता धर्माः अग्निहोत्रादयः चोरैर्नाश्यमानाः कर्तॄणां धर्मे चित्तं च खेदयन्ति । कर्तारश्च संचिन्वन्तः स्वास्थ्यमन्वेषयन्तः व्याकुलतया स्वधर्मे नाऽऽद्रियन्ते । तस्माद्राजधर्म एव मुख्यो धर्म इत्यर्थः । नीटी.

सर्ववर्णाश्रमधर्माश्रयः क्षात्रधर्मः प्रत्यक्षप्रमाणकः सर्वलोकहितः, आश्रमवासिनां धर्माश्च प्रत्यक्षप्रमाणागम्याः आगमगम्याः वादिनां निश्चयागोचराश्च

**भीष्म उवाच—**

[4]चातुराश्रम्यधर्माश्च जातिधर्माश्च पाण्डव ।
लोकपालोत्तराश्चैव क्षात्रे धर्मे व्यवस्थिताः ॥

[1]सर्वाण्येतानि धर्माणि क्षात्रे भरतसत्तम ।
निराशिषो जीवलोके क्षात्रे धर्मे व्यवस्थिताः ॥
[2]अप्रत्यक्षं बहुद्वारं धर्ममाश्रमवासिनाम् ।
प्ररूपयन्ति तद्भावमागमैरेव शाश्वतम् ॥

धर्मं बहुद्वारं विद्धि । अन्ये तु तद्भावं धर्मस्य स्वरूपं कोपयन्ति विरुद्धागमैः । नीटी.

[3]अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चयम् ।
अनिश्चयज्ञा धर्माणामदृष्टान्ते परे रताः ॥

अदृष्टान्ते न दृष्टः अन्तः यस्य तस्मिन् परे धर्मे हताः नष्टधियः निश्चयं प्रकोपयन्ति । नीटी.

[4]प्रत्यक्षसुखभूयिष्ठमात्मसाक्षिकमच्छलम् ।
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम् ॥
[5]धर्माश्रमव्यवसिनां ब्राह्मणानां युधिष्ठिर ।
यथा त्रयाणां वर्णानां संख्यातोपश्रुतिः पुरा ।
राजधर्मेष्वनुपमा लोक्या सुचरितैरिह ॥

गार्हस्थ्ये त्रयाणां वर्णानां धर्माणामुपश्रुतिः अन्तर्भावः । संख्याता प्रकटा । तथा अध्यवसिनां नैष्ठिकवानप्रस्थयतीनां ब्राह्मणानां च धर्माणामुपश्रुतिः संख्याता । तथा राजधर्मेषु धर्मैः सह लोका अन्तर्भूताः । इति सार्धः श्लोकः । नीटी.

[6]उदाहृतं ते राजेन्द्र यथा विष्णुं महौजसम् ।
सर्वभूतेश्वरं देवं प्रभुं नारायणं पुरा ।
जग्मुः सुबहवः शूरा राजानो दण्डनीतये ॥

अत्र पूर्वोक्तां कथां स्मारयति— उदाहृतमिति । सार्धः । नीटी.

---

(१) भा. १२।६३।२८; भामु. १२।६३।२८ न भवेयुर्विरुद्धाः (प्रक्षयेयुर्विबुद्धाः) गताः (हताः).

(२) भा. १२।६३।२९; भामु. १२।६३।२९ सर्वे योगा राजधमषु चोक्ताः (सर्वा विद्या राजधर्मेषु चोक्ताः) राजधर्मान् (राजधर्मे).

(३) भा. १२।६३।३०; भामु. १२।६३।३० प्रकृतौ (प्राकृतैः) धर्माश्रिता (धर्मश्रुता) सर्वावस्थं (संचिन्वन्तो).

(४) भा. १२।६४।१; भामु. १२।६४।१ जाति (यति) पालोत्तरा (वेदोत्तरा) क्षात्रे धर्मे व्यवस्थिताः (क्षात्रधर्मे समाहिताः).

(१) भा. १२।६४।२; भामु. १२।६४।२ धर्माणि (कर्माणि) उत्तरार्धे (निराशिषो जीवलोकाः क्षत्रधर्मे व्यवस्थिते ।).

(२) भा. १२।६४।३; भामु. १२।६४।३ प्ररूप (प्रकोप).

(३) भा. १२।६४।४; भामु. १२।६४।४ रताः (हताः).

(४) भा. १२।६४।५; भामु. १२।६४।५ प्रत्यक्ष (प्रत्यक्षं).

(५) भा. १२।६४।६; भामु. १२।६४।६–७ श्रमव्यव (श्रमेऽध्यव) पमा लोक्या (मता लोकाः) तैरिह (तैः सह).

(६) भा. १२।६४।७; भामु. १२।६४।७–८ सुबहवः (सुबहुशः).

[1]एकैकमात्मनः कर्म तुलयित्वाऽऽश्रमे पुरा ।
राजानः पर्युपातिष्ठन् दृष्टान्तवचने स्थिताः ॥

आश्रमं आश्रमविहितं कर्म धर्मे तुलयित्वा 'किं दण्डनीतिजो धर्मो महानुत आश्रमधर्मः' इति संदिह्य दृष्टान्तवचने सिद्धान्तं श्रोतुं प्रभुं उपासन्तेति योजना । नीटी.

[2]साध्या देवा वसवश्चाश्विनौ च
रुद्राश्च विश्वे मरुतां गणाश्च ।
सृष्टाः पुरा आदिदेवेन देवाः
क्षात्रे धर्मे वर्तयन्ते च सिद्धाः ॥

मान्धातुः इन्द्ररूपधरविष्णोश्च संवादः— लोकज्येष्ठः श्रेष्ठश्च राजधर्म एव, अन्ये धर्मा राजधर्मप्रसूताः

[3]अत्र ते वर्तयिष्यामि धर्ममर्थविनिश्चयम् ।
निर्मर्यादे वर्तमाने दानवैकायने कृते ।
बभूव राजा राजेन्द्र मान्धाता नाम वीर्यवान् ॥

अर्थस्य निश्चयो यत्र तम् । नीटी.

[4]पुरा वसुमतीपालो यज्ञं चक्रे दिदृक्षया ।
अनादिमध्यनिधनं देवं नारायणं प्रति ॥

[5]स राजा राजशार्दूल मान्धाता परमेष्ठिनः ।
जग्राह शिरसा पादौ यज्ञे विष्णोर्महात्मनः ॥

[6]दर्शयामास तं विष्णू रूपमास्थाय वासवम् ।
स पार्थिवैर्वृतः सद्भिरर्चयामास तं प्रभुम् ॥

वासवं ऐन्द्रं रूपम् । नीटी.

(१) भा. १२।६४।८ ; भामु. १२।६४।९ त्वाऽऽश्रमे (त्वाऽऽश्रमं) पर्युपातिष्ठन् (पर्युपासन्त).

(२) भा. १२।६४।९; भामु. १२।६४।१० आदि (ह्यादि).

(३) भा. १२।६४।१० ; भामु. १२।६४।११–१२ कायने कृते (कार्णवे पुरा).

(४) भा. १२।६४।११; भामु. १२।६४।१२–१३ प्रति (प्रभुम्).

(५) भा. १२।६४।१२; भामु. १२।६४।१३–१४ मेष्ठिनः (मेश्वरम्) जग्राह (जगाम).

(६) भा. १२।६४।१३; भामु. १२।६४।१४–१५.

[1]तस्य पार्थिवसंघस्य तस्य चैव महात्मनः ।
संवादोऽयं महानासीद्विष्णुं प्रति महाद्युते ॥

इन्द्र उवाच–

[2]किमिष्यते धर्मभृतां वरिष्ठ
यद्द्रष्टुकामोऽसि तमप्रमेयम् ।
अनन्तमायामितसत्त्ववीर्यं
नारायणं ह्यादिदेवं पुराणम् ॥

[3]नासौ देवो विश्वरूपो मयाऽपि
शक्यो द्रष्टुं ब्रह्मणा वाऽपि साक्षात् ।
येऽन्ये कामास्तव राजन्हृदिस्था
दास्यामि तांस्त्वं हि मर्त्येषु राजा ॥

[4]सत्ये स्थितो धर्मपरो जितेन्द्रियः
शूरो दृढं प्रीतिरतः सुराणाम् ।
बुद्ध्या भक्त्या चोत्तमश्रद्धया च
ततस्तेऽहं दद्मि वरं यथेष्टम् ॥

मान्धातोवाच–

[5]असंशयं भगवन्नादिदेवं
द्रक्ष्याम्यहं शिरसाऽहं प्रसाद्य ।
त्यक्त्वा भोगान्धर्मकामो ह्यरण्य-
मिच्छे गन्तुं सत्पथं लोकजुष्टम् ॥

त्वाऽहं त्वामहम् । नीटी.

(१) भा. १२।६४।१४; भामु. १२।६४।१५ संघस्य (सिंहस्य) महाद्युते (महाद्युतिम्).

(२) भा. १२।६४।१५; भामु. १२।६४।१६ सत्त्ववीर्यं (मन्त्रवीर्यं).

(३) भा. १२।६४।१६; भामु. १२।६४।१७ दास्यामि तांस्त्वं (दास्ये चैतांस्त्वं).

(४) भा. १२।६४।१७; भामु. १२।६४।१८ दृढं प्रीति (दृढप्रीति) वरं (वरान्).

(५) भा. १२।६४।१८; भामु. १२।६४।१९ द्रक्ष्याम्यहं शिरसाऽहं प्रसाद्य (द्रक्ष्यामि त्वाऽहं शिरसा संप्रसाद्य) भोगान् (कामान्) जुष्टम् (दृष्टम्).

[1]क्षात्राद्धर्माद्विपुलादप्रमेया-
लोकाः प्राप्ताः स्थापितं स्वं यशश्च ।
धर्मो योऽसावादिदेवात्प्रवृत्तो
लोकज्येष्ठस्तं न जानामि कर्तुम् ॥

तं क्षात्रधर्मात् श्रेष्ठं कर्तुं न जानामि । नीटी.

इन्द्र उवाच–

[2]असैनिकोऽधर्मपरश्चरेथाः
परां गतिं लप्स्यसे चाप्रमत्तः ।
क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः
पश्चादन्ये शेषभूताश्च धर्माः ॥

न सन्ति सैनिका येषां ते असैनिकाः अराजानः धर्मे विषये परां गतिं काष्ठां न नयन्ते न प्रापयन्ति अन्यं, स्वयं च न व्रजन्ति । राजानस्तु प्रयुक्तैर्धर्मैर्द्वयमपि कुर्वन्ति । ह्ययुक्तमिति पाठे हि प्रसिद्धं अयुक्तं अभिनिवेशशून्यं यथा स्यात्तथा । हेलयैव न नयन्त इत्यर्थः । शेषभूताः अङ्गभूताः । नीटी.

[3]शेषाः सृष्टा ह्यन्तवन्तो ह्यनन्ताः
सुप्रस्थानाः क्षत्रधर्माविशिष्टाः ।
अस्मिन्धर्मे सर्वधर्माः प्रविष्टा-
स्तस्माद्धर्मं श्रेष्ठमिमं वदन्ति ॥

सप्रस्थानाः पारिव्राज्यसहिताः शेषधर्माः अन्तवत्फलाः । अनन्ताः असंख्याताः । नीटी.

[4]कर्मणा वै पुरा देवा ऋषयश्चामितौजसः ।
त्राताः सर्वे प्रमथ्यारीन् क्षत्रधर्मेण विष्णुना ॥

कर्मणा क्रियया । नीटी.

[1]यदि ह्यसौ भगवान्नाहनिष्य-
द्रिपून्सर्वान्वसुमानप्रमेयः ।
न ब्राह्मणा न च लोकादिकर्ता
न सद्धर्मो नाऽऽदिधर्मो भवेयुः ॥

अयं क्षात्रः । आदिः ब्राह्मः । नीटी.

[2]इमामुर्वीं न जयेद्विक्रमेण
देवश्रेष्ठोऽसौ पुरा चेदमेयः ।
चातुर्वर्ण्यं चातुराश्रम्यधर्माः
सर्वे न स्युर्ब्रह्मणो वै विनाशात् ॥

[3]दृष्टा धर्माः शतधा शाश्वतेन
क्षात्रेण धर्मेण पुनः प्रवृत्ताः ।
युगे युगे ह्यादिधर्माः प्रवृत्ता
लोकज्येष्ठं क्षत्रधर्मं वदन्ति ॥

[4]आत्मत्यागः सर्वभूतानुकम्पा
लोकज्ञानं मोक्षणं पालनं च ।
विषण्णानां मोक्षणं पीडितानां
क्षात्रे धर्मे विद्यते पार्थिवानाम् ॥

आत्मत्यागः युद्धे मरणम् । नीटी.

[5]निर्मर्यादाः काममन्युप्रवृत्ता
भीता राज्ञो नाधिगच्छन्ति पापम् ।
शिष्टाश्चान्ये सर्वधर्मोपपन्नाः
साध्वाचाराः साधु धर्मं चरन्ति ॥

---

(१) भा. १२।६४।१९; भामु. १२।६४।२० ज्येष्ठस्तं (श्रेष्ठं तं).

(२) भा. १२।६४।२०; भामु. १२।६४।२१ पूर्वार्धे (असैनिका धर्मपराश्च धर्मे परां गतिं न नयन्ते ह्ययुक्तम् ।).

(३) भा. १२।६४।२१ ; भामु. १२।६४।२२ सुप्रस्थानाः क्षत्रधर्माविशिष्टाः ( सप्रस्थानाः क्षात्रधर्मा विशिष्टाः ).

(४) भा. १२।६४।२२; भामु. १२।६४।२३ प्रमथ्यारीन् (प्रसह्यारीन्).

(१) भा. १२।६४।२३ ; भामु. १२।६४।२४ भगवान् (भगवन्) न्वसुमान (नसुरान) न सद्धर्मो नाऽऽदिधर्मो भवेयुः (नायं धर्मो नाऽऽदिधर्मोऽभविष्यत्).

(२) भा. १२।६४।२४ ; भामु. १२।६४।२५ न जयेद्वि (नाजयद्वि) श्रेष्ठोऽसौ पुरा चेदमेयः (श्रेष्ठः सासुरामादिदेवः) ब्रह्मणो वै (ब्राह्मणानां).

(३) भा. १२।६४।२५; भामु. १२।६४।२६ दृष्टा (नष्टा) शाश्वतेन (शाश्वतास्ते) प्रवृत्ता (प्रवृद्धा) क्षत्रधर्मं (क्षात्रधर्मं).

(४) भा. १२।६४।२६ ; भामु. १२।६४।२७ मोक्षणं पालनं (पालनं मोक्षणं).

(५) भा. १२।६४।२७ ; भामु. १२।६४।२८ चरन्ति (वदन्ति).

[1]पुत्रवत्परिपाल्यानि लिङ्गधर्मेण पार्थिवैः ।
लोके भूतानि सर्वाणि विचरन्ति न संशयः ॥
[2]सर्वधर्मपरं क्षत्रं लोकज्येष्ठं सनातनम् ।
शश्वदक्षरपर्यन्तमक्षरं सर्वतोमुखम् ॥

अक्षरपर्यन्तं मोक्षावसानम् । नीटी.

इन्द्र उवाच—

[3]एवंवीर्यः सर्वधर्मोपपन्नः
क्षात्रः श्रेष्ठः सर्वधर्मेषु धर्मः ।
पाल्यो युष्माभिर्लोकसिंहैरुदारै-
र्विपर्यये स्यादभावः प्रजानाम् ॥
[4]भुवः संस्कारं राजसंस्कारयोग-
मभैक्षचर्यां पालनं च प्रजानाम् ।
विद्याद्राजा सर्वभूतानुकम्पां
देहत्यागं चाऽऽहवे धर्ममग्र्यम् ॥

भूसंस्कारं भुवः संपन्नसस्यत्वम् । राजसंस्कारः राजसूयाश्वमेधावभृथस्नानम् । अभैक्ष्यचर्यां संन्यासाभावम् । एतेन संन्यासो राज्ञामधर्म इत्युक्तम् । नीटी.

[5]त्यागं श्रेष्ठं मुनयो वै वदन्ति
सर्वश्रेष्ठो यः शरीरं त्यजेत ।
नित्यं त्यक्तं राजधर्मेषु सर्वं
प्रत्यक्षं ते भूमिपालाः सदैते ॥

(१) भा. १२।६४।२८; भामु. १२।६४।२९ त्परिपाल्यानि लिङ्ग (त्पाल्यमानानि राज) विचरन्ति न (चरन्ते नात्र).

(२) भा. १२।६४।२९; भामु. १२।६४।३० क्षत्रं (क्षात्रं) ज्येष्ठं (श्रेष्ठं).

(३) भा. १२।६५।१; भामु. १२।६५।१ सिंहै (हितै) दभावः (दभवः).

(४) भा. १२।६५।२; भामु. १२।६५।२ भुवः सं (भूसं) भैक्ष (भैक्ष्य) कम्पां (कम्पी).

(५) भा. १२।६५।३; भामु. १२।६५।३ श्रेष्ठो यः शरीरं त्यजेत (श्रेष्ठं यच्छरीरं त्यजन्तः) त्यक्तं (युक्ता) सर्वं (सर्वे) सदैते (यथैव).

यथैव शरीराणि त्यक्तवन्तः । नीटी.

[1]बहुश्रुत्या गुरुशुश्रूषया वा
परस्य वा संहननाद्वदन्ति ।
नित्यं धर्मं क्षत्रियो ब्रह्मचारी
चरेदेको ह्याश्रमं धर्मकामः ॥
[2]सामान्यार्थे व्यवहारे प्रवृत्ते
प्रियाप्रिये वर्जयन्नेव यत्नात् ।
चातुर्वर्ण्यस्थापनात्पालनाच्च
तैस्तैर्योगैर्नियमैरौरसैश्च ॥

औरसैः पौरुषैः । नीटी.

[3]सर्वोद्योगैराश्रमं धर्ममाहुः
क्षात्रं ज्येष्ठं सर्वधर्मोपपन्नम् ।
स्वं स्वं धर्मं ये न चरन्ति वर्णा-
स्तांस्तान्धर्मानयथावद्वदन्ति ॥

येन क्षात्रधर्मेण । अन्यथार्थान् तांस्तान् धर्मान् वदन्ति । नीटी.

[4]निर्मर्यादे नित्यमर्थे विनष्टा-
नाहुस्तान्वै पशुभूतान्मनुष्यान् ।
यथा नीतिं गमयत्यर्थलोभा-
च्छ्रेयांस्तस्मादाश्रमः क्षत्रधर्मः ॥

(१) भा. १२।६५।४; भामु. १२।६५।४ वा परस्य वा (च परस्पराः).

(२) भा. १२।६५।५; भामु. १२।६५।५ हारे प्र (हारप्र) वर्ण्यस्था (वर्ण्य स्था).

(३) भा. १२।६५।६; भामु. १२।६५।६ ज्येष्ठं (श्रेष्ठं) नयथावद्व (नन्यथार्थान् व).

(४) भा. १२।६५।७; भामु. १२।६५।७ निर्मर्यादे (निर्मर्यादान्) विनष्टानाहुस्तान्वै (निविष्टानाहुस्तांस्तान्वै) लोभाच्छ्रेयांस्तस्मादाश्रमः (योगाच्छ्रेयस्तस्मादाश्रमात्).

स्वधर्मच्युतो ब्राह्मणः शूद्रवद्वध्यः

[1]त्रैविद्यानां या गतिर्ब्राह्मणानां
यश्चैवोक्तोऽथाऽऽश्रमो ब्राह्मणानाम् ।
एतत्कर्म ब्राह्मणस्याऽऽहुरग्र्य-
मन्यत्कुर्वञ्शूद्रवच्छस्त्रवध्यः ॥

या गतिः यज्ञादिः आश्रमधर्मश्च एतद्द्वयम् ।
नीटी.

[2]चातुराश्रम्यधर्माश्च वेदधर्माश्च पार्थिव ।
ब्राह्मणेनानुगन्तव्या नान्यो विद्यात्कथंचन ॥

[3]अन्यथा वर्तमानस्य न सा वृत्तिः प्रकल्प्यते ।
कर्मणा व्यज्यते धर्मो यथैव श्वा तथैव सः ॥

[4]यो विकर्मस्थितो विप्रो न स सन्मानमर्हति ।
कर्मस्वनुपयुञ्जानमविश्वास्यं हि तं विदुः ॥

नोपयुञ्जानं नाऽऽचरन्तम् ।
नीटी.

[5]एते धर्माः सर्ववर्णाश्च वीरै-
रुत्क्रष्टव्याः क्षत्रियैरेष धर्मः ।
तस्माज्ज्येष्ठा राजधर्मा न चान्ये
वीर्यज्येष्ठा वीरधर्मा मता मे ॥

उत्क्रष्टव्याः उत्कर्षं प्रापणीयाः । एष धर्मः क्षत्रियस्य ।
नीटी.

(१) भा. १२।६५।८; भामु. १२।६५।८ यश्चैवोक्तोऽथाऽऽश्रमो ( ये चैवोक्ताश्चाश्रमा ).

(२) भा. १२।६५।९ ; भामु. १२।६५।९ कथंचन ( कदाचन ).

(३) भा. १२।६५।१० ; भामु. १२।६५।१० न सा ( नासौ) उत्तरार्धे ( कर्मणा वर्धते धर्मो यथा धर्मस्तथैव सः ।).

(४) भा. १२।६५।११ ; भामु. १२।६५।११ कर्मस्वनुप ( कर्म स्वं नोप ).

(५) भा. १२।६५।१२; भामु. १२।६५।१२ वर्णाश्च वीरैरु ( वर्णेषु लीना उ ) वीर्यज्येष्ठा ( वीरज्येष्ठा ).

यवनकिरातगान्धारचीनशबरबर्बरशकतुषारादीनां म्लेच्छानां
वैदिकधर्माधिकारः अहिंसासत्यमातृपित्राचार्य-
शुश्रूषापूर्तपाकयज्ञदानादिधर्म-
कर्तव्यता च

मान्धातोवाच–
[1]यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः ।
शकास्तुषाराः कह्वाश्च पह्लवाश्चान्ध्रमद्रकाः ॥
[2]ओड्राः पुलिन्दा रमठाः काचा म्लेच्छाश्च सर्वशः ।
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ॥
[3]कथं धर्मं चरेयुस्ते सर्वे विषयवासिनः ।
मद्विधैश्च कथं स्थाप्याः सर्वे ते दस्युजीविनः ॥

दस्युजीविनः दस्युवृत्तिजीविनः । संकरजानां चोराणां च कथं धर्मे स्थापनं कर्तव्यमिति प्रश्नार्थः ।
नीटी.

[4]एतदिच्छाम्यहं श्रोतुं भगवंस्तद्ब्रवीहि मे ।
त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ॥

इन्द्र उवाच–
[5]मातापित्रोर्हि कर्तव्या शुश्रूषा सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाऽऽश्रमवासिनाम् ॥

तेषामपि मात्रादिशुश्रूषारूपे धर्मे स्थापनं कर्तव्यमित्याह– मातेति ।
नीटी.

[6]भूमिपालानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥

(१) भा. १२।६५।१३; भामु. १२।६५।१३ कह्वाश्च ( कङ्काश्च ).

(२) भा. १२।६५।१४; भामु. १२।६५।१४ ओड्राः ( पौण्ड्राः ) काचा म्लेच्छाश्च ( काम्बोजाश्चैव ).

(३) भा. १२।६५।१५; भामु. १२।६५।१५ धर्मं चरेयुस्ते ( धर्मांश्चरिष्यन्ति ) सर्वे ते ( सर्वे वै ).

(४) भा. १२।६५।१६; भामु.

(५) भा. १२।६५।१७; भामु. १२।६५।१७ कर्तव्या शुश्रूषा ( शुश्रूषा कर्तव्या ).

(६) भा. १२।६५।१८; भामु. १२।६५।१८ पालानां ( पानां ).

[1]पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।
दानानि च यथाकालं द्विजेषु दद्युरेव ते ॥
[2]अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एव च ॥
[3]दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभिः ॥

पाकयज्ञमुद्दिश्य ब्राह्मणाय धनं देयम् । एवं श्राद्धमपि आमेन हिरण्येन चेति ज्ञेयम् । नीटी.

[4]एतान्येवंप्रकाराणि विहितानि पुराऽनघ ।
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव ॥

मान्धातोवाच –

[5]दृश्यन्ते मानवा लोके सर्ववर्णेषु दस्यवः ।
लिङ्गान्तरे वर्तमाना आश्रमेषु चतुर्ष्वपि ॥

न्यायनिष्ठः शाश्वतधर्मसंस्थापकः दण्डनीत्यनुसारी
धार्मिको राजा गुरुः देवरूपश्च

इन्द्र उवाच –

[6]विनष्टायां दण्डनीतौ राजधर्मे निराकृते ।
संप्रमुह्यन्ति भूतानि राजदौरात्म्यतो नृप ॥
[7]असंख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा ।
आश्रमाणां विकल्पाश्च निवृत्तेऽस्मिन्कृते युगे ॥
[8]अशृण्वानाः पुराणानां धर्माणां प्रवरा गतीः ।
उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः ॥

[1]यदा निवर्तते पापो दण्डनीत्या महात्मभिः ।
तदा धर्मो न चलते सद्भूतः शाश्वतः परः ॥

पापः पापादिति शेषः । नीटी.

[2]परलोकगुरुं चैव राजानं योऽवमन्यते ।
न तस्य दत्तं न हुतं न श्राद्धं फलति क्वचित् ॥
[3]मानुषाणामधिपतिं देवभूतं सनातनम् ।
देवाश्च बहु मन्यन्ते धर्मकामं नरेश्वरम् ॥
[4]प्रजापतिर्हि भगवान्यः सर्वमसृजज्जगत् ।
स प्रवृत्तिनिवृत्त्यर्थं धर्माणां क्षत्रमिच्छति ॥
[5]प्रवृत्तस्य हि धर्मस्य बुद्ध्या यः स्मरते गतिम् ।
स मे मान्यश्च पूज्यश्च तत्र क्षत्रं प्रतिष्ठितम् ॥

गतिं फलम् । आस्तिकत्वात्स मे मान्यः । नीटी.

भीष्म उवाच–

[6]एवमुक्त्वा स भगवान्मरुद्गणवृतः प्रभुः ।
जगाम भवनं विष्णुरक्षरं परमं पदम् ॥
[7]एवं प्रवर्तिते धर्मे पुरा सुचरितेऽनघ ।
कः क्षत्रमवमन्येत चेतनावान्बहुश्रुतः ॥
अन्यायेन प्रवृत्तानि निवृत्तानि तथैव च ।
अन्तरा विलयं यान्ति यथा पथि विचक्षुषः ॥

अन्यायेन क्षत्रधर्मावज्ञया । नीटी.

आदौ प्रवर्तिते चक्रे तथैवाऽऽदिपरायणे ।
वर्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ ॥

---

(१) भा. १२।६५।१९; भामु. १२।६५।१९ द्विजेषु दद्युरेव ते ( द्विजेभ्यो विसृजेत्सदा ).

(२) भा. १२।६५।२०; भामु.

(३) भा. १२।६५।२१; भामु. १२।६५।२१ कर्तव्याः ( दातव्याः ).

(४) भा. १२।६५।२२; भामु.

(५) भा. १२।६५।२३; भामु. १२।६५।२३ मानवा ( मानुषे ).

(६) भा. १२।६५।२४; भामु. १२।६५।२४ नीतौ (नीत्यां) तो नृप ( तोऽनघ ).

(७) भा. १२।६५।२५; भामु.

(८) भा. १२।६५।२६; भामु. १२।६५।२६ प्रवरा (परमा).

(१) भा. १२।६५।२७; भामु.

(२) भा. १२।६५।२८; भामु. १२।६५।२८ परलोक ( सर्वलोक ) फलति ( फलते ).

(३) भा. १२।६५।२९; भामु. १२।६५।२९ देवाश्च बहु ( देवाऽपि नाव ).

(४) भा. १२।६५।३०; भामु. १२।६५।३० यः सर्वमसृज ( सर्वं चैवासृज ).

(५) भा. १२।६५।३१; भामु.

(६) भा. १२।६५।३२; भामु. १२।६५।३२ विष्णुरक्षरं परमं ( विष्णोरक्षरं शाश्वतं ).

(७) भा. १२।६५।३३–३५; भामु.

चक्रे धातुराज्ञायां आदिपरायणे पूर्वेषां शरणभूते वर्तस्व। ते त्वां संविजानामि सम्यक्समर्थोऽसीति जानामि। नीटी.

चराचरसर्वभूतरक्षकः आत्मौपम्येन सर्वभूतदर्शी जित-कामद्वेषः प्रजापालो राजा सर्ववर्णसर्वाश्रमश्रेयोभाक्

युधिष्ठिर उवाच–

[1]श्रुता मे कथिताः पूर्वैश्चत्वारो मानवाश्रमाः।
व्याख्यानमेषामाचक्ष्व पृच्छतो मे पितामह ॥

मानवस्य मनुष्यमात्रस्य आश्रमाश्चत्वार इति श्रुतं, तत्कथं दस्यूनामप्युत्तमाश्रमयोगः ? एषां आश्रमाणां व्याख्यानं स्पष्टीकरणं व्याख्यानयित्वा विस्तरं नीत्वा आचक्ष्व। व्याख्यानयित्वेति नामधातुपदम्। नीटी.

भीष्म उवाच–

[2]विदिताः सर्व एवेह धर्मास्तव युधिष्ठिर।
यथा मम महाबाहो विदिताः साधुसंमताः ॥

यथा मम विदितास्तथा तव विदिताः इत्यन्वयः। नीटी.

यत्तु लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर।
धर्मं धर्मभृतां श्रेष्ठ तन्निबोध नराधिप ॥

लिङ्गस्य सूक्ष्मस्यापि अन्तरं कारणं हार्दाकाशं तद्गतं सर्वज्ञमित्यर्थः। नीटी.

[3]सर्वाण्येतानि कौन्तेय विद्यन्ते मनुजर्षभ।
साध्वाचारप्रवृत्तानां चातुराश्रम्यकर्मणाम् ॥

एतानि चातुराश्रम्यकारिणां लिङ्गानि सतां राज्ञां राजधर्मेष्वेव वर्तन्ते इत्यर्थः। नीटी.

[4]अकामद्वेषयुक्तस्य दण्डनीत्या युधिष्ठिर।
समेक्षिणश्च भूतेषु भैक्षाश्रमपदं भवेत् ॥

अत्र यो यस्याऽऽश्रमस्य असाधारणो धर्मः, स यत्र कुत्रचिदाश्रमे यस्यां कस्यांचिज्जातौ दृष्टश्चेत्स तदाश्रमधर्म-प्राप्यं स्थानमाप्नोति, न तूत्तमपदप्राप्तौ जातिराश्रमो वा कारणमित्यध्यायार्थः। तमाह– अकामेत्यादिना। काम-द्वेषराहित्यं समदर्शित्वं च यतेरसाधारणो धर्मस्तद्वान् राजा यदि दण्डनीत्या भूतेषु वर्तेत तर्हि तस्य यद्भैक्ष्याश्रमस्य संन्यासिनो यत्पदं ब्रह्मलोकप्राप्तिस्तद्भवेत्। एवं सर्वत्र ज्ञेयम्। नीटी.

[1]वेत्त्यादानविसर्गं यो निग्रहानुग्रहौ तथा।
यथोक्तवृत्तेर्वीरस्य क्षेमाश्रमपदं भवेत् ॥

क्षेमाश्रमः गार्हस्थ्यम्। नीटी.

[2]अर्हान् पूजयतो नित्यं संविभागेन पाण्डव।
सर्वतस्तस्य कौन्तेय भैक्ष्याश्रमपदं भवेत् ॥

[3]ज्ञातिसंबन्धिमित्राणि व्यापन्नानि युधिष्ठिर।
समभ्युद्धरमाणस्य दीक्षाश्रमपदं भवेत् ॥

दीक्षाश्रमः वैखानसः। नीटी.

[4]लोकमुख्येषु सत्कारं लिङ्गिमुख्येषु चासकृत्।
कुर्वतस्तस्य कौन्तेय वन्याश्रमपदं भवेत् ॥

[5]आह्निकं भूतयज्ञांश्च पितृयज्ञांश्च मानुषान्।
कुर्वतः पार्थ विपुलान् वन्याश्रमपदं भवेत् ॥

[6]संविभागेन भूतानामतिथीनां तथाऽर्चनात्।
देवयज्ञैश्च राजेन्द्र वन्याश्रमपदं भवेत् ॥

मर्दनं परराष्ट्राणां शिष्टार्थं सत्यविक्रम।
कुर्वतः पुरुषव्याघ्र वन्याश्रमपदं भवेत् ॥

---

(१) भा. १२।६६।१; भामु. १२।६६।१ पूर्वैः (पूर्वे) उत्तरार्धे (व्याख्यानयित्वा व्याख्यानमेषामाचक्ष्व पृच्छतः।).

(२) भा. १२।६६।२—३ ; भामु.

(३) भा. १२।६६।४ ; भामु. १२।६६।४ कर्मणाम् (कारिणाम्).

(४) भा. १२।६६।५ ; भामु. १२।६६।५ समेक्षिणश्च (समदर्शिनश्च).

(१) भा. १२।६६।६; भामु. १२।६६।६ वेत्त्यादानविसर्गं यो (वेत्ति ज्ञानविसर्गं च) ग्रहौ (ग्रहं) वीरस्य (धीरस्य).

(२) भामु. १२।६६।७.

(३) भा. १२।६६।७ ; भामु. १२।६६।८.

(४) भामु. १२।६६।९.

(५) भा. १२।६६।८ ; भामु. १२।६६।१० भूतयज्ञांश्च पितृयज्ञांश्च मा (पितृयज्ञांश्च भूतयज्ञान् समा).

(६) भामु. १२।६६।११–१२.

परराष्ट्राणां वनौषधीनामिव शिष्टार्थे शिष्टसंरक्षणार्थे कुर्वन् वनितुल्यः । नीटी.

[1]पालनात्सर्वभूतानां स्वराष्ट्रपरिपालनात् ।
दीक्षा बहुविधा राज्ञो वन्याश्रमपदं भवेत् ॥

दीक्षा बहुविधेति । यावतां पालनं तावन्तो यज्ञाः कृता इत्यर्थः । सत्याश्रमः ब्रह्मलोकप्रदः आश्रमः संन्यासः । नीटी.

[2]वेदाध्ययननित्यत्वं क्षमाऽथाऽऽचार्यपूजनम् ।
तथोपाध्यायशुश्रूषा ब्रह्माश्रमपदं भवेत् ॥

[3]आह्निकं जपमानस्य देवान् पूजयतः सदा ।
धर्मेण पुरुषव्याघ्र धर्माश्रमपदं भवेत् ॥
मृत्युर्वा रक्षणं वेति यस्य राज्ञो विनिश्चयः ।
प्राणद्यूते ततस्तस्य ब्रह्माश्रमपदं भवेत् ॥

[4]अजिह्ममशठं मार्गं सेवमानस्य भारत ।
सर्वदा सर्वभूतेषु ब्रह्माश्रमपदं भवेत् ॥

[5]वानप्रस्थेषु विप्रेषु त्रैविद्येषु च भारत ।
प्रयच्छतोऽर्थान् विपुलान् वन्याश्रमपदं भवेत् ॥

[6]सर्वभूतेष्वनुक्रोशं कुर्वतस्तस्य भारत ।
आनृशंस्यप्रवृत्तस्य सर्वावस्थं पदं भवेत् ॥

अनुक्रोशं दयाम् । आनृशंस्यं अनिष्ठुरत्वम् । नीटी.

[7]बालवृद्धेषु कौरव्य सर्वावस्थं युधिष्ठिर ।
अनुक्रोशं विदधतः सर्वावस्थं पदं भवेत् ॥

(१) भा. १२।६६।९; भामु. १२।६६।१३ राज्ञो वन्या (राजन् सत्या).

(२) भा. १२।६६।१०; भामु. १२।६६।१४ तथो (अथो).

(३) भामु. १२।६६।१५–१६.

(४) भा. १२।६६।११; भामु. १२।६६।१७ सेवमानस्य (वर्तमानस्य).

(५) भा. १२।६६।१२; भामु. १२।६६।१८.

(६) भा. १२।६६।१३; भामु. १२।६६।१९.

(७) भा. १२।६६।१४; भामु. १२।६६।२० कौरव्य (कौन्तेय) क्रोशं विदधतः (क्रोशक्रिया पार्थ).

[1]बलात्कृतेषु भूतेषु परित्राणं कुरूद्वह ।
शरणागतेषु कौरव्य कुर्वन् गार्हस्थ्यमावसेत् ॥

[2]चराचराणां भूतानां रक्षामपि च सर्वशः ।
यथार्हपूजां च सदा कुर्वन् गार्हस्थ्यमावसेत् ॥

[3]ज्येष्ठानुज्येष्ठपत्नीनां भ्रातॄणां पुत्रनप्तॄणाम् ।
निग्रहानुग्रहौ पार्थ गार्हस्थ्यमिति तत्तपः ॥

[4]साधूनामर्चनीयानां प्रजासु विदितात्मनाम् ।
पालनं पुरुषव्याघ्र गृहाश्रमपदं भवेत् ॥

[5]आश्रमस्थानि सर्वाणि यस्तु वेश्मनि भारत ।
आददीतेह भोज्येन तद्गार्हस्थ्यं युधिष्ठिर ॥

[6]यः स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत् ।
आश्रमाणां स सर्वेषां फलं प्राप्नोत्यनुत्तमम् ॥

[7]यस्मिन्न नश्यन्ति गुणाः कौन्तेय पुरुषे सदा ।
आश्रमस्थं तमप्याहुर्नरश्रेष्ठं युधिष्ठिर ॥

[8]स्थानमानं वयोमानं कुलमानं तथैव च ।
कुर्वन्वसति सर्वेषु ह्याश्रमेषु युधिष्ठिर ॥

[9]देशधर्मांश्च कौन्तेय कुलधर्मांस्तथैव च ।
पालयन्पुरुषव्याघ्र राजा सर्वाश्रमी भवेत् ॥

(१) भा. १२।६६।१५; भामु. १२।६६।२१.

(२) भा. १२।६६।१६; भामु. १२।६६।२२ रक्षामपि च (रक्षण चापि) सदा (तथा).

(३) भा. १२।६६।१७; भामु. १२।६६।२३.

(४) भा. १२।६६।१८; भामु. १२।६६।२४ प्रजासु (पूजासु).

(५) भा. १२।६६।१९; भामु. १२।६६।२५ सर्वाणि (भूतानि).

(६) भा. १२।६६।२०; भामु. १२।६६।२६ णां स (णां हि) त्यनुत्तमम् (त्यनामयम्).

(७) भा. १२।६६।२१; भामु. १२।६६।२७.

(८) भा. १२।६६।२२; भामु. १२।६६।२८ वयोमानं कुलमानं (कुले मानं वयोमानं).

(९) भा. १२।६६।२३; भामु. १२।६६।२९.

[1]काले विभूतिं भूतानामुपहारांस्तथैव च ।
अर्हयन्पुरुषव्याघ्र साधूनामाश्रमे वसेत् ॥
[2]दशधर्मगतश्चापि यो धर्मं प्रत्यवेक्षते ।
सर्वलोकस्य कौन्तेय राजा भवति सोऽऽश्रमी ॥

दशधर्मगतः भीतत्वादिनाऽत्यन्तं व्याकुलतया धर्माधर्मप्रतिपत्तिशून्योऽपि, सोऽऽश्रमी स आश्रमी सर्वाश्रमफलभागित्यर्थः । नीटी.

[3]ये धर्मकुशला लोके धर्मं कुर्वन्ति साधवः ।
पालिता यस्य विषये पादोंऽशस्तस्य भूपतेः ॥
[4]धर्मारामान्धर्मपरान् ये न रक्षन्ति मानवान् ।
पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ॥
[5]ये च रक्षासहायाः स्युः पार्थिवानां युधिष्ठिर ।
ते चैवांशहराः सर्वे धर्मे परकृतेऽनघ ॥
[6]सर्वाश्रमपदे ह्याहुर्गार्हस्थ्यं दीप्तनिर्णयम् ।
पावनं पुरुषव्याघ्र यं वयं पर्युपास्महे ॥
[7]आत्मोपमस्तु भूतेषु यो वै भवति मानवः ।
न्यस्तदण्डो जितक्रोधः स प्रेत्य लभते सुखम् ॥
[8]धर्मोत्थिता सत्त्ववीर्या धर्मसेतुवटाकरा ।
त्यागवाताध्वगा शीघ्रा नौस्त्वा संतारयिष्यति ॥

राजधर्मात्मिका नौः धर्मेऽब्धाविव स्थिता । सत्त्वमेव वीर्यं कर्णधारबलं यत्र । धर्मसेतुः शास्त्रं सैव वटारका बन्धनरज्जुर्यत्र । त्यागवातेनेव शीघ्रगा । नीटी.

(१) भा. १२।६६।२४; भामु. १२।६६।३०.
(२) भा. १२।६६।२५; भामु. १२।६६।३१.
(३) भा. १२।६६।२६; भामु. १२।६६।३२ साधवः (भारत) पादोंऽश (धमाश).
(४) भा. १२।६६।२७; भामु. १२।६६।३३.
(५) भा. १२।६६।२८; भामु. १२।६६।३४ च रक्षासहायाः (चाप्यत्र सहायाः).
(६) भा. १२।६६।२९; भामु. १२।६६।३५ ह्याहु (प्याहु) वयं (धम).
(७) भा. १२।६६।३०; भामु. १२।६६।३६ स प्रेत्य (प्रेत्येह).
(८) भा. १२।६६।३१; भामु. १२।६६।३७ धर्मोत्थिता (धर्मे स्थिता) वटाकरा (वटारका) नास्त्वा (नौस्तं).

[1]यदा निवृत्तः सर्वस्मात्कामो योऽस्य हृदि स्थितः ।
तदा भवति सत्त्वस्थस्ततो ब्रह्म समश्नुते ॥

सत्त्वस्थः धीसत्त्वमात्रनिष्ठः । नीटी.

[2]सुप्रसन्नस्तु भावेन योगेन च नराधिप ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥

भावेन चेतसा । योगेन चित्तनिरोधेन । नीटी.

[3]वेदाध्ययनशीलानां विप्राणां साधुकर्मणाम् ।
पालने यत्नमातिष्ठ सर्वलोकस्य चानघ ॥
[4]वने चरति यो धर्ममाश्रमेषु च भारत ।
रक्षया तच्छतगुणं धर्मं प्राप्नोति पार्थिवः ॥
[5]एष ते विविधो धर्मः पाण्डवश्रेष्ठ कीर्तितः ।
अनुतिष्ठ त्वमेनं वै पूर्वैर्दृष्टं सनातनम् ॥

पूर्वं अनादिम् । सनातनं पारंपर्यागतम् । नीटी.

[6]चातुराश्रम्यमेकाग्रश्चातुर्वर्ण्यं च पाण्डव ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥

अध्यायार्थमुपसंहरति– चातुराश्रम्यमिति । नीटी.

अङ्गिरोमते धर्मतः प्रजापालनं राज्ञः सर्वकर्मसु श्रेष्ठम्

[7]धर्मश्चार्थश्च कामश्च सेवितव्योऽथ कालतः ।
धर्मेण हि महीपालश्चिरं पालयते महीम् ॥
[8]अस्मिन्नर्थे च यौ श्लोकौ गीतावङ्गिरसा स्वयम् ।
यादवीपुत्र भद्रं ते श्रोतुमर्हसि तावपि ॥

(१) भा. १२।६६।३२; भामु. १२।६६।३८.
(२) भा. १२।६६।३३; भामु. १२।६६।३९ प्राप्स्यसे (प्राप्स्यते).
(३) भा. १२।६६।३४; भामु. १२।६६।४० चानघ (चैव ह).
(४) भा. १२।६६।३५; भामु. १२।६६।४१ चरति यो (चरन्ति ये) रक्षया (रक्षणात्).
(५) भा. १२।६६।३६; भामु. १२।६६।४२ पूर्वैर्दृष्टं (पूर्वदृष्टं).
(६) भा. १२।६६।३७; भामु. १२।६६।४३ मेकाग्रः (मैकाग्र्यं).
(७) भा. १२।६९।६८; भामु. १२।६९।७० धर्मेण हि (धर्मेण च).
(८) भा. १२।६९।६९; भामु. १२।६९।७१ यौ श्लोकौ (श्लोकौ द्वौ) श्रोतुमर्हसि तावपि (तावपि श्रोतुमर्हसि).

[1]कृत्वा सर्वाणि कार्याणि सम्यक् संपाल्य मेदिनीम् ।
पालयित्वा तथा पौरान् परत्र सुखमेधते ॥
[2]किं तस्य तपसा राज्ञः किं च तस्याध्वरैरपि ।
अपालिताः प्रजा यस्य सर्वा धर्मविनाकृताः ॥

औशनसमते राज्ञः विजयफलानि कर्माणि

[3]श्लोकाश्चोशनसा गीतास्तान्निबोध युधिष्ठिर ।
दण्डनीतेश्च यन्मूलं त्रिवर्गस्य च भूपते ॥
भार्गवाङ्गिरसं कर्म षोडशाङ्गं च यद्बलम् ।
विषं मायाश्च दैवं च पौरुषं चार्थसिद्धये ॥
प्रागुदक्प्रवणं दुर्गं समासाद्य महीपतिः ।
त्रिवर्गत्रयसंपूर्णमुपादाय तमुद्वहेत् ॥
षट् पञ्च च विनिर्जित्य दश चाष्टौ च भूपतिः ।
त्रिवर्गैर्दशभिर्युक्तः सुरैरपि न जीयते ॥
न बुद्धिं परिगृह्णीत स्त्रीणां मूर्खजनस्य च ।
दैवोपहतबुद्धीनां ये च वेदैर्विवर्जिताः ।
न तेषां शृणुयाद्राजा बुद्धिस्तेषां पराङ्मुखी ॥
स्त्रीप्रधानानि राज्यानि विद्वद्भिर्वर्जितानि च ।
मूर्खामात्यप्रतप्तानि शुष्यन्ते जलबिन्दुवत् ॥
विद्वांसः प्रथिता ये च ये चाऽऽप्ताः सर्वकर्मसु ।
युद्धेषु दृष्टकर्माणस्तेषां च शृणुयान्नृपः ॥
दैवं पुरुषकारं च त्रिवर्गं च समाश्रितः ।
दैवतानि च विप्रांश्च प्रणम्य विजयी भवेत् ॥

(१) भा. १२।६९।७०; भामु. १२।६९।७२.

(२) भा. १२।६९।७१; भामु. १२।६९।७३ उत्तरार्धे (सुपालितप्रजो यः स्यात् सर्वधर्मविदेव सः ।).

(३) एते अष्टौ श्लोकाः भा. १२।६९।७१ इत्यतः परं टिप्पणीस्थाः ।

राजप्रयुक्तया दण्डनीत्यैव स्वधर्मस्थापना अधर्मनिवृत्तिश्च

युधिष्ठिर उवाच –
[1]दण्डनीतिश्च राजा च समस्तौ तावुभावपि ।
कस्य किं कुर्वतः सिद्ध्यै तन्मे ब्रूहि पितामह ॥
अत्राध्यायं केचित्समापयन्ति । इदं द्वयं समस्तं च व्यस्तं च । तत्र केन कस्य किं क्रियते इति प्रश्नत्रयम् । नीटी.

भीष्म उवाच –
[2]महाभाग्यं दण्डनीत्याः सिद्धैः शब्दैः सहेतुकैः ।
शृणु मे शंसतो राजन्यथावदिह भारत ॥
दण्डनीत्याः सकाशाद्राज्ञां प्रजानां च यत् महाभाग्यं तत् शृणु । नीटी.
[3]दण्डनीतिः स्वधर्मेभ्यश्चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति ॥
तत्र दण्डनीत्या राजा स्वर्गादिकं प्राप्नोति, राज्ञां च दण्डनीतिः कृतादीन् जनयति, तावुभौ च प्रजानां क्षेमं जनयत इत्युत्तरमाह– दण्डनीतिरित्यादिना । स्वधर्मेभ्यः स्वधर्मार्थम् । अधर्मेभ्य इति पञ्चमी । नीटी.
[4]चातुर्वर्ण्ये स्वधर्मस्थे मर्यादानामसंकरे ।
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ॥
असंकरे तद्रूपे क्षेमे । नीटी.
[5]सोमे प्रयत्नं कुर्वन्ति त्रयो वर्णा यथाविधि ।
तस्माद्देवमनुष्याणां सुखं विद्धि समाहितम् ॥
स्वाम्ये स्वास्थ्ये तन्निमित्तम् । तस्मात् क्षेमाख्याद्संकरात् । नीटी.

(१) भा. १२।७०।१ ; भामु. १२।६९।७४ सिद्ध्यै (सिध्येत्).

(२) भा. १२।७०।२; भामु. १२।६९।७५.

(३) भा. १२।७०।३ ; भामु. १२।६९।७६ भ्यश्च यच्छति (भ्यो नियच्छति ).

(४) भा. १२।७०।४ ; भामु. १२।६९।७७ स्वधर्मस्थे (स्वकर्मस्थे ).

(५) भा. १२।७०।५ ; भामु. १२।६९।७८ सोमे (स्वाम्ये ) तस्माद्देव ( तस्मादेव ).

राजा कालस्य कारणं यतः राजप्रयुक्तदण्डनीतेः सम्यक्त्वासम्यक्त्वयोरधीना चतुर्युगप्रवृत्तिः, राजकृतचतुर्युगलक्षणानि

[१]कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥

[२]दण्डनीत्या यदा राजा सम्यक्कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥

[३]भवेत्कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् ।
सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥

[४]योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ।
वैदिकानि च कर्माणि भवन्त्यविगुणान्युत ॥

[५]ऋतवश्च सुखाः सर्वे भवन्त्युत निरामयाः ।
प्रसीदन्ति नराणां च स्वरवर्णमनांसि च ॥

[६]व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः ।
विधवा न भवन्त्यत्र नृशंसो नाभिजायते ॥

[७]अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा ।
त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च ॥

[८]नाधर्मो विद्यते तत्र धर्म एव तु केवलः ।
इति कार्तयुगानेतान् गुणान् विद्धि युधिष्ठिर ॥

(१) भा. १२।७०।६ ; भामु. १२।६९।७९ ; पमा. ३९३.

(२) भा. १२।७०।७; भामु. १२।६९।८० नीत्या (नीत्यां) कालः श्रेष्ठः (कालसृष्टं).

(३) भा. १२।७०।८; भामु. १२।६९।८१ भवेत् (ततः).

(४) भा. १२।७०।९ ; भामु. १२।६९।८२ कर्माणि (सर्वाणि) भवन्त्यवि (भवन्त्यपि).

(५) भा. १२।७०।१०; भामु. १२।६९।८३.

(६) भा. १२।७०।११; भामु. १२।६९।८४ नृशंसो नाभि (कृपणो न तु).

(७) भा. १२।७०।१२; भामु. १२।६९।८५.

(८) भा. १२।७०।१३; भामु. १२।६९।८६ केवलः (केवलम्) गुणान् (धर्मान्).

[१]दण्डनीत्या यदा राजा त्रीनंशाननुवर्तते ।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥

[२]अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्तते ।
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ॥

अशुभस्य अधर्मस्य । नीटी.

अर्धं त्यक्त्वा यदा राजा नीत्यर्धमनुवर्तते ।
ततस्तु द्वापरं नाम स कालः संप्रवर्तते ॥

[३]अशुभस्य तदा अर्धं द्वावंशावनुवर्तते ।
कृष्टपच्यैव पृथिवी भवत्यल्पफला तथा ॥

[४]दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः ।
प्रजाः क्लिश्नात्ययोगेन प्रविश्यति तदा कलिः ॥

अयोगेन अनुपायेन । नीटी.

[५]कलावधर्मो भूयिष्ठं धर्मो भवति तु क्वचित् ।
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥

[६]शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया ।
योगक्षेमस्य नाशश्च वर्तते वर्णसंकरः ॥

[७]वैदिकानि च कर्माणि भवन्ति विगुणान्युत ।
ऋतवो नसुखाः सर्वे भवन्त्यामयिनस्तथा ॥

[८]ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत ।
व्याधयश्च भवन्त्यत्र म्रियन्ते चागतायुषः ॥

(१) भा. १२।७०।१४; भामु. १२।६९।८७ नीत्या (नीत्यां).

(२) भा. १२।७०।१५--१६ ; भामु. १२।६९। ८८–८९.

(३) भा. १२।७०।१७; भामु. १२।६९।९० तदा अर्धं (यदा त्वर्धं) भवत्यल्प (भवत्यर्ध).

(४) भा. १२।७०।१८; भामु. १२।६९।९१ प्रविश्यति (प्रवतत).

(५) भा. १२।७०।१९; भामु. १२।६९।९२ तु क्व (न क्व).

(६) भा. १२।७०।२०; भामु. १२।६९।९३.

(७) भा. १२।७०।२१; भामु. १२।६९।९४.

(८) भा. १२।७०।२२; भामु. १२।६९।९५ चागता (च गता).

[1]विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा ।
कचिद्वर्षति पर्जन्यः कचित्सस्यं प्ररोहति ॥
रसाः सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः ।
प्रजाः संरक्षितुं सम्यग्दण्डनीतिसमाहितः ॥
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥

चतुर्थस्य कलेः । नीटी.

कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
प्रजानां कल्मषे मग्नोऽकीर्तिं पापं च विन्दति ॥
दण्डनीतिं पुरस्कृत्य विजानन्क्षत्रियः सदा ।
अनवाप्तं च लिप्सेत लब्धं च परिपालयेत् ॥
[2]लोकस्य सीमन्तकरी मर्यादा लोकभावनी ।
सम्यङ्नीता दण्डनीतिर्यथा माता यथा पिता ॥

सीमन्तकरी व्यवस्थापिका । नीटी.

[3]यस्यां भवन्ति भूतानि तद्विद्धि भरतर्षभ ।
एष एव परो धर्मो यद्राजा दण्डनीतिमान् ॥
[4]तस्मात्कौरव्य धर्मेण प्रजाः पालय नीतिमान् ।
एवंवृत्तः प्रजा रक्षन्स्वर्गं जेताऽसि दुर्जयम् ॥

(१) भा. १२।७०।२३–२९; भामु. १२।६९।९६–१०२.

(२) भा. १२।७०।३०; भामु. १२।६९।१०३ भावनी ( भाविनी ).

(३) भा. १२।७०।३१; भामु. १२।६९।१०४ भरत मनु ॥

(४) भा. १२।७०।३२; भामु. १२।६९।१०५.

रक्षितप्रजानुष्ठितधर्मस्य चतुर्थांशभाक् अरक्षितप्रजाकृतपापस्यार्धांशभाक् च राजा

युधिष्ठिर उवाच—

[1]यया वृत्त्या महीपालो विवर्धयति मानवान् ।
पुण्यांश्च लोकाञ्जयति तन्मे ब्रूहि पितामह ॥

एवं कृतपुरोहितो राजा कथं प्रजावृद्ध्या परलोकं जयेदिति पृच्छति– यथेति । नीटी.

भीष्म उवाच—

[2]दानशीलो भवेद्राजा यज्ञशीलश्च भारत ।
उपवासतपःशीलः प्रजानां पालने रतः ॥

तत्र प्रजावृद्धिप्रकारमाह– दानेति । नीटी.

[3]सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयेत् ।
उत्थानेनाप्रमादेन पूजयेच्चैव धार्मिकान् ॥

उत्थानेन नित्योद्योगेन । नीटी.

[4]राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते ।
यद्यदाचरते राजा तत्प्रजानां हि रोचते ॥
[5]नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु ।
निहन्यात्सर्वतो दस्यून्न कामात्कस्यचित्क्षमेत् ॥
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भारत विन्दति ॥

परलोकजयप्रकारमाह– यं हीति । नीटी.

[6]यदधीते यद्यजते यद्ददाति यदर्चति ।
राजा चतुर्थभाक्तस्य प्रजा धर्मेण पालयन् ॥

(१) भा. १२।७६।१; भामु. १२।७५।१ यया (यथा).

(२) भा. १२।७६।२; भामु. १२।७५।२.

(३) भा. १२।७६।३; भामु. १२।७५।३ पालयेत् (पालयन्) नाप्रमादेन (न प्रदानेन) चैव (चापि); पमा. ३९६ नाप्रमादेन (न प्रसादेन) चैव (चापि).

(४) भा. १२।७६।४; भामु. १२।७५।४ हि रोचते (स्म रोचते); पमा. ३९६ हि रोचते (च रोचते).

(५) भा. १२।७६।५-६; भामु. १२।७५।५-६.

(६) भा. १२।७६।७; भामु. १२।७५।७ यद्यजते यद्ददाति (यद्ददाति यज्जुहोति); पमा. ३९६ यदधीते यद्यजते (यजते यदधीते च) चतुर्थं (षड्भाग).

यदधीते ब्राह्मणादिः । नीटी.

[1]यद्राष्ट्रेऽकुशलं किंचिद्राज्ञोऽरक्षयतः प्रजाः ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ।
अप्याहुः सर्वमेवेति भूयोऽर्धमिति निश्चयः ॥

[2]कर्मणः पृथिवीपाल नृशंसोऽनृतवागपि ।
तादृशात्किल्बिषाद्राजा शृणु येन प्रमुच्यते ॥

विपक्षे दोषमाह— यद्राष्ट्र इति । अकुशलमिति च्छेदः । नृशंसः अनृतवाक् च यत्कर्म करोति तस्य कर्मणः सर्वं यत् ततो भूयो वा पापमाप्नोतीत्यन्ये आहुः । निश्चयस्त्वर्धमित्यर्थः । नीटी.

केकयराजेन धर्मतो रक्षितं उत्कृष्टं धार्मिकं राष्ट्रम्

युधिष्ठिर उवाच—

[3]केषां राजा प्रभवति वित्तस्य भरतर्षभ ।
कया च वृत्त्या वर्तेत तन्मे ब्रूहि पितामह ॥

भीष्म उवाच—

[4]अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् ।
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत ॥

विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथंचन ।
इति राज्ञां पुरावृत्तमभिजल्पन्ति साधवः ॥

यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते किल्बिषं नृप ॥

[5]अभिशस्तमिवाऽऽत्मानं मन्यन्ते तेन कर्मणा ।
तस्माद्राजर्षयः सर्वे ब्राह्मणानन्वपालयन् ॥

(१) भा. १२।७६।८ ; भामु. १२।७५।८-९ ऽरक्षयतः ( रक्षयतः ).

(२) भा. १२।७६।९; भामु. १२।७५।९-१०.

(३) भा. १२।७८।१; भामु. १२।७७।१ राजा प्रभवति ( प्रभवते राजा ).

(४) भा. १२।७८।२-४; भामु. १२।७७।२-४.

(५) भा. १२।७८।५; भामु. १२।७७।५ तेन (येन).

येन ब्राह्मणानामपालनेन । नीटी.

[1]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं केकयराजेन ह्रियमाणेन रक्षसा ॥

[2]केकयानामधिपतिं रक्षो जग्राह दारुणम् ।
स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतम् ॥

राजोवाच—

न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाहिताग्निर्नायज्वा मामकान्तरमाविशः ॥

मामकान्तरमाविशः मदीयाभ्यन्तरं त्वमाविष्टवान्, कुत इति शेषः । नीटी.

[3]न च मे ब्राह्मणोऽविद्वान्नाव्रती नाप्यसोमपः ।
नानाहिताग्निर्विषये मामकान्तरमाविशः ॥

अविद्वानिति च्छेदः । नीटी.

[4]नानाप्तदक्षिणैर्यज्ञैर्यजन्ते विषये मम ।
अधीते नाव्रती कश्चिन्मामकान्तरमाविशः ॥

[5]अधीयतेऽध्यापयन्ति यजन्ते याजयन्ति च ।
ददति प्रतिगृह्णन्ति षट्सु कर्मस्ववस्थिताः ॥

[6]पूजिताः संविभक्ताश्च मृदवः सत्यवादिनः ।
ब्राह्मणा मे स्वकर्मस्था मामकान्तरमाविशः ॥

[7]न याचन्ते प्रयच्छन्ति सत्यधर्मविशारदाः ।
नाध्यापयन्त्यधीयन्ते यजन्ते न च याजकाः ॥

(१) भा. १२।७८।६; भामु. १२।७७।६ केकय ( कैकेय ).

(२) भा. १२।७८।७-८; भामु. १२।७७।७-८.

(३) भा. १२।७८।९; भामु. १२।७७।९ विषये ( नायज्वा ).

(४) भा. १२।७८।१०; भामु. १२।७७।१० नानाप्त ( नानाप्र ) अधीते ( नाधीते ).

(५) भा. १२।७८।११; भामु. १२।७७।११ अधीयते ( अधीयन्ते ).

(६) भा. १२।७८।१२; भामु. १२।७७।१२.

(७) भा. १२।७८।१३; भामु. १२।७७।१३ याचन्ते ( याचन्ति ) न च याजकाः ( याजयन्ति न ).

[1]ब्राह्मणान्परिरक्षन्ति संग्रामेष्वपलायिनः ।
क्षत्रिया मे स्वकर्मस्था मामकान्तरमाविशः ॥
न याचन्तीति प्रतिग्रहादिजीविकोपायान्निवृत्ताः । नीटी.

कृषिगोरक्षवाणिज्यमुपजीवन्त्यमायया ।
अप्रमत्ताः क्रियावन्तः सुव्रताः सत्यवादिनः ॥
संविभागं दमं शौचं सौहृदं च व्यपाश्रिताः ।
मम वैश्याः स्वकर्मस्था मामकान्तरमाविशः ॥
[2]त्रीन्वर्णाननुतिष्ठन्ति यथावदनसूयकाः ।
मम शूद्राः स्वकर्मस्था मामकान्तरमाविशः ॥
[3]कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
संविभक्ताऽस्मि सर्वेषां मामकान्तरमाविशः ॥
कुलदेशादिधर्माणां प्रथितानां यथाविधि ।
अव्युच्छेत्ताऽस्मि सर्वेषां मामकान्तरमाविशः ॥
तपस्विनो मे विषये पूजिताः परिपालिताः ।
संविभक्ताश्च सत्कृत्य मामकान्तरमाविशः ॥
[4]नासंविभज्य भोक्ताऽस्मि न विशामि परस्त्रियम् ।
स्वतन्त्रो जातु न क्रीडे मामकान्तरमाविशः ॥
[5]नाब्रह्मचारी भिक्षावान्भिक्षुर्वाऽब्रह्मचारिकः ।
अनृत्विजं हुतं नास्ति मामकान्तरमाविशः ॥

[1]नावजानाम्यहं वृद्धान्न वैद्यान्न तपस्विनः ।
राष्ट्रे स्वपति जागर्मि मामकान्तरमाविशः ॥
स्वपति स्वापं कुर्वति सति । नीटी.
[2]वेदाध्ययनसंपन्नस्तपस्वी सर्वधर्मवित् ।
स्वामी सर्वस्य राज्यस्य श्रीमान्मम पुरोहितः ॥
[3]दानेन दिव्यानभिवाञ्छामि लोकान्
सत्येनाथो ब्राह्मणानां च गुप्त्या ।
शुश्रूषया चापि गुरूनुपैमि
न मे भयं विद्यते राक्षसेभ्यः ॥
वाञ्छयामि वाञ्छामि । नीटी
[4]न मे राष्ट्रे विधवा ब्रह्मबन्धु-
र्न ब्राह्मणः कृपणो नोत चोरः ।
न पारजायी न च पापकर्मा
न मे भयं विद्यते राक्षसेभ्यः ॥
[5]न मे शस्त्रैरनिर्भिन्नमङ्गे व्यङ्गुलमन्तरम् ।
धर्मार्थं युध्यमानस्य मामकान्तरमाविशः ॥
[6]गोब्राह्मणे च यज्ञे च नित्यं स्वस्त्ययनं मम ।
आशासते जना राष्ट्रे मामकान्तरमाविशः ॥

राक्षस उवाच—
[7]यस्मात्सर्वास्ववस्थासु धर्ममेवान्ववेक्षसे ।
तस्मात्प्राप्नुहि कैकेय गृहान्स्वस्ति व्रजाम्यहम् ॥

---

(१) भा. १२।७८।१४–१६; भामु. १२।७७।१४–१६.
(२) भा. १२।७८।१७; भामु. १२।७७।१७ ननुतिष्ठान्ति ( नुपजीवन्ति ).
(३) भा. १२।७८।१८–२०; भामु. १२।७७।१८–२०.
(४) भा. १२।७८।२१; भामु. १२।७७।२१ न विशामि ( नाऽऽविशामि ).
(५) भा. १२।७८।२२; भामु. १२।७७।२२ चारिकः ( चर्यवान् ) अनृत्विजं ( अनृत्विजा ).

(१) भा. १२।७८।२३ ; भामु. १२।७७।२३ वृद्धा ( वैद्या ) वैद्या ( वृद्धा ).
(२) भा. १२।७८।२४; भामु. १२।७७।२४ वदाध्ययन ( आत्मविज्ञान ) राज्यस्य श्रीमान् ( राष्ट्रस्य धीमान् ).
(३) भा. १२।७८।२५; भामु. १२।७७।२५ दिव्यानभिवाञ्छामि लोकान् ( विद्यामभिवाञ्छयामि ) नाथो ( नाथ ).
(४) भा. १२।७८।२६; भामु. १२।७७।२६ कृपणो (कितवो) न पारजायी ( अयाज्ययाजी ).
(५) भा. १२।७८।२७; भामु. १२।७७।२७ न्नमङ्गे (न्नं गात्रे).
(६) भा. १२।७८।२८; भामु. १२।७७।२८ ब्राह्मणे च यज्ञे च ( ब्राह्मणेभ्यो यज्ञेभ्यो ).
(७) भा. १२।७८।२९; भामु. १२।७७।२९ गृहान् ( गृहं ).

[1]येषां गोब्राह्मणा रक्ष्याः प्रजा रक्ष्याश्च केकय ।
न रक्षोभ्यो भयं तेषां कुत एव तु मानुषात् ॥

अध्यायतात्पर्यं संगृह्णाति– येषामिति । नीटी.

[2]येषां पुरोगमा विप्रा येषां ब्रह्मबलं बलम् ।
प्रियातिथ्यास्तथा दारास्ते वै स्वर्गजितो नराः ॥

भीष्म उवाच–

[3]तस्माद् द्विजातीन्रक्षेत ते हि रक्षन्ति रक्षिताः ।
आशीरेषां भवेद्राज्ञां राष्ट्रं सम्यक्प्रवर्धते ॥

[4]तस्माद्राज्ञा विशेषेण विकर्मस्था द्विजातयः ।
नियम्याः संविभज्याश्च प्रजानुग्रहकारणात् ॥

[5]य एवं वर्तते राजा पौरजानपदेष्विह ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥

गणराज्ये गणमुख्यवर्तनविचारः

युधिष्ठिर उवाच–

[6]एवमग्राह्यके तस्मिन् ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥

अग्राह्यके वशीकर्तुमशक्ये । द्वयोरन्योन्यं स्पर्धमानयोरेकस्याऽऽदरे इतरस्य कोपोत्पत्तेरवश्यं मित्रमप्यमित्रतां याति, अतः सर्वेषां भावः चित्तं कथं विभाव्यते वशीक्रियते इति प्रश्नः । नीटी.

(१) भा. १२।७८।३० ; भामु. १२।७७।३० ब्राह्मणा रक्ष्याः ( ब्राह्मणं रक्ष्यं ) मानुषात् ( पावकात् ).

(२) भा. १२।७८।३१ ; भामु. १२।७७।३१ ब्रह्मबलं ( ब्रह्मारं ) प्रियातिथ्याः ( अतिथिप्रियाः ) दाराः ( पौराः ) नराः ( नृपाः ).

(३) भा. १२।७८।३२ ; भामु. १२।७७।३२ द्राज्ञां ( द्राजन् ) राष्ट्रं ( राज्ञां ) वर्धते ( वर्तताम् ).

(४) भा. १२।७८।३३ ; भामु. १२।७७।३३ प्रजानु ( तदनु ).

(५) भा. १२।७८।३४ ; भामु. १२।७७।३४ य एवं ( एवं यो ).

(६) भा. १२।८२।१ ; भामु. १२।८१।१.

भीष्म उवाच–

[1]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासुदेवस्य संवादं सुरर्षेर्नारदस्य च ॥

वासुदेव उवाच–

[2]नासुहृत्परमं मन्त्रं नारदार्हति वेदितुम् ।
अपण्डितो वाऽपि सुहृत् पण्डितो वाऽपि नाऽऽत्मवान् ॥

[3]स ते सौहृदमास्थाय किंचिद्वक्ष्यामि नारद ।
कृत्स्नां च बुद्धिं संप्रेक्ष्य संपृच्छे त्रिदिवंगम ॥

[4]दास्यमैश्वर्यवादेन ज्ञातीनां वै करोम्यहम् ।
अर्धभोक्ताऽस्मि भोगानां वाग्दुरुक्तानि च क्षमे ॥

दास्यमेवाऽऽह– अर्धमिति । अर्जितस्यार्धं ज्ञातिभ्यो देयं तद्दुरुक्तानि च क्षन्तव्यानि इत्येवं ज्ञातिदास्यम् । नीटी.

[5]अरणीमग्निकामो वा मथ्नाति हृदयं मम ।
वाचा दुरुक्तं देवर्षे तन्मे दहति नित्यदा ॥

वाशब्दः इवार्थः । वाचा दुरुक्तं आहुकस्नेहात् कृष्णो मां द्वेष्टीति अक्रूरदुरुक्तम्, अक्रूरस्नेहात् कृष्णो मां द्वेष्टीति आहुकदुरुक्तम् । नीटी.

बलं संकर्षणे नित्यं सौकुमार्यं पुनर्गदे ।
रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद ॥

असहायः आहुकाक्रूरयोः सान्त्वने इति शेषः । नीटी.

(१) भा. १२।८२।२ ; भामु. १२।८१।२ वासुदेवस्य संवादं ( संवादं वासुदेवस्य ).

(२) भा. १२।८२।३ ; भामु. १२।८१।३ वाऽपि नाऽऽत्म ( वाऽप्यनात्म ).

(३) भा. १२।८२।४ ; भामु. १२।८१।४ कृत्स्नां च बुद्धिं संप्रेक्ष्य ( कृत्स्नं बुद्धिबलं प्रेक्ष्य ).

(४) भा. १२।८२।५ ; भामु. १२।८१।५ ज्ञातीनां वै ( ज्ञातीनां न ) अर्धं ( अर्धे ).

(५) भा. १२।८२।६-७ ; भामु. १२।८१।६-७.

[1]अन्ये हि सुमहाभागा बलवन्तो दुरासदाः ।
नित्योत्थानेन संपन्ना नारदान्धकवृष्णयः ॥

[2]यस्य न स्युर्न वै स स्याद्यस्य स्युः कृच्छ्रमेव तत् ।
द्वाभ्यां निवारितो नित्यं वृणोम्येकतरं न च ॥

ते यस्य पक्षे न स्युः स न स्यात् नश्येदेव । यस्य पक्षे ते स्युस्तत्कुलं कृत्स्नमेव पुरुषार्थं लभते । ईदृशा अपि मम साहाय्यं न कुर्वन्तीति भावः । द्वाभ्यामाहुकाक्रूराभ्यां निवारितः निरस्तः सन् एकतरं न वृणोमि इतरस्य कोपो मा भूदिति । नीटी.

[3]स्यातां यस्याऽऽहुकाक्रूरौ किं नु दुःखतरं ततः ।
यस्य वाऽपि न तौ स्यातां किं नु दुःखतरं ततः ॥

द्वयोर्महिषयोरिव युध्यतोर्वारणे मध्यस्थस्य मम महद्दुःखं तथा द्वयोः सुहृदोस्त्यागेऽपीत्याह– स्यातामिति । नीटी.

[4]सोऽहं कितवमातेव द्वयोरपि महामुने ।
एकस्य जयमाशंसे द्वितीयस्यापराजयम् ॥

द्वयोः कितवयोर्द्यूतकारिणोरेका मातेव । नीटी.

[5]ममैवं क्लिश्यमानस्य नारदोभयतः सदा ।
वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा ॥

नारद उवाच–

आपदो द्विविधाः कृष्ण बाह्याश्चाऽऽभ्यन्तराश्च ह ।
प्रादुर्भवन्ति वार्ष्णेय स्वकृता यदि वाऽन्यतः ॥

(१) भा. १२।८२।८ ; भामु. १२।८१।८ दुरासदाः (दुरुत्सहाः).

(२) भा. १२।८२।९ ; भामु. १२।८१।९ कृच्छ्र (कृत्स्न).

(३) भा. १२।८२।१० ; भामु. १२।८१।१० वाऽपि (चापि).

(४) भा. १२।८२।११ ; भामु. १२।८१।११ मुने (मते).

(५) भा. १२।८२।१२–१३ ; भामु. १२।८१।१२–१३.

[1]सेयमाभ्यन्तरा तुभ्यमापत्कृच्छ्रा स्वकर्मजा ।
अक्रूरभोजप्रभवाः सर्वे ह्येते तदन्वयाः ॥

[2]अर्थहेतोर्हि कामाद्वाऽद्वारा बीभत्सयाऽपि वा ।
आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् ॥

[3]कृतमूलमिदानीं तज्जातशब्दं सहायवत् ।
न शक्यं पुनरादातुं वान्तमन्नमिव त्वया ॥

अन्यतः बाह्याः आपदः । स्वकृताः ज्ञातिकृताः अभ्यन्तरा आपदः । एते संकर्षणादयः तदन्वयाः अक्रूरान्वयाः । तत्र हेतुः– अर्थेति । तत्स्नेहप्रभवा इयं तवाऽऽपदिति सार्धः । स्वकर्मजा इत्युक्तं तद्विवृणोति– आत्मनेति सार्धेन । अन्यत्र आहुके । तत् ऐश्वर्यं कृतमूलं यतो ज्ञातिशब्दं ज्ञातित्वादनुच्छेदनीयम् । हे सहायवन् । अत एव पुनरादातुं न शक्यमित्याह– नेति । नीटी.

[4]बभ्रूग्रसेनयो राज्यं नाऽऽप्तुं शक्यं कथंचन ।
ज्ञातिभेदभयात्कृष्ण त्वया चापि विशेषतः ॥

[5]तच्चेत्सिध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
महाक्षयव्ययं वा स्याद्विनाशो वा पुनर्भवेत् ॥

तत्र हेतुः– ज्ञातीति । त्वयेति । महतां दत्तापहारो नोचितः, 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इति न्यायादित्यर्थः । तच्च राज्यस्य पुनरादानं च । नीटी.

[6]अनायसेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च ॥

(१) भा. १२।८२।१४ ; भामु. १२।८१।१४ प्रभवाः (प्रभवा).

(२) भा. १२।८२।१५ ; भामु. १२।८१।१५ ऽद्वारा (वाचा).

(३) भा. १२।८२।१६ ; भामु. १२।८१।१६ ज्जात (ज्ज्ञाति) वत् (वन्).

(४) भा. १२।८२।१७ ; भामु. १२।८१।१७.

(५) भा. १२।८२।१८ ; भामु. १२।८१।१८ तच्चेत् (तच्च) क्षयव्ययं (क्षयं व्ययो).

(६) भा. १२।८२।१९–२० ; भामु. १२।८१।१९–२०.

जिह्वामुद्धर तेषां मूकीभावं संपादय, येन कलहोदयो न स्यात्। नीटी.

वासुदेव उवाच–

अनायसं मुने शस्त्रं मदु विद्यामहं कथम्।
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च ॥

नारद उवाच–

[1]शक्त्याऽन्नदानं सततं तितिक्षा दम आर्जवम्।
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥

परिमार्जनं दोषापनयनं तितिक्षार्जवमार्दवैः कार्यम्, अनुमार्जनं प्रीतिगुणाधानं, यथार्हपूजनादित्यर्थः। नीटी.

[2]ज्ञातीनां वक्तुकामानां कटूनि च लघूनि च।
गिरा त्वं हृदयं वाचं शमयस्व मनांसि च ॥

हृदयं क्रूरनिश्चयम्। मनांसि कुसंकल्पजालानि। नीटी.

[3]नामहापुरुषः कश्चिन्नानात्मा नासहायवान्।
महतीं धुरमादत्ते तामुद्यम्योरसा वह ॥

अनात्मा अजितचित्तः। उरसा अङ्गीकृत्य क्षमया वहस्वेत्यर्थः। नीटी.

[4]सर्व एव गुरुं भारमनड्वान् वहते समे।
दुर्गे प्रतीकः सुगवो भारं वहति दुर्वहम् ॥
भेदाद्विनाशः संघानां संघमुख्योऽसि केशव।
यथा त्वां प्राप्य नोत्सीदेदयं संघस्तथा कुरु ॥
नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात्।
नान्यत्र धनसंत्यागाद्गणः प्राज्ञेऽवतिष्ठते ॥

[1]धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं शुभम्।
ज्ञातीनामविनाशः स्याद्यथा कृष्ण तथा कुरु ॥
[2]आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो।
षाड्गुण्यस्य विधानेन यात्रायानविधौ तथा ॥
[3]माधवाः कुकुरा भोजाः सर्वे चान्धकवृष्णयः।
त्वय्यासक्ता महाबाहो लोका लोकेश्वराश्च ये ॥
[4]उपासते हि त्वद्बुद्धिमृषयश्चापि माधव।
त्वं गुरुः सर्वभूतानां जानीषे त्वं गतागतम्।
त्वामासाद्य यदुश्रेष्ठमेधन्ते ज्ञातिनः सुखम् ॥

उतथ्योक्ता राजनीतिः– धर्मेण शास्ता राजपदवाच्यः नाधार्मिकः पापः, पापः शास्ता वृषलपदवाच्यः

भीष्म उवाच–

[5]यानङ्गिराः क्षत्रधर्मानुतथ्यो ब्रह्मवित्तमः।
मान्धात्रे यौवनाश्वाय प्रीतिमानभ्यभाषत ॥
स यथाऽनुशशासैनमुतथ्यो ब्रह्मवित्तमः।
तत्ते सर्वं प्रवक्ष्यामि निखिलेन युधिष्ठिर ॥

उतथ्य उवाच–

[6]धर्माय राजा भवति न कामकरणाय तु।
मान्धातरेवं जानीहि राजा लोकस्य रक्षिता ॥
[7]राजा चरति वै धर्मं देवत्वायैव गच्छति।
न चेद्धर्मं स चरति नरकायैव गच्छति ॥

---

(१) भा. १२।८२।२१; भामु. १२।८१।२१ तितिक्षा दम आर्जवम् (तितिक्षार्जवमार्दवम्).

(२) भा. १२।८२।२२; भामु. १२।८१।२२ कटूनि च (कटुकानि).

(३) भा. १२।८२।२३; भामु. १२।८१।२३ दत्ते (धत्ते).

(४) भा. १२।८२।२४–२६; भामु. १२।८१। २४–२६.

(१) भा. १२।८२।२७; भामु. १२।८१।२७ शुभम् (सदा).

(२) भा. १२।८२।२८; भामु. १२।८१।२८.

(३) भा. १२।८२।२९; भामु. १२।८१।२९ माधवाः (यादवाः).

(४) भा. १२।८२।३०; भामु. १२।८१।३० उपासते (उपासन्ते) ज्ञातिनः (यादवाः).

(५) भा. १२।९१।१–२; भामु. १२।९०।१–२.

(६) भा. १२।९१।३; भामु. १२।९०।३ रेवं (रिति).

(७) भा. १२।९१।४; भामु. १२।९०।४ वै धर्मं (चेद्धर्मं) न चेद्धर्मं स (स चेदधर्मं).

[1]धर्मे तिष्ठन्ति भूतानि धर्मो राजनि तिष्ठति ।
तं राजा साधु यः शास्ति स राजा पृथिवीपतिः ॥
[2]राजा परमधर्मात्मा लक्ष्मीवान्पाप उच्यते ।
देवाश्च गर्हां गच्छन्ति धर्मो नास्तीति चोच्यते ॥

एवं स्वाम्यादिप्रकृतिषट्कं निरूप्य प्रकीर्णकान् धर्मान् वक्तुं उतथ्यमान्धातृसंवादं वामदेवगीतां चाऽऽरभते— यानङ्गिरा इत्यादिनाऽध्यायपञ्चकेन । अङ्गिराः आङ्गिरसः । देवा इति । यदा पापो न वार्यते तदा दैवतनिन्दादयो दोषाः प्रवर्तन्त इति सार्धत्रयम् (१) । नीटी.

[3]अधर्मे वर्तमानानामर्थसिद्धिः प्रदृश्यते ।
तदेव मङ्गलं सर्वं लोकः समनुवर्तते ॥
[4]उच्छिद्यते धर्मवृत्तमधर्मो वर्तते महान् ।
भयमाहुर्दिवारात्रं यदा पापो न वार्यते ॥
[5]ममेदमिति नैवैतत्साधूनां तात धर्मतः ।
न वै व्यवस्था भवति यदा पापो न वार्यते ॥
नैव भार्या न पशवो न क्षेत्रं न निवेशनम् ।
संदृश्येत मनुष्याणां यदा पापबलं भवेत् ॥
देवाः पूजां न जानन्ति न स्वधां पितरस्तदा ।
न पूज्यन्ते ह्यतिथयो यदा पापो न वार्यते ॥
[6]न वेदाननुवर्तन्ति व्रतवन्तो द्विजातयः ।
न यज्ञांस्तन्वते विप्रा यदा पापो न वार्यते ॥
[7]वध्यानामिव सर्वेषां मनो भवति विह्वलम् ।
मनुष्याणां महाराज यदा पापो न वार्यते ॥

(१) भा. १२।९१।५ ; भामु. १२।९०।५.

(२) भा. १२।९१।६ ; भामु. १२।९०।६ पाप (धर्म).

(३) भा. १२।९१।७ ; भामु. १२।९०।७ अधर्मे (स्वधर्मे) सर्वं लोकः (लोकः सर्वः).

(४) भा. १२।९१।८ ; भामु. १२।९०।८ ; नीम. ५०.

(५) भामु. १२।९०।९–११.

(६) भा. १२।९१।९ ; भामु. १२।९०।११–१२ ननुवर्तन्ति (नधिगच्छन्ति).

(७) भा. १२।९१।१० ; भामु. १२।९०।१२–१३ वध्यानामिव सर्वेषां (वृद्धानामिव सत्त्वानां).

वृद्धानां शस्त्रेण छिन्नदेहानाम् । नीटी.

[1]उभौ लोकावभिप्रेक्ष्य राजानमृषयः स्वयम् ।
असृजन्सुमहद्भूतमयं धर्मो भविष्यति ॥

धर्मः धर्मपालः । नीटी.

यस्मिन्धर्मो विराजेत तं राजानं प्रचक्षते ।
यस्मिन्विलीयते धर्मस्तं देवा वृषलं विदुः ॥
[2]वृषो हि भगवान्धर्मो यस्तस्य कुरुते ह्यलम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥

अलं वारणं छेदनमिति यावत् । तेन वृषं लुनाति छिनत्तीति वृषल इति योगो दर्शितः । नीटी.

धर्मलक्षणम्

[3]धर्मे वर्धति वर्धन्ति सर्वभूतानि सर्वदा ।
तस्मिन् ह्रसति हीयन्ते तस्माद्धर्मं प्रवर्धयेत् ॥
[4]धनात्स्रवति धर्मो हि धारणाद्वेति निश्चयः ।
अकार्याणां मनुष्येन्द्र स सीमान्तकरः स्मृतः ॥

धर्मपदस्य द्वेधा व्युत्पत्तिमाह— धनादिति । धनवाची नान्तो धन्-शब्दः, अर्तेर्गत्यर्थान्मक्प्रत्यये ततो नलोपगुणौ, धनादि स्रवतीति धर्मः इत्यर्थः । धनादिति पञ्चमी तु धनं प्रापयितुं स्रवति द्रवति कृपायते इति ल्यब्लोपे (?) ज्ञेया । धारणाद्वा धर्मः । धृञो मन्प्रत्ययः । सीमान्तकरः यावत्पापं तावद्यातनाकरः इत्यर्थः । नीटी.

[5]प्रभवार्थं हि भूतानां धर्मः सृष्टः स्वयंभुवा ।
तस्मात्प्रवर्धयेद्धर्मं प्रजानुग्रहकारणात् ॥

(१) भा. १२।९१।११–१२ ; भामु. १२।९०।१३–१५.

(२) भा. १२।९१।१३ ; भामु. १२।९०।१५ न लोपयेत् (विवर्धयेत्).

(३) भा. १२।९१।१४ ; भामु. १२।९०।१६ हीयन्ते (ह्रीयन्ते) प्रवर्धयेत् (न लोपयेत्).

(४) भा. १२।९१।१५ ; भामु. १२।९०।१७.

(५) भा. १२।९१।१६ ; भामु. १२।९०।१८ प्रवर्धये (प्रवर्तये).

[1]तस्माद्धि राजशार्दूल धर्मः श्रेष्ठ इति स्मृतः।
स राजा यः प्रजाः शास्ति साधुत्कृपुरुषर्षभः॥

[2]कामक्रोधावनादृत्य धर्ममेवानुपालयेत्।
धर्मः श्रेयस्करतमो राज्ञां भरतसत्तम॥

धर्मस्य ब्राह्मणा योनिः अतस्ते पूजनीयाः

[3]धर्मस्य ब्राह्मणा योनिस्तस्मात्तान्पूजयेत्सदा।
ब्राह्मणानां च मान्धातः कामान्कुर्यादमत्सरी॥

[4]तेषां ह्यकामकरणाद्राज्ञः संजायते भयम्।
मित्राणि च न वर्धन्ते तथाऽमित्रीभवन्त्यपि॥

अमित्रीभवन्ति वर्धन्ते (?)। नीटी.

[5]ब्राह्मणान्वै तदाऽसूयाद्यदा वैरोचनो बलिः।
अथास्माच्छ्रीरपाक्रामद्याऽस्मिन्नासीत्प्रतापिनी॥

असूयात् असूयातः। लिङ्गव्यत्यय आर्षः। असूयया अतति सततं वर्तते इति वा असूयात्। नीटी.

[6]ततस्तस्मादपक्रम्य साऽगच्छत्पाकशासनम्।
अथ सोऽन्वतपत्पश्चाच्छ्रियं दृष्ट्वा पुरंदरे॥

[7]एतत्फलमसूयाया अभिमानस्य चाभिभो।
तस्माद्बुध्यस्व मान्धातर्मा त्वा जह्यात्प्रतापिनी॥

दर्पजयः कर्तव्यः

[1]दर्पो नाम श्रियः पुत्रो जज्ञेऽधर्मादिति श्रुतिः।
तेन देवासुरा राजन्नीताः सुबहुशो वशम्॥

अधर्मादिति छेदः। नीटी.

[2]राजर्षयश्च बहवस्तस्माद्बुध्यस्व पार्थिव।
राजा भवति तं जित्वा दासस्तेन पराजितः॥

तं दर्पम्। नीटी.

[3]स यथा दर्पसहितमधर्मं नानुसेवसे।
तथा वर्तस्व मान्धातश्चिरं चेत्स्थातुमिच्छसि॥

राजा कालस्य कारणम्, युगचतुष्टयं राजकृतम्

उतथ्य उवाच–

[4]कालवर्षी च पर्जन्यो धर्मचारी च पार्थिवः।
संपद्यदैषा भवति सा बिभर्ति सुखं प्रजाः॥

[5]यो न जानाति निर्हन्तुं वस्त्राणां रजको मलम्।
रक्तानि वा शोधयितुं यथा नास्ति तथैव सः॥

वस्त्राणां शुक्लानाम्। शोधयितुं रङ्गमविचाल्य मलमात्रं दूरीकर्तुम्। नीटी.

[6]एवमेव द्विजेन्द्राणां क्षत्रियाणां विशामपि।
शूद्राश्चतुर्णां वर्णानां नानाकर्मस्ववस्थिताः॥

द्विजानां मध्ये यः कश्चिच्छूद्रो वा नानाकर्मस्ववस्थितः स्वकर्मच्युतो मूढः रजकतुल्य इत्यर्थः। नीटी.

---

(१) भा. १२।९१।१७; भामु. १२।९०।१९ श्रेष्ठ इति (श्रेष्ठतरः) षर्षभः (षर्षभ).

(२) भा. १२।९१।१८; भामु. १२।९०।२०.

(३) भा. १२।९१।१९; भामु. १२।९०।२१ ब्राह्मणा (ब्राह्मणो) कामान्कुर्याद (कुर्यात्कामान).

(४) भा. १२।९१।२०; भामु. १२।९०।२२ च न (न च).

(५) भा. १२।९१।२१; भामु. १२।९०।२३ ब्राह्मणान्वै तदा (ब्राह्मणानां सदा) यदा (ह्यल्यात्).

(६) भा. १२।९१।२२; भामु. १२।९०।२४.

(७) भा. १२।९१।२३; भामु. १२।९०।२५ चाभिभो (वा विभो) त्वा (त्वां).

(१) भा. १२।९१।२४; भामु. १२।९०।२६ बहुशो वशम् (बहवो व्ययम्).

(२) भा. १२।९१।२५; भामु. १२।९०।२७ स्तस्माद् (स्तथा).

(३) भा. १२।९१।२६; भामु. १२।९०।२८.

(४) भा. १२।९२।१; भामु. १२।९१।१ यदैषा (यदेषा).

(५) भा. १२।९२।२; भामु. १२।९१।२ निर्हन्तुं (हर्तुं वा) रक्तानि (रक्तानां).

(६) भा. १२।९२।३; भामु. १२।९१।३ एवमेव (एवमेतद्) शामपि (शां तथा) शूद्राश्चतुर्णां (शूद्रश्चतुर्थो) स्थिताः (स्थितः).

[1]कर्म शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि ।
ब्रह्मचर्यं तपो मन्त्राः सत्यं चापि द्विजातिषु ॥
[2]तेषां यः क्षत्रियो वेद वस्त्राणामिव शोधनम् ।
शीलदोषान्विनिर्हन्तुं स पिता स प्रजापतिः ॥
[3]कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ ।
राजवृत्तानि सर्वाणि राजैव युगमुच्यते ॥
[4]चातुर्वर्ण्यं तथा वेदाश्चातुराश्रम्यमेव च ।
सर्वं प्रमुह्यते ह्येतद्यदा राजा प्रमाद्यति ॥
[5]अग्निस्त्रेता त्रयी विद्या यज्ञाश्च सहदक्षिणाः ।
सर्व एव प्रमाद्यन्ति यदा राजा प्रमाद्यति ॥

अग्निस्त्रेता गार्हपत्यदक्षिणाग्न्याहवनीयाख्यं वह्नित्रयम् । त्रयी ऋग्यजुःसामवेदाः । नीटी.

[6]राजैव कर्ता भूतानां राजैव च विनाशकः ।
धर्मात्मा यः स कर्ता स्यादधर्मात्मा विनाशकः ॥
राज्ञो भार्याश्च पुत्राश्च बान्धवाः सुहृदस्तथा ।
समेत्य सर्वे शोचन्ति यदा राजा प्रमाद्यति ॥
[7]हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्दभाः ।
अधर्मवृत्ते नृपतौ सर्वे सीदन्ति पार्थिव ॥
[8]दुर्बलार्थं बलं सृष्टं धात्रा मान्धातरुच्यते ।
अबलं तन्महद्भूतं यस्मिन्सर्वं प्रतिष्ठितम् ॥

अबलं तु । अबलस्य पालनान्महत्पुण्यमपालनाच्च महत्पापमित्यर्थः । नीटी.

(१) भा. १२।९२।४ ; भामु. १२।९१।४.
(२) भा. १२।९२।५ ; भामु. १२।९१।५ र्हन्तुं (र्हंतुं).
(३) भा. १२।९२।६ ; भामु. १२।९१।६ द्वापरश्च (द्वापरं च).
(४) भा. १२।९२।७ ; भामु. १२।९१।७.
(५) भामु. १२।९१।८.
(६) भा. १२।९२।८–९ ; भामु. १२।९१।९–१०.
(७) भा. १२।९२।१० ; भामु. १२।९१।११ वृत्ते (भूते) पार्थिव (जन्तवः).
(८) भा. १२।९२।११ ; भामु. १२।९१।१२ तन्मह (तु मह).

[1]यच्च भूतं स भजते भूता ये च तदन्वयाः ।
अधर्मस्थे हि नृपतौ सर्वे सीदन्ति पार्थिव ॥

भूतं दुर्बलं, संभजते अन्नादिना सेवते । तदन्वयाः दातृसंबन्धिनः । नीटी.

धर्मेण अरक्षिता दुर्बला जना अधार्मिकं राजानं घ्नन्ति

[2]दुर्बलस्य हि यच्चक्षुर्मुनेराशीविषस्य च ।
अविषह्यतमं मन्ये मा स्म दुर्बलमासदः ॥

अबलं तु महद्भूतमित्येतद्विवृणोति–दुर्बलस्येत्यादिना । नीटी.

[3]दुर्बलांस्तात बुध्येथा नित्यमेवाविमानितान् ।
मा त्वां दुर्बलचक्षूंषि प्रदहेयुः सबान्धवम् ॥
[4]न हि दुर्बलदग्धस्य कुले किंचित्प्ररोहति ।
आमूलं निर्दहत्येव मा स्म दुर्बलमासदः ॥
[5]अबलं वै बलाच्छ्रेयो यच्चातिबलवद्बलम् ।
बलस्याबलदग्धस्य न किंचिदवशिष्यते ॥
[6]विमानितो हतोत्क्रुष्टस्त्रातारं चेन्न विन्दति ।
अमानुषकृतस्तत्र दण्डो हन्ति नराधिपम् ॥
[7]मा स्म तात बले स्थेया बाधिष्ठा माऽपि दुर्बलम् ।
मा त्वा दुर्बलचक्षूंषि धक्ष्यन्त्यग्निरिवाऽऽश्रयम् ॥

रणे स्थित्वा प्रतिपक्षीभूय भुञ्जीथाः करादानेन । नीटी.

(१) भा. १२।९२।१२ ; भामु. १२।९१।१३ स भजते (संभजते) भूता य च (ये च भूताः) सीदन्ति (शोचन्ति).
(२) भा. १२।९२।१३; भामु. १२।९१।१४ हि यच्चक्षु (च यच्चक्षु).
(३) भा. १२।९२।१४ ; भामु. १२।९१।१५.
(४) भा. १२।९२।१५ ; भामु. १२।९१।१६ रोहति (रोहते) निर्दहत्येव (निर्दहन्त्येव).
(५) भा. १२।९२।१६; भामु. १२।९१।१७ .
(६) भा. १२।९२।१७ ; भामु. १२।९१।१८ हतोत्क्रुष्ट (हतः क्रुष्ट).
(७) भा. १२।९२।१८; भामु. १२।९१।१९ पूर्वार्धे (मा स्म तात रणे स्थित्वा भुञ्जीथा दुर्बलं जनम् ।) त्वा (त्वां) धक्ष्यन्त्य (दहन्त्व) श्रयम् (शयम्).

[1]यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदताम् ।
तानि पुत्रान्पशून्घ्नन्ति तेषां मिथ्याभिशासताम् ॥

[2]यदि नाऽऽत्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु ।
न हि पापं कृतं कर्म सद्यः फलति गौरिव ॥

यदि आत्मनि फलं पापं न फलति तर्हि पुत्रादिषु फलति, न तु सद्यः फलतीत्यर्थः । नीटी.

यत्राबलो वध्यमानस्त्रातारं नाधिगच्छति ।
महान्दैवकृतस्तत्र दण्डः पतति दारुणः ॥

[3]युक्ता यदा जानपदा भिक्षन्ते ब्राह्मणा इव ।
अभीक्ष्णं भिक्षुदोषेण राजानं घ्नन्ति तादृशाः ॥

[4]राज्ञो यदा जनपदे बहवो राजपूरुषाः ।
अनयेनोपवर्तन्ते तद्राज्ञः किल्बिषं महत् ॥

[5]यदा युक्ता नयन्त्यर्थान्कामादर्थवशेन वा ।
कृपणं याचमानानां तद्राज्ञो वैशसं महत् ॥

नयेत् अपहरेत् । नीटी.

[6]महावृक्षो जायते वर्धते च
तं चैव भूतानि समाश्रयन्ति ।
यदा वृक्षश्छिद्यते दह्यते वा
तदाश्रया अनिकेता भवन्ति ॥

[7]यदा राष्ट्रे धर्ममग्र्यं चरन्ति
संस्कारं वा राजगुणं ब्रुवाणाः ।
तैरेवाधर्मश्चरितो धर्ममोहा-
त्तूर्णं जह्यात्सुकृतं दुष्कृतं च ॥

(१) भा. १२।९२।१९; भामु. १२।९१।२० शासताम् (शंसनात्).

(२) भा. १२।९२।२०-२१; भामु. १२।९१।२१-२२.

(३) भा. १२।९२।२२; भामु. १२।९१।२३ दोषेण (रूपेण).

(४) भा. १२।९२।२३; भामु. १२।९१।२४.

(५) भा. १२।९२।२४; भामु. १२।९१।२५ युक्ता नयन्त्यर्थान् (युक्त्या नयेदर्थान्).

(६) भा. १२।९२।२५; भामु. १२।९१।२६ महावृक्षो (महान् वृक्षो) दह्यते वा (दह्यते च).

(७) भा. १२।९२।२६; भामु. १२।९१।२७.

महानिति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह– यदेति । यदा धर्मं चरति तदा राजा वर्धत इति भावः । दुष्कृतं चापयातीत्यर्थः । नीटी.

[1]यत्र पापा ज्ञायमानाश्चरन्ति
सतां कलिर्विन्दति तत्र राज्ञः ।
यदा राजा शास्ति नरान्नशिष्या-
न्न तद्राज्यं वर्धते भूमिपाल ॥

राज्ञः नृपान् । नीटी.

स्वर्ग्यं राष्ट्रवृद्धिकरं च राज्ञः विविधं धर्मवृत्तम्

[2]यश्चामात्यं मानयित्वा यथार्हं
मन्त्रे च युद्धे च नृपो नियुञ्ज्यात् ।
प्रवर्धते तस्य राष्ट्रं नृपस्य
भुङ्क्ते महीं चाप्यखिलां चिराय ॥

[3]अत्रापि सुकृतं कर्म वाचं चैव सुभाषितम् ।
समीक्ष्य पूजयन् राजा धर्मं प्राप्नोत्यनुत्तमम् ॥

[4]संविभज्य यदा भुङ्क्ते न चान्यानवमन्यते ।
निहन्ति बलिनं दृप्तं स राज्ञो धर्म उच्यते ॥

[5]त्रायते हि यदा सर्वं वाचा कायेन कर्मणा ।
पुत्रस्यापि न मृष्येच्च स राज्ञो धर्म उच्यते ॥

[6]संविभज्य यदा भुङ्क्ते नृपतिर्दुर्बलान्नरान् ।
तदा भवन्ति बलिनः स राज्ञो धर्म उच्यते ॥

(१) भा. १२।९२।२७; भामु. १२।९१।२८ विन्दति (विन्दते) न्नशिष्यान्न तद्राज्यं (न्नशिष्टान् तदा राज्यं) भूमिपाल (भूमिपस्य).

(२) भा. १२।९२।२८; भामु. १२।९१।२९ श्चामात्यं (श्चामात्यान्) यथार्हं (यथार्थं) प्रवर्धते (विवर्धते).

(३) भा. १२।९२।२९; भामु. १२।९१।३० अत्रापि (यच्चापि).

(४) भा. १२।९२।३०; भामु. १२।९१।३१ न चान्या (नामात्या).

(५) भा. १२।९२।३१; भामु. १२।९१।३२.

(६) भामु. १२।९१।३३-३५.

[1]यदा रक्षति राष्ट्राणि यदा दस्यूनपोहति ।
यदा जयति संग्रामे स राज्ञो धर्म उच्यते ॥
[2]पापमाचरतो यत्र कर्मणा व्याहृतेन वा ।
प्रियस्यापि न मृष्येत स राज्ञो धर्म उच्यते ॥
[3]यदा शारणिकान् राजा पुत्रवत्परिरक्षति ।
भिनत्ति न च मर्यादां स राज्ञो धर्म उच्यते ॥

सारणिकान् प्रसारिणीप्रधानान्वणिजः । शारणिकानिति पाठे शरणागतान् । नीटी.

[4]यदाप्तदक्षिणैर्यज्ञैर्यजते श्रद्धयाऽन्वितः ।
कामद्वेषावनादृत्य स राज्ञो धर्म उच्यते ॥
[5]कृपणानाथवृद्धानां यदाऽश्रु व्यपमार्ष्टि वै ।
हर्षं संजनयन्नृणां स राज्ञो धर्म उच्यते ॥
[6]विवर्धयति मित्राणि तथाऽरींश्चापकर्षति ।
संपूजयति साधूंश्च स राज्ञो धर्म उच्यते ॥
[7]सत्यं पालयति प्राप्त्या नित्यं भूमिं प्रयच्छति ।
पूजयत्यतिथीन्भृत्यान्स राज्ञो धर्म उच्यते ॥
[8]निग्रहानुग्रहौ चोभौ यत्र स्यातां प्रतिष्ठितौ ।
अस्मिँल्लोके परे चैव राजा तत्प्राप्नुते फलम् ॥
[9]यमो राजा धार्मिकाणां मान्धातः परमेश्वरः ।
संयच्छन्भवति प्राणान्नसंयच्छंस्तु पापकः ॥

धार्मिकाणां परमेश्वरः अनुग्राहकः अस्ति । अतः प्राणान् इन्द्रियाणि नियच्छन् भवति ऐश्वर्यं प्राप्नोति । अनियच्छंस्तु पातुकः पतयालुर्भवति । पावकः इति पाठे स्वाश्रयदाही भवतीत्यर्थः । नीटी.

(१) भा. १२।९२।३२; भामु. १२।९१।३६ शार (सार).
(२) भा. १२।९२।३३; भामु. १२।९१।३७.
(३) भा. १२।९२।३४; भामु. १२।९१।३८ व्यपमार्ष्टि वै (परिमार्जति).
(४) भा. १२।९२।३५; भामु. १२।९१।३९ श्चाप (श्चापि).
(५) भा. १२।९२।३६; भामु. १२।९१।४० प्राप्त्या (प्रीत्या) पूजयत्य (पूजयेद).
(६) भा. १२।९२।३७; भामु. १२।९१।४१ राजा तत् (राजा स).
(७) भा. १२।९२।३८; भामु. १२।९१।४२ पापकः (पातुकः).

[1]ऋत्विक्पुरोहिताचार्यान्सत्कृत्यानवमन्य च ।
यदा सम्यक्प्रगृह्णाति स राज्ञो धर्म उच्यते ॥
[2]यमो यच्छति भूतानि सर्वाण्येवाविशेषतः ।
तस्य राज्ञाऽनुकर्तव्यं यन्तव्या विधिवत्प्रजाः ॥
[3]सहस्राक्षेण राजा हि सर्व एवोपमीयते ।
स पश्यति हि यं धर्मं स धर्मः पुरुषर्षभ ॥
[4]अप्रमादेन शिक्षेथाः क्षमां बुद्धिं धृतिं मतिम् ।
भूतानां सत्त्वजिज्ञासां साध्वसाधु च सर्वदा ॥
[5]संग्रहः सर्वभूतानां दानं च मधुरा च वाक् ।
पौरजानपदाश्चैव गोप्तव्याः स्वा यथा प्रजाः ॥
[6]न जात्वदक्षो नृपतिः प्रजाः शक्नोति रक्षितुम् ।
भारो हि सुमहांस्तात राज्यं नाम सुदुष्करम् ॥
तद्दण्डविन्नृपः प्राज्ञः शूरः शक्नोति रक्षितुम् ।
न हि शक्यमदण्डेन क्लीबेनाबुद्धिनाऽपि वा ॥
अभिरूपैः कुले जातैर्दक्षैर्भक्तैर्बहुश्रुतैः ।
सर्वा बुद्धीः परीक्षेथास्तापसाश्रमिणामपि ॥

अभिरूपैः अमात्यैः सहेति शेषः । नीटी.

[7]ततस्त्वं सर्वभूतानां धर्मं वेत्स्यसि वै परम् ।
स्वदेशे परदेशे वा न ते धर्मो विनश्यति ॥
[8]धर्मश्चार्थश्च कामश्च धर्म एवोत्तरो भवेत् ।
अस्मिँल्लोके परे चैव धर्मवित्सुखमेधते ॥

(१) भा. १२।९२।३९; भामु. १२।९१।४३.
(२) भा. १२।९२।४०; भामु. १२।९१।४४ तस्य (तथा).
(३) भा. १२।९२।४१; भामु. १२।९१।४५ सर्व एवो (सर्वथैवो) हि यं (च यं).
(४) भा. १२।९२।४२; भामु. १२।९१।४६ सत्त्वजिज्ञासां (चैव जिज्ञासा).
(५) भा. १२।९२।४३; भामु. १२।९१।४७ मधुरा च वाक् (मधुरं वचः) स्वा यथा प्रजाः (ते यथासुखम्).
(६) भा. १२।९२।४४–४६; भामु. १२।९१।४८–५०.
(७) भा. १२।९२।४७; भामु. १२।९१।५१ ततस्त्वं (अतस्त्वं) नश्यति (नङ्क्ष्यति).
(८) भा. १२।९२।४८; भामु. १२।९१।५२ धर्मश्चार्थश्च कामश्च (तस्मादर्थाच्च कामाच्च) धर्मवित् (धर्मात्मा).

धर्मोऽर्थादुत्पद्यत इति तत्फलभूतत्वात्तत उत्तरः । एवं कामादपि धर्म एवोत्तरः, तन्मूलत्वात् । नीटी.

[1]त्यजन्ति दारान्प्राणांश्च मनुष्याः प्रतिपूजिताः ।
संग्रहश्चैव भूतानां दानं च मधुरा च वाक् ॥

[2]अप्रमादश्च शौचं च तात भूतिकरं महत् ।
एतेभ्यश्चैव मान्धातः सततं मा प्रमादिथाः ॥

प्रमादिथाः प्रमाद्येथाः । नीटी.

[3]अप्रमत्तो भवेद्राजा छिद्रदर्शी परात्मनोः ।
नास्य च्छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ॥

एतद्वृत्तं वासवस्य यमस्य वरुणस्य च ।
राजर्षीणां च सर्वेषां तत्त्वमप्यनुपालय ॥

तत्कुरुष्व महाराज वृत्तं राजर्षिसेवितम् ।
आतिष्ठ दिव्यं पन्थानमह्नाय भरतर्षभ ॥

[4]धर्मवृत्तं हि राजानं प्रेत्य चेह च भारत ।
देवर्षिपितृगन्धर्वाः कीर्तयन्त्यमितौजसः ॥

भीष्म उवाच –

[5]स एवमुक्तो मान्धाता तेनोतथ्येन भारत ।
कृतवानविशङ्कस्तदेकः प्राप च मेदिनीम् ॥

[6]भवानपि तथा सम्यङ्मान्धातेव महीपतिः ।
धर्मं कृत्वा महीं रक्षन्स्वर्गे स्थानमवाप्स्यसि ॥

(१) भा. १२।९२।४९; भामु. १२।९१।५३ प्राणांश्च (पुत्रांश्च) प्रति (परि).

(२) भा. १२।९२।५०; भामु. १२।९१।५४ तात (राज्ञो).

(३) भा. १२।९२।५१-५३; भामु. १२।९१।५५-५७.

(४) भा. १२।९२।५४; भामु. १२।९१।५८ न्त्यमितौजसः (न्ति महौजसः).

(५) भा. १२।९२।५५; भामु. १२।९१।५९ स्तदेकः (श्च एकः).

(६) भा. १२।९२।५६; भामु. १२।९१।६० पतिः (पते) रक्षन् (रक्ष).



वामदेवोक्ता राजनीतिः– अधार्मिकः लोकयात्राविमुखः साहसप्रकृतिः राजा लोकेन वध्यो भवति

युधिष्ठिर उवाच–

[1]कथं धर्मे स्थातुमिच्छन्राजा वर्तेत धार्मिकः ।
पृच्छामि त्वा कुरुश्रेष्ठ तन्मे ब्रूहि पितामह ॥

धर्मस्योत्कर्षं श्रुत्वा धर्मे स्थितिप्रकारं पृच्छति– कथमिति । नीटी.

भीष्म उवाच–

[2]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं दृष्टार्थतत्त्वेन वामदेवेन धीमता ॥

[3]राजा वसुमना नाम कौसल्यो बलवाञ्शुचिः ।
महर्षिं परिपप्रच्छ वामदेवं यशस्विनम् ॥

[4]धर्मार्थसहितं वाक्यं भगवन्ननुशाधि माम् ।
येन वृत्तेन वै तिष्ठन्न च्यवेयं स्वधर्मतः ॥

[5]तमब्रवीद्वामदेवस्तपस्वी जपतां वरः ।
हेमवर्णमुपासीनं ययातिमिव नाहुषम् ॥

तपतां तपः कुर्वताम् । नीटी.

वामदेव उवाच–

[6]धर्ममेवानुवर्तस्व न धर्माद्विद्यते परम् ।
धर्मे स्थिता हि राजानो जयन्ति पृथिवीमिमाम् ॥

(१) भा. १२।९३।१; भामु. १२।९२।१ त्वा (त्वां).

(२) भा. १२।९३।२; भामु. १२।९२।२.

(३) भा. १२।९३।३; भामु. १२।९२।३ कौसल्यो बलवाञ् (ज्ञानवान् धृतिमाञ्) यशस्विनम् (तपस्विनम्).

(४) भा. १२।९३।४; भामु. १२।९२।४ सहितं वाक्यं (सहितैर्वाक्यैः) च्यवेयं (हीयेयं).

(५) भा. १२।९३।५; भामु. १२।९२।५ स्तपस्वी जपतां (स्तेजस्वी तपतां) र्णमुपासीनं (र्णं सुखासीनं).

(६) भा. १२।९३।६ (वामदेव उवाच ०); भामु. १२।९२।६.

[1]अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः ।
ऋतां च कुरुते बुद्धिं स धर्मेण विरोचते ॥

अर्थापेक्षया धर्मं श्रेष्ठं मत्वा धर्मवृद्धौ बुद्धिं कुर्यादित्याह– अर्थेति । नीटी.

[2]अधर्मदर्शी यो राजा बलादेव प्रवर्तते ।
क्षिप्रमेवापयातोऽस्मादुभौ प्रथममध्यमौ ॥

उभौ धर्मार्थौ । नीटी.

असत्पापिष्ठसचिवो वध्यो लोकस्य धर्महा ।
सहैव परिवारेण क्षिप्रमेवावसीदति ॥

असन्तः दुष्टाः पापिष्ठाश्च सचिवाः यस्य सः । नीटी.

अर्थानामननुष्ठाता कामचारी विकत्थनः ।
अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ॥

अथाऽऽददानः कल्याणमनसूयुजतेन्द्रियः ।
वर्धते मतिमान्राजा स्रोतोभिरिव सागरः ॥

[3]न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः ।
बुद्धितो मित्रतश्चापि सततं वसुधाधिपः ॥

[4]एतेष्वेव हि सर्वेषु लोकयात्रा प्रतिष्ठिता ।
एतानि शृण्वँल्लभते यशः कीर्तिं श्रियः प्रजाः ॥

एतेषु धर्मादिषु । नीटी.

[5]एवं यो धर्मसंरम्भी धर्मार्थपरिचिन्तकः ।
अर्थान्समीक्ष्याऽऽरभते स ध्रुवं महदश्नुते ॥

[1]अदाता ह्यनतिस्नेहो दण्डेनाऽऽवर्तयन्प्रजाः ।
साहसप्रकृती राजा क्षिप्रमेव विनश्यति ॥

[2]अथ पापं कृतं बुद्ध्या न च पश्यत्यबुद्धिमान् ।
अकीर्त्याऽपि समायुक्तो मृतो नरकमश्नुते ॥

पापकृतं पापकारिणम् । नीटी.

[3]अथ मानयितुर्दातुः शुक्लस्य रसवेदिनः ।
व्यसनं स्वमिवोत्पन्नं विजिघांसन्ति मानवाः ॥

दाम्नः दातुः । नीटी.

[4]यस्य नास्ति गुरुर्धर्मे न चान्याननुपृच्छति ।
सुखतन्त्रोऽर्थलाभेषु न चिरं महदश्नुते ॥

[5]गुरुप्रधानो धर्मेषु स्वयमर्थान्ववेक्षिता ।
धर्मप्रधानो लोकेषु सुचिरं महदश्नुते ॥

साहसप्रकृतिरशास्त्रलक्षणः राजा विनाशाभिमुखः

वामदेव उवाच–

[6]यत्राधर्मं प्रणयते दुर्बले बलवत्तरः ।
तां वृत्तिमुपजीवन्ति ये भवन्ति तदन्वयाः ॥

यत्र राष्ट्रे । प्रणयते आरोपयति । बलवत्तरः राजा । नीटी.

राजानमनुवर्तन्ते तं पापाभिप्रवर्तकम् ।
अविनीतमनुष्यं तत्क्षिप्रं राष्ट्रं विनश्यति ॥

तं राजानं अनुवर्तन्तेऽन्ये । नीटी.

[7]यद्वृत्तिमुपजीवन्ति प्रकृतिस्थस्य मानवाः ।
तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ॥

---

(१) भा. १२।९३।७ ; भामु. १२।९२।७ ऋतां (वृद्धयां) विरोचते (विराजते).

(२) भा. १२।९३।८–११ ; भामु. १२।९२।८–११.

(३) भा. १२।९३।१२ ; भामु. १२।९२।१२ धाधिपः (धाधिप).

(४) भा. १२।९३।१३ ; भामु. १२।९२।१३ श्रियः (श्रियं).

(५) भा. १२।९३।१४ ; भामु. १२।९२।१४ क्ष्य ऽऽरभते (क्ष्य भजते).

(१) भा. १२।९३।१५ ; भामु. १२।९२।१५.

(२) भा. १२।९३।१६ ; भामु. १२।९२।१६ पापं कृतं (पापकृतं) ऽपि समा (ऽभिसमा) मृतो (भूयो).

(३) भा. १२।९३।१७ ; भामु. १२।९२।१७ दातुः शुक्लस्य रसवेदिनः (दाम्नः श्लक्ष्णस्य वशवर्तिनः).

(४) भा. १२।९३।१८; भामु. १२।९२।१८ ननुपृ (नपि पृ) महद (सुखम).

(५) भा. १२।९३।१९ ; भामु. १२।९२।१९ मर्थान्व (मर्थान) लोकेषु (लाभेषु) सुचिरं महद (स चिरं सुखम).

(६) भा. १२।९४।१–२ ; भामु. १२।९३।१–२.

(७) भा. १२।९४।३ ; भामु. १२।९३।३ वृत्ति (वृत्त).

प्रकृतिः स्वधर्मः । विषमः कुमार्गः । नीटी.

[1]साहसप्रकृतिर्यत्र कुरुते किंचिदुल्बणम् ।
अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति ॥

[2]योऽत्यन्ताचरितां वृत्तिं क्षत्रियो नानुवर्तते ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥

जितानां आपन्नानाम् । अजितानां स्वस्थानाम् । नीटी.

समात्मा प्रजारक्षको दण्ड एव व्यवहारः
धर्मः ईश्वरः सर्वव्यापी च

युधिष्ठिर उवाच–

[3]अयं पितामहेनोक्तो राजधर्मः सनातनः ।
ईश्वरश्च महादण्डो दण्डे सर्वं प्रतिष्ठितम् ॥

अयं पितामहेनेत्यध्यायद्वयेन दण्डस्वरूपादिकमुच्यते । नीटी.

[4]देवतानामृषीणां च पितॄणां च महात्मनाम् ।
यक्षरक्षःपिशाचानां मर्त्यानां च विशेषतः ॥

[5]सर्वेषां प्राणिनां लोके तिर्यक्ष्वपि निवासिनाम् ।
सर्वव्यापी महातेजा दण्डः श्रेयानिति प्रभो ॥

[6]इत्येतदुक्तं भवता सर्वं दण्डस्थं चराचरम् ।
दृश्यते लोकमासक्तं ससुरासुरमानुषम् ॥

[7]एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ ।
को दण्डः कीदृशो दण्डः किंरूपः किंपरायणः ॥

(१) भा. १२।९४।४ ; भामु. १२।९३।४ कुरुते किञ्चिदुल्बणम् (किञ्चिदुल्बणमाचरेत्).

(२) भा. १२।९४।५ ; भामु. १२।९३।५.

(३) भा. १२।१२१।१ ; भामु.

(४) भा. १२।१२१।२; भामु. १२।१२१।२ मर्त्यानां (साध्यानां).

(५) भा. १२।१२१।३; भामु. १२।१२१।३ तिर्यक्ष्वपि (तिर्यग्योनि).

(६) भा. १२।१२१।४; भामु. १२।१२१।४ पूर्वार्धे (इत्येवमुक्तं भवता दण्डे वै सचराचरम्।) दृश्यते (पश्यता).

(७) भा. १२।१२१।५ ; भामु.

[1]किमात्मकः कथंभूतः कतिमूर्तिः कथंप्रभुः ।
जागर्ति स कथं दण्डः प्रजास्ववहितात्मकः ॥

[2]कश्च पूर्वापरमिदं जागर्ति परिपालयन् ।
कश्च विज्ञायते पूर्वं कोऽपरो दण्डसंज्ञितः ।
किंसंस्थश्च भवेद्दण्डः का चास्य गतिरिष्यते ॥

भीष्म उवाच –

[3]शृणु कौरव्य यो दण्डो व्यवहार्यो यथा च सः ।
यस्मिन् हि सर्वमायत्तं स दण्ड इह केवलः ॥

[4]धर्मस्याऽऽख्या महाराज व्यवहार इतीष्यते ।
तस्य लोपः कथं न स्याल्लोकेष्ववहितात्मनः ।
इत्यर्थं व्यवहारस्य व्यवहारत्वमिष्यते ॥

[5]अपि चैतत्पुरा राजन्मनुना प्रोक्तमादितः ।
सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना ।
प्रजा रक्षति यः सम्यग्धर्म एव स केवलः ॥

को दण्ड इत्यादयः एकादश प्रश्नाः । तत्र को दण्ड इत्यस्योत्तरमाह– धर्मेति । धर्मस्य संख्या सम्यक् ख्यानं प्रकाशनं दण्डापरपर्यायव्यवहारशब्दवाच्यम् । व्यवहारपदं निर्वक्ति– तस्येति सार्धेन । अवहितात्मनो राज्ञः तस्य धर्मस्य लोपः कथं केन प्रकारेण न स्यात्स प्रकारो व्यवहारः विगतः अवहारः नीचमार्गेण परस्वादिहरणं यस्मात् स इति व्युत्पत्त्या सिद्धः । अपि चेति । एतत् एतस्य व्यवहारस्य । प्रजारक्षकत्वाद्व्यवहार एव धर्मपदवाच्योऽपीत्याह– सुप्रणीतेनेति । नीटी.

[6]अथोक्तमेतद्वचनं प्रागेव मनुना पुरा ।
जन्म चोक्तं वसिष्ठेन ब्रह्मणो वचनं महत् ॥

(१) भा. १२।१२१।६ ; भामु. १२।१२१।६ कतिमूर्तिः (कथंमूर्तिः) प्रभुः (प्रभो) स (च).

(२) भा. १२।१२१।७; भामु. १२।१२१।७ परिपा (प्रतिपा) कोऽपरो (को वरो) चास्य (वाऽस्य) रिष्यते (रुच्यते).

(३) भा. १२।१२१।८; भामु. १२।१२१।८ हार्यो (हारो).

(४) भा. १२।१२१।९; भामु. १२।१२१।९–१० धर्मस्याऽऽख्या (धर्मसंख्या) इत्यर्थं (इत्येवं).

(५) भा. १२।१२१।१०; भामु. १२।१२१।१०–११.

(६) भा. १२।१२१।११; भामु. १२।१२१।१२ अथो (यथो) जन्म चोक्तं वसिष्ठेन (यन्मयोक्तं मनुष्येन्द्र).

यथेति । सुप्रणीतेनेति श्लोकेन यन्मनुवचनमुक्तं तद् ब्रह्मण एव वचनं मनुमुखात् श्रुतमित्यर्थः । नीटी.

**[1]प्रागिदं वचनं प्रोक्तमतः प्रागवचनं विदुः ।
व्यवहारस्य चाऽऽख्यानाद्व्यवहार इहोच्यते ॥**

प्रागिति । दण्ड एव उक्तवचनाद्धर्मशब्देन व्यवहारशब्देन चोच्यते इत्यर्थः । प्रागवचनं धर्मवचनम् । नीटी.

**[2]दण्डात्त्रिवर्गः सततं सुप्रणीतात्प्रवर्तते ।
दैवं हि परमो दण्डो रूपतोऽग्निरिवोच्छिखः ॥**

रूपतोऽग्निरिवोत्थित इति । तस्याऽऽन्तरं रूपं दुष्टसंतापकत्वात्क्रूरं अग्नितुल्यमित्युक्तम् । नीटी.

दण्डे पुरुषरूपकम्, दण्डस्य नामानि रूपाणि च,
जगद्धात्री दण्डनीतिः

**[3]नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ।
अष्टपान्नैकनयनः शङ्कुकर्णोर्ध्वरोमवान् ॥**

बाह्यं रूपं वर्णयति– नीलेति । दण्डाधिष्ठात्र्याः देवताया इदं ध्यानादिकं अज्ञानाददण्ड्यदण्डजं दोषं निराकर्तुं दण्डकर्तृभिरमात्यादिभिर्ध्येयमित्येवमर्थयुक्तम् । यदि तु लौकिकानि दण्डधर्मव्यवहाराङ्गान्यत्रोत्प्रेक्ष्यन्ते तर्हि एवं व्याख्येयम् । तत्र दण्डः संहर्तृत्वाद्रौद्रः । रुद्रश्च नीललोहित इति । तस्य 'अग्निरिवोत्थितः' इति लोहितं रूपमुक्तम् । नीलं च, नीलोत्पलेति निरुक्तम् । तत्र राज्ञो दण्ड्ये द्वेषात्तद्धने च लोभात्प्रणेयस्य दण्डस्य मालिन्यरागोत्पन्नत्वान्नीललोहितं दण्डस्य रूपम् । चतस्रो दंष्ट्रा इव प्राणिनां वधसाधनानि यत्र सः । तथाहि – केचिन्मानभङ्गेन, केचिद्धनहरणेन, केचिदङ्गवैकल्येन, केचित्प्राणव्यापादनेन च वध्यन्तेऽतस्तान्येव तद्दंष्ट्राः । चत्वारो भुजाः अर्थादानकर्तारो यस्य सः । तथाहि– प्रजाभ्यः सामन्तेभ्यश्च करादानम्, अनृतादार्थिनोऽर्थ्यमानद्रव्याद्द्विगुणधनादानम्, अनृतात् प्रत्यर्थिनस्तत्समं द्रव्यादानम्, धनवतः कदर्याद्विप्रात्सर्वस्वादानं चेति । अथ तस्यैव व्यवहाररूपिणो रूपं वर्णयति– 'अष्टपान्नैकनयनः शङ्कुकर्णोर्ध्वरोमवान् । जटी द्विजिह्वः' इति । आवेदनं भाषा संप्रतिपत्तिः मिथ्योत्तरं कारणोत्तरं प्राङ्न्यायः प्रतिभूः क्रियाफलसिद्धिश्चेत्यष्टौ पादाः । एतैर्हि निमित्तैर्दण्डश्चरति नान्यथेत्येतेषां पादत्वम् । तत्र आवेदनम्– अर्थिना सभ्यान् प्रति गत्वा देवदत्तो मदीयं शतं सुवर्णानां अमुकस्मिन् देशे काले साक्षिणि च गृहीत्वा न ददातीति तद्धस्तेन लेखनम् । पुनरपि प्रत्यर्थिनमाहूय तत्समक्षं तथैव लेखनं भाषा । तत्र प्रत्यर्थिना अहमेतस्य धारयामीत्युक्ते न कस्यापि दण्ड इति । तदिदं संप्रतिपत्तिरूपमुत्तरं न दण्डपादत्वेन गण्यते । नाहमेतस्य धारयामीति मिथ्योत्तरम् । मया गृहीतमासीत्तत्पुनः परावृत्य दत्तमिति कारणोत्तरम् । अस्मिन्नर्थेऽनेन पूर्वमहमभियुक्तस्तत्र पराजितो मयेति प्राङ्न्यायोत्तरम् । त्रिविधेऽप्यस्मिन्नुत्तरे अर्थिप्रत्यर्थिभ्यां प्रतिभूर्देयः, अहमेतस्मिन्पराजित इदं द्रव्यं दास्यामीति । क्रिया स्वमतसाधकानां साक्षिपत्रभोगशपथादीनां प्रदर्शनम् । ततोऽच्यवने तस्य जय इति । अष्टभ्यः पादेभ्योऽनन्तरं अपराधी दण्ड्यते इत्येते दण्डस्य पादाः । यदाह याज्ञवल्क्यः– 'निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् । मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥' (यास्मृ. २।११) इति । नैकनयनः नैकानि बहूनि नयनस्थानीयानि राजामात्यपुरोहितपर्षदाख्यानि दर्शनसाधनानि यस्मिन् । शङ्कुकर्णः तीक्ष्णकर्णः अवश्यं श्राव्यः । ऊर्ध्वरोमवान् अत्यन्तं उत्फुल्लः । शङ्कुकर्णश्चासौ ऊर्ध्वरोमवांश्चेति समासः । नीटी.

**[1]जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः ।
एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुरावरः ॥**

जटी अनेकसंदेहजटिलः । द्विजिह्वः अर्थिप्रत्यर्थिनोर्वाक्यवैमत्यात् द्वे जिह्वे यस्य सः तथा । एवं व्यवहार-

(१) भा. १२।१२१।१२; भामु. १२।१२१।१३.

(२) भा. १२।१२१।१३; भामु. १२।१२१।१४ दण्डात् (दण्डे) प्रणीतात् (प्रणीते) वोच्छिखः (वोत्थितः).

(३) भा. १२।१२१।१४; भामु. १२।१२१।१५; नन्द. ७२५ नैक (द्रक्त).

(१) भा. १२।१२१।१५; भामु. १२।१२१।१६ दुरावरः (दुराधरः); नन्द. ७२५ मृगराज (भृङ्गराज) दण्डो नित्यं (तेन दण्डो).

रूपिणो दण्डस्य रूपमुक्त्वा धर्माख्यदण्डरूपमाह–ताम्रास्यो मृगराजतनुच्छद इति। ताम्रः वह्निरेव आहवनीयादिः आस्यं यस्य सः तथा। मृगराजः कृष्णमृगः, तत्संबन्धि चर्म तनुच्छदः शरीराच्छादकं प्रावरणमस्य। एतेन दीक्षाप्रधानो यज्ञ उक्तः। एतच्च सर्वेषां दानोपवासहोमादीनामुपलक्षणम्। नीटी.

[1]असिर्गदा धनुः शक्तिस्त्रिशूलं मुद्गरः शरः।
मुसलं परशुश्चक्रं प्रासो दण्डर्ष्टितोमराः॥

[2]सर्वप्रहरणीयानि सन्ति यानीह कानिचित्।
दण्ड एव हि सर्वात्मा लोके चरति मूर्तिमान्॥

[3]भिन्दंश्छिन्दन्रुजन्कृन्तन्दारयन्पाटयंस्तथा।
घातयन्नभिधावंश्च दण्ड एव चरत्युत॥

[4]असिर्विशसनो धर्मस्तीक्ष्णवर्मा दुरासदः।
श्रीगर्भो विजयः शास्ता व्यवहारः प्रजागरः॥

[5]शास्त्रं ब्राह्मणमन्त्रश्च शास्ता प्राग्वचनं गतः।
धर्मपालोऽक्षरो देवः सत्यगो नित्यगो ग्रहः॥

[6]असङ्गो रुद्रतनयो मनुज्येष्ठः शिवंकरः।
नामान्येतानि दण्डस्य कीर्तितानि युधिष्ठिर॥

[7]दण्डो हि भगवान्विष्णुर्यज्ञो नारायणः प्रभुः।
शश्वद्रूपं महद्बिभ्रन्महापुरुष उच्यते॥

(१) भा. १२।१२१।१६; भामु. १२।१२१।१७ गदा धनुः (धनुर्गदा) प्रासो (पाशो).

(२) भा. १२।१२१।१७; भामु. १२।१२१।१८ एव हि (एव स).

(३) भा. १२।१२१।१८; भामु. १२।१२१।१९.

(४) भा. १२।१२१।१९; भामु. १२।१२१।२० वर्मा दुरासदः (वर्मा दुराधरः) प्रजागरः (सनातनः).

(५) भा. १२।१२१।२०; भामु. १२।१२१।२१ मन्त्रश्च (मन्त्राश्च) प्राग्वचनं गतः (प्राग्वदतां वरः) नित्यगो ग्रहः (नित्यगोऽग्रजः).

(६) भा. १२।१२१।२१; भामु. १२।१२१।२२ मनुज्येष्ठः (मनुर्ज्येष्ठः).

(७) भा. १२।१२१।२२; भामु. १२।१२१।२३ यज्ञो (दण्डो) महापुरुष (महान् पुरुष).

मुख्यं दण्डस्य रूपमाह– दण्डो हीति। नीटी.

[1]यथोक्ता ब्रह्मकन्येति लक्ष्मीर्नीतिः सरस्वती।
दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः॥

तत्पत्न्या रूपमाह– तथेति। दण्डेन सहिता नीतिर्दण्डनीतिः। नीटी.

[2]अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले।
दौर्भाग्यं भागधेयं च पुण्यापुण्ये गुणागुणौ॥

किंपरायण इत्यस्योत्तरमर्थानर्थादिविवेक एव तस्य परायणमित्याह– अर्थानर्थावित्यादिना तस्माद्दण्डः परायणमित्यन्तेन। नीटी.

[3]कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः।
अप्रसादः प्रसादश्च हर्षः क्रोधः शमो दमः॥

[4]दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये।
हिंसाहिंसे तपो यज्ञः संयमोऽथ विषाविषम्॥

[5]अन्तश्चाऽऽदिश्च मध्यं च कृत्यानां च प्रपञ्चनम्।
मदः प्रमादो दर्पश्च दम्भो धैर्यं नयानयौ॥

[6]अशक्तिः शक्तिरित्येव मानस्तम्भौ व्ययाव्ययौ।
विनयश्च विसर्गश्च कालाकालौ च भारत॥

[7]अनृतं ज्ञाज्ञता सत्यं श्रद्धाश्रद्धे तथैव च।
क्लीबता व्यवसायश्च लाभालाभौ जयाजयौ॥

(१) भा. १२।१२१।२३; भामु. १२।१२१।२४ यथो (तथो) नीतिः (वृत्तिः).

(२) भा. १२।१२१।२४; भामु. १२।१२१।२५.

(३) भा. १२।१२१।२५; भामु. १२।१२१।२६ उत्तरार्धे (अप्रमादः प्रमादश्च हर्षक्रोधौ शमो दमः॥).

(४) भा. १२।१२१।२६; भामु. १२।१२१।२७.

(५) भा. १२।१२१।२७; भामु. १२।१२१।२८.

(६) भा. १२।१२१।२८; भामु. १२।१२१।२९ रित्येव (रित्येवं).

(७) भा. १२।१२१।२९; भामु. १२।१२१।३० ज्ञाज्ञता (ज्ञानिता).

[1]तीक्ष्णता मृदुता मृत्युरागमानागमौ तथा ।
विराद्धिश्चैव राद्धिश्च कार्याकार्ये बलाबले ॥

[2]असूया चानसूया च धर्माधर्मौ तथैव च ।
अपत्रपानपत्रपे ह्रीश्च संपद्विपच्च ह ॥

[3]तेजः कर्मणि पाण्डित्यं वाक्शक्तिस्तत्त्वबुद्धिता ।
एवं दण्डस्य कौरव्य लोकेऽस्मिन्बहुरूपता ॥

[4]न स्याद्यदीह दण्डो वै प्रमथेयुः परस्परम् ।
भयाद्दण्डस्य चान्योन्यं घ्नन्ति नैव युधिष्ठिर ॥

[5]दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः ।
राजानं वर्धयन्तीह तस्माद्दण्डः परायणम् ॥
व्यवस्थापयति क्षिप्रमिमं लोकं नरेश्वर ।
सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते ॥

किमात्मकः कथंभूतः कथंमूर्तिरिति प्रश्नत्रयस्योत्तरमाह– व्यवस्थापयतीति । लोकपालनात्मकः, सत्यपक्षपाती, ब्राह्मणमूर्तिस्वरूप इत्यर्थः । नीटी.

[6]धर्मयुक्ता द्विजाः श्रेष्ठा वेदयुक्ता भवन्ति च ।
बभूव यज्ञो वेदेभ्यो यज्ञः प्रीणाति देवताः ॥

[7]प्रीताश्च देवता नित्यमिन्द्रे परिददत्युत ।
अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ॥

(१) भा. १२।१२१।३०; भामु. १२।१२१।३१
विराद्धिश्चैव राद्धिश्च (विरोधश्चाविरोधश्च).

(२) भा. १२।१२१।३१; भामु. १२।१२१।३२
द्विपच्च ह (द्विपत्पदम्).

(३) भा. १२।१२१।३२; भामु. १२।१२१।३३
कर्मणि (कर्माणि).

(४) भा. १२।१२१।३३; भामु. १२।१२१।३४
चान्योन्यं (नान्योन्यं) नैव (चैव).

(५) भा. १२।१२१।३४–३५; भामु. १२।१२१।३५–३६.

(६) भा. १२।१२१।३६; भामु. १२।१२१।३७
द्विजाः श्रेष्ठा वेदयुक्ता (द्विजश्रेष्ठा देवयुक्ता) वेदेभ्यो (देवेभ्यो).

(७) भा. १२।१२१।३७; भामु. १२।१२१।३८
ददत्युत (वदन्त्यपि).

[1]प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः ।
तस्मात्प्रजाः प्रतिष्ठन्ते दण्डो जागर्ति तासु च ॥

दण्डस्य ब्राह्मणमूर्तित्वं विवृण्वन् कथं जागर्ति इत्यस्योत्तरमाह– धर्मयुक्ता इत्यादिना । ब्राह्मणमूर्तिः दण्डः यज्ञादिद्वाराऽन्नसृष्टिहेतुतया भूतानि पालयन् जागर्तीति श्लोकत्रयार्थः । नीटी.

[2]एवंप्रयोजनश्चैव दण्डः क्षत्रियतां गतः ।
रक्षन्प्रजाः प्रजागर्ति नित्यं सुविहितोऽक्षरः ॥

कश्च पूर्वापरमिदं जागर्ति प्रतिपालयन्नित्यस्योत्तरमाह – 'एवंप्रयोजनः' इत्यादिना 'ज्ञेयो नः स नरेन्द्रस्थो दण्डः प्रत्यय एव च' इत्यन्तेन । नीटी.

अष्टनामा दण्ड एव ऐश्वर्यदाता कुलबाहुधनामात्यप्रज्ञाबलात्मकः

[3]ईश्वरः पुरुषः प्राणः सत्त्वं वित्तं प्रजापतिः ।
भूतात्मा जीव इत्येव नामभिः प्रोच्यतेऽष्टभिः ॥

[4]अददद्दण्ड एवास्मै ध्रुवमैश्वर्यमेव च ।
बले नयश्च संयुक्तः सदा पञ्चविधात्मकः ॥

अददत् ईश्वर इति शेषः । अस्मै राज्ञे । दण्डं दण्डनीतिम् । अत एवायं बलेन संयुक्तः पञ्चविध आत्मा यस्य स तथा । धर्मव्यवहारदण्डेश्वरजीवरूपेण पञ्चप्रकारात्मको राजा । नीटी.

[5]कुलबाहुधनामात्याः प्रज्ञा चोक्ता बलानि च ।
आहार्यं चाष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ॥

(१) भा. १२।१२१।३८; भामु. १२।१२१।३९.

(२) भा. १२।१२१।३९; भामु. १२।१२१।४०
प्रजागर्ति (स जागर्ति) सुविहि (स्ववहि).

(३) भा. १२।१२१।४०; भामु. १२।१२१।४१
वित्तं (चित्तं) इत्येव (इत्येवं).

(४) भा. १२।१२१।४१; भामु. १२।१२१।४२
दण्ड एवा (दण्डमेवा) ध्रुव (धृत) बले नयश्च (बलेन यश्च).

(५) भा. १२।१२१।४२; भामु. १२।१२१।४३
कुलबाहु (कुलं बहु) चोक्ता (प्रोक्ता) आहार्यं चाष्टकै (आहार्यमष्टकै).

बहुधनसहिता अमात्याः बहुधनामात्याः। बलानि तु तेजओजःसहआख्यानि देहेन्द्रियबुद्धिसामर्थ्यानि। अष्टकैः अष्टसंख्याकैः अनन्तरश्लोके वक्ष्यप्राणैर्हस्त्यादिभिः आहार्यं अर्जनीयम्। अन्यद्बलं कोशवृद्धिरूपम्। नीटी.

अष्टाङ्गं बलम्

[1]हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च।
दैशिकाश्चारकाश्चैव तदष्टाङ्गं बलं स्मृतम्॥
[2]अष्टाङ्गस्य तु युक्तस्य हस्तिनो हस्तियायिनः।
अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये॥

अङ्गस्य सैन्यस्य, 'राज्यस्य दण्डमेवाङ्गम्' इति वाक्यशेषात्। युक्तस्य संनद्धस्य रथादिकं शरीरं विदुरिति तृतीयेनान्वयः। रसदाः वैद्याः। नीटी.

[3]भिक्षुकाः प्राड्विवाकाश्च मौहूर्ता दैवचिन्तकाः।
कोशो मित्राणि धान्यं च सर्वोपकरणानि च॥

प्राड्विवाकाः, पृच्छतीति प्राट् स चासौ विवाकश्च, विवदमानयोर्द्वयोः प्रवृत्तिनिमित्तवेत्तारः। नीटी.

[4]सप्तप्रकृति चाष्टाङ्गं शरीरमिह यद्विदुः।
राज्यस्य दण्ड एवाङ्गं दण्डः प्रभव एव च॥

दण्डः सैन्यम्। दण्डः प्रसिद्धः। नीटी.

[5]ईश्वरेण प्रयत्नेन धारणे क्षत्रियस्य हि।
दण्डो दत्तः समानात्मा दण्डो हीदं सनातनम्।
राज्ञां पूज्यतमो नान्यो यथाधर्मप्रदर्शनः॥

(१) भा. १२।१२१।४३; भामु. १२।१२१।४४ श्चारका (श्चाविका).

(२) भा. १२।१२१।४४; भामु. १२।१२१।४५ अष्टाङ्गस्य तु (अथवाऽङ्गस्य) हस्तिनो (रथिनो).

(३) भा. १२।१२१।४५; भामु. १२।१२१।४६.

(४) भा. १२।१२१।४६; भामु. १२।१२१।४७ दण्ड एवा (दण्डमेवा).

(५) भा. १२।१२१।४७; भामु. १२।१२१।४८–४९ धारणे (कारणात्) हि (च) यथाधर्मप्रदर्शनः (यथा धर्मः प्रदर्शितः).

[1]ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च॥

दण्डः दण्डाधीनम्। प्रदर्शितः दण्डः, स्थापनाय च प्रदर्शिता ब्राह्मणाः। नीटी.

भर्तृप्रत्ययलक्षणः वेदप्रत्ययलक्षणश्च व्यवहारः दण्डः

[2]भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथाऽपरः।
तस्माद्यः सहितो दृष्टो भर्तृप्रत्ययलक्षणः॥

भर्तृप्रत्ययः भर्तारौ द्वौ विवदमानौ प्रत्ययः कारणं यस्य स तथा वादिप्रतिवादिभ्यां प्रवर्तितो व्यवहारः। तयोरन्यतरस्य प्रत्ययः अभ्युपगमः लक्षणं यस्य स भर्तृप्रत्ययलक्षणः, अन्यतरपराजयादित्यर्थः। सहितः हितं इष्टं तेन युक्तः सहितः, अन्यतरजयावह इत्यर्थः। नीटी.

[3]व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते।
मौलश्च नरशार्दूल शास्त्रोक्तश्च तथाऽपरः॥

वेदात्मा वेदोक्तो दोषः पारदार्यादिस्तन्निवृत्त्यर्थं पर्षदं प्रति गतश्चेत्तत्र प्रायश्चित्तात्मको वेदहेतुक एव दण्डः। मौलः कुलाचारप्रयुक्तो यो व्यवहारस्तत्रापि शास्त्रोक्तो दण्डः। यथा शूद्रस्य सुरापाने प्रायश्चित्तं नास्ति, अथापि कस्मिंश्चिच्छूद्रकुले एवं नियमः 'योऽस्माकं मध्ये सुरां पिबति स ज्ञातिबाह्यः' इति, तस्योल्लङ्घने शूद्रस्य सुरापानोक्तं प्रायश्चित्तं भवति। तथा च शास्त्रविदामनुक्रमणम् – 'धर्मज्ञानां समयः प्रमाणं वेदाश्च' इति। नीटी.

[4]उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः।
ज्ञेयो न स नरेन्द्रस्थो दण्डप्रत्यय एव च॥

(१) भा. १२।१२१।४८; भामु. १२।१२१।४९.

(२) भा. १२।१२१।४८; भामु. १२।१२१।४९–५०.

(३) भा. १२।१२१।४९; भामु. १२।१२१।५१ तथाऽपरः (तथा परः).

(४) भा. १२।१२१।५०; भामु. १२।१२१।५२ न स (नः स) दण्डप्रत्यय (दण्डः प्रत्यय).

तेषां त्रयाणां दण्डानां मध्ये आद्यः क्षत्रियाधीन इत्याह– उक्त इति । नः अस्माभिः क्षत्रियैर्दण्डोऽपि ज्ञेयः तत्र प्रत्ययोऽपि ज्ञेयः । नीटी.

[1]दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः ।
व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ॥

अस्यापि वेदमूलत्वमाह– दण्ड इति । विविधः अवहारः अन्योन्यं परपक्षक्षेपेण स्वपक्षसाधनं व्यवहारः तदात्मको न्यायः । स यद्यपि दण्डः प्रत्ययदृष्टस्तथापि स व्यवहारपदार्थो मन्वादिभिः स्मृतोऽस्ति । अतः सोऽपि वैदिकप्रणीतत्वाद्वेदविषयात्मकः वेदार्थगोचरः अस्तीत्यर्थः । नीटी.

[2]यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शकः ।
धर्मप्रत्यय उत्पन्नो यथाधर्मः कृतात्मभिः ॥
[3]व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर ।
त्रीन्धारयति लोकान्वै सत्यात्मा भूतिवर्धनः ॥

इतरौ द्वौ व्यवहारौ वेदमूलत्वाद्धर्मरूपावित्याह– यश्चेति द्वाभ्याम् । यथाधर्मं उद्दिष्टः मम पारदार्यजेनाधर्मेण धर्मलोपो मा भूदिति पश्चात्तापवति उद्दिष्टः प्रायश्चित्तरूपो दण्डो धर्म एवेत्यर्थः । प्रजागोप्ता प्रजाकृतस्य नियमस्य रक्षिता शूद्रस्यापि सुरापानप्रायश्चित्तादिरूपः सोऽपि धर्म एवेत्यर्थः । नीटी.

[4]यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः ।
व्यवहारश्च यो दृष्टः स धर्म इति नः श्रुतः ।
यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः ॥
[5]ब्रह्मा प्रजापतिः पूर्वं बभूवाथ पितामहः ।
लोकानां स हि सर्वेषां ससुरासुररक्षसाम् ।
समनुष्योरगवतां कर्ता चैव स भूतकृत् ॥

[1]ततो नो व्यवहारोऽयं भर्तृप्रत्ययलक्षणः ।
तस्मादिदमवोचाम व्यवहारनिदर्शनम् ॥

दण्ड-व्यवहार-धर्म-वेद-सत्पथ-प्रजापतीनामैकात्म्यमाह द्वाभ्याम्– यश्चेति । यतः प्रजापतिर्भूतकृत् ततो हेतोः अयमस्मदीयो भर्तृप्रत्ययलक्षणो व्यवहारः प्रवृत्तः, तस्मादस्मिन्विषये स इदं निदर्शनं वाक्यं उवाच । नीटी.

[2]माता पिता च भ्राता च भार्या चाथ पुरोहितः ।
नादण्ड्यो विद्यते राज्ञां यः स्वधर्मे न तिष्ठति ॥

तदेव वाक्यं पठति– मातेति । यो राजा स्वधर्मेण तिष्ठति तस्य राज्ञ इति संबन्धः । नीटी.

लोकसंग्रहार्थं दण्डस्य दण्डनीतेश्चोत्पत्तिः बार्हस्पत्यौशनसशास्त्रज्ञेन राज्ञा वसुहोमेन कथिता

भीष्म उवाच–

[3]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अङ्गेषु राजा द्युतिमान् वसुहोम इति श्रुतः ॥

अत्र दण्डोत्पत्तौ विषये । नीटी.

[4]स राजा धर्मनित्यः सन् सह पत्न्या महातपाः ।
मुञ्जपृष्ठं जगामाथ देवर्षिगणपूजितम् ॥
[5]तत्र शृङ्गे हिमवतो मेरौ कनकपर्वते ।
यत्र मुञ्जवटे रामो जटाहरणमादिशत् ॥
[6]तदाप्रभृति राजेन्द्र ऋषिभिः संशितव्रतैः ।
मुञ्जपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ॥

---

(१) भा. १२।१२१।५१; भामु. १२।१२१।५३.

(२) भा. १२।१२१।५२; भामु. १२।१२१।५४ दर्शकः ( दर्शनः ) उत्पन्नो यथाधर्मः ( उद्दिष्टो यथाधर्म ).

(३) भा. १२।१२१।५३; भामु. १२।१२१।५५.

(४) भा. १२।१२१।५४; भामु. १२।१२१।५६–५७ द्वितीयार्धे ( व्यवहारश्च दृष्टो यः स वेद इति निश्चितम् । ).

(५) भा. १२।१२१।५५ ; भामु. १२।१२१। ५७–५८ प्रजापतिः ( पितामहः ) पितामहः ( प्रजापतिः ).

(१) भा. १२।१२१।५६; भामु. १२।१२१।५९ ततो नो ( ततोऽन्यो ) मवोचाम ( मथोवाच ).

(२) भा. १२।१२१।५७; भामु. १२।१२१।६० चाथ ( चैव ) राज्ञां ( राज्ञो ) स्वधर्मे न ( स्वधर्मेण ).

(३) भा. १२।१२२।१; भामु.

(४) भा. १२।१२२।२; भामु. १२।१२२।२ धर्मनित्यः सन् ( धर्मविन्नित्यं ) देवर्षिगण ( पितृदेवर्षि ).

(५) भा. १२।१२२।३; भामु. १२।१२२।३ मुन्जवटे ( मुञ्जावटे ).

(६) भा. १२।१२२।४; भामु.

[1]स तत्र बहुभिर्युक्तः सदा श्रुतिमयैर्गुणैः ।
ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ॥

[2]तं कदाचिददीनात्मा सखा शक्रस्य मानितः ।
अभ्यागच्छन्महीपालो मान्धाता शत्रुकर्शनः ॥

[3]सोऽभिसृत्य तु मान्धाता वसुहोमं नराधिपम् ।
दृष्ट्वा प्रकृष्टं तपसा विनयेनाभ्यतिष्ठत ॥

[4]वसुहोमोऽपि राज्ञो वै गामर्घ्यं च न्यवेदयत् ।
अष्टाङ्गस्य च राज्यस्य पप्रच्छ कुशलं तदा ॥

[5]सद्भिराचरितं पूर्वं यथावदनुयायिनम् ।
अपृच्छद्वसुहोमस्तं राजन् किं करवाणि ते ॥

सोऽब्रवीत्परमप्रीतो मान्धाता राजसत्तमम् ।
वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन ॥

[6]बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया ।
तथैवौशनसं शास्त्रं विज्ञातं ते नराधिप ॥

[7]तदहं श्रोतुमिच्छामि दण्ड उत्पद्यते कथम् ।
किं वाऽपि पूर्वं जागर्ति किं वा परममुच्यते ॥

(१) भा. १२।१२२।५ ; भामु. १२।१२२।५ सदा (तदा).

(२) भा. १२।१२२।६; भामु. १२।१२२।६ मानितः (मानिता) अभ्यागच्छ (अभ्यगच्छ).

(३) भा. १२।१२२।७; भामु. १२।१२२।७ सोऽभिसृत्य (सोऽपसृत्य) उत्तरार्धे (दृष्ट्वा प्रकृष्टतपसं विनतोऽग्रेऽभ्यतिष्ठत ॥).

(४) भा. १२।१२२।८; भामु. १२।१२२।८ गामर्घ्यं च (पाद्यमर्घ्यं) उत्तरार्धे (सप्ताङ्गस्य तु राज्यस्य पप्रच्छ कुशलान्यथ ॥).

(५) भा. १२।१२२।९–१० ; भामु.

(६) भा. १२।१२२।११; भामु. १२।१२२।११ 'मान्धातोवाच' इत्यधिकम्, नराधिप (नरोत्तम).

(७) भा. १२।१२२।१२; भामु. १२।१२२।१२ श्रोतु (ज्ञातु) वाऽपि (चास्य).



[1]कथं क्षत्रियसंस्थश्च दण्डः संप्रत्यवस्थितः ।
ब्रूहि मे सुमहाप्राज्ञ ददाम्याचार्यवेतनम् ॥

आचार्यवेतनं गुरुदक्षिणाम् । नीटी.

वसुहोम उवाच—

[2]शृणु राजन् यथा दण्डः संभूतो लोकसंग्रहः ।
प्रजाविनयरक्षार्थं धर्मस्याऽऽत्मा सनातनः ॥

[3]ब्रह्मा यियक्षुर्भगवान्सर्वलोकपितामहः ।
ऋत्विजं नाऽऽत्मना तुल्यं ददर्शेति हि नः श्रुतम् ॥

यियक्षुः यष्टुमिच्छुः । नीटी.

[4]स गर्भं शिरसा देवो वर्षपूगानधारयत् ।
पूर्णे वर्षसहस्रे तु स गर्भः क्षुवतोऽपतत् ॥

क्षुवतः क्षुतवतः । नीटी.

[5]स क्षुपो नाम संभूतः प्रजापतिररिंदम ।
ऋत्विगासीत्तदा राजन्यज्ञे तस्य महात्मनः ॥

[6]तस्मिन् प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिवर्षभ ।
हृष्टरूपप्रचारत्वाद्दण्डः सोऽन्तर्हितोऽभवत् ॥

दृष्टरूपप्रधानत्वात्, दृष्टं रूपं दीक्षापरिग्रहः, प्रजानियन्ता दीक्षां प्रविष्ट इति नियमनरूपो दण्डोऽन्तर्हितोऽभवदित्यर्थः । नीटी.

[7]तस्मिन्नन्तर्हिते चाथ प्रजानां संकरोऽभवत् ।
नैव कार्यं न चाकार्यं भोज्याभोज्यं न विद्यते ॥

(१) भा. १२।१२२।१३ ; भामु.

(२) भा. १२।१२२।१४ ; भामु.

(३) भा. १२।१२२।१५ ; भामु. १२।१२२।१५ नाऽऽत्मना (नाऽऽत्मनः).

(४) भा. १२।१२२।१६ ; भामु. १२।१२२।१६ वर्षपूगानधा (बहुवर्षाण्यधा).

(५) भा. १२।१२२।१७ ; भामु. १२।१२२।१७ त्तदा राजन् (न्महाराज).

(६) भा. १२।१२२।१८ ; भामु. १२।१२२।१८ हृष्टरूपप्रचार (दृष्टरूपप्रधान).

(७) भा. १२।१२२।१९ ; भामु. १२।१२२।१९ चाथ (चापि) चाकार्यं (वाऽकार्यं).

[१]पेयापेयं कुतः सिद्धिर्हिंसन्ति च परस्परम् ।
गम्यागम्यं तदा नाऽऽसीत्परस्वं स्वं च वै समम् ॥

[२]परस्परं विलुम्पन्ते सारमेया इवाऽऽमिषम् ।
अबलं बलिनो जघ्नुर्निर्मर्यादमवर्तत ॥

[३]ततः पितामहो विष्णुं भगवन्तं सनातनम् ।
संपूज्य वरदं देवं महादेवमथाब्रवीत् ॥

[४]अत्र साध्वनुकम्पां वै कर्तुमर्हसि केवलम् ।
संकरो न भवेदत्र यथा वै तद्विधीयताम् ॥

[५]ततः स भगवान्ध्यात्वा चिरं शूलजटाधरः ।
आत्मानमात्मना दण्डमसृजद्देवसत्तमः ॥

[६]तस्माच्च धर्मचरणां नीतिं देवीं सरस्वतीम् ।
असृजद्दण्डनीतिः सा त्रिषु लोकेषु विश्रुता ॥

निकायभेदेन एकैकाधिपतिनियोजनं रुद्रकृतम्

[७]भूयः स भगवान्ध्यात्वा चिरं शूलवरायुधः ।
तस्य तस्य निकायस्य चकारैकैकमीश्वरम् ॥

(१) भा. १२।१२२।२० ; भामु. १२।१२२।२० पेयापेयं ( पेयापेये ) त्परस्वं स्वं ( त्स्वं परस्वं ).

(२) भा. १२।१२२।२१ ; भामु. १२।१२२।२१ विलुम्पन्ते ( विलुम्पन्ति ) इवाऽऽमिषम् ( यथाऽऽमिषम् ) अबलं ( अबलान् ) जघ्नुः ( घ्नन्ति ).

(३) भा. १२।१२२।२२ ; भामु.

(४) भा. १२।१२२।२३; भामु. १२।१२२।२३ साध्वनु ( त्वमनु ) केवलम् ( केशव ) वै तद्वि (तद्वै वि).

(५) भा. १२।१२२।२४; भामु. १२।१२२।२४ जटाधरः ( वरायुधः ) ण्डमसृजद्दे ( ण्डं ससृजे दे ).

(६) भा. १२।१२२।२५; भामु. १२।१२२।२५ पूर्वार्धे ( तस्माच्च धर्मचरणान्नीतिर्देवी सरस्वती । ) असृजद्दण्डनीतिः ( ससृजे दण्डनीतिं ).

(७) भा. १२।१२२।२६ ; भामु.

[१]देवानामीश्वरं चक्रे देवं दशशतेक्षणम् ।
यमं वैवस्वतं चापि पितॄणामकरोत्पतिम् ॥

[२]धनानां रक्षसां चापि कुबेरमपि चेश्वरम् ।
पर्वतानां पतिं मेरुं सरितां च महोदधिम् ॥

[३]अपां राज्ये सुराणां च विदधे वरुणं प्रभुम् ।
मृत्युं प्राणेश्वरमथो तेजसां च हुताशनम् ॥

[४]रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः ।
महात्मानं महादेवं विशालाक्षं सनातनम् ॥

[५]वसिष्ठमीशं विप्राणां वसूनां जातवेदसम् ।
तेजसां भास्करं चक्रे नक्षत्राणां निशाकरम् ॥
वीरुधामंशुमन्तं च भूतानां च प्रभुं वरम् ।
कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ॥
कालं सर्वेशमकरोत्संहारविनयात्मकम् ।
मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ॥

विनयः विवृद्धिः । चत्वारो विभागा यस्य तस्य । शस्त्रं शत्रुः यमः कर्म च, रोगोऽपथ्याशनप्रयोजको रागो यमः कर्म चेति वा । नीटी.

[६]ईश्वरः सर्वदेहस्तु राजराजो धनाधिपः ।
सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ॥

[७]तमेकं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ ।
प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ॥

(१) भा. १२।१२२।२७ ; भामु. १२।१२२।२७ त्पतिम् (त्प्रभुम् ).

(२) भा. १२।१२२।२८; भामु. १२।१२२।२८ रक्षसां चापि ( राक्षसानां च ).

(३) भा. १२।१२२।२९ ; भामु.

(४) भा. १२।१२२।३० ; भामु. १२।१२२।३० प्रभुः ( प्रभुम् ).

(५) भा. १२।१२२।३१–३३ ; भामु.

(६) भा. १२।१२२।३४; भामु. १२।१२२।३४ देहस्तु ( देवस्तु ) धनाधिपः ( नराधिपः ).

(७) भा. १२।१२२।३५ ; भामु. १२।१२२।३५ तमेकं ( तमेनं ).

दण्डधारिणी विष्ण्वादिपरंपरा

[1]महादेवस्ततस्तस्मिन्वृत्ते यज्ञे यथाविधि ।
दण्डं धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ॥

विष्णुरङ्गिरसे प्रादादङ्गिरा मुनिसत्तमः ।
प्रादादिन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ ॥

[2]भृगुर्ददावृषिभ्यस्तु तं दण्डं धर्मसंहितम् ।
ऋषयो लोकपालेभ्यो लोकपालाः क्षुपाय च ॥

[3]क्षुपस्तु मनवे प्रादादादित्यतनयाय च ।
पुत्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात् ।
तं ददौ सूर्यपुत्रस्तु मनुर्वै रक्षणात्मकम् ॥

[4]विभज्य दण्डः कर्तव्यो धर्मेण न यदृच्छया ।
दुर्वाचा निग्रहो बन्धो हिरण्यं बाह्यतः क्रिया ॥

विभज्य न्यायं न्यायाभासं च विविच्य दुष्टनिग्रह एव दण्डस्य मुख्यं प्रयोजनम्, हिरण्यादिग्रहणं तु लोकानां बिभीषिकार्थम्, न तु कोशवृद्ध्यर्थमित्यर्थः । नीटी.

[5]व्यङ्गत्वं च शरीरस्य वधो वा नाल्पकारणात् ।
शरीरपीडास्तास्तास्तु देहत्यागो विवासनम् ॥

देहत्यागः प्रपातादौ । विवासनं स्वदेशात् दूरीकरणम्। नीटी.

[6]आनुपूर्व्या च दण्डोऽसौ प्रजा जागर्ति पालयन् ।
इन्द्रो जागर्ति भगवानिन्द्रादग्निर्विभावसुः ॥

[1]अग्नेर्जागर्ति वरुणो वरुणाच्च प्रजापतिः ।
प्रजापतेस्ततो धर्मो जागर्ति विनयात्मकः ॥

[2]धर्माच्च ब्रह्मणः पुत्रो व्यवसायः सनातनः ।
व्यवसायात्ततस्तेजो जागर्ति परिपालयन् ॥

[3]ओषध्यस्तेजसस्तस्मादोषधिभ्यश्च पर्वताः ।
पर्वतेभ्यश्च जागर्ति रसो रसगुणात्तथा ॥

[4]जागर्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतेरपि ।
वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः ॥

[5]ब्रह्मा पितामहस्तस्माज्जागर्ति प्रभुरव्ययः ।
पितामहान्महादेवो जागर्ति भगवाञ्छिवः ॥
विश्वेदेवाः शिवाच्चापि विश्वेभ्यश्च तथर्षयः ।
ऋषिभ्यो भगवान्सोमः सोमाद्देवाः सनातनाः ॥
देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय ।
ब्राह्मणेभ्यश्च राजन्या लोकान्रक्षन्ति धर्मतः ।
स्थावरं जङ्गमं चैव क्षत्रियेभ्यः सनातनम् ॥

[6]प्रजा जाग्रति लोकेऽस्मिन्दण्डो जागर्ति तासु च ।
सर्वसंक्षेपको दण्डः पितामहसमः प्रभुः ॥

[7]जागर्ति कालः पूर्वं च मध्ये चान्ते च भारत ।
ईश्वरः सर्वलोकस्य महादेवः प्रजापतिः ॥

[8]देवदेवः शिवः शर्वो जागर्ति सततं प्रभुः ।
कपर्दी शंकरो रुद्रो भवः स्थाणुरुमापतिः ॥

---

(१) भा. १२।१२२।३६–३७ ; भामु.

(२) भा. १२।१२२।३८; भामु. १२।१२२।३८ तं दण्डं धर्मसंहितम् ( दण्डं धर्मसमाहितम् ).

(३) भा. १२।१२२।३९ ; भामु. १२।१२२।३९ : १२।१२२।४२ णात्मकम् ( णार्थकम् ) तृतीयार्धमात्रम्।

(४) भा. १२।१२२।४०; भामु. १२।१२२।४० दुर्वाचा निग्रहो बन्धो ( दुष्टानां निग्रहो दण्डो ).

(५) भा. १२।१२२।४१ ; भामु. १२।१२२।४१ वा नाल्प ( नालपस्य ) तास्तास्तु ( तास्ताश्च ).

(६) भा. १२।१२२।४२ ; भामु. १२।१२२।४२–४३ दण्डोऽसौ ( दण्डोऽयं ).

(१) भा. १२।१२२।४३; भामु. १२।१२२।४३–४४.

(२) भा. १२।१२२।४४; भामु. १२।१२२।४४–४५ पालयन् ( पालयत् ).

(३) भा. १२।१२२।४५; भामु. १२।१२२।४५–४६ धिभ्यश्च ( धीभ्यश्च ).

(४) भा. १२।१२२।४६; भामु. १२।१२२।४६–४७.

(५) भा. १२।१२२।४७–४९; भामु. १२।१२२। ४७–५०.

(६) भा. १२।१२२।५० ; भामु. १२।१२२।५१ जाग्रति (जागर्ति) उत्तरार्धे (सर्वं संक्षिपते दण्डः पितामहसमप्रभः । ).

(७) भा. १२।१२२।५१ ; भामु. १२।१२२।५२.

(८) भा. १२।१२२।५२; भामु. १२।१२२।५३ शर्वो ( सर्वो ) भवः ( शिवः ).

[1]इत्येष दण्डो विख्यात आदौ मध्ये तथाऽवरे ।
भूमिपालो यथान्यायं वर्तेतानेन धर्मवित् ॥

भीष्म उवाच–

[2]इतीदं वसुहोमस्य शृणुयाद्यो मतं नरः ।
श्रुत्वा च सम्यग्वर्तेत स कामानाप्नुयान्नृपः ॥

[3]इति ते सर्वमाख्यातं यो दण्डो मनुजर्षभ ।
नियन्ता सर्वलोकस्य धर्माक्रान्तस्य भारत ॥

धर्मार्थकामास्त्रिवर्गः

युधिष्ठिर उवाच–

[4]तात धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम् ।
लोकयात्रा हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता ॥

[5]धर्मार्थकामाः किंमूलास्त्रयाणां प्रभवश्च कः ।
अन्योन्यं चानुषज्जन्ते वर्तन्ते च पृथक्पृथक् ॥

किंमूलाः किमुद्दिश्य क्रियन्त इत्यर्थः । प्रभवत्यस्मादिति प्रभवः । किमेषामुत्पत्तिस्थानम् , तेषां साहित्यं कथम् , पृथक्पृथक्त्वं च कथं इति चत्वारः प्रश्नाः । नीटी.

भीष्म उवाच–

[6]यदा ते स्युः सुमनसो लोकसंस्थार्थनिश्चये ।
कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ॥

सूचीकटाहन्यायेन साहित्यमाह– यदेति । सुमनसः शोभनचित्ताः पुमांसः यदा स्युस्तदा लोके भूमौ धर्मपूर्वके अर्थनिश्चये ‘ अहं गर्भाधानोक्तविधिना ऋतौ भार्यां गत्वा सुपुत्रं लप्स्याम्येव ’ इत्येवंरूपे प्रवृत्ते सति ते धर्मार्थकामास्त्रयोऽपि कालः ऋतुवेला, प्रभवः जाया, संस्था सम्यक्कर्मनिष्पत्तिः, तासु सतीषु सज्जन्ते युगपदुत्पद्यन्ते । योनिसंस्काररूपो धर्मः पुत्ररूपोऽर्थः स्त्रीसंगरूपः कामश्च भवतीत्यर्थः । नीटी.

[1]धर्ममूलस्तु देहोऽर्थः कामोऽर्थफलमुच्यते ।
संकल्पमूलास्ते सर्वे संकल्पो विषयात्मकः ॥

आद्यस्य प्रश्नद्वयस्योत्तरमाह– धमति । दिव्यदेवतादिशरीरप्राप्तिमर्थांश्च स्त्र्यादीनुद्दिश्य धर्मः क्रियते, अतो दैवेन सहितोऽर्थो धर्ममूलः । अर्थस्य भोगार्थत्वं प्रसिद्धमिति काममूलोऽर्थ इति नोक्तम् । कामः अर्थफलम् , कामस्य मूलमिन्द्रियप्रीतिरित्यर्थः । संकल्पमूलाः संकल्पप्रभवास्ते सर्वेऽपीति द्वितीयस्योत्तरम् । एतदेवोपपादयति –संकल्प इति । रूपादिविषयः संकल्पो रूपाद्याश्च भोगार्था इति सर्वेऽप्येते संकल्पमूलाः । मोक्षस्तु तद्विलक्षणो निःसंकल्परूप इत्यर्थः । नीटी.

[2]विषयाश्चैव कार्त्स्न्येन सर्व आहारसिद्धये ।
मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥

[3]धर्मः शरीरसंगुप्तिर्धर्मार्थं चार्थ इष्यते ।
कामो रतिफलश्चात्र सर्वे चैते रजस्वलाः ॥

किमेवं त्रिवर्गः सर्वेणापि न सेव्यः इत्याशङ्क्य, रजस्वलः रजःप्रधानः स न सेव्यः , सत्त्वप्रधानस्तु सेव्य एवेत्याह– धर्मादिति । आरोग्यार्थं धर्मः, काम्यधमार्थमर्थः, इन्द्रियप्रीत्यर्थं कामः इत्येते हेया इत्यर्थः। नीटी.

[4]संनिकृष्टांश्चरेदेनान्न चैनान्मनसा त्यजेत् ।
विमुक्तस्तमसा सर्वान् धर्मादीन् कामनैष्ठिकान् ॥

स्वर्गादिकं बाह्यं फलं विप्रकृष्टम् । तदर्था एते विप्रकृष्टाः । आत्मज्ञानरूपं फलं तु संनिकृष्टम् । तदर्थाः

---

(१) भा. १२।१२२।५३; भामु. १२।१२२।५४.

(२) भा. १२।१२२।५४ ; भामु. १२।१२२।५५ उत्तरार्धे ( श्रुत्वा सम्यक् प्रवर्तेत सर्वान्कामानवाप्नुयात् । ).

(३) भा. १२।१२२।५५; भामु. १२।१२२।५६.

(४) भा. १२।१२३।१; भामु. १२।१२३।१ त्रिष्वेतेषु ( तिष्ठेत्केषु ).

(५) भा. १२।१२३।२; भामु.

(६) भा. १२।१२३।३ ; भामु. १२।१२३।३ लोकसंस्थार्थ ( लोके धर्मार्थं ).

(१) भा. १२।१२३।४ ; भामु. १२।१२३।४ लस्तु देहोऽर्थः ( लः सदैवार्थः ).

(२) भा. १२।१२३।५; भामु.

(३) भा. १२।१२३।६; भामु. १२।१२३।६ धर्मः ( धर्मात् ) इष्यते ( उच्यते ) चैते ( ते च ).

(४) भा. १२।१२३।७; भामु. १२।१२३।७ देनान्न चैनान् । देतान्न चैतान् ) स्तमसा ( स्तपसा ).

एते संनिकृष्टाः। तांश्चरेत् सेवेत। धर्मश्चित्तशुद्ध्यर्थः, अर्थो निष्कामकर्मार्थः, कामो देहधारणमात्रार्थः इत्येवमेते सेव्या इत्यर्थः। धर्मादीन् कामनैष्ठिकान् कामान्तान् धर्मार्थकामान् सर्वानपि मनसाऽपि न त्यजेत्, किमुत स्वरूपेण न त्यजेदित्यर्थः। कथं तर्ह्येतांस्त्यजेदित्याह– तपसा विमुक्त इति। विचारेणैव तेभ्यो विमुक्तो भवेत्। संगफलत्यागपूर्वकं धर्मादीननुतिष्ठेदिति भावः। नीटी.

[1]श्रेष्ठबुद्धिस्त्रिवर्गस्य यदयं प्राप्नुयात्क्षणात्।
कर्मणा बुद्धिपूर्वेण भवत्यर्थो न वा पुनः॥

ततश्च किमत आह– श्रेष्ठ इत्यर्धेन। त्रिवर्गस्य बुद्धिः निष्ठा श्रेष्ठे मोक्षे एवास्ति, यत् यदि अयं कर्ता तं श्रेष्ठं प्राप्नुयात्। इतस्तु निष्कामस्य तस्य दौर्लभ्यमेवेति भावः। काम्यं धर्मं निन्दति– कर्मणेति। अस्मात् कर्मण इदं फलं प्राप्स्ये इति बुद्धिपूर्वं कृतेनापि कर्मणा अर्थः कदाचिद्भवति कदाचिन्न इति व्यभिचारः। नीटी.

अर्थार्थमन्यद्भवति विपरीतमथापरम्।
अनर्थार्थमवाप्यार्थमन्यत्राऽऽद्योपकारकम्॥
बुद्ध्या बुध्येदिहार्थे न तदह्वा तु निकृष्टया॥

अर्थार्थे धर्मादपि अन्यत् सेवाकृष्यादिकं भवति इति न धर्मैकलभ्योऽर्थः, इति अर्थार्थे धर्मो न कार्यः। प्रत्युत विपरीतमपि अपरं मतमस्ति। केचित् हठेनैवार्थो भवति स्वभावेन वा दैवेन वा इति मन्यन्ते, इति तदर्थमलं धर्मेणेत्यर्थः। एवं धर्मस्यार्थहेतुत्वं दूरीकृत्यार्थस्यापि धर्महेतुत्वं दूषयति– अर्थमवाप्यापि जगत् अनर्थार्थे अपायार्थे भवति। तथाहि– धनमत्तः सर्वं पापं करोतीति नार्थेन धर्मोत्पत्तिर्नित्याऽस्ति। अर्थं विनापि धर्मोत्पत्तिरस्तीत्याह– अन्यत्राऽऽद्योपकारकम्। स्वार्थे त्रल्। अन्यत्र अन्यदेवोपवासव्रतादिकं आद्यस्य धर्मस्य उपकारकं वर्धकं भवति। इहार्थे अस्मिन्नर्थे धर्मादर्थोऽर्थतो धर्मः इति विषये अज्ञाननिकृष्टया बुद्ध्या उपलक्षितः अबुद्धिः विमूढः तत् उक्तरूपं धर्मार्थयोः फलं न प्राप्नुयात्, उभयत्रापि व्यभिचारस्यान्यथासिद्धेः प्रदर्शितत्वात्। तस्माच्छ्रेष्ठमेव तयोः फलमव्यभिचारीति ज्ञेयम्। नीटी.

[1]अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम्।
संप्रमोदमलः कामो भूयः स्वगुणवर्तितः॥

धर्मादीनां रजस्वलत्वमुक्तं, तदेव रजो दर्शयति– अपेति। अपध्यानं फलाभिसंधिः। निगूहनं दानभोगयोरप्रतिपादनम्। संप्रमोदः प्रीतिविशेषः। स एव त्रिवर्गः स्वगुणवर्जितः, सुतरां अगुणः दुर्गुणः अपध्यानादिः, तेन वर्जितः सन् भूयः बहुतरं फलं चित्तशुद्धिद्वारा ब्रह्मानन्दरूपं, प्रयच्छति इति शेषः। नीटी.

[2]अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
कामन्दस्य च संवादमङ्गारिष्ठस्य चोभयोः॥
[3]कामन्दमृषिमासीनमभिवाद्य नराधिपः।
अङ्गारिष्ठोऽथ पप्रच्छ कृत्वा समयपर्ययम्॥
[4]यः पापं कुरुते राजा काममोहबलात्कृतः।
प्रत्यासन्नस्य तस्यर्षे किं स्यात्पापप्रणाशनम्॥

एवं पूर्वोक्तस्य प्रश्नत्रयस्योत्तरमुक्त्वा 'वर्तन्ते च पृथक्पृथक्' (भा. १२।१२२।२) इति चतुर्थप्रश्नस्योत्तरमितिहासमुखेनाऽऽह– अत्रापीति। समयपर्ययं मर्यादाभङ्गम्। प्रत्यासन्नस्य पश्चात्तप्तस्य। नीटी.

[5]अधर्मो धर्म इति ह योऽज्ञानादाचरेदिह।
तं चापि प्रथितं लोके कथं राजा निवर्तयेत्॥

---

(१) भा. १२।१२३।८ (कर्मणा बुद्धि . . . द्योपकारकम्०); भामु. १२।१२३।८–९ श्रेष्ठबु (श्रेष्ठे बु) क्षणात् (त्वरः) बुध्येदिहार्थे न तदह्वा तु (बुद्धिरिहार्थेन तदज्ञान).

(१) भा. १२।१२३।९; भामु. १२।१२३।१० वर्तितः (वर्जितः).

(२) भा. १२।१२३।१०; भामु. १२।१२३।११ कामन्दस्य च (कामन्दकस्य) मङ्गारिष्ठस्य (माङ्गरिष्ठस्य).

(३) भा. १२।१२३।११; भाम. १२।१२३।१२ अङ्गारिष्ठो (आङ्गरिष्ठो).

(४) भा. १२।१२३।१२; भामु. १२।१२३।१३.

(५) भा. १२।१२३।१३; भामु. १२।१२३।१४ अधर्मो (अधर्मं) इति ह (इति च) दिह (त्वरः).

कामन्द उवाच–

[1]यो धर्मार्थौ समुत्सृज्य काममेवानुवर्तते ।
स धर्मार्थपरित्यागात्प्रज्ञानाशमिहार्च्छति ॥

अत्र आपस्तम्बाम्रनिदर्शनात् ' तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते ' ( आध. १।२०।३ ) इत्येवंरूपात् धर्मोऽर्थकामाभ्यामविनाभूतः अर्थश्च कामेनाविनाभूतः सर्वत्रास्ति, परिशेषात् काम एव धर्मार्थौ अतिक्रम्यास्ति, तत्परं निन्दति– य इति । नीटी.

[2]प्रज्ञाप्रणाशको मोहस्तथा धर्मार्थनाशकः ।
तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥

[3]दुराचारान् यदा राजा प्रदुष्टान्न नियच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥

[4]तं प्रजा नानुवर्तन्ते ब्राह्मणा न च साधवः ।
ततः संक्षयमाप्नोति तथा वध्यत्वमेति च ॥

[5]अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम् ॥
जीवेच्च यदपध्वस्तस्तच्छुद्धं मरणं भवेत् ॥

[6]अत्रैतदाहुराचार्याः पापस्य च निबर्हणम् ।
सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ॥

एवं निन्दितस्य कर्तव्यमाह– अत्रेति । नीटी.

[7]महामना भवेद्धर्मे विवहेच्च महाकुले ।
ब्राह्मणांश्चापि सेवेत क्षमायुक्तान् मनस्विनः ॥

(१) भा. १२।१२३।१४ ; भामु. १२।१२३।१५ समुत्सृज्य ( परित्यज्य ).

(२) भा. १२।१२३।१५ ; भामु. १२।१२३।१६ प्रणाशको ( नाशात्मको ).

(३) भा. १२।१२३।१६ ; भामु. १२।१२३।१७.

(४) भा. १२।१२३।१७ ; भामु. १२।१२३।१८ संक्षय ( संशय ).

(५) भा. १२।१२३।१८ ; भामु. १२।१२३।१९ जीवति जीवितम् ( जीवितमृच्छति ).

(६) भा. १२।१२३।१९ ; भामु. १२।१२३।२० च निबर्हणम् ( परिगर्हणम् ).

(७) भा. १२।१२३।२० ; भामु. १२।१२३।२१.

[1]जपेदुदकशीलः स्यात्सुमुखो नान्यदास्थितः ।
धर्मान्वितान् संप्रविशेद्बहिः कृत्वैव दुष्कृतीन् ॥

[2]प्रसादयेन्मधुरया वाचाऽप्यथ च कर्मणा ।
इत्यस्मीति वदेन्नित्यं परेषां कीर्तयन् गुणान् ॥

[3]अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
पापान्यपि च कृच्छ्राणि शमयेन्नात्र संशयः ॥

[4]गुरवोऽपि परं धर्मं यद्ब्रूयुस्तत्तथा कुरु ।
गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥

धर्मकारणं शीलमनुष्ठेयम्

युधिष्ठिर उवाच–

[5]इमे जना नरश्रेष्ठ प्रशंसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥

इमे जना इति शीलाध्यायः । धर्मस्य, कारणमिति शेषः । नीटी.

यदि तच्छक्यमस्माभिर्ज्ञातुं धर्मभृतां वर ।
श्रोतुमिच्छामि तत्सर्वं यथैतदुपलभ्यते ॥

[6]कथं नु प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
किंलक्षणं च तत्प्रोक्तं ब्रूहि मे वदतां वर ॥

भीष्म उवाच–

[7]पुरा दुर्योधनेनेह धृतराष्ट्राय मानद ।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा तथागताम् ॥

(१) भा. १२।१२३।२१; भामु. १२।१२३।२२ स्सुमुखो नान्यदा ( स्सततं सुखमा ) कृत्वैव ( कृत्वेह ).

(२) भा. १२।१२३।२२; भामु. १२।१२३।२३ ऽप्यथ च ( वाऽप्यथ ) इत्यस्मीति ( तवास्मीति ).

(३) भा. १२।१२३।२३ ; भामु. १२।१२३।२४ च कृच्छ्राणि ( हि कृच्छ्राणि ).

(४) भा. १२।१२३।२४ ; भामु. १२।१२३।२५ वोऽपि ( वो हि ) यद्ब्रूयुस्तत्तथा ( यं ब्रूयुस्तं तथा) दाद्धि ( दाद्वै ).

(५) भा. १२।१२४।१–२ ; भामु.

(६) भा. १२।१२४।३ ; भामु. १२।१२४।३ कथं नु ( कथं तत् ).

(७) भा. १२।१२४।४ ; भामु.

[1]इन्द्रप्रस्थे महाराज तव सभ्रातृकस्य ह ।
सभायां चावहसनं तत्सर्वं शृणु भारत ॥

[2]भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम् ।
दुर्योधनस्तदासीनः सर्वं पित्रे न्यवेदयत् ॥

[3]श्रुत्वा च धृतराष्ट्रोऽपि दुर्योधनवचस्तदा ।
अब्रवीत्कर्णसहितं दुर्योधनमिदं वचः ॥

धृतराष्ट्र उवाच–

[4]किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः ।
श्रुत्वा त्वामनुनेष्यामि यदि सम्यग् भविष्यसि ॥

[5]यथा त्वं महदैश्वर्यं प्राप्तः परपुरंजय ।
किंकरा भ्रातरः सर्वे मित्राः संबधिनस्तथा ॥

[6]आच्छादयसि प्रावारानश्नासि पिशितोदनम् ।
आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक ॥

दुर्योधन उवाच–

[7]दश तानि सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥

---

(१) भा. १२।१२४।५ ; भामु. १२।१२४।५ चाव-हसनं ( चाऽऽह वचनं ).

(२) भा. १२।१२४।६ ; भामु.

(३) भा. १२।१२४।७ ; भामु. १२।१२४।७ च धृतराष्ट्रोऽपि ( हि धृतराष्ट्रस्य ).

(४) भा. १२।१२४।८ ; भामु. १२।१२४।८ विष्यसि (विष्यति ).

(५) भा. १२।१२४।९ ; भामु. १२।१२४।९ यथा त्वं ( त्वया च ) प्राप्तः ( प्राप्तं ) मित्राः संवन्धिनस्तथा ( मित्रसंबन्धिनः सदा ).

(६) भा. १२।१२४।१० ; भामु. १२।१२४।१० नश्नासि ( न्नाश्नासि ) तोदनम् ( तौदनम् ) उत्तरार्धे (आजा-नेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥ ).

(७) भा. १२।१२४।११ ; भामु. १२।१२४।११ पात्रीषु यु ( पात्रीभिर्यु ).

[1]दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफला-न्विताम् ।
अश्वांस्तित्तिरकल्माषान् रत्नानि विविधानि च ॥

[2]दृष्ट्वा तां पाण्डवेयानामृद्धिमिन्द्रोपमां शुभाम् ।
अमित्राणां सुमहतीमनुशोचामि मानद ॥

धृतराष्ट्र उवाच–

[3]यदीच्छसि श्रियं तात यादृशीं तां युधिष्ठिरे ।
विशिष्टां वा नरव्याघ्र शीलवान् भव पुत्रक ॥

[4]शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किंचिदसाध्यं वै लोके शीलवतां भवेत् ॥

[5]एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिवान् ॥

[6]एते हि पार्थिवाः सर्वे शीलवन्तो दमान्विताः ।
अतस्तेषां गुणक्रीता वसुधा स्वयमागमत् ॥

'गुणाक्रीडा' इति पाठे गुणारामा ।

नीटी.

दुर्योधन उवाच–

[7]कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
येन शीलेन तैः प्राप्ता क्षिप्रमेव वसुन्धरा ॥

---

(१) भा. १२।१२४।१२ ; भामु. १२।१२४।१२ न्रत्नानि ( न्वस्त्राणि ).

(२) भा. १२।१२४।१३ ; भामु. १२।१२४।१३ मृद्धिमिन्द्रोपमां ( मृद्धिं वैश्रवणीं ) मानद ( भारत ).

(३) भा. १२।१२४।१४ ; भामु. १२।१२४।१४ यादृशीं तां ( यादृशी सा ).

(४) भा. १२।१२४।१५ ; भामु.

(५) भा. १२।१२४।१६ ; भामु. १२।१२४।१६ पेदिवान् ( पेदिरे ).

(६) भा. १२।१२४।१७ ; भामु. १२।१२४।१७ दमा ( दया ) मागमत् ( मागता ).

(७) भामु. १२।१२४।१८.

शीलाख्यानम्

धृतराष्ट्र उवाच–

[1]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत ॥

प्रह्लादेन हृतं राज्यं महेन्द्रस्य महात्मनः ।
शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशीकृतम् ॥

[2]ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ।
उवाच च महाप्राज्ञः श्रेय इच्छामि वेदितुम् ॥

[3]ततो बृहस्पतिस्तस्मै ज्ञानं नैःश्रेयसं परम् ।
कथयामास भगवान् देवेन्द्राय कुरूद्वह ॥

नैःश्रेयसं मोक्षोपयोगि । नीटी.

[4]एतावच्छ्रेय इत्येव बृहस्पतिरभाषत ।
इन्द्रस्तु भूयः पप्रच्छ क विशेषो भवेदिति ॥

को विशेषः नैःश्रेयसादपि किं श्रेय इत्यर्थः । नीटी.

बृहस्पतिरुवाच–

[5]विशेषोऽस्ति महाँस्तात भार्गवस्य महात्मनः ।
तत्राऽऽगमय भद्रं ते भूय एव पुरन्दर ॥

धृतराष्ट्र उवाच–

[6]आत्मनस्तु ततः श्रेयो भार्गवात्सुमहायशाः ।
ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः ॥

(१) भा. १२।१२४।१८–१९ ; भामु. १२।१२४। १९–२०.

(२) भा. १२।१२४।२० ; भामु. १२।१२४।२१ उवाच च (तमुवाच).

(३) भा. १२।१२४।२१ ; भामु. १२।१२४।२२.

(४) भा. १२।१२४।२२ ; भामु. १२।१२४।२३ क (को).

(५) भा. १२।१२४।२३ ; भामु. १२।१२४।२४ तत्रा (अत्रा).

(६) भा. १२।१२४।२४ ; भामु. १२।१२४।२५ (धृतराष्ट्र उवाच०) यशाः (तपाः).

[1]तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः ॥

[2]भार्गवस्त्वाह धर्मज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेण ततो हृष्टश्च सोऽभवत् ॥

[3]स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
सृत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥

[4]प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजर्षभ ।
त्रैलोक्यराज्ये सक्तस्य ततो नोपदिशामि ते ॥

[5]ब्राह्मणस्त्वब्रवीद्वाक्यं कस्मिन् काले क्षणो भवेत् ।
ततोपदिष्टमिच्छामि यद्यत्कार्यान्तरं भवेत् ॥

आचर्यं आचरणीयम् । नीटी.

[6]ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिने ।
तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ॥

[7]ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यद्वत्स मनसेच्छति ॥

[8]पृष्टश्च तेन बहुशः प्राप्तं कथमरिंदम ।
त्रैलोक्यराज्यं धर्मज्ञ कारणं तद्ब्रवीहि मे ॥

[9]प्रह्लादोऽपि महाराज ब्राह्मणं वाक्यमब्रवीत् ॥

(१) भा. १२।१२४।२५; भामु. १२।१२४।२६.

(२) भा. १२।१२४।२६ ; भामु. १२।१२४।२७ धर्मज्ञः (सर्वज्ञः) षेण ततो (षेणेत्युक्तो).

(३) भा. १२।१२४।२७; भामु. १२।१२४।२८ सृत्वा (गत्वा).

(४) भा. १२।१२४।२८; भामु. १२।१२४।२९ राज्ये (राज्य).

(५) भा. १२।१२४।२९; भामु. १२।१२४।३० द्वाक्यं कस्मिन् (द्राजन्यस्मिन्) उत्तरार्धे (तदोपादेष्टुमिच्छामि यदाचर्यमनुत्तमम् ॥).

(६) भा. १२।१२४।३० ; भामु. १२।१२४।३१ वादिने (वादिनः).

(७) भा. १२।१२४।३१ ; भामु. १२।१२४।३२ यद्वत्स (यदस्य) सेच्छति (सेप्सितम्).

(८) भा. १२।१२४।३२ ; भामु. १२।१२४।३३ मरिंदम (मनुत्तमम्).

(९) भामु. १२।१२४।३३.

प्रह्लाद उवाच–

[1]नासूयामि द्विजश्रेष्ठ राजाऽस्मीति कदाचन ।
कव्यानि वदतां तात संयच्छामि वहामि च ॥

काव्यानि शुक्रप्रोक्तानि नीतिशास्त्राणि सर्वज्ञत्वाभिमानेन नासूयामि । नीटी.

[2]ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
ते मा कव्यपदे सक्तं शुश्रूषुमनसूयकम् ॥

ते मुनयः ते त्वां संयच्छामि नियमयामीति मां प्रभाषन्ते । नीटी.

[3]धर्मात्मानं जितक्रोधं संयतं संयतेन्द्रियम् ।
समाचिन्वन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥

[4]सोऽहं वागग्रपिष्टानां रसानामवलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥

क्षुद्राभिर्मधुमक्षिकाभिर्निर्मितं क्षौद्रं मधु, तत्र मक्षिकाः मध्विव मां ते शास्त्रेण सिञ्चन्ति । स इति । वागग्रविद्यानां वागग्रे एव न तु पुस्तके विद्या येषां तेषाम् । नीटी.

[5]एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखे कव्यमेतच्छ्रुत्वा प्रवर्तते ॥

धृतराष्ट्र उवाच–

[6]एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ॥

यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रं ते प्रदाताऽस्मि न संशयः ॥

कृतमित्येव दैत्येन्द्रमुवाच स च वै द्विजः ।
प्रह्लादस्त्वब्रवीत्प्रीतो गृह्यतां वर इत्युत ॥

ब्राह्मण उवाच–

[1]यदि राजन् प्रसन्नस्त्वं मम चेच्छसि चेद्धितम् ।
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥

धृतराष्ट्र उवाच–

[2]ततः प्रीतश्च दैत्येन्द्रो भयं चास्याभवन्महत् ।
वरे प्रदिष्टे विप्रेण नाल्पतेजाऽयमित्युत ॥

तेजाऽयमिति संधिरार्षः । नीटी.

[3]एवमस्त्विति तं प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥

[4]दत्ते वरे गते विप्रे चिन्ताऽऽसीन्महती ततः ।
प्रह्लादस्य महाराज निश्चयं न च जग्मिवान् ॥

[5]तस्य चिन्तयतस्तात च्छायाभूतं महाद्युते ।
तेजो विग्रहवत्तात शरीरमजहात्तदा ॥

तेजो विग्रहवत् तेजोमयशरीरं शीलम् । नीटी.

[6]तमपृच्छन्महाकायं प्रह्लादः को भवानिति ।
प्रत्याह ननु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥

---

(१) भा. १२।१२४।३३ ; भामु. १२।१२४।३४ द्विजश्रेष्ठ (द्विजान् विप्र) कव्यानि (काव्यानि) तात (तेषां).

(२) भा. १२।१२४।३४ ; भामु. १२।१२४।३५ विस्रब्धाः (विश्रब्धाः) मा कव्यपदे सक्तं (मां काव्यपथे युक्तं). नीलकण्ठीटीकायां तु 'संयच्छन्ति' इत्यत्र 'संयच्छामि' इति पाठः।

(३) भा. १२।१२४।३५ ; भामु. १२।१२४।३६ संयतं (नियतं) चिन्वन्ति (सिञ्चन्ति).

(४) भा. १२।१२४।३६ ; भामु. १२।१२४।३७ पिष्टानां (विद्यानां).

(५) भा. १२।१२४।३७ ; भामु. १२।१२४।३८ कव्य (काव्य).

(६) भा. १२।१२४।३८-४० ; भामु. १२।१२४।३९-४१.

(१) भा. १२।१२४।४१ ; भामु. १२।१२४।४२ चेच्छसि चेद्धितम् (चेदिच्छसि प्रियम्).

(२) भा. १२।१२४।४२ ; भामु. १२।१२४।४३ (धृतराष्ट्र उवाच०) यं चास्या (यमस्या).

(३) भा. १२।१२४।४३ ; भामु. १२।१२४।४४ तं (स).

(४) भा. १२।१२४।४४ ; भामु. १२।१२४।४५ ततः (तदा).

(५) भा. १२।१२४।४५ ; भामु. १२।१२४।४६ तस्तात च्छा (तस्तावच्छा) द्युते (द्युति) तेजो वि (तेजोवि).

(६) भा. १२।१२४।४६ ; भामु. १२।१२४।४७ ह ननु (हतं तु).

¹तस्मिन् द्विजवरे राजन् वत्स्याम्यहमनिन्दितम् ।
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ।
इत्युक्त्वाऽन्तर्हितं तद्वै शक्रं चान्वविशत्प्रभो ॥
²तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः ।
शरीरान्निःसृतस्तस्य को भवानिति चाब्रवीत् ॥
धर्मं प्रह्लाद मां विद्धि यत्रासौ द्विजसत्तमः ।
तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहम् ॥
ततोऽपरो महाराज प्रज्वलन्निव तेजसा ।
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ॥
³को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यमस्म्यसुरेन्द्राग्र्य यास्येऽहं धर्ममन्विह ॥
⁴तस्मिन्ननुगते धर्मं पुरुषे पुरुषोऽपरः ।
निश्चक्राम ततस्तस्मात्पृष्टश्चाऽऽह महात्मना ।
वृत्तं प्रह्लाद मां विद्धि यतः सत्यं ततो ह्यहम् ॥
⁵तस्मिन् गते महाश्वेतः शरीरात्तस्य निर्ययौ ।
पृष्टश्चाऽऽह बलं विद्धि यतो वृत्तमहं ततः ।
इत्युक्त्वा च ययौ तत्र यतो वृत्तं नराधिप ॥
⁶ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ।
तामपृच्छत्स दैत्येन्द्रः सा श्रीरित्येवमब्रवीत् ॥
⁷उषिताऽस्मि सुखं वीर त्वयि सत्यपराक्रमे ।
त्वया त्यक्ता गमिष्यामि बलं यत्र ततो ह्यहम् ॥

(१) भा. १२।१२४।४७ ; भामु. १२।१२४।४८–४९ द्विजवरे ( द्विजोत्तमे ) मनिन्दितम् ( मनिन्दिते ) चान्व ( चान्वा ).

(२) भा. १२।१२४।४८–५० ; भामु. १२।१२४।४९–५२.

(३) भा. १२।१२४।५१ ; भामु. १२।१२४।५२–५३ उत्तरार्धं ( सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्ममन्वहम् ॥ ).

(४) भा. १२।१२४।५२ ; भामु. १२।१२४।५३–५४ तस्मिन्न ( यस्मिन्न ) धर्मं पुरुषे ( सत्ये महान्वै ) महात्मना ( महाबलः ).

(५) भा. १२।१२४।५३ ; भामु. १२।१२४।५५–५६ श्वेतः ( शब्दः ) च ययौ ( प्रययौ ).

(६) भा. १२।१२४।५४ ; भामु. १२।१२४।५६ त्सेव (त्वेन).

(७) भा. १२।१२४।५५ ; भामु. २२।१२४।५७ सुखं ( स्वयं ) क्रमे ( क्रम ) यत्र ततो ( ह्यनुगता ).

¹ततो भयं प्रादुरासीत्प्रह्लादस्य महात्मनः ।
अपृच्छत च तां भूयः क यासि कमलालये ॥
²त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥

श्रीरुवाच–

³स शक्रो ब्रह्मचारी च यस्त्वया चोपशिक्षितः ।
त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ॥
⁴शीलेन हि त्वया लोकाः सर्वे धर्मज्ञ निर्जिताः ।
तद्विज्ञाय महेन्द्रेण तव शीलं हृतं प्रभो ॥
⁵धर्मः सत्यं तथा वृत्तं बलं चैव तथा ह्यहम् ।
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ॥

भीष्म उवाच–

⁶एवमुक्त्वा गता तु श्रीस्ते च सर्वे युधिष्ठिर ।
दुर्योधनस्तु पितरं भूय एवाब्रवीदिदम् ॥
⁷शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन ।
प्राप्यते च यथा शीलं तमुपायं वदस्व मे ॥

धृतराष्ट्र उवाच–

⁸सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना ।
संक्षेपतस्तु शीलस्य शृणु प्राप्तिं नराधिप ॥

(१) भा. १२।१२४।५६ ; भामु. १२।१२४।५८ अपृच्छत च तां ( अपृच्छत्स ततो ).

(२) भा. १२।१२४।५७ ; भामु. १२।१२४।५९.

(३) भा. १२।१२४।५८ ; भामु. १२।१२४।६० च यस्त्वया चो ( यस्त्वत्तश्चैवो ).

(४) भा. १२।१२४।५९ ; भामु. १२।१२४।६१ त्वया लोकाः सर्वे ( त्रयो लोकास्त्वया ) महेन्द्रेण ( सुरेन्द्रेण ).

(५) भा. १२।१२४।६० ; भामु. १२।१२४।६२ ह्यहम् ( ऽप्यहम् ).

(६) भा. १२।१२४।६१ ; भामु. १२।१२४।६३ तु श्रीस्ते ( श्रीस्तु ते ) दिदम् ( द्वचः ).

(७) भा. १२।१२४।६२ ; भामु. १२।१२४।६४ तमुपायं ( तं चोपायं ).

(८) भा. १२।१२४।६३ ; भामु. १२।१२४।६५ संक्षेपतस्तु ( संक्षेपेण तु ) नराधिप ( नरेश्वर ).

[1]अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥
यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम्।
अपत्रपेत वा येन न तत्कुर्यात्कथंचन ॥

[2]तत्तु कर्म तथा कुर्याद्येन श्लाघेत संसदि।
एतच्छीलं समासेन कथितं कुरुसत्तम ॥

[3]यद्यप्यशीला नृपते प्राप्नुवन्ति कचिच्छ्रियम्।
न भुञ्जते चिरं तात समूलाश्च पतन्ति ते ॥

[4]एतद्विदित्वा तत्त्वेन शीलवान् भव पुत्रक।
यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ॥

भीष्म उवाच–

[5]एतत्कथितवान् पुत्रे धृतराष्ट्रो नराधिपः।
एतत्कुरुष्व कौन्तेय ततः प्राप्स्यसि तत्फलम् ॥

धर्मलक्षणम्

[6]सर्वतः सत्कृतः सद्भिर्भूतिप्रभवकारणैः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति ॥

सर्वतः सर्वात्मना सत्कृतः श्रौतो धर्मः आदृतः। सद्भिः मन्वादिभिः सत्कृतः स्मार्तधर्मः। भूतिप्रवरकारणैः। भूतिप्रवरा ईश्वराः, कारणानि पारम्पर्यागतानि कुलदेशग्रामादिपरिगृहीतानि। तैरपि निमित्तैः सत्कृतः। मन्वादिभिरनुक्तोऽपि शिष्टैरादृत इत्यर्थः। हेतुत्रयाभावेऽपि स्वयं च यो धर्मत्वेन निश्चितः। एवं चतुर्भिः कारणैर्धर्मः सिध्यति, न तदनुमतिर्ऋत्विगादीनां दण्डे दृश्यते इति भावः। नीटी.

[1]यश्चतुर्गुणसंपन्नं धर्मं वेद स धर्मवित्।
अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम् ॥

चत्वारो गुणाः आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति। यः एषामविरुद्धः चतुर्गुणसंपन्नः। नीटी.

[2]यथा मृगस्य विद्धस्य मृगव्याधः पदं नयेत्।
कक्षे रुधिरपातेन तथा धर्मपदं नयेत् ॥

पदं भूमौ निहितं पदं स्थानं लक्षेत् लक्षयेत्। नयेत् अन्यान् प्रापयेत्, युक्त्येति शेषः। नीटी.

[3]एवं सद्भिर्विनीतेन पथा गन्तव्यमच्युत।
राजर्षीणां वृत्तमेतदवगच्छ युधिष्ठिर ॥

धर्माधर्मविचारः

भीष्म उवाच–

[4]अत्र कर्मान्तवचनं कीर्तयन्ति पुराविदः।
प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः।
तत्र न व्यवधातव्यं परोक्षा धर्मयापना ॥

प्रत्यक्षौ दुःखस्य कारणं सर्वस्वादानमपि दुःखस्य कारणं स्तेयमपि धर्मः (?)। तस्माद्व्यवधानं शास्त्रोक्तधर्माधर्मविचारेणादृष्टसुखेऽन्तरायो न कर्तव्यः। धर्मयापना धर्मोपदेशः परोक्षः दृष्टफलस्याभावादविश्वास्यः इत्यर्थः। नीटी.

---

(१) भा. १२।१२४।६४–६५ ; भामु. १२।१२४।६६–६७.

(२) भा. १२।१२४।६६ ; भामु. १२।१२४।६८ श्लाघेत (श्लाघ्येत) एतच्छीलं समासेन (शीलं समासेनैतत्ते).

(३) भा. १२।१२४।६७ ; भामु. १२।१२४।६९ कचिच्छ्रियम् (श्रियं कचित्) पतन्ति (न सन्ति).

(४) भा. १२।१२४।६८ ; भामु. १२।१२४।७०. 'धृतराष्ट्र उवाच' इत्यधिकम्।

(५) भा. १२।१२४।६९ ; भामु. १२।१२४।७१ नराधिप (नराधिपः).

(६) भा. १२।१३०।१८ ; भामु. १२।१३२।१९ प्रभव (प्रवर).

(१) भा. १२।१३०।१९ ; भामु. १२।१३२।२० वेद (ब्रूयात्).

(२) भा. १२।१३०।२० ; भामु. १२।१३२।२१ मृगव्याधः पदं (पदमेकपदं) कक्षे रुधिरपातेन (लक्षेद्रुधिरलेपेन).

(३) भा. १२।१३०।२१ ; भामु. १२।१३२।२२ एवं (यथा) पथा (यथा) मच्युत (मित्युत) दवगच्छ (देवं गच्छ).

(४) भा. १२।१३२।१ ; भामु. १२।१३४।१–२ कर्मान्त (धर्मानु).

[1]अधर्मो धर्म इत्येतद्यथा वृकपदं तथा।
धर्माधर्मफले जातु न ददर्शेह कश्चन ॥

[2]बुभूषेद्बलवानेव सर्वं बलवतो वशे।
श्रियं बलममात्यांश्च बलवानिह विन्दति ॥

वृकपदं यथा तथेदम्। किमिदं भूमौ वृकस्य पदं, उत शुनः, उत चित्रव्याघ्रस्य इत्ययं विचारो व्यर्थः तथाऽयं धर्मोऽधर्मो वेति विचारोऽपि। धर्मेति अदृष्टफलौ धर्माधर्मावपास्य 'विद्यामित्रजनमित्राणि बुद्धिसत्त्वधनानि च। तपःसहायवीर्याणि दैवं च दशमं बलम् ॥' इति विशालोक्तं दशविधं बलमेवाऽऽश्रयेदित्यर्थः। श्रियः धनानि बलं विन्दन्ति। बलवांश्चामात्यादीन् विन्दति। अतः श्रीरेव सर्वमूलम्, तद्रहित एव पतितः, न त्वधर्मकारी इत्यर्थमात्रमिदं आततायिश्रोत्रियस्मृतिवत्। नीटी.

[3]यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकम्।
बहुपथ्यं बलवति न किंचित्त्रायते भयात् ॥

बलवति बहु अपथ्यं दृष्ट्वाऽपि भयात्स न किंचित्क्रियते पतितोऽयमिति न बहिः क्रियते। नीटी.

[4]उभौ सत्याधिकारौ तौ त्रायेते महतो भयात्।
अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते ॥

उभौ बलधर्मौ। अनयोर्मध्ये बलमेव श्रेय इत्याह—अतीति। नीटी.

[5]बले प्रतिष्ठितो धर्मो धरण्यामिव जङ्गमः।
धूमो वायोरिव वशं बलं धर्मोऽनुवर्तते ॥

(१) भा. १२।१३२।२; भामु. १२।१३४।२–३ न ददर्शेह (ददर्शेह न).

(२) भा. १२।१३२।३; भामु. १२।१३४।३–४ द्बलवानेव (द्बलमेवैतद्) श्रियं (श्रियो).

(३) भा. १२।१३२।४; भामु. १२।१३४।४–५ त्त्रायते (क्रियते).

(४) भा. १२।१३२।५; भामु. १२।१३४।५–६ कारौ तौ (कारस्थौ).

(५) भा. १२।१३२।६; भामु. १२।१३४।६–७ जङ्गमः (जङ्गमम्) वशं (वशे).

[1]अनीश्वरे बलं धर्मो द्रुमं वल्लीव संश्रिता।
वश्यो बलवतां धर्मः सुखं भोगवतामिव।
नास्त्यसाध्यं बलवतां सर्वं बलवतां शुचि ॥

[2]दुराचारः क्षीणबलः परिमाणं नियच्छति।
अथ तस्मादुद्विजते सर्वो लोको वृकादिव ॥

[3]अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितम्।
जीवितं यदवक्षिप्तं यथैव मरणं तथा ॥

अपध्वस्तः ऐश्वर्याच्च्युतः। अपकृष्टं निन्दितम्। नीटी.

[4]यदेनमाहुः पापेन चारित्रेण विनिक्षतम्।
स भृशं तप्यतेऽनेन वाक्शल्येन परिक्षतः ॥

वर्जितः त्यक्तः, बान्धवैरिति शेषः। ताप्य तापयित्वा, परिक्षतः क्रियते इति शेषः। नीटी.

[5]अत्रैतदाहुराचार्याः पापस्य परिमोक्षणे।
त्रयीं विद्यां निषेवेत तथोपासीत च द्विजान् ॥

अत्र अधर्मेण धनार्जने कृते सति। नीटी.

[6]प्रसादयेन्मधुरया वाचाऽप्यथ च कर्मणा।
महामनाश्चैव भवेद्विवहेच्च महाकुले ॥

(१) भा. १२।१३२।७; भामु. १२।१३४।७–८ श्वरे बलं (श्वरो बले) द्रुमं (द्रुमे) वश्यो (वशे).

(२) भा. १२।१३२।८; भामु. १२।१३४।९ परिमाणं नियच्छति (परित्राणं न गच्छति).

(३) भा. १२।१३२।९; भामु. १२।१३४।१० वक्षिप्तं (पकृष्टं).

(४) भा. १२।१३२।१०; भामु. १२।१३४।११ यदेन (यदेव) विनिक्षतम् (विवर्जितः) स भृशं तप्यतेऽनेन (सुभृशं ताप्य तेनैव).

(५) भा. १२।१३२।११; भामु. १२।१३४।१२ द्यां निषेवेत (द्यामवेक्षेत) च (वै).

(६) भा. १२।१३२।१२; भामु. १२।१३४।१३ न्मधुरया (च्चक्षुषा च) ऽप्यथ च (चाप्यथ) श्चैव (श्चापि).

[1]इत्यस्मीति वदेदेवं परेषां कीर्तयन्गुणान् ।
जपेदुदकशीलः स्यात्पेशलो नातिजल्पनः ॥

[2]ब्रह्मक्षत्रं संप्रविशेद्बहु कृत्वा सुदुष्करम् ।
उच्यमानोऽपि लोकेन बहु तत्तदचिन्तयन् ॥

[3]अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
सुखं वित्तं च भुञ्जीत वृत्तेनैतेन गोपयेत् ।
लोके च लभते पूजां परत्र च महत्फलम् ॥

दस्युगणाय कापव्योक्ता राजनीतिः

भीष्म उवाच—

[4]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा दस्युः समर्यादः प्रेत्यभावे न नश्यति ॥

ननु 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेन दस्युकर्मैव राज्ञा न कर्तव्यम्, कृतेऽपि प्रायश्चित्त-कालावधि जीवनानियमादन्तरा मरणे सति अक्षय्यनरक-प्राप्तिरित्याशङ्क्य दस्यूनामपि स्वर्गोऽस्तीत्याह— अत्रापी-त्यादिना । प्रेत्यभावे मरणे न नश्यति न निरयं प्राप्नोति ।
नीटी.

[5]प्रहर्ता मतिमाञ्शूरः श्रुतवाननृशंसवान् ।
रक्षन्नक्षयिणं धर्मं ब्रह्मण्यो गुरुपूजकः ॥

[6]निषाद्यां क्षत्रियाज्जातः क्षत्रधर्मानुपालकः ।
कापव्यो नाम नैषादिर्दस्युत्वात्सिद्धिमाप्तवान् ॥

(१) भा. १२।१३२।१३ ; भामु. १२।१३४।१४ कीर्तयन् ( कीर्तयेद् ) जल्पनः ( जल्पकः ).

(२) भा. १२।१३२।१४ ; भामु. १२।१३४।१५ नोऽपि ( नो हि ) बहु तत्त ( बहुकृत्त ).

(३) भा. १२।१३२।१५ ; भामु. १२।१३४।१६—१७ वित्तं च ( च चित्रं ) वृत्तेनैतेन ( कृतेनैकेन ) परत्र च ( परत्रेह ).

(४) भा. १२।१३३।१ ; भामु. १२।१३५।१.

(५) भा. १२।१३३।२ ; भामु. १२।१३५।२ ननृशंस ( न्सुनृशंस ) न्नक्षयिणं ( न्नाश्रमिणां ).

(६) भा. १२।१३३।३ ; भामु. १२।१३५।३ कापव्यो ( कायव्यो ).

[1]अरण्ये सायपूर्वाह्णे मृगयूथप्रकोपिता ।
विधिज्ञो मृगजातीनां निपानानां च कोविदः ॥

[2]सर्वकाननदेशज्ञः पारियात्रचरः सदा ।
धर्मज्ञः सर्वभूतानाममोघेषुर्दृढायुधः ॥

[3]अप्यनेकशताः सेना एक एव जिगाय सः ।
स वृद्धावन्धपितरौ महारण्येऽभ्यपूजयत् ॥

पारियात्रः पर्वतविशेषः । वृद्धौ मातापितरौ ।
नीटी.

[4]मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि ।
सत्कृत्य भोजयामास सम्यक् परिचचार च ॥

[5]आरण्यकान् प्रव्रजितान् ब्राह्मणान् परिपालयन् ।
अपि तेभ्यो मृगान् हत्वा निनाय च महावने ॥

[6]ये स्म न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।
तेषामासज्य गेहेषु काल्य एव स गच्छति ॥

आसज्य क्वचिन्निधाय । कल्ये प्रातः । नीटी.

[7]तं बहूनि सहस्राणि ग्रामणित्वेऽभिवव्रिरे ।
निर्मर्यादानि दस्यूनां निरनुक्रोशकारिणाम् ॥

वव्रिरे तमिति शेषः । नीटी.

(१) भा. १२।१३३।४ ; भामु. १२।१३५।४ साय ( सायं ) निपानानां ( नैषादानां ).

(२) भा. १२।१३३।५ ; भामु. १२।१३५।५ कानन-देश ( कालप्रदेश ).

(३) भा. १२।१३३।६ ; भामु. १२।१३५।६ शताः सेना ए ( शतां सेनामे ) पितरौ ( बधिरौ ).

(४) भा. १२।१३३।७ ; भामु. १२।१३५।७ सम्यक् ( मान्यान् ).

(५) भा. १२।१३३।८ ; भामु. १२।१३५।८ पाल-यन् ( पूजयन् ) च महा ( सततं ).

(६) भा. १२।१३३।९ ; भामु. १२।१३५।९ ये स्म न ( येऽस्मान्न ) काल्य ( कल्य ).

(७) भा. १२।१३३।१० ; भामु. १२।१३५।१० तं बहूनि ( बहूनि च ) कारिणाम् ( वर्तिनाम् ).

दस्यव ऊचुः-

[1]मुहूर्तदेशकालज्ञ प्राज्ञ शीलदृढायुध ।
ग्रामणीर्भव नो मुख्यः सर्वेषामेव संमतः ॥

[2]यथा यथा वक्ष्यसि नः करिष्यामस्तथा तथा ।
पालयास्मान् यथान्यायं यथा माता यथा पिता ॥

कापव्य उवाच--

मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम् ।
नायुध्यमानो हन्तव्यो न च ग्राह्या बलात्स्त्रियः ॥

मा वधीस्त्वमित्येकवचनं गणाभिप्रायेण । नीटी.

[3]सर्वथा स्त्री न हन्तव्या सर्वसत्त्वेषु युध्यता ।
नित्यं गोब्राह्मणे स्वस्ति योद्धव्यं च तदर्थतः ॥

स्वस्ति कल्याणं चिन्तनीयम् । नीटी.

[4]सस्यं च नापहन्तव्यं सीरविघ्नं च मा कृथाः ।
पूज्यन्ते यत्र देवाश्च पितरोऽतिथयस्तथा ॥

सारः विवाहादि कार्यं, तत्र विघ्नं मा कृथाः ।
नीटी.

[5]सर्वभूतेष्वपि च वै ब्राह्मणो मोक्षमर्हति ।
कार्या चापचितिस्तेषां सर्वस्वेनापि या भवेत् ॥

उपचितिः वृद्धिः । नीटी.

[6]यस्य ह्येते संप्ररुष्टा मन्त्रयन्ति पराभवम् ।
न तस्य त्रिषु लोकेषु त्राता भवति कश्चन ॥

[1]यो ब्राह्मणान्परिभवेद्विनाशं वाऽपि रोचयेत् ।
सूर्योदय इवावश्यं ध्रुवं तस्य पराभवः ॥

ध्वान्ते ध्वान्तस्य । नीटी.

[2]इहैव फलमासीनः प्रत्याकाङ्क्षति शक्तितः ।
ये ये नो न प्रदास्यन्ति तांस्तान्सेनाऽभियास्यति ॥

ये ये वणिजः । नः अस्मभ्यम् । नीटी.

[3]शिष्ट्यर्थं विहितो दण्डो न वधार्थं विनिश्चयः ।
ये च शिष्टान् प्रबाधन्ते धर्मस्तेषां वधः स्मृतः ॥

शिष्ट्यर्थं दुष्टानां शासनार्थम् । नीटी.

[4]ये हि राष्ट्रोपरोधेन वृत्तिं कुर्वन्ति केचन ।
तदेव तेऽनु मीयन्ते कुणपं कृमयो यथा ॥

कुणपे कृमयो यथा दुःखदत्वात्सद्यो मार्यन्ते एवं तेऽपि वध्या इत्यर्थः । नीटी.

[5]ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः ।
अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः ॥

भीष्म उवाच-

[6]तत्सर्वमुपचक्रुस्ते कापव्यस्यानुशासनम् ।
वृत्तिं च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् ॥

[7]कापव्यः कर्मणा तेन महतीं सिद्धिमाप्तवान् ।
साधूनामाचरन् क्षेमं दस्यून् पापान्निवर्तयन् ॥

---

(१) भा. १२।१३३।११ ; भामु. १२।१३५।११ पूर्वार्धे ( मुहूर्तदेशकालज्ञः प्राज्ञः शूरो दृढव्रतः । ) संमतः ( संगतः ).

(२) भा. १२।१३३।१२-१३ ; भामु. १२।१३५। १२-१३ कापव्य उवाच ( कायव्य उवाच ).

(३) भा. १२।१३३।१४ ; भामु. १२।१३५।१४ युध्यता ( केनाचित् ) गोब्रा ( तु ब्रा ).

(४) भा. १२।१३३।१५ ; भामु. १२।१३५।१५ सस्यं च नापहन्तव्यं सीर ( सत्यं च नापि हर्तव्यं सार ).

(५) भा. १२।१३३।१६ ; भामु. १२।१३५।१६ चाप ( चोप ).

(६) भा. १२।१३३।१७ ; भामु. १२।१३५।१७.

(१) भा. १२।१३३।१८ ; भामु. १२।१३५।१८ भवेद्वि ( वदेद्वि ) वाऽपि ( चापि ) इवावश्यं ( इव ध्वान्ते ).

(२) भा. १२।१३३।१९ ; भामु. १२।१३५।१९ काङ्क्षति शक्तितः ( काङ्क्षेत सर्वशः ) स्तान्सेनाऽभियास्यति ( स्तांस्तेनाभियास्यसि ).

(३) भा. १२।१३३।२० ; भामु. १२।१३५।२० वधार्थं ( वृद्ध्यर्थं ) धर्म ( दण्ड ).

(४) भा. १२।१३३।२१ ; भामु. १२।१३५।२१ हि ( च ) वृत्तिं ( वृद्धिं ) उत्तरार्धे (तदैव तेऽनुमार्यन्ते कुणपे कृमयो यथा ॥).

(५) भा. १२।१३३।२२ ; भामु. १२।१३५।२२.

(६) भा. १२।१३३।२३ ; भामु. १२।१३५।२३ पूर्वार्धे ( ते सर्वमेवानुचक्रुः कायव्यस्यानुशासनम् । ) वृत्तिं ( वृद्धिं ).

(७) भा. १२।१३३।२४ ; भामु. १२।१३५।२४ कापव्यः ( कायव्यः ).

[1]इदं कापण्यचरितं यो नित्यमनुकीर्तयेत् ।
नाऽऽरण्येभ्यः स भूतेभ्यो भयमाच्छेंत्कदाचन ॥
[2]भयं तस्य न मर्त्येभ्यो नामर्त्येभ्यः कथंचन ।
न सतो नासतो राजन् स ह्यरण्येषु गोपतिः ॥

निरयगामी तस्करो राजा देवमयो राजा च

[3]यत्र नास्ति बलात्कारः स राजा तीव्रशासनः ।
न चैव ह्यभिसंबन्धो दरिद्रं यो बुभूषति ॥

यत्र देशे बलात्कारो नास्ति तत्र भीरेव नास्ति । यो राजा दरिद्रं जनं बुभूषति पालयितुमिच्छति स एव तेन सह पाल्यपालकभावलक्षणः संबन्धः इति योज्यम् । नीटी.

[4]भार्या देशोऽथ मित्राणि पुत्रसंबन्धिबान्धवाः ।
एतत्सर्वं गुणवति धर्मनेत्रे महीपतौ ॥

धर्मनेत्रः धर्मनेता । नीटी.

[5]अधर्मज्ञस्य विलयं प्रजा गच्छन्त्यनिग्रहात् ।
राजा मूलं त्रिवर्गस्य अप्रमत्तोऽनुपालयन् ॥

निग्रहात् वन्दीरूपात्, न तु स्वेच्छया । स्वप्रमत्तः सुतरां अप्रमत्तः । नीटी.

[6]बलिषड्भागमुद्धृत्य बलिं तमुपयोजयेत् ।
न रक्षति प्रजाः सम्यग्यः स पार्थिवतस्करः ॥

समुपयोजयेत् भक्षयेत्, अथ च न रक्षति । नीटी.

(१) भा. १२।१३३।२५ ; भामु. १२।१३५।२५ कापण्य (कायव्य) कीर्तयेत् (चिन्तयेत्) भ्यः स (भ्यो हि) भयमाच्छेंत्कदाचन (भयं प्राप्नोति किंचन).

(२) भा. १२।१३३।२६ ; भामु. १२।१३५।२६ पूर्वार्धे (न भयं तस्य भूतेभ्यः सर्वेभ्यश्चैव भारत ।) न सतो नासतो (नासतो विद्यते).

(३) भा. १२।१३७।९३ ; भामु. १२।१३९।९७ न चैव ह्यभि (भीरेव नास्ति) बुभूषति (बुभूषते).

(४) भा. १२।१३७।९४ ; भामु. १२।१३९।९८ एतत्सर्वं (एते सर्वे).

(५) भा. १२।१३७।९५ ; भामु. १२।१३९।९९ न्त्यनिग्रहात् (न्ति निग्रहात्) अप्रमत्तोऽनुपालयन् (स्वप्रमत्तोऽनुपालयेत्).

(६) भा. १२।१३७।९६ ; भामु. १२।१३९।१०० तमु (समु).

[1]दत्त्वाऽभयं यः स्वयमेव राजा
न तत्प्रमाणं कुरुते यथावत् ।
स सर्वलोकादुपलभ्य पाप-
मधर्मबुद्धिर्निरयं प्रयाति ॥

अभयमिति च्छेदः । नीटी.

[2]दत्त्वाऽभयं यः स्म राजा प्रमाणं कुरुते सदा ।
स सर्वसुखकृज्ज्ञेयः प्रजा धर्मेण पालयन् ॥

[3]पिता माता गुरुर्गोप्ता वह्निर्वैश्रवणो यमः ।
सप्त राज्ञो गुणानेतान्मनुराह प्रजापतिः ॥

[4]पिता हि राजा राष्ट्रस्य प्रजानां योऽनुकम्पकः ।
तस्मिन्मिथ्याप्रणीते हि तिर्यग्गच्छति मानवः ॥

[5]संभावयति मातेव दीनमभ्यवपद्यते ।
दहत्यग्निरिवानिष्टान्यमयन्भवते यमः ॥

संभावयति इष्टं चिन्तयति । उपपद्यते पालयति । नीटी.

[6]इष्टेषु विसृजत्यर्थान्कुबेर इव कामदः ।
गुरुर्धर्मोपदेशेन गोप्ता च परिपालनात् ॥

[7]यस्तु रञ्जयते राजा पौरजानपदान्गुणैः ।
न तस्य भ्रश्यते राज्यं गुणधर्मानुपालनात् ॥

(१) भा. १२।१३७।९७ ; भामु. १२।१३९।१०१ यथावत् (ऽर्थलोभात्) पापम (पापं सोऽ).

(२) भा. १२।१३७।९८ ; भामु. १२।१३९।१०२ यः स्म (स्वयं) सदा (यदि).

(३) भा. १२।१३७।९९ ; भामु. १२।१३९।१०३ पिता माता (माता पिता).

(४) भा. १२।१३७।१०० ; भामु. १२।१३९। १०४ कम्पकः (कम्पनः) प्रणीते (विनीते).

(५) भा. १२।१३७।१०१ ; भामु. १२।१३९।१०५ मभ्यव (मप्युप) न्भवते (न्नसतो).

(६) भा. १२।१३७।१०२ ; भामु. १२।१३९।१०६ सृजत्यर्था (सृजन्नर्था) पालनात् (पालयन्).

(७) भा. १२।१३७।१०३ ; भामु. १२।१३९।१०७ भ्रश्यते (भ्रमते) गुण (स्वयं).

[1]स्वयं समुपजानन्हि पौरजानपदक्रियाः ।
स सुखं मोदते भूप इहलोके परत्र च ॥

[2]नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः ।
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् ॥

[3]प्रजा यस्य विवर्धन्ते सरसीव महोत्पलम् ।
स सर्वयज्ञफलभाग्राजा लोके महीयते ॥

आपदि बुद्धिकृतः धर्माधर्मनिर्णयः प्रमाणम्

युधिष्ठिर उवाच–

[4]हीने परमके धर्मे सर्वलोकातिलङ्घिनि ।
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते ॥

आपद्यकार्यमपि कणिकेनोक्तम् । तत्र विश्वामित्र-श्वजाघनीपचनरूपं शिष्टाचारं प्रमाणयति । नीटी.

[5]मर्यादासु प्रभिन्नासु क्षुभिते धर्मनिश्चये ।
राजभिः पीडिते लोके चोरैर्वाऽपि विशां पते ॥

[6]सर्वाश्रमेषु मूढेषु कर्मसूपहतेषु च ।
कामान्मोहाच्च लोभाच्च भयं पश्यत्सु भारत ॥

[7]अविश्वस्तेषु सर्वेषु नित्यभीतेषु पार्थिव ।
निकृत्या हन्यमानेषु वञ्चयत्सु परस्परम् ॥

(१) भा. १२।१३७।१०४; भामु. १२।१३९।१०८ पदक्रियाः ( पदार्चनम् ) मोदते भूप ( प्रेक्षते राजा ).

(२) भा. १२।१३७।१०५; भामु. १२।१३९।१०९.

(३) भा. १२।१३७।१०६; भामु. १२।१३९।११० यज्ञफलभाग्राजा ( फलभाग्राजा स्वर्गे ).

(४) भा. १२।१३९।१; भामु. १२।१४१।१ तिलङ्घिनि ( भिलङ्घिते ).

(५) भा. १२।१३९।२; भामु. १२।१४१।२ प्रभिन्नासु ( विनष्टासु ) चोरैर्वा ( परैर्वा ).

(६) भा. १२।१३९।३; भामु. १२।१४१।३ श्रमेषु ( श्रयेषु ) न्मोहाच्च लोभाच्च ( ल्लोभाच्च मोहाच्च ).

(७) भा. १२।१३९।४; भामु. १२।१४१।४ नित्य ( नित्यं ).

[1]संप्रदीप्तेषु देशेषु ब्राह्मण्ये चाभिपीडिते ।
अवर्षति च पर्जन्ये मिथो भेदे समुत्थिते ॥

[2]सर्वस्मिन् दस्युसाद्भूते पृथिव्यामुपजीवने ।
केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ॥

[3]अतित्यक्षुः पुत्रपौत्राननुक्रोशान्नराधिप ।
कथमापत्सु वर्तेत तन्मे ब्रूहि पितामह ॥

अतितिक्षुः ( ? अतित्यक्षुः ) त्यक्तुमनिच्छुः । अनुक्रोशात् दयातः । ब्राह्मणान् पालयितुमशक्तो राजा किं कुर्यादित्यर्थः । नीटी.

[4]कथं च राजा वर्तेत लोके कलुषतां गते ।
कथमर्थाच्च धर्माच्च न हीयेत परंतप ॥

भीष्म उवाच–

[5]राजमूला महाराज योगक्षेमसुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च भयानि च ॥

अप्राप्तप्रापणं योगः, प्राप्तसंरक्षणं क्षेमः, सुवृष्टिश्च ताः । ब्राह्मणादीनां विपदागमो राज्ञ एव दोष इत्यर्थः । नीटी.

[6]कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ ।
राजमूलानि सर्वाणि मम नास्त्यत्र संशयः ॥

[7]तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके ।
विज्ञानबलमास्थाय जीवितव्यं तदा भवेत् ॥

(१) भा. १२।१३९।५; भामु. १२।१४१।५ ब्राह्मण्ये चाभि ( ब्राह्मणे चाति ).

(२) भा. १२।१३९।६; भामु. १२।१४१।६.

(३) भा. १२।१३९।७; भामु. १२।१४१।७ अतित्यक्षुः ( अतितिक्षुः ).

(४) भा. १२।१३९।८; भामु. १२।१४१।८.

(५) भा. १२।१३९।९; भामु. १२।१४१।९ महाराज ( महाबाहो ).

(६) भा. १२।१३९।१०; भामु. १२।१४१।१० द्वापरश्च ( द्वापरं च ) मूलानि सर्वाणि मम ( मूला इति मतिर्मम ).

(७) भा. १२।१३९।११; भामु. १२।१४१।११ तदा भवेत् ( भवेत्तदा ).

[1]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे ॥

[2]त्रेताद्वापरयोः संधौ पुरा दैवविधिक्रमात् ।
अनावृष्टिरभूद्घोरा राजन् द्वादशवार्षिकी ॥

पक्कणे चाण्डालागारे । दैवविधिः दैवविहितः ।
नीटी.

[3]प्रजानाममिवृद्धानां युगान्ते पर्युपस्थिते ।
त्रेतानिर्मोक्षसमये द्वापरप्रतिपादने ॥

[4]न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ।
जगाम दक्षिणं मार्गं सोमो व्यावृत्तलक्षणः ॥

[5]नावश्यायोऽपि रात्र्यन्ते कुत एवाभ्रराजयः ।
नद्यः संक्षिप्ततोयौघाः कचिदन्तर्गताऽभवन् ॥

प्रतिलोमः वक्री । व्यावृत्तं अन्यथाभूतं लक्षणं चिह्नं यस्य । अवश्यायः धूमिका । नीटी.

[6]सरांसि सरितश्चैव कूपाः प्रस्रवणानि च ।
हतत्विट्कान्यलक्ष्यन्त निसर्गाद्दैवकारितात् ॥

[7]उपशुष्कजलस्थाया विनिवृत्तसभाप्रपा ।
निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला ॥

(१) भा. १२।१३९।१२ ; भामु. १२।१४१।१२ चण्डालस्य ( चाण्डालस्य ).

(२) भा. १२।१३९।१३ ; भामु. १२।१४१।१३ पुरा ( तदा ) राजन् ( लोके ).

(३) भा. १२।१३९।१४ ; भामु. १२।१४१।१४ मभि ( मति ) पर्युप ( समुप ) निर्मोक्ष ( विमोक्ष ).

(४) भा. १२।१३९।१५ ; भामु. १२।१४१।१५.

(५) भा. १२।१३९।१६ ; भामु. १२।१४१।१६ रात्र्यन्ते कु ( तत्राभूत्कु ) राजयः ( जातयः ) कचिदन्तर्गताऽभवन् ( किंचिदन्तर्गतास्ततः ).

(६) भा. १२।१३९।१७ ; भामु. १२।१४१।१७ त्विट्कान्यलक्ष्यन्त ( त्विषो न लक्ष्यन्ते ).

(७) भा. १२।१३९।१८ ; भामु. १२।१४१।१८.

[1]उत्सन्नकृषिगोरक्ष्या निवृत्तविपणापणा ।
निवृत्तपूगसमया संप्रनष्टमहोत्सवा ॥

जलस्थायाः क्षुद्रजलाशयाः । विपणः विक्रयादिः । आपणः हट्टः । नीटी.

[2]अस्थिकङ्कालसंकीर्णा हाहाभूतजनाकुला ।
शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ॥

[3]कचिच्चोरैः कचिच्छस्त्रैः कचिद्राजभिरातुरैः ।
परस्परभयाच्चैव शून्यभूयिष्ठनिर्जना ॥

[4]गतदैवतसंकल्पा वृद्धबालविनाकृता ।
गोजाविमहिषैर्हीना परस्परहराहरा ॥

[5]हतविप्रा हतारक्षा प्रनष्टौषधिसंचया ।
श्यावभूतनरप्राया बभूव वसुधा तदा ॥

हताः आरक्षाः रक्षाकर्तारः यस्यां सा । भूततरुः श्मशानवृक्षः तद्वदगम्या भूततरुप्राया । ‘ भूतनरप्राया ’ इति पाठे भूतप्रायनरा इत्यर्थः । ‘ शावभूतनरप्राया ’ इति प्राचां पाठः स्पष्टार्थः । शव एव शावः । नीटी.

[6]तस्मिन् प्रतिभये काले क्षीणे धर्मे युधिष्ठिर ।
बभ्रमुः क्षुधिता मर्त्याः खादन्तः स्म परस्परम् ॥

(१) भा. १२।१३९।१९ ; भामु. १२।१४१।१९ उत्सन्न ( उच्छिन्न ) रक्ष्या ( रक्षा ) पूगसमया संप्रनष्ट ( यूपसंभारा विप्रनष्ट ).

(२) भा. १२।१३९।२० ; भामु. १२।१४१।२० कङ्काल ( संचय ) हाहा ( महा ) जना ( रवा ).

(३) भा. १२।१३९।२१; भामु. १२।१४१।२१ च्चोरैः ( द्वोरैः ).

(४) भा. १२।१३९।२२ ; भामु. १२।१४१।२२ संकल्पा ( संस्थाना ) बालविना ( लोकनिरा ) महिषैर्हीना ( महिषीहीना ) हराहरा ( पराहता ).

(५) भा. १२।१३९।२३ ; भामु. १२।१४१।२३ श्यावभूतनर ( सर्वभूततरु ).

(६) भा. १२।१३९।२४ ; भामु. १२।१४१।२४ क्षीणे (क्षते) बभ्रमुः ( बभूवुः ) खादन्तः स्म ( खादमानाः ).

[1]ऋषयो नियमांस्त्यक्त्वा परित्यक्ताग्निदैवताः ।
आश्रमान् संपरित्यज्य पर्यधावन्नितस्ततः ॥
[2]विश्वामित्रोऽथ भगवान् महर्षिरनिकेतनः ।
क्षुधा परिगतो धीमान् समन्तात्पर्यधावत ॥
[3]त्यक्त्वा दारांश्च पुत्रांश्च कस्मिंश्च जनसंसदि ।
भक्ष्याभक्ष्यसमो भूत्वा निरग्निरनिकेतनः ॥
[4]स कदाचित्परिपतन् श्वपचानां निवेशनम् ।
हिंस्राणां प्राणिहन्तॄणामाससाद वने क्वचित् ॥
[5]विभिन्नकलशाकीर्णं श्वचर्माच्छादनायुतम् ।
वराहखरभग्नास्थिकपालघटसंकुलम् ॥
[6]मृतचेलपरिस्तीर्णं निर्माल्यकृतभूषणम् ।
सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमठम् ॥
[7]कुक्कुटारावबहुलं गर्दभध्वनिनादितम् ।
उद्घोषद्भिः खरैर्वाक्यैः कलहद्भिः परस्परम् ॥
[8]उलूकपक्षध्वजिभिर्देवतायतनैर्वृतम् ।
लोहघण्टापरिष्कारं श्वयूथपरिवारितम् ॥
[9]तत्प्रविश्य क्षुधाऽऽविष्टो गाधेः पुत्रो महानृषिः ।
आहारान्वेषणे युक्तः परं यत्नं समास्थितः ॥
[10]न च क्वचिदविन्दत्स भिक्षमाणोऽपि कौशिकः ।
मांसमन्नं मूलफलमन्यद्वा तत्र किंचन ॥

(१) भा. १२।१३९।२५ ; भामु. १२।१४१।२५ परित्यक्ता ( परित्यज्या ).
(२) भा. १२।१३९।२६ ; भामु. १२।१४१।२६.
(३) भामु. १२।१४१।२७.
(४) भा. १२।१३९।२७ ; भामु. १२।१४१।२८ हन्तॄणा ( घाताना ).
(५) भा. १२।१३९।२८ ; भामु. १२।१४१।२९ चर्माच्छादना ( चर्मच्छेदना ).
(६) भा. १२।१३९।२९ ; भामु. १२।१४१।३० चेल (चैल).
(७) भामु. १२।१४१।३१.
(८) भा. १२।१३९।३० ; भामु. १२।१४१।३२ पक्षध्वजिभिर्दे ( पक्षिध्वनिभिर्दे ).
(९) भा. १२।१३९।३१ ; भामु. १२।१४१।३३ गाधेः पुत्रो ( विश्वामित्रो ).
(१०) भा. १२।१३९।३२ ; भामु. १२।१४१।३४ मूलफल ( फलं मूल ).

[1]अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः ।
पपात भूमौ दौर्बल्यात्तस्मिंश्चण्डालपक्कणे ॥
[2]चिन्तयामास स मुनिः किं नु मे सुकृतं भवेत् ।
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ॥
[3]स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः ।
चण्डालस्य गृहे राजन् सद्यः शस्त्रहतस्य च ॥

वृथा अन्नं विना । कुतन्त्रीं दण्डिकाम् । नीटी.

[4]स चिन्तयामास तदा स्तेयं कार्यमितो मया ।
न हीदानीमुपायोऽन्यो विद्यते प्राणधारणे ॥
[5]आपत्सु विहितं स्तेयं विशिष्टसमहीनतः ।
परं परं भवेत्पूर्वमस्तेयमिति निश्चयः ॥
[6]हीनादादेयमादौ स्यात्समानात्तदनन्तरम् ।
असंभवादाददीत विशिष्टादपि धार्मिकात् ॥
[7]सोऽहमन्तावसानानां हरमाणः परिग्रहात् ।
न स्तेयदोषं पश्यामि हरिष्याम्येतदामिषम् ॥

प्रतिग्रहात् तज्जदोषात् स्तैन्यदोषमधिकं न पश्यामीत्यर्थः । श्वजाघनीं शुनो जङ्घाम् । नीटी.

(१) भा. १२।१३९।३३ ; भामु. १२।१४१।३५ श्चण्डाल ( श्वाण्डाल ).
(२) भा. १२।१३९।३४; भामु. १२।१४१।३६ चिन्तयामास स ( स चिन्तयामास ).
(३) भा. १२।१३९।३५ ; भामु. १२।१४१।३७ कुतन्त्रीं (कुतन्त्रीं) चण्डालस्य ( चाण्डालस्य ) च ( वै ).
(४) भा. १२।१३९।३६ ; भामु. १२।१४१।३८ स्तेयं (स्तैन्यं) योऽन्यो (यो मे).
(५) भा. १२।१३९।३७ ; भामु. १२।१४१।३९ (आपत्सु विहितं स्तैन्यं विशिष्टं च महीयसः । विप्रेण प्राणरक्षार्थं कर्तव्यमिति निश्चयः ॥).
(६) भा. १२।१३९।३८ ; भामु. १२।१४१।४० असंभवादा (असंभवे वाऽऽ).
(७) भा. १२।१३९।३९ ; भामु. १२।१४१।४१ (सोऽहमन्त्यावसायानां हराम्येनां प्रतिग्रहात् । न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीम् ॥).

[1]एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः।
तस्मिन् देशे प्रसुष्वाप पतितो यत्र भारत ॥
[2]स विगाढां निशां दृष्ट्वा सुप्ते चण्डालपक्कणे।
शनैरुत्थाय भगवान् प्रविवेश कुटीमठम् ॥
[3]स सुप्त एव चण्डालः श्लेष्मापिहितलोचनः।
परिभिन्नस्वरो रूक्ष उवाचाप्रियदर्शनः ॥

श्वपच उवाच-

[4]कः कुतन्त्रीं घट्टयति सुप्ते चण्डालपक्कणे।
जागर्मि नावसुप्तोऽस्मि हतोऽसीति
च दारुणः ॥

घट्टयति चालयति। नीटी.

[5]विश्वामित्रोऽहमित्येव सहसा तमुवाच सः।
सहसाऽभ्यागतभयः सोद्वेगस्तेन कर्मणा ॥
[6]विश्वामित्रोऽहमायुष्मन्नागतोऽहं बुभुक्षितः।
मा वधीर्मम सद्बुद्धे यदि सम्यक् प्रपश्यसि ॥

मम माम्। नीटी.

[7]चण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः।
शयनादुपसंभ्रान्त इयेषोत्पतितुं ततः ॥

[1]स विसृज्याश्रु नेत्राभ्यां
बहुमानात्कृताञ्जलिः।
उवाच कौशिकं रात्रौ
ब्रह्मन् किं ते चिकीर्षितम् ॥

नेत्राभ्यां श्लेष्मपिहिताभ्याम्। नीटी.

विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन्।
क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् ॥

[2]अवसीदन्ति मे प्राणाः स्मृतिर्मे नश्यति क्षुधा।
दुर्बलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्जितः।
स्वधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ॥

[3]अटन् भैक्षं न विन्दामि यदा युष्माकमालये।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ॥

[4]तृषितः कलुषं पाता नास्ति ह्रीरशनार्थिनः।
क्षुद्धर्मं दूषयत्यत्र हरिष्यामि श्वजाघनीम् ॥

[5]अग्निर्मुखं पुरोधाश्च देवानां शुचिपाड्विभुः।
यथा स सर्वभुग्ब्रह्मा तथा मां विद्धि धर्मतः ॥

कलुषं यातः पापं कर्मानुसृतः। अग्निर्देवानां मुखं च पुरोधाश्च। सः शुचिषाट् शुचि मेध्यं एव सहते नामेध्यम्। तस्यापि यथा सर्वभुक्त्वं तथाऽहं ब्रह्मा ब्राह्मणोऽपि तत्तुल्यत्वात् सर्वभुग्भविष्यामीत्यर्थः। नीटी.

---

(१) भा. १२।१३९।४०; भामु. १२।१४१।४२ प्रसुष्वाप पतितो (स सुष्वाप श्वपचो).

(२) भा. १२।१३९।४१; भामु. १२।१४१।४३ चण्डाल (चाण्डाल) कुटीमठम् (कुटीमतः).

(३) भा. १२।१३९।४२; भामु. १२।१४१।४४ एव चण्डालः (इव चाण्डालः) उवाचा (प्रोवाचा).

(४) भा. १२।१३९।४३; भामु. १२।१४१।४५ 'श्वपच उवाच' इत्यधिकम्, कुतन्त्रीं (कुतन्त्रीं) चण्डाल (चाण्डाल) नाव (नात्र).

(५) भा. १२।१३९।४४; भामु. १२।१४१।४६ त्रोऽहमित्येव (त्रस्ततो भीतः) सः (ह) सहसाऽभ्यागतभयः (तत्र व्रीडाकुलमुखः).

(६) भामु. १२।१४१।४७.

(७) भा. १२।१३९।४५; भामु. १२।१४१।४८ चण्डालस्त (चाण्डालस्त) इयेषोत्पतितुं (उद्ययौ प्रति तं).

(१) भा. १२।१३९।४६-४७; भामु. १२।१४१।४९-५०.

(२) भा. १२।१३९।४८ द्वितीयार्धं नास्ति; भामु. १२।१४१।५२-५३ स्मृतिर्मे (श्रुतिम) स्वधर्मं (सोऽधर्मं).

(३) भा. १२।१३९।४९; भामु. १२।१४१।५३-५४ भैक्षं (भैक्ष्यं).

(४) भा. १२।१३९।५०; भामु. १२।१४१।५१ तृषितः (क्षुधितः) पाता (यातो) क्षुद्धर्मं (क्षुच्च मां).

(५) भा. १२।१३९।५१; भामु. १२।१४१।५४-५५ पाड्विभुः (षाड्विभुः) यथा स (यथावत्).

[1]तमुवाच स चण्डालो महर्षे शृणु मे वचः ।
श्रुत्वा तथा समातिष्ठ यथा धर्मान्न हीयसे ॥
[2]धर्मं तवापि विप्रर्षे शृणु यत्ते ब्रवीम्यहम् ॥
[3]मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः ।
तस्याप्यधम उद्देशः शरीरस्योरुजाघनी ॥
[4]नेदं सम्यग्व्यवसितं महर्षे कर्म वैकृतम् ।
चण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः ॥
[5]साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे ।
न मांसलोभात्तपसो नाशस्ते स्यान्महामुने ॥
[6]जानतोऽविहितो मार्गो न कार्यो धर्मसंकरः ।
मा स्म धर्मं परित्याक्षीस्त्वं हि धर्मविदुत्तमः ॥
[7]विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ ।
क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः ॥
[8]निराहारस्य सुमहान्मम कालोऽभिधावतः ।
न विद्यतेऽभ्युपायश्च कश्चिन्मे प्राणधारणे ॥
[9]येन तेन विशेषेण कर्मणा येन केनचित् ।
अभ्युज्जीवेत्सीदमानः समर्थो धर्ममाचरेत् ॥

(१) भा. १२।१३९।५२ ; भामु. १२।१४१।५५–५६ चण्डालो (चाण्डालो) तथा समा (तत्त्वं तथाऽऽ) धर्मान्न हीयसे (धर्मो न हीयते).

(२) भामु. १२।१४१।५६.

(३) भा. १२।१३९।५३ ; भामु. १२।१४१।५७ मृगाणाम (शृगालाद) स्योरु (स्य श्व).

(४) भा. १२।१३९।५४ ; भामु. १२।१४१।५८ कर्म वैकृतम् (धर्मगर्हितम्) चण्डाल (चाण्डाल).

(५) भा. १२।१३९।५५ ; भामु. १२।१४१।५९.

(६) भा. १२।१३९।५६ ; भामु. १२।१४१।६० जानतोऽविहितो मार्गो (जानता विहितं धर्मं) विदुत्तमः (भृतां वरः).

(७) भा. १२।१३९।५७ ; भामु. १२।१४१।६१.

(८) भा. १२।१३९।५८ ; भामु. १२।१४१।६२ तेऽभ्यु (तेऽप्यु).

(९) भा. १२।१३९।५९ ; भामु. १२।१४१।६३ तेन (येन) त्सीदमानः (त्स्रायमानः).

[1]ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाऽऽग्निकः ।
ब्रह्मवह्निर्मम बलं भक्ष्यामि समयं क्षुधा ॥
[2]यथा यथा वै जीवेद्धि तत्कर्तव्यमपीडया ।
जीवितं मरणाच्छ्रेयो जीवन् धर्ममवाप्नुयात् ॥
[3]सोऽहं जीवितमाकाङ्क्षन्नभक्षस्यापि भक्षणम् ।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥
[4]जीवन् धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि च ।
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ॥

ऐन्द्रः पालनात्मकः । आग्निकः सर्वभुक्त्वरूपः । ब्रह्म वेदः स एव वह्निः । ज्योतींषीव तपः ( ? तमः) इन्धनेन बलवन्तं करिष्यामि, आत्मानमिति शेषः । नीटी.

श्वपच उवाच–

[5]नैतत्खादन् प्राप्स्यसे प्राणमन्यं
नाऽऽयुर्दीर्घं नामृतस्येव तृप्तिम् ।
भिक्षामन्यां भिक्ष मा ते मनोऽस्तु
श्वभक्षणे श्वा ह्यभक्षो द्विजानाम् ॥

विश्वामित्र उवाच–

[6]न दुर्भिक्षे सुलभं मांसमन्य-
च्छ्वपाक नान्नं न च मेऽस्ति वित्तम् ।
क्षुधार्तश्चाहमगतिर्निराशः
श्वमांसे चास्मिन् षड्रसान् साधु मन्ये ॥

(१) भा. १२।१३९।६० ; भामु. १२।१४१।६४ समयं क्षुधा (शमयन् क्षुधाम्).

(२) भा. १२।१३९।६१ ; भामु. १२।१४१।६५ यथा वै (यथैव) मपीडया (महेलया).

(३) भा. १२।१३९।६२ ; भामु. १२।१४१।६६ भक्षस्या (भक्ष्यस्या).

(४) भा. १२।१३९।६३ ; भामु. १२।१४१।६७ जीवन् धर्मं चरिष्यामि (बलवन्तं करिष्यामि) नि च (नि तु).

(५) भा. १२।१३९।६४ ; भामु. १२।१४१।६८ पूर्वार्धे (नैतत्खादन् प्राप्नुते दीर्घमायुर्नैव प्राणान्नामृतस्येव तृप्तिः ।) भक्षो (भक्ष्यो).

(६) भा. १२।१३९।६५ ; भामु. १२।१४१।६९ नान्नं (मन्ये).

श्वपच उवाच–

[1]पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै द्विज ।
यदि शास्त्रं प्रमाणं ते माऽभक्ष्ये मानसं कृथाः ॥

पञ्च शशशल्यकादयः पञ्चैव भक्ष्याः नान्ये इति हेतोः अभक्ष्ये श्वमांसे मनो मा कृथाः । नीटी.

विश्वामित्र उवाच–

[2]अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै ।
अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम् ॥

श्वपच उवाच–

[3]भिक्षामन्यामाहरेति न चैतत्कर्तुमर्हसि ।
न नूनं कार्यमेतद्वै हर कामं श्वजाघनीम् ॥

इति कर्तुं नार्हसीति योजना । नीटी.

विश्वामित्र उवाच–

[4]शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये ।
परां मेध्याशनादेतां भक्ष्यां मन्ये श्वजाघनीम् ॥

शिष्टाः अगस्त्यादयः । नीटी.

श्वपच उवाच–

[5]असता यत्समाचीर्णं न स धर्मः सनातनः ।
नावृत्तमनुकार्यं वै मा छलेनानृतं कृथाः ॥

विश्वामित्र उवाच–

[6]न पातकं नावमतमृषिः सन् कर्तुमर्हति ।
समौ च श्वमृगौ मन्ये तस्माद्भक्ष्या श्वजाघनी ॥

समौ पशुत्वादिति भावः । नीटी.

श्वपच उवाच–

[1]यद्ब्राह्मणार्थे कृतमर्थितेन
तेनर्षिणा तच्च भक्ष्याधिकारम् ।
स वै धर्मो यत्र न पापमस्ति
सर्वैरुपायैर्हि स रक्षितव्यः ॥

तेन अगस्त्येन ब्राह्मणानामर्थे अर्थितेन प्रार्थितेन, अर्थाद् ब्राह्मणैरेव, वातापिभक्षणं कृतं, न स्वार्थे । तदपि अवस्थाधिकारे । स तादृश एव समयो नान्यत् किंचित् कर्तुं शक्यमित्यर्थः । नृशंसमपि भक्षित्वा तेन वातापिना भक्ष्यमाणा ब्राह्मणा रक्षिताः इति धर्म एवेत्यर्थः । नीटी.

विश्वमित्र उवाच–

[2]मित्रं च मे ब्राह्मणश्चायमात्मा
प्रियश्च मे पूज्यतमश्च लोके ।
तं भर्तुकामोऽहमिमां हरिष्ये
नृशंसानामीदृशानां न बिभ्ये ॥

तर्हि अयं आत्मा देहः मम मित्रं, एतस्य रक्षणार्थं मयाऽप्येतत् भुक्तं चेन्न कश्चिद्दोषोऽस्तीत्याह– मित्रं चेति । नीटी.

श्वपच उवाच–

[3]कामं नरा जीवितं संत्यजन्ति
न चाभक्ष्यैः प्रतिकुर्वन्ति तत्र ।
सर्वान् कामान् प्राप्नुवन्तीह विद्वन्
प्रियस्व कामं सहितः क्षुधा वै ॥

---

(१) भा. १२।१३९।६६ ; भामु. १२।१४१।७० द्विज ( विशः ) यदि ( यथा ).

(२) भा. १२।१३९।६७ ; भामु. १२।१४१।७१ क्षुब्धो ( क्षुत्तो ).

(३) भा. १२।१३९।६८ ; भामु. १२।१४१।७२ चैतत्कर्तुम ( च कर्तुमिहा ).

(४) भा. १२।१३९।६९ ; भामु. १२।१४१।७३ देतां ( देनां ).

(५) भा. १२।१३९।७० ; भामु. १२।१४१।७४ न स ( न च ) नावृत्तमनु ( नाकार्यमिह ) नानृतं ( नाशुभं ).

(६) भा. १२।१३९।७१ ; भामु. १२।१४१।७५ द्भक्ष्या श्वजाघनी ( द्भोक्ष्ये श्वजाघनीम् ).

(१) भा. १२।१३९।७२ ; भामु. १२।१४१।७६ तच्च भक्ष्याधिकारम् ( तदवस्थाधिकारे ) हिं स रक्षितव्यः ( गुरवो हि रक्ष्याः ).

(२) भा. १२।१३९।७३ ; भामु. १२।१४१।७७ ब्राह्मणश्चा ( ब्राह्मणस्या ) भर्तु ( धर्तुं ) हरिष्ये ( जिहीर्षे ).

(३) भा. १२।१३९।७४ ; भामु. १२।१४१।७८ भक्ष्यैः प्रतिकुर्वन्ति तत्र ( भक्ष्ये क्वचित् कुर्वन्ति बुद्धिम् ) क्षुधा वै ( क्षुधैव ).

क्षुधैव जितया सर्वान् कामानन्ये आप्नुवन्ति अतस्त्वमपि क्षुधैव सहितः अनाहारेणैव कामं प्रियस्व पूयस्व । नीटी.

विश्वामित्र उवाच–

[1]स्थाने तावत्संशयः प्रेत्यभावे
निःसंशयं कर्मणां वा विनाशः ।
अहं पुनर्वर्ते इत्याशयात्मा
मूलं रक्षन् भक्षयिष्याम्यभक्ष्यम् ॥

सः कामः प्रेत्यभावे मरणे सति यशः यशस्करः भवेदिति स्थाने युक्तम् । अनशनेन मरणं श्रेयः इति सत्यमित्यर्थः । जीवतस्त्वनश्नतो धर्मलोपः प्रत्यक्षः । मूलं धर्मस्य शरीरं रक्ष्यम् । तस्य वैकल्येन धर्मविरोधो भवतीत्यर्थः । नीटी.

[2]बुद्ध्यात्मके व्यस्तमस्तीति तुष्टो
मोहादेकत्वं यथा चर्म चक्षुः ।
यद्यप्येनः संशयादाचरामि
नाहं भविष्यामि यथा त्वमेव ॥

बुद्ध्यात्मके प्रमातरि विचारिते श्वजाघनीभक्षणेऽपि पुण्यमस्तीति जाने । ज्ञानोत्पत्तियोग्यं शरीरमपथेनापि रक्ष्यमेवेति भावः । मोहात्मके कर्तृत्वाद्यभिमानभाजि यथा श्वभक्षणे दोषस्तथैव तत्र विषयेऽस्ति । संशयात्मा, अन्यतरस्याऽऽत्मनो दृढपरिग्रहाभावात् । तथाऽपि श्वभक्षणमात्रेण त्वादृशः श्वपचोऽहं न भविष्यामि । तपसा दोषं दूरीकर्तुं शक्तोऽस्मीति भावः । नीटी.

(१) भा. १२।१३९।७५ ; भामु. १२।१४१।७९ तावत्संशयः ( भवेत्स यशः ) संशयं ( संशयः ) वा (वै) वर्ते इत्याशयात्मा ( व्रतनित्यः शमात्मा ) रक्षन् ( रक्ष्यं ).

(२) भा. १२।१३९।७६ ; भामु. १२।१४१।८० पूर्वार्धे ( बुद्ध्यात्मके व्यक्तमस्तीति पुण्यं मोहात्मके यत्र यथा श्वभक्ष्ये । ) प्येनः संशयादा ( प्येतत्संशयात्मा ).

श्वपच उवाच–

[1]पतनीयमिदं दुःखमिति मे वर्तते मतिः ।
दुष्कृती ब्राह्मणं सन्तं यस्त्वामहमुपालभे ॥

इदं श्वजाघनीभक्षणजं दुःखं पापं गोपनीयं गूहनीयं त्वया क्रियमाणं निरसनीयमिति मे बुद्धिर्निश्चिताऽस्ति । ततोऽहं दुष्कृतः पापीयानपि अब्राह्मणोऽपि त्वामुपालभे यः सोऽहं सत्र कैतवकारी अस्मि । 'स त्वम्' इति पाठे स त्वं प्रसिद्धो विश्वामित्रः, त्वां यदब्राह्मणोऽहमुपालभे अतः दुष्कृतोऽस्मीति योजना । नीटी.

विश्वामित्र उवाच–

[2]पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि ।
न तेऽधिकारो धर्मेऽस्ति मा भूरात्मप्रशंसकः ॥

धर्मे धर्मानुशासने । नीटी.

श्वपच उवाच–

[3]सुहृद्भूत्वाऽनुशास्मि त्वा कृपा हि त्वयि मे द्विज ।
तदेवं श्रेय आधत्स्व मा लोभाच्छ्वानमादिथाः ॥

विश्वामित्र उवाच–

[4]सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर ।
जानेऽहं धर्मतोऽऽत्मानं श्वानीमुत्सृज जाघनीम् ॥

(१) भा. १२।१३९।७७ ; भामु. १२।१४१।८१ पतनीय ( गोपनीय ) वर्तते ( निश्चिता ) दुष्कृती ब्राह्मणं सन्तं ( दुष्कृतो ब्राह्मणः सत्रे ).

(२) भा. १२।१३९।७८ ; भामु. १२।१४१।८२.

(३) भा. १२।१३९।७९ ; भामु. १२।१४१।८३ शास्मि त्वा ( शासे त्वां ) तदेवं ( यदिदं ) च्छ्वानमादिथाः ( त्पातकं कृथाः ).

(४) भा. १२।१३९।८० ; भामु. १२।१४१।८४ श्वानी ( शौनी ).

श्वपच उवाच–

'नैवोत्सहे भवते दातुमेतां
नोपेक्षितुं ह्रियमाणं स्वमन्नम्।
उभौ स्यावः स्वमलेनावलिप्तौ
दाताऽहं च त्वं च विप्र प्रतीच्छन् ॥

पापलेपौ च तावलिप्तौ चेति समासः। प्रतीच्छन् प्रतिगृह्णन्। नीटी.

विश्वामित्र उवाच–

'अद्याहमेतद्वृजिनं कर्म कृत्वा
जीवंश्चरिष्यामि महापवित्रम्।
प्रपूतात्मा धर्ममेवाभिपत्स्ये
यदेतयोर्गुरु तद्वै ब्रवीहि ॥

श्वपच उवाच–

'आत्मैव साक्षी किल लोककृत्ये
त्वमेव जानासि यदत्र दुष्टम्।
यो ह्याद्रियेद्भक्ष्यमिति श्वमांसं
मन्ये न तस्यास्ति विवर्जनीयम् ॥

विश्वामित्र उवाच–

'उपादाने खादने वाऽस्य दोषः
कार्यो न्यायैर्नित्यमत्रापवादः।
यस्मिन्न हिंसा नानृते वाक्यलेशो
भक्ष्यक्रिया तत्र न तद्गरीयः ॥

कार्यात्यये प्राणात्यये अभक्ष्यमपि भक्षणीयमिति भक्ष्याभक्ष्यविधेरपवादोऽस्ति। तथा च सूत्रम्– 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' (ब्रसू. ३।४।२८)। इति। यत्र अभक्ष्यक्रिया अभक्ष्यतापादकं वाक्यं तच्छास्त्रं गरीयो न। यतः यस्मिन्नभक्ष्यभक्षणे हिंसा अनृतं च न इदमेव द्वयमधर्मस्य ज्ञापकम्। किं तर्हि भक्ष्याभक्ष्यशास्त्रमनर्थकम्? नेत्याह– वाच्यलेश इति। भावप्रधानो निर्देशः। तत्र वाच्यत्वस्य निन्द्यत्वस्य लेशमात्रं, न तु तद्धिंसानृतवदत्यन्तं निन्द्यमित्यर्थः। नीटी.

श्वपच उवाच–

'यद्येष हेतुस्तव खादनस्य
न ते वेदः कारणं नान्यधर्मः।
तस्मादभक्ष्ये भक्षणाद्वा द्विजेन्द्र
दोषं न पश्यामि यथेदमात्थ ॥

हेतुः प्राणपोषणेच्छा अस्ति कारणं प्रमाणं भक्ष्ये भक्षणे। 'अभक्षणे' इति च्छेदः। नीटी.

विश्वामित्र उवाच–

'न पातकं भक्षणमस्य दृष्टं
सुरां पीत्वा पततीतीह शब्दः।
अन्योन्यकर्माणि तथा तथैव
न लेशमात्रेण कृत्यं हिनस्ति ॥

अतिपापं हिंसावदभक्ष्यं भक्षमाणस्य न दृष्टम्। पततीतिशब्दः शब्दशास्त्रस्याऽऽज्ञामात्रम्। परंतु पापहेतुर्मुख्यो हिंसाख्योऽत्र न दृश्यते इति भावः। अन्योन्यकार्याणि मैथुनानि। पापमात्रेण कृतं पुण्यं हिनस्ति नाशयति। तेन ईषत्पापोत्पत्तिरस्तु, न तु ब्राह्मण्यादिधर्महानिरस्तीति भावः। नीटी.

---

(१) भा. १२।१३९।८१; भामु. १२।१४१।८५ भवते (भवतो) स्वमलेना (पापलेपा) ऽहं च त्वं च विप्र (चाहं ब्राह्मणस्त्वं).

(२) भा. १२।१३९।८२; भामु. १२।१४१।८६ प्रपूतात्मा (स पूतात्मा).

(३) भा. १२।१३९।८३; भामु. १२।१४१।८७ किल लोक (कुलधर्म) दुष्टम् (दुष्कृतम्) द्रिये (द्रिया).

(४) भा. १२।१३९।८४; भामु. १२।१४१।८८ वाऽस्य (चास्ति) कार्यो न्यायैर्नि (कार्यात्यये नि) यस्मिन्न हिंसा नानृते वाक्य (यस्मिन् हिंसा नानृतं वाच्य) तत्र (यत्र).

(१) भा. १२।१३९।८५; भामु. १२।१४१।८९ खादनस्य न (खादने स्यान्न) नान्य (नार्थ) दभक्ष्ये भक्षणाद्वा (द्भक्ष्येऽभक्षणे वा) मात्थ (मत्र).

(२) भा. १२।१३९।८६; भामु. १२।१४१।९० पूर्वार्धे (नैवातिपापं भक्षमाणस्य दृष्टं सुरां तु पीत्वा पततीति शब्दः।) कर्माणि तथा (कार्याणि यथा) लेश (पाप) कृत्यं (कृतं).

श्वपच उवाच–

[1]अस्थानतो हीनतः कुत्सिताद्वा
तं विद्वांसं बाधते साधुवृत्तम् ।
स्थानं पुनर्यो लभते निषङ्गा-
त्तेनापि दण्डः सहितव्य एव ॥

अस्थानतः चाण्डालगृहात्, हीनतः चौर्यतः, कुत्सितात् अदित्सतः कदर्यात्, अभिषङ्गात् अत्याग्रहात् श्वानं लभते तेनापि तेनैव दण्डः सहितव्यः सोढव्यः एव, न तु दातुमम दोषोऽस्तीति भावः । नीटी.

भीष्म उवाच—

[2]एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा ।
विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम् ॥
[3]ततो जग्राह पञ्चाङ्गीं जीवितार्थी महामुनिः ।
सदारस्तामुपाकृत्य वने यातो महामुनिः ॥
[4]अथास्य बुद्धिरभवद्विधिनाऽहं श्वजाघनीम् ।
भक्षयामि यथाकामं पूर्वं संतर्प्य देवताः ॥
ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः ।
ऐन्द्राग्नेयेन विधिना चरुं श्रपयत स्वयम् ॥
ततः समारभत्कर्म दैवं पित्र्यं च भारत ।
आहूय देवानिन्द्रादीन् भागं भागं विधिक्रमात् ॥
[5]एतस्मिन्नेव काले तु प्रववर्षाथ वासवः ।
संजीवयन् प्रजाः सर्वा जनयामास चौषधीः ॥
[6]विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्विषः ।
कालेन महता सिद्धिमवाप परमाद्भुताम् ॥

(१) भा. १२।१३९।८७; भामु. १२।१४१।९१ तं वि (तद्वि) स्थान (श्वानं) निषङ्गा (ऽभिषङ्गा).

(२) भा. १२।१३९।८८; भामु. १२।१४१।९२.

(३) भा. १२।१३९।८९; भामु. १२।१४१।९३ पञ्चाङ्गीं (स श्वाङ्गं) कृत्य (हृत्य) यातो महामुनिः (मोक्तुमियेष सः).

(४) भामु. १२।१४१।९४–९६.

(५) भा. १२।१३९।९०; भामु. १२।१४१।९७ र्षाथ (र्ष स).

(६) भा. १२।१३९।९१; भामु. १२।१४१।९८.

[1]स संहृत्य च तत्कर्म अनास्वाद्य च तद्धविः ।
तोषयामास देवांश्च पितॄंश्च द्विजसत्तमः ॥
[2]एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥
[3]एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ।
जीवन् पुण्यमवाप्नोति नरो भद्राणि पश्यति ॥
[4]तस्मात्कौन्तेय विदुषा धर्माधर्मविनिश्चये ।
बुद्धिमास्थाय लोकेऽस्मिन् वर्तितव्यं यतात्मना ॥

**बृहस्पतिना उशनसा च प्रोक्ता राजनीतिः–**
**स्वबुद्धिवचनाभ्यां निर्णयः लोकयात्रा एव**
**राजधर्मः न वचनतः एव**

युधिष्ठिर उवाच–

[5]यदिदं घोरमुद्दिष्टमश्रद्धेयमिवानृतम् ।
अस्ति स्विद्दस्युमर्यादा यामहं परिवर्जये ॥
[6]संमुह्यामि विषीदामि धर्मो मे शिथिलीकृतः ।
उद्यमं नाधिगच्छामि कुतश्चित्परिचिन्तयन् ॥

यदि महद्भिरपि घोरं कर्म कर्तव्यत्वेन समुद्दिष्टं यदश्रद्धेयमिवानृतमिव च तर्हि दस्यूनामकार्यकारिणामपि मर्यादा काचिदस्ति इतोऽधिकं दस्यूनां न कर्तव्यमिति । अस्मिंश्चाकृत्ये कर्तव्ये संमोहादिकं प्राप्तोऽप्यात्मानं सान्त्वयन्नपि उद्यमं अध्यवसायं नाधिगच्छामि । एतान् धर्मान् कर्तुमहं न शक्नोमीत्यर्थः । नीटी.

(१) भामु. १२।१४१।९९.

(२) भा. १२।१३९।९२; भामु. १२।१४१।१००.

(३) भा. १२।१३९।९३; भामु. १२।१४१।१०१ नरो भद्राणि पश्यति (पुरुषो भद्रमश्नुते).

(४) भा. १२।१३९।९४; भामु. १२।१४१।१०२ यतात्मना (कृतात्मना).

(५) भा. १२।१४०।१; भामु. १२।१४२।१ यदिदं घोरमुद्दिष्ट (यदि घोरं समुद्दिष्ट).

(६) भा. १२।१४०।२; भामु. १२।१४२।२ कुतश्चित्परिचिन्तयन् (कदाचित्परिसान्त्वयन्).

भीष्म उवाच–

[1]नैतच्छुद्धागमादेव तव धर्मानुशासनम्।
प्रज्ञासमवतारोऽयं कविभिः संभृतं मधु॥

एतदागमादेव श्रुत्वा तव धर्मानुशासनं मया कृतमिति नास्ति। किंतु प्रज्ञायाः समवहारः निष्ठा कल्पितेयमित्यर्थः। एतदग्निहोत्रादिवद्विधेयं न, अपि तु कविभिरकरणे महान्तं दोषं पश्यद्भिः कल्पितमिति भावः। नीटी.

[2]बह्व्यः प्रतिविधातव्याः प्रज्ञा राज्ञा ततस्ततः।
नैकशाखेन धर्मेण यात्रैषा संप्रवर्तते॥

ततस्ततः कोकिलवराहवृकसिंहादिभ्यः शिक्षित्वा यत्र यासु प्रज्ञासु अनुष्ठेयासु एषा तव बुद्धिः ऐकशाखेन एकदेशिना धर्मेण उपलक्षिता न संप्रवर्तते, ताः प्रज्ञाः बह्व्यः प्रतिविधातव्याः सन्ति। नीटी.

[3]बुद्धिसंजननं राज्ञां धर्ममाचरतां सदा।
जयो भवति कौरव्य तदा तद्विद्धि मे वचः॥

धर्मादिः ज्ञेयः, तत् तत्र विषये मे मम वचो विद्धि। नीटी.

[4]बुद्धिश्रेष्ठा हि राजानो जयन्ति विजयैषिणः।
धर्मः प्रतिविधातव्यो बुद्ध्या राज्ञा ततस्ततः॥

प्रतिविधातव्यः चिकित्सनीयः। नीटी.

[5]नैकशाखेन धर्मेण राज्ञां धर्मो विधीयते।
दुर्बलस्य कुतः प्रज्ञा पुरस्तादनुदाहृता॥

यतः पुरस्तात् अध्ययनकाले अनुपाहृता अशिक्षिता, अतः दुर्बलस्य एकदेशाध्ययनवतः प्रज्ञा कुतः ? न कुतश्चिदित्यर्थः। नीटी.

[1]अद्वैधज्ञः पथि द्वैधे संशयं प्राप्तुमर्हति।
बुद्धिद्वैधं वेदितव्यं पुरस्तादेव भारत॥

द्वैधं एकस्यैव कर्मणः क्वचित् काले धर्मत्वं क्वचिदधर्मत्वमिति द्विप्रकारत्वम्, तस्मिन् प्राप्ते तदनभिज्ञः संशयं संकटं प्राप्नोति। अहिंसाया धर्मत्वेऽपि चोररक्षया पापं भवति तद्वदिदं ज्ञेयम्। नीटी.

[2]पार्श्वतः करणं प्रज्ञा विषूची त्वापगा इव।
जनस्तूच्चारितं धर्मं विजानात्यन्यथाऽन्यथा॥

पार्श्वतः पश्चात् करणं करणीयं विष्टम्भित्वा निश्चित्य अग्रिमवर्षे प्रजाभ्यः षड्भागस्यार्धमंशत्रयं वा ग्रहीष्यामि इत्यभिसंधाय प्रकारयेत् आपत्काले तमेव षडभागं सार्धगुणं सपादगुणं वा प्रकर्षेण गृह्णीयात्। तत्कुर्वन् मूढदृष्ट्याऽधर्मी भवति, न तु प्राज्ञदृष्ट्येत्यर्थः। नीटी.

[3]सम्यग्विज्ञानिनः केचिन्मिथ्याविज्ञानिनोऽपरे।
तद्वै यथातथं बुद्ध्वा ज्ञानमाददते सताम्॥

सतां मतमिति शेषः। नीटी.

[4]परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः।
वैषम्यमर्थविद्यानां नैरर्थ्यात्ख्यापयन्ति ते॥

मुष्णन्ति धर्मशास्त्रविरुद्धमर्थशास्त्रं नाऽऽदर्तव्यमिति वदन्ति। वैषम्यं अप्रामाण्यं अधर्मत्वं वा। नीटी.

---

(१) भा. १२।१४०।३ ; भामु. १२।१४२।३ च्छुद्धा ( च्छुत्वाऽऽ ) तारो ( हारो ).

(२) भा. १२।१४०।४ ; भामु. १२।१४२।४ यात्रैषा ( यत्रैषा ).

(३) भा. १२।१४०।५ ; भामु. १२।१४२।५ पूर्वार्धे ( बुद्धिसंजननो धर्म आचारश्च सतां सदा। ) जयो ( ज्ञेयो ) तदा ( सदा ).

(४) भा. १२।१४०।६ ; भामु. १२।१४२।६ नो जयन्ति ( नश्वरन्ति ).

(५) भा. १२।१४०।७ ; भामु. १२।१४२।७ राज्ञां ( राज्ञो ) दाहृता ( पाहृता ).

(१) भा. १२।१४०।८; भामु. १२।१४२।८.

(२) भा. १२।१४०।९; भामु. १२।१४२।९ पूर्वार्धे (पार्श्वतः करणं प्राज्ञो विष्टम्भित्वा प्रकारयेत्। ) स्तूच्चारितं (स्तच्चरितं).

(३) भा. १२।१४०।१० ; भामु. १२।१४२।१० सम्यग्वि (अमिथ्या) नोऽपरे (नः परे) यथातथं (यथार्थं).

(४) भा. १२।१४०।११; भामु. १२।१४२।११ नैरर्थ्यात् ( निरर्थाः ).

[1]आजिजीविषवो विद्यां यशस्कामाः समन्ततः ।
ते सर्वे नरपापिष्ठा धर्मस्य परिपन्थिनः ॥

[2]अपक्वमतयो मन्दा न जानन्ति यथातथम् ।
सदा ह्यशास्त्रकुशलाः सर्वत्रापरिनिष्ठिताः ॥

[3]परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः ।
विज्ञानमथ विद्यानां न सम्यगिति वर्तते ॥

[4]निन्दया परविद्यानां स्वां विद्यां ख्यापयन्ति ये ।
वागस्त्रा वाक्छुरीमत्वा दुग्धविद्याफला इव ।
तान् विद्यावणिजो विद्धि राक्षसानिव भारत ॥

[5]व्याजेन कृत्स्नो विदितो धर्मस्ते परिहास्यते ।
न धर्मवचनं वाचा न बुद्धया चेति नः श्रुतम् ॥

शास्त्रचोरनिन्दाप्रसङ्गात् तदुपजीविनोऽपि निन्दति—आजिजीविषव इति सार्धैस्त्रिभिः । दम्भिनं निन्दत्यर्धेन — व्याजेनेति । कृत इति शेषः । ते तव । प्रकृतमाह—नेति । वाचा केवलया बुद्धया तर्केण वा केवलेन धर्मवचनं धर्मनिश्चयः नास्ति, अपि तु समुच्चिताभ्यां उभाभ्यां धर्मनिर्णयः इत्यर्थः । नीटी.

[6]इति बार्हस्पतं ज्ञानं प्रोवाच मघवा स्वयम् ।
न त्वेव वचनं किंचिदनिमित्तादिहोच्यते ॥

(१) भा. १२।१४०।१२; भामु. १२।१४२।१२ यशस्कामाः (यशःकामौ) नरपा (नृप पा).

(२) भा. १२।१४०।१३; भामु. १२।१४२।१३ सदा (यथा) त्रापरि (त्रायुक्ति).

(३) भा. १२।१४०।१४; भामु. १२।१४२।१४ विज्ञानमथ (विज्ञातमर्थं).

(४) भा. १२।१४०।१५; भामु. १२।१४२।१५–१६ स्वां विद्यां (स्वविद्यां) ये (च) वाक्छुरीमत्वा (वाक्शरीभूता).

(५) भा. १२।१४०।१६; भामु. १२।१४२।१६–१७ कृत्स्नो विदितो (सद्भिर्विहितो) हास्यते (हास्यति) न बुद्धया चेति (नैव बुद्ध्येति).

(६) भा. १२।१४०।१७; भामु. १२।१४२।१७–१८.

[1]स्वविनीतेन शास्त्रेण व्यवस्यन्ति तथाऽपरे ।
लोकयात्रामिहैके तु धर्ममाहुर्मनीषिणः ॥

न त्विति । 'आततायी ब्राह्मणोऽपि हन्तव्यः' इत्यादि वचनं 'कामतो ब्राह्मणं हन्तुः प्रायश्चित्तं न विद्यते' इत्यनेन विरुद्धमपि निष्कारणं न प्रवर्तते । 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा' इति वचनं यथा 'दिक्ष्वतीकाशान् करोति' इत्यतीकाशविधिपरं, न तु परलोकफले संदेहोपन्यासपरम् । एवमाततायिब्राह्मणवधवाक्यमपि 'आततायी सर्वथा हन्तव्यः' इत्येवंपरं, न तु ब्राह्मणरूपोऽप्याततायी हन्तव्यः' इत्येवंपरमिति कैश्चिदुच्यते । अपरे तु सुविनीतेन युक्तिमताऽपि शास्त्रेण शिक्षितमाततायिवधं न व्यवस्यन्ति कर्तव्यत्वेन निश्चिन्वन्ति, अहिंसाशास्त्रप्राबल्यात् । आत्मवधार्थमुद्यताद्गोरिवाऽऽततायिनोऽप्यात्मानं रक्षेत्, न गामिव तं हन्यादिति तेषां भावः । इहलोके तु एके मुख्यास्त्वाचार्याः लोकयात्रां तन्निर्वाहमेव धर्मं प्राहुः । सा च चोरादीनां वधमन्तरेण न संभवतीत्यवश्यं हिंसाऽपि कर्तव्येति तेषामाशयः । तथाहि कल्पकाराः श्रुतिमुदाहरन्ति—'अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति । स्तेनः प्रमुक्तो राजनि याचन्ननृतसंगरे ॥ गुरौ याज्यश्च शिष्यश्च स्त्री भर्तर्यपचारिणी ॥' इति । मार्ष्टि पापमिति शेषः । नीटी.

[2]समुद्दिष्टं सतां धर्मं स्वयमूहेन्न पण्डितः ।
अमर्षाच्छास्त्रसंमोहादविज्ञानाच्च भारत ॥

[3]शास्त्रं प्राज्ञस्य वदतः समूहे यात्यदर्शनम् ।
आगतागमया बुद्धया वचनेन प्रशस्यते ॥

(१) भा. १२।१४०।१८; भामु. १२।१४२।१८–१९ स्ववि (सुवि) व्यवस्यन्ति तथा (न व्यवस्यन्त्यथा) धर्ममा (धर्मं प्रा).

(२) भा. १२।१४०।१९; भामु. १२।१४२।१९–२० मूहेन्न (मूहेत).

(३) भा. १२।१४०।२०; भामु. १२।१४२।२०–२१.

[1]अज्ञानाज्ज्ञानहेतुत्वाद्वचनं साधु मन्यते ।
अनपाहृतमेवेदं नेदं शास्त्रमपार्थकम् ॥
[2]दैतेयानुशनाः प्राह संशयच्छेदने पुरा ।
ज्ञानमव्यपदेश्यं हि यथा नास्ति तथैव तत् ॥
[3]तेन त्वं छिन्नमूलेन कं तोषयितुमर्हसि ।
अतथ्यविहितं यो वा नेदं वाक्यमुपाश्नुयात् ॥
[4]उग्रायैव हि सृष्टोऽसि कर्मणे न त्ववेक्षसे ।
अङ्गेमामन्ववेक्षस्व राजनीतिं बुभूषितुम् ।
यया प्रमुच्यते त्वन्यो यदर्थं च प्रमोदते ॥

एवं सत्यपि मतभेदे युक्त्यैव धर्ममूहेतेत्याह-समिति । तस्मादमर्षादींस्त्यक्त्वा समूहे सभायां शास्त्रं वदेदित्याशयेनाऽऽह- अमर्षादिति । आगतागमया बुद्ध्या श्रुत्युपगृहीतेन तर्केण सहितं यद्वचनं तेन प्रशस्यते शास्त्रं, नान्यतरेण । अन्यस्तु- ज्ञानहेतुत्वात् अज्ञातज्ञापकतया वचनं तर्केण हीनं शब्दमेव साधु मन्यते । कुतः ? अज्ञानात् । अन्यः पुनः अनया युक्त्या इदं शास्त्रं हृतं दूषितं इति हेतोः अपार्थकं व्यर्थं इति मन्यते, तदप्यज्ञानादेव । तस्मात्तर्केण शास्त्रस्य शास्त्रेण तर्कस्य वा बाधमकृत्वा यदुभयसंमतं तदेवानुष्ठेयं इत्युशनसो मतं पूर्वोक्तेन बार्हस्पत्येन ज्ञानेनैक्यं गतमिति दर्शितम् । किंच अपदिश्यं दिशोर्मध्ये स्थितं कोटिद्वयस्पर्शि ज्ञानं संशयरूपं, तद्यथा नास्ति तथैव, व्यर्थमित्यर्थः । अतः तं संशयं छिन्नमूलेन मूलोच्छेदेन यथा स्यात्तथा संनोदयितुं दूरीकर्तुं अर्हसि । निःसंशयं यत् ज्ञानं तदेवाऽऽश्रयस्वेत्यर्थः । यो वा भवान् मम इदं नीतिवाक्यं न उपाश्नुते नाङ्गीकरोति तत् अनव्यवहितं अयुक्तम् । व्यवहितपदं नशब्देन समस्तं चेत् नव्यवहितशब्दः संनिकृष्टवचनः, तदभावोऽनव्यवहितमिति योगोऽत्र ज्ञेयः । कुतोऽयुक्तम् ? अत आह- उग्रायेति । यतः उग्राय हिंस्रकर्मार्थमेव त्वं सृष्टोऽसि । तच्च त्वं न समीक्षसे, अतो मम वचनं तव चेतसि न किंचिल्लग्नमित्यर्थः । हे अङ्ग, मामन्ववेक्षस्व । बुभूषते ऐश्वर्यलिप्सवे राजन्याय राजसमूहाय तदर्थे यथा तत्प्रमुच्यते तथा कुर्वाणं मामन्ववेक्षस्व इत्यध्याहृत्य योज्यम् । अन्यः लोकः यदर्थं यमर्थं न प्रमोदते नानुमोदते । हिंस्रोऽयमिति मां निन्दन्तोऽपि भूलोकार्थिनो राजानः स्वहितमजानाना अपि मया स्वर्लोकं प्रापिताः उपकारायैव, न स्वार्थाय । एवं त्वमप्युग्रेण कर्मणा प्रजास्तद्धितायैव शाधि इति भावः । नीटी.

[1]अजोऽश्वः क्षत्रमित्येतत्सदृशं ब्रह्मणा कृतम् ।
तस्मादभीक्ष्णभूतानां यात्रा काचित्प्रसिध्यति ॥

यथाऽजो यज्ञार्थे नीयते तद्धिताय, एवं अश्वक्षत्रियावपि संग्रामार्थे नीयेते तद्धितायैव, 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इत्युक्तेः । तथा यज्ञे हन्यमानस्य पशोरपि स्वर्गप्राप्तिर्दृष्टा- 'पशुर्वै नीयमानः स मृत्युं प्रापश्यत्स देवान्नान्वकामयतैतुं तं देवा अब्रुवन्नेहि स्वर्गं वै त्वा लोकं गमयिष्यामः' इति । नीटी.

[2]यस्त्ववध्यवधे दोषः स वध्यस्यावधे स्मृतः ।
एषैव खलु मर्यादा यामयं परिवर्जयेत् ॥

एवं 'संमुह्यामि' (भा. १२।१४०।२) इत्यादेरुत्तरमुक्त्वा 'अस्ति स्विद्दस्युमर्यादा' (भा. १२। १४०।१) इत्यस्योत्तरमाह- यस्त्विति । नीटी.

---

(१) भा. १२।१४०।२१ ; भामु. १२।१४२।२१-२२ अनपाहृतमेवेदं नेदं (अनया हृतमेवेदमिति).

(२) भा. १२।१४०।२२; भामु. १२।१४२।२२-२३ नुशनाः (नुशना) च्छेदने (च्छेदनं) देश्यं (दिश्यं).

(३) भा. १२।१४०।२३ ; भामु. १२।१४२।२३-२४ तेन त्वं (तं तथा) कं तोषयितु (संनोदयितु) अतथ्यविहितं (अनव्यवहितं) पाश्नुयात् (पाश्नुते).

(४) भा. १२।१४०।२४; भामु. १२।१४२।२४-२५ त्ववेक्षसे (त्वमीक्षसे) द्वितीयार्धे (अङ्ग मामन्ववेक्षस्व राजन्याय बुभूषते । ) यया (यथा) च (न).

(१) भा. १२।१४०।२५; भामु. १२।१४२।२६ दभीक्ष्ण (दभीक्ष्णं).

(२) भा. १२।१४०।२६; भामु. १२।१४२।२७ एषैव (सा चैव).

[1]तस्मात्तीक्ष्णः प्रजा राजा स्वधर्मे स्थापयेदुत ।
अन्योन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव ॥
[2]यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्याञ्जलादिव ।
विहरन्ति परस्वानि स वै क्षत्रियपांसनः ॥
कुलीनान् सचिवान् कृत्वा वेदविद्यासमन्वितान् ।
प्रशाधि पृथिवीं राजन् प्रजा धर्मेण पालयन् ॥
[3]विहीनजमकर्माणं यः प्रगृह्णाति भूमिपः ।
उभयस्याविशेषज्ञस्तद्वै क्षत्रं नपुंसकम् ॥

अन्यायं न्यायवर्जितं यथा स्यात्तथा प्रगृह्णाति षड्भागमादत्ते । कर्मणा पालनात्मकेन विहीनं क्षत्रम् । नीटी.

[4]नैवोग्रं नैव चानुग्रं धर्मेणेह प्रशस्यते ।
उभयं न व्यतिक्रामेदुग्रो भूत्वा मृदुर्भव ॥
[5]कष्टः क्षत्रियधर्मोऽयं सौहृदं त्वयि यत्स्थितम् ।
उग्रे कर्मणि सृष्टोऽसि तस्माद्राज्यं प्रशाधि वै ॥
[6]अशिष्टनिग्रहो नित्यं शिष्टस्य परिपालनम् ।
इति शक्रोऽब्रवीद्धीमानापत्सु भरतर्षभ ॥

युधिष्ठिर उवाच–

[7]अस्ति स्विद्दस्युमर्यादा यामन्यो नातिलङ्घयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥

(१) भा. १२।१४०।२७; भामु. १२।१४२।२८ येदुत (येत्ततः).

(२) भा. १२।१४०।२८–२९; भामु. १२।१४२। २९–३०.

(३) भा. १२।१४०।३०; भामु. १२।१४२।३१ विहीनजमकर्माणं (विहीनं कर्मणा न्यायं) उभयस्याविशेषज्ञस्त (उपायस्याविशेषज्ञं त).

(४) भा. १२।१४०।३१; भामु. १२।१४२।३२.

(५) भा. १२।१४०।३२; भामु. १२।१४२।३३ यत्स्थि (मे स्थि) उग्रे (उग्र).

(६) भा. १२।१४०।३३; भामु. १२।१४२।३४ इति शक्रो (एवं शुक्रो).

(७) भा. १२।१४०।३४; भामु. १२।१४२।३५ स्विद्दस्यु (चेदिह) नाति (नाभि).

भीष्म उवाच–

[1]ब्राह्मणानेव सेवेत विद्यावृद्धांस्तपस्विनः ।
श्रुतचारित्रवृत्ताढ्यान् पवित्रं ह्येतदुत्तमम् ॥

ब्राह्मणादर्वागेव दण्डस्य मर्यादा, ब्राह्मणस्तु नैवं दण्ड्यः अपि तु पूज्य एव इत्याह– ब्राह्मणानेवेति । नीटी.

[2]या देवतासु वृत्तिस्ते साऽस्तु विप्रेषु सर्वदा ।
क्रुद्धैर्हि विप्रैः कर्माणि कृतानि बहुधा नृप ॥
[3]तेषां प्रीत्या यशो मुख्यमप्रीत्या तु विपर्ययः ।
प्रीत्या ह्यमृतवद्विप्राः क्रुद्धाश्चैव यथा विषम् ॥

धर्मार्थकामानां तारतम्यम्

वैशम्पायन उवाच–

[4]इत्युक्तवति भीष्मे तु तूष्णींभूते युधिष्ठिरः ।
पप्रच्छावसरं गत्वा भ्रातॄन् विदुरपञ्चमान् ॥

एवं शूराणां सर्वापन्निवारणहेतुः खड्ग इति खड्गोत्पत्त्यन्ता कथा सर्वैः श्रुता । अथेदानीमेकरूपेऽप्युपदेष्टरि शिष्याः स्वस्वाभिप्रायानुसारेणैव शास्त्रतत्त्वं गृह्णन्तीत्येतमर्थमाख्यायिकामुखेन दर्शयति – इत्युक्तवतीत्यादिना । आवसथं गृहम् । विदुरः पञ्चमो येषु तान् । स्वयं षष्ठः । षड्योगजा गीता इत्ययं षड्जगीताध्यायः । नीटी.

[5]धर्मे चार्थे च कामे च लोकवृत्तिः समाहिता ।
तेषां गरीयान् कतमो मध्यमः को लघुश्च कः ॥

(१) भा. १२।१४०।३५; भामु. १२।१४२।३६.

(२) भा. १२।१४०।३६; भामु. १२।१४२।३७ सर्वदा (नित्यदा).

(३) भा. १२।१४०।३७; भामु. १२।१४२।३८ पूर्वार्धे (प्रीत्या यशो भवेन्मुख्यमप्रीत्या परमं भयम् ।) यथा विषम् (विषं यथा).

(४) भा. १२।१६१।१; भामु. १२।१६७।१ वसरं (वसथं).

(५) भा. १२।१६१।२; भामु. १२।१६७।२ लोक (लोभ).

[1]कस्मिंश्चाऽऽत्मा नियन्तव्यस्त्रिवर्गविजयाय वै ।
संतुष्टा नैष्ठिकं वाक्यं यथावद्वक्तुमर्हथ ॥

त्रिवर्गविजयाय कामक्रोधलोभानां जयाय । नीटी.

[2]ततोऽर्थगतितत्त्वज्ञः प्रथमं प्रतिभानवान् ।
जगाद विदुरो वाक्यं धर्मशास्त्रमनुस्मरन् ॥

विदुर उवाच–

बाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा ।
भावशुद्धिर्दया सत्यं संयमश्चाऽऽत्मसंपदः ॥

धर्मावतारत्वात् धर्मशास्त्रानुसारि वाक्यं विदुर उवाच– बाहुश्रुत्यमिति । बाहुश्रुत्यं बह्वध्ययनम् । तपः स्वधर्माचरणम् । त्यागो दानम् । श्रद्धा आस्तिक्यम् । यज्ञक्रिया सोमसंस्थादिः । क्षमा आक्रुष्टस्य ताडितस्य वा निर्विकारित्वम् । भावशुद्धिः निष्कपटत्वम् । दया दीनेष्वनुजिघृक्षा । सत्यं हिंसाशून्यं यथार्थवचनम् । संयमः इन्द्रियनिग्रहः । एता दश आत्मनः धर्मस्य संपदः ऐश्वर्याणि । नीटी.

[3]एतदेवाभिपद्यस्व मा ते भूच्चलितं मनः ।
एतन्मूलौ हि धर्मार्थावेतदेकपदं हितम् ॥

[4]धर्मेणैवर्षयस्तीर्णा धर्मे लोकाः प्रतिष्ठिताः ।
धर्मेण देवा दिविगा धर्मे चार्थः समाहितः ॥

[5]धर्मो राजन् गुणश्रेष्ठो मध्यमो ह्यर्थ उच्यते ।
कामो यवीयानिति च प्रवदन्ति मनीषिणः ।
तस्माद्धर्मप्रधानेन भवितव्यं यतात्मना ॥

(१) भा. १२।१६१।३; भामु. १२।१६७।३ नियन्तव्य (निधातव्य) संतुष्टा (संहृष्टा).

(२) भा. १२।१६१।४–५ ; भामु. १२।१६७।४–५. चतुर्थश्लोकानन्तरं ' विदुर उवाच ' इत्यधिकम् ।

(३) भा. १२।१६१।६ ; भामु. १२।१६७।६ हितम् (हि मे).

(४) भा. १२।१६१।७ ; भामु. १२।१६७।७ दिविगा ध (ववृधुर्ध).

(५) भा. १२।१६१।८ ; भामु. १२।१६७।८–९ गुणश्रेष्ठो (गुणः श्रेष्ठो).

तथा च सर्वभूतेषु वर्तितव्यं यथाऽऽत्मनि ॥

[1]समाप्तवचने तस्मिन्नर्थशास्त्रविशारदः ।
पार्थो वाक्यार्थतत्त्वज्ञो जगौ वाक्यमतन्द्रितः ॥

[2]कर्मभूमिरियं राजन्निह वार्ता प्रशस्यते ।
कृषिवाणिज्यगोरक्ष्यं शिल्पानि विविधानि च ॥

एवं धर्मश्रैष्ठ्ये विदुरेण प्रतिपादितेऽर्थश्रैष्ठ्यमर्जुन आह– कर्मभूमिरिति । नीटी.

[3]अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः ।
न ऋतेऽर्थेन वर्तेते धर्मकामाविति श्रुतिः ॥

अव्यतिक्रमः मर्यादा । नीटी.

[4]विजयी ह्यर्थवान् धर्ममाराधयितुमुत्तमम् ।
कामं च चरितुं शक्तो दुष्प्रापमकृतात्मभिः ॥

[5]अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः ।
अर्थसिद्ध्या हि निर्वृत्तावुभावेतौ भविष्यतः ॥

[6]उद्भूतार्थं हि पुरुषं विशिष्टतरयोनयः ।
ब्रह्माणमिव भूतानि सततं पर्युपासते ॥

[7]जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः ।
मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥

(१) भामु. १२।१६१।९.

(२) भा. १२।१६१।९ ; भामु. १२।१६७।१० 'वैशम्पायन उवाच' इत्यधिकम्, वाक्यार्थ (धर्मार्थ) क्यमतन्द्रितः (क्यं प्रचोदितः).

(३) भा. १२।१६१।१० ; भामु. १२।१६७।११ 'अर्जुन उवाच' इत्यधिकम्, कृषिवा (कृषिर्वा) रक्ष्यं (रक्षं).

(४) भा. १२।१६१।११ ; भामु. १२।१६७।१२ ऋते (ह्यृते).

(५) भा. १२।१६१।१२ ; भामु. १२।१६७।१३ विजयी ह्यर्थ (विषयैरर्थ).

(६) भा. १२।१६१।१३ ; भामु. १२।१६७।१४ हि निर्वृत्ता (विनिर्वृत्ता).

(७) भा. १२।१६१।१४ ; भामु. १२।१६७।१५ उद्भूतार्थं (तद्गतार्थं).

(८) भा. १२।१६१।१५ ; भामु. १२।१६७।१६.

निस्तन्तवः नैष्ठिकब्रह्मचारिणः । नीटी.

[1]काषायवसनाश्चान्ये श्मश्रुला ह्रीसुसंवृताः ।
विद्वांसश्चैव शान्ताश्च मुक्ताः सर्वपरिग्रहैः ॥

[2]अर्थार्थिनः सन्ति केचिदपरे स्वर्गकाङ्क्षिणः ।
कुलप्रत्यागमाश्चैके स्वं स्वं मार्गमनुष्ठिताः ॥

[3]आस्तिका नास्तिकाश्चैव नियताः संयमे परे ।
अप्रज्ञानं तमोभूतं प्रज्ञानं तु प्रकाशता ॥

प्रज्ञानमर्थश्रैष्ठ्यविषयम् । नीटी.

[4]भृत्यान् भोगैर्द्विषो दण्डैर्यो योजयति सोऽर्थवान् ।
एतन्मतिमतां श्रेष्ठ मतं मम यथातथम् ।
अनयोस्तु निबोध त्वं वचनं वाक्यकण्ठयोः ॥

अनयोः नकुलसहदेवयोः । नीटी.

ततो धर्मार्थकुशलौ माद्रीपुत्रावनन्तरम् ।
नकुलः सहदेवश्च वाक्यं जगदतुः परम् ॥

[5]आसीनश्च शयानश्च विचरन्नपि च स्थितः ।
अर्थयोगं दृढं कुर्याद्योगैरुच्चावचैरपि ॥

[6]अस्मिंस्तु वै सुसंवृत्ते दुर्लभे परमप्रिये ।
इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः ॥

(१) भा. १२।१६१।१६ ; भामु. १२।१६७।१७ सुसंवृताः (निषेविणः).

(२) भा. १२।१६१।१७ ; भामु. १२।१६७।१८ मार्गं (धर्मं).

(३) भा. १२।१६१।१८ ; भामु. १२।१६७।१९ प्रकाशता (प्रकाशिता).

(४) भा. १२।१६१।१९–२० ; भामु. १२।१६७।२०–२१. एकोनविंशश्लोकानन्तरं 'वैशम्पायन उवाच' इत्यधिकम् ।

(५) भा. १२।१६१।२१ ; भामु. १२।१६७।२२ 'नकुलसहदेवावूचतुः' इत्यधिकम्, पि च (पि वा).

(६) भा. १२।१६१।२२ ; भामु. १२।१६७।२३ सुसंवृत्ते (विनिर्वृत्ते).

[1]योऽर्थो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः ।
मध्विवामृतसंयुक्तं तस्मादेतौ मताविह ॥

तत् हि निश्चितं, त्वा त्वां प्रति, अमृतसमं यथा स्यात्तथा मतौ, आवयोरिति शेषः । नीटी.

[2]अनर्थस्य न कामोऽस्ति तथाऽर्थोऽधर्मिणः कुतः ।
तस्मादुद्विजते लोको धर्मार्थाद्यो बहिष्कृतः ॥

अनर्थस्य अर्थहीनस्य । अधर्मिणः धर्महीनस्य । नीटी.

[3]तस्माद्धर्मप्रधानेन साध्योऽर्थः संयतात्मना ॥
विश्वस्तेषु च भूतेषु कल्पते सर्व एव हि ॥

धर्मरूपेण प्रदानेन । विश्वस्तेषु अस्मद्वाक्ये विश्वासवत्सु । नीटी.

[4]धर्मं समाचरेत्पूर्वं तथाऽर्थं धर्मसंयुतम् ।
ततः कामं चरेत्पश्चात्सिद्धार्थस्य हि तत्फलम् ॥

अत्र धर्मार्थयोः समत्वेऽपि धर्मस्य पूर्वत्वाद्विदुरमतमेवैतदीषद्भेदेन दर्शितम् । नीटी.

[5]विरेमतुस्तु तद्वाक्यमुक्त्वा तावश्विनोः सुतौ ।
भीमसेनस्तदा वाक्यमिदं वक्तुं प्रचक्रमे ॥

नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति ।
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते ॥

कामस्यैव प्राधान्यं मन्वानो भीमसेन उवाच– न काम इति । नीटी.

(१) भा. १२।१६१।२३ ; भामु. १२।१६७।२४ मध्विवामृतसंयुक्तं (तद्धित्वाऽमृतसंवादं).

(२) भा. १२।१६१।२४ ; भामु. १२।१६७।२५.

(३) भा. १२।१६१।२५ ; भामु. १२।१६७।२६ प्रधानेन (प्रदानेन) च भूतेषु (हि भूतेषु) सर्व एव (सर्वमेव).

(४) भा. १२।१६१।२६ ; भामु. १२।१६७।२७ तथाऽर्थं (ततोऽर्थं) त्सिद्धार्थस्य (त्सिद्धार्थः स) त्फलम् (त्परम्).

(५) भा. १२।१६१।२७–२८ ; भामु. १२।१६७।२८–२९. अष्टाविंशश्लोकात्पूर्वं 'वैशम्पायन उवाच' इति, तच्छ्लोकात् परं 'भीमसेन उवाच' इति चाधिकम् ।

[1]कामेन युक्ता ऋषयस्तपस्येव समाहिताः ।
पलाशफलमूलाशा वायुभक्षाः सुसंयताः ॥
[2]वेदोपवादेष्वपरे युक्ताः स्वाध्यायपारगाः ।
श्राद्धयज्ञक्रियायां च तथा दानपरिग्रहे ॥
[3]वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
दैवकर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥
[4]समुद्रं चाऽऽविशन्त्यन्ये नराः कामेन संयुताः ।
कामो हि विविधाकारः सर्वं कामेन संततम् ॥
[5]नास्ति नासीन्नाभविष्यद्भूतं कामात्मकात्परम् ।
एतत्सारं महाराज धर्मार्थावत्र संश्रितौ ॥
[6]नवनीतं यथा दध्नस्तथा कामोऽर्थधर्मतः ।
श्रेयस्तैलं च पिण्याकाद्घृतं श्रेय उदश्वितः ॥

उदश्वितः तक्रात् । नीटी.

[7]श्रेयः पुष्पफलं काष्ठात्कामो धर्मार्थयोर्वरः ।
पुष्पतो मध्विव रसः कामात्संजायते सुखम् ॥
[8]कामो धर्मार्थयोर्योनिः कामश्चाथ तदात्मकः ॥
नाकामतो ब्राह्मणाः स्वन्नमर्था-
न्नाकामतो ददति ब्राह्मणेभ्यः ।
नाकामतो विविधा लोकचेष्टा
तस्मात्कामः प्राक् त्रिवर्गस्य दृष्टः ॥

(१) भा. १२।१६१।२९ ; भामु. १२।१६७।३० मूलाशा (मूलादा).
(२) भा. १२।१६१।३० ; भामु. १२।१६७।३१ वादे (वेदे).
(३) भा. १२।१६१।३१ ; भामु. १२।१६७।३२ दैव (देव).
(४) भा. १२।१६१।३२ ; भामु. १२।१६७।३३ चाऽऽविश (वा विश).
(५) भा. १२।१६१।३३ ; भामु. १२।१६७।३४ संश्रितौ (संस्थितौ).
(६) भा. १२।१६१।३४ ; भामु. १२।१६७।३५ स्तैलं च (स्तैलं हि).
(७) भा. १२।१६१।३५ ; भामु. १२।१६७।३५-३६ कामात्संजायते सुखम् (काम आभ्यां तथा स्मृतः).
(८) भामु. १२।१६७।३६-३७.

अकामतः कामं विना केवलार्थात् स्वन्नं मृष्टान्नं अस्ति । न हि धनमस्तीति मृष्टं भुज्यते, अपि तु रुच्यात्मकः कामोऽस्तीति । अन्यथा ज्वरितस्यापि मृष्टं दीयेत । नीटी.

[1]सुचारुवेषाभिरलंकृताभि-
र्मदोत्कटाभिः प्रियवादिनीभिः ।
रमस्व योषाभिरुपेत्य कामं
कामो हि राजंस्तरसाऽभिपाती ॥
[2]बुद्धिर्ममैषा परिषत्स्थितस्य
या भूद्विचारस्तव धर्मपुत्र ।
स्यात्संहितं सद्भिरफल्गुसारं
समेत्य वाक्यं परमानृशंस्यम् ॥

परिखास्थितस्य । परितः खाता परिखा । सर्वतो मूलरोध इत्यर्थः । तत्र स्थितस्य । अनृशंसं अनिष्ठुरम् । नीटी.

[3]धर्मार्थकामाः सममेव सेव्या
यस्त्वेकसेवी स नरो जघन्यः ।
द्वयोस्तु दक्षं प्रवदन्ति मध्यं
स उत्तमो यो निरतस्त्रिवर्गे ॥

दाक्ष्यमर्थहेतुत्वात् मध्यं मध्यमम् । अर्थात् काम उत्तमो धर्मो जघन्य इति फलितम् । नीटी.

[4]प्राज्ञः सुहृच्चन्दनसारलिप्तो
विचित्रमाल्याभरणैरुपेतः ।
ततो वचः संग्रहविग्रहेण
प्रोक्त्वा यवीयान् विरराम भीमः ॥

(१) भा. १२।१६१।३६ ; भामु. १२।१६७।३८ वादिनीभिः (दर्शनाभिः) जंस्तरसाऽभिपाती (जन्परमो भवेन्नः).
(२) भा. १२।१६१।३७ ; भामु. १२।१६७।३९ परिषत्स्थि (परिखास्थि) समेत्य (ममेति) नृशंस्यम् (नृशंसम्).
(३) भा. १२।१६१।३८ ; भामु. १२।१६७।४० यस्त्वेकसेवी (यो ह्येकभक्तः) द्वयोस्तु दक्षं (तयोस्तु दाक्ष्यं) निरतस्त्रि (ऽभिरतस्त्रि).
(४) भा. १२।१६१।३९ ; भामु. १२।१६७।४१ विग्रहेण (विस्तरेण) यवीयान् (ऽथ वीरान्).

[1]ततो मुहूर्तादथ धर्मराजो
वाक्यानि तेषामनुचिन्त्य सम्यक् ।
उवाच वाचाऽवितथं स्मयन् वै
बहुश्रुतो धर्मभृतां वरिष्ठः ॥

लब्धं श्रुत् श्रवणं यैस्तेषां लब्धश्रुताम् । नीटी.

युधिष्ठिर उवाच–

[2]निःसंशयं निश्चितधर्मशास्त्राः
सर्वे भवन्तो विदितप्रमाणाः ।
विज्ञातुकामस्य ममेह वाक्य-
मुक्तं यद्वै नैष्ठिकं तच्छ्रुतं मे ।
इह त्ववश्यं गदतो ममापि
वाक्यं निबोधध्वमनन्यभावाः ॥

[3]यो वै न पापे निरतो न पुण्ये
नार्थे न धर्मे मनुजो न कामे ।
विमुक्तदोषः समलोष्टकाञ्चनः
स मुच्यते दुःखसुखार्थसिद्धः ॥

नष्ठिकं सिद्धान्तरूपम् । एतेन पूर्वे सर्वे पूर्वपक्षा एवेत्युक्तम् । यः पापादिपञ्चके न निरतः सः दुःखसुखादिसिद्धिर्यस्य तस्मात् सर्वकर्मवृन्दात् विमुच्यते । नीटी.

[4]भूतानि जातीमरणान्वितानि
जराविकारैश्च समन्वितानि ।
भूयश्च तैस्तैः प्रतिबोधितानि
मोक्षं प्रशंसन्ति न तं च विद्मः ॥

जातिः जन्म । स्मरणं अतीतार्थस्मरणं, तेनातीतत्वमात्रं लक्ष्यते । जन्ममरणात्मकानीत्यर्थः । नीटी.

[1]स्नेहे नबद्धस्य न सन्ति तानी-
त्येवं स्वयंभूर्भगवानुवाच ।
बुधाश्च निर्वाणपरा वदन्ति
तस्मान्न कुर्यात्प्रियमप्रियं च ॥

स्नेहेनेति रागद्वेषयोरुपलक्षणम् । एतेन मुक्तेर्दुर्लभत्वमाह– न चेति । तथाऽपि प्राप्यां च सेत्याह– बुधा इति । नीटी.

[2]एतत्प्रधानं न तु कामकारो
यथा नियुक्तोऽस्मि तथा चरामि ।
भूतानि सर्वाणि विधिर्नियुङ्क्ते
विधिर्बलीयानिति वित्त सर्वे ॥

एतत्पदार्थमाह – यथेत्यादिना । नीटी.

[3]न कर्मणाऽऽप्नोत्यनवाप्यमर्थं
यद्भावि सर्वं भवतीति वित्त ।
त्रिवर्गहीनोऽपि हि विन्दतेऽर्थं
तस्मादिदं लोकहिताय गुह्यम् ॥

अर्थं मोक्षम् । वित्त जानीत । लोकहिताय मोक्षाय त्रिवर्गहीनोऽपि गुह्यमर्थं रहस्यं ज्ञानं विन्दते लभते पूर्वोक्तोऽधिकारी । नीटी.

वैशम्पायन उवाच–

[4]ततस्तदग्र्यं वचनं मनोनुगं
समस्तमाज्ञाय ततोऽतिहेतुमत् ।
तदा प्रणेदुश्च जहर्षिरे च ते
कुरुप्रवीराय च चक्रुरञ्जलीन् ॥

---

(१) भा. १२।१६१।४०; भामु. १२।१६७।४२ बहुश्रुतो (लब्धश्रुतां).

(२) भा. १२।१६१।४१; भामु. १२।१६७।४३ इह त्व (इदं त्व).

(३) भा. १२।१६१।४२; भामु. १२।१६७।४४ स मुच्यते (विमुच्यते).

(४) भा. १२।१६१।४३; भामु. १२।१६७।४५ जातीमरणान्वितानि (जातिस्मरणात्मकानि).

(१) भा. १२।१६१।४४; भामु. १२।१६७।४६ पूर्वार्धे (स्नहन युक्तस्य न चास्ति मुक्तिरिति स्वयंभूर्भगवानुवाच।) वदन्ति (भवन्ति).

(२) भा. १२।१६१।४५; भामु. १२।१६७।४७ न तु (च न) चरामि (करोमि).

(३) भा. १२।१६१।४६; भामु. १२।१६७।४८ सर्वं (तद्वै) दिदं (दहो).

(४) भा. १२।१६१।४७; भामु. १२।१६७।४९ 'वैशम्पायन उवाच' इत्यधिकम्, ततोऽति (ततो हि) चक्रुरञ्जलीन् (चक्रिरेऽञ्जलिम्).

ततो युधिष्ठिरात्। ततः पूर्वोक्तात् सर्वेषां वाक्यात् हेतुमदिति वा। नीटी.

[1]सुचारुवर्णाक्षरशब्दभूषितां
मनोनुगां निर्धुतवाक्यकण्टकाम्।
निशम्य तां पार्थिव पार्थभाषितां
गिरं नरेन्द्राः प्रशशंसुरेव ते ॥

[2]स चापि तान् धर्मसुतो महामना-
स्तदा प्रतीतान् प्रशशंस वीर्यवान्।
पुनश्च पप्रच्छ सरिद्वरासुतं
ततः परं धर्ममहीनसत्त्वः ॥

प्रजारक्षणे वधावधविवेकः

**युधिष्ठिर उवाच—**

[3]**कथं राजा प्रजा रक्षेन्न च किंचित्प्रतापयेत्।**
**पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥**

एवमहिंसैव धर्मो हिंसैव च पापमिति स्थिते दण्ड्यान् दण्डयतो राज्ञः कथमहिंसत्वं स्यात् अदण्डयतो वा कथं प्रजासंरक्षणं स्यादिति पृच्छति— कथमिति। नीटी.

**भीष्म उवाच—**

[4]**अत्राप्युदाहरन्तीममितिहासं पुरातनम्।**
**द्युमत्सेनस्य संवादं राज्ञा सत्यवता सह ॥**

[5]**अव्याहृतं व्याजहार सत्यवानिति नः श्रुतम्।**
**वधाय नीयमानेषु पितुरेवानुशासनात् ॥**

अव्याहृतं दण्ड्यानामप्यदण्ड्यत्वं प्राक्केनचिदनुक्तम्। वधाय (इति)। वध्येष्विति शेषः। नीटी.

(१) भा. १२।१६१।४८; भामु. १२।१६७।५० शब्द (चारु).

(२) भा. १२।१६१।४८ उत्त.; भामु. १२।१६७।५१ सत्त्वः (चेतसम्).

(३) भा. १२।२५९।१; भामु. १२।२६७।१ तापयेत् (घातयेत्).

(४) भा. १२।२५९।२; भामु. १२।२६७।२.

(५) भा. १२।२५९।३; भामु. १२।२६७।३ वधाय नीय (वधायोन्नीय).



[1]**अधर्मतां याति धर्मो यात्यधर्मश्च धर्मताम्।**
**वधो नाम भवेद्धर्मो नैतद्भवितुमर्हति ॥**

वधो नाम स च धर्मः इति वदतोव्याघात इत्यर्थः। नीटी.

**द्युमत्सेन उवाच—**

**अथ चेदवधो धर्मो धर्मः को जातुचिद् भवेत्।**
**दस्यवश्चेन्न हन्येरन् सत्यवन् संकरो भवेत् ॥**
**ममेदमिति नास्यैतत्प्रवर्तेत कलौ युगे।**
**लोकयात्रा न चैव स्यादथ चेद्वेत्थ शंस नः ॥**

संकरमेवाऽऽह— ममेति। लोकयात्रा तीर्थगमनवाणिज्यादिव्यवहारः। कलौ युगे अधर्मप्रधाने काले। वेत्थ चेत्, अहिंसयाऽप्यसंकरप्रकारमिति शेषः। नः अस्मभ्यं शंस कथय। नीटी.

**सत्यवानुवाच—**

[2]**सर्व एव त्रयो वर्णाः कार्या ब्राह्मणबन्धनाः।**
**धर्मपाशनिबद्धानामल्पो व्यपचरिष्यति ॥**

त्रयः क्षत्रविट्शूद्राः ब्राह्मणाधीनाः कार्याः। धर्मपाशनिबद्धानां तेषु धर्मपाशेन निबद्धेषु सत्सु अन्योऽपि प्रतिलोमानुलोमजातः सूतमागधादिः एवं त्रैवर्णिकवत् चरिष्यति धर्मम्। नीटी.

[3]**यो यस्तेषामपचरेत्तमाचक्षीत वै द्विजः।**
**अयं मे न शृणोतीति तस्मिन् राजा प्रधारयेत् ॥**

अपचरेत् ब्राह्मणवचनमतिक्रामेत्। प्रधारयेत् दण्डम्। नीटी.

[4]**तत्त्वाभेदेन यच्छास्त्रं तत्कार्यं नान्यथा वधः।**
**असमीक्ष्यैव कर्माणि नीतिशास्त्रं यथाविधि ॥**

तत्त्वात्मकत्वात् तत्त्वं शरीरम्। सत्त्वेति पाठे जन्तुः। तस्य अभेदेन अविनाशेन यत् प्रवृत्तं शास्त्रं तत् कार्यम्।

(१) भा. १२।२५९।४-६; भामु. १२।२६७।४-६.

(२) भा. १२।२५९।७; भामु. १२।२६७।७ एव (एते) मल्पो व्यप (मन्योऽप्येवं).

(३) भा. १२।२५९।८; भामु. १२।२६७।८.

(४) भा. १२।२५९।९; भामु. १२।२६७।९ था वधः (थाविधम्).

एतदेव व्यतिरेकमुखेनाऽऽह– नेति । कर्मादीनि असमीक्ष्य सम्यगनालोच्य अन्यथाविधं विपरीतप्रकारं छेदात्मकं शासनं न कार्यमिति योज्यम् । नीटी.

[1]दस्यून् हिनस्ति वै राजा भूयसो वाऽप्यनागसः ।
भार्या माता पिता पुत्रो हन्यते पुरुषे हते ।
परेणापकृते राजा तस्मात्सम्यक् प्रधारयेत् ॥

यतः एकस्मिंश्चोरे हते तत्संबन्धिनामनागसां बहूनां वधो भवतीत्याह – दस्यूनिति । पुरुषेण हतेन । ते भार्यादयः । यस्मात् एकस्यापराधेन बहूनां वधोऽनुचितः तस्मात् सम्यक् प्रधारयेत् विचारयेत् । नीटी.

[2]असाधुश्चैव पुरुषो लभते शीलमेकदा ।
साधोश्चापि ह्यसाधुभ्यो जायतेऽशोभना प्रजा ॥

[3]न मूलघातः कर्तव्यो नैष धर्मः सनातनः ।
अपि खल्ववधेनैव प्रायश्चित्तं विधीयते ॥

तमेवाऽऽह– असाधुश्चेति । साधोः सकाशात् शीलं लभते । फलितमाह– न मूलेति । यतो मूलघातो नैव धर्मः । नीटी.

[4]उद्वेजनेन बन्धेन विरूपकरणेन च ।
वधदण्डेन ते क्लेश्या न पुरोऽहितसंपदा ॥

उद्वेजनं सर्वस्वापहरणादिभयप्रदर्शनेन । परंतु चोरस्य वधेन ते तदीया भार्यादयः न क्लिश्याः वृत्तिलोपेन क्लेशं न प्रापणीयाः । नीटी.

[5]यदा पुरोहितं वा ते पर्येयुः शरणैषिणः ।
करिष्यामः पुनर्ब्रह्मन्न पापमिति वादिनः ॥

यदेति । ते दस्यवः । नीटी.

[1]तदा विसर्गमर्हाः स्युरितीदं नृपशासनम् ।
बिभ्रद्दण्डाजिनं मुण्डो ब्राह्मणोऽर्हति वासनम् ॥

बिभ्रदिति । संन्यासिनोऽपि शास्या इत्यर्थः । नीटी.

[2]गरीयांसो गरीयांसमपराधे पुनः पुनः ।
तथा विसर्गमर्हन्ति न यथा प्रथमे तथा ॥

गरीयांसमपि शास्युरिति शेषः । पुनः पुनरपराधे यदा कृते तदा ते विसर्गं नार्हन्ति । प्रथमापराधे इवेति व्यतिरेकदृष्टान्तः । नीटी.

द्युमत्सेन उवाच–

[3]यत्र यत्रैव शक्येरन् संयन्तुं समये प्रजाः ।
स तावत्प्रोच्यते धर्मो यावन्न प्रतिलङ्घ्यते ॥

[4]अहन्यमानेषु पुनः सर्वमेव पराभवेत् ।
पूर्वे पूर्वतरे चैव सुशास्या अभवञ्जनाः ॥

[5]मृदवः सत्यभूयिष्ठा अल्पद्रोहाल्पमन्यवः ।
पुरा धिग्दण्ड एवाऽऽसीद्वाग्दण्डस्तदनन्तरम् ॥

यत्र यत्र समये मर्यादायां संयन्तुं नियन्तुम् । धर्मोल्लङ्घनेऽपि अहन्यमानेषु चोरेषु । पूर्वे पूर्वकाले । सुशास्यत्वे हेतूनाह– मृदव इति । नीटी.

आसीदादानदण्डोऽपि वधदण्डोऽद्य वर्तते ।
वधेनापि न शक्यन्ते नियन्तुमपरे जनाः ॥

अद्य कलौ । एकस्मिन्हतेऽपीतरे न त्रस्यन्तीत्यर्थः । अतः सर्वेऽपि चोरपक्षीया हन्तव्या एवेत्याशयः । नीटी.

नैव दस्युर्मनुष्याणां न देवानामिति श्रुतिः ।
न गन्धर्वपितॄणां च कः कस्येह न कश्चन ॥

---

(१) भा. १२।२५९।१० ; भामु. १२।२६७।१० हिनस्ति (निहन्ति) हन्यते पुरुषे हते (हन्यन्ते पुरुषेण ते) कृते ( कृतो ).

(२) भा. १२।२५९।११ ; भामु. १२।२६७।११ भ्यो जायतेऽशोभना ( भ्यः शोभना जायते ).

(३) भा. १२।२५९।१२ ; भामु. १२।२६७।१२ खल्व (स्वल्प).

(४) भा. १२।२५९।१३ ; भामु. १२।२६७।१३ क्लेश्या ( क्लिश्या ) पुरोऽहितसंपदा ( पुरोहितसंसदि ).

(५) भा. १२।२५९।१४ ; भामु. १२।२६७।१४.

(१) भा. १२।२५९।१५ ; भामु. १२।२६७।१५ नृप ( धातृ ) वासनम् ( शासनम् ).

(२) भा. १२।२५९।१६ ; भामु. १२।२६७।१६ तथा वि ( तदा वि ).

(३) भा. १२।२५९।१७ ; भामु. १२।२६७।१७ तावत्प्रो ( तावान्प्रो ).

(४) भा. १२।२५९।१८ ; भामु. १२।२६७।१८ अभव ( ह्यभव ).

(५) भा. १२।२५९।१९–२१ ; भामु. १२।२६७।१९–२१.

कः कस्येहेति गत एव प्रश्नः, न कश्चन कस्यापीत्युत्तरं च। दस्युवधे तद्भार्यादीनां वधो नास्तीत्यर्थः, संबन्धाभावात्। नीटी.

[1]'पद्मं श्मशानादादत्ते पिशाचाच्चापि दैवतम्।
तेषु यः समयं कुर्याद्ज्ञेषु हतबुद्धिषु ॥

चोरेषु मर्यादाकरणमपि न संभवतीत्याह – पद्ममिति। पद्मं शवालंकारं आदत्ते। पिशाचात् पिशाचोपहतात्, आदत्ते चैलादिकमिति शेषः। कीदृशं समयम्? दैवतं देवताशपथादिरूपम्। यः कश्चित् मूढः, न तु प्राज्ञ इत्यर्थः। नीटी.

सत्यवानुवाच–

[2]'तान्न शक्नोषि चेत्साधून् परित्रातुमहिंसया।
कस्यचिद्भूतभव्यस्य लाभेनान्तं तथा कुरु ॥

साधून् कर्तुमिति शेषः। 'भूतं भव्यायोपदिश्यते' इति न्यायेन सिद्धं पश्वादिकं साध्याय कर्मणे भवतीति भूतभव्यशब्देन क्रतुः (उच्यते)। कस्यचित् क्रतोर्लाभेन तेषामन्तं नाशं कुरु। तथा हि सर्वमेधे– 'ब्रह्मणे ब्राह्मणमालभेत' इत्यादिना सर्वजातीयानां सर्वकर्मणां च नराणामालम्भ उक्तः। तथा च राजा बहून् वध्यान्निरोध्य काले सर्वमेधे आलभेतेत्यर्थः। तेन पापिष्ठा अपि यज्ञपशूभूय स्वर्गं यान्ति, 'पशुर्वै नीयमानः। स मृत्युं प्रापश्यत्। स देवान्नान्वकामयतैतुम्। तं देवा अब्रुवन्। एहि, स्वर्गं वै त्वा लोकं गमयिष्याम इति। स तथेत्यब्रवीत्।' इति श्रुतेः। वध्यानपि क्रतुप्रवेशेन उपकुर्यादेवेति भावः। नीटी.

द्युमत्सेन उवाच–

[3]'राजानो लोकयात्रार्थं तप्यन्ते परमं तपः।
अपत्रपन्ति तादृग्भ्यस्तथावृत्ता भवन्ति च ॥

ते राजानः तादृग्भ्यः स्तेनेभ्यः अपत्रपन्ते ममापि राज्ये स्तेनः इति लज्जां कुर्वते। अतस्तथावृत्ता लोकयात्रार्थं प्रजानां निर्दोषत्वं कामयानाः पितर इव तपस्विनो भवन्ति। तथा च राजानः प्रतिजानते छान्दोग्ये– 'न मे स्तेनो जनपदे न कदर्यो न मद्यपः। नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः॥' इति। नीटी.

[1]'वित्रास्यमानाः सुकृतो न कामाद्घ्नन्ति
दुष्कृतीन्।
सुकृतेनैव राजानो भयिष्ठं शासते प्रजाः ॥

त्रासेनैव प्रजाः साध्व्यो भवन्ति। न तु राजानः दुष्कृतीन् दुष्टान् कामात् घ्नन्ति, अपि तु क्रतुप्रयोजनेनैव घ्नन्ति। एवं च सुकृतेनैव प्रजाः शासते। नीटी.

[2]'श्रेयसः श्रेयसीमेवं वृत्तिं लोकोऽनुवर्तते।
सदैव हि गुरोर्वृत्तमनुवर्तन्ति मानवाः ॥

एवंविधे राज्ञि 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरे जनाः' इति न्यायेन उत्तरोत्तरं प्रजाः श्रेयस्यो भवन्तीत्याह– श्रेयस इति। नीटी.

[3]'आत्मानमसमाधाय समाधित्सति यः परान्।
विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तम् ॥

राज्ञा स्वचित्तं जित्वैव प्रजाः शास्याः, अन्यथा ता एवैनमुपहसन्तीत्याह – आत्मानमिति। नीटी.

यो राज्ञो दम्भमोहेन किंचित्कुर्यादसांप्रतम्।
सर्वोपायैर्नियम्यः स तथा पापान्निवर्तते ॥
आत्मैवाऽऽदौ नियन्तव्यो दुष्कृतं संनियच्छता।
दण्डयेच्च महादण्डैरपि बन्धूननन्तरान् ॥

दुष्कृतं दुष्टकर्मकारिणम्। अनन्तरान् पुत्रसोदर्यादीन्। नीटी.

[4]'यत्र वै पापकृत्क्लेश्यो न महद्दुःखमर्च्छति।
वर्धन्ते तत्र पापानि धर्मो ह्रसति च ध्रुवम्।

(१) भा. १२।२५९।२२; भामु. १२।२६७।२२ कुर्यादज्ञेषु (कश्चित्कुर्वीत).

(२) भा. १२।२५९।२३; भामु. १२।२६७।२३.

(३) भा. १२।२५९।२४; भामु. १२।२६७।२४ (द्युमत्सेन उवाच०) अपत्र (तेऽपत्र).

(१) भा. १२।२५९।२५; भामु. १२।२६७।२५.

(२) भा. १२।२५९।२६; भामु. १२।२६७।२६ सीमेवं वृत्तिं (सोऽप्येवं वृत्तं).

(३) भा. १२।२५९।२७–२९; भामु. १२।२६७।२७–२९.

(४) भा. १२।२५९।३०; भामु. १२।२६७।३०–३१ कृत्क्लेश्यो (कृन्नीचो).

इति कारुण्यशीलस्तु विद्वान्वै ब्राह्मणोऽन्वशात् ॥

विपक्षे दोषमाह– यत्रेति । यत्र राज्ये अच्छेति प्राप्नोति । नीटी.

इति चैवानुशिष्टोऽस्मि पूर्वैस्तात पितामहैः ।
आश्वासयद्भिः सुभृशमनुक्रोशात्तथैव च ॥

स्वोक्तेः सांप्रदायिकत्वमाह– इतीति । आश्वासयद्भिः प्रजा इति शेषः । नीटी.

[1]एतत्प्रथमकल्पेन राजा कृतयुगेऽभजत् ।
पादोनेनापि धर्मेण गच्छेत्त्रेतायुगे तथा ।
द्वापरे तु द्विपादेन पादेन त्वपरे युगे ॥

एतत् भूमण्डलं प्रथमकल्पेन मुख्येन अहिंसामयेन दण्डेन जयेत् वशीकुर्यात् । धिग्दण्डं वाग्दण्डमादानदण्डं वधदण्डं च युगक्रमेण प्रजासु प्रवर्तयेदिति तात्पर्यम् । नीटी.

[3]तथा कलियुगे प्राप्ते राज्ञां दुश्चरितेन ह ।
भवेत्कालविशेषेण कला धर्मस्य षोडशी ॥

[4]अथ प्रथमकल्पेन सत्यवन् संकरो भवेत् ।
आयुः शक्तिं च कालं च निर्दिश्य तप आदिशेत् ॥

निर्दिश्य निश्चित्य । तपः दण्डम्, 'राजभिः कृतदण्डास्तु शुध्यन्ति मलिना जनाः' इति दण्डस्यापि तपोवत् शुद्धिहेतुत्वस्मृतेः । नीटी.

सत्याय हि यथा नेह जह्याद्धर्मफलं महत् ।
भूतानामनुकम्पार्थं मनुः स्वायंभुवोऽब्रवीत् ॥

उक्तेऽर्थे प्रमाणमाह – सत्यायेति । सत्याय ब्रह्मप्राप्तये हि प्रसिद्धं महत् धर्मफलं ज्ञानं स्वर्गादेः क्षुद्रत्वात् यथा येन प्रकारेण इह न जह्यात् तादृशमहिंसाख्यं धर्मं मनुः अब्रवीत् । नीटी.

[1]नृपाणां परमो धर्मः प्रजानां परिपालनम् ।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥
वर्णानामाश्रमाणां च राजा भवति पालकः ।
स्वे स्वे धर्मे नियुञ्जानः प्रजाः स्वाः पालयेत्सदा ॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः ।
सम्यक्पालयिता भागं धर्मस्याऽऽप्नोति पुष्कलम् ॥

[2]बालातुरेषु भूतेषु परित्राणं कुरूद्वह ।
शरणागतेषु कारुण्यं कुर्यात्तत्र समाहितः ॥

[3]भरणं सर्वभूतानां रक्षणं चापि सर्वशः ।
आहवे च महीं लब्ध्वा श्रोत्रियायोपपादयेत् ॥

[4]ऊषरेष्वपि वर्षन्तं पात्रेषु मृदुवर्षिणम् ।
पर्जन्यमपि निन्दन्ति किं पुनर्वसुधाधिपम् ॥

श्रियो वसतिः कल्याणगुणेषु

युधिष्ठिर उवाच–

[5]कीदृशे पुरुषे तात स्त्रीषु वा भरतर्षभ ।
श्रीः पद्मा वसते नित्यं तन्मे ब्रूहि पितामह ॥

श्रीमानेव ददातीति श्रीकरान् योगान् कथयितुमध्यायः । श्रीः रूपौदार्यादिशोभा, तद्युता पद्मा धनसमृद्धिः श्रीःपद्मा ( ? श्रीपद्मा ) इत्युच्यते । नीटी.

भीष्म उवाच–

[6]अत्र ते वर्तयिष्यामि यथादृष्टं यथाश्रुतम् ।
रुक्मिणी देवकीपुत्रसंनिधौ पर्यपृच्छत ॥

पर्यपृच्छत श्रियमित्यपकृष्यते । नीटी.

---

(१) भा. १२।२५९।३१ ; भामु. १२।२६७।३१–३२.

(२) भा. १२।२५९।३२ ; भामु. १२।२६७।३२–३३ ऽभजत् (यजेत्) त्वपरे (त्वधरे).

(३) भा. १२।२५९।३३ ; भामु. १२।२६७।३४ राज्ञां (राज्ञो).

(४) भा. १२।२५९।३४–३५ ; भामु. १२।२६७। ३५–३६.

(१) पमा. ३९६ 'शान्तिपर्वणि' इति निर्देशः ।

(२) पमा. ४०८–४०९.

(३) पमा. ४०९.

(४) राक. १४६ ; राप्र. १२६ ऊषरे (कखरे).

(५) भा. १३।११।१ ; भामु.

(६) भा. १३।११।२ ; भामु. १३।११।२ वर्त (वर्ण) दृष्टं (वृत्तं).

[1]नारायणस्याङ्कगतां ज्वलन्तीं
दृष्ट्वा श्रियं पद्मसमानवक्त्राम् ।
कौतूहलाद्विस्मितचारुनेत्रा
पप्रच्छ माता मकरध्वजस्य ॥

[2]कानीह भूतान्युपसेवसे त्वं
संतिष्ठती कानि न सेवसे त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते
तत्त्वेन मे ब्रूहि महर्षिकन्ये ॥

उपसेवसे गजतुरगादिरूपेण । संतिष्ठसे धैर्यौदार्यसौन्दर्यशौर्यादिरूपेण पुरुषे वससि । नीटी.

[3]एवं तदा श्रीरभिभाष्यमाणा
देव्या समक्षं गरुडध्वजस्य ।
उवाच वाक्यं मधुराभिधानं
मनोहरं चन्द्रमुखी प्रसन्ना ॥

देव्या रुक्मिण्या । नीटी.

[4]वसामि सत्ये सुभगे प्रगल्भे
दक्षे नरे कर्मणि वर्तमाने ।
अक्रोधने देवपरे कृतज्ञे
जितेन्द्रिये नित्यमुदीर्णसत्त्वे ॥

प्रगल्भे वाग्मिनि । दक्षे अनलसे । देवपरे देवाराधननिष्ठे । नीटी.

[5]नाकर्मशीले पुरुषे वसामि
न नास्तिके सांकरिके कृतघ्ने ।
न भिन्नवृत्ते न नृशंसवृत्ते
न चापि चौरे न गुरुष्वसूये ॥

(१) भा. १३।११।३ ; भामु. १३।११।३ वक्त्राम् (वर्णाम्).

(२) भा. १३।११।४; भामु. १३।११।४ ती कानि न (से कानिव) कन्ये (कल्ये).

(३) भा. १३।११।५ ; भामु.

(४) भा. १३।११।६ पू. ; भामु. १३।११।६ 'श्रीरुवाच' इत्यधिकम्, सत्ये (नित्यं).

(५) भा. १३।११।६ ; भामु. १३।११।७ सवृत्ते (सवर्णे).

नृशंसवर्णे निष्ठुराक्षरभाषिणि । असूये असूयावति । नीटी.

[1]ये चाल्पतेजोबलसत्त्वसारा
हृष्यन्ति कुप्यन्ति च यत्र तत्र ।
न देवि तिष्ठामि तथाविधेषु
नरेषु संगुप्तमनोरथेषु ॥

तेजः शौर्यम् । सत्त्वं बुद्धिः । यत्र तत्र विशिष्टपुरुषे । संगुप्तमनोरथेषु अन्यत् ध्यायन्ति अन्यत् दर्शयन्ति तादृशेषु । नीटी.

[2]यश्चाऽऽत्मनि प्रार्थयते न किंचियश्च स्वभावोपहतान्तरात्मा ।
तेष्वल्पसंतोषरतेषु नित्यं
नरेषु नाहं निवसामि देवि ॥

स्वभावेत्यादेः मौढ्योपहतचित्तः इत्यर्थः । नीटी.

[3]वसामि धर्मशीलेषु धर्मज्ञेषु महात्मसु ।
वृद्धसेविषु दान्तेषु सत्त्वज्ञेषु महात्मसु ॥
स्त्रीषु क्षान्तासु दान्तासु देवद्विजपरासु च ।
वसामि सत्यशीलासु स्वभावनिरतासु च ॥

[4]प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदा च भर्तुः प्रतीकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जामेवंविधां स्त्रीं परिवर्जयामि ॥

(१) भा. १३।११।७ ; भामु. १३।११।८ सारा हृष्यन्ति (मानाः क्लिश्यन्ति) देवि (चैव) सुप्त (गुप्त).

(२) भा. १३।११।८; भामु. १३।११।९ रतेषु (परेषु) देवि (सम्यक्).

(३) भा. १३।११।९-१०; भामु. १३।११।१०-११ (स्वधर्मशीलेषु च धर्मवित्सु वृद्धोपसेवानिरते च दान्ते । कृतात्मनि क्षान्तिपरे समर्थे क्षान्तासु दान्तासु तथाऽबलासु ॥ सत्यस्वभावार्जवसंयुतासु वसामि देवद्विजपूजिकासु ।).

(४) भा. १३।११।११; भामु. १३।११।११-१२ वेक्ष्य (पेक्ष्य) स्त्रीं (तां).

[1]लोलामचोक्षामवलेहिनीं च
व्यपेतधैर्यां कलहप्रियां च ।
निद्राभिभूतां सततं शयाना-
मेवंविधां स्त्रीं परिवर्जयामि ॥

पापां निर्दयाम् । अचोक्षां अशुचिम् । अवलेहिनीं सृक्किणीं लेलिहानां, सदा क्रुद्धामित्यर्थः । नीटी.

[2]सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु गुणान्वितासु ।
वसामि नारीषु पतिव्रतासु
कल्याणशीलासु विभूषितासु ॥

[3]यानेषु कन्यासु विभूषणेषु
यज्ञेषु मेघेषु च वृष्टिमत्सु ।
वसामि फुल्लासु च पद्मिनीषु
नक्षत्रवीथीषु च शारदीषु ॥

यानादिषु रमणीयेषु सर्वेषु वसामीत्यर्थः । नीटी.

[3]शैलेषु गोष्ठेषु तथा वनेषु
सरःसु फुल्लोत्पलपङ्कजेषु ।
नदीषु हंसस्वननादितासु
क्रौञ्चावघुष्टस्वरशोभितासु ॥

[4]विस्तीर्णकूलह्रदशोभितासु
तपस्विसिद्धद्विजसेवितासु ।
वसामि नित्यं सुबहूदकासु
सिंहैर्गजैश्चाऽऽकुलितोदकासु ।
मत्ते गजे गोवृषभे नरेन्द्रे
सिंहासने सत्पुरुषे च नित्यम् ॥

(१) भा. १३।११।१२; भामु. १३।११।१२-१३ लोला ( पापा ) स्त्रीं ( तां ).

(२) भा. १३।११।१३-१४; भामु. १३।११।१३-१५.

(३) भा. १३।११।१५; भामु. १३।११।१५-१६ शैलेषु ( गजेषु ) तथा व ( तथाऽऽस ).

(४) भा. १३।११।१६; भामु. १३।११।१६-१७ विस्तीर्णकूलह्रदशोभितासु ( विकीर्णकूलद्रुमराजितासु ) सत्पुरुषे च ( सत्पुरुषेषु ).

[1]यस्मिन् गृहे हूयते हव्यवाहो
गोब्राह्मणश्चार्च्यते देवताश्च ।
काले च पुष्पैर्बलयः क्रियन्ते
तस्मिन् गृहे नित्यमुपैमि वासम् ॥

यस्मिन्निति । लक्ष्मीं प्राप्तुमुपाया एते इत्यर्थः । नीटी.

[2]स्वाध्यायनित्येषु द्विजेषु नित्यं
क्षत्रे च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि
शूद्रे च शुश्रूषणनित्ययुक्ते ॥

[3]नारायणे त्वेकमना वसामि
सर्वेण भावेन शरीरभूता ।
तस्मिन् हि धर्मः सुमहान्निविष्टो
ब्रह्मण्यता चात्र तथा प्रियत्वम् ॥

भावेन आदरेण । शरीरभूता शरीरवती । नीटी.

[4]नाहं शरीरेण वसामि देवि
नैवं मया शक्यमिहाभिधातुम् ।
यस्मिंस्तु भावेन वसामि पुंसि
स वर्धते धर्मयशोर्थकामैः ॥

नारायणादन्यत्र धर्मादिवृद्धिरूपेणैव वसामि, न शरीरेणेत्यर्थः । नीटी.

प्रजानां अरक्षकः राजा हन्तव्यः

[5]क्रोशन्त्यो यस्य वै राष्ट्राद्ध्रियन्ते तरसा स्त्रियः ।
क्रोशतां पतिपुत्राणां मृतोऽसौ न च जीवति ॥

(१) भा. १३।११।१७; भामु. १३।११।१८ प्रथमार्धे ( यस्मिन् जनो हव्यभुजं जुहोति गोब्राह्मणं चार्चति देवताश्च । ).

(२) भा. १३।११।१८; भामु. १३।११।१९ द्विजेषु नित्यं (सदा द्विजेषु).

(३) भा. १३।११।१९; भामु. १३।११।२०.

(४) भा. १३।११।२०; भामु. १३।११।२१ यस्मिंस्तु भावेन व ( भावेन यस्मिन्निव ).

(५) भामु. १३।६१।३१.

[1]अरक्षितारं हर्तारं विलोप्तारमदायकम् ।
तं स्म राजकलिं हन्युः प्रजाः संभूय निर्घृणम् ॥

[2]अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः ।
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः ॥

[3]पापं कुर्वन्ति यत्किंचित्प्रजा राज्ञा ह्यरक्षिताः ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥

[4]अप्याहुः सर्वमेवेति भूयोऽर्धमिति निश्चयः ।
चतुर्थं मतमस्माकं मनोः श्रुत्वाऽनुशासनम् ॥

सर्वं पापमेति राजानम् । नीटी.

[5]शुभं वा यत्प्रकुर्वन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य पुण्यस्य राजा चाऽऽप्नोति भारत ॥

[6]जीवन्तं त्वाऽनुजीवन्तु प्रजाः सर्वा युधिष्ठिर ।
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ॥

[7]कुबेरमिव रक्षांसि शतक्रतुमिवामराः ।
ज्ञातयस्त्वाऽनुजीवन्तु सुहृदश्च परंतप ॥

धार्मिकः अधार्मिकश्च राजा

[8]अभिषिच्यैव नृपतिं श्रावयेदिममागमम् ।
यथा श्रुत्वा महीं दद्यान्नाऽऽदद्यात्साधुतश्च ताम् ॥

(१) भा. १३।६०।१९ ; भामु. १३।६१।३२ दायकम् (नायकम्) तं स्म (तं वै) संभूय (संनह्य).

(२) भा. १३।६०।२० ; भामु. १३।६१।३३.

(३) भा. १३।६०।२१ ; भामु. १३।६१।३४ भारत विन्दति (विन्दति भारत).

(४) भा. १३।६०।२२ ; भामु. १३।६१।३५ अप्याहुः (अथाहुः) मेवेति (मेवैति).

(५) भा. १३।६०।२३ ; भामु. १३।६१।३६ यत्प्र (यच्च).

(६) भा. १३।६०।२४ ; भामु. १३।६१।३७ व द्विजाः (वाण्डजाः).

(७) भा. १३।६०।२५ ; भामु. १३।६१।३८.

(८) भा. १३।६१।३६ ; भामु. १३।६२।३९.

[1]सोऽयं कृत्स्नो ब्राह्मणार्थो राजार्थश्चाप्यसंशयम् ।
राजा हि धर्मकुशलः प्रथमं भूतिलक्षणम् ॥

भूतिलक्षणं ऐश्वर्यसूचकम् । नीटी.

[2]अथ येषामधर्मज्ञो राजा भवति नास्तिकः ।
न ते सुखं प्रबुध्यन्ते न सुखं प्रस्वपन्ति च ॥

[3]सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः ।
योगक्षेमा हि बहवो राष्ट्रं नास्याऽऽविशन्ति तत् ॥

अथ येषां पुनः प्राज्ञो राजा भवति धार्मिकः ।
सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च ॥

[4]तस्य राज्ञः शुभैरार्यैः कर्मभिर्निर्वृताः प्रजाः ।
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः ॥

## वाल्मीकिरामायणम्

धर्मव्यवस्थार्थं क्षत्रियाः

[5]सृष्टा धर्मव्यवस्थार्थं तपस्यारक्षणाय च ।
क्षत्रियाः क्षत्रियश्रेष्ठ तथा भवितुमर्हसि ॥

नान्यो धर्मः क्षत्रियाणां रक्षणात्तात इष्यते ।
स्वधर्मं प्रतिपद्यस्व न धर्मं हातुमर्हसि ॥

रामाय दशरथोपदिष्टा राजनीतिः

[6]कामं च त्वं प्रकृत्यैव विनीतो गुणवानसि ।
गुणवत्त्वात्पितृस्नेहात्पुत्र वक्ष्यामि ते हितम् ॥

(१) भा. १३।६१।३७ ; भामु. १३।६२।४० शयम् (शयः).

(२) भा. १३।६१।३८ ; भामु. १३।६२।४१ बुध्यन्ते (बुध्यन्ति).

(३) भा. १३।६१।३९-४० ; भामु. १३।६२।४२-४३.

(४) भा. १३।६१।४१ ; भामु. १३।६२।४४ भैरार्यैः (भै राज्यैः) ताः प्रजाः (ता नराः).

(५) वारा. १।१९।८-९ ; वाराकु. १।२१।७ (स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ।) एतावदेव.

(६) वारा. २।५।२७ ; वाराकु. २।३।४१ कामं च त्वं (कामतस्त्वं) गुणवत्त्वात्पितृ (गुणवत्यपि तु).

¹भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ।
कामक्रोधसमुत्थानि त्यज त्वं व्यसनानि च ॥
²परोक्षयाऽपि संबुद्ध्या राम प्रत्यक्षया तथा ।
परमां प्रकृतिं दृष्ट्वा परिपाल्याः प्रजास्त्वया ॥
³निर्ममो निरहंकारो भूत्वा राम गुणान्वितः ।
ततः पालय पुत्रेमाः प्रजाः पुत्रानिवौरसान् ॥
योधानमात्यान् हस्त्यश्वान् कोषं चावेक्ष्य यत्नवान् ।
तथा मित्राणि मध्यस्थानमित्रांश्चानुरञ्जय ॥
⁴कोष्ठागारायुधागारः कृत्वा सन्निचयान् बहून् ॥
⁵तुष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ।
तस्य नन्दन्ति मित्राणि लब्ध्वाऽमृतमिवामराः ॥
⁶तस्मात्पुत्र त्वमात्मानं नियम्यैवं समाचर ॥

निषादाधिपतिगुहोक्ता राजनीतिः

⁷सोऽब्रवीद्भरतं पृष्टो निषादाधिपतिर्गुहः ।
श्रूयतामिति वाक्यज्ञो गृहीत्वा बाष्पमाहृतम् ॥
⁸अन्नमुच्चावचं भक्ष्यं लेह्यं चोष्यं तथैव च ।
रामायाभ्यवहारार्थं बहुशो दर्शितं मया ॥

¹तत्प्रीत्या च मयाऽऽनीतं प्रणयेन च राघवः ।
सर्वं न प्रतिजग्राह क्षात्रं धर्ममनुस्मरन् ॥
²आह च स्म स धर्मात्मा चलितं मामधोमुखम् ।
अस्माभिर्न प्रतिग्राह्यं देयमेव तु सर्वशः ॥
³चापं चोद्यम्य योद्धव्यमेतत्क्षत्रभृतां व्रतम् ॥
⁴इति तेन वयं राजन्ननुनीता महात्मना ॥

संक्षेपतः संपूर्णा राजनीतिः ( प्रश्नव्याजेन कृतः राजनीत्युपदेशः रामेण भरताय )

⁵कच्चिद्दशरथो राजा कुशली सत्यसंगरः ।
राजसूयाश्वमेधानामाहर्ता धर्मतत्त्ववित् ॥
⁶स कच्चिद्ब्राह्मणो विद्वान् धर्मनित्यस्तपोधनः ।
इक्ष्वाकूणामुपाध्यायो यथावत्तात पूज्यते ॥
⁷तात कच्चिच्च कौसल्या सुमित्रा च तपस्विनी ।
सुखिता कच्चिदार्या च देवी नन्दति कैकयी ॥
⁸कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुद्रष्टा सत्कृतस्ते पुरोहितः ॥

---

(१) वारा. २।५।२८; वाराकु. २।३।४२ त्यज त्वं (त्यजेथा).

(२) वारा. २।५।२९ ; वाराकु. २।३।४३ (परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया तथा । अमात्यप्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जय ॥).

(३) वारा. २।५।३०–३१.

(४) वाराकु. २।३।४४.

(५) वारा. २।५।३२ ; वाराकु. २।३।४४–४५.

(६) वारा. २।५।३३ ; वाराकु. २।३।४५ त्पुत्र त्वमात्मानं (त्वमपि चाऽऽत्मानं).

(७) वारा. २।९९।१५ ; वाराकु. २।८७।१४ पृष्टो (हृष्टो) उत्तरार्धे (यद्विधं प्रतिपेदे च रामे प्रियहितेऽतिथौ ॥).

(८) वारा. २।९९।१६ ; वाराकु. २।८७।१५ भक्ष्यं लेह्यं चोष्यं तथैव (भक्ष्याः फलानि विविधानि) बहुशो दर्शितं (बहु चोपहृतं).

(१) वारा. २।९९।१७ ; वाराकु. २।८७।१६ (तत्सर्वं प्रत्यनुज्ञासीद्रामः सत्यपराक्रमः । न तु तत्प्रत्यगृह्णात्स क्षत्रधर्ममनुस्मरन् ॥ ).

(२) वारा. २।९९।१८ ; वाराकु. २।८७।१७ उत्तरार्धे (न ह्यस्माभिः प्रतिग्राह्यं सखे देयं तु सर्वदा ।) उत्त.

(३) वारा. २।९९।१९.

(४) वाराकु. २।८७।१७.

(५) वारा. २।१११४।४ ; वाराकु. २।१००।९ तत्त्ववित् (निश्चयः).

(६) वारा. २।११४।५ ; वाराकु. २।१००।१० त्यस्तपोधनः (त्यो महाद्युतिः).

(७) वारा. २।११४।६ ; वाराकु. २।१००।११ तात कच्चिच्च ( सा तात कच्चित् ) तपस्विनी ( प्रजावती ) सुखिता (सुखिनी).

(८) वारा. २।११४।७ ; वाराकु. २।१००।१२ प्रष्टा (द्रष्टा).

[1]कच्चिदग्निषु ते युक्तो ब्राह्मणो मतिमानृजुः ।
हुतं च होष्यमाणं च काले वेदयते सदा ॥
[2]कच्चिद्देवान् पितॄन् मातॄर्गुरून् पितृसमानपि ।
वृद्धांश्च तात वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे ॥
[3]इष्वस्त्रे परमाचार्यमर्थशास्त्रविशारदम् ।
सुधन्वानमुपाध्यायं कच्चित्त्वं नावमन्यसे ॥
[4]कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः ।
कृतज्ञाश्चोर्जितज्ञाना भक्तास्ते तात मन्त्रिणः ॥
[5]मन्त्रमूलो हि विजयो राज्ञां भवति राघव ।
सुसंवृतो मन्त्रिवरैरमात्यैर्मन्त्रकोविदैः ॥
[6]कच्चिन्निद्रावशं नैषि कच्चित्काले विबुध्यसे ।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् ॥
[7]कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।
कच्चिन्नामन्त्रितो मन्त्रो न राज्यमनुधावति ॥
[8]कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयम् ।
क्षिप्रमारभसे कर्तुं न विघ्नयसि राघव ॥

(१) वारा. २।११४।८ ; वाराकु. २।१००।१३ ब्राह्मणो (विधिज्ञो).

(२) वाराकु. २।१००।१४.

(३) वारा. २।११४।९ ; वाराकु. २।१००।१५ इष्वस्त्रे परमाचार्यं ( इष्वस्त्रवरसंपन्न ) नावमन्यसे ( तात मन्यसे ).

(४) वारा. २।११४।१० ; वाराकु. २।१००।१६ कृतज्ञाश्चोर्जितज्ञाना भक्ता ( कुलीनाश्चेङ्गितज्ञाश्च कृता ).

(५) वारा. २।११४।११ ; वाराकु. २।१००।१७ मन्त्रमूलो हि विजयो ( मन्त्रो विजयमूलं हि ) मन्त्रिवरै ( मन्त्रधरै ) त्यैर्मन्त्रको ( त्यैः शास्त्रको ).

(६) वारा. २।११४।१२ ; वाराकु. २।१००।१८ नैषि ( नैषीः ) विबुध्यसे ( प्रबुध्यसे ) मर्थवित् ( नैपुणम् ).

(७) वारा. २।११४।१३ ; वाराकु. २।१००।१९ न्नामन्त्रितो ( त्ते मन्त्रितो ) न राज्यमनु ( राष्ट्रं न परि ).

(८) वारा. २।११४।१४ ; वाराकु. २।१००।२० विघ्नयसि ( दीर्घयसि ).



[1]कच्चिन्न क्रियमाणानि कच्चित्तत्प्रवणानि वा ।
विदुस्ते सर्वकार्याणि कर्तव्यानि नरेश्वराः ॥
[2]कच्चिन्न राज्यहेतोर्वा चयापचयशङ्किना ।
त्वया चाप्यथवाऽमात्यैर्वध्यन्ते तात मानवाः ॥
[3]कच्चिन्मूर्खसहस्रेणाप्येकं क्रीणासि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु ब्रूयान्निःश्रेयसं वचः ॥
[4]सहस्रैरपि मूर्खाणां यो नृपः पर्युपास्यते ।
तथैवाप्ययुतैस्तस्य नास्ति तेषु सहायता ॥
[5]एको ह्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥
[6]कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ।
जघन्याश्च जघन्येषु भृत्यास्ते तात योजिताः ॥
[7]कच्चित्कृषिकरास्तात सुनिविष्टा जनाकुलाः ।
देवस्थानैः प्रपाभिश्च तडागैश्चोपसेविताः ॥

(१) वारा. २।११४।१५ ; वाराकु. २।१००।२१ ( कच्चित्ते सुकृतान्येव कृतरूपाणि वा पुनः । विदुस्ते सर्वकार्याणि न कर्तव्यानि पार्थिवाः ॥ ).

(२) वारा. २।११४।१६ ; वाराकु. २।१००।२२ ( कच्चिन्न तर्कैर्युक्त्या वा ये चाप्यपरिकीर्तिताः । त्वया वा तव वाऽमात्यैर्बुध्यते तात मन्त्रितम् ॥ ).

(३) वारा. २।११४।१७ ; वाराकु. २।१००।२३ पूर्वार्धे ( कच्चित् सहस्रान्मूर्खाणामेकमिच्छसि पण्डितम् । ) ब्रूया ( कुर्या ) वचः ( महत् ).

(४) वारा. २।११४।१८ ; वाराकु. २।१००।२४ ( सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः । अथवाऽप्ययुतान्येव नास्ति तेषु सहायता ॥ ).

(५) वारा. २।११४।१९ ; वाराकु. २।१००।२५ एको ह्य ( एकोऽप्य ) दान्तो ( दक्षो ) राजपुत्रं ( राजमात्रं ).

(६) वारा. २।११४।२० ; वाराकु. २।१००।२६ न्याश्च ( न्यास्तु ) त्यास्ते तात ( त्याः कर्मसु ).

(७) वारा. २।११४।२१ ; वाराकु. २।१००।४४ पूर्वार्धे ( कच्चिच्चित्यशतैर्जुष्टः सुनिविष्टजनाकुलः । ) तडा ( तटा ) सेविताः ( शोभितः ).

[1]प्रहृष्टनररनारीकः समाजोत्सवभूषितः ।
सुकृष्टसोमः पशुमान् विहिंसापरिवर्जितः ॥
[2]अदेवमातृको रम्यः श्वापदैः परिवर्जितः ।
परित्यक्तो भयैः सर्वैः खनिभिश्चोपशोभितः ॥
[3]अदेवद्रोहकः कच्चिदापद्भिश्चैव वर्जितः ।
कच्चिज्जनपदः स्फीतः सुखं वसति राघव ॥
[4]प्रहृष्टनरनारीकाः सुनिरुद्विग्नगोकुलाः ।
कच्चित्ते निरता वैश्याः कृषिगोरक्ष्यकर्मसु ॥
[5]तेषां गुप्तिपरीहारैः कच्चित्ते भरणं कृतम् ॥
[6]रक्ष्या हि राज्ञा धर्मेण सर्वे विषयवासिनः ॥
[7]कच्चित्प्रियाः समयसि कच्चित्ताश्च सुरक्षिताः ।
कच्चिन्न श्रद्दधास्यासां कच्चिद् गुह्यं न भाषसे ॥
[8]कच्चिन्नागवनं गुह्यं कैकेयी सुप्रजास्त्वया ।
कच्चिदुन्नतदन्तानां कुञ्जराणां न तृप्यसे ॥
[9]कच्चित्सभार्यो रमसे कच्चित्काले विबुध्यसे ।
कच्चिच्च पररात्रेषु धर्मार्थे विप्रबुध्यसे ॥

(१) वारा. २।११४।२२ ; वाराकु. २।१००।४५ भूषितः ( शोभितः ) सोमः ( सीमा ) विहिंसा ( हिं साभिः ).

(२) वाराकु. २।१००।४६.

(३) वारा. २।११४।२३; वाराकु. २।१००।४७ पूर्वार्धे (विवर्जितो नरैः पापैर्मम पूर्वैः सुरक्षितः ।) राघव (राघवः).

(४) वारा. २।११४।२४ ; वाराकु. २।१००।४८ ( कच्चित्ते दयिताः सर्वे कृषिगोरक्षजीविनः । वार्तायां संश्रितस्तात लोको हि सुखमेधते ॥ ).

(५) वाराकु. २।१००।४९.

(६) वारा. २।११४।२५ ; वाराकु. २।१००।४९.

(७) वारा. २।११४।२६ ; वाराकु. २।१००।५० त्प्रियाः समयसि ( त्स्त्रियः सान्त्वयसि ).

(८) वारा. २।११४।२७ ; वाराकु. २।१००।५१ ( कच्चिन्नागवनं गुप्तं कच्चित्ते सन्ति धेनुकाः । कच्चिन्न गणिकाश्वानां कुञ्जराणां च तृप्यसि ॥ ).

(९) वारा. २।११४।२८–२९.

कच्चित्सङ्ग्रामनीतिज्ञः शूरस्ते वाहिनीपतिः ।
असंहार्योऽनुरक्तो हि लोको नित्यं च तिष्ठति ॥
[1]कच्चिन्न लोकायतिकान् ब्राह्मणानुपसेवसे ।
अनर्थकुशला ह्येते मूढाः पण्डितमानिनः ॥
[2]शास्त्रेष्वन्येषु मुख्येषु विद्यमानेषु दुर्बुधाः ।
बुद्धिमान्वीक्षिकीं प्राप्य न निन्दां वर्धयन्ति ते ॥
[3]कच्चिद्दर्शयसे नित्यं मनुष्यान् समलंकृतान् ।
उत्थायोत्थाय पूर्वाह्ने मुक्त्वा च विदितं जनम् ॥
[4]कच्चित्काल्ये च सायं च तवाऽऽसीनस्य चाग्रतः ।
पिबन्ति मदिरां नागा भुञ्जते भोजनानि च ॥
कच्चित्पितरि सद्वृत्तिं वर्तसे पुरुषर्षभ ।
पितामहानामपि वा वर्तसे तुल्यगौरवः ॥
[5]अमात्यानुपधातीतान् पितृपैतामहान् शुचीन् ।
ज्येष्ठान् ज्येष्ठेषु कच्चिच्च नियोजयसि कर्मसु ॥
[6]कच्चिद्भक्ष्यं तथा भोज्यमेको नादसि राघव ।
कच्चिदाशंसमानेभ्यो भ्रातृभ्यः संप्रयच्छसि ॥
[7]कच्चिदश्वांश्च नागांश्च भोजयन्ति तवाग्रतः ।
शस्त्रकर्मकृतो वैद्या दक्षाः कुशलमानिनः ॥

(१) वारा. २।११४।३० कच्चिन्न ( कच्चिच्च ); वाराकु. २।१००।३९ णानुप (णांस्तात) मूढाः (बालाः).

(२) वारा. २।११४।३१ ; वाराकु. २।१००।४० शास्त्रेष्वन्येषु ( धर्मशास्त्रेषु ) न निन्दां वर्धयन्ति ( निरर्थं प्रवदन्ति ).

(३) वारा. २।११४।३२ ; वाराकु. २।१००।५२ मनुष्यान् समलंकृतान् ( मनुष्याणां विभूषितम् ) मुक्त्वा च विदितं जनम् ( राजपुत्र महापथे ).

(४) वारा. २।११४।३३–३४.

(५) वारा. २।११४।३५ ; वाराकु. २।१००।२७ ज्येष्ठान् ज्येष्ठेषु कच्चिच्च ( श्रेष्ठाञ्छ्रेष्ठेषु कच्चित्त्वं ).

(६) वारा. २।११४।३६; वाराकु. २।१००।७६ द्भक्ष्यं तथा (त्स्वादुकृतं) नादसि (नाश्नासि) भ्रातृभ्यः (मित्रेभ्यः).

(७) वारा. २।११४।३७–३८.

कच्चित्ते वाहनं गुप्तं वञ्चका न हृभन्ति (?) ते ।
कच्चिन्न राष्ट्रे वर्तन्ते पररत्नापहारिणः ॥

[1]कच्चिन्नोग्रेण दण्डेन भृशमुद्वेजितप्रजम् ।
राष्ट्रं तवानुजानन्ति मन्त्रिणः कैकयीसुत ॥

[2]कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा ।
उग्रं प्रतिग्रहीतारं कामयानमिव स्त्रियः ॥

[3]ये बालिशा ये च दक्षा ये मूढा ये च पण्डिताः ।
दृष्ट्वा तं जीवितं तेषां कच्चित्ते ते सुरक्षिताः ॥

[4]उपायकुशलं वैद्यं भृत्यं संभाषणे रतम् ।
शूरमैश्वर्यकामं च यो न युङ्क्ते स वर्धते ॥

[5]कच्चित्ते बलिनो मुख्याः सर्वयुद्धविशारदाः ।
दृष्टापदानविक्रान्तास्त्वया सत्कृत्य मानिताः ॥

[6]कच्चिद्धृष्टश्च शूरश्च धृतिमान्मतिमाञ्शुचिः ।
कुलीनश्चाप्रमत्तश्च दक्षः सेनापतिस्तव ॥

[7]कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ।
संप्राप्तकालं दातव्यं ददासि न विशङ्कसे ॥

(१) वाराकु. २।१००।२८.

(२) वारा. २।११४।३९ ; वाराकु. २।१००।२९ उग्रं प्र ( उग्रप ).

(३) वारा. २।११४।४०.

(४) वारा. २।११४।४१ ; वाराकु. २।१००।३० भृत्यं सभाषणे ( भृत्यसंदूषणे ) युङ्क्ते स वर्धते ( हन्ति स वध्यते ).

(५) वारा. २।११४।४२ ; वाराकु. २।१००।३२ पूर्वार्धे ( बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः । ) दानवि ( दाना वि ).

(६) वारा. २।११४।४३ ; वाराकु. २।१००।३१ धृतिमान् मतिमाञ् ( मतिमान् धृतिमाञ् ) प्रमत्त ( नुरक्त ) तिस्तव ( तिः कृतः ).

(७) वारा. २।११४।४४ ; वाराकु. २।१००।३३ विशङ्कसे ( विलम्बसे ).

[1]कालातिक्रमणादेव भक्त्यदातव्यवर्जिताः ।
भर्तुरप्यपकुर्वन्ति सोऽनर्थः सुमहान् भवेत् ॥

[2]कच्चित्पूर्वानुरक्तास्ते कुलपुत्राः प्रधानतः ।
आहवेषु प्रियान् प्राणान् सन्त्यजन्ति समाहिताः ॥

[3]कच्चिद्दानवशो विद्वान् दक्षिणः प्रतिभानवान् ।
यथोक्तवादी दूतस्ते कृतो भरत पण्डितः ॥

[4]कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥

[5]कच्चित्त्वं युध्यतामग्रे प्रतिपन्नश्च सर्वशः ।
सुदुर्बलान् वारयंश्च वर्तसे रिपुसूदन ॥

[6]वीरैरध्युषितां नित्यमस्माकं तात पूर्वजैः ।
सत्यनाम्नीं दृढद्वारां हस्त्यश्वरथसंकुलाम् ॥

[7]ब्राह्मणैः क्षत्रियैर्वैश्यै रतैस्तात स्वकर्मसु ।
जितेन्द्रियैर्महोत्साहैर्दृढवीर्यैः सहस्रदैः ॥

[8]प्रासादैर्विविधाकारैर्भृतां दिव्यैरलंकृताम् ।
कच्चिच्च मुदितां स्फीतामयोध्यां परिरक्षसि ॥

(१) वारा. २।११४।४५ ; वाराकु. २।१००।३४ ( कालातिक्रमणाच्चैव भक्तवेतनयोर्भृताः । भर्तुः कुप्यन्ति दुष्यन्ति सोऽनर्थः सुमहान् स्मृतः ॥ ).

(२) वारा. २।११४।४६ ; वाराकु. २।१००।३५ त्पूर्वानुरक्तास्ते ( त्सर्वेऽनुरक्तास्त्वां ) आहवेषु प्रियान् प्राणान् ( कच्चित् प्राणांस्तवार्थेषु ).

(३) वारा. २।११४।४७ ; वाराकु. २।१००।३६ द्दानवशो ( ज्ज्ञानपदो ).

(४) वारा. २।११४।४८ ; वाराकु. २।१००।३७.

(५) वारा. २।११४।४९ ; वाराकु. २।१००।३८ ( कच्चिद् व्यपास्तानहितान् प्रतियातांश्च सर्वदा । दुर्बलाननवज्ञाय वर्तसे रिपुसूदन ॥ ).

(६) वारा. २।११४।५० ; वाराकु. २।१००।४१ नित्य ( पूर्वं ) पूर्वजैः ( पूर्वकैः ) नाम्नीं ( नामां ).

(७) वारा. २।११४।५१ ; वाराकु. २।१००।४२ ( ब्राह्मणैः क्षत्रियैर्वैश्यैः स्वकर्मनिरतैः सदा । जितेन्द्रियैर्महोत्साहैर्वृतामार्यैः सहस्रशः ॥ ).

(८) वारा. २।११४।५२ ; वाराकु. २।१००।४३ र्भृतां दिव्यैरलंकृताम् ( र्वृतां वैद्यजनाकुलाम् ) च्च मु ( त्सुमु ).

[1]कच्चिन्मनुष्यशार्दूल मनुष्यान् समलंकृतान् ।
उत्थायोत्थाय पूर्वाह्णे राजपुत्राभिवीक्षसे ॥

[2]कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्कया ।
सर्वे वा पुनरुत्सृष्टा मध्यमेवात्र कारणम् ॥

[3]कच्चित्सदा ते दुर्गाणि धनधान्यायुधादिकैः ।
यन्त्रैश्च परिपूर्णानि तथा शिल्पैर्धनुर्धरैः ॥

[4]आयस्ते विपुलः कच्चित् कच्चित्स्वल्पतरं व्ययः ।
अपात्रेषु न ते कच्चित् कोषो गच्छति राघव ॥

[5]देवतार्थेषु पितृषु ब्राह्मणाभ्यागतेषु च ।
योधेषु मित्रवर्गेषु कच्चिद् गच्छति ते व्ययः ॥

[6]कच्चिदार्यो विशुद्धात्मा क्षपितश्चोरुकर्मणा ।
अदृष्टशास्त्रकुशलैर्नाऽऽयं ध्यायति मानवः ॥

[7]गृहीतलोक आरक्षः कशलो दृष्टकारणः ।
कच्चिन्न मुच्यते चौरो धनलोभान्नरर्षभ ॥

[8]व्यसने कच्चिदाढ्यस्य दुर्गतस्य च राघव ।
अर्थं विरागाः पश्यन्ति तवामात्या बहुश्रुताः ॥

[9]कच्चिच्चाविदितार्थेषु बलिनो दुर्बलस्य च ।
अपक्षपातात्पश्यन्ति कार्येष्वधिकृता नराः ॥

(१) वारा. २।११४।५३.

(२) वाराकु. २।१००।५३.

(३) वारा. २।११४।५४ ; वाराकु. २।१००।५४ त्सदा ते (त्सर्वाणि) युधादिकैः (युधोदकैः) शिल्पैर्ध (शिल्पिध).

(४) वारा. २।११४।५५ ; वाराकु. २।१००।५५ त्स्वल्पतरं (दल्पतरो).

(५) वारा. २।११४।५६ ; वाराकु. २।१००।५६ देवतार्थेषु पितृषु (देवतार्थे च पित्रर्थे).

(६) वारा. २।११४।५७ ; वाराकु. २।१००।५७ क्षपितश्चोरु (ऽऽक्षारितश्चोर) उत्तरार्धे (अपृष्टः शास्त्रकुशलैर्न लोभाद्बध्यते शुचिः ॥).

(७) वारा. २।११४।५८ ; वाराकु. २।१००।५८ पूर्वार्धे (गृहीतश्चैव पृष्टश्च काले दृष्टः सकारणः ।) चौरो (चोरो).

(८) वाराकु. २।१००।५९.

(९) वारा. २।११४।५९.

[1]यानि मिथ्याऽभिशस्तानां पतन्त्यश्रूणि रोदताम् ।
तानि पुत्रपशून् घ्नन्ति तेषां मिथ्याऽभिशंसिनाम् ॥

[2]कच्चिद् वृद्धांश्च बालांश्च मुख्यान् वैद्यांश्च संमतान् ।
दानेन वचसा चैव यथावच्चार्चसेऽनघ ॥

[3]कच्चिद् गुरूंश्च वृद्धांश्च तापसान् देवतातिथीन् ।
पूज्यांश्च सर्वान् सिद्धार्थान् ब्राह्मणांश्च नमस्यसि ॥

[4]कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः ।
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ॥

[5]कच्चिदर्थं च धर्मं च कामं च वदतां वर ।
विभज्य काले कालज्ञ सर्वान् भरत सेवसे ॥

[6]कच्चित्ते ब्राह्मणाः सर्वे धर्मकामार्थकोविदाः ।
न शोचन्ति महाप्राज्ञाः पौरजानपदैः सह ॥

[7]नास्तिक्यमनृतं क्रोधः प्रमादो दीर्घसूत्रता ।
अदर्शनं ज्ञानवतामालस्यं पापवृत्तिता ॥

(१) वारा. २।११४।६० ; वाराकु. २।१००।६० श्रूणि रोदताम् (स्त्राणि राघव) तेषां मिथ्याऽभिशंसिनाम् (प्रीत्यर्थमनुशासतः).

(२) वारा. २।११४।६१ ; वाराकु. २।१००।६१ मुख्यान् वैद्यांश्च संमतान् (वैद्यमुख्यांश्च राघव) उत्तरार्धे (दानेन मनसा वाचा त्रिभिरेतैर्बुभूषसे ॥).

(३) वारा. २।११४।६२ ; वाराकु. २।१००।६२ पूज्यांश्च (चैत्यांश्च).

(४) वारा. २।११४।६३ ; वाराकु. २।१००।६३ उत्तरार्धे (उभौ वा प्रीतिलोभेन कामेन च न बाधसे ॥).

(५) वारा. २।११४।६४ ; वाराकु. २।१००।६४ वदतां (जयतां) भरत (वरद).

(६) वारा. २।११४।६५ ; वाराकु. २।१००।६५ सर्वे धर्मकामार्थ (शर्म सर्वशास्त्रार्थ) न शोचन्ति महाप्राज्ञाः (आशंसन्ते महाप्राज्ञ).

(७) वारा. २।११४।६६ ; वाराकु. २।१००।६६ क्रोधः प्रमादो (क्रोधं प्रमादं) सूत्रता (सूत्रताम्) पापवृत्तिता (पञ्चवृत्तिताम्).

[1]एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम् ।
निश्चितानां च नाऽऽरम्भो मन्त्रस्यापरिरक्षणम् ॥

[2]मङ्गलानामयोगश्च प्रीत्युत्सर्गश्च सर्वशः ।
कच्चित्त्वं वर्जयस्येतान् राजदोषान् चतुर्दश ।
यैराविष्टः श्रियं क्षिप्रं नाशयेत्पृथिवीपतिः ॥

[3]दश पञ्च चतुर्वर्गान् सप्तवर्गं च तत्त्वतः ।
अष्टवर्गं च त्रिवर्गं विद्यास्तिस्रश्च राघव ॥

इन्द्रियाणां जयं बुद्ध्वा षाड्गुण्यं दैवमानुषम् ।
कृत्यं विंशतिवर्गं च तथा प्रकृतिमण्डलम् ॥

यात्रादण्डविधानं च द्वियोनी संधिविग्रहौ ।
कच्चिदेतान् महाप्राज्ञ यथावदनुमन्यसे ॥

मन्त्रिभिस्त्वं यथोद्दिष्टैश्चतुर्भिस्त्रिभिरेव वा ।
कच्चित्समस्तैर्व्यस्तैश्च मन्त्रं मन्त्रयसे मिथः ॥

कच्चित्ते सफला वेदाः कच्चित्ते सफलाः क्रियाः ।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥

कच्चिदेषैव ते बुद्धिर्यथोक्ता मम राघव ।
आयुष्या च यशस्या च धर्मकामार्थसंहिता ॥

यां वृत्तिं वर्तते तातो यां च नः प्रपितामहाः ।
तां वृत्तिं वर्तसे कच्चिद्या च सत्पथगा शुभा ॥

[4]राजा तु धर्मेण हि पालयित्वा
महामतिर्दण्डधरः प्रजानाम् ।
अवाप्य कृत्स्नां वसुधां यथाव-
दितश्च्युतः स्वर्गमुपैति विद्वान् ॥

---

(१) वारा. २।११४।६७ पूर्वार्धे (एकं चित्तमर्थानाम-नर्थश्चोपमन्त्रणम्।) ; वाराकु. २।१००।६७ नां च नारम्भो (नामनारम्भं).

(२) वारा. २।११४।६८; वाराकु. २।१००।६८ प्रथमार्धे (मङ्गलस्याप्रयोगं च प्रत्युत्थानं च सर्वतः।), तृतीयार्धं नास्ति ।

(३) वाराकु. २।१००।६९ – ७५.

(४) वाराकु. २।१००।७७.

शूर्पणखोक्ता राजनीतिः

[1]ततः शूर्पणखा दीना रावणं लोकरावणम् ।
अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥

[2]प्रसक्तः कामभोगेषु स्वैरवृत्तो निरङ्कुशः ।
समुत्पन्नं भयं घोरं बोद्धव्यं नावबुध्यसे ॥

[3]प्रसक्तं कामभोगेषु स्वैरवृत्तं महीपतिम् ।
लोका न बहु मन्यन्ते श्मशानाग्निमिव प्रजाः ॥

[4]स्वयं कार्याणि यः काले नानुतिष्ठति भूमिपः ।
तस्याऽऽत्मा सह कार्येण तेनैवाऽऽशु विनश्यति ॥

[5]अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् ।
वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥

[6]ये तु नेच्छन्ति विषयं पराधीना नराधिपाः ।
ते न भग्नाः प्रकाशन्ते गिरयः सागरेष्विव ॥

[7]आत्मवद्भिन्नगेहस्त्वं देवदानवराक्षसैः ।
अयुक्तचारश्चपलः कथं राजा भविष्यसि ॥

[8]त्वं तु बालस्वभावश्च बुद्धिहीनश्च राक्षस ।
ज्ञातव्यं तु न जानीषे कथं राजा भविष्यसि ॥

---

(१) वारा. ३।३७।१ ; वाराकु. ३।३३।१.

(२) वारा. ३।३७।२ ; वाराकु. ३।३३।२ प्रसक्तः (प्रमत्तः).

(३) वारा. ३।३७।३ ; वाराकु. ३।३३।३ पूर्वार्धे (सक्तं ग्राम्येषु भोगेषु कामवृत्तं महीपतिम्।) लोका (लुब्धं).

(४) वारा. ३।३७।४ ; वाराकु. ३।३३।४ भूमिपः (पार्थिवः) उत्तरार्धे (स तु वै सह राज्येन तैश्च कार्यैर्विनश्यति ॥).

(५) वारा. ३।३७।५ ; वाराकु. ३।३३।५.

(६) वारा. ३।३७।६ ; वाराकु. ३।३३।६ तु नेच्छन्ति विषयं परा (न रक्षन्ति विषयमस्वा) भग्नाः (वृद्ध्या) ष्विव (यथा).

(७) वारा. ३।३७।७ ; वाराकु. ३।३३।७ पूर्वार्धे (आत्मवद्भिर्विगृह्य त्वं देवगन्धर्वदानवैः ।).

(८) वाराकु. ३।३३।८.

[1]येषां चारश्च कोशश्च नयश्च जयतां वर ।
अस्वाधीना नरेन्द्रा ये प्राकृतैस्ते नरैः समाः ॥

[2]यस्मात्पश्यन्ति दूरस्थाः सर्वानर्थान् नराधिपाः ।
चारेण तस्मादुच्यन्ते राजानश्चारचक्षुषः ॥

[3]अयुक्तचारं मन्ये त्वां प्राकृतैः सचिवैर्वृतम् ।
जनस्थानं हतस्थानं यन्मौर्ख्यान्नावबुध्यसे ॥

[4]खरं त्रिशिरसं चैव दूषणं च निपातितम् ॥
न बुध्यसे जनस्थाने शयानाञ्शरपीडितान् ॥

[5]चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
हतान्येकेन रामेण मानुषेण पदातिना ॥

[6]ऋषीणामभयं दत्तं कृताः क्षेमाश्च दण्डकाः ।
धर्षितं च जनस्थानं रामेणाक्लिष्टकर्मणा ॥

[7]त्वं तु लुब्धश्च मत्तश्च पराधीनश्च रावण ।
विषये भयमुत्पन्नं बोद्धव्यं नावबुध्यसे ॥

[8]तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् ।
व्यसने सर्वभूतानि नाभिनन्दन्ति भूमिपम् ॥

---

(१) वारा. ३।३७।८ ; वाराकु. ३।३३।९ नरेन्द्रा ये (नरेन्द्राणां) नरैः (जनैः).

(२) वारा. ३।३७।९ ; वाराकु ३।३३।१० दूरस्थाः (दूरस्थान्) नश्चार (ने दीर्घ).

(३) वारा. ३।३७।१० ; वाराकु. ३।३३।११ उत्तरार्धे (स्वजनं तु जनस्थानं हतं यो नावबुध्यसे ॥).

(४) वारा. ३।३७।११.

(५) वारा. ३।३७।१२ ; वाराकु. ३।३३।१२ भीम (क्रूर) मानुषेण पदातिना (खरश्च सहदूषणः).

(६) वारा. ३।३७।१३ ; वाराकु. ३।३३।१३ कृताः (कृत).

(७) वारा. ३।३७।१४ ; वाराकु. ३।३३।१४ लुब्धश्च मत्तश्च (लुब्धः प्रमत्तश्च) भयमुत्पन्नं बोद्धव्यं (स्वे समुत्पन्नं भयं यो).

(८) वारा. ३।३७।१५ ; वाराकु. ३।३३।१५ नन्दन्ति भूमिपम् (धावन्ति पार्थिवम्).

[1]अभिमानिनमग्राह्यमात्मसंभावितं नरम् ।
क्रोधनं चैव नृपतिं व्यसने घ्नन्ति मानवाः ॥

[2]नानुतिष्ठसि कार्याणि भयेषु न बिभेषि च ।
क्षिप्रं राज्याच्च्युतो वीर तृणतुल्यो भविष्यसि ॥

[3]शुष्कैस्तृणैर्भवेत्कार्यमथवा लोष्टपांसुभिः ।
न तु राज्यपरिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥

[4]उपभुक्तं यथा वस्त्रं स्रजोऽपि मृदिता यथा ।
एवं राज्यपरिभ्रष्टः समर्थोऽपि निरर्थकः ॥

[5]अप्रमत्तश्च यो राजा धर्मज्ञो विजितेन्द्रियः ।
कृतज्ञो धर्मशीलश्च स राज्ये तिष्ठते चिरम् ॥

[6]नयनाभ्यां प्रसुप्तो यो जागर्ति नयचक्षुषा ।
त्यक्तक्रोधोऽप्रमादश्च यो नयज्ञः स पार्थिवः ॥

[7]त्वं तु रावण दुर्बुद्धे गुणैरेतैर्विवर्जितः ।
यस्य ते विदितं चारै राक्षसानां महद्भयम् ॥

---

(१) वारा. ३।३७।१६ ; वाराकु. ३।३३।१६ अभि (अति) उत्तरार्धे (क्रोधिनं व्यसने हन्ति स्वजनोऽपि महीपतिम् ॥).

(२) वारा. ३।३७।१७ ; वाराकु. ३।३३।१७ तिष्ठसि (तिष्ठति) बिभेषि (बिभेति) वीर तृणतुल्यो भविष्यसि (दीनस्तृणैस्तुल्यो भविष्यति).

(३) वारा. ३।३७।१८ ; वाराकु. ३।३३।१८ पूर्वार्धे (शुष्कैः काष्ठैर्भवेत्कार्यं लोष्टैरपि च पांसुभिः ।) राज्यप (स्थानात्प).

(४) वारा. ३।३७।१९ ; वाराकु. ३।३३।१९ वस्त्रं स्रजोऽपि (वासः स्रजो वा) राज्य (राज्यात्).

(५) वारा. ३।३७।२० ; वाराकु. ३।३३।२० धर्मज्ञो (सर्वज्ञो) राज्ये (राजा).

(६) वारा. ३।३७।२१ ; वाराकु. ३।३३।२१ यो (ऽपि) उत्तरार्धे (व्यक्तक्रोधप्रसादश्च स राजा पूज्यते जनैः ॥).

(७) वारा. ३।३७।२२ ; वाराकु. ३।३३।२२ दुर्बुद्धे गु (दुर्बुद्धिर्गु) उत्तरार्धे (यस्य तेऽविदितश्चारै रक्षसां सुमहान् वधः ॥).

[1]परामिमर्षी विषयेषु संगतो
न देशकालप्रतिभासतत्त्ववित् ।
अयुक्तबुद्धिर्गुणदोषनिश्चये
विपन्नराज्यो न चिरादवेक्ष्यते ॥

[2]इतीव दोषाः परिकीर्तिता मया
विमृष्य बुद्ध्या क्षणदाचरेश्वर ।
धनेन दर्पेण बलेन चान्वितः
प्रचिन्तयस्वाद्य हिताय रावण ॥

धर्माधर्मौ राजमूलौ

[3]अर्थं वा यदि वा कामं नष्टं शास्त्रेष्वनागतम् ।
व्यवस्यन्ति वरात्मानो धर्मं पौलस्त्य धर्मतः ॥

[4]राजा धर्मस्य कामस्य द्रव्याणां चोत्तमो निधिः ।
धर्मं शुभं वा पापं वा राजमूलं प्रवर्तते ॥

देशकालादिविमर्शः राज्ञः कर्तव्यम्

[5]देशकालौ सहायांश्च स्वशक्तेश्च बलाबले ।
नित्यं संचिन्तयानस्तु नानर्थानुपपद्यते ॥

अविश्वासः सदा कर्तव्यः

[6]राजानो बहुमित्राश्च विश्वासो नैव च क्षमः ।
अरयश्च मनुष्येण विज्ञेयाश्छन्नचारिणः ॥

(१) वारा. ३।३७।२३ ; वाराकु. ३।३३।२३ परामिमर्षी ( परावमन्ता ) प्रतिभास ( प्रविभाग ) दवेक्ष्यते ( द्विपरस्यसे ).

(२) वारा. ३।३७।२४ ; वाराकु. ३।३३।२४ ( इति स्वदोषान् परिकीर्तितांस्तया समीक्ष्य बुद्ध्या क्षणदाचरेश्वरः । धनेन दर्पेण बलेन चान्वितो विचिन्तयामास चिरं स रावणः ॥ ).

(३) वारा. ३।५५।१० ; वाराकु. ३।५०।८ नष्टं ( शिष्टाः ) वरात्मानो ( न राजानो ) स्त्य धर्मतः ( स्त्यनन्दन ).

(४) वारा. ३।५५।११ ; वाराकु. ३।५०।९ धर्मस्य कामस्य ( धर्मश्च कामश्च ) धर्मं ( धर्मः ).

(५) वारा. ३।७८।४२–४३.

(६) वारा. ४।१।११७ ; वाराकु. ४।२।२१–२२ नैव च ( नात्र हि ).

[1]विश्वस्तानामविश्वस्ताश्छिद्रेषु प्रहरन्ति हि ॥

कामवृत्तिस्त्याज्या

[2]नयश्च विनयश्चोभौ निग्रहानुग्रहावपि ।
राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥

पापशासनं राज्ञः कर्तव्यम्

[3]राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

[4]शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ।
राजा त्वशासन्पापस्य तदवाप्नोति किल्बिषम् ॥

धार्मिकः नृशंसश्च राजा

[5]सत्त्वाभिजनसंपन्नः सानुक्रोशो जितेन्द्रियः ।
कृतज्ञः सत्यवादी च राजा लोके महीयते ॥
यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम् ।
मिथ्या प्रतिज्ञां कुरुते को नृशंसतरस्ततः ॥

[6]धर्ममर्थं च कामं च यस्तु काले निषेवते ।
विभज्य सततं वीर स राजा हरिसत्तम ॥
हित्वा धर्मं तथाऽर्थं च कामं यस्तु निषेवते ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥
अमित्राणां वधे युक्तो मित्राणां संग्रहे रतः ।
त्रिवर्गफलभोक्ता तु राजा धर्मेण युज्यते ॥

धर्मार्थकामफलभोक्ता राजा

[7]इह धर्मार्थकामानामवाप्तिः फलमिष्यते ।
तत्रार्थः सह कामेन परीक्ष्यो धर्मचक्षुषा ॥

(१) वारा. ४।१।११८ ; वाराकु. ४।२।२२ श्छिद्रेषु ( रन्ध्रेषु ).

(२) वाराकु. ४।१७।३२.

(३) वारा. ४।१४।१९ भिर्धृतदण्डास्तु ( भिः कृतदण्डाश्च ) निर्मलाः ( विमलाः ) ; वाराकु. ४।१८।३३.

(४) वाराकु. ४।१८।३४.

(५) वारा. ४।२७।७–८ ; वाराकु. ४।३४।७–८.

(६) वाराकु. ४।३८।२१–२३.

(७) वारा. ५।८५।५–६.

परित्यज्य हि यो धर्ममर्थमर्थाय पश्यति ।
कामं वा कामलाभार्थं न स बुद्धेषु बुद्धिमान् ॥

राजनीतिः अधर्मनिवर्तनाय

[1]सम्यक् प्रणीतया नीत्या नाधर्मो विद्यते क्वचित् ।
तस्माद्राजभयात्सर्वे रक्षन्ति स्म परस्परम् ॥

राज्ञः भूतकर्तृत्वनाशकत्वे

[2]राजैव कर्ता भूतानां राजैव च विनाशकः ।
राजा सुप्तेषु जागर्ति राजा पालयते प्रजाः ॥

धर्मलक्षणम्

[3]राजा नीत्यां सुनीतायां धर्मं रक्षति रक्षिता ।
यदा न पालयेद्राजा क्षिप्रं नश्यन्ति वै प्रजाः ॥
[4]राजा कर्ता च गोप्ता च सर्वस्य जगतः पिता ।
राजा कालो युगश्चैव राजा सर्वमिदं जगत् ॥
[5]धारणाद्धर्म इत्याहुर्धर्मेण रञ्जयन्प्रजाः ।
तस्माद्धारण इत्युक्तः स धर्म इति निश्चयः ॥
[6]एष राम परो धर्मो रक्षणात्प्रेत्य चेह च ।
न हि धर्माद्भवेत्किंचिद् दुष्प्रापमिति मे मतिः ॥
दानं दया सतां पूजा व्यवहारेषु चाऽऽर्जवम् ।
एष राजन् परो धर्मः फलवान् प्रेत्य राघव ॥
[7]धर्मेण राष्ट्रं विन्देत धर्मेणैवानुपालयेत् ।
धर्माच्छरण्यतां याति राजा सर्वभयापहः ॥

(१) वारा. ७।६१।१२ ; वाराकु. ७।५९ (प्रक्षिप्तः १)। १२ रक्षन्ति स्म ( रक्षन्तीव ).

(२) वारा. ७।६२।३ ; वाराकु. ७।५९ (प्रक्षिप्तः २) ।४ राजैव च ( राजा चैव ) पालयते ( पालयति ).

(३) वारा. ७।६२।४ ; वाराकु. ७।५९ (प्रक्षिप्तः२) । ६ राजा नीत्यां सुनीतायां ( नीत्या सुनीतया राजा ).

(४) वारा. ७।६२।५ ; वाराकु. ७।५९ (प्रक्षिप्तः २) । ५ युगश्चै ( युगं चै ).

(५) वारा. ७।६२।६ ; वाराकु. ७।५९ ( प्रक्षिप्तः २) । ७–८ ( धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः । यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरम् ॥ धारणाद्धि द्विषां चैव धर्मेणारञ्जयन् प्रजाः । तस्माद्धारणमित्युक्तं स धर्म इति निश्चयः ॥ ).

(६) वारा. ७।६२।७–८ ; वाराकु. ७।५९ (प्रक्षिप्तः२) । ९–१०. श्लोकार्धानि ' एष राजन्०, न हि धर्मात्०, दानं दया०, एष राम० ' इति क्रमेण पठितानि ।

(७) वारा. ७।६२।१२–१३ ; वाराकु. ७।५९ (प्रक्षिप्तः २ ) । १४–१५.

अप्रतिपालनात् राजदोषवृद्धिः

[1]राजदोषा हि वर्धन्ते नृणामप्रतिपालनात् ।
वृत्तहीने हि नृपतावकाले म्रियते जनः ॥
[2]यदा पुरेष्वयुक्तानि राजा जनपदेषु च ।
कुरुते न च रक्षाऽस्ति तदा कालकृतं भयम् ॥
[3]सुव्यक्तं राजदोषो हि भविष्यति न संशयः ।
पुरे जनपदे चैव यथा बालवधो ह्ययम् ॥

राजा प्रजाकृतस्य पापस्य सुकृतस्य च चतुर्थांशभाक्

[4]यो ह्यधर्ममकार्यं वा विषये पार्थिवस्य हि ।
पुरे वा राजशार्दूलं कुरुते दुर्मतिर्नरः ॥
[5]क्षिप्रं स नरकं याति स च राजा न संशयः ।
चतुर्थं तस्य पापस्य भागमश्नाति पार्थिवः ॥
[6]अधीतस्य च तप्तस्य कर्मणः सुकृतस्य च ।
षष्ठं भजति भागं तु प्रजा धर्मेण पालयन् ।
षड्भागस्य च भोक्ताऽसौ रक्षते न प्रजाः कथम् ॥

(१) वारा. ७।६२।१२–१३ ; वाराकु. ७।५९ (प्रक्षिप्तः २ ) । १४–१५.

(२) वारा. ७।७६।१७ ; वाराकु. ७।७३।१६ पूर्वार्धे ( राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः । ) वृत्तहीने हि ( असद्वृत्ते तु ).

(३) वारा. ७।७६।१८ ; वाराकु. ७।७३।१७ यदा ( यद्वा ) राजा ( जना ) कुरुते ( कुर्वते ).

(४) वारा. ७।७६।१९ ; वाराकु. ७।७३।१८ चैव यथा ( चापि ततो ).

(५) वारा. ७।७७।२८ ; वाराकु. ७।७४।३० स्य हि ( स्य तु ) उत्तरार्धे (करोति चाश्रीमूलं तत्पुरे वा दुर्मतिर्नरः ॥).

(६) वारा. ७।७७।२९ ; वाराकु. ७।७४।३० क्षिप्रं स ( क्षिप्रं च ) पू.

(७) वाराकु. ७।७४।३१.

[1]स त्वं पुरुषशार्दूल चरस्व विषयं स्वकम् ।
दुष्कृतं यत्र पश्येस्त्वं तत्र यत्नं समाचर ॥
[2]एवं ते धर्मवृद्धिश्च बलायुर्वर्धनं तथा ।
भविष्यति नरव्याघ्र बालस्यास्य च जीवितम् ॥

दण्डधारणेन प्रजारक्षणं राज्ञः कर्तव्यम्

[3]ततः परमसंतुष्टो मनुः पुत्रमुवाच ह ॥
[4]प्रीतोऽस्मि परमोदार कर्ता चासि न संशयः ।
दण्डेन च प्रजा रक्षन्न च दण्डमकारणम् ॥
[5]अपराधेषु यो दण्डः पात्यते पुरुषर्षभ ।
स दण्डो विधिवद्युक्तः स्वर्गं नयति पार्थिवम् ॥
[6]तस्मिन् दण्डे महाबाहो यत्नवान् भव पुत्रक ।
धर्मस्ते परमो लोके कृत एव भविष्यति ॥
[7]इति तं चैव संदिश्य मनुः पुत्रं समाधिना ।
जगाम त्रिदिवं हृष्टो ब्रह्मलोकमनुत्तमम् ॥
[8]यः क्षत्रियः स्वधर्मेण पृथिवीमनुशास्ति वै ।
स लोके लभते वीर्यं यशः प्रेत्य च सद्गतिम् ॥

---

(१) **वारा.** ७।७७।३० ; **वाराकु.** ७।७४।३२ चरस्व ( मार्गस्व ) पश्येस्त्वं त ( पश्येथास्त ).

(२) **वारा.** ७।७७।३१ ; **वाराकु.** ७।७४।३३ पूर्वार्धे ( एवं चेद्धर्मवृद्धिश्च नृणां चाऽऽयुर्विवर्धनम् । ) व्याघ्र ( श्रेष्ठ ).

(३) **वारा.** ७।८१।७ ( ततः परमसंहृष्टः प्रत्युवाच महातपाः ॥ ) ; **वाराकु.** ७।७९।७.

(४) **वारा.** ७।८१।८ ; **वाराकु.** ७।७९।८ कर्ता चासि ( त्वं कर्ताऽसि ) रक्षन्न ( रक्ष मा ) कारणम् ( कारणे ).

(५) **वारा.** ७।८१।९ ; **वाराकु.** ७।७९।९ पूर्वार्धे ( अपराधिषु यो दण्डः पात्यते मानवेषु वै । ) द्युक्तः (न्मुक्तः).

(६) **वारा.** ७।८१।१०; **वाराकु.** ७।७९।१० तस्मिन् द ( तस्माद् ) धर्मस्ते ( धर्मो हि ) कृत एव (कुर्वतस्ते).

(७) **वारा.** ७।८१।११ ; **वाराकु.** ७।७९।११ चैव ( बद्ध ) कमनुत्तमम् ( कं सनातनम् ).

(८) **पमा.** ४१५.



## कौटिलीयमर्थशास्त्रम्

राजनीतिविषयाः अर्थशास्त्रप्रतिपाद्याः सविस्तराः

**[1]पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैक-मिदमर्थशास्त्रं कृतम् ॥**

स्वग्रन्थस्य निर्मूलत्वादिशङ्कानिराकरणपूर्वं प्रकरणाधि-करणसमुद्देशं प्रतिज्ञातुं भूमिकां रचयति– पृथिव्या इत्यादिना । पृथिव्याः भूमेः लाभे अप्राप्तायाः प्राप्तौ पालने लब्धायाः परिरक्षणे च विषये । अर्थशास्त्राणि, अर्थः नाम वृत्तिः वर्तनं स्थितिः, सैव हि मनुष्याणां मुख्योऽर्थः । तया च मनुष्यसंबन्धिन्या तदाधारभूता भूमिरुपलक्ष्यते । एवं च मनुष्यवती भूमिरित्यर्थः । तस्याः लाभपालनोपायोपदेशकानि शास्त्राणि अर्थ-शास्त्राणि यावन्ति पूर्वाचार्यैः शुक्रबृहस्पतिविशालाक्षा-दिभिः प्रस्थापितानि प्रवर्तितानि तानि । प्रायश इति बाहुल्योक्त्या क्वचित् क्वचिदात्मीयदर्शनानां प्रतिपादनं दर्शयति । संहृत्य संगृह्य एकमिदमर्थशास्त्रं कृतं एकं नानाशास्त्रविप्रकीर्णसमस्तविषयैकनिधानं इदं बुद्धिस्थं अर्थशास्त्रं कृतं मया प्रणीतम् । एतेन मदीयस्यास्यैकस्य ग्रन्थस्य परिशीलनात् कृत्स्नपूर्वाचार्यदर्शनविज्ञानं सुल-लभ्यमिति सूचयन् स्वशास्त्रस्य समूलत्वं पूर्वाचार्यग्रन्थै-रगतार्थत्वं च द्योतयति । श्रीमूला.

**तस्यायं प्रकरणाधिकरणसमुद्देशः ॥**

तदिदमर्थशास्त्रं साशीतिशतसंख्यैः प्रकरणैः तत्परि-च्छिन्नैश्च पञ्चदशसंख्यैरधिकरणैर्विभज्य प्रस्थापितम् । तेषु यथास्थानं वितत्य विशेषतो व्युत्पादयिष्यमाणेषु प्रथमं विषयतः समाख्यातः क्रमत इयत्तया च किमपि सामान्य-ज्ञानं विशेषजिज्ञासानिमित्तं शिष्याणां जनयितुं तत्समुद्देशं प्रतिजानीते– तस्यायमिति । तस्य अर्थशास्त्रस्य अयं आरब्धाध्यायगोचरः प्रदर्श्यमानप्रकारः प्रकरणाधिकरण-समुद्देशः प्रकरणानामधिकरणानां च सर्वेषां समुद्देशः संक्षेपेण निर्देशः संक्षिप्तस्वरूपक्रमेयत्ताख्यानमित्यर्थः ,

---

(१) **कौ.** १।१.

क्रियते इति शेषः। प्रक्रियन्ते प्रकर्षेण व्युत्पाद्यन्ते एष्वर्था इति प्रकरणानि । अधिक्रियन्ते एषु प्रकरणानि इत्यधिकरणानि । श्रीमूला.

**विद्यासमुद्देशः ॥**

तत्र विनयाधिकारिकस्य प्रथमाधिकरणस्य प्रथमं प्रकरणं समुद्दिशति– विद्यासमुद्देश इति । विद्यानां आन्वीक्षिकी त्रयी वार्ता दण्डनीतिरित्येतासां चतसृणां समुद्देशः विद्यासमुद्देशः । तदाख्यं प्रकरणमित्यार्थम्। विद्यासमुद्देश इत्येतच्च सूत्रमिति व्यवहर्तव्यम् , विस्तारार्हबहुलार्थगर्भत्वात् । सूत्रमेव चेदं तत्प्रकरणे 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः' इत्युपक्रम्य 'स्वधर्मकर्माभिरतो वर्तते स्वेषु वेश्मसु' इत्यन्तैस्त्रिभिरध्यायैर्महता प्रयत्नेन प्रपञ्च्यते इति सूत्रस्य तथाविधं व्याख्यानं भाष्यं भवितुमर्हति । एवं 'प्रकरणाधिकरणसमुद्देशः' इत्युक्तचरम्। उत्तराण्यपि 'वृद्धसंयोगः' इत्यादीनि सूत्राणि भवन्ति, तत्तत्प्रकरणगतानि प्रपञ्चनवाक्यानि च भाष्याणि। एवमधिकरणेषु सर्वेषु। एवं च 'स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च' इति ग्रन्थान्तोक्तिरुपपन्ना भवतीति वेदितव्यम् ।

तत्र विनयविहीनो लोकशास्त्रव्यवहारेष्वशिक्षितो राजा राज्यरक्षणानर्हत्वात् वैनयिकीषु विद्यास्ववश्यं विनेतव्य इत्यतो विद्यासमुद्देश इत्येतत् प्रकरणमादौ सूत्रितम् । श्रीमूला.

**वृद्धसंयोगः ॥**

विद्याश्च वृद्धसंयोगाभावे लब्धुं न शक्या इति वृद्धसंयोग इति सूत्रम् । श्रीमूला.

**इन्द्रियजयः ॥**

वृद्धसंयोगश्च इन्द्रियजयमन्तरेण न लभ्य इति इन्द्रियजय इति सूत्रम् । श्रीमूला.

**अमात्योत्पत्तिः ॥**

वृद्धैर्विद्यासु शिक्षितो जितेन्द्रियोऽपि सहायाभावे कार्यं साधयितुं न क्षम इति तदनन्तरं अमात्योत्पत्तिरिति सूत्रम् । श्रीमूला.

**मन्त्रिपुरोहितोत्पत्तिः ॥**

अमात्याश्च केचित् बुद्धिसाचिव्याय नित्यनैमित्तिककर्मसाचिव्याय चापेक्षिताः, शान्तिकपौष्टिककर्मानुष्ठानाय चान्ये । तदर्थं मन्त्रिपुरोहिताः कर्तव्या इति मन्त्रिपुरोहितोत्पत्तिरिति सूत्रम् । श्रीमूला.

**उपधाभिः शौचाशौचज्ञानममात्यानाम् ॥**

तैश्च सर्वप्रकारविशुद्धैर्भाव्यमिति उपधाभिः शौचाशौचज्ञानममात्यानामिति सूत्रम् । श्रीमूला.

**गूढपुरुषोत्पत्तिः ॥**

उपधाशुद्धिर्गूढपुरुषानन्तरेण ज्ञातुमशक्येति ततो गूढपुरुषोत्पत्तिः इति सूत्रम् । श्रीमूला.

**गूढपुरुषप्रणिधिः ॥**

तेषां च स्वामिनियोगमन्तरेणाव्यापारात् गूढपुरुषप्रणिधिः इति सूत्रम्। गूढपुरुषाणां प्रणिधिः प्रणिधानं तत्तत्कार्येषु स्वामिना नियोजनमिति तदर्थः । श्रीमूला.

**स्वविषये कृत्याकृत्यपक्षरक्षणम् ॥**

**परविषये कृत्याकृत्यपक्षोपग्रहः ॥**

तैश्च नियुक्तैः स्वराज्यगतान् क्रुद्धलुब्धादीन् विज्ञाय तद्दोषप्रतिविधानम्, परराष्ट्रगतान् विज्ञाय तेषां भेदनेन स्वपक्षे प्रवेशनं चाऽऽवश्यकमिति स्वविषये कृत्याकृत्यपक्षरक्षणमिति; परविषये कृत्याकृत्यपक्षोपग्रह इति च सूत्रे । स्वदेशे कृत्याः शत्रुभेद्याः क्रुद्धादयः अकृत्याः अभेद्याः सुहृदः, कृत्याकृत्यानां पक्षाणां संघानां शत्रूपजापाद्रक्षणमिति प्रथमसूत्रस्यार्थः । परराष्ट्रे ये कृत्याकृत्याः पक्षाः तेषामुपजापादिना स्वपक्षे संग्रहणमिति द्वितीयसूत्रस्यार्थः । श्रीमूला.

**मन्त्राधिकारः ॥**

स्वराष्ट्ररक्षणं परराष्ट्रहरणमित्येतावत् राज्ञः कर्मसर्वस्वम्। तस्य मन्त्रायत्तत्वात् मन्त्राधिकार इति सूत्रम्। कर्मणामारम्भोपायादिसंप्रधारणं मन्त्रः, तस्याधिकारः मन्त्राधिकारः इति । श्रीमूला.

**दूतप्रणिधिः ॥**

परराष्ट्रकरणीयानां स्वकर्मणां स्वयं कर्तुमशक्यतया दूतसापेक्षत्वात् दूतप्रणिधिः इति सूत्रम् । श्रीमूला.

**राजपुत्ररक्षणम् ॥**

यथा राजपुत्राः स्वपितरि न द्रोहमाचरेयुः तथा ते प्रयत्नेन परोपजापादिभ्यो रक्षणीया इति राजपुत्ररक्षणं इति सूत्रम् । श्रीमूला.

**अवरुद्धवृत्तम् ॥**

**अवरुद्धे च वृत्तिः ॥**

पित्रा क्वचिदवरुध्य तथा रक्ष्यमाणः कुमारः पितरि कथं व्यवहरेत्, पिता च तस्मिन् कथमित्येतत् वक्तुं सूत्रे अवरुद्धवृत्तं इति, अवरुद्धे च वृत्तिः इति च ।

श्रीमूला.

**राजप्रणिधिः ॥**

इत्थमात्मानं रक्षतो राज्ञो नियतकालां व्यापारपरिपाटीं वक्तुं सूत्रं राजप्रणिधिः इति । राज्ञः प्रणिधिः प्रणिधानं व्यापारपरिचिन्तनमित्यर्थः । श्रीमूला.

**निशान्तप्रणिधिः ॥**

निशान्तं राजभवनम्, तस्य प्रणिधिः प्रणिधानं देशसंनिवेशादिचिन्तनम् । श्रीमूला.

**आत्मरक्षितकम् ॥**

रक्षितमिति भावे क्तः स्वार्थे च कः । राज्ञः आत्मरक्षणौपयिकं प्रकरणेऽस्मिन्नुपदिश्यते इत्यर्थः ।

श्रीमूला.

**इति विनयाधिकारिकं प्रथमाधिकरणम् ॥**

विनयः विद्यादिशिक्षणम्, तस्याधिकारः प्रस्तावः विनयाधिकारः, सोऽस्मिन्नस्तीति विनयाधिकारिकं नाम प्रथममधिकरणं समुद्दिष्टमित्यर्थः । श्रीमूला.

**जनपदविनिवेशः ॥**

इत्थं प्रथमाधिकरणसूत्रिताष्टादशप्रकरणोपदिष्टवर्त्मना समासादितविनयसंपत्को राजा तन्त्रावापयोरधिकारी भवति । तन्त्रं नाम स्वराज्यक्षेमसाधनानुकूलः पञ्चसु आद्येष्वधिकरणेषु पञ्चनवत्या सूत्रैः प्रतिपाद्यमानोऽर्थः । आवापः शत्रुराष्ट्रहरणानुकूलः षष्ठादिषु त्रयोदशान्तेषु अष्टस्वधिकरणेषु सूत्राणामेकाशीत्या प्रतिपाद्यमानोऽर्थः, अर्थं ह्येनं विज्ञाय प्रवर्तमानो विजिगीषुः परराष्ट्रं स्ववशे करोतीति । तत्र येऽर्थाः द्वितीयेऽधिकरणे अध्यक्षप्रचाराख्ये अष्टात्रिंशता सूत्रैः प्रतिपाद्यन्ते, ये तृतीये धर्मस्थीये एकोनविंशत्या सूत्रैः, ये चतुर्थे दुर्गराष्ट्रसंबन्धिकण्टकशोधनाख्ये त्रयोदशभिः सूत्रैः, ये च पञ्चमे राजराज्यकण्टकशोधनपरे योगवृत्तनाम्नि सप्तभिः सूत्रैः, तेष्वेव सर्वेष्वधीनं राज्यकुटुम्बभरणकर्मेति तमेतं चतुरधिकरण्यर्थं तन्त्रमाहुः, तन्त्रिधातोः कुटुम्बधारणार्थत्वात् । द्विसूत्रं प्रकरणद्वयात्मकं मण्डलयोनिसंज्ञमधिकरणं षष्ठम्, एकोनत्रिंशत्सूत्रयुक्तं षाड्गुण्यं सप्तमम्, अष्टसूत्रीरूपं व्यसनाधिकारिकमष्टमम्, द्वादशसूत्रमभियास्यत्कर्माख्यं नवमम्, त्रयोदशसूत्रं साङ्ग्रामिकं दशमम्, द्विसूत्रं संघवृत्तमेकादशम्, नवसूत्रमाबलीयसं द्वादशम्, षट्सूत्रं दुर्गलम्भोपायाख्यं त्रयोदशमित्येकाशीतिसूत्रामष्टाधिकरणीं शत्रुराज्यहरणोपायोपदेशिनीमावापं व्यवहरन्ति ।

त्रिसूत्रमौपनिषदं नाम चतुर्दशमधिकरणं तन्त्रावापयोरत्यन्तमनुगुणम् । एकसूत्रात्मकं तन्त्रयुक्तिसंज्ञं पञ्चदशमधिकरणं कौटिल्यशास्त्राहृतास्तन्त्रयुक्तीर्द्वात्रिंशतं व्युत्पादयतीति स्थितिः ।

तत्र स्वराज्यं रक्षतो राजधान्याद्यपेक्षणादध्यक्षप्रचाराधिकरणे जनपदविनिवेश इति प्रथमं प्रकरणं सूत्रितम् ।

श्रीमूला.

**भूमिच्छिद्रविधानम् ॥**

स्वराज्यगतानां कृषिनिवासानर्हाणां गिरिवनश्वभ्रप्रायाणां भूभागानामुपयोगप्रकारोपदेशार्थं सूत्रं भूमिच्छिद्रविधानमिति । भूमिच्छिद्राणां कृष्याद्यनर्हभूभागानां विधानं उपयोगप्रकार इत्यर्थः । 'भूमिच्छिद्रं कृष्ययोग्या' इति यादवः । श्रीमूला.

**दुर्गविधानम् ॥**

**दुर्गविनिवेशः ॥**

देशस्य शत्रुनाक्रमणीयत्वसंपत्तये दुर्गापेक्षणात् दुर्गविधानं इति सूत्रम्, दुर्गविनिवेश इति च । श्रीमूला.

**संनिधातृनिचयकर्म ॥**

संनिधाता नाम धनादिकं संचित्य निधाता । तस्य निचयकर्म धनादिरक्षणव्यापार उच्यते इति सूत्रार्थः ।

श्रीमूला.

**समाहर्तृसमुदयप्रस्थापनम् ॥**

सर्वायस्थानेभ्यो राजार्थानां सम्यक् समन्ताद्वा आहर्ता समाहर्ता विषयवृत्त्यध्यक्षः । समुदयः धनोत्थानम्, तस्य प्रस्थापनं मार्गपरिकल्पनं समुदयप्रस्थापनम् । समाहर्तुः समुदयप्रस्थापनं समाहर्तृसमुदयप्रस्थापनम् । समाहर्ता कया कया विधया समुदयं प्रस्थापयेदित्येतदस्मिन् प्रकरणे उपदिश्यते इत्यर्थः । श्रीमूला.

**अक्षपटले गाणनिक्याधिकारः ॥**

अक्षाः गणनयोग्यानि रूप्यकादीनि, तेषां पटलं स्थानं अक्षपटलं तस्मिन्, गणनायां नियुक्तो गाणनिकः, तस्य कर्म गाणनिक्यं, तस्य प्रस्तावः गाणनिक्याधिकारः । श्रीमूला.

**समुदयस्य युक्तापहृतस्य प्रत्यानयनम् ॥**

उत्पन्नस्यार्थस्य नियुक्तैः पुरुषैरपहृतस्य पुनःप्रापणमित्यर्थः । श्रीमूला.

**उपयुक्तपरीक्षा ॥**

युक्तानां उपरि नियुक्ताः प्रत्ययितपुरुषा उपयुक्ताः, तेषां परीक्षा दोषगवेषणेति सूत्रार्थः । श्रीमूला.

**शासनाधिकारः ॥**

तालपत्रादिषु लिख्यमानोऽर्थः शासनं, तस्याधिकारो विधिरुच्यते इत्यर्थः । श्रीमूला.

**कोशप्रवेश्यरत्नपरीक्षा ॥**

कोशः भाण्डागारं, तस्मिन् प्रवेशयितुं योग्यानां मणिमुक्तादीनां परीक्षणमत्रोपदिश्यते इत्यर्थः । श्रीमूला.

**आकरकर्मान्तप्रवर्तनम् ॥**

सुवर्णरजतरत्नाद्युत्पत्तिस्थानं आकरः, तस्य कर्मान्तः तत्क्रियानिश्चयः, तस्य प्रवर्तनं व्यापारणमित्यर्थः । श्रीमूला.

**अक्षशालायां सुवर्णाध्यक्षः ॥**

अक्षशाला, अक्षः गण्यं धनं सुवर्णरूप्यादि, तस्य शाला तद्घटनशाला, तस्यां सुवर्णाध्यक्षः सुवर्णादिघटनगणनाद्यधिकृतः लक्षणया तद्व्यापार इत्यर्थः । श्रीमूला.

**विशिखायां सौवर्णिकप्रचारः ॥**

विशिखायां आपणवीथ्यां सौवर्णिकप्रचारः सुवर्णनियुक्तस्य व्यापारः । श्रीमूला.

**कोष्ठागाराध्यक्षः ॥**

कोष्ठं उदरं लक्षणया तत्पोषणार्थं व्रीहिगोधूमादिकमाहारद्रव्यं, तस्य अगारं संग्रहस्थानं, तस्याध्यक्षः, अर्थात् तद्व्यापारः । श्रीमूला.

**पण्याध्यक्षः ॥**

विक्रेयद्रव्याध्यक्ष इत्यर्थः । श्रीमूला.

**कुप्याध्यक्षः ॥**

कुप्यं सारदारुवेणुवल्लिवल्कादि, तस्मिन् नियुक्तः कुप्याध्यक्षः । श्रीमूला.

**आयुधागाराध्यक्षः ॥**

स्पष्टार्थम् । श्रीमूला.

**तुलामानपौतवम् ॥**

तुला उन्मानसाधनं, मानं कुडवादि, ताभ्यां पौतवं परिच्छेदनं तुलामानपौतवम्, लक्षणया तत्संशोधनमित्यर्थः । तच्च वाणिजकाः कूटतुलामानव्यवहारिणो मा भूवन्नित्येतदर्थम् । श्रीमूला.

**देशकालमानम् ॥**

देशः योजनगव्यूतिक्रोशादिः, कालः त्रुटिलवादिः, तयोर्मानं परिच्छेद इति सूत्रार्थः । श्रीमूला.

**शुल्काध्यक्षः ॥**

शुल्कं पञ्चदशभागादिकं शुल्कव्यवहारे वक्ष्यमाणं राज्ञो देयं, तस्याध्यक्षः, तद्व्यापार इत्यर्थः । श्रीमूला.

**सूत्राध्यक्षः ॥**

सूत्रं कार्पासादिजस्तन्तुः, तस्य अध्यक्षः तद्वानादिकारयिता । श्रीमूला.

**सीताध्यक्षः ॥**

सीता कृषिः, तस्या अध्यक्षः कृषितन्त्रवृक्षायुर्वेदौ विज्ञाय प्रवर्तकः । श्रीमूला.

**सुराध्यक्षः ॥**

सुरा मधुमैरेयादि, तस्या अध्यक्षः संधानविक्रयाद्यधिकृतः सुराध्यक्षः । श्रीमूला.

**सूनाध्यक्षः ॥**

सूना भक्ष्यप्राणिवधस्थानं, तस्या अध्यक्षः वध्यावध्यनियमनाद्यधिकृतः । श्रीमूला.

**गणिकाध्यक्षः ॥**

धनमेव गणयन्तीति गणिकाः वेश्याः, तासामध्यक्षः गणिकाध्यक्षः । श्रीमूला.

**नावध्यक्षः ॥**

नावां यानपात्राणां अध्यक्षः आदेयराजभागग्रहणाधिकर्ता । श्रीमूला.

**गोध्यक्षः ॥**

गवां उपलक्षणेन गोमहिषाजादीनां तदाजीवानां गोपालादीनां च अध्यक्षः नियामक इत्यर्थः । श्रीमूला.

**अश्वाध्यक्षः ॥**

अश्वानां लक्षणकुलादिकं विज्ञाय तद्रक्षणादिकर्मानुष्ठाता अश्वाध्यक्षः । श्रीमूला.

**हस्त्यध्यक्षः ॥**

अश्वाध्यक्षवत् हस्त्यध्यक्षो व्याख्येयः । श्रीमूला.

**रथाध्यक्षः ॥**

रथानां देवरथादीनां घटनाद्यधिकर्ता रथाध्यक्षः । श्रीमूला.

**पत्त्यध्यक्षः ॥**

पत्तयः पदातयः ये पादचारेण युध्यन्ते, तेष्वधिकृतः पत्त्यध्यक्षः । श्रीमूला.

**सेनापतिप्रचारः ॥**

सेनापतिः चतुरङ्गबलनेता, तस्य प्रचारः सेनाविषयो व्यापारः प्रतिपाद्यते इत्यर्थः । श्रीमूला.

**मुद्राध्यक्षः ॥**

मुद्रा नाम राजचिह्नं राजनामधेयप्रतिमादिलक्षणं यच्छासनपत्रादौ दीयते, तस्या अध्यक्षः प्रवर्तयिता । श्रीमूला.

**विवीताध्यक्षः ॥**

विवीतं तृणजलवान् अकृष्यः प्रदेशः पश्वर्थः, तस्याध्यक्षः तद्व्यापार इत्यर्थः । श्रीमूला.

**समाहर्तृप्रचारः ॥**

समाहर्ता आयस्थानेभ्यो राजार्थसंग्राहको जनपदाध्यक्षः, तस्य प्रचारः व्यापारः जनपदचिन्तनमित्यर्थः । श्रीमूला.

**गृहपतिकवैदेहकतापसव्यञ्जनाः प्रणिधयः ॥**

गृहस्थवणिक्तपस्विवेषाः प्रणिधयः गूढपुरुषाः अर्थात् तेषां जनपदेषु नियोजनम् । तच्च समाहर्तृकार्योपयोगिने जनपदवृत्तान्तज्ञानाय । श्रीमूला.

**नागरिकप्रणिधिः ॥**

नगरे नियुक्तो नागरिकः, तस्य प्रणिधिः प्रणिधानं व्यापारचिन्तनमित्यर्थः । श्रीमूला.

**इत्यध्यक्षप्रचारो द्वितीयमधिकरणम् ॥**

अध्यक्षप्रचारः अध्यक्षाणां व्यापारः । श्रीमूला.

**व्यवहारस्थापना ॥**

अथ धर्मस्थीयं तृतीयमधिकरणम् । धर्मस्था नाम धर्मशास्त्रज्ञाः धर्मशास्त्रानुसारेण व्यवहारनिर्णयकर्मण्यधिकृताः । तेषामिदं धर्मस्थीयं तन्निर्णेयव्यवहारपदप्रतिपादकमित्यर्थः । तत्र प्रथमं सूत्रम्– व्यवहारस्थापना इति । कीदृशो व्यवहारः सिध्यति कीदृशो न सिध्यतीति व्यवस्थापनमिति सूत्रार्थः । श्रीमूला.

**विवादपदनिबन्धः ॥**

विवादपदस्य निबन्धः पूर्वोत्तरपक्षात्मना पत्रे आरोपणम्, तत्पूर्वकं चिन्तनमित्यर्थः । श्रीमूला.

**विवाहसंयुक्तम् ॥**

विवाहाः अष्टविधा ब्राह्मादयः, तत्संबद्धो व्यवहार इत्यर्थः । एतच्च प्रकरणं त्रिभिरध्यायैर्वितन्यते । श्रीमूला.

**दायविभागः ॥**

दायः पितृपितृव्यादिधनं, तस्य विभागः । अयमपि त्रिभिरध्यायैर्वितन्यते । श्रीमूला.

**वास्तुकम् ॥**

वस्तु गृहारामक्षेत्रादि, तत्संबद्धं वास्तुकम् । इदमध्यायत्रयेण वितन्यते । तत्र तृतीयाध्याये उत्तरमपि प्रकरणं प्रवेशितम् । श्रीमूला.

**समयस्यानपाकर्म ॥**

इदमहं करिष्यामीत्यभ्युपगमात्मा संकेतः, इदमनेन कर्तव्यमिति बहुभिः संभूय कृतो वा संकेतः समयः, तस्य अनपाकर्म त्यागाभाव इति सूत्रार्थः । इदं प्रकरणं

वास्तुकप्रकरणीयविवीतक्षेत्रपथहिंसान्युत्पादनाध्याये व्युत्पादितम् । श्रीमूला.

**ऋणादानम् ॥**

ऋणग्रहणनिर्यातनसंबद्धो व्यवहार इत्यर्थः । श्रीमूला.

**औपनिधिकम् ॥**

उपनिधिः निक्षेपः, तत्संबद्धं अनुष्ठानं औपनिधिकम् । श्रीमूला.

**दासकर्मकरकल्पः ॥**

अत्यन्तपारार्थ्यमासाद्य शुश्रूषका दासाः, भृत्यर्थं शुश्रूषकाः कर्मकराः, तेषां कल्पः तत्संबन्धी विधिः । श्रीमूला.

**संभूयसमुत्थानम् ॥**

वणिजकैरन्यैर्वा समुदेत्यारभ्यमाणं कार्यं संभूयसमुत्थानम् । श्रीमूला.

**विक्रीतक्रीतानुशयः ॥**

विक्रीतं मूल्यमादाय दत्तं पण्यम्, क्रीतं मूल्यं दत्त्वा गृहीतम्, तयोर्विषये अनुशयः विक्रयविषयः क्रयविषयश्च पश्चात्ताप इत्यर्थः । श्रीमूला.

**दत्तस्यानपाकर्म ॥**

दत्तस्य धर्माद्यर्थे वाचा दत्तस्य अनपाकर्म अप्रदानम् । एतच्च विषयविशेषे पुनर्हरणस्याप्युपलक्षणम् । श्रीमूला.

**अस्वामिविक्रयः ॥**

अस्वामी परद्रव्यव्यवहर्ता, तेन कृतो विक्रयः अस्वामिविक्रयः । श्रीमूला.

**स्वस्वामिसंबन्धः ॥**

स्पष्टार्थम् । श्रीमूला.

**साहसम् ॥**

सहसा कृतं कर्म साहसं प्रसभकर्म । श्रीमूला.

**वाक्पारुष्यम् ॥**

वाचा कुत्सनभर्त्सनादिकमित्यर्थः । श्रीमूला.

**दण्डपारुष्यम् ॥**

दण्डेन करणेन पारुष्यं परुषकर्म द्रोहः दण्डपारुष्यम् । श्रीमूला.

**द्यूतसमाह्वयम् ॥**

द्यूतं अक्षक्रीडा, समाह्वयः अजकुक्कुटादिप्राणिदेवनं, तयोः समाहारः द्यूतसमाह्वयम्, तत्संबद्धो व्यवहारः प्रकरणेऽस्मिन्नभिधीयते इत्यर्थः । श्रीमूला.

**प्रकीर्णकानि ॥**

उक्तविवादपदानन्तर्गतानि याचितकाद्यदानादिनिमित्तानि विवादपदानि प्रकीर्णकानि, तान्यत्राभिधीयन्ते इत्यर्थः । श्रीमूला.

**इति धर्मस्थीयं तृतीयमधिकरणम् ॥**

एवमेकोनविंशतिप्रकरणं धर्मस्थीयमधिकरणं तृतीयं समुद्दिष्टमित्यर्थः । श्रीमूला.

**कारुकरक्षणम् ॥**

अथ कण्टकशोधनाख्यं चतुर्थमधिकरणम् । तत्रेदं प्रथमं सूत्रम्– कारुकरक्षणमिति । कारुकाः तक्षायस्कारस्वर्णकारादयः, तेभ्यः कूटकर्मकारिभ्यो देशस्य रक्षणमिहाभिधीयते इत्यर्थः । श्रीमूला.

**वैदेहकरक्षणम् ॥**

वाणिजकेभ्यः पौतवापचारिभ्यो रक्षणमित्यर्थः । श्रीमूला.

**उपनिपातप्रतीकारः ॥**

उपनिपाताः दैविकानि महाभयानि, तेषां प्रतीकारः । श्रीमूला.

**गूढाजीविनां रक्षा ॥**

ये गूढं लञ्चग्रहणेन स्वामिनं प्रजाश्च वञ्चयन्तः आजीवन्ति ते गूढाजीविनः, तेषां रक्षा तेभ्यो देशस्य रक्षणमित्यर्थः । श्रीमूला.

**सिद्धव्यञ्जनैर्माणवप्रकाशनम् ॥**

सिद्धव्यञ्जनाः मुण्डजटिलतापसवेषाः धूर्ताः, तैः करणैः माणवप्रकाशनं माणवस्य प्रलोभनविद्यायाः प्रकाशनम् । तच्च चोरादिग्रहणार्थम् । श्रीमूला.

**शङ्कारूपकर्माभिग्रहः ॥**

आत्मनः परान् प्रति परेषामात्मानं प्रति च शङ्का द्विरूपा, रूपं सलोप्त्रदर्शनम्, कर्म संधिच्छेदादि, एतैः अभिग्रहः चोराणां ग्रहणमिति सूत्रार्थः । श्रीमूला.

**आशुमृतकपरीक्षा ॥**

आशु मृतकस्य परीक्षा किमयं स्वयं मृतः उत परेण मारितः इति परीक्षणम् । श्रीमूला.

**वाक्यकर्मानुयोगः ॥**

वाक्यानुयोगः कर्मानुयोगश्चेति सूत्रार्थः । तत्र वाक्यानुयोगः उपपत्तियुक्तैः सामवादैश्चोरपृच्छा , कर्मानुयोगः कशाप्रहारादिना चोरविचारणा । श्रीमूला.

**सर्वाधिकरणरक्षणम् ॥**

अधिकरणशब्देन लक्षणया अध्यक्षप्रचाराधिकरणोक्ता अध्यक्षास्तन्नियम्याः पुरुषाश्च गृह्यन्ते । तेभ्यः सर्वेभ्यः प्रजानां धनस्य च रक्षणमिति सूत्रार्थः । श्रीमूला.

**एकाङ्गवधनिष्क्रयः ॥**

एकाङ्गं हस्तः पादः कर्णः इत्येवंजातीयं, तस्य वधः छेदनं एकाङ्गवधः , तद्युक्तो निष्क्रयः वधस्थानीयो धनदण्डश्चतुष्पञ्चाशत्पणादिः । श्रीमूला.

**शुद्धश्चित्रश्च दण्डकल्पः ॥**

शुद्धः चित्र इति द्विविधो दण्डविधिः । तत्र शुद्धः अक्लेशमारणम् , चित्रः क्लेशमारणम् । श्रीमूला.

**कन्याप्रकर्म ॥**

कन्यायाः अपुष्पितायाः स्त्रियाः प्रकर्म दूषणम् , तत्संबद्धो दण्डविधिरत्रोच्यते इत्यर्थः । श्रीमूला.

**अतिचारदण्डः ॥**

अतिचारः अभक्ष्यभक्षणं अगम्यागमनं इत्येवमादिः, तन्निमित्तो दण्डः उच्यते इत्यर्थः । श्रीमूला.

**इति कण्टकशोधनं चतुर्थमधिकरणम् ॥**

एवं त्रयोदशप्रकरणं दुर्गराष्ट्रकण्टकशोधनप्रतिपादकं चतुर्थमधिकरणं समुद्दिष्टमित्यर्थः । श्रीमूला.

**दाण्डकर्मिकम् ॥**

अथ योगवृत्तं नाम पञ्चममधिकरणम् । योगः विस्रब्धघाती, तद्वृत्तम् । तच्चोपांशुदण्डादिकम् । राजराज्यकण्टकविषयः उपांशुदण्डादिप्रयोगोऽस्मिन्नधिकरणेऽभिधास्यते । तत्रेदं प्रथमं सूत्रम्— दाण्डकर्मिकमिति । दण्डः उपांशुवधः , तस्य कर्म प्रयोगः दण्डकर्म, तत्संबद्धमिहोच्यते इत्यर्थः । श्रीमूला.

**कोशाभिसंहरणम् ॥**

कोशस्य सुवर्णादेः अभिसंहरणं पूर्वत आधिक्येन संग्रहणमर्थकृच्छ्रप्राप्तावित्यर्थः । श्रीमूला.

**भृत्यभरणीयम् ॥**

भृत्याः बुद्धौ शास्त्रे कर्मणि च साहाय्यदायिनः, तेषां भरणं पोषणं, तत्संबद्धं भृत्यभरणीयम् । श्रीमूला.

**अनुजीविवृत्तम् ॥**

अनुजीविनः मन्त्रिप्रभृतयः, तैः स्वामिनि कथं वर्तितव्यमित्येतदत्रोपदिश्यते इत्यर्थः । श्रीमूला.

**सामयाचारिकम् ॥**

समयः व्यवस्था, आचारः अनुष्ठानं, समयाचारमधिकृत्य प्रवृत्तं सामयाचारिकम् । श्रीमूला.

**राज्यप्रतिसंधानम् ॥**

राज्यस्य प्रतिसंधानं राज्यव्यसने सति तत्पुत्रानभिषिच्य यत् परिचिन्तनममात्यैः क्रियते तदिहोच्यते इत्यर्थः । इदमुत्तरं च प्रकरणमेकस्मिन्नध्याये समावेशितम् ।
श्रीमूला.

**एकैश्वर्यम् ॥**

एकस्यैव राजपुत्रस्यैकातपत्रमैश्वर्यं कर्तव्यं इत्येतदुच्यते इत्यर्थः । एकग्रहणं बहूनामैश्वर्यकरणे अराजकत्वप्रसङ्ग इति द्योतनार्थम् । श्रीमूला.

**इति योगवृत्तं पञ्चममधिकरणम् ॥**

एवं सप्तप्रकरणं योगवृत्ताख्यं पञ्चममधिकरणं समुद्दिष्टमित्यर्थः । श्रीमूला.

**प्रकृतिसंपदः ॥**

अथाऽऽवापो यावत् त्रयोदशमधिकरणम् । तत्र षष्ठं मण्डलयोनिर्नाम । विजिगीष्वरिमध्यमोदासीनाख्यचतुरवयवं मण्डलम्, योनिः उत्तराधिकरणार्थस्य षाड्गुण्यस्य विषयः । मण्डलं च तत् योनिश्च मण्डलयोनिः मण्डलात्मा षाड्गुण्यप्रकृतिरित्यर्थः । तत्र प्रथमं सूत्रम्— प्रकृतिसंपदः इति । प्रकृतयः स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि, तासां संपदः अपेक्षितगुणपुष्कलता इहोच्यन्ते इत्यर्थः ।
श्रीमूला.

**शमव्यायामिकम् ॥**

कर्मफलोपभोगानां क्षेमसाधनं शमः, व्यायामस्तु कर्मारम्भोपकरणानां कर्मयोगघटकः, तदुभयमस्मिन् प्रकरणे प्रतिपाद्यते इत्यर्थः । श्रीमूला.

**इति मण्डलयोनिः षष्ठमधिकरणम् ॥**

एवं द्विप्रकरणं मण्डलयोन्यधिकरणं षष्ठं समुद्दिष्टमित्यर्थः । श्रीमूला.

**षाड्गुण्यसमुद्देशः ॥**

अथ षाड्गुण्याधिकरणे प्रथमं सूत्रम्— षाड्गुण्यसमुद्देश इति । संध्यादीनां षड्गुणानां संक्षिप्य प्रतिपादनमिति सूत्रार्थः । श्रीमूला.

**क्षयस्थानवृद्धिनिश्चयः ॥**

तत् किमर्थमित्यपेक्षायां क्षयस्थानवृद्धिनिश्चयः इति सूत्रम् । क्षयः ह्रासः, स्थानं तादवस्थ्यम्, वृद्धिः उपचयः, तेषां निश्चयः स्वरूपावधारणम् । तदिहोच्यते इत्यर्थः । प्रकरणमिदं पूर्वं चैकस्मिन्नध्याये समावेशितम् । श्रीमूला.

**संश्रयवृत्तिः ॥**

क्षीणकार्यं वक्तुं सूत्रम्— संश्रयवृत्तिरिति । प्रबलमाश्रित्य वर्तनमिति सूत्रार्थः । श्रीमूला.

**समहीनज्यायसां गुणाभिनिवेशः ॥**

समः शत्रुणा सदृशशक्तिः, हीनः निकृष्टः, ज्यायान् उत्कृष्टः । आसु तिसृष्ववस्थासु गुणस्थापनाऽत्रोच्यते इत्यर्थः । श्रीमूला.

**हीनसंधयः ॥**

हीनेन कोशदण्डभूमीः प्रदाय करणीयाः संधय इह वर्ण्यन्ते इत्यर्थः । श्रीमूला.

**विगृह्यासनम् ॥**

शत्रुणा सह विगृह्य शत्रोर्धान्यादिप्राप्तिप्रतिघातं कृत्वा स्वविषये स्थितिरिति सूत्रार्थः । श्रीमूला.

**संधायासनम् ॥**

अभियानाशक्तौ परेण संधिं कृत्वाऽवस्थानमित्यर्थः । श्रीमूला.

**विगृह्ययानम् ॥**

पार्ष्णिग्राहादिभिः सह विग्रहं कृत्वा परं प्रति अभियानमित्यर्थः । श्रीमूला.

**संधाययानम् ॥**

पार्ष्णिग्राहादिभिः सह संधिं कृत्वा शत्रुमुद्दिश्य यानमित्यर्थः । श्रीमूला.

**संभूयप्रयाणम् ॥**

समहीनज्यायसां शत्रुं प्रति समुदेत्य प्रयाणमित्यर्थः । श्रीमूला.

**यातव्यामित्रयोरभिग्रहचिन्ता ॥**

अरिसंपद्युक्तो व्यसनी च यातव्यः, अमित्रः नित्यापकारी शत्रुः । अभिग्रहः यानम् । यातव्यामित्रयोः कतरं प्रति यानमनुष्ठेयमिति संप्रधारणमिहोच्यते इत्यर्थः । श्रीमूला.

**क्षयलोभविरागहेतवः प्रकृतीनाम् ॥**

क्षयः गजवाजिपुरुषधनादीनामपचयः, लोभः अतितृष्णा, विरागः प्रद्वेषः, तदुत्पत्तिहेतवोऽमात्यादीनामिहाभिधीयन्ते इत्यर्थः । श्रीमूला.

**सामवायिकविपरिमर्शः ॥**

समवायेन चरन्ति सामवायिकाः विजिगीष्वनुयायिनो राजानः, तेषां विपरिमर्शः गुरुलघुभावचिन्तनमित्यर्थः । श्रीमूला.

**संहितप्रयाणिकम् ॥**

संहितयोः अन्योन्यकृतसंधिकयोः शत्रुविजिगीष्वोः प्रयाणं भिन्नदिक्कं यानम्, तदिह प्रतिपाद्यते इत्यर्थः । श्रीमूला.

**परिपणितापरिपणितापसृताश्च संधयः ॥**

देशकालकार्यव्यवस्थया कृतः संधिः परिपणितसंधिः, तद्विपरीतोऽपरिपणितसंधिः, कुतोऽपि निमित्तात् स्वपक्षादपसृतेन पुनः संधिः अपसृतसंधिः, ते इमे संधयः इह व्युत्पाद्यन्ते इत्यर्थः । श्रीमूला.

**द्वैधीभाविकाः संधिविक्रमाः ॥**

संधिविग्रहोपादानं द्वैधीभावः, तत्संबद्धाः संधिविक्रमाः कथ्यन्ते इत्यर्थः । श्रीमूला.

**यातव्यवृत्तिः ॥**

यातव्यो विजिगीषुः, तस्य सामवायिकेषु वृत्तिः यातव्ये सामवायिकानां वृत्तिश्चोच्यते इत्यर्थः। श्रीमूला.

**अनुग्राह्यमित्रविशेषाः ॥**

भूम्येकान्तरा राजानो मित्राणि। तत्र कानि मित्राणि साहाय्यदानेनानुग्राह्याणि कानि नेति विचारोऽत्र क्रियते इत्यर्थः। श्रीमूला.

**मित्रहिरण्यभूमिकर्मसंधयः ॥**

मित्रेण हिरण्येन भूम्या कर्मणा च ये संधयः पणबन्धाः ते इहाभिधीयन्ते इत्यर्थः। इदं प्रकरणं चतुरध्यायी-रूपम्। श्रीमूला.

**पार्ष्णिग्राहचिन्ता ॥**

पार्ष्णिग्राहावस्थापन्नस्य विजिगीषोः चिन्ता अनुष्ठानविचार इत्यर्थः। श्रीमूला.

**हीनशक्तिपूरणम् ॥**

अपचितानां प्रभुमन्त्रोत्साहशक्तीनां वर्धनमिहोच्यते इत्यर्थः। श्रीमूला.

**बलवता विगृह्योपरोधहेतवः ॥**

प्रबलेन शत्रुणा सह विगृह्य दुर्गप्रवेशस्य कारणान्य-भिधीयन्ते इत्यर्थः। श्रीमूला.

**दण्डोपनतवृत्तम् ॥**

दण्डेन बलेन उपनतः अधःकृतः, तदवस्थापन्नस्य विजिगीषोर्बलवन्तं प्रत्यनुष्ठानमुच्यते इत्यर्थः। श्रीमूला.

**दण्डोपनायिवृत्तम् ॥**

दण्डेन बलेन शत्रुमात्मनः समीपमुपनयति उपनमयतीति दण्डोपनायी, तदवस्थस्य विजिगीषोर्वृत्तमुच्यते इत्यर्थः। श्रीमूला.

**संधिकर्म ॥**

संधेः शपथादिना दृढीकरणमुच्यते इत्यर्थः।

श्रीमूला.

**संधिमोक्षः ॥**

संधिनिमित्तं ग्रहीकृतः संधिरित्युपचर्यते, तस्य मोक्षः मोचनं उच्यते इत्यर्थः। श्रीमूला.

**मध्यमचरितम् ॥**

मध्यमेषु विजिगीषोर्वृत्तिरुच्यते इत्यर्थः। एतदादि-प्रकरणत्रयमेकस्मिन्नध्याये संनिवेशितम्। श्रीमूला.

**उदासीनचरितम् ॥**

उदासीनं प्रति विजिगीषोरनुष्ठानमभिधीयते इति सूत्रार्थः। श्रीमूला.

**मण्डलचरितम् ॥**

मण्डलं अरिमित्रलक्षणम्, तत् प्रति विजिगीषो-रनुष्ठानमुच्यते इति सूत्रार्थः। श्रीमूला.

**इति षाड्गुण्यं सप्तममधिकरणम् ॥**

एवमेकोनत्रिंशत्प्रकरणं षाड्गुण्याधिकरणं सप्तमं समुद्दिष्टमित्यर्थः। श्रीमूला.

**प्रकृतिव्यसनवर्गः ॥**

अथ व्यसनाधिकारिकेऽधिकरणे प्रथमं सूत्रम्- प्रकृति-व्यसनवर्ग इति। प्रकृतयः स्वाम्यमात्यादयः, व्यसनानि गुणप्रातिलोम्यादीनि, तेषां वर्गः समूहोऽभिधीयते इत्यर्थः। श्रीमूला.

**राजराज्ययोर्व्यसनचिन्ता ॥**

राजा स्वामी, राज्यं अमात्यादिप्रकृतिपञ्चकं द्रव्य-प्रकृतिपञ्चकं च, तयोर्व्यसनचिन्ता व्यसनगुरुलघुभाव-संप्रधारणमुच्यते इत्यर्थः। श्रीमूला.

**पुरुषव्यसनवर्गः ॥**

पुरुषस्य व्यसनानि व्यसनप्रभवा दोषाः, तेषां वर्गो-ऽभिधीयते इत्यर्थः। श्रीमूला.

**पीडनवर्गः ॥**

अग्न्युदकादिनिमित्ताः शक्त्यपचयाः पीडनानि, तेषां वर्गः संख्यास्वरूपगौरवलाघवतोऽभिधीयते इत्यर्थः। एत-दादि प्रकरणत्रयमेकस्मिन्नध्याये समावेशितम्। श्रीमूला.

**स्तम्भनवर्गः ॥**

स्तम्भनं प्रत्यूहोक्त्या राजकार्योपरोधः, तद्धेतूनां वर्ग उच्यते इति सूत्रार्थः। श्रीमूला.

**कोशसङ्गवर्गः ॥**

कोशस्य राजार्थस्य सङ्गः अप्रदानं कोशसङ्गः, तद्धेतुवर्ग उच्यते इत्यर्थः। श्रीमूला.

बलव्यसनवर्गः ॥

बलं चतुरङ्गं सैन्यं मौलभृतकादिभेदेन षड्विधम्, तस्य व्यसनवर्गः अमानितविमानितादित्रयस्त्रिंशत्प्रकारोऽभिधीयते इत्यर्थः । श्रीमूला.

मित्रव्यसनवर्गः ॥

स्पष्टार्थम् । प्रकरणद्वयमिदमेकाध्यायगतम् । श्रीमूला.

इति व्यसनाधिकारिकमष्टममधिकरणम् ॥

एवमष्टप्रकरणं व्यसनाधिकारेण प्रवृत्तमष्टममधिकरणं समुद्दिष्टमित्यर्थः । श्रीमूला.

शक्तिदेशकालबलाबलज्ञानम् ॥

अथ अभियास्यत्कर्माख्यं नवममधिकरणम् । अभियास्यतो विजिगीषोः अभियानात् प्राक् चिन्तनीयमर्थजातमस्मिन्नधिकरणे उपदेक्ष्यते । तत्र प्रथमं सूत्रम्—शक्तिदेशकालबलाबलज्ञानमिति । शक्तेर्देशस्य कालस्य च बलाबलज्ञानमुपदिश्यते इत्यर्थः । इदं प्रकरणमुत्तरं चैकाध्यायगते । श्रीमूला.

यात्राकालः ॥

शत्रुं प्रति अभियानं यात्रा, तद्योग्याः कालाः ऋतवः उच्यन्ते इत्यर्थः । श्रीमूला.

बलोपादानकालाः ॥

बलानि मौलभृतकादीनि षट्, तेषां उपादानकालाः उद्योजनसमयाः । अमुकबलममुकसमये समुद्योजयितव्यमित्ययमर्थ इह चिन्त्यते इत्यर्थः । श्रीमूला.

संनाहगुणाः ॥

संनाहः शस्त्रावरणग्रहणम्, तस्य गुणाः श्रेष्ठत्वप्रकाराः कथ्यन्ते इत्यर्थः । श्रीमूला.

प्रतिबलकर्म ॥

परबलाभिभवसमर्थं बलं प्रतिबलम्, तस्य करणप्रकार उच्यते इत्यर्थः । श्रीमूला.

पश्चात्कोपचिन्ता ॥

पश्चात्कोपः पार्ष्णिग्राहादिकृतः कोपो दाहविलोपादिः, स इह चिन्त्यते इत्यर्थः । इदमुत्तरं च प्रकरणमेकाध्यायगते । श्रीमूला.

बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारः ॥

बाह्यप्रकृतयः राष्ट्रमुख्यान्तपालादयः, आभ्यन्तरप्रकृतयः मन्त्रिपुरोहितादयः, तासां कोपः व्यलीकजनितश्चित्तविकारः, तस्य प्रतिविधानमुच्यते इति सूत्रार्थः । श्रीमूला.

क्षयव्ययलाभविपरिमर्शः ॥

क्षयः युग्यपुरुषापचयः, व्ययः हिरण्यधान्यापचयः, लाभः यानफलं भूम्यादिप्राप्तिः, तेषां विपरिमर्शः गौरवलाघवसंप्रधारणमभिधीयते इत्यर्थः । श्रीमूला.

बाह्याभ्यन्तराश्चाऽऽपदः ॥

बाह्यापदः बाह्यराष्ट्रमुख्यान्तपालाद्युत्पादिता विपदः, आभ्यन्तरापदः मन्त्रिपुरोहिताद्युत्थापिताः, तासां स्वरूपं प्रतिविधानं चोपदिश्यते इत्यर्थः । श्रीमूला.

दूष्यशत्रुसंयुक्ताः ॥

दूष्याः कृत्याः पौरजानपदास्तन्मुख्याश्च, शत्रवः सहजकृत्रिमादयः, तत्संयुक्ताः तदुत्पादिताः आपदः इति विशेष्यमनुवर्तते । ता इहोच्यन्ते स्वरूपतः प्रतिविधानतश्चेत्यर्थः । श्रीमूला.

अर्थानर्थसंशययुक्ताः ॥

अर्थः मित्रहिरण्यभूम्यादिः, अनर्थः तन्नाशः शरीरनाशश्च, संशयः अर्थप्राणयोः संदेहः, तैर्युक्ता आपदः उच्यन्ते इत्यर्थः । इदमुत्तरं च प्रकरणमेकाध्यायगतम् । श्रीमूला.

तासामुपायविकल्पजाः सिद्धयः ॥

तासां पूर्वोक्तानामापदां उपायविकल्पजाः, उपायाः प्रशमार्थाः सामादयः, तेषां विकल्पः प्रयोगभेदः, तज्जनिताः सिद्धयः प्रतीकारा उच्यन्ते इत्यर्थः । श्रीमूला.

इत्यभियास्यत्कर्म नवममधिकरणम् ॥

एवं द्वादशप्रकरणमभियास्यत्कर्माख्यं नवममधिकरणं समुद्दिष्टमित्यर्थः । श्रीमूला.

स्कन्धावारनिवेशः ॥

अथ दशमे सांग्रामिकेऽधिकरणे प्रथमं सूत्रम्—स्कन्धावारनिवेशः इति । सैन्यावासस्थानं स्कन्धावारः, तस्य निवेशः निर्माणविधिरुच्यते इत्यर्थः । श्रीमूला.

**स्कन्धावारप्रयाणम् ॥**

स्कन्धावारस्य कटकस्य देशकालाद्यनुगुणसंनाहपुरः- सरमभिषेणनमुच्यते इत्यर्थः। इदमुत्तरं च प्रकरणमेकाध्यायगतम्। श्रीमूला.

**बलव्यसनावस्कन्दकालरक्षणम् ॥**

अमानितविमानितादीनि बलव्यसनानि, अवस्कन्दकालाः दीर्घकान्तारानुदकाद्यध्वगमनकालाः, तेभ्यः सैन्यसंरक्षणमुच्यते इत्यर्थः। श्रीमूला.

**कूटयुद्धविकल्पाः ॥**

कूटयुद्धं नाम कपटयुद्धं बलव्यसनावस्कन्दकालादिच्छिद्रमुपलभ्य शत्रुहिंसनम्, तस्य विकल्पाः भेदाः कथ्यन्ते इत्यर्थः। एतदादिप्रकरणत्रयं एकाध्यायगतम्। श्रीमूला.

**स्वसैन्योत्साहनम् ॥**

आत्मयोधानां संग्रामगुणसंकीर्तनादिना युद्धोत्साहजननमुच्यते इत्यर्थः। श्रीमूला.

**स्वबलान्यबलव्यायोगः ॥**

स्वसैन्यस्य परसैन्यापेक्षया व्यायोगः विशिष्टमायोजनं व्यवस्थापनं दिक्सूर्यवाताद्यानुगुण्यं यथा स्यात् तथा व्यूहरचनमिति यावत्। तदिहोच्यते इत्यर्थः। श्रीमूला.

**युद्धभूमयः ॥**

युद्धानुगुणाः समस्थिराभिकाशादिलक्षणाः भूमयः कथ्यन्ते इत्यर्थः। श्रीमूला.

**पत्त्यश्वरथहस्तिकर्माणि ॥**

पत्तिः पदातिः, तदादीनां व्यापारा उच्यन्ते इत्यर्थः। श्रीमूला.

**पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः ॥**

पक्षौ पञ्चव्यूहात्मना स्थाप्यमानस्य बलस्य बहिः पुरस्तात्कोट्यौ, कक्षौ पश्चादन्तःपार्श्वे, उरस्यं मध्यम्, एषां पञ्चानां व्यूहविशेषाणां बलपरिमाणानुगुण्येन व्यूहविभागोऽभिधीयते इत्यर्थः। एतदादिप्रकरणत्रयं एकाध्यायगतम्। श्रीमूला.

**सारफल्गुबलविभागः ॥**

सारबलं पितृपैतामहत्वादिदण्डसंपद्युक्तम्, तद्विपरीतं भीरुकं वा फल्गुबलम्, तयोर्विभागो विभज्यावस्थापनं चिन्त्यते इति सूत्रार्थः। श्रीमूला.

**पत्त्यश्वरथहस्तियुद्धानि ॥**

स्पष्टार्थम्। श्रीमूला.

**दण्डभोगमण्डलासंहतव्यूहव्यूहनम् ॥**

दण्डव्यूहः भोगव्यूहः मण्डलव्यूहः असंहतव्यूहः इत्येतेषां प्रकृतिव्यूहानां तद्विकृतिव्यूहानां च रचनमभिधीयते इत्यर्थः। इदमुत्तरं च प्रकरणमेकाध्यायगतम्। श्रीमूला.

**तस्य प्रतिव्यूहसंस्थापनम् ॥**

तस्य दण्डादिव्यूहनस्य अर्थात् दण्डादिव्यूहानां प्रतिव्यूहस्थापनमुच्यते इत्यर्थः। श्रीमूला.

**इति साङ्ग्रामिकं दशममधिकरणम् ॥**

सङ्ग्राममधिकृत्य प्रवृत्तं साङ्ग्रामिकं, तदाख्यं दशममधिकरणं इत्थं त्रयोदशप्रकरणकं समुद्दिष्टमित्यर्थः। श्रीमूला.

**भेदोपादानानि ॥**

अथैकादशे संघवृत्तेऽधिकरणे प्रथमं सूत्रम्- भेदोपादानानीति। भेदः संघविश्लेषोपायः, तस्य उपादानानि प्रयोगाः उच्यन्ते इत्यर्थः। श्रीमूला.

**उपांशुदण्डः ॥**

तूष्णींदण्डः निगूढवधः उच्यते इत्यर्थः। श्रीमूला.

**इति संघवृत्तमेकादशमधिकरणम् ॥**

संघः शस्त्रोपजीविनां संघीभावैकबलानां राजाविधेयानां समूहः, तस्मिन् वृत्तं तद्विधेयीकरणानुकूलो राज्ञो व्यापारः, तत्प्रतिपादकं एवं द्विप्रकरणमेकादशमधिकरणं समुद्दिष्टमित्यर्थः। एतच्चैकाध्यायम्। श्रीमूला.

**दूतकर्म ॥**

अथ आबलीयसं नाम द्वादशमधिकरणम्। अबलीयान् दुर्बलतरः, तस्येदं आबलीयसं प्रबले संधिमनिच्छति दुर्बलतरस्य कृत्यम्। तदिह प्रतिपाद्यम्। तत्र प्रथमं सूत्रम्- दूतकर्मेति। दूताः नाम निसृष्टार्थाः परिमितार्थाः

शासनहराः इति त्रिविधाः, तेषां व्यापारोऽभिधीयते इत्यर्थः। श्रीमूला.

**मन्त्रयुद्धम् ॥**

मन्त्रः प्रज्ञोत्कर्षः, तेन युद्धं मन्त्रयुद्धम्। तच्च शत्रुषड्वर्गवशगानेकभूमिपतिनाशोदाहरणादिना शत्रोर्मतिमुपजनय्य वञ्चनम्। तदिहोच्यते इति सूत्रार्थः। श्रीमूला.

**सेनामुख्यवधः ॥**

सेना चतुरङ्गबलं, तत्र मुख्याः सेनापत्यादयः, तेषां वधोपायः उच्यते इत्यर्थः। इदमुत्तरं चैकाध्यायगतम्। श्रीमूला.

**मण्डलप्रोत्साहनम् ॥**

मण्डलं मित्रादिमण्डलं, तस्य प्रोत्साहनं आत्मरक्षार्थमुद्योजनं विजिगीषुणा कर्तव्यमुच्यते इत्यर्थः। श्रीमूला.

**शस्त्राग्निरसप्रणिधयः ॥**

शस्त्राग्निरसानां गूढप्रयोगाः उच्यन्ते इत्यर्थः। इदमुत्तरं चैकाध्यायगतम्। श्रीमूला.

**विवधासारप्रसारवधः ॥**

विवधः पर्याहारः उपचारात् पर्याहारवाही स्वप्रजासकाशलभ्यायभारानेता, आसारः सुहृद्बलम्, प्रसारः वनात् यवसेन्धनाहर्ता, तेषां वधः उच्यते इत्यर्थः। श्रीमूला.

**योगातिसंधानम् ॥**

योगः कपटोपायः देवतागृहप्रवेशाद्यवसरे शत्रोरुपरि शिलायन्त्रमोक्षणभित्तिपातनादिः, तेन अतिसंधानमुच्यते इत्यर्थः। एतदादिप्रकरणत्रयमेकाध्यायान्तर्गतम्। श्रीमूला.

**दण्डातिसंधानम् ॥**

दण्डः वधपरिक्लेशार्थहरणादिः, तेन शत्रोरभिभवनमुच्यते इत्यर्थः। श्रीमूला.

**एकविजयः ॥**

एकेन सहायनिरपेक्षेणैव विजिगीषुणा विजयः शत्रोरभिभवः उच्यते इत्यर्थः। श्रीमूला.

**इत्याबलीयसं द्वादशमधिकरणम् ॥**

एवं नवप्रकरणमाबलीयसं द्वादशमधिकरणं समुद्दिष्टमित्यर्थः। श्रीमूला.

**उपजापः ॥**

अथ त्रयोदशं दुर्गलम्भोपायाख्यमधिकरणमारभ्यते। दुर्गस्य परकीयस्य प्राप्त्युपायोऽस्मिन्नधिकरणे उपदिश्यते। तत्र प्रथमं सूत्रम्– उपजाप इति। उपजापः भेदः उच्यते इत्यर्थः। श्रीमूला.

**योगवामनम् ॥**

योगः मुण्डजटिलादिवेषान्यत्वग्रहणं, तेनोपायेन वामनं शत्रोर्दुर्गान्निष्क्रामणमभिधीयते इत्यर्थः। श्रीमूला.

**अपसर्पप्रणिधिः ॥**

अपसर्पाः गूढपुरुषाः, तेषां प्रणिधानं शत्रुविषये निवासनमुच्यते इत्यर्थः। श्रीमूला.

**पर्युपासनकर्म ॥**

परदुर्गं परितः उपासनकर्म सैन्यनिवासनव्यापारः उच्यते इत्यर्थः। इदमुत्तरं चैकाध्यायगतम्। श्रीमूला.

**अवमर्दः ॥**

अवमर्दः परदुर्गग्रहणं, तत् कदा केन प्रकारेण कर्तव्यमित्ययमर्थोऽभिधीयते इत्यर्थः। श्रीमूला.

**लब्धप्रशमनम् ॥**

विजिगीषुणा लब्धस्य शत्रुदुर्गादेः प्रशमनं लब्धप्रशमनम्। तच्च दुर्गादिवासिनां अपूर्वभूपतिविषयशङ्काद्यपोहनेन विजिगीषौ विस्रम्भजननम्। तदभिधीयते इति सूत्रार्थः। श्रीमूला.

**इति दुर्गलम्भोपायस्त्रयोदशमधिकरणम् ॥**

एवं षट्प्रकरणं दुर्गलम्भोपायाख्यं त्रयोदशमधिकरणं समुद्दिष्टमित्यर्थः। श्रीमूला.

**परघातप्रयोगः ॥**

अथौपनिषदं चतुर्दशमधिकरणम्। उपनिषत् शत्रुजयोपायरहस्यं, तदधिकृत्य प्रवृत्तं औपनिषदम्। तत्र प्रथमं सूत्रम् – परघातप्रयोगः इति। शत्रुवधार्थं औषधप्रयोगः उच्यते इत्यर्थः। श्रीमूला.

**प्रलम्भनम् ॥**

औषधमन्त्रप्रयोगद्वारेण क्षुत्प्रतीकारविरूपकरणादिना शत्रुवञ्चनमुच्यते इत्यर्थः। अद्भुतोत्पादनं भैषज्यमन्त्रप्रयोगः इति द्विधा विभज्य प्रकरणमिदं अध्यायद्वयेन

वितन्यते । तत्र मार्जारोष्ट्रादिचक्षुःसाधितचूर्णादिकं भैषज्यं दृश्यादृश्यकरणादिसाधनम्, 'बलिं वैरोचनम्' इत्यादिर्मन्त्रः । श्रीमूला.

**स्वबलोपघातप्रतीकारः ॥**

स्वबलस्य स्वसैन्यस्य परप्रयुक्तविषाम्बुदूषणादिनिमित्तो य उपघातः तस्य प्रतीकारोऽभिधीयते इत्यर्थः । श्रीमूला.

**इत्यौपनिषदं चतुर्दशमधिकरणम् ॥**

एवं त्रिप्रकरणं औपनिषदं चतुर्दशमधिकरणं समुद्दिष्टमित्यर्थः । औपनिषदिकमित्यपि पाठः । तदाऽणन्ताट्ठन् । श्रीमूला.

**तन्त्रयुक्तयः ॥**

अथान्तिमं तन्त्रयुक्तिर्नाम पञ्चदशमधिकरणम् । तन्त्रं तन्त्रावापात्मकमिदमर्थशास्त्रं, तस्य युक्तिः व्याख्यानोपायभूतो न्यायः, स इह प्रतिपाद्यते । तत्रेदं सूत्रम्— तन्त्रयुक्तय इति । तन्त्रोपयुक्ता युक्तयः अधिकरणविधानादयो द्वात्रिंशदस्मिन् प्रकरणेऽभिधीयन्ते इति सूत्रार्थः । श्रीमूला.

**इति तन्त्रयुक्तिः पञ्चदशमधिकरणम् ॥**

एवं एकप्रकरणकमिदं तन्त्रयुक्त्यधिकरणं समुद्दिष्टमित्यर्थः । श्रीमूला.

**शास्त्रसमुद्देशः पञ्चदशाधिकरणानि सपञ्चाशदध्यायशतं साशीति प्रकरणशतं षट् श्लोकसहस्राणीति ॥**

अथ सर्वप्रकारेयत्ताख्यानेन कृत्स्नस्य शास्त्रस्य समुद्देशमाह— शास्त्रसमुद्देश इत्यादि । श्लोक इह द्वात्रिंशत् अक्षराणि, येषां समुदायः एको ग्रन्थः इति गण्यते । शेषं स्पष्टम् । श्रीमूला.

**सुखग्रहणविज्ञेयं तत्त्वार्थपदनिश्चितम् ।**
**कौटिल्येन कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ॥**

**इति कौटिलीयार्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे प्रथमोऽध्यायः राजवृत्तिः ॥**

व्युत्पित्सुप्ररोचनार्थं स्वशास्त्रस्य तन्मृग्यगुणपुष्कलतां श्लोकेनाह— सुखेत्यादिना । सुखं क्लेशासहं ग्रहणं बुद्धिः येषां ते सुखग्रहणाः सुकुमारमतयः, तैरपि विज्ञेयं विज्ञातुं शक्यम् । तदन्यविज्ञेयत्वं तु कैमुत्यसिद्धम् । तत्त्वार्थपदनिश्चितम्, तत्त्वं अर्थस्य याथात्म्यम्, अर्थः शब्दाभिधेयः, पदं वाचकशब्दः, तत्त्वतः अर्थतः पदतश्च निश्चितम् । किं यथाप्रतिपादितमेवार्थस्य याथात्म्यं उतान्यदपि स्यादिति संदेहानुत्थापकं तत्त्वनिश्चितम्, अर्थपदयोरन्यूनानतिरिक्ततया संदेहाजनकं अर्थपदनिश्चितमिति बोद्धव्यम् । तत्त्वार्थपदानि निश्चितानि यस्मिन्निति बहुव्रीहिर्वा । तदा तु निश्चितशब्दस्य परनिपातः आहिताग्न्यादित्वात्साध्यः ।

इतीति आद्यध्यायसमाप्तिवाक्यम् । तत्र प्रान्ते राजवृत्तिरिति प्रतिपाद्यसूचनम्, एतदध्यायसंक्षिप्तस्य कृत्स्नशास्त्रार्थस्य राजसंबन्धिव्यापारात्मकत्वात् । श्रीमूला.

धर्मेण प्रजारक्षणं राज्ञः कर्तव्यम्

*** [1]स्वधर्मः स्वर्गायाऽऽनन्त्याय च । तस्यातिक्रमे लोकः संकरादुच्छिद्येत ॥**

**तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत् ।**
**स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति ॥**

दण्डनीतेर्लक्षणं प्रयोजनं च, दण्डप्रयोजनम्, दण्डप्रणयनविधिः

**[2]आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः । तस्य नीतिर्दण्डनीतिः अलब्धलाभार्था लब्धपरिरक्षणी रक्षितविवर्धनी वृद्धस्य तीर्थेषु प्रतिपादनी च । तस्यामायत्ता लोकयात्रा । तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात् ॥**

दण्डनीतेः स्वरूपादिकमाह— आन्वीक्षिकीत्यादि । योगक्षेमौ साधयतीति योगक्षेमसाधनः दण्डः दमः सामादिषु प्रधानभूतः उपायविशेषः । अथवा दण्डस्थत्वात् राजा दण्डः । सति दण्डभये लोक आन्वीक्षिक्या-

* व्याख्यानं 'राजशिक्षा' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) कौ. १।३.

(२) कौ. १।४.

दिषु सम्यक् प्रवर्तते, न त्वितरथेति दण्डस्याऽऽन्वीक्षिक्यादियोगक्षेमसाधनत्वं विज्ञेयम् । अत एवाऽऽहुः– ' सर्वो दण्डजितो लोको दुर्लभो हि शुचिः क्वचित् । दण्डस्य हि भयात्कृत्स्नं जगद्भोगाय कल्पते ॥ ' इति । तस्य नीतिः नयनं अनुष्ठानं अर्थात् तदुपदेशशास्त्रम् । अलब्धलाभार्थेत्यादि दण्डनीतेः फलकथनम् । दण्डेन ह्यलब्धं लभ्यते, लब्धं परिरक्ष्यते, परिरक्षितं वर्ध्यते, वर्धितं च तीर्थेषु पुण्यक्षेत्राध्वरादिषु विनियुज्यते । तस्मादिति । -तस्मात् लोकवृत्तेर्दण्डनीत्यधीनत्वात् नित्यं उद्यतदण्डः -सर्वदा दण्डप्रणयनोद्युक्तः स्यात्, अर्थात् राजा । श्रीमूला.

**न ह्येवंविधं वशोपनयनमस्ति भूतानां यथा दण्ड इत्याचार्याः ॥**

न हीत्यादि । एवंविधं यथा दण्डस्तथाविधं वशोपनयनं अनायत्तायत्तीकरणसाधनं न ह्यस्ति नास्त्येव । श्रीमूला.

**नेति कौटिल्यः । तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः । मृदुदण्डः परिभूयते । यथार्हदण्डः पूज्यः । सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति । दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग पुनर्गृहस्थान् । अप्रणीतो हि मात्स्यन्यायमुद्भावयति । बलीयानबलं हि ग्रसते दण्डधराभावे । तेन गुप्तः प्रभवतीति ॥**

तमिमं दण्डसामान्यश्लाघावादमाचार्याणां प्रतिषेधति- -नेति । तत्र कारणवचनम्– तीक्ष्णेत्यादिना । तीक्ष्णदण्डः उग्रदण्डः भूतानां उद्वेजनीयः उद्वेगजनकः । उद्विजन्तेऽस्मादित्यपादानेऽनीयर् । यथार्हदण्डः युक्तदण्डः देशकालपराधानुगुण्यप्रयुज्यमानदण्डः पूज्यः लोकबहुमान्यः । सा पूज्यता युक्तस्य दण्डस्य लोकाभ्युदयहेतुत्वादित्यभिप्रायवानाह – सुविज्ञातेत्यादि । सुविज्ञातप्रणीतः सुष्ठु शास्त्रतोऽवगत्य प्रयुक्तः । अयथावत् प्रणीतस्याप्रणीतस्य वा दण्डस्य सर्वानर्थहेतुत्वमाह– दुष्प्रणीत इत्यादिना । -कामक्रोधाभ्यामज्ञानात् दुष्प्रणीतः कामात् क्रोधादज्ञानाच्चायथावत् प्रयुक्तः । किं पुनर्गृहस्थान् ? संयतेन्द्रियानपि यः कोपयति सः असंयतेन्द्रियान् कोपयतीति किमु वक्तव्यम् ? अङ्गेत्युपदेश्यसंबोधनम् । मात्स्यन्यायमिति । महान् हि मत्स्यः क्षुद्रं मत्स्यं ग्रसते इति बलवता दुर्बलस्य यत्पीडनं स मात्स्यन्यायः इत्युच्यते । बलीयानित्यादि । दण्डधराभावे दण्डप्रणेतुरभावे । तेन गुप्तः प्रभवति सुप्रणीतेन दण्डेन रक्षितः अर्थात् दुर्बलः प्रभवति बलयुक्तो भवति । श्रीमूला.

**चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः ।**
**स्वधर्मकर्माभिरतो वर्तते स्वेषु वेश्मसु ॥**

अध्यायान्ते श्लोकमाह– चतुर्वर्णेत्यादि । स्वधर्मकर्माभिरतः वर्णाश्रमधर्मकर्मानुष्ठानपरः स्वेषु वेश्मसु वर्तते स्वास्थ्येन वसतीत्यर्थः । दण्डपालनाभावे हि स्वगृहेऽपि स्वास्थ्यवृत्तिर्दुर्लभेति । श्रीमूला.

धर्मार्थकामरूपत्रिवर्गसेवनं परस्पराविरोधेन

**(१)धर्माविरोधेन कामं सेवेत, न निःसुखः स्यात् । समं वा त्रिवर्गमन्योन्यानुबन्धम् । एको ह्यत्यासेवितो धर्मार्थकामानामात्मानमितरौ च पीडयति ॥**

धर्मेत्यादि । धर्मार्थाविरोधेन धर्मार्थयोरबाधेन कामं तृतीयपुरुषार्थम् । वेति पक्षान्तरे । तच्च अन्योन्यानुबन्धं त्रिवर्गं समं सेवेतेति । परस्परसंसृष्टान् धर्मार्थकामांस्तुल्यमात्रया सेवेतेत्यर्थः । सममसेवने को दोषस्तत्राऽऽह– धर्मार्थकामानां मध्ये एकः अन्यतमः अत्यासेवितः अतिमात्रं व्यसनितया सेवितः सन् इतरौ अर्थकामौ धर्मकामौ धर्मार्थौ वा पीडयति हि । श्रीमूला.

त्रिवर्गे अर्थप्राधान्यम्

**अर्थ एव प्रधान इति कौटिल्यः, अर्थमूलौ हि धर्मकामाविति ॥**

धर्मादीनां समप्राधान्यमरोचयमान आह– अर्थ एवेति । एवकारेण धर्मकामयोरप्राधान्यमुक्तम् । तत्र हेतुरुच्यते– अर्थमूलौ हीत्यादिना । अर्थमूलौ अर्थसाध्यौ । श्रीमूला.

(१) कौ. १।७.

सर्ववर्णाश्रमधर्मरक्षणं राजधर्मः

* [1]चतुर्वर्णाश्रमस्यायं लोकस्याऽऽचाररक्षणात् ।
नश्यतां सर्वधर्माणां राजधर्मः प्रवर्तकः ॥
राज्ञः स्वधर्मः स्वर्गाय प्रजा धर्मेण रक्षितुः ।
अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ॥
दण्डो हि केवलो लोकं परं चेमं च रक्षति ।
राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः ॥

## चाणक्यसूत्राणि

दण्डस्य दण्डनीतेश्च प्रयोजनम्

[2]अलब्धलाभादिचतुष्टयं राज्यतन्त्रम् ॥
राज्यतन्त्रायत्तं नीतिशास्त्रम् ॥
राज्यतन्त्रेष्वायत्तौ तन्त्रावापौ ॥
तन्त्रं स्वविषयकृत्येष्वायत्तम् ॥
[3]अमित्रो दण्डनीत्यामायत्तः ॥
दण्डनीतिमधितिष्ठन् प्रजाः संरक्षति ॥
दण्डः संपदा योजयति ॥
दण्डाभावे मन्त्रिवर्गाभावः ॥
न दण्डादकार्याणि कुर्वन्ति ॥
दण्डनीत्यामायत्तमात्मरक्षणम् ॥
दण्डे प्रतीयते वृत्तिः ॥

धर्मकामयोः मूलमर्थः

अर्थमूलौ धर्मकामौ ॥

## चाणक्यनीतिदर्पणः

यथा राजा तथा प्रजाः

[4]राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥

## चाणक्यसारसंग्रहः

अनाथानां अन्यायपरिभूतानां च राजा शरणम्

[1]अनाथानां दरिद्राणां बालवृद्धतपस्विनाम् ।
अन्यायपरिभूतानां सर्वेषां पार्थिवो गतिः ॥

## चाणक्यराजनीतिशास्त्रम्

धर्मेण राष्ट्रपालनविधिः

[2]स्वं राष्ट्रं पालयेन्नित्यं सत्यधर्मपरायणः ।
निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥
[3]पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः ॥
[4]दुग्ध्वा हि भुज्यते क्षीरं गां विक्रीय न भुज्यते ।
तद्वद्दुग्धप्रयोगेण भोज्यं राष्ट्रं महीभुजा ॥
ऊर्ध्वं न क्षीरविच्छेदात्पयो धेनोरवाप्यते ।
एवं राष्ट्रादियोगेन पीडितान्नाऽऽप्यते बलिः ॥
तस्मात्सर्वप्रयत्नेन महीं योगेन पालयेत् ।
पालकस्य यशो लोके बलमायुश्च वर्धते ॥
लिङ्गपूजनधर्मात्मा गोब्राह्मणहिते रतः ।
प्रजाः पालयितुं शक्तः स राजा यो जितेन्द्रियः ॥
राजा धर्मेण कुर्वीत धनसंचयमेकतः ।
अन्यतस्तेन सततं वर्धयेदुत्तमान् द्विजान् ॥
ओंकारशब्दो विप्राणां यस्य राष्ट्रे प्रवर्तते ।
स राजा हि भवेद्योगी व्याधिभिश्च न पीड्यते ॥
[5]एतदर्थं हि सौमित्रे राज्यमिच्छन्ति भूभृतः ।
यदेषां सर्वकार्येषु वाचो न प्रतिहन्यते ॥

---

* 'चतुर्वर्णाश्रमस्यायं' इत्यादिश्लोकत्रयस्य व्याख्यानं 'व्यवहारदर्शनम्' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) कौ. ३।१.
(२) चासू. ४२–४५.
(३) चासू. ७८–८३, ८९, ९१.
(४) चाद. १३।७; चासा. २।२.

(१) चासा. १।८२.
(२) चाशा. ४।२ ; चासा. २।१६ स्वं राष्ट्रं पालयेन्नित्य (राष्ट्रं पालयते नित्यं) क्षितिं धर्मेण (पतिधर्मेण).
(३) चाशा. ४।३ ; चासा. २।१७ न यथाऽङ्गारकारकः (यथा जानाति सारताम्).
(४) चाशा. ४।४–९.
(५) चाशा. ४।१६–२३.

मनस्तापं न कुर्वीत विपदं प्राप्य पार्थिवः ।
आत्मनश्चोदयं शंसेन्न स्याद्दुःखी न वा सुखी ॥
धीराः कृच्छ्रमपि प्राप्ता न भवन्ति विषादिनः ।
प्रविश्य वदनं राहोः किं नोदेति पुनः शशी ॥
लङ्घयेच्छास्त्रमर्यादां हेतुवादेन यो नरः ।
स नश्यति पुनः क्षिप्रमिह लोके परत्र च ॥
अक्षेषु मृगयायां च स्त्रीषु पाने वृथाऽटने ।
निद्रायां च निबन्धेन क्षिप्रं नश्यति भूपतिः ॥
जात्यन्धोऽपि वरं राजा न तु शास्त्रविवर्जितः ।
अन्धः पश्यति चारेण शास्त्रहीनो न पश्यति ॥
गान्धर्वं नृत्तमालेख्यं वाद्यं च गणितं कलाः ।
अर्थशास्त्रं धनुर्वेदं यत्नाद्रक्षेन्महीपतिः ॥
अर्जयेज्ज्ञानमर्थांश्च पुमानमरवत्सदा ।
केशेष्वेव गृहीतः सन् मृत्युना धर्ममाचरेत् ॥
[1]येनार्जिताः स्त्रियो भृत्याः पुत्रमित्रादिबान्धवाः ।
तेनार्जिता समस्तेयं चतुरन्ता वसुंधरा ॥
वश्याः पुत्राश्च भृत्याश्च मन्त्रिणश्च पुरोहिताः ।
इन्द्रियाणि च गुप्तानि तस्य श्रीर्वृणुते हितम् ॥
[2]उद्योगः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
उत्साहः षड्विधो यस्य तस्य देवोऽपि शङ्कते ॥
[3]क्वचिद्वित्तं क्वचिद्भूमिं
क्वचिद्भृत्यां क्वचिद्बलम् ।
दत्त्वा तु साधयेत्कार्यं
न हानिं परिकल्पयेत् ॥

राजा अनाथादीनां शरणम्

अनाथानां नाथो गतिरगतिकानां व्यसनिनां
विनेता भीतानामभयमधृतीनां भरवशः ।
सुहृद् बन्धुः स्वामी शरणमुपकारी वरगुरुः
पिता माता भ्राता जगति पुरुषो यः स नृपतिः ॥

(१) चाशा. ४।२६–२७.
(२) चाशा. ४।२८ ; चासा. २।३ उद्योगः (उद्यमः) बुद्धिः शक्तिः (बलं बुद्धिः) उत्तरार्धे (षडेते यस्य तिष्ठन्ति तस्य देवोऽपि शङ्कितः ॥).
(३) चाशा. ४।२९–३०.

[1]उत्खातान् प्रतिरोपयन् कुसुमितां-
श्चिन्वल्लँघून् वर्धयन्
अत्युच्चान् नमयन् पृथून् विदलयन्
विश्लेषयन् संहतान् ।
तीक्ष्णान् कण्टकिनो बहिर्नियमयन्
स्वान् रोपितान् पालयन्
मालाकार इव प्रयोगकुशलो
राज्ये चिरं तिष्ठति ॥

[2]घासमिन्धनमन्नाद्यं शस्त्राणि विविधानि च ।
दुर्गे प्रवेशनीयानि सततं शत्रुशङ्कया ॥

## मनुः

राज्ञः वृत्तं संभवः परमा सिद्धिश्च– स्वधर्मस्थापनाय भूतभोगप्रयोजनाय च ईश्वरेण दण्डः सृष्टः

* [3]राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।
संभवश्च यथा तस्य सिद्धिश्च परमा यथा ॥
ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥
[4]तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥

(१) उक्ता राजोत्पत्तिः । दण्डोत्पत्तिरिदानीमुच्यते । तस्मा इदं तदर्थम् । राज्ञः प्रयोजनसिद्ध्ये दण्डमसृज-

* श्लोकद्वयस्यास्य व्याख्यासंग्रहः 'राजशब्दार्थविचारः' इत्यस्मिन् प्रकरणे द्रष्टव्यः । राज्ञः संभवः 'राज्ञः प्रयोजनोत्पत्तिप्रशंसाः' इत्यस्मिन् प्रकरणे संगृहीतः ।

(१) चाशा. ४।३१.
(२) चाशा. ५।२५.
(३) मस्मृ. ७।१–२. शेषः स्थलादिनिर्देशः 'राजशब्दार्थविचारः' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।
(४) मस्मृ. ७।१४ ; मेधा. तस्यार्थे (तदर्थं) ; रार. ६२ तस्यार्थे (तस्यार्थं) ; पमा. ३९३ मात्मजम् (मात्मनः) ; राप्र. २८३ मेधावत् ; २९२.

दीश्वरः प्रजापतिः । को राज्ञोऽर्थो दण्डेन ? उच्यते । गोप्तारं सर्वभूतानाम् । गोप्ता रक्षिता दण्ड एव । न दण्डेन विना राजा रक्षितुं शक्नोति । अतो राजत्वसिद्ध्यर्थं एव दण्डः सृष्टः । धर्ममात्मजं ब्रह्मतेजोमयं इति दण्डस्तुतिः । न यागदानादिः धर्मः, किं तर्हि ? दण्ड एव । न चायं प्राणधनहारित्वादधर्मो विज्ञेयः, अपि त्वेष एव धर्मः । आत्मजः शरीरादेव जातः प्रजापतेः । न च पाञ्चभौतिकः, किं तर्हि ? ब्रह्मणो यत् केवलं तेजस्तेन निर्मितः । पूर्वं राजसृष्टेः । * मेधा.

( २ ) राज्ञः प्रजापालनाख्यप्रयोजनसिद्ध्यर्थं सर्वप्राणिनां च रक्षितारं चौराद्युपद्रवसंरक्षणेन च सम्यग्धर्मघटनाद्धर्मं स्वशरीराच्चोद्भूतं ब्राह्मणस्य यत्तेजस्तेन निर्मितं दमनाद्दण्डं पूर्वं प्रजापतिः सृष्टवान्, तं विना राजत्वानुपपत्तेः । गोरा.

( ३ ) तस्यार्थे राजार्थम् । धर्मं धर्मांशोद्भवं विधिम् । स्वस्य सुतं अत एव ब्रह्मतेजोमयं ब्रह्मणस्तेजसा सृष्टम् । दण्डं दमकम् । ईश्वरः ब्रह्मा । मवि.

( ४ ) तस्य राज्ञोऽर्थे रक्षणादिप्रयोजनार्थं सर्वभूतानामनुशासनरूपं धनप्राणधिक्शब्दहस्ताद्याहरणात्मकं धर्मं, तद्धेतुत्वात् । आत्मजं ब्रह्मणस्तेजसा निर्मितं ब्रह्मतेजोमयम् । पूर्वं च राजसृष्टेः । दण्डमिति कर्तृकरणव्युत्पत्त्या क्वचिद्राजा क्वचिदनुशासनम् । मच.

( ५ ) अथ राज्ञः सहायं दण्डं प्रस्तौति– तस्येति । तस्यार्थे तस्य राज्ञः कार्ये निमित्ते । गोप्तारं गुप्तिं करिष्यन्तम्, सर्वभूतधर्मगुप्त्यर्थमिति यावत् । ब्रह्मतेजोमयं परमात्मशक्तिमयम्, परमात्मशक्तिमुपादायेति यावत् । धर्मात्मकं दण्डमसृजत् धर्मं स्वस्माद्दण्डरूपेण ससर्ज । पूर्वं युगारम्भे । ईश्वरः प्रजापतिः । एतदुक्तं भवति– दण्डस्याऽऽत्मा धर्मः, शरीरं ब्रह्मतेजोमयम्, ईश्वरो जनयितेति । ‡ नन्द.

* ममु., राप्र. मेधागतम् ।

‡ भाच. नन्दगतम् ।

**¹तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।**
**भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥**

( १ ) तस्य दण्डस्य भयात् । संबन्धमात्रविवक्षायां भयहेतुत्वं नास्तीति षष्ठी । दण्डभयात् स्थावराणि भूतानि भोगाय फलकुसुमच्छायादिभिर्भोगार्थं कल्पन्ते, तत्समर्थानि भवन्ति । यो हि स्थावरः फलं न ददाति स परिशोष्यते । न चेत् परिशुष्यति, सर्वतो व्याप्तदेशत्वाच्छित्त्वाऽङ्गारीक्रियते । एतया वृक्षोपमया दण्ड्यस्य राजापथ्यकारिणः पुरुषस्यैवं कर्तव्यम्, च्छेदनमूलोत्पाटनादिना दण्डः प्रणेयः । स्थावरग्रहणं स्तुत्या दृष्टान्तार्थम्, ईदृशोऽयं दण्डो यत् स्थावरा अपि दण्ड्यन्ते, किं पुनश्चराः ? न तु स्थावराणां दण्डोऽयमित्येषा बुद्धिरस्ति । स्वधर्मान्न चलन्ति अकाले न पुष्यन्ति न प्रसुवते । * मेधा.

( २ ) 'अन्तःसंज्ञा भवन्त्येते' इति स्थावराणामपि चैतन्यस्योक्तत्वात् छेदनादिदण्डभयेन वृक्षादिस्थावराण्यपि फलपुष्पादिद्वारेणोपभोगार्थं संपद्यन्ते नियतकालं पुष्पादिदानव्यवस्थां नातिक्रामन्ति, किं पुनर्जङ्गमानि ? गोरा.

( ३ ) भोगाय कल्पन्ते अन्येषाम् । स्थावराणीत्युक्तं स्थावराणामपि पृथिव्यादीनां पृथ्वादिभिर्दण्डस्य धृतत्वात् । मवि.

( ४ ) तस्य दण्डस्य भयेन चराचराः सर्वे प्राणिनो भोगं कर्तुं समर्था भवन्ति, अन्यथा बलवता दुर्बलस्य धनदारादिग्रहणे तस्यापि तदपेक्ष्य बलिनेति कस्यापि भोगो न सिध्येत्, वृक्षादीनां स्थावरादीनां छेदने भोगासिद्धिः । तथा सतामपि नित्यनैमित्तिकस्वधर्मानुष्ठानमकरणे याम्ययातनाभयादेव । ममु.

( ५) किंच– तस्येति । भयाद्दण्डस्येत्यन्वयः । भोगाय कल्पन्ते समर्थाः ( भवन्ति ), चोराद्युपद्रवराहित्यात् । भृशदण्डस्य देशेऽधर्माभावाद्यथाकालं स्थावराणि द्रुमादयः

* राप्र. मेधागतम् ।

(१) **मस्मृ.** ७।१५ ; **रार.** ६२ कल्पन्ते (कल्प्यन्ते); **राप्र.** २८४,२९२.

फलशालीनीति भावः । तस्य राज्ञो भोगाय फलदानि भवन्ति, दण्डाद्यभावे छिद्यन्ते तानि । 'साधवः पाल्यन्ते दस्यवः छिद्यन्ते' इति मेधातिथिः । मच.

(६) दण्डं प्रशंसति– तस्येति । तस्य दण्डस्य भयात् । स्थावराणामपि दण्डो धारितो महात्मभिरिति-हासेषु श्रूयते । यथाऽगस्त्येन विन्ध्यस्य यथा वायुना शाल्मलीतरोर्हैमवतस्य । नन्द.

(७) तस्य राज्ञः भयात् स्वधर्मात् भूतानि न चलन्ति । भाच.

दण्डप्रणयनविधिः

* [1]तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः ।
यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥

[2]स राजा पुरुषो दण्डः स नेता शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥

(१) स एव वस्तुतो राजा । तस्मिन् सति राजशक्तिः । स एव पुरुषः । येन बलीयसोऽपि पुरुषान् स्त्रीवन्न्यक्कृत्य वशीकरोति । स नेता । कार्याणि तेन नीयन्ते । शासिता । शासनं राजाज्ञा, तस्याः शासनीभावः दण्डे सति । धर्मतः कर्तृत्वमौपचारिकम् । चतुर्णामाश्रमाणां यो धर्मस्तत्र स प्रतिभूरिव । यथा प्रतिभूश्चलितुं न ददाति, तद्वद्दण्डोऽपि । ‡ मेधा.

(२) दण्डहेतुतन्त्रद्रोहत्वस्य (?) स दण्ड एव राजा । स एवमनेनैव न्यायेन स एव पुरुषः अपराध्यानेता (?) । स एव च नेता दण्डनायकः सेनापत्यादिः । स एव चानुशासिता धर्माधिकृतो राजस्थानीयः । स एव चतुर्णामपि ब्रह्मचर्या(द्या)श्रमाणां धर्मानुष्ठाने प्रतिभूरिवानुष्ठापकत्वात् स्मृतः । गोरा.

(३) स दण्ड एव राजा, जनस्य तदधीनत्वात् । पुरुषः पुरुषात्मा । नेता नायकः प्रवर्तकः । शासिता एवं कुर्वित्युपदेष्टा । धर्मस्य धर्माचरणं कारयितुं प्रतिभूरिव । मवि.

(४) दण्डं विना राजाऽकिंचित्कर इति दण्डं स्तौति– स इति त्रिभिः । तस्मिन् सति राजशक्तिः । पुरुषः सर्वान् राजप्रभृतीन् स्त्रिय इव न्यक्कृत्य स्वधर्मे स्थापयतीति पुरून् बहून् धनाद्यादानेन स्यति तनूकरोतीति वा, राज्ञोऽपि दण्डश्रुतेः । नयति प्रापयति स्वस्वधर्मे राजाऽनेनेति नेता । 'एधांसि पचन्ति' इतिवद्वा कर्तृत्वोपचारः । प्रमादात् प्रच्याव्य सर्वान् शास्त्रानुसारेण शास्तीति शासिता । संन्यासिनामपि पातित्ये 'दास आमरणान्तिकः' इति राजभृत्यतास्मृतेराश्रमचतुष्टयग्रहः । धर्मस्य प्रतिभूः तत्संपादने प्रभुर्द्वितीयः । मच.

(५) पुनरपि श्लोकद्वयेन दण्डस्तुतिमाह– स इति । स दण्ड एव राजपुरुषः राजनियोगकरः । नेता तत्तत्कामानुष्ठापकः । शासिता आज्ञापकः । तेजो विना सकलकार्यासिद्धेः । नन्द.

[1]दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥

(१) न राजा शास्त्रं (? शास्यं) शास्ति कर्तव्याकर्तव्ययोर्विधिनिषेधयोः, किं तर्हि ? दण्ड एव । दण्ड एवाभिरक्षति बलवद्भयो दुर्बलान् । सुप्तेषु राजपुरुषेषु दण्डभयादेव न यथाकामं लोको व्यवहरति । द्विविधो दण्डः राजदण्डो यमदण्डश्च । * मेधा.

(२) यस्माद्दण्डः सर्वाः प्रजाः (शास्ति) आज्ञां करोति तस्मात्साधूक्तं शासितेति (इति) ज्ञेयम् । यस्मात् स एव प्रजा रक्षति ततो युक्तमुक्तं राजेति । निद्राणेष्वपि रक्षितृषु दण्ड एव जागर्ति, तद्भयेनैव चौरादीनामप्रवृत्तेः । दण्डमेव धर्महेतुत्वाद्धर्मं जानन्ति ।

---

* व्याख्यानसंग्रहः 'उपायाः– दण्डः' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

‡ ममु. मेधागतम् ।

(१) मस्मृ. ७।१६. शेषः स्थलादिनिर्देशः 'उपायाः– दण्डः' इत्यस्मिन्प्रकरणे द्रष्टव्यः ।

(२) मस्मृ. ७।१७ ; राक. ६ ; राप्र. २९२ ; नन्द. राजा पुरुषो (राजपुरुषो).

* मवि., भाच. मेधागतम् ।

(१) मस्मृ. ७।१८ ; राक. ६ ; रार. ६२ ; राप्र. २९२.

कारणे कार्योपचारः । ऐहिकपारत्रिकदण्डभयादेव धर्मानुष्ठानात् । * ममु.

( ३ ) किंच– शास्तीति । अभिरक्षति प्रमादादधर्मेभ्यः । सुप्तेषु प्रमत्तेषु । मच.

[१]समीक्ष्य स धृतः सम्यक्सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥

( १ ) धृतः प्रणीतः प्रवर्तितः । समीक्ष्य पूर्वोक्तदेशकालाद्यपेक्ष्य समीक्ष्य । रञ्जयति अनुरागं प्रजासु जनयति । विपरीतं प्रणीयमानो न केवलं स्वकार्यं न करोति, यावद्दुरुपयुक्तो विषवद्विनाशयत्यर्थं जनस्य । ‡ मेधा.

( २ ) स दण्डो देशकालादि विचार्य सम्यक् लोभादिपरित्यागेन कृतः सर्वाः प्रजाः सानुरागाः करोति । अविचार्य पुनः कृतो दृष्टादृष्टेभ्यः कर्तारं नाशयति । गोरा.

( ३ ) समीक्ष्य शास्त्रतो निरूप्य । मवि.

( ४ ) स दण्डः शास्त्रतः सम्यक् निरूप्य अपराधानुरूपेण देहधनादिषु धृतः सर्वाः प्रजाः सानुरागाः करोति। अविचार्य तु लोभादिना प्रयुक्तः सर्वाणि बाह्यार्थपुत्रादीनि नाशयति । सर्वत इति द्वितीयार्थे तसिः । ममु.

( ५ ) समीक्ष्य यथाशास्त्रम्। अनुरञ्जयति राजानं प्रत्यावर्जयति । सर्वतः सराष्ट्रसपशुद्रव्यसंचयं राजानं नाशयतीति भावः । मच.

[२]यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥

( १ ) अप्रणयनाद्दण्डस्य ये बलवत्तराः बलीयांसः बलेनाधिकाः महाप्राणतया शस्त्रहस्तमनुष्याः भूयस्त्वेन वा, ते दुर्बलानपक्ष्यन् शूले मत्स्यानिव । यथा मत्स्याः शूल्याः क्रियन्ते भोजनार्थमेवमशक्तो जनोऽधिकशक्तिभिरुपहीयेत धनशरीरदारहरणादिना । तस्माद्दण्डार्हानतन्द्रितोऽनलसो दण्डयेत् । ‘ कुतो मया समीक्षा शक्या कर्तुम् ? नैव दण्डं करोमि ’ इति नैव बुद्धिः कर्तव्या । * मेधा.

( २ ) शूले मत्स्यानिव अपक्ष्यन् पचेयुः । अविध्यन्निति क्वचित्पाठः । मवि.

( ३ ) यदि राजाऽनलसो भूत्वा दण्डप्रणयनं न कुर्यात्, तदा शूले कृत्वा मत्स्यानिव बलवन्तो दुर्बलानपक्ष्यन् । लृङन्तस्य पचिधातो रूपमिदम् । बलिनोऽल्पबलानां हिंसामकरिष्यन्नित्यर्थः । ‘ शूले मत्स्यानिवापक्ष्यन् ’ इत्येष मेधातिथिगोविन्दराजलिखितः पाठः । ‘ जले मत्स्यानिवाहिंस्युः ’ इति च पाठान्तरम् । अत्र बलवन्तो दुर्बलान् हिंस्युः इति मत्स्यन्याय एव स्यादित्युक्तम् । † ममु.

( ४ ) दण्डाकरणे दोषमाह– यदीति त्रिभिः । शूले मत्स्यान् शूलमारोप्यापक्ष्यन्निति क्रियातिपत्तिः । तेन यदि दण्डयिता राजा नाभविष्यत् सर्वाः प्रजाः बलिभिर्दस्युभिरनङ्क्ष्यन्निति । मच.

( ५ ) त्रिभिराह– यदीति । द्वितीयेनान्वयः । राजा अतन्द्रितः दण्ड्येषु दण्डं यदि न प्रणयेत् न प्रयोजयेत् तर्हि बलवत्तरः पुरुषो दुर्बलान् पुरुषान् अद्यात् लुम्पेत् । कानिव ? अपक्वान् शूले आरोपितान् मत्स्यानिव । भाच.

[१]अद्यात्काकः पुरोडाशं श्वा च लिह्याद्धविस्तथा ।
स्वाम्यं च न स्यात्कस्मिंश्चित्प्रवर्तेताधरोत्तरम् ॥

---

* गोरा. ममुगतम् ।

‡ नन्द., भाच. मेधागतम् ।

(१) **मस्मृ.** ७।१९ ; **राक.** ६ ; **रार.** ६२ स धृतः ( मध्यतः ) ; **राप्र.** २८४,२९२.

(२) **मस्मृ.** ७।२० ; **मवि.** ‘ वापक्ष्यन् ’ इत्यत्र ‘ वाविध्यन् ’ इति क्वचित्पाठः ; **ममु.** ‘ शूले मत्स्यानिवापक्ष्यन् ’ इत्यत्र ‘ जले मत्स्यानिवाहिंस्युः’ इति च पाठान्तरम् ; **राप्र.** २८४, २९२.

* गोरा. मेधागतम् ।

† राप्र. ममुगतम् ।

(१) **मस्मृ.** ७।२१; **मवि.** श्वा च लि ( श्वाऽवलि ) ; **राप्र.** २९२ मविवत्.

(१) श्वकाकादयोऽप्यत्यन्ताधमाः देवैः सह संस्पर्धेरन्। देवेभ्यो दातव्यं हविः चरुपुरोडाशादि, तत् ते अद्युर्यदि दण्डेन न निवार्येरन्। अन्यदपि यत् स्वाम्यं स्वस्वामिभावः स न स्यात्। जायापत्योः, पितापुत्रयोः। जायायाः पतिर्न स्यात्, स्वातन्त्र्येण स्त्रियः प्रवर्तेरन्। अधरोत्तरम्। यत् अधरं वृषलादि तत् उत्तरं प्रधानं स्यात्। यदुत्तरं ब्राह्मणादि तदवरतां निकृष्टतामियात्। शूद्रा धर्ममुपदिशेयुः। वैदिको धर्मो नानुष्ठीयेत। * मेधा.

(२) यदि दण्डो नाभविष्यत्तदा देवेभ्यः दत्तं अत्यन्तापसदः काकोऽपि पुरोडाशाख्यं हविरात्स्यत्। तथाऽत्यन्ताधमः श्वाऽपि यवागवादि हविरलेक्ष्यत्। न च कस्यचित् कस्मिंश्चित् स्वामित्वं भवेत्। ब्राह्मणक्षत्रियादीनां चोत्कर्षापकर्षवैपरीत्यं प्रवर्तेत। † गोरा.

(३) राज्ञा अप्रयुक्ते दण्डे कस्मिन्नपि वस्तुनि स्वाम्यं प्रभुत्वं न स्यात्। अधरोत्तरम्। अधरं प्रतिलोमजम्, उत्तरमनुलोमजम्, एवमधरोत्तरं प्रवर्तेत। भाच.

**'सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः।**
**दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते॥**

(१) स्वभावेनैव प्रकृत्यैव शुचिः शुद्धः धर्मार्थकामेषु, स तादृशो नरो दुर्लभः दुःखैर्लब्धुं शक्यः। किन्तु दण्डजितः दण्डेन जीयते पथि स्थाप्यते। तद्वशान्न यथाकामं प्रवर्तते। जगद्भोगायेति प्रागुक्तमेव। ‡ मेधा.

(२) सर्वोऽयं लोको दण्डेनैव नियमितः सन्मार्गेऽवतिष्ठते। स्वभावविशुद्धो हि मानुषः कष्टेन लभ्यते। तथा सर्वमिदं जगद्दण्डस्यैव भयात् आवश्यकभोजनादिरूपेऽपि भोगे समर्थं भवति। ममु.

(३) किंच, दण्डभयादेव शुचिर्नरः, न स्वतो रागादित्याह। दण्डस्येत्यादि पूर्वोक्तस्य निगमनम्। मच.

(४) दण्डप्रणयने हेतुमाह– सर्व इति। नन्द.

**'देवदानवगन्धर्वा रक्षांसि पतगोरगाः।**
**तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः॥**

(१) ये देवाः पर्जन्यो वायुरादित्य इत्यादयः भोगाय कल्पन्ते शीतोष्णवर्षैर्नियतैरोषधीः पाचयन्ति, तद्दण्डभयाशङ्किनः। अन्यथा किमिति सूर्याचन्द्रमसौ धातृपर्जन्यौ वा स्वस्मात् कार्यकालान्नियतान्न विचलेताम्? कदाचित् द्वे अहनी त्रीणि वा नोदियात् सूर्यः सति स्वातन्त्र्ये। दण्डात्तु बिभ्यन्नातिक्रामति मर्यादाम्। तथा च श्रुतिः– 'भयात् सूर्यः प्रतपति भयात्तपति चन्द्रमाः। भयादग्निश्च वायुश्च' इति। दानवादयश्च यदिदमखिलमहर्निशं न जगदुपघ्नन्ति, दण्डमाहात्म्यमेतत्। पतङ्गवयांसि गृहमण्डनाः शुकसारिकादयो यद्बालानामक्षिणी नोत्पाटयन्ति, श्येनकाककङ्कगृध्रादयो यज्जीवतो नादन्ति, तदप्येवमेव। उरगाः सर्पाः केवलं क्रोधविषात्मकाः संभूय सर्वे न दशन्ति सर्वं प्राणिजातम्, तद्दण्डसामर्थ्यम्। अतः स्तुतिरेषोच्यते। यद्देवादयो महर्द्धिका अचेतना वा स्वमर्यादातो न विचलन्ति भयात्, किं पुनर्मनुष्याः? अत्र श्लोकः पूर्वैः पठितः– 'दृष्ट्वा तु दैन्यं वनपादपानां पुष्पप्रगल्भं कुटजप्रहासम्। संबन्धदानेन तदा जहास नीचोऽपि रन्ध्रं प्रहरत्यवश्यम्॥' इति। * मेधा.

(२) देवादयः प्रथमाध्यायोक्तभेदाः, पतङ्गाः पक्षिणः, उरगाः सर्पाः ये तेऽपि सकलजगदुत्पत्त्यनुशासनकारणरूपेश्वरसंबन्धिभयपीडिताः सन्तो वर्षदानाद्युपकारं च दानवादयो न (?) कुर्वन्ति। तथा चाध्वर्यवश्रुतिः– 'भयादस्याग्निस्तपति भयात्तपति सूर्यः।

---

* मव. मेधावत्।

† मवि., ममु. गोरावत्।

‡ गोरा., मवि., राप्र. मेधागतम्।

(१) मस्मृ. ७।२२; रार. ६३ : ६४ उत्त.; राप्र. २८६, २९२.

* राप्र., नन्द. मेधागतम्।

(१) मस्मृ. ७।२३; गोरा. 'देवदानवरक्षांसि गन्धर्वाः' इति प्रतीकपाठः; मभा. ११।३०; गौमि. ११।२८ (=) कल्पन्ते (कल्प्यन्ते); रार. ६३; राप्र. २८६ रक्षांसि पतगोरगाः (पिशाचोरगराक्षसाः): २९२.

भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥' इति ।

* गोरा.

( ३ ) उक्तमपि दण्डस्य भोगसंपादकत्वं दाढर्यार्थं पुनरुच्यते— देवेति । इन्द्राग्निसूर्यवाय्वादयो देवास्तथा दानवगन्धर्वराक्षसपक्षिसर्पा अपि जगदीश्वरपरमार्थभयपीडिता एव वर्षदानाद्युपकाराय प्रवर्तन्ते । तथा च श्रुतिः 'भयादस्याग्निस्तपति ... पञ्चमः ॥' इति । ममु.

( ४ ) देवदानवेति दृष्टान्तार्थम् । 'भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः ।' इति श्रुतेः यथेश्वरभयात् पवनादेः प्रवृत्तिः, एवं राजप्रभृतेर्भयाद्देवादयोऽपि स्वकार्याय नीयन्ते । यद्वा, दण्डपीडिताः दण्डेन या यस्य या पीडा तया आवर्जिताः निष्पापानां तेऽबाधकाः ( १ ) । मच.

**'दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः ।**
**सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥**

( १ ) दण्डस्य विभ्रमः अकरणमन्यायेन वा करणम् । तस्मिन् सति सर्ववर्णा दुष्येयुः, इतरेतरस्त्रीगमनेन संकरप्रवृत्तेः । सेतवः मर्यादाः, ताः सर्वा भिद्येरन् । सर्वमर्यादापरिलोपः स्यादित्यर्थः । ब्राह्मणाश्च शूद्रवद्वर्तेरन् शूद्राश्च ब्राह्मणवत् । अतश्च सर्वलोकप्रकोपः स्यात् । त्रयोऽपि लोका इतरेतरं वृष्ट्यातपादिना नोपकुर्युः ।

† मेधा.

( २ ) प्रकोपः अन्योन्यवैरम् । ‡ मवि.

( ३ ) दण्डस्यानाचरणादनुचितेन वा प्रवर्तनात्सर्वे ब्राह्मणादिवर्णा इतरेतरस्त्रीगमनेन संकीर्येरन्, सर्वशास्त्रीयनियमाश्चतुर्वर्गफला उत्सीदेयुः, चौर्यसाहसादिना च परस्यापकारात् सर्वलोकसंक्षोभश्च जायेत । ममु.

( ४ ) किंच, सर्वसेतवः वर्णानामाश्रमाणां च अनेन वर्णेनेदं कर्तव्यमनेनाश्रमेणेदं कर्तव्यमिति धर्ममर्यादाः । * मच.

**'यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।**
**प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥**

( १ ) एतद्द्वयं मनुष्याणां प्रशस्ततमम् । अतः तेनासता रूपकभङ्ग्या स्तौति । द्विरूपो दण्डः, दुःखदो भयदश्च । भयहेतुत्वं श्यामतया, दुःखहेतुत्वं लोहिताक्षत्वेन । परिसमाप्ता दण्डस्तुतिः । दण्डोऽवश्यं कर्तव्यः । स च देशाद्यपेक्षयेति । अन्यः सर्वोऽर्थवादः । नेता चेत्, नेता दण्डस्य नायकः, स चेत् साधु पश्यति सुनिरूपितं देशकालादिकं कृत्वा पालयति, तत्र प्रजा न मुह्यन्ति न केनचिद्दोषेण युज्यन्ते । मेधा.

( २ ) यत्र राष्ट्रे श्यामवर्णो लोहितनेत्रः इत्थंभूतः शास्त्रप्रमाणकोऽधिष्ठातृदेवतारूपो दण्डः पापकृन्नाशयिता विचरति, तत्र प्रजा न व्याकुलीभवन्ति, यदि दण्डप्रणयनकर्ता राजादिः सम्यग्विचारयति । † गोरा.

( ३ ) यत्र श्याम इति प्रागुक्तपुरुषरूपताकथनम् । श्यामः कृष्णः, तामसत्वात् । लोहिताक्षः रजोऽधिकत्वेन कोपनत्वात् । साधु युक्तं पश्यति । $ मवि.

( ४ ) सम्यक् प्रणयने गुणमाह— यत्रेति । दण्डाभिमानिनीं देवतां प्रकृत्याधिष्ठेयाधिष्ठात्रोरभेदोपचारादुक्तम्— श्यामो लोहिताक्ष इति । दण्डदेवतायाः श्यामत्वं लोहिताक्षत्वं च महाभारतेऽपि स्मर्यते– 'नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः । अष्टपाद्रक्तनयनः शङ्कुकर्णोर्ध्वरोमवान् ॥ जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः । एतद्रूपं बिभर्त्युग्रं तेन दण्डो दुरावरः ॥' ( मस्मृ. १२।१२१।१५–१६ ) इति । नन्द.

---

* मवि., भाच. गोरागतम् ।

† गोरा., राप्र., नन्द., भाच. मेधागतम् ।

‡ शेषं मेधागतम् ।

(१) मस्मृ. ७।२४ ; रार. ६३ सर्वसेतवः ( सर्वमेव तत् ? ); राप्र. २८६,२९३.

* शेषं मेधागतम् ।

† ममु., मच. गोरागतम् ।

$ भाच. मविगतम् ।

(१) मस्मृ. ७।२५ ; रार. ६३.

राजा त्रिवर्गवित् समीक्ष्यकारी प्राज्ञ एव दण्डप्रणयनेऽधिकृतः, अप्राज्ञो राजा दण्डेनैव हतो भवति राष्ट्रेण सह

***तस्याऽऽहुः संप्रणेतारं राजानं सत्यवादिनम् ।**
**समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥**

(१) इदं संप्रणेतुः साधु दर्शनम्— सत्यवादिता समीक्ष्यकारिता प्राज्ञता त्रिवर्गे कौशलं च । सत्यवादी, यः शास्त्रानुसारितया दण्डं कृत्वा कुतश्चिन्महाधनत्वं विज्ञाय न तं वर्धयति, न च वल्लभस्य रागादवनं करोति । प्राज्ञः देशादीनां बाध्यबाधकभावार्थमवस्थाविशेषज्ञः । कदाचिद्देशेन कालो बाध्यते कालेन वा देशः । उभौ वा तौ विद्याशक्ती । तयोश्च परस्परमुत्सर्गापवादभावज्ञः । कार्यवशादर्थश्च बाधक एव बाध्यतामित्यतः प्राज्ञत्वमुपयुज्यते । धर्मादीनां च गुरुलघुताभावः । स्वल्पो यत्र धर्मस्तस्मिन् साध्यमाने महाननर्थो भवति, तत्र धर्मस्त्यज्यते । प्रायश्चित्तेन समाधास्यते इत्येवमादि बोद्धव्यम् । मेधा.

(२) तस्य दण्डस्य कर्तारं क्षत्रियमभिषेकादियुक्तं यथोपलब्धाभिधायिनं विमृश्यकारिणं ऊहापोहसमर्थं प्रज्ञोपेतं धर्मार्थकामानामितरेतरानुष्ठानकुशलं मन्वादय आहुः । * गोरा.

(३) समीक्ष्यकारिणं समीक्ष्य शास्त्रेण विचार्य कुर्वाणम् । मवि.

(४) तदनुरूपं राजलक्षणमाह— तस्याहुरिति सार्धेन । तस्य दण्डस्य उक्तविशेषणविशिष्टं राजानं प्रणेतारं मन्वादयः आहुरित्यन्वयः । सत्यवादिनं लोभादिना समयभेदरहितम् । समीक्ष्य पूर्वापरमालोच्य कर्तुं शीलम् (अस्य) । प्राज्ञं ऊहापोहसमर्थम् । धर्मकामार्थकोविदं (वेद)स्मृतिवात्स्यायननीतिशास्त्राणां वेत्तारम् । तत्र वेदस्मृतिभ्यां धर्मस्य, वात्स्यायनादिना कामस्य, नीतिशास्त्रेणार्थस्य वेत्तारम् । ‡ मच.

(५) दण्डप्रणयनाधिकारमाह— तस्येति । नन्द.

* ममु. गोरावत् ।

‡ भाच. मचगतम् ।

(१) मस्मृ. ७।२६ ; रार. ६३.

***तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्धते ।**
**कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते ॥**

(१) समत्वेन दण्डपातनेन शत्रौ मित्रे च वर्धते । कामान्धः रागप्रधानः, विषमः क्रोधनः, क्षुद्रः छलान्वेषात्, दण्डेनैव निहन्यते प्रकृतिकोपेनादृष्टेन वा दोषेण । मेधा.

(२) तं दण्डं राजा सम्यक् कुर्वन् धर्मार्थकामैर्वृद्धिमेति । यः पुनः रागप्रधानः क्रोधनः छलान्वेषी राजा न सम्यक्कृतेन दण्डेनैवात्यन्तकोपादधर्माद्वा विनाश्यते । * गोरा.

(३) विषमः विषमदण्डप्रणेता । क्षुद्रः लुब्धः । मवि.

(४) अत आह— त्रिवर्गेणेति । धर्मार्थकामैस्तपोवनानाश्रितस्य तन्मात्रेण मोक्षसिद्धिरिति भावः । उक्तविशेषणहीनो नाधिकारीत्याह— कामेति । † मच.

(५) सम्यक् यथाशास्त्रम् । नन्द.

***दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः ।**
**धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥**

(१) सुमहद्यत्तेजः स दण्डः । अकृतात्मभिः शास्त्रेण गुरूपासनया सहजेन वा विनयेन येऽनभिविनीतास्तैः दुर्धरः न शक्यते सम्यक् प्रणेतुम् । नैवं मन्तव्यम्— आज्ञामात्रेण दण्डः प्रणीयते, का तस्य दुर्धरता ? यतो यस्तत्र न जागर्ति प्रयत्नवान्न भवति तं प्रमादिनं सबान्धवं दण्डो हन्ति । न शरीरेण केवलेन राजा नश्यति, यावत् पुत्रपौत्राद्यन्वयेन सह । $ मेधा.

(२) दुर्धरः दण्ड्येषु धारयितुमशक्यः । मवि.

* ममु गोरावत् । भाच. गोरागतं मविगतं च ।

† शेषं गोरागतम् ।

$ गोरा. मेधागतम् ।

(१) मस्मृ. ७।२७ ; मेधा. कामात्मा (कामान्धो) ; रार. ६३ प्रणयन् (प्रणमेत्) ; पमा. ३९३ प्रणयन् सम्यक् (प्रणयेद्दण्डं) पू.

(२) मस्मृ. ७।२८ ; रार. ६४.

( ३ ) यतो दण्डः प्रकृष्टतेजःस्वरूपः स्वशास्त्रैरसंस्कृतात्मभिः दुःखेन ध्रियते, अतो राजधर्मरहितं नृपमेव पुत्रबन्धुसहितं नाशयति'। ममु.

( ४ ) अकृतात्मभिः अजितेन्द्रियैः शास्त्रासंस्कृतबुद्धिभिर्वा । तत्रापि सबान्धवं हन्ति, अधर्मोत्पादनेनेति शेषः । मच.

( ५ ) यथाऽग्निरन्यत्र प्रणीयमानोऽपि प्रमत्तं प्रणेतारमेव दहति, एवं दण्डोऽपीत्यभिप्रायेणाह– दण्डो हीति । हि हेतौ । सुमहत्तेजः सुमहानग्निः । चलितं स्खलितम् । नन्द.

**'ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम् ।**
**अन्तरिक्षगतांश्चैव मुनीन्देवांश्च पीडयेत् ॥**

(१) देशाद्यनपेक्षया यत्र दण्डः प्रणीयते तत्र सराजकस्य जनपदस्य तिर्यक्स्थावरसहितस्य नाशः । ततो मन्त्रिभिर्जनपदैश्च राजा विज्ञापनीयः, त्यक्तव्यो वा तादृशो देशः । देवमुनयः पीड्यन्ते । इतःप्रदानजीवना देवाः । अस्मिंश्चानुष्ठानाद्युच्छेदान्नष्टा एव देवमुनयः । तथा च पुराणकारैः– ' वर्णाश्रमेभ्यः स्थित्वा तु लोकेऽस्मिन् यः प्रवर्तते । स्वर्गादौ देवयोनीनां स्थितिहेतुः स वै स्मृतः ॥ ' इति । प्रथमात् श्लोकादारभ्य यावदयं श्लोकस्तत्रायमर्थसंग्रहः– समवृत्तेन क्षत्रियेण जनपदपरिपालनं कर्तव्यम् । तच्च दण्डेन विना न भवतीति स देशाद्यपेक्षयाऽवश्यं निपुणतो निरूप्य स्वराष्ट्रे परराष्ट्रे वा यथाशास्त्रं प्रणेयः । अन्यथा तु प्रवृत्तावुभयलोकनाशः । अन्यः सर्वोऽर्थवादः । मेधा.

( २ ) सबन्धुनृपतिनाशानन्तरं स दण्डो वक्ष्यमाणं धन्वदुर्गादि दुर्गं राष्ट्रं च देशं पृथिवीलोकं जङ्गमस्थावरसहितम् ' इतःप्रदानजीविनो देवाः ' इत्यतस्तदभावादन्तरिक्षगतान् ऋषींश्च देवांश्च पीडयेत् । * गोरा.

( ३ ) ततो राज्ञि विनष्टे रक्षकाभावात् दुर्गं राज्यं तदीयलोकमिमं सचराचरं स्थावरजङ्गमसहितं देवांश्च हविर्दानाद्यभावेन पीडयेत् , किं पुनरन्यान् ? † मवि.

* ममु. गोरावत् । † भाच. मविगतम् ।

(१) मस्मृ. ७।२९.

( ४ ) दुर्गं षड्विधं वक्ष्यमाणम् । अन्तरिक्षगतान् मर्त्यलोकादुत्पथगामिनः । यज्ञाद्यकरणान्मुन्यादीनां पीडैव । तदुक्तम्– ' वर्णाश्रमेभ्यः स्थित्या तु ...... स वै स्मृतः ॥ ' इति । मच.

( ५ ) नैतावता विरमतीत्याह– तत इति । लोकं भूलोकम् । देवान् स्वर्गगतान् । इज्याविच्छेदादन्तरिक्षगतादीनां पीडाः । नन्द.

**'सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ।**
**न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च ॥**

( १ ) सहायसंग्रहार्थं प्रकरणमिदानीमारभ्यते । यस्य च निरूपणा वक्ष्यमाणा तत्सहायादिगुणयोगिनश्च आर्यसभ्यसेनापतिदण्डाधिकारिणो न सन्ति, तेन स्वयमेव निःशङ्कं नयकालगुणसंपन्नेनापि न्यायतो न प्रणेतुं शक्यः । न्यायः शास्त्रानुसारिणी देशाद्यपेक्षया च व्यवस्था । अतः सहायाः शोभनाः कर्तव्याः । यथा स्वयं मूढो विचित्तोऽसंस्कृतबुद्धिरस्ति, सक्तो विषयेषु, लुब्धो धनविनियोगं यथावन्न करोति, तेन तादृशेनैतैर्दोषैर्युक्तेन न सम्यक् ध्रियते, एवमसहायेनापीति तात्पर्यम् । यस्तु विपरीतस्तेन शक्यते । मेधा.

( २ ) मूढेन प्रमादहेतुमोहवता । अकृतबुद्धिना शास्त्रासंस्कृतमतिना । मवि.

( ३ ) स दण्डो मन्त्रिसेनापतिपुरोहितादिसहायरहितेन मूर्खेण लोभवता शास्त्रासंस्कृतबुद्धिपरेण नृपतिना शास्त्रतो न प्रणेतुं शक्यते । * ममु.

( ४ ) सः दण्डः असहायेन विद्वद्ब्राह्मणप्राड्विवाकादिरहितेन मूढेन मुग्धेन अकृतबुद्धिना शास्त्रानभिज्ञेन तदभिज्ञत्वेऽपि विषयेषु सक्तेन अन्योपदिष्टशास्त्रानुष्ठानरहितेनापि न्यायतः, न्यायः शास्त्रानुसारिणी देशाद्यपेक्षया व्यवस्था, तया नेतुं न शक्यः । † मच.

* गोरा. ममुवत् ।

† भाच. मचगतम् ।

(१) मस्मृ. ७।३० ; रार. ६५.

( ५ ) सम्यक्प्रणयनोपायं श्लोकाभ्यामाह- स इति । नन्द.

**'शुचिना सत्यसंधेन यथाशास्त्रानुसारिणा ।**
**प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥**

( १ ) एष एवार्थो वैपरीत्येनोच्यते- शुचिनेति । शुचिः अलुब्धः । सत्यसंधः सत्यप्रधानः । सत्यमेव पुरोधाय सर्वक्रियासु प्रवर्तते स विजितेन्द्रियः । अजितेन्द्रियस्य कुतः सत्यम् ? यथाशास्त्रमनुसरति वर्तते । सुसहायः शोभनाः सहायाः अस्येति । अमूखैः भक्त्यनुरक्तः सहायैर्युक्तः । धीमता प्राज्ञेन । योऽसौ मूढः प्रागुक्तस्तस्यायं प्रतिपक्षतयोक्तः । अतः पञ्चभिर्दोषैर्हीनस्तावद्भिरेव गुणैर्युक्तो दण्डप्रणयनेऽधिकृतो दृष्टादृष्टफलातिशयभाग्भवतीति श्लोकद्वयस्यार्थः । * मेधा.

( २ ) अर्थादिशौचयुक्तेन जितेन्द्रियत्वात्सत्यप्रतिज्ञेन शास्त्रानतिक्रमवर्तिना ( शोभन )सहायेन प्रज्ञावतेत्येवं पूर्वोक्तदोषप्रतिपक्षभूतगुणयुक्तेन राज्ञा सम्यक् दण्डः कर्तुं शक्यते । गोरा.

( ३ ) अनधिकारिणमुक्त्वाऽधिकारिणमाह- शुचिनेति । ‡ मच.

स्वराष्ट्रे शत्रुराष्ट्रे मित्रराष्ट्रे च वर्तनभेदाः

**'स्वराष्ट्रे न्यायवृत्तः स्याद्भृशदण्डश्च शत्रुषु ।**
**सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥**

( १ ) पितृपितामहादिक्रमागतो देशो व्यपदेशहेतुः । काश्मीरकस्य काश्मीरः, पाञ्चालस्य पाञ्चालाः स्वराष्ट्रम् । तत्र न्यायवृत्तः न्यायेन वर्तेत । न्याययोगात् वृत्तं न्यायः । अतो बहुव्रीहिः । न्यायवृत्तिरिति वा पाठः । एतत्पूर्वसिद्धमनूद्य शत्रुषु भृशदण्डता विधीयते । परराष्ट्राणि पुनः पीडयेत्, न तत्र विघ्नाद्युपेक्षणीयं राष्ट्रीयोपरोधो वा । तथा कुर्वतः प्रताप उपजायते । प्रतापधनस्य शत्रवो नमन्ति । ब्राह्मणेषु सर्वत्र क्षमान्वितः । अपराधेष्वपि साम्ना दण्डः प्रयोज्यः, न क्रोधेन । परराष्ट्रवासिनोऽपि राष्ट्रघातकाले यदि शक्यन्ते रक्षितुं तदा न हन्यन्ते । स्निग्धेषु सुहृत्सु अजिह्मः अकुटिलबुद्धिः कार्यसिद्धिकृत् तत्कार्यप्रधानः स्यात् । समानाभ्युदयप्रत्यवायाः सुहृदः स्निग्धाः । मेधा.

( २ ) आत्मराष्ट्रे शास्त्रमर्यादया वर्तेत । शत्रुविषये पुनस्तीक्ष्णदण्डो भवेत् । स्निग्धेषु च मित्रेषु, न कार्यमित्रेषु, अकुटिलः स्यात् । ब्राह्मणेषु बुद्धिपूर्वं चाल्पं तदपराधं कृतवत्सु क्षमायुक्तः स्यात् । * गोरा.

( ३ ) भृशदण्डः तीक्ष्णदण्डः । सुहृत्सु बन्धुषु स्निग्धेषु च मित्रेषु अजिह्मः अवक्रमतिः । इति राजदण्डयोः प्रशंसा । मवि.

( ४ ) आत्मदेशे यथाशास्त्रव्यवहारी स्यात् । शत्रुविषयेषु तीक्ष्णदण्डो भवेत् । निसर्गस्नेहविषयेषु मित्रेषु अकुटिलः स्यात्, न कार्यमित्रेषु । ब्राह्मणेषु च कृताल्पापराधेषु च क्षमावान् भवेत् । ममु.

( ५ ) एतेषु गुणेषु $ केषांचित् व्यवस्थामप्याह- स्वराष्ट्रे इति । † राप्र. १२१

( ६ ) सुहृत्सु संबन्धिषु राजा अजिह्मः स्यात् । स्निग्धेषु मित्रेषु क्षमान्वितः स्यात् । भाच.

**'एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ।**
**विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥**

( १ ) प्रक्रान्तवृत्तेः स्तुतिरियम् । शिलोञ्छेनापि जीवतोऽत्यन्तक्षीणकोशस्य विस्तीर्यते यशः प्रथते । ततश्च परराष्ट्राणि स्वयं नमन्ते, स्वराष्ट्रिकश्चानुरागादविचलितो भवति । मेधा.

---

* मवि., ममु., रार., भाच, मेधागतम् ।

‡ शेषं मेधागतम् ।

(१) मस्मृ. ७।३१ ; रार. ६५.

(२) मस्मृ. ७।३२ ; मेधा. वृत्तः ( वृत्तिः ) इत्यपि पाठः; राक. २१ वृत्तः ( वृत्तिः ); राप्र. १२१ भृशदण्डश्च ( भृशं चण्डश्च ); नीम. ३६ राप्रवत्.

* मच. गोरागतम् ।

$ गुणशब्देनात्र महोत्साहादयो राजगुणाः याज्ञवल्क्यादौ प्रोक्ता ग्राह्याः ।

† नीम. राप्रवत् ।

(१) मस्मृ. ७।३३ ; राक. २१ विस्तीर्यते ( विस्तार्यते ); राप्र. १४५ राकवत्.

(२) एवमाचारस्य राज्ञः अत्यन्तं क्षीणकोशस्यापि जले तैलबिन्दुः सेकाद्वा(? दिव) लोके ख्यातिः विस्तरमेति। * गोरा.

(३) एवंवृत्तस्येति यथोक्तदण्डप्रणेतुः। शिलोञ्छेनापीति भोगदानाभ्यां रहितस्यापीत्यर्थः। मवि.

(४) शिलोञ्छेनेति क्षीणकोशत्वं विवक्षितम्। † ममु.

(५) सम्यक्प्रणयनस्य फलमाह– एवमिति। भूतलविप्रकीर्णे धान्यं शिलम्, तस्योद्धारः उञ्छः, 'शिलान्यप्युञ्छते' इति लिङ्गात्। अथवा शिलं च उञ्छश्च शिलोञ्छम्, 'वर्तयंस्तु शिलोञ्छाभ्याम्' (मस्मृ. ४।१०) इति लिङ्गात्। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः। नन्द.

**'अतस्तु विपरीतस्य नृपतेरजितात्मनः।**
**संक्षिप्यते यशो लोके घृतबिन्दुरिवाम्भसि॥**

(१) अतः वृत्तात् विपरीतस्य चलितस्य। अत्र हेतुरजितात्मता। यथाशास्त्रमनियतात्मा यः। मेधा.

(२) एतस्मादाचारात् विपरीताचारवतो राज्ञोऽजितेन्द्रियस्य घृतबिन्दुरिवोदके ख्यातिः संकोचमुपयाति। ‡ गोरा.

(३) अजितात्मनः धनलोभवश्यात्मनः। मवि.

(४) उक्तवैपरीत्ये दोषमाह– अतस्त्विति। अतः उक्तेभ्यो विपरीतस्य संक्षिप्यते। अभिषेककाले विस्तीर्णयशा अपि तदुत्तरमजितेन्द्रियत्वादिना संकुचितयशा भवेदित्यर्थः। मच.

ब्राह्मणरक्षणविधिः

**'आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत्।**
**नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते॥**

* भाच. गोरागतं मविगतं च।

† शेषं गोरागतम्। मच. ममुगतम्। ‡ ममु. गोरावत्।

(१) **मस्मृ.** ७।३४.

(२) **मस्मृ.** ७।८२; **मेधा.** ७।८६ उत्त.; **गोरा.** ह्योऽभि (ह्यो वि); **राक.** १६७ नृपाणा (विप्राणा) शेषं गोरावत्।



(१) गुरुकुलेऽधीतावगतवेदार्थाः गार्हस्थ्यं प्रतिपित्सवो धनेन पूजयितव्याः। इदमपि नैयमिकदानम्। अत एवाह– नृपाणामक्षय इति। नित्यत्वादक्षयः यावज्जीविकः। काम्यत्वे चाऽऽफलभावि निवर्तते। यदुक्तम्– 'सांतानिकं यक्ष्यमाणम्' (मस्मृ. ११।१) इति, तदेवेदम्। अन्ये त्वाहुः– तत्रार्थिभ्यो दानं विहितम्, इह त्वनर्थिनामधिकारात् विधानमात्रया वस्त्रयुगादिदानेन च नराणां पूजा कर्तव्या। तथा चाह– विप्राणां पूजको भवेदिति। निधिरिव निधिः, उत्तमफलत्वात्। ब्रह्मसंनिहितो ब्राह्मः। मेधा.

(२) यतो (? अतो) गुरुकुलान्निवृत्तानां ब्राह्मणानां नियमतो धनदानेन पूजां च कुर्यात्, यस्मात् सोऽयं निधिः इव निधिः ब्रह्मसु निहितः, धनादिषु विनश्वरः, राज्ञां शास्त्रेणोपदिश्यते। ब्राह्माख्यो जन्मान्तरेऽपि सुनिहितो भवति। गोरा.

(३) आवृत्तानां समावृत्तानां गुरुदक्षिणार्थं विवाहार्थं कर्तुमिच्छतां वा। ब्राह्मः ब्राह्मणेषु निक्षिप्तः। मवि.

(४) गुरुकुलान्निवृत्तानामधीतवेदानां ब्राह्मणानां गार्हस्थ्यार्थिनां नियमतो धनधान्येन पूजां कुर्यात्। यस्माद्योऽयं ब्राह्मः ब्राह्मणेषु स्थापितधनधान्यादिनिधिः निधिरिवाक्षयः ब्रह्मफलत्वादविनाशी राज्ञां शास्त्रेणोपदिश्यते। * ममु.

(५) किंच, आवृत्तानामागतानां गुरुकुलात् पूजको गृहादिदाता स्यात्। तेन किम्? तत्राह– एष निधिः एवंविशिष्टब्राह्मणेषु वस्त्रौदनादिनिधिः निक्षेपतुल्यः। स हि यथा कालान्तरे प्राप्यते, एषोऽपि तथा। ब्राह्मः परम्परया ब्रह्मणि मोक्षरूपे पर्यवसितः, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' (बृउ. ४।४।२२) इत्यादिश्रुतेः। ब्रह्म ब्राह्मणजातिः, तदुद्देश्यकत्वाद्वा ब्राह्मः। मच.

(६) एवं धनागमद्वारमुक्तम्। इदानीं प्रस्तुतं दानमेवाह– आवृत्तानामिति। पूजको भवेत् इष्टार्थदो

* भाच. ममुगतम्।

भवेत् । एष ब्राह्मो निधिर्नृपाणामक्षयोऽभिधीयते । एतत् सृष्ट्वा ब्राह्मणनिहितं द्रव्यं राज्ञामक्षय्यफलमिति शास्त्रैर्विधीयते । हिशब्दो हेतौ । नन्द.

**[१]न तं स्तेना न चामित्रा हरन्ति न च नश्यति ।**
**तस्माद्राज्ञा निधातव्यो ब्राह्मणेष्वक्षयो निधिः ॥**

( १ ) ब्राह्मणेभ्यो योऽर्थो दत्तः न तं स्तेनाः आटविकादयः अमित्राश्च शत्रवः हरन्ति । न भूमिष्ठमिव विस्मृत्य प्रातिभाव्येन वा नश्यति । मेधा.

( २ ) तं ब्राह्मं निधिं न चौरा नापि शत्रवो हरन्ति। अन्यनिधिवन्नापि मृत्संयोगादिना नश्यति । तस्मात् योऽयमक्षयो निधिः ब्राह्माख्यनिधिः जन्मान्तरे उत्तमानन्तफलावाप्तये राज्ञा धनादिः ब्राह्मणेषु निधातव्यः । गोरा.

( ३ ) न नश्यति स्वयमदर्शनं न याति । मवि.

( ४ ) अत एव– न तमिति । तं ब्राह्मणस्थापितनिधिं न चौरा नापि शत्रवो हरन्ति । अन्यनिधिवद्भूम्यादिस्थापितः कालवशान्न नश्यति । स्थानभ्रान्त्या वा नादर्शनमुपैति । तस्माद्योऽयमक्षयोऽनन्तफलो निधिरिव निधिर्धनौघः स राज्ञा ब्राह्मणेषु निधातव्यः । तेभ्यो देय इत्यर्थः । * ममु.

( ५ ) अक्षयत्वमाह– नेति । स्तेनाः छिद्रं कृत्वा ये हरन्ति प्रसभं वा । ‡ मच.

**[२]न स्कन्दते न व्यथते न विनश्यति कर्हिचित् ।**
**वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम् ॥**

( १ ) एष एवार्थोऽवश्यानुष्ठेयः प्रकारान्तरेण पुनरुच्यते । अग्नौ यद्धूयते तत् कदाचित् स्कन्दति अधः पतति हूयमानम्, तथा च्यवते पुरोडाशादि क्षामतया, ततश्च कर्मवैगुण्याद्विनश्यति शिष्टानाम् (?) । इदं तु यत् ब्राह्मणेभ्यो दानम्, न तस्यैते दोषाः सन्ति । अत एवाह– वरिष्ठमग्निहोत्रेभ्यः । अग्नौ होमेभ्य इत्यर्थः । मुख्यार्थवृत्त्या कर्मनामधेयमेवाग्निहोत्रशब्दस्तदा चाऽऽदिग्रहणं व्याख्येयम् । मुखे हुतमिति । पाणिरेव ब्राह्मणस्य मुखम्, 'पाण्यास्यो हि द्विजः स्मृतः' ( मस्मृ. ४। ११७ ) इति वचनात् । वरिष्ठं श्रेष्ठम् । अर्थवादश्चायम्, न पुनर्होमनिन्दैव । मेधा.

( २ ) अग्निहोत्राद्याहुतेः किल स्रवणचलननाशाख्या दोषा भवन्ति । अतश्च कर्मवैगुण्यम् । यत् पुनरेतत् ब्राह्मणमुखाग्नौ हुतं ब्राह्मणस्य यद्दत्तम्, तन्न स्रवति न चलति, नापि दाहादिना कदाचित् विनश्यति । तस्मादेतद्दोषासंभवात् अग्निहोत्रादिभ्यः श्रेष्ठमिति प्रकृतदानस्तुतिपरमेतत् । गोरा.

( ३ ) न स्कन्दते न स्रवति । न च्यवते न पतति कठिनम् । 'न व्यथते' इति पाठेऽप्ययमर्थः । न विनश्यति श्वावलेहादिना । मवि.

( ४ ) व्यथते शुष्यति । * ममु.

( ५ ) किंच, न स्कन्दते नाधः पतति, न व्यथते न नङ्क्ष्यतीति कृत्वा व्यथा दुःखं नोत्पादयति । पुत्रादिवत् प्रत्यक्षं न नश्यतीति । वरिष्ठमिति । अग्नौ हविः क्षिप्तं देवतृप्तौ संदिग्धम्, ब्राह्मणमुखे तु न तथा, साक्षात् प्रीत्युक्तेः, 'ब्राह्मणो मनुष्येषु' इति श्रुतेः, 'नाहं तथाऽद्मि यजमानहविर्वितानैश्च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन । यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासम् ॥' इति भागवतोक्तेश्च । मच.

( ६ ) 'यजेत दद्याच' इत्युक्तम् । यजनात् दानं विशिष्टमित्याह– नेति । स्कन्दनं परिस्रवणम् । केशकीटापत्तिः व्यथनम् । अदर्शनं नाशः । अग्निहोत्रेभ्यः अग्निहोत्रहुतेभ्यो द्रव्येभ्यः । नन्द.

---

* भाच. ममुगतम् ।

‡ शेषं ममुगतम् ।

(१) **मस्मृ.** ७।८३ ; **राक.** १६७ निधातव्यो ( विधातव्यो ) ; **रार.** १५ राकवत्.

(२) **मस्मृ.** ७।८४ ; **मेधा.** स्कन्दते ( स्कन्दति ) व्यथते ( च्यवते ); **राक.** १६७ होत्रेभ्यो ( होत्राद्धि ) ; **मवि.** व्यथते ( च्यवते ) इत्यपि पाठः ; **रार.** १५.

* शेषं मेधागतं गोरागतं च ।

[1]समममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥

( १ ) विप्रेभ्य इति च प्रकृतम् । तथा च प्रागप्युक्तम् ‘ वेदतत्त्वार्थविदुषे ब्राह्मणाय ’ ( मस्मृ. ३।९६ ) इति । न च यथाश्रुतदानफलोपपत्तिः । कीदृशं हि तत्साम्यम् ? जातितः परिमाणतः उपकारतो वा ? यदि तावज्जातितस्तदिति, औषधपानोद्देशेन देवलेभ्यो दत्तं खाद्यदानं दुःखायैव स्यात् । तिक्तकटुकषायाणि प्रायश औषधानि विरेचनीयानि, न प्रीतिजननानि । अथ परिमाणतः, तत्रापि यदि द्रव्यमनपेक्ष्य केवलपरिमाणसाम्यम्, सुवर्णे दत्तं तत्परिमाणं ताम्रं लभ्येत, अन्यद्वा मृत्काष्ठादि । अथ जातितः परिमाणतश्च, तत्र प्रागुक्ता एव दोषाः । अथोपकारतः, तत्रापि हि यदि तज्जातीय एवोपकारः, व्याधिनिवृत्तिरौषधोपकारः, असति च व्याधौ फलस्य विनिवृत्तिः, अतो व्याधिनिवृत्तिफलकेनौषधदानेन व्याधिराक्षेप्तव्यः । सुसमं वा अन्यदुःखं इति प्राप्तम् । तस्मात् यथा ‘ निवीतं मनुष्याणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत् कुरुते ’ ( तैसं. २।५।११।१ ) इत्युपव्यानविशेषात् निवीतादयो न पृथग्वाक्यानि, तथेदमपि द्रष्टव्यम् ।

अत्रोच्यते । नात्राख्यातश्रवणमस्ति, सर्वेषां समत्वात् । तत्र यद्यर्थवादः ‘ सहस्रं वेदपारगे ’ इति तदर्थवादोऽस्तु । अथायं विधिः, विध्यन्तरशेषत्वाभावात् सर्वत्र विधिरभ्युपेतव्यः, विशेषाभावात् । निवीतादिषु तु ‘ उपव्ययते ’ इत्यत्राख्यातदर्शनात् तदर्थस्य विधिविषयत्वयोग्यत्वाभावात् एकत्वावगमाच्च युक्तार्थवदेव, तद्विनुक्तो विशेषः । यत्तु ‘ नाब्राह्मणेभ्यो दानमस्ति ’ इति, तद्विस्मृतं भवेत्, दीनानाथादिभ्यः सर्ववर्णेभ्यो दानस्य विहितत्वात् । एतान्येव च विधायकानि वाक्यानि ब्राह्मणेभ्यो राज्ञां दानस्य । यत्तूक्तम् ‘ यथाश्रुतफलानुपपत्तिः, सर्वप्रकारेणास्याभ्युपगम्यमानत्वात् ’ इति, अत्रोच्यते । लौकिकीयं वाचोयुक्तिः— सममिति । यल्लोके नात्युत्कृष्टं तदेवमुच्यते ‘ समलवणाः सक्तवः ’ इति । उपकारापेक्षा च ‘ द्विगुणम् ’ इति संख्याश्रुतिः, यावत्तस्योपकारः तावद् द्विगुणो भवति । न तद्द्रव्यप्राप्तिर्नापि तज्जातीय एवोपकारः, किन्तु प्रीत्यतिशयोत्पत्तिः । न चेह फलविशेषश्रुतिः येनेयमाशङ्काऽपि स्यात् ‘ किं तदेव द्रव्यं प्राप्येत उत स एवोपकारः ? ’ इति । अश्रुतफलविशेषेषु स्वर्गः फलम् । किंच, तिलादिदाने प्रजाप्तिः फलं श्रूयते । तत्र का द्रव्यसाम्याशङ्का ? तस्माच्चायमप्यर्थ उत्तरोत्तरोऽत्र च पात्रातिशयदानात् फलातिशयसिद्धिः । तथा चाह— ‘ पात्रस्य हि विशेषेण ’ इति । ब्राह्मणब्रुवे । ब्रुवशब्दः कुत्सायाम् । जातिमात्रब्राह्मणोऽध्ययनादिगुणहीन इत्यर्थः । आचार्य उपनेता । वेदपारगः अध्ययनश्रवणाभ्यां वेदस्यान्तं गतः । मेधा.

( २ ) ब्राह्मणव्यतिरिक्तविषये उपकारकरणरूपेण यद्दानम्, न दानप्रतिग्रहरूपेण, तत्र तदभावात् तत्समम् । यस्य देयद्रव्यस्य यत् फलं श्रुतं तत् ततो नात्युत्कृष्टमिति प्राप्यते । एवं जातिमात्रोपजीविनि ब्राह्मणे पूर्वापेक्षया द्विगुणं फलम् । एवं प्रक्रान्ताध्ययने लक्षगुणं फलम् । समस्तशाखाध्यायिनि अनन्तफलम् ।

गोरा.

( ३ ) दानमवैधमपि अब्राह्मणे क्षत्रियादौ दीयमानमानृशंस्यात् तत् समम्, यावन्मात्रं दानस्यानृशंस्यं कृतं फलं तत्र तावन्मात्रम् । द्विगुणं ब्राह्मणब्रुवे जातिमात्रोपजीविनि प्रतिग्रहरूपेण दत्ते आनृशंस्यदानफलं च प्रतिग्रहदानफलं च । आचार्ये अध्यापयितरि वेदैकदेशस्य, द्विगुणीभूतमेव सहस्रगुणम् । वेदपारगे वेदस्यैकस्यार्थतो ग्रन्थतश्च पारंगते ।

मवि.

---

(१) **मस्मृ.** ७।८५ ; **विश्व.** १।३११ प्रथमः पादः ; **मेधा.** प्राधीते (आचार्ये) ‘अनन्तं’ इत्यत्र ‘ सहस्रं ’ इति पाठः स्यात्, शास्त्रार्थप्रसङ्गेन तथा निर्देशात् ; **गोरा.** ‘ प्राधीते शतसाहस्रं ’ इत्यत्र ‘ सहस्रगुणमाचार्ये ’ इति तु प्रतीकपाठः, व्याख्यानं नैतत्पाठानुसारि ; **मवि.** प्राधीते शतसाहस्रं ( सहस्रगुणमाचार्ये ) ; **ममु.** ‘ सहस्रगुणमाचार्ये ’ इति वा तृतीयपादस्य पाठः इत्युक्तम् ; **रार.** १५.

( ४ ) यो ब्राह्मणः क्रियारहित आत्मानं ब्राह्मणं ब्रवीति स ब्राह्मणब्रुवः । 'सहस्रगुणमाचार्ये' इति वा तृतीयपादस्य पाठः । * ममु.

( ५ ) प्राधीते विद्यावति । इदं प्रासङ्गिकम् ।

रार.१५

( ६ ) विप्राणामिति प्रकृतम्, तत्र प्रासङ्गिकान् पात्रगुणानाह— सममिति । क्षत्रियब्राह्मणपदवाच्याध्ययनप्रवृत्तब्रह्मचारिकृतवेदाध्ययनाश्चत्वारोऽब्राह्मणेत्यादिपदचतुष्टयवाच्या इति । ब्राह्मणब्रुवः ब्राह्मणोऽहं ब्रवीति, न तु कर्मणा ब्राह्मण इति । 'गर्भाधानादिसंस्कारैर्युक्तः सनियमव्रती । नाध्यापयति नाधीते स ज्ञेयो ब्राह्मणब्रुवः ॥' इति परिभाषिको वा । ब्राह्मणभ्रमात् पात्रं क्षत्रियः । तस्मात् सर्वेभ्यो देयमेतेभ्यः, परंतु यस्य श्रुतं फलमिति । मच.

( ७ ) पात्रविशेषात् फलविशेषमाह— सममिति । समं तावन्मात्रम् । अब्राह्मणे क्षत्रियादौ दानमदानफलम् ।

नन्द.

( ८ ) न ब्रह्म वेदः यस्यास्तीति सः अब्राह्मणः, तस्मिन् दत्तं दानं समं ज्ञेयम् । ब्राह्मणब्रुवे वेदाध्यायिनि किंचिन्मात्रे एवंविधे द्विजे दत्तं द्विगुणं भवेत् । वेदपारगे एकशाखाध्यायिनि । भाच.

**'पात्रस्य हि विशेषेण श्रद्दधानतयैव च ।**
**अल्पं वा बहु वा प्रेत्य दानस्य फलमश्नुते ॥**

( १ ) पातयतेऽधर्मकर्मणः, पात्यमानं वा त्रायते इति पात्रं संप्रदानम् । अथवा घृततैलाद्याधारः पात्रम्, उपचारादिदमपि पात्रम् । अत्रापि हि द्रव्यं निधीयते । आह च 'नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते' ( मस्मृ. ७।८२) इति । तस्य विशेषः भेदः सगुणनिर्गुणत्वादिः । तेन हेतुना दानस्य फलमवाप्यते । अल्पं वा । गुणवते वृत्तस्वाध्यायसंपन्नाय दत्तं बहु, निर्गुणाय त्वल्पम् । प्रेत्येति क्रियासमनन्तरं फलोत्पत्तेरनियममाह, न पुनर्जन्मान्तरफलतामेव, वैदिकानां कर्मणां फल एव कामस्य नियमावगमात् । मेधा.

( २ ) विशेषेण दोषेण गुणेन वा । श्रद्दधानतया श्रद्धानिकर्षप्रकर्षाभ्याम् । मवि.

( ३ ) विद्यातपोवृत्तियुक्ततया पात्रस्य तारतम्यमपेक्ष्य शास्त्रे तथेति प्रत्ययरूपायाः श्रद्धायाः तारतम्यपात्रमासाद्य दानस्याल्पं महद्वा फलं परलोके लभ्यते । ममु.

( ४ ) प्रेत्य मृत्वा । स्थितस्य फलावश्यम्भावनियमादित्याह— अवाप्यत इति । श्रद्धया अल्पं दीयमानं पात्रविशेषे च बह्वेव स्यादिति वाक्यार्थः । मच.

( ५ ) श्रद्धातश्च फलविशेषमाह— पात्रस्येति ।

नन्द.

**[1]एष एव परो धर्मः कृत्स्नो राज्ञ उदाहृतः ।**
**जित्वा धनानि संग्रामाद्द्विजेभ्यः प्रतिपादयेत् ॥**

**† देशकालविधानेन द्रव्यं श्रद्धासमन्वितम् ।**
**पात्रे प्रदीयते यत्तु तद्धर्मस्य प्रसाधनम् ॥**

( १ ) तत्र देशः स्वनिवासदेशादन्यो जनपदः । दूरदेशप्रोषितायां संनिहितत्वाद्दत्तमस्य हेतुरुपघातः (?) । यज्ञप्रवृत्तस्य केनचिदङ्गेन न्यूनता (?) । (कालः) ग्रहोपराग इत्येवमादिः । विधानं उदकपूर्वकस्वस्तिवाचनसंस्कारातिशयो भावप्रसाद इत्यादि । द्रव्यं गोभूहिरण्यादि । श्रद्धा प्राप्त्यभिलाषातिशयः । 'कथमिदं मे निवर्तेत' इति बुद्धिसंतानः । मेधा.

( २ ) किंच— देशेति । देशः कुरुक्षेत्रादिः । कालः उपरागादिः । विधानं उदकपूर्वकस्वस्त्युक्तिः । मच.

---

* शेषं गोरागतम् ।

(१) मस्मृ. ७।८६ ; मेधा. 'दानस्य फलमश्नुते' इत्यत्र 'दानस्यावाप्यते फलम्' इति कदाचित् पाठः स्यात् ; गोरा. हि (इ) नतयैव ( नस्तथैव ) दानस्य फलमश्नुते ( दानस्यावाप्यते फलम् ) ; रार. १५ दानस्य फलमश्नुते ( दानस्यावाप्यते फलम् ) ; मच. रारवत्.

† एतच्छ्लोकस्य तव्द्याख्यानस्य च 'पात्रस्य हि विशेषेण' इतिश्लोकीयमेधातिथिराघवानन्दव्याख्यानयोः संदंशपतितत्वात् ताभ्यामयं श्लोक आकरान्तरस्थः प्रसङ्गत उद्धृतः स्यादित्यस्ति संभावना ।

(१) मस्मृ. ७।८६ इत्यस्योपरिष्टात् प्रक्षिप्तश्लोकौ ।

[1]म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम् ।
न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥

( १ ) तथा कुर्याद्यथा क्षुधाऽस्य विषये श्रोत्रियो नावसीदति । मेधा.

( २ ) अत्यन्तक्षीणकोशोऽपि राजा वेदाध्यायिनो ब्राह्मणात् करं न गृह्णीयात् । न च तदीये देशे वसन् श्रोत्रियो विषादं गच्छेत् । गोरा.

( ३ ) श्रोत्रियात् तेनार्जितधनात् भागम् । मवि.

( ४ ) न च तदीयदेशे वसन् श्रोत्रियो बुभुक्षयाऽवसादं गच्छेत् । * ममु.

( ५ ) पर्युदासाधिकरणन्यायेन श्रोत्रियस्य करादानाभावमाह— म्रियमाण इति द्वाभ्याम् । मच.

[2]यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ।
तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति ॥

( १ ) अनन्तरविधेरतिक्रमफलमेतत् । मेधा.

( २ ) यस्य राज्ञो देशे श्रोत्रियः क्षुधाऽवसन्नो भवति तस्य राष्ट्रमपि अचिरात् क्षुधाऽवसादमेति । ‡ गोरा.

( ३ ) तस्मात् देयमस्मै किञ्चिदित्यर्थः । मवि.

( ४ ) न केवलं करानादानं, किंच अस्य राज्ञो विषये वसन् श्रोत्रियो नावसीदेदपि । क्षुधा बुभुक्षया । क्षुधासक्तौ दृष्टदोषमाह - तस्येति । विषये देशे । अतः श्रोत्रियातिरिक्तेभ्यः करं गृह्णीयादित्यर्थः । मच.

[3]श्रुतवृत्ते विदित्वाऽस्य वृत्तिं धर्म्यां प्रकल्पयेत् ।
संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम् ॥

( १ ) धर्म्यां वृत्तिम्, यया कुटुम्बधर्मस्यावसादनं न भवति । वृत्तिं प्रकल्प्य सर्वतो रक्षेच्चौरादिभ्यः, स्वयमधिकव्ययाच्च । मेधा.

( २ ) यत एवमतः— श्रुतवृत्ते विदित्वेति । ज्ञानानुष्ठाने अस्य ज्ञात्वा तदनुरूपां धर्मादपेनतां संजीविकां कल्पयेत् । चौरपारदारिकादिभ्यो भयेभ्यश्च रक्षणीयस्तथा यथा पिता पुत्रं रक्षति । * गोरा.

( ३ ) वृत्तं आचारः । धर्म्यां स्ववर्णयोग्यां प्रतिग्रहादिकाम् । मवि.

( ४ ) न केवलमादानाभावमात्रं प्रत्युतास्मै दानं सार्थवादमाह— श्रुतवृत्ते इति द्वाभ्याम् । श्रुतवृत्ते शास्त्रज्ञानानुष्ठाने इति कुल्लूकः । श्रुतं वेदाध्ययनम्, वृत्तं अयाचितत्वादि, ते ज्ञात्वाऽस्य श्रोत्रियस्य धर्म्यां धर्मादनपेतां तदभिमतां वृत्तिं दद्यात् । तां लिखितदिव्यादियुक्तताम्रपट्टादिना । रक्षेदेनं च श्रोत्रियम्, यथा तामन्यो न हरेदिति भावः । चोरादिभ्यो रक्षणं साधारणम् । मच.

[1]संरक्ष्यमाणो राज्ञा यं कुरुते धर्ममन्वहम् ।
तेनायुर्वर्धते राज्ञो द्रविणं राष्ट्रमेव च ॥

( १ ) धार्मिकश्रोत्रियरक्षायाः फलमेतदायुर्द्रविणराष्ट्रवृद्धिः । मेधा.

( २ ) स च ब्राह्मणो राज्ञा रक्ष्यमाणो धर्ममन्वहं कुरुते । तेन राज्ञ आयुर्वर्धते, राष्ट्राणि वर्धन्ते । † गोरा.

( ३ ) संरक्ष्यमाणो दस्युभ्यः । मवि.

[2]न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् ।
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥

---

* शेषं गोरागतम् ।

‡ ममु. गोरावत् ।

(१) मस्मृ. ७।१३३; गोरा. क्षुधाऽस्य संसीदेच्छ्रो (गच्छेद्विषादं च श्रो) ; राक. ९१ ; पमा. ४०८; राप्र. २७२.

(२) मस्मृ. ७।१३४ ; राक. १७ श्रोत्रियः (ब्राह्मणः) ; पमा. ४०८ चिरेणैव (चिरादेव) ; राप्र. १४१ राकवत्.

(३) मस्मृ. ७।१३५ ; गोरा. संरक्षेत्सर्वतश्चैनं (भयेभ्यश्च तथा रक्षेत्) ; राक. १७१ वृत्तिं धर्म्यां (वृत्तिधर्मे) ; पमा. ४०८ ; राप्र. १४१.

* ममु. गोरावत् ।

† ममु. गोरागतम् ।

(१) मस्मृ. ७।१३६ ; मेधा. राज्ञा यं (राज्ञाऽयं) ; राक. १७१ मेधावत् ; राप्र. १४१ : २७२ संरक्ष्य (स रक्ष्य) राज्ञो (तस्य) ; भाच. मेधावत्.

(२) मस्मृ. ८।३८०.

(१) सर्वपापेष्विति प्रकरणविधौ न केवलं संग्रहणे ब्राह्मणो न हन्यते, यावदन्येष्वप्यपराधेषु। अपिशब्दो युगपत् सर्वपापकार्यपि ब्राह्मणो न जातु कदाचिद्धन्तव्यः। किं तर्हि तस्य पापकारिणः कर्तव्यम्? राष्ट्रादेनं विषयात् ब्राह्मणं बहिः कुर्यात् निर्वासयेत्। समग्रधनं सर्वस्वसहितम्। अक्षतं अक्षतशरीरम्। धनमप्यस्य नापहर्तव्यम्। कथं तर्हि दण्डो ब्राह्मणस्य? केचिदाहुः– निर्वासने त्वाधीयमानं सधनं निर्वास्य धनदण्डं प्रतिषेधति। अन्ये तु समग्रधनं हृतसर्वस्वं कृत्वा निर्वास्यते इति मन्यन्ते। * मेधा.

(२) सर्वपापकारिणमपि ब्राह्मणं कदाचिदपि न हन्यात्। अपि (तु) सर्वधनसंयुक्तमक्षतशरीरं राष्ट्रान्निर्वासयेत्। † गोरा.

(३) समग्रधनं समग्रधनयुक्तम्। बहिर्निस्सारणे धनं न ग्राह्यम्। तदभावे धनं क्वचित् 'सहस्रं ब्राह्मणः' (मस्मृ. ८।३८३) इत्यत्रोक्तम्। अक्षतमित्यनुवादः, अक्षतशरीरमित्यर्थः। मच.

[१]न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि।
तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्॥

(१) पूर्वशेषोऽयमर्थवादः। न ब्राह्मणवधादन्यो बहुतरोऽधर्मो दुःखफलोऽस्ति। अन्यशब्दाध्याहारेण पञ्चमी। तस्माद्धेतोरस्य ब्राह्मणस्य राजा मारणमङ्गच्छेदं वा मनसाऽपि नेच्छेत्। ¶ मेधा.

(२) ब्राह्मणवधादपि अधिकोऽन्यः पृथिव्यामधर्मो नास्ति। ब्राह्मणं सर्वपापकारिणमपि राजा मनसाऽपि न हन्यात्। $ गोरा.

(३) उक्तेऽर्थे हेतुमाह– न ब्राह्मणवधादिति। नन्द.

* नन्द. मेधागतम्।

† मवि., ममु., भाच. गोरागतम्।

¶ मवि., भाच. मेधागतम्।

$ ममु. गोरागतम्।

(१) मस्मृ. ८।३८१.

[१]परामप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत्।
ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम्॥

(१) यः क्षीणकोशो बलीयसा च राज्ञा दण्ड्यते, तथापि न ब्राह्मणधनमप्यापदि ग्रहीतव्यम्। न चावज्ञानादिना प्रकोपनीयाः। मेधा.

(२) न प्रकोपयेदर्थग्रहणादिना। मवि.

(३) कोशक्षयादिना प्रकृष्टामप्यापदं प्राप्तो राजा ब्राह्मणान्न प्रकोपयेत्। यस्मात् ते रुष्टाः सबलवाहनमेनं सद्य एव शापाभिचाराभ्यां हन्युः। ममु.

(४) एवंविधस्यापि नृपतेर्ब्राह्मणाधीनत्वं वक्तुं ब्राह्मणस्य निग्रहानुग्रहसामर्थ्यमाह– परामित्यादिना। मच.

(५) परामपि कोषक्षयेण बलवद्राजविरोधेन च उत्कृष्टां आपदं प्राप्तो राजा ब्राह्मणं न प्रकोपयेत् तदीयधनाऽऽदानेन तदवगणनया वा तन्मन्युं नोत्पादयेत्। 'परामप्यापदं प्राप्तः' इत्यस्य निषेधस्य 'ते ह्येनं कुपिता हन्युः' इत्यारभ्य 'स्वासु योनिषु शाम्यति' (मस्मृ. ९।३२१) इत्यन्तः सर्वोऽयमर्थवादः। राप्र. १५१–१५२

(६) हि निश्चयेन। ते ब्राह्मणाः। एनं राजानम्। भाच.

[२]यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः।
क्षयी चाऽऽप्यायितः सोमः को न नश्येत्प्रकोप्य तान्॥

(१) प्रागुक्तार्थसिद्धये ब्राह्मणमाहात्म्ये इतिहासं लोकप्रसिद्धमनुवदति। एष्वर्थेष्वाख्यानानि महाभारतादवगमयितव्यानि। मेधा.

(२) सर्वभक्ष्योऽग्निर्भृगुणा कृतः। वडवामुखो नाम ऋषिः, तेन मेरौ तपः कुर्वता समुद्र आहूतो नागतः, तेन क्रोधादात्मगात्रोष्मणा समुद्रः स्तिमितजलः कृतः, प्रस्वेदप्रस्यन्दसदृशश्चास्य लवणभावो जनितः, उक्तश्च

(१) मस्मृ ९।३१३; राक. १७४ णान्न (णं न); राप्र. १५१ राकवत्.

(२) मस्मृ. ९।३१४; राक. १७४; राप्र. १५१.

'अपेयो भविष्यसि' इति भारते मोक्षधर्मेषूक्तम्। क्षयी कृत्वा पश्चात् आप्यायनोपायकथनेन आप्यायितश्चन्द्रो दक्षेण। मवि.

(३) यैः ब्राह्मणैः अभिशापेन सर्वभक्षोऽग्निः कृतः, समुद्रश्चापेयजलः, चन्द्रश्च क्षययुक्तः पश्चात् पूरितः, तान् कोपयित्वा को न नश्येत्? * ममु.

(४) 'भृगोः पत्नीयम्' इत्युक्तेऽग्निनाऽसुरस्तां जहार, तत्कृत्वा भृगुणा शप्तोऽग्निः सर्वभक्षो भवेदिति। तथा मोक्षधर्मे नारायणीये कृष्णार्जुनसंवादे— नारायणो लोकहितार्थं वडवामुखो नाम ऋषिः पुरा बभूव। तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतः। तेनामर्षितेन आत्मगात्रोष्मगा समुद्रः स्तिमितजलः कृतः, स्वेदस्यन्दनसदृशश्चास्य लवणभावो जनितः, उक्तश्च 'अपेयो भविष्यसि'। एवं त्वत्तोयं वडवामुखे योऽग्निः तेन पीयमानं मधुरं भविष्यतीत्यपेयो महोदधिः समुद्रः। क्षयी यक्ष्मणा युक्तः। आप्यायितः पूरितः। मच.

**[1]लोकानन्यान् सृजेयुर्ये लोकपालांश्च कोपिताः।**
**देवान् कुर्युरदेवांश्च कः क्षिण्वंस्तान् समृध्नुयात्॥**

(१) क्षिणोति छादयति। तदविशेषात् स्मृतीनां क्षिण्वन् हि संक्षेपोऽप्युत्तमानामेवेति युधिष्ठिरेण गाण्डीवे विक्षिप्ते व्यासमुनिना दर्शितम्। मेधा.

(२) लोकानन्यानिति विश्वामित्रचरितम्। लोकपालानिति इन्द्रान्तरसृष्ट्याद्युद्यमेन गरुडं सृजतां वालखिल्यानां चरितम्। देवानदेवानिति वाय्वादीनां वृत्तम्। क्षिण्वन् दुःखजननादेव। मवि.

(३) ये स्वर्गादिलोकान् परानन्यांश्च लोकपालान् सृजन्तीति संभाव्यते, देवांश्च शापेन मानुषादीन् कुर्वन्ति, तान् पीडयन् कः समृद्धिं प्राप्नुयात्? * ममु.

(४) सृजेयुः विश्वामित्रादयः। एवं देवानित्यपि। माण्डव्यशापेन यमोऽपि विदुरतां गतः। * मच.

**[1]यानुपाश्रित्य तिष्ठन्ति लोका देवाश्च सर्वदा।**
**ब्रह्म चैव धनं येषां को हिंस्यात्ताञ्जिजीविषुः॥**

(१) लोकास्त्रयः पृथिव्यादयः। देवा आहुतिद्वारेण ब्राह्मणोपाश्रिताः। अध्यापनाधिक्येन कर्मबहुत्वेन ब्राह्मणो देवानामाश्रयः, न तथा क्षत्रियवैश्यौ। मेधा.

(२) यान् समाश्रित्य यत्साध्यान् यज्ञानाश्रित्य। ब्रह्म वेदः। मवि.

(३) यान् ब्राह्मणान् यजनयाजनकर्तृकानाश्रित्य 'अग्नौ प्रास्ताहुतिः' (मस्मृ. ३।७६) इति न्यायेन पृथिव्यादिलोका देवाश्च स्थितिं लभन्ते, वेद एव च येषां धनम्, अभ्युदयसाधनतया याजनाध्यापनादिना धनोपायत्वाच्च, तान् जीवितुमिच्छन् को हिंस्यात्? † ममु.

(४) अपराधिनोऽपि ब्राह्मणस्य दण्डनिवृत्त्यर्थं स्तुतिरियम्। * राप्र. १५२

**[2]अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।**
**प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत्॥**

(१) जातिमात्राश्रयाणामनवज्ञानम्, न विद्वत्तामपेक्षेत दानादिक्रियास्विव। यथा चैतत् 'न पादतः कुर्यात्' (मस्मृ. ४।५४) इत्यग्नौ। मेधा.

---

* भाव. ममुगतम्।

(१) मस्मृ. ९।३१५; राक. १७४ लोकानन्यान् सृजेयुर्ये (लोकानलोकान् कुर्युस्ते); राप्र. १५१ राकवत्.

* शेषं ममुगतम्।

† मच., नन्द., भाच. ममुगतम्।

(१) मस्मृ. ९।३१६; राक. १७४ लोका देवाश्च (देवा लोकाश्च) ब्रह्म चैव (ब्रह्मैव च); मवि. यानुपा (यान्समा); राप्र. १५१ यानुपा (यान्समा) शेषं राकवत्.

(२) मस्मृ. ९।३१७; राक. १७४ अविद्वांश्चैव विद्वांश्च (अविद्वांश्च विद्वांश्चैव) श्लोकार्धौ व्यत्यासेन पठितौ; राप्र. १५१ अविद्वांश्चैव वि (एवं विद्वानवि) श्लोकार्धौ व्यत्यासेन पठितौ.

(२) अविद्वानपि, न तु विद्वानेव। प्रणीतोऽग्निः होमार्थमुद्धृतः। * मवि.

(३) एवं तर्हि विद्वांसं ब्राह्मणं सेवेत इत्यत आह– अविद्वानिति। यथा आहितोऽनाहितो वाऽग्निर्महती देवता, एवं मूर्खो विद्वांश्च प्रकृष्टा देवतेति। ममु.

(४) अहो किं वक्तव्यमित्याह– अविद्वानिति। दैवतं देवतावृन्दम्। ‡ मच.

[1]श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति।
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते॥

(१) गतार्थोऽयम्। दुराचारोऽप्यनवज्ञेय इत्यर्थः। मेधा.

(२) श्मशानेष्वपि न दुष्यति न पापेन युज्यते। यतः तज्जातीयः यज्ञे हूयमानो वर्धते। न ह्यग्निस्ततोऽन्यः ततोऽन्यत्र, एकत्वाद्देवतायाः। † मवि.

(३) नैव दुष्यति, 'क्रव्यादमग्निम्' इत्यादिमन्त्रलिङ्गकादृष्टदोषेऽपि दृष्टदोषाभावात्। न हि तदग्निः दाहप्रकाशहीनः। हूयमानः होमेन संस्क्रियमाणः अदृष्टदोषं परिहृत्य फलजनकतया वर्धते इति भावः। मच.

(४) श्मशानेष्वपि वर्धते आहुतीभिः। भाच.

[2]एवं यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत्॥

(१) अनिष्टेषु प्रतिषिद्धेषु वर्तमानाः मृदूपक्रमैर्यथाशास्त्रं दण्ड्याः, न सहसाऽऽक्रम्य वर्णान्तरवत्। मेधा.

(२) अनिष्टेषु लोकविद्विष्टेषु। मवि.

(३) एवं कुत्सितकर्मस्वपि सर्वेषु यद्यपि ब्राह्मणाः प्रवर्तन्ते तथापि सर्वप्रकारेण पूज्याः। यस्मात् प्रकृष्टं तद्दैवतम्। स्तुत्यर्थत्वाच्चास्य न यथाश्रुतार्थविरोधः शङ्कनीयः। ममु.

(४) देववृन्दादपि परमम्, दृष्टशापानुग्रहहेतुत्वात्। * मच.

(५) अनिष्टेषु सतामसंमतेषु सर्वकर्मस्वितरजनकर्मसु। नन्द.

[1]क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः।
ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसंभवम्॥

(१) क्षत्रियस्य ब्राह्मणान् प्रति बाधितुं प्रवृत्तस्य ब्राह्मणा एव संनियन्तारः। श्रीमदावलिप्ताः व्यवस्थाभङ्गेन वर्तमानाः क्षत्रियाः जपहोमादिशापादिना ब्राह्मणैः मार्गे व्यवस्थाप्यन्ते। अत्र हेतुः– क्षत्रं ब्रह्मसंभवम्। ब्राह्मणजातेः सकाशात् क्षत्रियाणां संभवः। अत्रार्थवाद एवायम्। † मेधा.

(२) क्षत्रियस्य ब्राह्मणान् प्रति सर्वथा पीडानुवृत्तस्य ब्राह्मणा एव शापाभिचारादिना सम्यक् नियन्तारः। यस्मात् क्षत्रियो ब्राह्मणात् संभूतः, ब्राह्मणबाहुप्रसूतत्वात्। ममु.

(३) ब्रह्म ब्राह्मणत्वजात्यवच्छिन्नो जीवः। ततः संभवम्, 'सैषा क्षत्रस्य योनिः यद् ब्रह्म' इति श्रुतेः, तदुत्तरभावित्वाद्वा क्षत्रियस्य। मच.

(४) इतरैश्च ब्राह्मणो नातिक्रमणीय इत्याह– क्षत्रस्येति। अतिप्रवृत्तस्य लङ्घितशास्त्रमर्यादस्य संनियन्तृ स्यात् नियन्तुं शक्नुयात्। कुतः? क्षत्रं हि ब्रह्मसंभवम्। नन्द.

(५) ब्रह्मैव ब्राह्मणः। ब्रह्मसंभवम्, ब्राह्मणात् संभवो यस्य तत् ब्रह्मसंभवम्। $ भाच.

---

* भ च. मविगतं ममुगतं च।

‡ शेषं ममुगतम्।

† ममु. मविगतम्।

(१) मस्मृ. ९।३१८ ; राक. १७४ वर्धते ( पूज्यते ); राप्र. १५१ राकवत्.

(२) मस्मृ. ९।३१९ ; राक. १७४ परमं दैवतं ( दैवतं परमं ) ; राप्र. १५१–१५२ वर्तन्ते ( वर्तते ) ब्राह्मणाः पूज्या ( ब्राह्मणः पूज्यो ) शेषं राकवत्.

* शेषं ममुगतम्।

† मवि. मेधागतम्।

$ शेषं मेधागतम्।

(१) मस्मृ. ९।३२० ; राक. १७४–१७५ स्यातिप्र ( स्यापि प्र ) सर्वशः ( सर्वतः ); राप्र. १५२ स्यातिप्र ( स्यापि प्र ) ; नन्द. प्रवृद्धस्य ( प्रवृत्तस्य ).

'अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥

( १ ) ननु यो यस्योत्पत्तिहेतुर्नासौ तस्य नाशकः । नैवम् । अद्भ्यः ( उत्पन्नेभ्यः ) ओषधिवनस्पतिभ्य एव जायते इत्येवमग्निरद्भ्य एव उत्पन्नः । तस्य सर्वगं तेजः सर्वदाह्यं दहति तेजसा अभिभवति । अपः प्राप्य तदस्य तेजः शाम्यति । अश्मनो लोहं खड्गादि । तेन सर्वं विदार्यते, अश्मसंपातात् स्फुटति । एवं क्षत्रियाः सर्वत्र जिगीषवो विजयन्ते, ब्राह्मणेषु चेत् औद्धत्येन वर्तन्ते तदा विनश्यन्ति । मेधा.

( २ ) अद्भ्योऽग्निः, अप्पर्यन्तत्वात् । ब्रह्मतः क्षत्रम्, क्षत्रक्षयानन्तरं ब्राह्मणैः सह संभूय क्षत्रियाभिः पुत्राणां जननात् । अश्मनः आकरस्थपाषाणकणेभ्यः । शाम्यति भाः प्राप्य संघर्षणे नश्यति । मवि.

( ३ ) जलब्राह्मणपाषाणेभ्यः अग्निक्षत्रियशस्त्राणि जातानि, तेषां संबन्धि तेजः सर्वत्र दहनाभिभवच्छेदनार्थकं कार्यं करोति । स्वकारणेषु जलब्राह्मणपाषाणाख्येषु दहनाभिभवच्छेदनात्मकं कार्यं न करोति । * ममु.

( ४ ) अत एवाऽऽह– अद्भ्य इति । अयमर्थः– अग्न्यर्थमिन्धनं हि मथ्यमानं रसक्षयेऽग्निमभिव्यनक्ति । ' अथार्णवस्य क्षुब्धस्य तस्मिन्नम्भसि मन्थिते । कृष्णवर्त्मा समभवद्विभुर्वैश्वानरोऽविमान् ॥ ' इत्यब्जः अग्निः पौष्करे श्रुतः । विद्युद्रूवाग्नेः प्रत्यक्षजलजत्वम् । पाषाणो लोहबीजगर्भो ध्मायमानो लोहं व्यनक्ति । तत्रासत्त्वे न ततः स्यात्, अतोऽभिव्यक्त्यपेक्षयाऽश्मजत्वम् । क्षत्रियेत्वानन्तर्यपेक्षया, ' ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ' इति श्रुतेश्च । ततः किम् ? तत्राह– एषामिति । सर्वत्रगं सर्वद्रव्येषु दाहच्छेददण्डादिकर्तृत्वेन वर्तमानं तेजः, अग्नेः दग्धृत्वम्, लोहस्य तैक्ष्ण्यम्, राज्ञो दण्डनं च, स्वासु योनिषु जलहीरकविप्रेषु न विकरोति, किंतु शाम्यति, ' ब्राह्मणस्त्वक्षतो व्रजेत् ' इत्युक्तेः । मच.

( ५ ) एतदेवोपपादयति– अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमिति । अद्भ्योऽग्निरिति च पौराणिकाः । ब्रह्मतः ब्राह्मणतः । ब्राह्मणा हि दक्षमरीच्यादयः स्रष्टारः । तेषां अग्न्यादीनां सर्वत्र गन्तुं शक्तं तेजः शक्तिः स्वासु योनिषु शाम्यति क्षरते । एतदुक्तं भवति– अग्निः सर्वं दग्धुमीष्टे, नापः । क्षत्रियः संनियन्तुमीष्टे, न ब्राह्मणम् । लोहं सर्वं छेत्तुमीष्टे, नाश्मानम् । अग्निलोहयोः उपन्यासो दृष्टान्तार्थः । नन्द.

'नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते ।
ब्रह्म क्षत्रं च संपृक्तमिह चामुत्र वर्धते ॥

(१) यत्क्षत्रं (यद् ?) ब्राह्मणरहितं राज्यम्, मन्त्रिपुरोहितादयो यत्र न ब्राह्मणाः, तत्र कुतः समृद्धिः ? एवं ब्राह्मणा अपि राजापाश्रिताः कुतः संपत्तिं लभन्ते ? उभौ युक्तौ जगज्जयतः । ब्रह्मक्षत्रशब्दौ ब्राह्मणक्षत्रियजातिवचनौ । मेधा.

( २ ) संपृक्ते परस्पराविरुद्धे वर्धेते अवश्ययोद्धव्यरणोपस्थितौ । मवि.

( ३ ) ब्राह्मणरहितक्षत्रियो वृद्धिं न याति, शान्तिकपौष्टिकव्यवहारेक्षणादिधर्मविरहात् । एवं क्षत्रियरहितोऽपि ब्राह्मणो न वर्धते, रक्षां विना यागादिकर्मानिष्पत्तेः । किन्तु ब्राह्मणः क्षत्रियश्च परस्परसंबद्ध एवेह लोके परलोके च धर्मार्थकाममोक्षावाप्त्या वृद्धिमेति । दण्डप्रकरणे चेयं ब्राह्मणस्तुतिर्ब्राह्मणानामपराधिनामपि लघुदण्डप्रयोगनियमार्था । * ममु.

( ४ ) इतश्च ब्राह्मणः श्रेष्ठ इत्याह– नेति । याजनाद्याशंसाकर्तृतयाऽविद्यमानं ब्राह्मणजात्यवच्छिन्नं यस्य क्षत्रस्य तत् न ऋध्नोति वृद्धिं न गच्छति । नाक्षत्रं न

---

* भाच. ममुगतम् ।

(१) मस्मृ. ९।३२१ ; राक. १७५ ; मच. तेषां ( एषां ) ; राप्र. १५२.

* भाच. ममुगतम् ।

(१) मस्मृ. ९।३२२ ; राक. १७३ क्षत्रं च संपृक्त ( क्षत्रेण संयुक्त ) ; मच. ७।१ द्वितीयः पादः ; राप्र. १४३ राकवत्.

विद्यते क्षत्रं याज्यपालकादितया यस्य तत् । संपृक्तं परस्पराकाङ्क्षया संयुक्तम् । मच.

**¹दत्त्वा धनं तु विप्रेभ्यः सर्वदण्डसमुत्थितम् ।**
**पुत्रे राज्यं समासृज्य कुर्वीत प्रायणं रणे ॥**

(१) यदा तु जरसाऽभिभूयेत कृतकृत्यः स्यात्तदा वसुनि धने सति सर्वदण्डसमुद्भूतं ब्राह्मणेभ्यो दद्यात् । महापातकिधनस्य वरुणाय प्रतिपादनमुक्तम् । न राज्ञा तत् ग्रहीतव्यम् । अन्यत्तु दण्डधनं राज्ञः । दृष्टादृष्टकार्यार्थिवादाद्बहुधनमस्ति प्रयाणकालश्च, तदा सर्वस्यायं विनियोगः । अन्ये तु दण्डग्रहणं करशुल्कादीनामपि प्रदर्शनार्थं व्याचक्षते । तथा सति सर्वस्वं दद्यादित्युक्तं भवति । वाहनायुधभूमिपुरुषवर्जं सर्वं दातव्यम् । एवं तु व्याख्याने 'पुत्रे राज्यं समासज्य' इति न घटते । न हि तस्याकोशस्य राज्यकरणसंभवः । कुर्वीत प्रायणं रणे । आत्मत्यागे संग्रामं कुर्यात् । यदि कथंचित् अन्त्यावस्थायां रणं नोपलभेत तदाऽग्न्युदकादिना शरीरं जह्यात् । फलातिशयसंपत्तिस्तु रणे । समासञ्जनं आरोपणम् । मेधा.

(२) रणे प्रायणम् । अन्यथा तु दैवकृतैरेव रोगादिभिः । उभयथाऽपि दत्त्वा धनमित्यादि तुल्यम्, प्रायणमात्रधर्मत्वात् । मवि.

(३) यदा तु अनिष्टदर्शनेनाचिकित्स्यव्याधिना वा आसन्नमृत्युर्भवति तदा– दत्त्वेति । महापातकिधनव्यतिरिक्तविनियुक्तावशिष्टसर्वदण्डधनं ब्राह्मणेभ्यो दत्त्वा पुत्रे राज्यं समर्प्य आसन्नमृत्युः फलातिशयप्राप्तये संग्रामे प्राणत्यागं कुर्यात् । संग्रामासंभवे त्वनशनादिनाऽपि । ‡ ममु.

(४) रणं उपलक्षणम्, मोक्षसाधनोपाय इत्यर्थः । अयमर्थः– राजा राज्यान्निःस्पृहत्वे ज्येष्ठपुत्राय राज्यं दत्त्वा मोक्षसाधनोपायं कुर्यात् । रार. ६६

(५) क्षत्रियस्य वीतरागस्य नृपतेः कार्यान्तरं विधत्ते– दत्त्वेति । प्रायणं प्राणत्यागं रणे कुर्यादिति । 'वने' इति क्वचित्पाठः, तदा वनवासं कुर्यादिति । मच.

(६) अथ चरमे वयसि राज्ञः कर्तव्यमाह– दत्त्वा धनं तु विप्रेभ्य इति । प्रायणं मरणम् । नन्द.

**¹सर्वरत्नानि राजा तु यथार्हं प्रतिपादयेत् ।**
**ब्राह्मणान् वेदविदुषो यज्ञार्थं चैव दक्षिणाम् ॥**

(१) सर्ववर्णानां स्वर्गादिफलाय पुरुषार्थोपयोगि दानं विहितम् । अयं तु राज्ञो नियमार्थमुपदेशः । बहुधनेन राज्ञा सर्वरत्नानि मणिमुक्तादीनि यथार्हं विद्याकर्मानुरूपेण ब्राह्मणेभ्यो दातव्यानि । यज्ञार्थं च दक्षिणा । काम्यकर्मसिद्धयेऽपीति पुनरुपदेशः । प्रतिपादयेत् स्वीकारयेत् ग्राहयेदिति यावत् । * मेधा.

(२) राजा पुनः सर्वरत्नानि मणिमुक्तादीनि यागोपयोग्यानि च दक्षिणार्थं धनं विद्यानुरूपेण वेदविदो ब्राह्मणान् स्वीकारयेत् । † ममु.

(३) सांतानिकादिषु राज्ञा कर्तव्यमाह– सर्वरत्नानि राजा त्विति । ब्राह्मणान् सांतानिकादीन् प्रतिपादयेत् । बहिर्वेदीत्यनुवर्तते । सर्वरत्नानि प्रतिपादयेदित्येव सिद्धे दाने 'यज्ञार्थं चैव दक्षिणाः' इति पृथगुपन्यासो वक्ष्यमाणं प्रत्यादरातिशयार्थः । नन्द.

**²न तस्मिन् धारयेद्दण्डं धार्मिकः पृथिवीपतिः ।**
**क्षत्रियस्य हि बालिश्याद्ब्राह्मणः सीदति क्षुधा ॥**

---

‡ भाच. ममुगतम् ।

(१) मस्मृ. ९।३२३ ; **मेधा.** समासृज्य ( समासज्य ); **रार.** ६६ धनं ( दानं ) समुत्थितम् ( समुच्छ्रितम् ) समासृज्य ( समासज्य ) ; **मच.** रणे ( वने ) इत्यपि पाठः; **भाच.** समुत्थितम् ( समन्वितम् ).

* मवि., मच, मेधागतम् ।

† गोरा., भाच, ममुगतम् ।

(१) मस्मृ. ११।४.

(२) मस्मृ. ११।२१ ; **मच.** ७।१ क्षत्रियस्य हि बालिश्याद्ब्रा ( क्षत्रियस्यापराधेन ब्रा ) उत्त.; **राप्र.** १३ (=) मचवत्, उत्त. ; **नन्द.** दक्षिणाम् ( दक्षिणाः ).

(१) अस्मिन्निमित्ते चौरत्वेनानीतेभ्यो राज्ञा दण्डो न कर्तव्यः। यतस्तस्यैव बालिश्यात् मौर्ख्यात् क्षुधाऽवसीदति। क्षुधेत्यविवक्षितम्, उभयोः प्रकरणादर्थवादत्वाच्च। मेधा.

(२) तस्मिन् निमित्तेषु चौर्यं कुर्वाणे ब्राह्मणे धर्मप्रधानो राजा दण्डं न कुर्यात्। यस्मात् राजमौर्ख्यात् ब्राह्मणः क्षुदवसादं प्राप्नोति। * गोरा.

(३) तस्मिन्निति तत्पदं व्यवहितवाचि। येनाश्वस्तनविधानेन त्रिरात्रोपवासादिना अर्थहरणं कृतम्, तस्मिन्नित्यर्थः। बालिश्यात् अज्ञानात्। मवि.

(४) आरोपस्य फलमाह– नेति। तस्मिन् आसुरधनग्राहिणि ब्राह्मणे। ब्राह्मणस्यान्यधनापहरणं क्षुधा सीदनं वा क्षत्रियस्यैवापराध इत्याह– क्षत्रियस्येति। ‡ मच.

[1]तस्य भृत्यजनं ज्ञात्वा स्वकुटुम्बान्महीपतिः।
श्रुतशीले च विज्ञाय वृत्तिं धर्म्यां प्रकल्पयेत्॥

(१) धर्म्या वृत्तिः यया नित्यकर्माण्यपि संपद्यन्ते। क्षीणकोशेनापि महिषीराजपुत्रादिकल्पितादायाद्विहिताच्च धनाच्च किंचिदवकृष्य दातव्यमिति। स्वकुटुम्बादित्यादिना महाधनस्यैव राज्ञोऽयं विधिः, 'सर्वरत्नानि' (मस्मृ. ११।४) इति वचनात्। मेधा.

(२) तस्य ब्राह्मणस्य अवश्यभरणीयपुत्रादिपरिमाणं विज्ञायानुष्ठानवृद्धौ तदनुरूपां जीविकां धर्मादनपेतां स्वगृहाद्राजा प्रकल्पयेत्। † गोरा.

(३) तस्य ब्राह्मणस्य। कुटुम्बात् स्वकुटुम्बमध्यांशकात् धनात्। शीलं वृत्तम्। धर्म्यां असद्दानादिव्यतिरिक्ताम्। मवि.

(४) भृत्यजनं पोष्यजनम्। स्वकुटुम्बादपि धर्म्यां स्वधर्मोत्पत्तये हेतुभूताम्। मच.

(५) श्रुतिशीले वेदाभ्यासरते। ¶ भाच.

[1]कल्पयित्वाऽस्य वृत्तिं च रक्षेदेनं समन्ततः।
राजा हि धर्मषड्भागं तस्मात्प्राप्नोति रक्षितात्॥

(१) स्पष्टार्थोऽयं श्लोकः। मेधा.

(२) अस्य च ब्राह्मणस्य जीविकां विधाय शत्रुचौरादेः सततं चैनं रक्षेत्। यस्मात् ब्राह्मणात् रक्षितात् राजा तदर्जितधर्मषड्भागं प्राप्नोति। * गोरा.

(३) वृत्तिं दानादिना। रक्षेच्चौरादेः। मवि.

(४) रक्षेत्ताम्रपट्टलिखितादिना। ब्राह्मणरक्षणे परमलाभ इत्याह– राजेति। बलिषड्भागमिव रक्षितात् प्रजारूपात्तद्धर्मात् षड्भागमाप्नोतीत्यन्वयः। मच.

(५) समन्ततः सर्वापद्भ्यः। फलषड्भागम्, यत् पुण्यं प्रत्यहं क्रियते तस्य फलषड्भागम्। नन्द.

प्रजारक्षणविधिः

[2]तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः।
तीक्ष्णश्चैव मृदुश्चैव राजा भवति संमतः॥

(१) तीक्ष्णमृदुता नित्यमभ्यसनीया। तादृशो राजा प्रजानां संमतो भवति अभिप्रेतः। मेधा.

(२) कार्यवशात् तीक्ष्णो मृदुर्वा राजा भवेत्, नैकान्ततः। कार्यतः तीक्ष्णमार्दवालम्बी राजा प्रजानामभिमतो भवति। † गोरा.

(३) अपि च राजानं धर्मविशेषेण शिक्षयति– तीक्ष्णश्चेति। दण्ड्येष्वपराधयुक्तेषु तीक्ष्णः निरुपरुद्धः, मृदुश्च साधुषु। संमतो मन्वादीनाम्। मच.

(४) धर्मान्तरमाह– तीक्ष्णश्चैवेति। तीक्ष्णः अग्न्यर्कादिमात्रानिर्मितत्वात्। मृदुश्च सोमवरुणादिमात्रानिर्मितत्वात्। नन्द.

---

* ममु. गोरागतम्।

‡ भाच. मचगतम्।

† ममु., नन्द. गोरागतम्।

¶ शेषं गोरागतम्।

(१) मस्मृ. ११।२२; भाच. श्रुत (श्रुति).

* ममु., भाच. गोरागतम्।

† मवि., ममु., भाच. गोरागतम्।

(१) मस्मृ. ११।२३; मच. त्प्राप्नोति (दाप्नोति); नन्द. धर्मं (फल); भाच. मचवत्.

(२) मस्मृ. ७।१४०; गोरा. तीक्ष्णश्चैव (न तीक्ष्णो न); राक. १५२; राप्र. १३४.

**[1]एवं सर्वं विधायेदमितिकर्तव्यमात्मनः ।**
**युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥**

(१) सहायसंग्रहप्रभृत्युक्तस्यार्थस्य एवमिति परामर्शनम् । विधाय कृत्वा । इतिकर्तव्यम्, उपकारकमितिकर्तव्यमुच्यते । युक्तः तत्परः । अत एवाप्रमत्तः । अथवा बुद्ध्यस्खलनमप्रमत्तता सर्वकाले । एवं प्रजाः परिरक्षेत् । मेधा.

(२) एवं उक्तनीत्या सर्वमात्मनः कार्यजातं संपाद्य यत्नवान् बुद्ध्याऽस्खलन्नात्मीयाः प्रजाः परिरक्षेत् । * गोरा.

(३) युक्तः उद्युक्तः । अप्रमत्तः अन्यत्रासक्तः । मवि.

(४) प्रतिज्ञान्तरं ब्रुवन् प्रकृतमुपसंहरति— एवमिति । युक्तः उद्युक्तः । इमाः स्वदेशस्थाः । रक्षेदेवेत्यन्वयः । मच.

(५) इदं उक्तम् । युक्तः उपायवान् । नन्द.

**[2]विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः ।**
**संपश्यतः सभृत्यस्य मृतः स न तु जीवति ॥**

(१) पूर्वोक्तयोरप्रमादयोः (? योर्युक्तताऽप्रमादयोः) अन्यथात्वे दोषमाह । यदि सम्यक् गुल्मस्थानानि प्रति न जागर्ति तदा छिद्रान्वेषिभिः दस्युभिः चौरैः प्रजाः ह्रियन्ते । तासु किं करिष्यति ? अतस्तादृशो राजा मृत एव । जीवितं मरणमेव । अतोऽप्रमत्तेन भवितव्यम् । विक्रोशन्त्यः आक्रन्दन्त्यः । ह्रियन्ते संपश्यतः सभृत्यस्य । निर्दिष्टं द्रक्ष्यते । केवलं भृत्यास्तदीयाः पश्यन्ति, नानुधावन्ति मोक्षयन्ति । सर्वे ते मृतकल्पाः । मेधा.

(२) यस्य राज्ञः सभृत्यस्य पश्यत एव राष्ट्रादाक्रन्दन्त्यः प्रजाः शत्रुप्रभृतिभिः अपह्रियन्ते, स्व(? सः)-जीवितकार्याभावात् मृत एव, न तु जीवति । † गोरा.

(३) सार्थवादं तदेवाऽऽह— विक्रोशन्त्य इति द्वाभ्याम् । विक्रोशन्त्यः हा हतोऽस्मि इति वच उद्गिरन्त्यः । अपह्रियन्ते धनाद्यादानेन । दस्युभिः साहसिकैः । संपश्यतः इत्यनादरे षष्ठी । मृतः शव इव घृणास्पदीभूतः । मच.

(४) अरक्षितुर्निन्दामाह— विक्रोशन्त्य इति । ह्रियन्ते धनमिति शेषः (?) । नन्द.

**[1]क्षत्रियस्य परो धर्मः प्रजानामेव पालनम् ।**
**निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥**

(१) प्राप्तं फलं भुङ्क्ते राजा, स धर्मेण युज्यते । अन्यथाऽनुग्राहकाणामेव पालनं कुर्वन् प्रत्यवैति । मेधा.

(२) निर्दिष्टफलं शास्त्रनियमितकरादि, तद्ग्रहणेन भोगसिद्धिः । मवि.

(३) धर्मान्तरेभ्यः श्रेष्ठं क्षत्रियस्य प्रजारक्षणमेव प्रकृष्टो धर्मः । यस्मात् यथोक्तलक्षणफलकरादिभोक्ता राजा धर्मेण संबध्यते । * ममु.

(४) निर्दिष्टफलभोक्ता प्रजापालनार्थं वेतनीकृतस्य षड्भागादिकस्य फलस्य भोक्ता । नन्द.

**[2]बालदायादिकं रिक्थं तावद्राजाऽनुपालयेत् ।**
**यावत्स स्यात्समावृत्तो यावद्वाऽतीतशैशवः ॥**

(१) बालधनं राज्ञा स्वधनवत् परिपालनीयम् । अन्यथा पितृव्यादिबान्धवा मयेदं रक्षणीयं मयेदमिति विवदेरन् । बालो दायादोऽस्य तदिदं बालदायादिकम् । दायादः स्वाम्यत्रोच्यते । बालस्वामिकं धनं तावत् राजा रक्षेत् यावदसौ समावृत्तः गुरुकुलात् प्रत्यागतः यावद्वा अतीतशैशवः अतिक्रान्तबालभावः । अयं च विकल्पः । यो गृहशैशवो भवति तदर्थमतीतशैशवमुच्यते ।

---

* ममु. गोरावत् ।

† ममु. गोरागतम् ।

(१) मस्मृ. ७।१४२ ; राक. ८० ; पमा. ४१४.

(२) मस्मृ. ७।१४३.

* गोरा., मच., भाच. ममुगतम् ।

(१) मस्मृ. ७।१४४ ; रार. ५५ ; राप्र. १३ (=) नामेव (नां परि).

(२) मस्मृ. ८।२७, यावद्वा (यावच्चा) इत्यपि क्वचित्पुस्तके पाठः ।

यस्तु व्रतकः स निवृत्तेऽपि शैशवे आ समावर्तनात् प्रतिपाल्यधनः स्यात्। अथवा द्विजातीनां समावर्तनमवधिः, अन्येषां शैशवात्ययः। * मेधा.

(२) बालो दायादः भागी यस्य तत्तथा। अनुपालयेत् स्वगोचरीकृत्य स्थापयेत्। समावृत्तः षट्त्रिंशदब्दादिषु। तन्मध्ये चेद्धनेन कार्यं तदा यावद्व्रतेत्यवध्यन्तरम्। शैशवं षोडशाब्दात् प्राक्। मवि.

(३) अनाथबालस्वामिकं पितृव्यादिभिरन्यायेन गृह्यमाणं तावद्राजा रक्षेत् यावदसौ 'षट्त्रिंशदब्दादिकं ब्रह्मचर्यम्' इत्याद्युक्तेन प्रकारेण गुरुकुलात् समावृत्तो न भवति, तादृशस्यावश्यकबाल्यविगमात्। यस्त्वशक्त्यादिना बाल एव समावर्तते सोऽपि यावदतीतबाल्यो भवति तावत्तस्य धनं रक्षेत्। बाल्यं च षोडशवर्षपर्यन्तम्, 'बाल आषोडशाद्वर्षात्' इति नारदवचनात्। ममु.

(४) बालधनविप्रतिपत्तौ कर्तव्यमाह– बालदायादिकमिति। दायमादत्ते इति दायादः स्वामी। यस्य बालो दायादः तत् बालदायादिकं रिक्थं धनं ज्ञात्याद्यप(? देरप)हरतोऽनुपालयेत्। कार्यादिसामर्थ्यापेक्षया व्यवस्थापनीयो विकल्पः। नन्द.

**[1]वशापुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च।**
**पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च॥**

(१) यः कश्चिदनाथस्तस्य सर्वस्य धनं राजा यथावत् परिरक्षेत्। तथा च उदाहरणमात्रं वशादयः। एवं प्रजापालनमनुष्ठितं भवति। पूर्वस्तु श्लोकः कालनियमार्थः। वशा वन्ध्या। अपुत्रा असमर्थपुत्रा अविद्यमानपुत्रा दुर्गतपुत्रा वा। वशाश्चापुत्राश्चेति द्वन्द्वः। ननु च वशाऽप्यपुत्रैव। सत्यम्। उभयोपादानं तु सत्यपि भर्तरि तस्याः संरक्षणार्थम्। तस्यां ह्यधिविन्नायां भर्ता निरपेक्षो भवति। निष्कुलाग्रहणं तासां विशेषणम्। यासां न कश्चित् देवरपितृव्यमातुलादिः परिरक्षकः अस्ति, स्त्रीत्वाच्च स्वयमसमर्थाः, बान्धवास्तु मत्सरिणः, तासामेतदुच्यते। बन्धुभिर्हि स्त्रीणां शीलशरीरधनानि रक्षितव्यानि। तदुक्तम्– 'विनियोगोऽस्ति रक्षासु भरणे च स ईश्वरः। परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये॥ तत्सपिण्डेषु वाऽसत्सु पितृपक्षः प्रभुः स्त्रियाः। पक्षद्वयावसाने तु राजा भर्ता प्रभुः स्त्रियाः॥' (नास्मृ. १४।२७–२९)। या तु स्वयमेव कथंचिच्छक्ता, न तत्र बान्धवानां व्यापारोऽस्ति। अत एवाह– आतुरास्विति। असामर्थ्यमेतेन लक्ष्यते। अन्यैस्तु आतुरभर्तृका आतुरा व्याख्याता। अविधवाऽपि भर्तुरसामर्थ्यात् राज्ञैव रक्ष्या स्यादिति। निर्मनुष्याणामेतत्। कुलं बन्धुजातं यासां नास्ति ताः निष्कुलाः। अन्ये तु कुलटां निष्कुलामाहुः। तासामपि वेशाद्युपार्जितं धनमपतितानां राज्ञा रक्ष्यम्। अस्मिंश्च पक्षे स्वतन्त्रनिष्कुलाग्रहणम्। पतिव्रतासु विधवासु। मृतभर्तृका विधवा। धव इति भर्तृनाम। तद्विरहिता विधवा। सा चेत् पतिव्रता भवति तदा सा रक्ष्यधना। व्यभिचाररतानां तु स्त्रीधनानर्हत्वं स्मृत्यन्तरे पठ्यते– 'अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका। व्यभिचाररता या च स्त्रीधनं न तु साऽर्हति॥' इति। तस्यास्तु निष्कासनं विहितम्। निष्कासनं च प्रधानवेश्मनो बहिरवस्थापनम्, न तु निर्वासनमेव। यतः पतितानामपि तासां गृहान्तिके वासो भक्ताच्छादनमात्रदानं च विहितम्– 'एवमेव विधिं कुर्यात् योषित्सु पतितास्वपि। वस्त्रान्नपानं देयं च वसेयुश्च गृहान्तिके॥' तेन यः कश्चित्स्त्रीणां निर्वासनविधिः 'स्त्रीधनं द्रव्यसर्वस्वम्' इत्यादिषु श्रूयते, स एवंविषय एव द्रष्टव्यः। तथापि यावद्भिक्षोत्सर्पणादिना किंचिदर्जितं तदर्हत्येव, न बान्धवा अपहरेयुः। इह तु अस्मिन्नेव निमित्ते आधिवेदनं विहितम्, न तु स्त्रीधनापहारः। तथा ह्याह– 'मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्। व्याधिता चाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा॥' अतश्च मानवस्मृतिबलेन 'स्त्रीधनं न तु साऽर्हति' इत्येषा स्मृतिरेवं व्याख्यायते– आधिवेदनिकं स्त्रीधनमेषा नार्हति, नैतस्यै देयमित्यर्थः। यदुक्तम्– 'अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्।'

* गोरा., मच., भाच. मेधागतम्।

(१) मस्मृ. ८।२८; गोरा. वशा (वन्ध्या).

इति । न तु प्रागुदत्तमस्या अपहर्तव्यम् । वयं तु ब्रूमः – पुरुषद्वेषिण्या व्यभिचाररतायाश्च युक्त एवापहारः । यत इहाप्युक्तम् – 'अतिक्रामेत् प्रमत्तं या मत्तं रोगार्तमेव वा । सा त्रीन् मासान् परित्याज्या विभूषणपरिच्छदा ॥' भूषणपरिच्छदैर्वियुक्ता कर्तव्येत्यर्थः । * मेधा.

(२) वन्ध्यापुत्रास्विति । यथा बालधनस्य राज्ञा रक्षणं स्यादेवं सत्यपि भर्तरि वन्ध्यासु स्त्रीषु, अप्रजासु, निष्कुलासु च कन्यकासु, मृतप्रोषितभर्तृकासु, साध्वीषु, व्याधितासु च रक्षणं स्यात् । अत्र गोबलीवर्दन्यायेनानेकशब्दोपादानम् । गोरा.

(३) वशा वन्ध्या । अपुत्रा मृतपुत्रा अजातपुत्रा वा । तदा यावत्तत्कुल्यगोचरेण तयोर्यदि सिद्धिः तावत्तद्वित्तं रक्ष्यं तत्पोषणं च कार्यम् । ते यदि निष्कुले रक्षकस्वकुल्यरहिते स्यातां तदाऽप्येवं यावज्जीवरक्षणं स्वगोचरेण स्थापनं च राज्ञा कार्यम् । एवंविधासु च पतिव्रतासु पत्युद्देशेन ब्रह्मचर्यादिव्रतकारिणीषु वा । मवि.

(४) वशासु वन्ध्यासु कृतदारान्तरपरिग्रहः स्वामी निर्वाहार्थोपकल्पितधनोपायासु निरपेक्षः । अपुत्रासु च स्त्रीषु प्रोषितभर्तृकासु, निष्कुलासु सपिण्डरहितासु, साध्वीषु च स्त्रीषु, विधवासु, रोगिणीषु च यद्धनं तस्यापि बालधनस्येव राज्ञा रक्षणं कर्तव्यम् । अत्र चानेकशब्दोपादाने गोबलीवर्दन्यायेन पुनरुक्तिपरिहारः । ममु.

(५) स्त्रीधनं रक्षणीयमिति वक्तव्ये वशाद्युपादानं गोबलीवर्दन्यायेन । स्त्रीष्विति । विरोधिलक्षणया वा कुलटाधनं न रक्षणीयमिति भावः । ‡ मच.

(६) अपुत्रास्वित्येव वशाया अपि विनिग्रहे सिद्धे वशाग्रहणमादरार्थम् । ‡ नन्द.

**'जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।**
**ताञ्शिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥**

* भाच. मेधागतम् ।

‡ शेषं मेधागतं गोरागतं च ।

(१) मस्मृ. ८।२९.

(१) बान्धवानां स्त्रीधनमपहरतामयं चोरदण्डः । ते हि बहुभिरुपधाभिरपहरन्ति । अस्वतन्त्रैषा स्त्री किं ददाति किं वा भुङ्क्ते ? वयमत्र स्वामिनः इति अचौराशङ्कया चौरदण्डो विधीयते । जीवन्तीनां तासां स्वबान्धवाः देवरादयः तत् धनं ये हरेयुः तान् शिष्यात् पृथिवीपतिः निगृह्णीयात् । चौरदण्डो वक्ष्यमाणः– 'येन येन यथाऽङ्गेन स्तेनो नृषु विचेष्टते । छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥' (मस्मृ. ८।३३४) इति । स्वबन्धुभ्यश्चैतद्विशेषेण राज्ञा रक्षितव्यम् । चौररक्षा तु सर्वराष्ट्रविषया विहिता । ‡ मेधा.

(२) यदि तु तासां वित्तं संभवति तदाऽऽह– जीवन्तीनामिति । मवि.

(३) वयमत्रानन्तराधिकारिणो रक्ष्याम इदं धनमित्यादिभाविस्वाम्यादस्मदधीनत्वादिव्याजेन ये बान्धवास्तासां जीवन्तीनां धनं हरेयुः (तान्) वक्ष्यमाणचौरदण्डेन धर्मप्रधानो राजा दण्डयेत् । * गोरा.

(४) स्त्रीधनस्य रक्षणीयप्रकरणे तदपहर्तृदण्डविधानमाह– जीवन्तीनां त्विति । स्वे देवरादयः, बान्धवाः सोदरादयः । जीवन्तीनामिति विशेषणात् मृतासु बान्धवानामेव स्त्रीधने स्वामित्वं गम्यते । नन्द.

**'दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् ।**
**राजा तदुपयुञ्जानश्चौरस्याऽऽप्नोति किल्बिषम् ॥**

(१) चौरैर्यन्नीतं किंचिद्धनं तद्राजा प्रत्याहृत्य नाऽऽत्मन्युपयुञ्जीत । किं तर्हि ? य एव मुषितास्तेभ्य एव प्रतिपादयितव्यम् । सर्वग्रहणेन च चण्डालेभ्योऽपि देयमिति । 'चौराहृतम्' इत्यन्यस्मिन् पाठे चौरैः आहृतमिति विग्रह्य 'साधनं कृता' (?) इति समासः । पाठान्तरे चौरहृतमिति 'तृतीया' इति योगविभागात् पूर्ववद्वा

‡ मच. मेधागतम् ।

* ममु. गोरावत् ।

(१) मस्मृ. ८।४० ; मेधा. 'चौराहृतम्' इति 'चौरहृतम्' इत्यपि च पाठान्तरम् ; मच. युञ्जान (भुञ्जान) ; भाच. चौरैर्हृ (चौरहृ) शेषं मचवत्.

समासः (?)। अयं त्वत्रार्थः— यच्चौरैर्हृतमशक्यप्रत्यानेयनं तद्राज्ञा स्वकोशात् दातव्यम्। उत्तरः श्लोकार्धं एवं योजनीयः — राजा तदुपयुञ्जान इति। अनेकार्थत्वाद्धातूनामुपपूर्वो युजिर्लक्षणया वाऽप्रतिपादन एव द्रष्टव्यः। यो ह्यन्यस्मै प्राप्तकालं धनं न ददाति, स्वप्रयोजनेषु विनियुङ्क्ते, तेन तदीयमेव तदुपयुक्तं भवतीति युक्तमुच्यते— राजा तदुपयुञ्जानश्चौरस्याऽऽप्नोति किल्बिषम्। किल्बिषं पापम्। * मेधा.

(२) यच्चौरैर्हृतं लोकानां धनं तद्राज्ञा चौरेभ्यश्चाऽऽहृतं धनं तेभ्यो देयम्। यस्मात् राजा स्वीकुर्वन् चौरस्य यावत् पापं तावत् प्राप्नोति। गोरा.

(३) तदुपभुञ्जानः यथेष्टविनियोक्ता। तच्चोरकृतं किल्बिषं चोरनिष्ठजातीयम्, राजस्तादृशप्रायश्चित्तपरं वा। ‡ मच.

†अनादेयं नाऽऽददीत परिक्षीणोऽपि पार्थिवः।
न चाऽऽदेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत्॥
अनादेयस्य चाऽऽदानादादेयस्य च वर्जनात्।
दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति॥
स्वादानाद्वर्णसंसर्गाद् दुर्बलानां च रक्षणात्।
बलं संजायते राज्ञः स प्रेत्येह च वर्धते॥

(१) स्वस्य न्यायप्राप्तस्याऽऽदानं शोभनं वाऽऽदानम्। भव्यमेव शोभनम्। वर्णयोरेव संसर्गः समानजातीयैः वर्णसंसर्गः। द्विष्ठत्वात्संसर्गस्य च संबन्धिनोरश्रुतत्वात् वर्णानां प्रस्तुतत्वात् तत्रैवापेक्षा युक्ता। यस्तु वर्णानामवान्तरप्रभवैः संसर्गो नासौ वर्णानामेव संबन्धितया व्यपदेष्टुं शक्यते। कश्चित्तु नकारं पठति— वर्णासंसर्गादिति। सर्वथा वर्णसंकरप्रतिषेधानुवादोऽयम्। दुर्बलानां बलवद्भिर्द्वेषिभिरभिभूयमानानां तेभ्यस्त्राणाद्धेतोः। राज्ञो बलं संजायते। सम्यग्व्यवहारदर्शनं कर्तव्यमधर्मदण्डनं च न कर्तव्यमित्येतद्विशेषाः (? द्विधिशेषाः) पठिष्यन्ते श्लोकानां (?) अर्थवादाः। * मेधा.

(२) न्याय्यधनग्रहणात्, वर्णानां समानजातीयैर्वर्णैः स्त्रीषु च संबन्धात्, दुर्बलानां च बलवद्भ्यो रक्षणात् बलवानिति राजा लोके कथ्यते। अतश्चासाविह (पर)-लोकयोर्वर्धते। गोरा.

(३) आदानात् उचितदण्डादिग्रहणात् धनबलम्। वर्णानामसंकरेण संसर्गात् संसर्जनात् दुर्बलरक्षणाच्च धर्मबलम्। मवि.

(४) वर्णानां सजातीयैः शास्त्रीयपरिणयनादिसंबन्धात्। यद्वा वर्णसंसर्गात् वर्णसंकरादित्यत्रापि रक्षणादिति योजनीयम्। प्रजानां दुर्बलानां बलवद्भ्योऽपि रक्षणात् सामर्थ्यमुपजायते नृपस्य। ‡ ममु.

(५) किंच— आदानादिति। आदानात् धर्मसंसर्गादिति (हेतु)हेतुमद्भावे पञ्चम्यौ। न्यायोपात्तधनादिना धर्मवृद्धेः प्रेत्य वृद्धिः, इहापि वृद्धिः कीर्तिधनाभ्याम्। वर्णसंसर्गादिति क्वचित् पाठः। तदा आदानादिह वृद्धिः, वर्णसंसर्गाच्छास्त्रीयपरिपालनेन प्रेत्य वृद्धिः। रक्षणात् बलम्। चतुरङ्गबलवान् हि रक्षितुं समर्थो जायते ज्ञायते वा। मच.

(६) उक्तार्थानुष्ठाने फलमाह— स्वादानादिति। वर्णसंश्लेषात् वर्णैः सह प्रीत्येति यावत्। † नन्द.

---

* मवि., ममु., नन्द., भाच. मेधागतम्।

‡ शेषं मेधागतम्।

† श्लोकद्वयस्य व्याख्यानसंग्रहः 'प्रकृतयः— कोशः' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(१) मस्मृ. ८।१७०–१७१. शेषः स्थलादिनिर्देशः 'प्रकृतयः—कोशः' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(२) मस्मृ. ८।१७२, द्दुर्बलानां (स्वबलानां) इत्यपि क्वचित्पाठः; मेधा. 'वर्णासंसर्गात्' इत्यपि पाठः; गोरा. बलं संजायते राज्ञः (बलवान् ख्याप्यते राजा); राक. ९४; मवि. स्वादाना (आदाना); मच. स्वादाना (आदाना) द्वर्णसंसर्गा (द्धर्मसंसर्गा) 'वर्णसंसर्गात्' इत्यपि पाठः; राप्र. २७५ च वर्धते (विवर्धते); नन्द. संसर्गा (संश्लेषा)।

* राक., राप्र., भाच. मेधागतम्।

‡ शेषं गोरागतम्।

† शेषं मेधागतम्।

**[1]तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये ।**
**वर्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः ॥**

(१) तथा चैतदेव प्रपञ्चयति । अयं सेवक आत्मीयः, अतः प्रियः, अयं च केवलं राष्ट्रवासी, यस्यैव राष्ट्रं तमेवोपतिष्ठते, अतोऽप्रियः, तत् हित्वा यमवत् प्रजासु तुल्यः परिपालने व्यवहारे च स्यात् । ईदृशी हि यमस्य वृत्तिर्दृष्टा । यमस्येत्यणो बाधकं तत्रौपसंख्यानिकं यकारमिच्छन्ति । कः पुनर्यमतुल्यतां भजति ? जितक्रोधो जितेन्द्रियः । रागद्वेषौ जयेत् प्रसङ्गप्रत्याख्यानेन । मेधा.

(२) तस्माद्यम इव राजा वशीकृतक्रोधेन्द्रिय आत्मनश्च प्रियाप्रिये परिहृत्य यमसंबन्धिन्या चेष्टया रिपुमित्रसाम्येन वर्तेत । * गोरा.

(३) प्रियाप्रिये मित्रत्वशत्रुत्वे । याम्यया वृत्त्या कर्मानुरूपसुखदुःखदाने । जितेन्द्रियः जितस्वेन्द्रियजकामलोभः । मवि.

(४) उपसंहरति– तस्मादिति । स्वामी राजा । यमो हि यथाऽदृष्टानुरूपेण दण्डानुग्रहौ करोति, न प्रत्यवैति, एवं राजाऽपि स्वारसिकक्रोधादिविवर्जितो दृष्टापराधानुसारेण वर्तेतेत्यर्थः । मच.

**यस्त्वधर्मेण कार्याणि मोहात्कुर्यान्नराधिपः ।**
**अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥**

(१) अधर्मेण यः कार्याणि कुरुते स मोहादेवेह व्यामूढो धर्मं जह्यात् । तस्येदमधर्मजं फलम्– विरक्तप्रकृतितया वशे कुर्वन्ति शत्रवः । विरक्ता हि प्रकृतयः क्रुद्धलुब्धभीतावमानिताः परैरुपजप्येरन् । ततश्च बहुकृत्वो वशे कुर्वन्ति । दण्डयन्ति बध्नन्ति घ्नन्ति राष्ट्रमपहरन्ति चेत्येष वशीकारः । मेधा.

(२) यः पुनर्नृपो लोभादिव्यामूढतया अधर्मेण व्यवहारदर्शनादीनि कार्याणि कुरुते तमधर्मपरकृतित्वात् क्षिप्रमेव शत्रवश्चाऽऽसादयन्ति । गोरा.

(३) मोहात् अधर्मो नास्तीति भ्रमात् । ‡ मवि.

(४) तं दुष्टचित्तं प्रकृतिपौरविरागात् क्षिप्रमेव शत्रवो निगृह्णन्ति । * ममु.

(५) उक्तार्थवैपरीत्ये दण्डमाह– यस्त्विति । अधर्मेण अयथाशास्त्रेण । तत्र हेतुः– मोहात् । कार्याणि दण्डशुल्कादीनि । सामन्ताद्यैर्दत्तहस्ताः शत्रवस्तं वशे कुर्वन्तीति शत्रुभयादप्यकार्यान्निवर्तितव्यमिति भावः । मच.

(६) अधर्मेण असमवृत्त्या । नन्द.

**[1]कामक्रोधौ तु संयम्य योऽर्थान् धर्मेण पश्यति ।**
**प्रजास्तमनुवर्तन्ते समुद्रमिव सिन्धवः ॥**

(१) सिन्धवः नद्यः यथा समुद्रमाश्रयन्ति, आश्रिताश्चानुरागिण्यः तन्मय्यो वसन्ति, न ततो निवर्तन्ते, एवं कामक्रोधजयात् राजानं प्रजाः समयोगक्षेमास्तन्मय्यः संपद्यन्ते । मेधा.

(२) अर्थं अर्थसाधनं व्यवहारादि । मवि.

(३) यो राजा रागद्वेषौ विहाय धर्मेण कार्याणि निरूपयति तं राजानं प्रजा भजन्ते समुद्रमिव नद्यः । नद्यो यथा समुद्रान्न निवर्तन्ते, तेनैवैकतां यान्ति, प्रजा अपि तस्मान्नृपात् अनिवर्तिन्यः तदेकताना भवन्तीति साम्यम् । † ममु.

(४) जितक्रोध इत्याद्युक्तम्, तत्र दृष्टान्तमाह– कामेति । कामक्रोधौ रागद्वेषौ संयम्य विहाय अर्थान् प्रजापालनादीन् धर्मेण यथाशास्त्रं पश्यति यस्तम् । सिन्धवः स्यन्दनात् नद्यः । गाम्भीर्याचलमर्यादत्वबोधरत्नाकरत्वदुरवगाह्यत्वादयो राज्ञः समुद्रमिवेत्यनेन सूचिता इति । मच.

---

* ममु. गोरावत् । नन्द., भाच. गोरागतम् ।

(१) मस्मृ. ८।१७३–१७४.

‡ भाच. मविगतं गोरागतं च ।

* शेषं गोरागतम् ।

† गोरा., नन्द., भाच. ममुगतम् ।

(१) मस्मृ. ८।१७५ ; मवि. योऽर्थान् ( योऽर्थं ).

स्तेननिग्रहः

'परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः।
स्तेनानां निग्रहादस्य यशो राष्ट्रं च वर्धते ॥

(१) कश्चित् करुणावान् 'क्रूरं हिंसाकर्म' इति मन्यमानः न प्रवर्तते। अतस्तत्प्रवृत्त्यर्थं स्तेननिग्रहस्तुत्यर्थवादः प्रक्रम्यते। नात्र हिंसादोषोऽस्ति, प्रत्युत दृष्टोपकारहेतुत्वात् स्तेनहिंसैव श्रेयस्करी। वेदतुल्यतां च ख्यापयितुमर्थवादा भूयांसः। तत्र हि प्रायेण सार्थवादका विध्युद्देशाः इति। तत्प्रतीत्यनुसरणेन वैदिकोऽयमर्थ इति प्रसिद्धिः। भवन्ति चात्र केचित् प्रतिपत्तारो ये स्तुतिभिरतितरां प्रवर्तन्ते।

परमं यत्नं प्रकृष्टं अतिशयवत्तात्पर्यं आश्रयेत्। चरैश्चारयेत् साक्षात् प्रकाशं च अतिप्रयत्नतः। स्तेनाः चौराः। निग्रहः नियमनवधबन्धनादिः। एवं कृते यशः ख्यातिर्भवति। निरुपद्रवोऽस्य राज्ञो देशः, स्तेना नाभिभवन्ति, निशा दिवातुल्या तत्र, इति सर्वत्र स्थितं भवति। राष्ट्रं वर्धते। राष्ट्रं जनपदस्तस्मिन्निवासिनश्च पुरुषाः चौरैरनुपद्रूयमाणा वर्धन्ते। श्रीभिः प्रमोदमाना बहुपर्यन्तदेशान्तरस्था अपि निरुपद्रवं राष्ट्रमाश्रयन्ते। ततो वर्धते। * मेधा.

(२) चौरनियमे प्रकृष्टमभियोगं राजा कुर्यात्। यस्मात्तन्निग्रहात् राज्ञः प्रजा निरुपद्रवतया च देशो जनधनबाहुल्येन वृद्धिमेति। गोरा.

(३) तत्र दृष्टादृष्टदोषाननुसंधायिनो राज्ञः ततो निवृत्तिमाशङ्क्य दृष्टफलैः प्रलोभयन् तत्र यत्नाधिक्यमाह– परममिति पञ्चभिः। तत्र 'सततं नृपः' (मस्मृ. ८।३०३) इत्यन्तं दृष्टफलम्, अतः परमदृष्टफलम्। अस्य राज्ञः। मच.

(४) राज्ञा स्तेननिग्रहोऽवश्यः कार्यः इत्यष्टभिः श्लोकैराह– परमं यत्नमिति। नन्द.

* ममु. मेधागतम्।

(१) मस्मृ. ८।३०२–३०३.



अभयस्य हि यो दाता स पूज्यः सततं नृपः।
सत्रं हि वर्धते तस्य सदैवाभयदक्षिणम् ॥

(१) अभयं चौरादिभ्योऽधिकृतेभ्यश्चासद्दण्डनिवारणेन यो ददाति स सर्वदैव पूज्यो भवति स्वैरकथास्वपि राज्याच्च्युतो वनस्थोऽपि। सत्रं क्रतुविशेषो गवामयनादि। तदस्य वर्धते निष्पद्यते। सर्वाङ्गसमुत्पन्नमेवंगुणमित्येतद्वर्धत इत्यनेनाऽऽह। अहरहः सत्रफलं प्राप्नोतीत्यर्थः। अभयं यत्र दक्षिणा। अन्येषु सत्रेषु दक्षिणा नास्ति। इदं तु सर्वेभ्योऽपि विशिष्टं यद्दक्षिणावत्। सा च गवाश्वादिदक्षिणाविलक्षणा इति अर्थवान् सत्रव्यतिरेकः। मेधा.

(२) चौरपापस्य निग्रहणेन साधूनामभयं ददाति स सदा सर्वस्य पूज्यो भवति। यस्मात् सत्रं क्रतुविशेषवत् स्तेननिग्रहः संपद्यते। स्तेननिग्रहाख्यं तस्यान्यसत्रविलक्षणमतिशयेन संपद्यते। अन्यत् किल सत्रं नियतकालं भवति, इदं सदैव भवति च। अदक्षिणं च अन्यत् सत्रम्, इदं पुनरभयं दक्षिणा यस्य तदभयदक्षिणम्। † गोरा.

(३) स एव पूज्यो न त्वन्यादृशः। सत्रं प्रजारक्षणरूपो यज्ञः। वर्धतेऽधिकफलतया। मवि.

(४) हिरवधारणे। * ममु.

प्रजाया धर्मस्य अधर्मस्य च षड्भागः राजगामी

'सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥

(१) सर्वतः प्रकाशाद्यज्ञादेः तथा ग्रामवासिभिः वनवासिभिश्च कृताद्धर्मषड्भागं राजा लभते। एव-

† मच., नन्द., भाच. गोरागतम्।

* शेषं मविगतं गोरागतं च।

(१) मस्मृ. ८।३०४; राक. ८६ ति रक्षतः (ति रक्षणात्); मभा. ११।११ राकवत्; गौमि. ११।११ अधर्मादपि (अधर्मस्यापि) शेषं राकवत्; ममु. ७।२ रक्षतः (रक्षणे) पू.; पमा. ३९७ भवत्यस्य (भवत्येव); राप्र. २५५ : २७१ पू.; नीम. ५० रक्षतः (रक्षितुः).

मधर्मादपि चौरैः प्रच्छन्नकृताद्राज्ञः षड्भागो भवति। न केवलं स्तेनैर्ये मुष्यन्ते तदरक्षातो राज्ञामधर्मः, यावद्ये हरन्ति तेषामपि चौर्यभावेनाधर्मोदयः, तदंशेनापि राजानः संबध्यन्तेताननिगृह्णन्तः। अदृष्टदोषसंबन्धनिवारणमपि रक्ष्याणां रक्षैव। तत्राधिकृतस्य राज्ञः तदकरणात् युक्तः प्रत्यवायः। ननु च भृतिपरिक्रीतत्वाद्धर्मषड्भागवचनमयुक्तम्। उक्तं दीनानाथप्रव्रजितादयः सन्त्यकरप्रदाः। परिपूर्णस्वधर्मपालने काऽनुपपत्तिः?

मेधा.

(२) सर्वतो भृतिप्रदातृव्यतिरिक्ताच्च श्रोत्रियादीनां साधूनां सकाशाद्धर्मषड्भागो राज्ञः प्रजारक्षणात् भवति। अरक्षतश्चाधर्मादपि लोके चर्यमाणात् षड्भागोऽस्य भवति। तस्मात् यत्नतः स्तेननिग्रहेण प्रजासंरक्षणं कुर्यात्। न च वृत्तिपरिक्रीतत्वात् राज्ञो धर्मप्राप्तिरयुक्ता, वृत्तिपरिक्रयवद्धर्मभागपरिक्रयस्यापि शास्त्रीयत्वात्।

* गोरा.

(३) धर्मषड्भागः प्रजाभिः क्रियमाणस्य धर्मस्य यावान् षष्ठो भागस्तावान् धर्म इत्यर्थः। मवि.

(४) प्रजा रक्षतो राज्ञः सर्वस्य भृतिदातुर्वणिगादेर्भृत्यदातुश्च श्रोत्रियादेः सकाशाद्धर्मषड्भागो भवति।

† ममु.

[1]यदधीते यद्यजते यद्ददाति यदर्चति।
तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात्॥

(१) यदुक्तं 'सर्वतः' इति, तस्य प्रपञ्चोऽयम्। अध्ययनादयो धर्मार्थतयाऽन्यत्र ज्ञापिताः प्रसिद्धरूपाश्च। अर्चनं देवगुरूणां पूजनम्। तस्येति कर्मणोऽध्ययनादेः पदार्थस्येति योजनीयम्, क्रियायाः स्त्रीलिङ्गत्वात्। षड्भाग इति। न च कर्तुः पञ्च कर्मफलांशाः षष्ठो नृपतेः, समग्रफलभोक्तृत्वस्याधिकारतः कर्तुरवगतत्वात्। अपि तु सम्यग्रक्षणात् स्वकर्मानुष्ठानात्तावन्मात्रं राज्ञः फलमुत्पद्यत इति। नान्यकृतस्य शुभस्याशुभस्य वा अन्यत्र गमनम्। नाकर्तुः फलमस्तीति स्थितम्। ‡ मेधा.

(२) यः कश्चित् अध्ययनयजनयाजनदेवतार्चनादि (करोति, तस्य) यत्फलम्, तस्य फलस्य राज्ञा सम्यक् प्रजापालनात् षड्भागः प्राप्यते। * गोरा.

[2]रक्षन् धर्मेण भूतानि राजा वध्यांश्च घातयन्।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः॥

(१) भूतानि स्थावरजङ्गमानि चौरेभ्यो रक्षन्, वध्याश्च शास्त्रतो वधार्हाः, तांश्च घातयन् सहस्रशतदक्षिणानां पौण्डरीकादीनां क्रतूनां फलमन्वहं राजा प्राप्नोति, इति स्तुतिः। ¶ मेधा.

(२) भूतानि स्थावरजङ्गमानि शास्त्रव्यवस्थया राजा रक्षन्, वध्यान् स्तेनादीन् यथाशास्त्रं घातयन् लक्षदक्षिणानां यज्ञानां संबन्धि फलं प्रत्यहमर्जयति। तत्र महाप्रयासकर्मसंबन्धि फलं कथमल्पप्रयासात् कर्मणः प्राप्यते? तथा सति को नाम प्रयासेषु प्रवर्तेत? इति (न) चोदनीयम्। फलोपभोगकालाल्पभूयस्त्वे च विशेषसंभवात्। एवमन्यत्रापि द्रष्टव्यम्। † गोरा.

(३) यज्ञैः, यज्ञवद्दृष्टादृष्टफलसाधनत्वाद्रक्षायाः।

$ मच.

(४) भूतानि न्यायवर्तीनि। नन्द.

अधार्मिकनिग्रहः

[3]अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः।
निरोधनेन बन्धेन विविधेन वधेन च॥

* मच. गोरागतम्।

† शेषं गोरागतम्।

(१) मस्मृ. ८।३०५; राक. ८५ ददाति (जुहोति) बृहस्पतिः; राप्र. २५४ राकवत्.

‡ मवि., मच., नन्द. मेधागतम्।

* ममु. गोरागतम्।

¶ मवि. मेधागतम्।

† ममु., भाच. गोरागतम्।

$ शेषं गोरागतम्।

(१) मस्मृ. ८।३०६; राक. ८५ राजा वध्यांश्च (राजवध्यांश्च) बृहस्पतिः; मवि. यजतेऽ (यजेता); पमा. ३९७; राप्र. २५४.

(२) मस्मृ. ८।३१०.

( १ ) अर्थवादैर्दृढीकृत्य निग्रहविधिमिदानीं प्रस्तौति। अधार्मिकः प्रकरणात् चौरः । तं त्रिभिर्नियमनप्रकारैः निगृह्णीयात् नियच्छेत्। न्यायः नियामकः। निरोधनं राजदुर्गे बन्धनागारे धरणम् । बन्धः तत्रैव रज्जुनिगडादिभिरस्वातन्त्र्योत्पादनम् । विविधो वधः ताडनादारभ्य शरीरनाशनात् प्राणत्यागपर्यन्तः । निर्देशादेव त्रित्वे लब्धे त्रिभिरिति वचनमन्येषामपि नियमनप्रकाराणां परिग्रहणार्थम् । तेन तप्ततैलसेकादयोऽपि परिगृहीता भवन्ति । * मेधा.

( २ ) अधार्मिकं चौरमपराधापेक्षया त्रिभिर्नियमनप्रकारैः प्रयत्नेन नियच्छेत् । बन्धनागारस्थापननिगडादिबन्धनकरचरणकर्तनादिनानाप्रकारहिंसनैरिति । † गोरा.

( ३ ) अत्यौत्सुक्येन निग्रहोपायं प्रदर्शयन् राजानं स्तौति– अधार्मिकमिति द्वाभ्याम् । ‡ मच.

( ४ ) एवं स्तेननिग्रहस्यावश्यकर्तव्यतां प्रतिपाद्य तन्निग्रहप्रकारमाह– अधार्मिकमिति । विविधेन तत्तत्स्तेयानुरूपेण । नन्द.

( ५ ) अधार्मिकं पुरुषं त्रिभिर्न्यायैः नियमैः सामदानादिभिर्भेदैश्च । पुनः केन उपायेन ? निरोधनेन नितरां रोधनेन । भाच.

**[1]निग्रहेण हि पापानां साधूनां संग्रहेण च ।**
**द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥**

( १ ) पापयुक्ताः पुरुषाः पापाः। तेषां निग्रहः पूर्वोक्तः। यथाशास्त्रवर्तिनः साधवः । तेषां संग्रहः अनुग्रहः यथाशक्त्युपकारः । तेन पूयन्ते विपाप्मानो भवन्ति प्रायश्चित्तेनेव इत्यर्थवादः । अथवा पापानुत्पत्तिरेव पूतत्वम् । ब्राह्मणा इव सततमिज्याभिः नित्यैर्महायज्ञादिभिः । $ मेधा.

( २ ) यस्मात् पापकर्मणो निग्रहेण साध्वाचाराणां चानुग्रहेण राजानो द्विजातय इव महायज्ञादिभिः सर्वकालं पवित्रीभवन्ति, तस्मादधार्मिकं निगृह्णीयात् । * गोरा.

( ३ ) ततः किम् ? तत्राह– निग्रहेणेति । द्विजातयः विप्रोत्तमाः सर्वदा यज्वानो वा । नृपस्योभयसंभवेन दार्ष्टान्तिकत्वसिद्धिः । ‡ मच.

( ४ ) स्तेनहिंसा राज्ञ एव धर्मो नान्यस्येत्याह– निग्रहेण चेति । नन्द.

कण्टकोद्धरणादीनि कर्तव्यानि

**[1]सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः ।**
**कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥**

( १ ) देशनिवेशो दुर्गकरणं च यत्सप्तमाध्याये उक्तं तत् कृत्वा कण्टकोद्धरणम् । तेनापि राष्ट्ररक्षा क्रियते । कण्टकशब्दः पीडाहेतुसामान्यात् तस्करादिषु प्रयुक्तः । मेधा.

( २ ) निविष्टदेशः जनाध्युषितदेशः । शास्त्रतः शास्त्रोक्तविधिना । कण्टकानां क्षुद्रशत्रूणां तस्करादीनां उद्धरणे । मवि.

( ३ ) 'जाङ्गलं सस्यसंपन्नम्' ( मस्मृ. ७।६९ ) इत्युक्तरीत्या सम्यगाश्रितदेशः तत्र सप्तमाध्यायोक्तप्रकारेण कृतदुर्गः चौरसाहसिकादिकण्टकनिराकरणे प्रकृष्टं यत्नं सदा कुर्यात् । † ममु.

( ४ ) कण्टकाः द्यूतसुवर्णकारादयः । ¶ मच.

( ५ ) कण्टकाः दुष्टसामन्तादयः । राप्र. २५३

( ६ ) अथ कण्टकशोधनमाह– सम्यङ्निविष्टदेशस्त्विति । सतां बाधकाः कण्टकाः । उद्धरणं निराकरणम् । नन्द.

---

* मवि. मेधागतम् ।

† ममु. गोरावत् ।

‡ शेषं गोरागतम् ।

$ मवि., भाच. मेधागतम् ।

(१) मस्मृ. ८।३११ ; नन्द. हि ( च ).

* ममु. गोरावत् ।

‡ शेषं गोरागतम् ।

† भाच. ममुगतम् ।

¶ शेषं ममुगतम् ।

(१) मस्मृ. ९।२५२ ; राक. ८३ दुर्गश्च ( दुर्गस्तु ) बृहस्पतिः ; राप्र. २५३ यत्न ( द्वल ) शेषं राकवत्.

[1]रक्षणादार्यवृत्तानां कण्टकानां च शोधनात् ।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥

(१) एतदेव दर्शयति– रक्षणादिति । आर्यं शास्त्रनोदितं कर्तव्यमितरानुष्ठाननिषेधः, तत् वृत्तं येषामित्युत्तरपदलोपी समासः (?)। तेन दीनानाथश्रोत्रिया अकरशुल्कदा गृह्यन्ते । तद्रक्षणाद्धि त्रिदिवगमनं युक्तम् । अन्येषां तु वृत्तिपरिक्रीतत्वादकरणे प्रत्यवायः । यथोत्तरत्र वक्ष्यते– 'स्वर्गाच्च परिहीयते' (मस्मृ. ९।२५४) इति । रक्षानुवृत्तिनिष्क्रयणेन प्रत्यवायाभावमात्रम्, न तु स्वर्गः । अथवा वृत्तिनियमापेक्षं त्रिदिवप्राप्तिवचनं यथोक्तं प्राक् । अन्येषां तु वृत्तिपरिक्रीतत्वादर्शनम् । अर्थवादमात्रं राज्ञः स्वर्गवचनम् । अवृत्तिदपरिपालनमपि वृत्तिप्रयुक्तं स्वराज्यभागस्थानीयस्य तद्राज्ञः । यथैव च शिल्पिजीविनः 'शिल्पिनो मासि मास्येकैकं कर्म कुर्युः' (गौध. १०।३०) इति वृत्त्यर्थं शिल्पं कुर्वाणा राज्ञा कर्म कार्यन्ते करग्रहणाय, एवं राजाऽपि वृत्तियुक्तः प्रजापालनप्रवृत्तो नित्यकर्मवदार्यपरिपालनं कार्यते शास्त्रेण । यथैव हि काम(? मं)श्रुतितोऽग्न्याहितो नित्यान्यनुतिष्ठति, न स्वर्गादिलाभाय । न हि तानि फलार्थतया नोदितानि, अथ च क्रियन्ते । तद्वदेतत् द्रष्टव्यम् । अतो यावती काचित् फलश्रुतिः सा सर्वाऽर्थवाद इति कोवरविष्णुस्वामी । यदत्र तत्त्वं तद्दर्शितमधस्तात् । मेधा.

(२) शोधनात् अनुसंधानात् । मवि.

(३) यस्मात्साध्वाचाराणां रक्षणात् चोरादीनां च शासनात् प्रजापालनोद्युक्ता राजानः स्वर्गं गच्छन्ति, तस्मात्कण्टकोद्धरणे यत्नं कुर्यात् । * ममु.

(४) अत्र फलमाह – रक्षणादार्यवृत्तानामिति । नन्द.

[2]अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः ।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥

(१) शासनं यथाशास्त्रं वधादिदण्डमन्तरेण तस्कराणां निग्रहो रक्षा च न शक्यते । अतो वृत्तिं गृहीत्वा यस्तस्करवधाज्जुगुप्सते तस्योभयो दोषः, इह राष्ट्रकृतः, अमुत्र स्वर्गपरिहानिः । युक्ता च बलिपरिगृहीतस्य तन्निष्कृतिमकुर्वतो दोषवत्ता । मेधा.

(२) प्रक्षुभ्यते द्वेषवद्भवति । मवि.

(३) यश्च पुनर्नृपतिश्चौरादीननिराकुर्वन् षड्भागाद्युक्तं करं गृह्णाति तस्मै राष्ट्रवासिनो जनाः कुप्यन्ति । कर्मान्तरार्जिताऽप्यस्य स्वर्गप्राप्तिरनेन दुष्कृतेन प्रतिबध्यते । ममु.

(४) अशासत् अनिगृह्णन् । बलिं करशुल्कादि । परिहीयते नृपतिः, पापप्रतिबन्धात् । मच.

(५) विपर्यये दोषमाह– अशासंस्तस्करान्यस्त्विति । नन्द.

(६) अशासन् अरक्षन् । भाच.

[1]निर्भयं तु भवेद्यस्य राष्ट्रं बाहुबलाश्रितम् ।
तस्य तद्वर्धते नित्यं सिच्यमान इव द्रुमः ॥

(१) प्रसिद्धमेवैतच्छ्लोके तस्करधर्मविशेषतया अनूद्यते । मेधा.

(२) निर्भयं कण्टकभयशून्यम् । मवि.

(३) यस्य राज्ञो बाहुवीर्याश्रयेण राष्ट्रं चौरादिभयरहितं भवति, तस्य नित्यं तत् वृद्धिं गच्छति उदकसेकेनेव वृक्षः । ममु.

(४) राष्ट्रं राष्ट्रस्थाः प्रजाः । * मच.

(५) कण्टकशोधने दृष्टफलं भूयिष्ठमित्याह– निर्भयं यस्य वसतीति । वसति जीवति । नन्द.

[2]चारेणोत्साहयोगेन क्रिययैव च कर्मणाम् ।
स्वशक्तिं परशक्तिं च नित्यं विद्यान्महीपतिः ॥

---

* मच., भाच. ममुगतम् ।

(१) मस्मृ. ९।२५३.

(२) मस्मृ. ९।२५४ ; मच. अशासंस्त (अशासत्).

* शेषं ममुगतम् ।

(१) मस्मृ. ९।२५५ ; नन्द. तु भवेद्यस्य (यस्य वसति).

(२) मस्मृ. ९।२९८ ; राक. ११३–११४ महीपतिः (परात्मनोः) ; मवि. राकवत् ; राप्र. ३२८ ; नन्द. राकवत्.

(१) परस्य आत्मनश्च नित्यं शक्तिं विद्यात्। 'किमयं प्रारिप्सते, किं च मयि कर्तुं शक्यं, किं चाहमस्मिन्?' इत्येतन्नित्यं वेदितव्यम्। कथं चैतच्छक्यते वेदितुम्? चारेण सप्तमाध्यायोक्तेन। उत्साहयोगेन। दानादिपरितोषिता उत्साहेन युज्यन्ते संपन्नकृष्यादिफलाश्च। क्रिययैव च कर्मणाम्। कर्माणि निवेशादीनि। तदारम्भेण शक्तिमान् रिपुरवगम्यते। तानि ह्यर्थसंपत्कराणि, ततः सामर्थ्योत्पत्तेः। मेधा.

(२) परात्मनोः शत्रोः स्वस्य च स्वशक्तिं स्वामिगतां शक्तिं प्रभावोत्साहमन्त्रजाम्, परशक्तिं अमात्यादिषडङ्गगतां शक्तिं चारेण चरेण, उत्साहयोगेन उद्यमदर्शनेन, कर्मणां कार्याणां क्रियया निष्पादनेन कर्मणां फलान्तरदर्शनरूपेण च विद्यात् 'अहमशक्तोऽन्यो वा' इति। * मवि.

(३) सप्तमाध्यायोक्तकापटिकादिना, बलस्योत्साहयोगेन, कर्मणां च हस्तिबन्धवणिक्पथादीनां अनुष्ठानेन जातां शत्रोरात्मनश्च शक्तिं राजा सदा जानीयात्। ममु.

(४) संप्रति चारस्य कृत्यमाह – चारेणेति। चारेणोत्साहयोगेन, चाराणां कृतकार्याणां वस्त्रालंकारादिप्रसादेनोत्साहः तेषामेव च कार्यार्थं पुनः संयोगश्च, तेन परशक्तिं जानीयात्। स्वशक्तिं तु कर्मणां हस्तिबन्धशत्रुवशीकारादीनां क्रियया अनुष्ठानेन। मच.

(५) परात्मनोः शत्रोरात्मनश्च स्वशक्तिं स्वपरिकरशक्तिं परस्य अन्यस्य मित्रादेः शक्तिं च चारेण, उत्साहयोगेन अतन्द्रितत्वेन, कर्मणां क्रियया विद्यात्। चारेणेत्याप्तवचनमत्र विवक्षितम्, उत्साहयोगेनेति प्रत्यक्षम्, कर्मणां क्रिययेत्यनुमानम्। नन्द.

**[1]पीडनानि च सर्वाणि व्यसनानि तथैव च।**
**आरभेत ततः कार्यं संचिन्त्य गुरुलाघवम् ॥**

(१) पीडनानि मरकदुर्भिक्षपातादीनि, तथा अवर्षातिवर्षपर्ययमूषिकशलभाशनिप्रभृतयः (? तीनि), व्यसनानि कामक्रोधसमुत्थानि स्वपुत्रसंप्राप्तदैवविघटनयोपन्यासेन वा, स्वपरात्मनोः संचिन्त्य, तथा गुरुभावः (? गुरुलघुभावं) तयोः कस्यैतद्गुरु कस्याल्पमिति, ततः आरभेत कार्यं संधिविग्रहादि। * मेधा.

(२) पीडनानि परपुरोपरोधनादीनि, व्यसनानि राष्ट्रभङ्गामात्योपजापादीनि परस्य विद्यात्। गुरुलाघवं गुरुलघुत्वे संचिन्त्य कार्यमारभेत। मवि.

(३) व्यसनानि कामक्रोधोद्भवानि दुःखानि स्वपरचक्रगतानि। ‡ ममु.

(४) किंच– पीडनानीति। पीडनानि परराष्ट्रे दुर्भिक्षमारणानि। व्यसनानि प्रकृतिक्रोधजादीनि। कार्यं संधिविग्रहादि। बलवति शत्रौ संधिर्गुरुरप्यनुष्ठेयः, स्वरक्षाहेतुत्वात्। क्षीणे तस्मिन्नानुष्ठेयः, आपन्नकालत्वात्। मच.

(५) पीडनान्यात्मनः परकृतानि, व्यसनानि द्यूतादीनि, विद्यादित्यनुकृष्यते। § नन्द.

**[1]आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः।**
**कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥**

(१) कर्मसूद्युक्तः पुरुषः श्रिया युज्यते इति सिद्धानुवादः। यद्यपि कुतश्चित् कर्मणोऽनुष्ठितात् कथंचित् फलं न संप्राप्तम्, तथापि न निरुत्साहेन भवितव्यम्। अथवा न संतोषिणा भवितव्यम्। अथ तावत् षाड्गुण्यचिन्ता कृता, अन्वाहिकौ चायव्ययौ कयाचिन्मात्रयाऽवगतौ, राष्ट्रवृत्तं च प्रकृतिसमीहितं चरमुखादवधृतम्, नृत्यगीतादिसुखानुभवव्यापारान्तरेण वा पुनः कर्माणि वेदितव्यानि। पुरुषग्रहणम्– तिष्ठतु तावद्राजा, अन्योऽपि जानपदः उद्योगश्रियोपचीयते। एतदुक्तम् – 'आ मृत्योः श्रियमन्विच्छेत्' (मस्मृ. ४।१३७) इति। मेधा.

---

* भाचव्याख्यानमतीवाशुद्धम् पाठः। तात्पर्यार्थश्च मविवत् भाति।

(१) मस्मृ. ९।२९९; राक. ११४; राप्र. ३२८.

* भाच. मेधागतं मविगतं च।

‡ शेषं मेधागतं मविगतं च।

§ शेषं मविगतम्।

(१) मस्मृ. ९।३००; राक. ११४; मच. पुरुषं (नृपतिं); राप्र. ३२९.

( २ ) कर्माणि राज्यरक्षादीनि । मवि.

( ३ ) राजा स्वराज्यवृद्धिपरापचयनिमित्तानि कार्याणि कथंचिदिदं संजातमिति छलान्यप्यारभ्याऽऽत्मना खिन्नः पुनः पुनस्तान्यारभेतैव । यस्मात् कर्माणि सृज्यमानं पुरुषं श्रीर्नितरां सेवते । तथा नाब्राह्मणे नानाश्रये श्रीरस्तीति प्ररोहिताऽपि शोषमेति ( ! तथा च ब्राह्मणे-- 'नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम ।' ( ऐब्रा. ३३।३ इति ) । ममु.

( ४ ) किंच, नृपो न कृतार्थमन्यः स्यादित्याह-- आरभेतेति । श्रान्तः श्रान्तः खिन्नः संजातफलोऽपि अपूर्णमिवाऽऽत्मानं मन्यमानः । एवंविधं नृपतिं श्रीः लक्ष्मीः निषेवते नितरां सेवते, 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इति न्यायात् । मच.

( ५ श्रान्तः कर्मकरणेन । भाच.

राजा कालस्य कारणम्

**[१]कृतं त्रेतायुगं चैव द्वापरं कलिरेव च ।**
**राज्ञो वृत्तानि सर्वाणि राजा हि युगमुच्यते ॥**

( १ ) इतश्च कर्मारम्भपरेण भवितव्यम् । अनारम्भी कलिः स्यात् । स च महान् दोषः । न चैवं मन्तव्यं राज्ञा 'कलिर्नाम कालविशेष इतिहासप्रसिद्धः कथमहं स्याम्' इति । यतो राज्ञो वृत्तानि सर्वाण्येतानि युगानि । तदुत्तरेण निर्दिश्यते । मेधा.

( २ ) राज्ञो वृत्तानि राजचरितान्येवैतानि । मवि.

( ३ ) न च युगानुरूपेण कर्माणि फलन्तीति राज्ञोदासितव्यम् । यतः-- कृतमिति । कृतत्रेताद्वापरकलयो राज्ञ एव चेष्टितविशेषाः, तैरेव सत्यादिविशेषप्रवृत्तेः । तस्माद्राजैव कृतादियुगमभिधीयते । ममु.

( ४ ) राजा हि कृतादिचतुष्टयस्य धर्मप्रवर्तकत्वेन तद्रूप इत्याह-- कृतमिति । मच.

( ५ ) राज्ञः कर्मणामारम्भविशेषेण युगविशेषोऽपीत्याह-- कृतं त्रेतायुगं चैवेति । राज्ञो वृत्तानि राज्ञः संबन्धीनि वृत्तानि । नन्द.

**'कलिः प्रसुप्तो भवति स जाग्रद्द्वापरं युगम् ।**
**कर्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम् ॥**

( १ ) अनुत्थानशीलः प्रसुप्तः कलिर्भवति । जानानश्चोत्कर्षाभ्युपायाननुतिष्ठन् स जाग्रत् द्वापरं भवति । व्यवसितकर्मप्रयोगस्त्रेतायुगं भवति । विश्वस्य सर्वरूपाणि यथाशास्त्रं कर्मफलसंपदा कृतयुगं भवति ( ! ) । मेधा.

( २ ) कथं तदित्यत आह-- कलिरिति । प्रसुप्तः अनवेक्षितराज्यः, तदा कलिदोषप्रवृत्तेः । जाग्रत् प्रतिसंधानमात्रं कुर्वन् । अभ्युदितः उद्यतः । विचरन् निष्पादनार्थं कर्मणाम् । प्रस्वापादीनां कल्यादियुगतुल्यत्वात् प्रसुप्तादेस्तत्त्वमुक्तम् । * मवि.

( ३ ) कीदृक्चेष्टितः कृतादियुगमित्यत आह-- कलिरिति । अज्ञानालस्यादिना यदा निरुद्यमो राजा भवति तदा कलिः स्यात् । यदा जानन्नपि नानुतिष्ठति तदा द्वापरम् । यदा कर्मानुष्ठानेऽवस्थितस्तदा त्रेता । यथाशास्त्रं पुनः कर्माण्यनुतिष्ठन् विचरति तदा कृतयुगम् । तस्माद्राज्ञा कर्मानुष्ठानपरेण भाव्यमित्यत्र तात्पर्यम् , न तु वास्तवकृतयुगाद्यपलापे । † ममु.

( ४ ) तदेव विवृणोति -- कलिरिति । प्रसुप्तः स्वापं गतः । राजनि सुप्ते दुष्टानां भयात् कर्माद्यनुपस्थितिः । तस्मिन् जाग्रति साधूनामभयदानादिपुण्योपस्थितिः, तद्द्वापरम् । कर्म कर्तव्यम् । ( कर्म )स्वाभिमुख्येनोद्यमी तदा यज्ञादिप्रवृत्तेस्त्रेता । विचरन् स्वराज्ये कण्टकघातनाय पर्यटन् कृतं सत्यं ध्यानास्पदम् , 'सर्वत्र निर्भयाद्ध्यानं कृते' इत्युक्तेः । मच.

**[२]एवं चरन् सदा युक्तो राजधर्मेषु पार्थिवः ।**
**हितेषु चैव लोकस्य सर्वान् भृत्यान्नियोजयेत् ॥**

---

(१) मस्मृ. ९।३०१.

* भाच. मविगतम् ।

† नन्द. ममुगतम् ।

(१) मस्मृ. ९।३०२; मवि. भ्युद्यत ( भ्युदित ).

(२) मस्मृ. ९।३२४ ; मेधा. लोकस्य ( लोकेभ्यः ).

(१) एवं चरन् विहरन्, राजधर्मेषु यथाशास्त्रोपदिष्टेषु सदा युक्तः तत्परः लोकेभ्यः स्वराष्ट्रीयेभ्यो हितेषु सर्वान् भृत्यान्नियोजयेत्। मेधा.

(२) राजधर्मेषु व्यवहारदर्शनादिषु। मवि.

(३) एवमध्यायत्रयोक्तराजधर्मेषु व्यवहार्यमाणः (? व्यवहरमाणः)। * ममु.

(४) तत्रासमर्थस्य वृत्त्यन्तरं प्रदर्शयन् वैश्यशूद्रयोः कर्माऽऽह– एवमिति द्वाभ्याम्। भृत्यान् अमात्यान्। पार्थिव इति जात्यन्तरं चेत् पृथिवीपालकः। उक्तधर्मानुष्ठानमावश्यकं तस्यापि। मच.

(५) युक्तः अवहितः। भत्यान् अधिकारिणः। नन्द.

[१]एषोऽखिलः कर्मविधिरुक्तो राज्ञः सनातनः॥

(१) अनेन कण्टकशुद्धिपर्यन्तो राजधर्म उपसंह्रियते। ‡ मेधा.

(२) एतद्राज्ञः कर्मानुष्ठानं पारंपर्यागततया नित्यं समग्रमुक्तम्। ममु.

## याज्ञवल्क्यः

### प्रजापालनं क्षत्रियधर्मः

[२]प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्॥

(१) क्षत्रियस्य प्रजापालनं प्रधानं कर्म धर्मार्थं वृत्त्यर्थं च। † मिता.

(२) प्रधानं मुख्यं क्षत्रिये प्रजानां परिपालनम्। प्रधानं प्रजापरिपालनाख्यं कर्म, धर्महेतुत्वाच्च। वक्ष्यति हि – 'पुण्यषड्भागमादत्ते' इत्यादिना प्रसङ्गतः पुण्यषड्भागस्यार्थषड्भागस्य चोपादानमिति। अप.

(३) पालनं चौरादिभ्यो रक्षणम्। दीक.

(४) क्षत्रियस्य चौरादिभ्यः प्रजानां रक्षणं दरिद्रादीनां वृत्तिकल्पनं च मुख्यं कर्म। वीमि.

* शेषं मेधागतम्।

‡ मवि. मेधागतम्।

† राप्र. मितागतम्।

(१) मस्मृ. ९।३२५.

(२) यास्मृ. १।११९ ; विश्व. १।११८ ; राप्र. १२.

### ब्राह्मणरक्षणं दानादिना

[१]भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च।
अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम्॥

(१) यज्ञव्यतिरेकेणापि– भोगांश्चेति। कस्मात्? यस्मात्— अक्षयोऽयमिति। भोगाः अन्नपानादयः। चशब्दोऽभयसत्काराद्यर्थः। वसूनि हिरण्यादीन्यनेकविधानि। चशब्दः संप्रदानगतवैचित्र्यार्थः। तथा च मनुः– 'सममब्राह्मणे दानम्' (मस्मृ. ७।८५) इत्यादि। स्पष्टमन्यत्। विश्व.

(२) ब्राह्मणेभ्यो भोगान् सुखानि तत्साधनदानद्वारेण दद्यात्। वसूनि च सुवर्णरूप्यभूप्रभृतीनि विविधानि नानाप्रकाराणि। यस्मादेष राज्ञामक्षयो निधिः शेवधिः यद्ब्राह्मणेभ्यो दीयते। साधारणधर्मत्वेन दानप्राप्तौ सत्यां राज्ञां दानप्राधान्यप्रतिपादनार्थं पुनर्वचनम्। * मिता.

(३) भोगान् भोक्तव्यान् अन्नविशेषान्। अत्र प्रशंसा– आत्मोपकारकत्वेन निधितुल्यत्वान्निधिरयं राज्ञां यद्विप्रेषूपपादितं विप्रेभ्यो दत्तम्। लौकिको निधिरुपभोगात्प्राक् चौरादिवशात् कदाचित् क्षीयते, दत्तं तु न तथेति विशेषोऽयमिति वक्तुमुक्तम्– अक्षय इति। भूमौ निहितं सुवर्णादिकं निधिः। अप.

(४) चकाराभ्यामौषधाभययोः परिग्रहः। अयमक्षयो राज्ञां निधिः, अभिलषितार्थदानायत्त इत्यर्थः। † वीमि.

* दीक. मितागतम्।

† शेषं मितागतम्।

(१) यास्मृ. १।३१५ ; विश्व. १।३११ ; मिता. ; अप. १।३१३-३१४ ; राक. १६७ ; रार. १४ वसूनि (वस्तूनि) यद्विप्रेषूप (विप्रेभ्यः प्रति) ; पमा. ४०८ उत्तरार्धे (सद्दानमानसत्कारैर्वासयेच्छ्रोत्रियान् सदा।) ; दीक. ; वीमि. ; राप्र. १३८.

¹अस्कन्नमव्यथं चैव प्रायश्चित्तैरदूषितम् ।
अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ॥

( १ ) भूयश्च दानविधिप्ररोचनायाऽऽह— अस्कन्नमिति । यस्मात्, तस्मात्— अग्नेरिति । विश्व.

( २ ) किंच, अग्नेः सकाशात् अग्निसाध्याद्भूरिदक्षिणाद्राजसूयादेरपि विप्राग्नौ हुतं श्रेष्ठमिहोच्यते । एतत् अस्कन्नं क्षरणरहितम्, अव्यथं पशुहिंसारहितम्, प्रायश्चित्तैरदूषितं प्रायश्चित्तरहितम् । मिता.

( ३ ) न केवलं निधेरुत्कृष्टं दानम्, अपि त्वग्निहोत्रादेरपि । न हि दाने कस्यचिद्धविषः स्कन्नं स्कन्दनं व्यथनं वा विद्यते, येन विगुणं सदग्निहोत्रादिवदफलं स्यात् । प्रायश्चित्तैश्च प्रायश्चित्तनिमित्तैश्चान्यैर्दोषैः अदूषितम् । अत आहवनीयाद्यग्निसंबन्धिनो हुताद्धोमाद्विप्रात्मन्यग्नौ हुतं दत्तं श्रेष्ठं प्रशस्ततरं भवति । अप.

( ४ ) अस्कन्नं अन्यत्र पतनाभावः । रार. १४

( ५ ) अग्नौ हविर्हुतं कदाचित्स्कन्दति स्रवति, व्यथते शुष्यति, कीटादिदोषेण प्रायश्चित्तीयते । ब्राह्मणमुखे नैतादृशम्, अतोऽग्निहोत्रात् श्रेष्ठमिदम् । मुखशब्दोऽत्र पाणिपरः, 'पाण्यास्यो हि द्विजः स्मृतः' ( मस्मृ. ४।११७ ) इति स्मृतेः । दीक.

( ६ ) अव्ययं अशुष्यमाणम् । अव्यथमिति पाठे प्राणिहिंसाशून्यमित्यर्थः । प्रायश्चित्तैः प्रायश्चित्ताचरणक्लेशैः अदूषितम् । * वीमि.

दण्डस्य धर्म एव स्वरूपम्

²तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ।
धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥

( १ ) एवं यत् दैवपुरुषकाराभ्यां कथमपि प्राप्तुं शक्यं राज्यं प्राक्तनानेकविधपुण्यसमुदायादैहिकविचित्रगुणसंप्रयोगाच्च, धीमान् कृतविद्यः सत्यसंधश्च— तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् । कस्मात् ? यस्मात्—धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा । तत् राज्यं राजा सुदुर्लभं लब्ध्वा निर्व्याजप्रसाधितसमग्रदण्डपातैश्चतुर्वर्गप्राप्तिलम्पटः प्रयत्नात् दुर्विनीयमानानालोच्य अविनीतेषु यथार्हं दण्डं पातयेत् । न चातिमृदुहृदयतया हृद्विलेखः कार्यः । धर्म एवायं दण्डाभिधानो ब्रह्माण्डान्तर्वर्त्यखिलप्राणिसंघोपकारार्थं ब्रह्मणा वेदेन निर्मितः विहितः । पुरेत्यनादित्वेन निर्विचिकित्सानुष्ठानप्ररोचनार्थम् । तथा च गौतमः— 'ततः शेषेण विशिष्टदेशजाति' इत्युपक्रम्य 'विष्वञ्चो विपरीता नश्यन्ति । तानाचार्योपदेशो दण्डश्च पालयते । तस्माद्राजाचार्यावनिन्द्यौ ।' ( गौध. ११। ३१–३४ ) इत्यादि । आम्नायश्च— 'सह वा इदमभवद्देवाश्च मनुष्याश्च । ते यदोपकारैर्न शेकुर्मनुष्यानात्मीकर्तुम्, अथ देवास्तिरोबभूवुः । तान् प्रजापतिरब्रवीत्— कः प्रजाः पालयिता भुवि ? सर्वेऽन्तर्हिताः स्थ । असंरक्ष्यमाणाः प्रजा अधर्मार्दितास्त्यक्ष्यन्ति । इतःप्रदानमुपजीवनमस्माकमिति । ते देवाः प्रजापतिमब्रुवन्— पुरुषमूर्तिं राजानं करवाम सोमाद् रूपमादायाऽऽदित्यात् तेजो विक्रममथेन्द्राद् विष्णोर्विजयं वैश्रवणात् त्यागं यमात् संयमनम्' इत्याद्युपक्रम्य 'सोऽब्रवीत्— धर्ममेव मे सख्याय कुरुध्वम्, ततोऽहं प्रजाः पालयामीति । ततस्तस्मै धर्मं द्वितीयमकुर्वन् । स एष धर्मो निदानेन यद् दण्डः । तस्मादेवंविद् राजा दण्डं पितर्यपि पातयेत् । धर्मेणैनं संस्करवाम्याधिपत्यायेन्द्रत्वाय ब्रह्मलोकायेति । ईश्वरोऽहं तथा कर्त्रोः' इत्यादि । विश्व.

( २ ) तदेवंविधं राज्यं प्राप्य दुर्वृत्तेषु वञ्चकशठधूर्तपरदारपरद्रव्यापहारिहिंसकादिषु नृपो दण्डं पातयेत् प्रयोजयेत् । हि यस्मात् धर्म एव दण्डरूपेण पूर्वं ब्रह्मणा निर्मितः । तस्य च दण्ड इति यौगिकी संज्ञा, 'दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत्' ( गौध. ११।३०) इत्यादिगौतमस्मरणात् । * मिता.

* शेषं मितागतम् ।

(१) यास्मृ. १।३१६ ; विश्व. १।३१२ ; मिता. ; अप. १।३१४–३१५ ; रार. १४ मव्यथं (मव्ययं) ; दीक. ; वीमि. रारवत्, 'अव्यथं' इत्यपि पाठः.

(२) यास्मृ. १।३५४ ; विश्व. १।३५० ; मिता. ; अप. १।३५२–३५३ ; रार. ६२ ; वीमि. ; राप्र. २९०.

* रार., दीक. मितागतम् ।

(३) प्राप्तराज्येन यत्कार्यं तदाह– तदवाप्येति। तत् राज्यं कार्यतयाऽवाप्य, राज्याधिकारं लब्ध्वेति यावत्। राजा दण्डं धनशरीरपीडनविषयं दुर्वृत्तेषु शास्त्रातिक्रमकारिषु निपातयेत् प्रयुञ्जीत। न च दण्डं प्रयुञ्जानस्य राज्ञः प्रत्यवायः शङ्कनीयः। यतो भगवता ब्रह्मणा विधिना धर्म एव दण्डात्मना निर्मितः विहितः। राजानं प्रति विहितत्वाद्दण्डो नाधर्मायेत्यर्थः। अप.

(४) ननु प्रजानुरञ्जनपरस्य राज्ञो दण्डपातनं कथम्? अत आह– धर्मो हीति। हि यतः धर्म एव दण्डरूपेणोपलक्षितः पुरा ब्रह्मणा निर्मितः। एतच्चाधिष्ठानाधिष्ठेययोः अभेदोपचारादुक्तम्। तथा च धर्मात्मकत्वात् सर्वलोकानुरञ्जनमेव दण्डपातनम्। असाधूनामनुरञ्जनं तु न राजधर्म इति भावः। * वीमि.

शुचिः प्राज्ञो राजैव न्यायतो दण्डप्रणयनाधिकृतः,

न कामक्रोधादिवशोऽप्राज्ञो राजा

'स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना।
सत्यसंधेन शुचिना सुसहायेन धीमता॥

(१) यतश्चैवंरूपो दण्डः– न स नेतुमतः शक्यो लुब्धेनाकृतबुद्धिना। केन तर्हि शक्यः? – सत्यसंधेनेति। विश्व.

(२) स पूर्वोक्तो दण्डो लुब्धेन कृपणेन अकृतबुद्धिना चञ्चलबुद्धिना न्यायतो न्यायानुसारेण नेतुं प्रयोक्तुं शक्यो न भवति। कीदृशेन तर्हि शक्यः? इत्याह – सत्यसंधेन अप्रतारकेण शुचिना जितारिषड्वर्गेण सुसहायेन पूर्वोक्तसहायसहितेन धीमता नयानयकुशलेन स दण्डो न्यायतो धर्मानुसारेण नेतुं शक्यः। मिता.

(३) अलुब्धेन न्यायधनव्ययकारिणा कृतबुद्धिना वृद्धसेवाविद्यागमाभ्यां लब्धप्रज्ञेन सत्यसंधेन सत्यसंकल्पेन शुचिना शुद्धोपधेन बाह्याभ्यन्तरशौचवता न च सुसहाये शास्त्रोक्तगुणगणयुक्तमन्त्रिप्रभृतिसहायवता धीमता अधिगतार्थानुचिन्तनवता स दण्डो न्यायतः यथाशास्त्रं नेतुं प्रणेतुं शक्यो भवति, न पुनरन्येन। अप.

(४) स च दण्डो यथाशास्त्रं कार्योऽन्यथा राज्ञो दोषमाह– स नेतुमिति (श्लोकत्रयेण)। सः धर्मस्वरूपो दण्डः अलुब्धेन लोभशून्येन कृतबुद्धिना स्थिरबुद्धिना सत्यसंधेन यथार्थप्रतिज्ञेन शुचिना जितारिषड्वर्गेण सुसहायेन समीचीनामात्यादिमता धीमता नीतिविज्ञेन राज्ञा न्यायतः शास्त्रानुसारेण नेतुं दण्ड्येषु प्रापयितुं शक्यः। तथा लोभत्यागादिपुरःसरं न्यायतः ससहायो दण्डयेदिति तात्पर्यम्। मिताक्षरायां तु 'स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना' इति पठित्वा पृथगेवायं वाक्यार्थः, सत्यसंधेनेत्यादि तु वाक्यान्तरमित्यभिप्रेत्य व्याख्यातम्। * वीमि.

दण्डप्रणयनविधिः

'यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानवम्।
जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत्॥

(१) कस्मात् पुनरयं प्रयत्नः? यस्मात्– यथाशास्त्रमिति। यस्मात् दण्डाधीनौ जगतः कृत्स्नस्याऽऽनन्दप्रकोपौ, तस्मात् यत्नो दण्डप्रणीतौ कार्य इत्यभिप्रायः। विश्व.

(२) स दण्डः शास्त्रोक्तमार्गेण प्रयुज्यमानः सन् देवासुरमानवैः सहितमिदं सर्वं जगत् आनन्दयेत् हर्षयेत्। अन्यथा शास्त्रातिक्रमेण प्रयुक्तश्चेज्जगत् प्रकोपयेत्। † मिता.

---

* शेषं मितागतम्।

(१) यास्मृ. १।३५५; विश्व. १।३५१ स नेतुं न्यायतोऽशक्यो (न स नेतुमतः शक्यो); मिता.; अप. १।३५३–३५४ पूर्वार्धे (स नेतुं न्यायतः शक्योऽलुब्धेन कृतबुद्धिना।); वीमि. अपवत्; राप्र. २९० शुचिना (कृतिना); नीम. ४६.

* राप्र. वीमिगतम्।

† वीमि. मितावत्।

(१) यास्मृ. १।३५६; विश्व. १।३५२ त्सर्व (त्कृत्स्न) तत्प्र (तु प्र); मिता.; अप. १।३५४–३५५ तत्प्र (तु प्र); वीमि. मानवम् (मानुषम्); राप्र. २९० तत्प्र (तु प्र) शेषं वीमिवत्; नीम. ४६ सन् (स) शेषं राप्रवत्.

(३) सम्यग्दण्डं प्रणयतोऽभ्युदयोऽन्यथा प्रत्यवाय इत्याह- यथाशास्त्रमिति । शास्त्रानतिक्रमेण प्रयुक्तो दण्डो देवादिसहितं जगदानन्दयेत् । ततश्च स्वस्य सुखयोगः । असम्यक्प्रणयने तु तदेव प्रकोपयेत् । ततश्चाऽऽत्मनो दुःखयोगः । अप.

(४) यथाशास्त्रं शास्त्रानतिक्रमेण होमादिद्वारेण । दीक.

[1]अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ।
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥

(१) यतश्चैतदेवम्, अतः— अधर्मदण्डनमिति । लोकः परराष्ट्रप्राप्तिः स्वराष्ट्रस्थैर्यं च । स्पष्टमन्यत् । विश्व.

(२) न केवलमधर्मदण्डेन जगत्प्रकोपः, अपि तु प्रयोक्तुर्दृष्टादृष्टहानिरपीत्याह— अधर्मदण्डनमिति । यः पुनः शास्त्रातिक्रमेण लोभादिना दण्डः कृतः स पापहेतुत्वात् स्वर्गं कीर्तिं लोकांश्च विनाशयति । शास्त्रोक्तमार्गेण तु कृतो धर्महेतुत्वात् स्वर्गकीर्तिजयानां हेतुर्भवति । मिता.

(३) अपरमपि फलमाह — अधर्मदण्डनमिति । दण्डस्यासम्यक् प्रणयनं प्रागनुष्ठितधर्मवशादुपार्जितस्य स्वर्गस्य कीर्तेरस्य च लोकस्य विनाशकं भवति । सम्यक्प्रणयनं तु धर्मान्तरार्जितं स्वर्गं कीर्तिं जयं च विघ्ननिवारणद्वारेणाऽऽवहति । तस्मात् सम्यगेव दण्डः प्रणेयः । अप.

(४) अत्र दण्डनं काम्यम्, अन्यत्र नित्यम्, अतो नित्यकाम्यम् । यत्तु काम्यमेव नित्यमेव वा, तन्न, तदकरणे 'दण्ड्योत्सर्गे राजैकरात्रमुपवसेत् । त्रिरात्रं पुरोहितः । कृच्छ्रमदण्ड्यदण्डने पुरोहितः ।' (वस्मृ. १९।४०–४२) इति वसिष्ठवचनेन प्रायश्चित्तश्रवणात्, 'यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च पातयेत् । इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः ॥' (यास्मृ. १।३५९), 'दण्डस्य हि भयात् सर्वं जगद्भोगाय कल्पते' (मस्मृ. ७।२२) इत्यादिबहुतरफलश्रवणाच्च । न च संध्योपासनादिवत् फलश्रवणे नित्यत्वमिति वाच्यम्, साक्षात्सुखादेरेव फलत्वे विवक्षितत्वात्, अन्यथा तयोरेकशेषः कर्तुमशक्यत्वात् (?) । रार. ६४

(५) एवं च 'जनानुरागप्रभवाः संपदः' इत्यादिकथितसंपत्तिदानत्वतद्विपर्ययरूपफलद्वयमुक्त्वा दण्डस्य फलान्तरमप्याह— अधर्मेति । स्वर्गः 'यन्न दुःखेन' इत्यादिलक्षितः सुखविशेषः । कीर्तिः सम्यक्त्वख्यातिः । लोकः प्रजारूपः । तद्विनाशनं तद्विरोधिराज्ञोऽधर्मेण दण्डनं भवति प्रजाविनाशनं युद्धपराजयेन तदप्रभुत्वापादनं पर्यवसन्नं तुशब्देन (?) । वीमि.

राज्यप्राप्तिस्थितिकरो नयसंक्षेपः

[1]ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु ।
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥

(१) अयं चान्यो राज्यप्राप्तिस्थितिकरः सारनयसंक्षेपः— ब्राह्मणेष्विति । स्निग्धः निरभिसंधिस्नेहैकनिबन्धनतया मित्रम् । अजिह्मः अकुटिलः । स्पष्टमन्यत् । विश्व.

(२) किंच, ब्राह्मणेष्वधिक्षिपत्स्वपि क्षमी क्षमावान् । स्निग्धेषु स्नेहवत्सु मित्रादिषु अजिह्मः अवक्रः । अरिषु क्रोधनः । भृत्यवर्गेषु प्रजासु च हिताचरणेनाहितनिवर्तनेन च पितेव दयावान् । स्यादिति प्रत्येकं संबध्यते । * मिता.

(३) बहुविधप्रजापालनप्रकारं संक्षिप्याऽऽह — ब्राह्मणेष्विति । रार. ६१

(४) राज्ञः सर्वाधिकं धर्मान्तरमाह — ब्राह्मणेष्विति । भृत्यवर्गेषु पुत्रसेवकादिषु, प्रजासु पौरादिषु, चकारात्

---

(१) यास्मृ. १।३५७ ; विश्व. १।३५३ स्वर्गकीर्तिलोक (लोकस्वर्गकीर्ति) ; मिता. ; अप. १।३५५–३५६ ; रार. ६४ राज्ञः (राज्ञां) जया (यशो) ; वीमि. ; राप्र. २९० ; नीम. ४६.

* अप., दीक. मितागतम्।

(१) यास्मृ. १।३३४ ; विश्व. १।३३० प्रजासु च (प्रजाभ्यश्च) ; मिता. ; अप. १।३३२–३३३ वर्गेषु (वर्गे च) ; राक. २१ ष्वजिह्मः क्रोधनो (ष्वजिह्मो क्रोधितो) ; रार. ६१ द्राजा भृत्य (द्राजाऽऽश्रित) ; दीक. ; वीमि. ; राप्र. १२१ ष्वजिह्मः (ष्वजिह्मो) ; नीम. ३६ अपवत्, उत्त.

शरणागतेषु, पितेव पालनविनयाधानादिकारी स्यादित्यर्थः।
* वीमि.

† 'पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन्।
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम्॥
[1]प्रनष्टाधिगतं देयं नृपेण धनिने धनम्।
विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति॥

(१) यस्माच्च राजा व्यवहारविधावग्र्यो दण्डधरः, तस्मात्– प्रनष्टाधिगतमिति। कस्यचित् प्रनष्टं यदि राज्ञाऽन्येन वाऽधिगतं लब्धं तत् यदि धनिना प्रार्थ्यते, ततः 'किं तत्, कियत्संख्यं च?' इत्येवं पृष्ट्वा अविसंवादकस्यान्विष्यार्पणीयम्। न चेदेवं विभावयेत् तत्समं दण्ड्यः। विश्व.

(२) प्रनष्टं हिरण्यादि शौल्किकस्थानपालादिभिरधिगतं राज्ञे समर्पितं यत्तद्राज्ञा धनिने दातव्यम्, यदि धनी रूपसंख्यादिभिर्लिङ्गैर्भावयति। यदि न भावयति तदा तत्समं दण्ड्यः, असत्यवादित्वात्। अधिगमस्य स्वत्वनिमित्तत्वात्स्वत्वे प्राप्ते तत्परावृत्तिरनेनोक्ता। अत्र च कालावधिं वक्ष्यति –– 'शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम्। अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः॥' (यास्मृ. २।१७३) इति। मनुना पुनः संवत्सरत्रयमवधित्वेन निर्दिष्टम्– 'प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत्। अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत्॥' (मस्मृ. ८।३०) इति। तत्र वर्षत्रयपर्यन्तमवश्यं रक्षणीयम्। तत्र यदि संवत्सरादर्वाक् स्वाम्यागच्छेत्तदा कृत्स्नमेव दद्यात्। यदा पुनः संवत्सरादूर्ध्वमागच्छति तदा षड्भागं रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात्। यथाऽऽह– 'आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः। दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन्॥' (मस्मृ. ८।३३) इति। तत्र प्रथमे वर्षे कृत्स्नमेव दद्यात्, द्वितीये द्वादशं भागम्, तृतीये दशमम्, चतुर्थादिषु षष्ठं भागं गृहीत्वा शेषं दद्यात्। राजभागस्य चतुर्थोंऽशोऽधिगन्त्रे दातव्यः। स्वाम्यनागमे तु कृत्स्नस्य धनस्य चतुर्थमंशमधिगन्त्रे दत्वा शेषं राजा गृह्णीयात्। तथाऽऽह गौतमः– 'प्रनष्टस्वामिकमधिगम्य संवत्सरं राज्ञा रक्ष्यम्। ऊर्ध्वमधिगन्तुश्चतुर्थोंऽशो राज्ञः शेषम्।' (गौध. १०।३५-३७) इति। अत्र संवत्सरमित्येकवचनमविवक्षितम्, 'राजा त्र्यब्दं निधापयेत्' (मस्मृ. ८।३०) इति स्मरणात्। 'हरेत परतो नृपः' (मस्मृ. ८।३०) इत्येतदपि स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञापरम्। ततः परमागते तु स्वामिनि व्ययीभूतेऽपि द्रव्ये राजा स्वांशमवतार्य तत्समं दद्यात्। एतच्च हिरण्यादिविषयम्। गवादिविषये वक्ष्यति– 'पणानेकशफे दद्यात्' (यास्मृ. २।१७४) इत्यादिना। * मिता.

[1]देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु।
अददद्धि समाप्नोति किल्बिषं यस्य तस्य तत्॥

(१) यतश्च निध्यादिष्वस्वामिकेषु राज्ञः प्रभुत्वम्, तत एव च– देयमिति। कस्मात्? यस्मात्– अददिति। पालकत्वेन हि राजगामिता निध्यादेः। पालकः चेत् किमिति परकीयं चोरादिहृतं न प्रयच्छेदित्यभिप्रायः। जनपदग्रहणं सर्वार्थम्। न ब्राह्मणायैवेत्यर्थः। तथा च बृहस्पतिः– 'चोरापहृतं तु सर्वेभ्योऽन्विष्यार्पणीयम्, अलाभे स्वकोशाद्वा, अदच्चोरकिल्बिषी स्यात्।' इत्यादि। विश्व.

(२) चौरहृतं प्रत्याह– देयमिति। चौरैर्हृतं द्रव्यं चौरेभ्यो विजित्य जानपदाय स्वदेशनिवासिने यस्य तत्

---

* शेषं मितागतम्।

† श्लोकस्यास्य व्याख्यानसंग्रहः 'प्रकृतयः– राष्ट्रम्' इत्यस्मिन्प्रकरणे द्रष्टव्यः।

(१) **यास्मृ.** १।३३५. शेषः स्थलादिनिर्देशः 'प्रकृतयः– राष्ट्रम्' इत्यस्मिन् प्रकरणे द्रष्टव्यः।

(२) **यास्मृ.** २।३३; **विश्व.** २।३५; **मिता.**; **अप.**; **गौमि.** १०।३७; **दीक.**; **वीमि.**

* अप., दीक., वीमि. मितागतम्।

(१) **यास्मृ.** २।३६; **विश्व.** २।३८ चौर (चोर) जान (जन) यस्य तस्य (तस्य यस्य); **मिता.**; **अप.** जान (जन) यस्य तस्य (तस्य यस्य); **दीक.** चौर (पौर); **वीमि.**; **राप्र.** १२७.

द्रव्यं तस्मै राज्ञा दातव्यम्। हि यस्मात् अददत् अप्रयच्छन् यस्य तत् अपहृतं द्रव्यं तस्य किल्बिषमाप्नोति। तस्य चौरस्य च। यथाऽऽह मनुः– 'दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम्। राजा तदुपयुञ्जानश्चौरस्याऽऽप्नोति किल्बिषम्॥' (मस्मृ. ८।४०) इति। यदि चौरहस्तादादाय स्वयमुपभुङ्क्ते तदा चौरस्य किल्बिषमाप्नोति, अथ चौरहृतमुपेक्षते तदा जानपदस्य किल्बिषम्। अथ चौरहृताहरणाय यतमानोऽपि न शक्नुयादाहर्तुं तदा तावद्धनं स्वकोशाद्दद्यात्। यथाऽऽह गौतमः– 'चौरहृतमवजित्य यथास्थानं गमयेत्। कोशाद्वा दद्यात्।' (गौध. १०।४६-४७) इति। कृष्णद्वैपायनोऽपि– 'प्रत्याहर्तुं न शक्तस्तु धनं चौरैर्हृतं यदि। स्वकोशात्तद्धि देयं स्यादशक्तेन महीक्षिता॥' इति। * मिता.

(३) तुशब्देन जानपदातिरिक्तस्य दानं विधिवत् स्वयं भागग्रहणं च व्यवच्छिद्यते। † वीमि.

## नारदः

वर्णाश्रमधर्मपालनविधिः श्रुतिस्मृत्यविरुद्धस्य जनहितधर्मस्य प्रवर्तनाधिकारश्च

[1]राजा त्ववहितः सर्वानाश्रमान् परिपालयेत्।
उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतीस्तथा॥

चतुर्भिः सामादिभिः। गतार्थः शेषः। नाभा.

[2]यो यो वर्णोऽपहीयेत यश्चोद्रेकमनुव्रजेत्।
तं तं दृष्ट्वा स्वतो मार्गात्प्रच्युतं स्थापयेत्पथि॥

* अप., दीक. मितागतम्।

† शेषं मितागतम्।

(१) नासं. १९।५ कृती (कृते); नास्मृ. २०।५.

(२) नासं. १९।६ यश्चो (यो वो); नास्मृ. २०।६ ऽ१ (ऽव) यश्चो ... व्रजेत् (यो य उद्रेकमाप्नुयात्); पमा. ३९० ऽप (ऽव); राप्र. २९१.

[1]अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु।
प्रसमीक्ष्याऽऽत्मना राजा दण्डं दण्ड्येषु पातयेत्॥

(१) दण्ड्यश्च द्विविधः– विहितानानुष्ठाता निषिद्धानुष्ठाता च। तदाह– य इति। अपहीयेत स्वधर्मात् च्युतो भवेदित्यर्थः। उद्रेकः निषिद्धं कर्म। राप्र. २९१

(२) यो यो वर्णः स्वमार्गात् अपहीयेत उत्सृजेत्, यो वा उद्रेकं गच्छेत्, तं तं नियम्यानुगृह्य स्वमार्गे स्थापयेत्। अशास्त्रोक्तेषु प्रवर्तमानेष्वनुरूपं दण्डं धारयेत्। नाभा.

[2]श्रुतिस्मृतिविरुद्धं च जनानामहितं च यत्।
न तत्प्रवर्तयेद्राजा प्रवृत्तं च निवर्तयेत्॥

[3]न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं च यत्।
तदप्यन्यायविहितं पुनर्न्याये निवेशयेत्॥

न्यायापेतं करपातनादि यदन्येन राज्ञा कृतमपि निवर्तयेत्। आत्मनाऽप्यज्ञानकृतं न्याये स्थापयेत्। नाभा.

[4]राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत्।
दण्ड्यः स पापो वध्यश्च लोपयन् राजशासनम्॥

[5]यदि राजा न सर्वेषां नियतं दण्डधारणम्।
कुर्यात्पथो व्यपेतानां विनश्येयुरिमाः प्रजाः॥

[6]ब्राह्मण्यं ब्राह्मणो हन्यात् क्षत्त्रियः क्षात्रमुत्सृजेत्।
स्वकर्म जह्याद्वैश्यश्च शूद्रः सर्वान् विशेषयेत्॥

(१) नासं. १९।७; नास्मृ. २०।७ त्मना (त्मनो); पमा. ३९० याज्ञवल्क्यः; राप्र. २९१.

(२) नासं. १९।८; नास्मृ. २०।८ च जनाना (यद्भूताना).

(३) नासं. १९।९; नास्मृ. २०।९ च यत् (भवेत्).

(४) नासं. १९।१० दण्ड्यः (नह्यः); नास्मृ. २०।१३.

(५) नासं. १९।१४; नास्मृ. २०।१४ नियतं (वर्णानां).

(६) नासं. १९।१५; नास्मृ. २०।१५-१६ हन्या (जह्या) सर्वान् (सर्वे).

[1]राजानश्चेन्नाभविष्यन् पृथिव्यां दण्डधारणे ।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥

[2]सतामनुग्रहो नित्यमसतां निग्रहस्तथा ।
एष धर्मः स्मृतो राज्ञामर्थश्चापीडयन् प्रजाः ॥

सदसतोरनुग्रहनिग्रहनिमित्तो धर्मो राज्ञामर्थश्च भवति प्रजा अपीडयन् दण्डेन । इतरोऽर्थः प्रजाः पीडयित्वा वर्जनीयः स्यात् । नाभा.

[3]न लिप्यते यथा वह्निर्दहञ्छश्वदिमाः प्रजाः ।
तथा न लिप्यते राजा दण्डं दण्ड्येषु पातयन् ॥

दुष्टान् शासत् दोषेण न लिप्यते राजा । स्वधर्मकरणादिति हेतुः । वह्निर्दृष्टान्तः । नाभा.

प्रजारक्षणव्यवहारदर्शनात्मरक्षणानि कर्तव्यानि

[4]तस्य वृत्तिः प्रजारक्षा वृद्धप्राज्ञोपसेवनम् ।
दर्शनं व्यवहाराणामात्मनश्चाभिरक्षणम् ॥

तस्य कर्तव्यं प्रजानां रक्षणम् । वृद्धाः शास्त्रकृतबुद्धयः । प्राज्ञः विना शास्त्रेण स्वाभाविकविनयः । शेषो गतार्थः । नाभा.

ब्रह्मक्षत्रे प्रजाधर्माभिरक्षके

[5]ब्राह्मणानुपसेवेत नित्यं राजा समाहितः ।
संयुक्तं ब्राह्मणैः क्षत्रं मूलं लोकाभिरक्षणे ॥

(१) नासं. १९।१६ ; नास्मृ. २०।१५–१६ पूर्वार्धे (राजानश्चेन्नाकरिष्यन् प्रजानां दण्डधारणम् ।) पक्ष्यन् दु (श्नीयुर्दु).

(२) नासं. १९।१७ ; नास्मृ. २०।१७ पीडयन् प्रजाः (मित्रपीडनात्) ; राक. १५४ श्चापीडयन् प्रजाः (श्चापि भवेत्ततः) ; राप्र. १३५ राकवत्.

(३) नासं. १९।१८ ; नास्मृ. २०।१८ दिमाः (दपि) तथा न लिप्यते (न लिप्यते तथा).

(४) नासं. १९।३१ ; नास्मृ. २०।३३ वृत्तिः (धर्मः) मात्मनश्चाभिरक्षणम् (मुत्थानं च स्वकर्मसु) ; राक. १५४ ; राप्र. १३५ श्चाभि (श्चापि).

(५) नासं. १९।३२ ; नास्मृ. २०।३४ क्षत्रं (क्षेत्रं) रक्षणे (वृद्धये).

कृतकस्वाभाविकविनयानामासेवनस्योक्तत्वात् ब्राह्मणग्रहणं जातिमात्रोपसेवनार्थम् । ब्राह्मणैः संयुक्तं हि क्षत्रमविघ्नेन प्रजा रक्षति । अन्यथा कुपिता ब्राह्मणाः समूलं क्षत्रं दहेयुः अग्निवत् । नाभा.

[1]ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ।
नैतयोरन्तरं किंचित्प्रजाधर्माभिरक्षणात् ॥

ब्राह्मणाच्च राज्ञश्च प्रतिग्रहः प्रशस्यतरः इत्युक्तम् । तत्र कारणमुच्यते– द्वावप्येतौ धृतव्रतौ । नानयोर्विशेषोऽस्ति, प्रजारक्षणात् । एकः पालनेन इतरो धर्मोपदेशेन । नाभा.

[2]य एव कश्चित्स्वद्रव्यं ब्राह्मणेभ्यः प्रयच्छति ।
तद्राज्ञाऽप्यनुमन्तव्यमेष धर्मः सनातनः ॥

[3]अन्यत्र कारादुचिताद् भूमेः षड्भागसंज्ञितात् ।
बलिः स तस्य विहितः प्रजापालनवेतनः ॥

राज्ञाऽनुमन्तव्यमित्युक्तम् । तत्र कारात्, कारः करः, उचितात् षड्भागात् धनात् अन्यत्रानुमन्तव्यम् । विहितो बलिः वृत्तिः, स तस्य प्रजापालनवृत्तिः । तस्मात् राज्ञा नानुमन्तव्यम् । नाभा.

[4]शक्यं तत्पुनरादातुं यदब्राह्मणसात्कृतम् ।
ब्राह्मणाय तु यद् दत्तं न तस्याऽऽहरणं पुनः ॥

ब्राह्मणस्य करानुमानने हेतुः– ब्राह्मणादादातुमशक्यं यथाऽन्येषां दत्तं शक्यं न तथा तस्य, पुनरादाने प्रत्यवायात् । षड्भागेन विना वृत्त्यभावात् । नाभा.

(१) नासं. १९।४० ; नास्मृ. २०।४२ धृत (दृढ) उत्तरार्धे (नानयोरन्तरं किंचित्प्रजा धर्मेण रक्षतोः ॥).

(२) नासं. १९।४४ य एव (यदा च) स्वद्रव्यं (स्वं द्रव्यं) ; नास्मृ. २०।४७.

(३) नासं. १९।४५ ; नास्मृ. २०।४८ अन्यत्र कारा (अन्यप्रकारा) वेतनः (वेतनम्).

(४) नासं. १९।४६ ; नास्मृ. २०।४९ रादातुं (राहर्तुं) ब्राह्मणाय तु (ब्राह्मणेभ्यस्तु) तस्याऽऽ (तस्य).

वार्तात्रयीदण्डनीत्यनुसारेण प्रजारक्षणम्

[1]वार्तां त्रयीमप्यथ दण्डनीतिं
राजाऽनुवर्तेत सदाऽप्रमत्तः ।
हन्यादुपायैर्विविधैर्गृहीत्वा
पुरे च राष्ट्रे च विघुष्य चोरान् ॥

वार्तां कृषिगोरक्षवाणिज्यलक्षणाम्, त्रयीं ऋग्यजुःसामलक्षणाम्, दण्डनीतिं च सदा राजाऽनुवर्तेत । कुटुम्बिनो ब्राह्मणादीन् न पीडयेदित्यर्थः । अर्थशास्त्रं च मनसा नित्यमवेक्षेतेत्यर्थः । अथवा कृष्यादि सदा कुर्यात् । तेनोक्तानि च कर्माणि नित्यं कुर्यात् । अर्थशास्त्रे च यथोक्तं तथा कुर्यात् । किंच, उपायैर्यथोक्तैरनेकप्रकारैश्चोरान् गृहीत्वा पुरे च राष्ट्रे च चकारात् ग्रामे च विघुष्य प्रकाश्य अन्यमोषत्रासजननार्थं हन्यादित्युपसंहारार्थः । 　नाभा.

[2]राज्ञा परीक्ष्यं न यथा जायते वर्णसंकरः ।
तस्माद्राज्ञा विशेषेण त्रयी रक्ष्या तु संकरात् ॥

राज्ञा यथा वर्णसंकरो न भवति तथा परीक्ष्य व्यवस्थाप्यम् । तस्मात् राज्ञा विशेषेण सर्वे रक्ष्याः । विशेषेण तु त्रयी विद्या । सा संकरे सति विप्लवेत । त्रयीजातः तत्र ब्राह्मणावस्थितत्वादिति (?) । 　नाभा.

राष्ट्रे स्त्रीणां रक्षणं राजधर्मः

[3]मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः ।
विनियोगात्मरक्षासु भरणे च स ईश्वरः ॥

पत्यौ मृते अपुत्रायाः । मृत इति वचनाज्जीवन् स एव पतिः । अपुत्राया इति वचनात् सपुत्रायाः पुत्र एव । पतिपक्षः श्वशुरादिः, न पित्रादिः प्रभवति । विनियोगे क्षेत्रजार्थम्, तस्या रक्षायां भरणे च स एव पतिपक्ष ईष्टे, न पितृपक्षः । पितृविनियोगादि पितृपक्षेण कारयितव्यं व्यवहार इत्येवमर्थं उपन्यासः (?) । नाभा.

[1]परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥

असति पतिपक्षे भरणसमर्थे निर्मनुष्ये तत्सपिण्डः प्रभुः । तदभावे पितृपक्ष एव भरणं दाप्य इति । 　नाभा.

[2]पक्षद्वयावसाने तु राजा भर्ता स्मृतः स्त्रियाः ।
स तस्या भरणं कुर्यान्निगृह्णीयात्पथश्च्युताम् ॥

उभयपक्षाभावे राजा बिभृयाद् रक्षेच्च । न स्वतन्त्रा कार्या । 　नाभा.

## बार्हस्पत्यसूत्रम्

दण्डनीतिप्रयोजनम्

[3]नीतेः फलं धर्मार्थकामावाप्तिः ॥
* [4]तत्र साक्षाद्धर्माधर्मफलाः सिध्यन्ति ॥
तत्र दण्डनीतिः ॥
पूर्वभारतीयैः पठितव्यः भविष्यैर्वर्तमानैश्च चातुर्वर्णिकैश्च ॥
दण्डनीत्या भगवान् भानुर्नृपतिः ॥
वायुश्च सर्वे देवाश्च ॥
जन्तवश्च ॥

## कात्यायनः

धर्मसंस्थो राजा एव देवेन्द्रः, राजनिर्मितिप्रयोजनानि

[5]शौर्यविद्यार्थबाहुल्यात्प्रभुत्वाच्च विशेषतः ।
सदा चित्तं नरेन्द्राणां मोहमायाति कारणात् ॥

---

* तत्र इत्यस्य संदर्भतो भारतखण्डे इत्यर्थः ।

(१) नासं. १९।११९ ; नास्मृ. २१।६१ त्रयीमप्यथ (तु यां चाप्यथ) वर्तेत सदाऽप्र (वर्तेन्मतताप्र) उत्तरार्धे (हन्यादुपायैर्निपुणैर्गृहीतान् तथैव शास्तेव निगृह्य पापान् ॥).

(२) नासं. १३।११८ ; नास्मृ. १५।११३ त्रयी रक्ष्या तु (स्त्रियो रक्ष्यास्तु) उत्त.

(३) नासं. १४।२७ ; नास्मृ. १६।२८ ; मेधा. ८।२८ योगात्म (योगोऽस्ति) उत्त. ; मच. ८।२८ मेधावत्.

(१) नासं. १४।२८ ; नास्मृ. १६।२९ चा (वा) ; मेधा. ८।२८ नास्मृवत् ; मच. ८।२८ तत्सपिण्डेषु (सपिण्डेष्वपि).

(२) नासं. १४।२९ ; मेधा. ८।२८ स्मृतः (प्रभुः) पू. ; मच. ८।२८ मेधावत्.

(३) बासू. २।४३.

(४) बासू. ३।७३–७८.

(५) राक. १६३ ; राप्र. १३६.

[1]तस्माच्चित्तं प्रबोद्धव्यं राजधर्मे सदा द्विजैः ।
पवित्रं परमं पुण्यं स्मृतिवाक्यं न लङ्घयेत् ॥

द्विजैः करणभूतैः राज्ञा स्वचित्तं राजधर्मे प्रबोद्धव्यम् ।
राप्र. १३६

[2]वेदध्वनिप्रभावेण देवाः स्वर्गनिवासिनः ।
तेऽपि तत्र प्रमोदन्ते तृप्तास्तु द्विजपूजनात् ॥
तस्माद्यत्नेन कर्तव्या द्विजपूजा सदा नृपैः ।
तेन भूयोऽपि शक्रत्वं नरेन्द्रत्वं पुनः पुनः ॥

सत्कर्मणा शक्रत्वं प्राप्य पुण्यक्षये पुनर्नरेन्द्रत्वम्, आप्नुयादिति शेषः । राप्र. १३९

[3]सुराध्यक्षश्च्युतः स्वर्गान्नृपरूपेण तिष्ठति ।
कर्तव्यं तेन तन्नित्यं येन तत्त्वं समाप्नुयात् ॥

तत्त्वं सुरेशत्वम् । * राक. २१

[4]आत्मीये संस्थिता धर्मे नृपाः शक्रत्वमाप्नुयुः ।
अवीचिवासिनो ये तु व्यपेताचारिणः सदा ॥

(१) व्यपेताचारिणः अपभ्रष्टाचाराः । राक. २१

(२) ये तु व्यपेताचारिणः त्यक्तवर्णाश्रमधर्माः ते सदा बहुकालपर्यन्तं अवीचिनामनरकवासिनः । राप्र. १४५

[5]गच्छेत्सम्यगविज्ञाय वशं क्रोधस्य यो नृपः ।
वसेत्स नरके घोरे कल्पान्तं तु न संशयः ॥

सम्यगविज्ञाय स्वक्रोधनिमित्तं परापराधमनिर्णीय । राप्र. १४६

[6]अक्लेशेनार्थिने यस्तु राजा सम्यङ्निवेदयेत् ।
तत्तारयत्यनन्तं स्याद्धर्मार्थं दानमीदृशम् ॥

---

* राप्र. राकवत् ।

(१) राक. १६३ स्मृति ( श्रुति ) ; राप्र. १३६.

(२) राक. १६८ ; राप्र. १३९.

(३) राक. २१ ; राप्र. १३९.

(४) राक. २१ ; राप्र. १४५.

(५) राक. २१, १५५ कल्पान्तं ( कल्पार्धं ) ; राप्र. १४६.

(६) राक. १६७.

[1]न्यायेनाऽऽक्रम्य यल्लब्धं रिपुं निर्जित्य पार्थिवैः ।
तच्छुद्धं तत्प्रदेयं च नान्यथोपहृतं क्वचित् ॥

[2]प्रजानां रक्षणं नित्यं कण्टकानां च शोधनम् ।
द्विजानां पूजनं चैव एतदर्थं कृतो नृपः ॥

[3]श्रोत्रिया विधवा बाला दुर्बलाश्च कुटुम्बिनः ।
एते राजबला राज्ञा रक्षितव्याः प्रयत्नतः ॥
अनाथस्य नृपो नाथस्त्वगृहस्य नृपो गृहम् ।
अपुत्रस्य नृपः पुत्रो ह्यपितुः पार्थिवः पिता ॥

[4]यत्र कर्माणि नृपतिः स्वयं पश्यति धर्मतः ।
तत्र साधुसमाचारा निवसेयुः सुखं प्रजाः ॥

## वृद्धहारीतः

हारीतोक्ता राजनीतिः— न्यायेन पृथ्वीपालनविधिः

[5]प्रतिग्रहस्तु विप्राणां राज्ञां क्ष्मापालनं तथा ॥
न्यायेन पालयेद्राजा पृथिवीं शास्त्रमार्गतः ।
स्वराष्ट्रकृतधर्मस्य सदा षड्भागसिद्धये ॥
राज्ञां राष्ट्रकृतं पापमिति धर्मविदो विदुः ।
तस्मादपापसंयुक्तां यथा संरक्षयेद्भुवम् ॥

[6]न्यायेन पालयेद्राजा धर्मात्षड्भागमाहरेत् ।
त्रिभागमाहरेद्धान्याद्धनात्षड्भागमेव च ॥
गोभूहिरण्यवासोभिर्धान्यरत्नविभूषणैः ।
पूजयेद्ब्राह्मणान्भक्त्या पोषयेच्च विशेषतः ॥
बिम्बानि स्थापयेद्विष्णोर्ग्रामेषु नगरेषु च ।
चैत्यान्यायतनान्यस्य रम्याण्येव तु कारयेत् ॥
वसुपुष्पोपहाराद्यं भूधेन्वादि समर्पयेत् ।
इतरेषां सुराणां च वैदिकानां जनेश्वरः ॥
धर्मतः कारयेच्छश्वच्चैत्यान्यायतनानि तु ।
वापीकूपतडागादिफलपुष्पवनानि च ॥

---

(१) राक. ८५ ; राप्र. २५४.

(२) राक. ८४ ; राप्र. ३०.

(३) राक. ८४ ; राप्र. २५४.

(४) वृहास्मृ. ७।१८०.

(५) वृहास्मृ. ७।१८८–१८९.

(६) वृहास्मृ. ७।२१२–२१७ –२२१–२२३.

कुर्वीत सुविशालानि पूर्वकाण्यपि पालयेत् ॥
अदण्डयित्वा दुर्वृत्तांस्तत्पापं पृथिवीपतिः ।
संप्राप्य निरयं गच्छेत्तस्मात्तान् दण्डयेत्तथा ॥
यः स्ववर्णाश्रमं हित्वा अनयेन तु वर्तते ।
तं दण्डयेत्पणशतं नाशयेत्तद्धि देशतः (१)॥
सर्वेष्वेतेषु पापेषु धनदण्डं प्रयोजयेत् ।
पितेव पालयेद् भृत्यान्प्रजाश्च पृथिवीपतिः ॥
[1]जित्वा शत्रून्महीं लब्ध्वा यत्नेन परिपालयेत् ।
पालितां वर्धयेन्नित्यं वृद्धां पात्रे विनिक्षिपेत् ॥
पात्रमित्युच्यते विप्रस्तपोविद्यासमन्वितः ।
न विद्यया केवलया तपसा वाऽपि पात्रता ॥
श्रुतमध्ययनं शीलं तप इत्युच्यते बुधैः ।
ईश्वरस्याऽऽत्मनश्चापि ज्ञानं विद्येति चोच्यते ॥
तथाविधेषु पात्रेषु भूमिं दत्त्वा धनं नपः ।
शासनं कारयेत्सम्यक्स्वहस्तलिखितादिभिः ॥
[2]एवं धर्मेण नृपतिः शासयेत्सर्वदा प्रजाः ।
यदुक्तं मनुना धर्मं व्यवहारपदं प्रति ॥
विलोकितं च विद्वद्भिर्वीतरागैर्विमत्सरैः ।
विमृश्य धर्मविद्भिश्च विमलैः पापभीरुभिः ॥
धर्मेणैव सदा राजा शासयेत्पृथिवीं स्वकाम् ।
विपरीतां दण्डयेद्वै यावद्दर्पोपनाशनम् ॥
सभ्या अपि च दण्ड्या वै शास्त्रमार्गविरोधिनः ।
राजधर्मोऽयमित्येवं प्रसङ्गात्कथितो मया ॥

## उशना

अष्टकर्मा राजा

[3]आदाने च विसर्गे च तथा प्रैषनिषेधयोः ।
पञ्चमे वाऽनुवचने व्यवहारस्य चेक्षणे ॥
[1]दण्डशुद्धौ तथा युक्त आत्मशुद्धौ तथैव च ।
अष्टकर्मा दिवं याति राजा शक्राभिपूजितः ॥

(१) तत्र स्वीकरणं आदानं बलीनाम्, भृत्येभ्यो धनदानं विसर्गः, प्रैषः दुष्टत्यागः, अर्थाधिकृतानां मतिप्रवृत्तिनिरोधः निषेधः असत्प्रवृत्तिनिषेधश्च, अनुवचनं वर्णाश्रमाणां स्वकर्मसंशये, व्यवहारावेक्षणम्, परस्पराभियोगे दण्डनिपातनं पराजितानां च, प्रमादस्खलिते तु प्रायश्चित्तम्, इत्येतत् अष्टविधं कर्म ।

मेधा. ७।१५४

(२) अधिकृतानां कामचारनिषेधः । वर्णाश्रमिणां स्वकर्मसंदेहे अर्थवदनम् । प्रजानां धनादिविप्रतिपत्तौ व्यवहारेक्षणम् । * गोरा. ७।१५४

(३) प्रैषः चरादेः । निषेधः भृत्यादीनामविनयनिषेधः । अर्थवचनं धर्मसंदेहनिर्णयः ।

* मवि. ७।१५४

(४) प्रैषः अमात्यादीनां दृष्टादृष्टानुष्ठानेषु । निषेधः दृष्टादृष्टविरुद्धक्रियासु । अर्थवचनं कार्यसंदेहे, राजाज्ञयैव तत्र नियमात् । व्यवहारस्येक्षणं प्रजानामृणादिविप्रतिपत्तौ ।

* ममु. ७।१५४

---

(१) बृहास्मृ. ७।२२९-२३२.

(२) बृहास्मृ. ७।२६७-२७०.

(३) **मेधा.** ७।१५४ वाऽनु (चानु); **गोरा.** ७।१५४ वाऽनुवचने (चार्थवदने); **राक.** १०८ वाऽनु (चार्थे): १४८ वाऽनु (वाऽथ); **मवि.** ७।१५४ प्रैष (प्रेष) वाऽनु (चार्थे); **ममु.** ७।१५४ वाऽनु (चार्थे); **पमा.** ४११ ममुवत्; **मच.** ७।१५४ मेधावत्, शुक्रः;

* शेषं मेधागतम् ।

**राप्र.** १५९ मेधावत्, प्रचेताः : ३१७ मविवत्; **नीम.** ३८ मेधावत्, प्रचेताः; **भाच.** ७।१५४ मविवत्.

(१) **मेधा.** ७।१५४ पूर्वार्धे (दण्डशुद्धयोः सदा युक्तस्तेनाष्टगातिको नृपः।) शक्राभिपूजितः (शत्रुभिरर्चितः); **गोरा.** ७।१५४ पूर्वार्धं मेधावत्; **राक.** १०८ : १४८ तथा (सदा); **मवि.** ७।१५४ आत्मशुद्धौ तथैव च (स्तेनाष्टगुणिको नृपः) शेषं गोरावत्; **ममु.** ७।१५४ गोरावत्; **पमा.** ४११ तथा युक्त (समायुक्त) शेषं गोरावत्, पू.; **मच.** ७।१५४ शक्राभि (शक्रादि) शेषं पमावत्, शुक्रः; **राप्र.** १५९ आत्मशुद्धौ तथैव च (स्तेनाष्टगणिको नयः) शेषं गोरावत्, प्रचेताः : ३१७ 'दण्डशुद्धयोः समायुक्तस्तेनाष्टगणिको नृपः' इत्यपि पाठः; **नीम.** ३९ पमावत्, पू., प्रचेताः; **भाच.** ७।१५४ मविवत्.

(५) प्रैषः प्रेरणा । * मच. ७।१५४

(६) विसर्गः पारितोषिकदानम् । प्रेषः प्रेषणं भृत्यादीनाम् । अर्थवचनं द्रव्यार्जनोपायः । अनुवचनमिति क्वचित् पाठः । अनुवचनं कार्यसंदेहे राजाज्ञा । दण्डशुद्धिः शास्त्रोक्तदण्डप्रणयनम् । आत्मशुद्धिः प्रायश्चित्तम् । * राप्र. ३१७

## यमः

क्षत्रियस्य देवाभिमतानि लक्षणानि सर्वभूतसमत्वादीनि, राज्यमूलं ब्राह्मणाः

[1]समः सर्वेषु भूतेषु नयानयविशारदः ।
नैकः कार्याणि यः कुर्यात्सोऽत्यन्तं पाति मेदिनीम् ॥

अत्यन्तं चिरकालम् । राप्र. १३४

[2]अन्तर्दोषं समुत्पन्नमाकारेणोपलक्षयेत् ।
शङ्क्येषु शङ्कितो नित्यं रक्षेच्छक्त्या सदोत्थितः ॥

शङ्क्येषु पूर्वकृतापराधादिना शङ्कास्पदेषु । राप्र. १३५

[3]पापानां निग्रहं कुर्यात्साधूनां परिपालनम् ।
यथाक्रमं च वृद्धानां काले काले निषेवणम् ॥
[4]याचितो नेति न ब्रूयाद्दीक्षितो नानृतं वदेत् ।
सङ्ग्रामे न निवर्तेत तं देवाः क्षत्रियं विदुः ॥
दाता यज्वा च शूरश्च देवद्विजपरायणः ।
समः सर्वेषु भूतेषु चिरं पालयते महीम् ॥
[5]अभेद्यमच्छेद्यमनादिमक्षयं
निधिं पुराणं परिपालयन्ति ये ।
महीपतिस्तानभिपूज्य वै द्विजान्
भवेदजेयो दिवि देवराडिव ॥

* शेषं मेधागतं ममुगतं च ।

(१) राक. १५४ ; राप्र. १३४.

(२) राक. १५३ ; राप्र. १३५.

(३) राक. १५३ ; राप्र. १३५.

(४) राक. १५३ ; राप्र. १३६.

(५) राक. १७२ ; राप्र. १४२.

पुराणं निधिं वेदरूपम् । राप्र. १४२

शक्यं हि कवचं भेत्तुं नाराचेन शरेण वा ।
अपि वज्रसहस्रेण ब्राह्मणाशीः सुदुर्भिदा ॥
[1]पूर्वरात्रान्तरात्रेषु द्विजा यस्य ह्यधीयते ।
स राजा सह राष्ट्रेण वर्धते ब्रह्मतेजसा ॥
[2]राजा यत्कुरुते पापं प्रमादात्सहते न वा ।
वसन्तो ब्राह्मणा राष्ट्रे जप्येन शमयन्ति तत् ॥
[3]ब्राह्मणान् पूजयेन्नित्यं प्रातरुत्थाय भूमिपः ।
ब्राह्मणानां प्रसादेन वसन्ति दिवि देवताः ॥
[4]यदनुव्याहरन्त्येते शुभं वा यदि वाऽशुभम् ।
तत्तथा नान्यथा कुर्याद्ब्राह्मणो ह्यत्र कारणम् ॥
[5]राजा वृक्षो ब्राह्मणास्तस्य मूलं
पौराः पर्णं मन्त्रिणस्तस्य शाखाः ।
तस्माद्राज्ञा ब्राह्मणा रक्षणीया
मूले गुप्ते नास्ति वृक्षस्य नाशः ॥
[6]आसन्नो हि दहत्यग्निर्दूराद्दहति ब्राह्मणः ।
प्ररोहत्यग्निना दग्धं ब्रह्मदग्धं न रोहति ॥
[7]ब्राह्मणानां च शापेन सर्वभक्षो हुताशनः ।
समुद्रश्चाप्यपेयश्च विफलस्तु पुरंदरः ॥

विफलः वृषणरहितः । * राक. १७३

[8]चन्द्रमा राजयक्ष्मी च पृथिव्यामूषराणि च ।
वनस्पतीनां निर्यासो दानवानां पराजयः ॥

* राप्र. राकवत् ।

(१) राक. १७२ ; राप्र. १४३.

(२) राक. १७२ ; राप्र. १४३ त्सहते न वा ( त्सह तेन च ).

(३) राक. १७२ भूमिपः ( भूपतिः ) ; राप्र. १४३.

(४) राक. १७२ ; राप्र. १४३ यदनुव्या ( यदरुच्या ) ब्राह्मणो ( ब्राह्मणा ).

(५) राक. १७३ ब्राह्मणा ( ब्राह्मण ) ; राप्र. १४३.

(६) राक. १७३ ; राप्र. १४३ आसन्नो ( आसन्न ).

(७) राक. १७३ ; राप्र. १४३.

(८) राक. १७ यक्ष्मी ( यक्ष्मा ) ; राप्र. १४३.

अनन्तान्येव तेजांसि ब्राह्मणानां महात्मनाम् ।
तस्माद्विप्रेषु नृपतिः प्रणमेन्नियमेन च ॥
[1]एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च ।
यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽक्षयः ॥

## व्याघ्रः

राज्ञा रक्ष्याश्चातुर्वर्ण्यादयः

[2]ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रानन्तरजांस्तथा ।
देवताप्रतिमाश्चापि रक्षेद् भूपः प्रयत्नतः ॥

## अत्रिः

वर्णधर्मतः प्रजापालनविधिः

[3]ये व्यपेताः स्वधर्मेभ्यः परधर्मे व्यवस्थिताः ।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते ॥
आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते ।
परधर्मो भवेत्त्याज्यः सुरूपपरदारवत् ॥
वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः ।
ततो राष्ट्रस्य हन्ताऽसौ यथा वह्नेश्च वै जलम् ॥
[4]अव्रताश्चानधीयाना यत्र भैक्षचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदं बुधैः ॥
विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु भुञ्जते ।
तेऽप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् ॥
ब्राह्मणान् वेदविदुषः सर्वशास्त्रविशारदान् ।
तत्र वर्षति पर्जन्यो यत्रैतान्पूजयेन्नृपः ॥
[5]य एवं कुरुते राजा गुणदोषपरीक्षणम् ।
यशः स्वर्गं नृपत्वं च पुनः कोशं समृद्धयेत् ॥
दुष्टस्य दण्डः सुजनस्य पूजा
न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातोऽर्थिषु राष्ट्ररक्षा
पञ्चैव यज्ञाः कथिता नृपाणाम् ॥

(१) पमा. ३९९.
(२) मभा. ११।९.
(३) अत्रिसं. १७–१९.
(४) अत्रिसं. २२–२४.
(५) अत्रिसं. २७–२९.

यत्प्रजापालने पुण्यं प्राप्नुवन्तीह पार्थिवाः ।
न तु क्रतुसहस्रेण प्राप्नुवन्ति द्विजोत्तमाः ॥

## पराशरः

धर्मेण प्रजापालनं शस्त्रधारणं पृथ्वीजयश्च राज्ञः कर्तव्यानि

[1]अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥

अभिषिक्तस्य क्षत्रियस्य साधारणधर्मानाह– अव्रता इति । द्विविधो हि राजधर्मः– दुष्टशिक्षा शिष्टपरिपालनं च । तत्राऽऽद्येन श्लोकेन दुष्टशिक्षा प्रतिपाद्यते । व्रतशब्देनात्र ब्रह्मचारिकर्तृकं मध्वादिवर्जनमभिप्रेतम् । तथा च याज्ञवल्क्यः– 'व्रतमपीडयन्' (यास्मृ. १।३२) इत्युक्त्वा विवक्षितं तद्व्रतं स्पष्टीचकार– 'मधुमांसाञ्जनोच्छिष्टशुक्लस्त्रीप्राणिहिंसनम् । भास्करालोकनाश्लीलपरिवादांश्च वर्जयेत् ॥' (यास्मृ. १।३३) इति । यद्वा, स्वगृह्यप्रसिद्धानि प्राजापत्यादीनि चत्वारि अत्र व्रतशब्दाभिधेयानि । तदुभयव्रतरहिताः स्वाध्यायमप्यनधीयानाः ब्रह्मचारिणो यत्र ग्रामे भैक्ष्यमाचरन्ति तं ग्रामं दण्डयेत् । यतः स ग्रामश्चौरसदृशेभ्यो भक्तं अन्नं प्रयच्छति । अनेन वचनेन विहितमननुतिष्ठतां प्रतिषिद्धमनुतिष्ठतां सर्वेषां राज्ञा दण्डनीयत्वमुपलक्ष्यते । पमा.

[2]क्षत्रियो हि प्रजा रक्षञ्शस्त्रपाणिः प्रदण्डवान् ।
निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥

'क्षत्रियो हि' इत्यनेन द्वितीयश्लोकेन शिष्टपालनरूपो धर्मो विधीयते । राजधर्मेषु प्रजारक्षणस्य प्राधान्येन विवक्षितत्वात् प्रथमं प्रजारक्षणमित्युक्तम् । अत एव याज्ञवल्क्यः– 'प्रधानः क्षत्रिये धर्मः प्रजानां परिपालनम्' (यास्मृ १।३७) इति । मनुरपि तदेवादौ प्रदर्शयति– 'प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च । विषयेष्वप्रसक्तिश्च क्षत्रियस्य समादिशत् ॥' (मस्मृ. १।८९) इति । शान्तिपर्वण्यपि– 'नृपाणां परमो धर्मः प्रजानां परिपालनम् । निर्दिष्टफलभोक्ता हि राजा

(१) पस्मृ. १।६६ भैक्ष्य (भैक्ष); पमा. ३८९.
(२) पस्मृ. १।६७; पमा. ३८९.

धर्मेण युज्यते ॥ वर्णानामाश्रमाणां च राजा भवति पालकः । स्वे स्वे धर्मे नियुञ्जानः प्रजाः स्वाः पालयेत्सदा ॥ पालनेनैव भूतानां कृतकृत्यो महीपतिः । सम्यक् पालयिता भागं धर्मस्याऽऽप्नोति पुष्कलम् ॥ यजते यदधीते च यद्ददाति यदर्चति । राजा षड्भागभाक् तस्य प्रजा धर्मेण पालयन् ॥ सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयेत् । उत्थानेन प्रसादेन पूजयेच्चापि धार्मिकान् ॥ राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते । यद्यदाचरते राजा तत् प्रजानां च रोचते ॥' इति । मार्कण्डेयपुराणे – 'वत्स राज्याभिषिक्तेन प्रजारञ्जनमादितः । कर्तव्यमविरोधेन स्वधर्मस्य महीभृता ॥ पालनेनैव भूतानां कृतकृत्यो महीपतिः । सम्यक् पालयिता भागं धर्मेष्वाप्नोति पुष्कलम् ॥' (मार्क. २४।५,३३) इति । ब्रह्माण्डपुराणे– 'यदह्ना कुरुते धर्मं प्रजा धर्मेण पालयन् । दश वर्षसहस्राणि तस्य भुङ्क्ते महत् फलम् ॥' इति । मनुरपि– 'सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः । अधर्मादपि षड्भागो भवत्येव ह्यरक्षतः ॥ रक्षन् धर्मेण भूतानि राजा वध्यांश्च घातयन् । यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥ योऽरक्षन् बलिमादत्ते करं शुल्कं च पार्थिवः । प्रीतिं भोगं च दण्डं च स सद्यो नरकं व्रजेत् ॥' (मस्मृ. ८।३०४,३०६–३०७) । रक्षणीयाश्च प्रजा भयमापन्नाः । भयं च तासां द्वेधा संपद्यते– चोरव्याघ्रादिभ्यः परसैन्येभ्यो वा । अतस्तदुभयनिवारणाय 'प्रदण्डवान्' इति, 'परसैन्यानि निर्जित्य' इति चोक्तम् । एतच्च निवारणं क्षत्रियस्यैव कुतोऽसाधारणमित्याशङ्क्य तद्धेतुत्वेन शस्त्रपाणित्वं वर्णितम् । तच्च क्षत्रियस्यैव । तथा च मनुः– 'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः । आजीवनार्थं धर्मस्तु दानमध्ययनं जगुः ॥' ( मस्मृ. १०।७९ ) इति । आनुशासनिकेऽपि क्षत्रियं प्रकृत्य पठ्यते– 'उत्साहः शस्त्रपाणित्वं तस्य धर्मः सनातनः' । शस्त्रपाणित्वेन च युद्धोपकरणानि सर्वाण्युपलक्ष्यन्ते । तानि च शान्तिपर्वणि दर्शितानि– 'यष्ट्यस्तोमराः खडगा निशिताश्च परश्वधाः । फलकान्यथ वर्माणि परिकल्प्यान्यनेकशः ॥' (भामु. १२।१००।९) । 'प्रदण्डवान्' इत्यनेन चौरादिशिक्षा विवक्षिता । यद्यप्येषा पूर्ववचन एवोक्ता, तथापि तत्र प्राधान्येन प्रतिपादिता, अत्र तु प्रजारक्षणसाधनत्वेनेति न पौनरुक्त्यम् । दण्डप्रकारमाह मनुः– 'अनुबन्धं परीक्ष्याथ देशकालौ च तत्त्वतः । सापराधमथाऽऽलोच्य दण्डं दण्ड्येषु पातयेत् ॥' (मस्मृ. ८।१२६ ) । विष्णुः– 'आगःस्वपि तथाऽन्येषु ज्ञात्वा जातिं धनं वयः । दण्डं तु प्रणयेद्राजा सामन्तब्राह्मणैः सह ॥' ( विस्मृ. ५।१९४ ) । बृहस्पतिरपि– 'वाग्धिग्वधः स्वकं चैव चतुर्धा कल्पितो दमः । पुरुषे दोषविभवं ज्ञात्वा संपरिकल्पयेत् ॥ गुरून् पुरोहितान् विप्रान् वाग्दण्डेनैव दण्डयेत् । विवादिनो नरांश्चान्यान् दोषिणोऽर्थेन दण्डयेत् ॥ महापराधयुक्तांश्च वधदण्डेन दण्डयेत् ॥' तथा कात्यायनः– 'मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनाम् । यथोक्तं तस्य तत्कुर्युरनुक्तं साधुकल्पितम् ॥ अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः । निरोधनेन बन्धेन विविधेन वधेन च ॥' इति । मनुः– 'दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् । त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥ उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासे च कर्णौ च धनं देहस्तथैव च ॥' ( मस्मृ. ८।१२४–१२५ ) 'मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ॥' ( मस्मृ. ८।३७९ ), 'पुरुषाणां कुलीनानां नारीणां च विशेषतः । ( मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥ )' (मस्मृ. ८।३२३) इति । बृहस्पतिरपि– 'जगत् सर्वमिदं हन्याद्ब्राह्मणस्य न तत् समम् । तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥ अवध्यान् ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् । यद्यद्द्विप्रेषु कुशलं तत्तद्राजा समाचरेत् ॥ राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम् ॥' इति । यमोऽपि– 'एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च । यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽक्षयः ॥' इति । परसैन्यनिर्जयस्तु शान्तिपर्वणि दर्शितः– 'चैत्रे वा मार्गशीर्षे वा... ॥' इति । उक्तप्रकारेण परसैन्यानि निर्जित्य जितामेतां पूर्वां च स्वकीयां भुवं राजधर्मेण पालयेत् ।

पमा. ३९५–४०३

[1]न श्रीः कुलक्रमायाता भूषणोल्लिखिताऽपि वा ।
खड्गेनाऽऽक्रम्य भुञ्जीत वीर-
भोग्यां वसुंधराम् ॥

[2]पुष्पमात्रं विचिनुयान्मूलोच्छेदं न कारयेत् ।
मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः ॥

तदेव धर्मेण पालनं 'पुष्पमात्रम्' इति तृतीयश्लोकेन विशदीक्रियते । यथा मालाकार आरामे यदा यदा यत् यत् पुष्पं विकसति तदा तदा तद्विचिनोति, न तु पुष्पलतामुन्मूलयति, तथा प्रजाभ्यः करमाददानो राजा यथोदयं षष्ठं भागं गृह्णीयात् । अङ्गारकारकस्तु वृक्षमुन्मूल्य सर्वात्मना दहति, न तु तथा प्रजाः पीडयेत् । एतच्च करादानं मालाकारदृष्टान्तेन प्रतिपादितमितरेषामपि सर्वेषां राजधर्माणामुपलक्षणम् । पमा. ४०३–४०५

## बृहत्पराशरः

**पराशरोक्ता राजनीतिः— प्रजारक्षणदानारिनिग्रहाः राजधर्माः**

[3]प्रजानां रक्षणं दानमरीणां निग्रहस्तथा ।
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम् ॥

[4]प्रजानां पालनं दानं शस्त्रभृत्त्वं प्रचण्डता ।
निर्जयः परसैन्यानामेष धर्मः स्मृतो नृपे ॥
पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार इवाऽऽरामे प्रजासु स्यात्तथा नृपः ॥

**स्वकर्मस्थजनाः पुत्रसदृशाः, अधर्मकारिणो दण्ड्याः, तत्तत्कार्यसमर्थानां तत्तत्कार्येषु नियोजनम्, साधवः संमान्या असाधवो दण्ड्याः**

[5]अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया ।
पराशराच्छ्रुतं विप्रा वक्ष्यमाणं निबोधत ॥

(१) पस्मृ. १।६८.
(२) पस्मृ. १।६९ पुष्पमात्रं ( पुष्पं पुष्पं ) ; पमा. ३९०.
(३) बृपसं. ४।२१८.
(४) बृपसं. ४।२२३–२२४.
(५) बृपसं. १२।१ ; राप्र. १४ पू.

[1]स्वकर्मस्थान् नृपो लोकान् पिता पुत्रानिवौरसान् ।
शिक्षयेद्धर्मविद्दण्डैरधर्मकारिणो जनान् ॥
नरान् दण्डधृतः कुर्याद्धर्मज्ञानार्थसाधकान् ।
समर्थानश्वपत्यादीञ्शूरान् स्वामिहितोद्यतान् ॥
शुचीन्प्राज्ञान्स्वधर्मज्ञान्विप्रान्मुद्राकरान् हितान् ।
लेखकानपि कायस्थांल्लेख्यकृत्यविचक्षणान् ॥
अमात्यान् मन्त्रिणो दूतान् यथोदितपुरोहितान् ।
प्राड्विवाकान्ममस्तान्वा हितांश्च रक्षकानपि ॥
शूरानथ शुचीन् प्राज्ञान् परविश्वासकारिणः ।
सर्वस्थानेषु चाध्यक्षान् सत्कृत्य वेदिनो परे ॥
महायत्नः कुमाराणामन्तःपुरस्य रक्षणे ।
वृद्धान् कञ्चुकिनो विप्राञ्शुचीनाढ्यांश्च
वीरकान् ॥
यथोदितानि दुर्गाणि कुर्यात्तेष्वपि रक्षणम् ।
उद्वाहमुदितं स्त्रीणां यौनसंबन्धकारणात् ॥

[2]वर्जनं विषयासक्तेर्भूमिदानं सशासनम् ।
प्राणिवर्जितदेशे च नीतिज्ञो मन्त्रकृद्भवेत् ॥
नित्यमुत्साहयुक्तश्च विजिगीषुरुदायुधः ।
सदाऽलंकारयुक्तश्च सदैव प्रियभाषकः ॥

[3]सदा प्रजाहिते युक्तः पूज्यो नाकेऽप्यसौ नृपः ।
सदा साधुषु संमानं विपरीतेषु घातनम् ॥

[4]दण्डं दण्ड्येषु कुर्वाणो राजा यज्ञफलं लभेत् ।
वृद्धान् साधून् द्विजान् मौलान् यो न
संमानयेन्नृपः ॥

[5]पीडां करोति चामीषां राजा शीघ्रं क्षयं व्रजेत् ।
यस्तु संमानयेदेतान् देवान् विप्रांश्च पूजयेत् ॥
पराजयेत्सोऽप्यरींस्तान् दीर्घायुरपि जायते ।
पीड्यमानां प्रजां रक्षेत्कायस्थैश्चोरतस्करैः ॥

(१) बृपसं. १२।८–१४.
(२) बृपसं. १२।१९–२०.
(३) बृपसं. १२।२१.
(४) बृपसं. १२।२२.
(५) बृपसं. १२।२३–२४.

[1]यस्त्यक्तमार्गाणि कुलानि राजा
श्रेणीश्च जातीश्च गणांश्च लोकान् ।
आनीय मार्गे विदधाति धर्म्ये
नाकेऽपि गीर्वाणगणैः प्रशस्यते ॥
यः स्वधर्मे स्थितो राजा प्रजा धर्मेण पालयेत् ।
सर्वकामसमृद्धात्मा विष्णुलोकमवाप्नुयात् ॥

## मार्कण्डेयस्मृतिः

दुष्टनिग्रहः शिष्टपालनं च राज्ञः कर्तव्यम्

[2]राज्ञो ह्ययं सदा धर्मः प्रजानां परिपालनम् ।
तच्चैवं हि प्रकथितं दुष्टनिग्रहपूर्वकम् ।
शिष्टानां पालनं सद्भिर्धर्मज्ञैर्ब्रह्मवादिभिः ॥

शिष्टपदार्थः

शिष्टाः सर्वेऽपि कथिता ब्राह्मणा एव मुख्यतः ।
शिष्टशब्दो ब्राह्मणेषु मुख्यत्वेनैव नान्यतः ॥

## आश्वलायनः

सर्वे धर्मा राजधर्माधीनाः, राजक्षत्रियसार्वभौमपदानां निरुक्तयः

[3]अथातो वक्ष्यते मुख्यो राजधर्मः सनातनः ।
समासेनैव लोकाय येनेह सुखमेधते ॥
यथा महापदेऽन्यानि पदजातानि कौञ्जरे ।
राजधर्मे प्रलीयन्ते सर्वधर्माणि वै तथा ॥
यत्राधर्मरुचिर्भूपो न तत्र सुखमृच्छति ।
लोकोऽयं निखिलं शश्वद्राष्ट्रं तस्य प्रणश्यति ॥
यत्र धर्मरुचिः शश्वद्राजा तत्राखिलो जनः ।
सुखं विन्दति राष्ट्रं च श्रीश्च तत्राधितिष्ठति ॥
तस्माद्धर्मपरो राजा पालयेद्गामिमां यतः ।
धर्मेण रञ्जनाद्राजा क्षतत्राणाच्च क्षत्रियः ॥
सर्वभूमेः पतित्वाच्च सार्वभौमः स भूपतिः ॥

राज्ञा राष्ट्रजनपदग्रामपुरान्तःपुरस्थादीनि रक्षणीयानि

[4]स्वराष्ट्रं सर्वदा रक्षेद्राष्ट्राज्जनपदान्नृपः ॥

(१) बृपसं. १२।८६–८७.
(२) मास्मृ. पृ. २१३.
(३) आश्वस्मृ. ८।१–६.
(४) आश्वस्मृ. ८।३७–३९.

तस्मादतीव ग्रामांश्च ग्रामादप्यात्मनः पुरम् ।
पुरादन्तःपुरं यत्नाद्रक्षेत्तस्मात्स्वयोषितः ॥
षण्डान् वृद्धानशेषांश्च (?) कुर्यात्स्त्रीणां तु रक्षणे ॥

दण्डप्रणयनविधिः

[1]युक्तदण्डो भवेद्राजा शास्त्रदृष्टिः सुसंयतः ॥
नादण्ड्यान् दण्डयेद्दण्ड्यान् दण्डयेद्दोषयुक्ततः ।
दण्डो भूतेषु जागर्ति दण्डो भूतानि रक्षति ॥
दण्डेन प्राप्यते लोको दण्डो धारयति प्रजाः ।
रक्ताक्षः पिङ्गलो भीमः त्रिशीषा यद्द्विजः प्रभुः ॥
दण्डश्चरति दोषाणां मूर्ध्नि राज्ञा प्रयोजितः ।
राजदण्डभयादेव मर्यादां न त्यजन्ति च ॥
अन्यायेन तु येनेह राज्ञा दण्डः प्रयोजितः ।
तस्मिन्नेव पतत्यद्धा सान्वयं च न शिष्यति ॥
न्यायेन योजितो दण्डो राजानं परिरक्षति ।
पापादपि भयाच्चैव सर्वोपद्रवयश्च सर्वदा ॥
तस्मात्सुनिर्दयो राजा पुत्रादिष्वपराधिषु ।
पातयेदपि तज्ज्ञात्वा न्यायेनानुरूपतः ॥
पूजयेदेव नृपतिः शत्रूनप्यपराधिनः ।
मार्गेषु स्थापयेन्नित्यं प्रजाः कामविवर्जिताः ॥
न्यायाद्दण्डस्य राज्ञस्तु राष्ट्रमायुः प्रजा यशः ।
श्रीश्च कोशश्च पुत्राश्च क्षिप्रं वृद्धिं गमिष्यति ॥
तस्मान्नृपोऽरिमित्रेषु समः स्यात्सततं यतः ।
पितेव पालयेत्पुत्रान् प्रजा राष्ट्रं च सर्वदा ॥

ब्राह्मणरक्षणविधिः देवतास्थानरक्षणविधिश्च

[2]पालयेद्ब्राह्मणान्नित्यं नावमन्येत कर्हिचित् ।
साधून् विशेषतोऽसाधून् विप्रान् राष्ट्रा त्प्रवासयेत् ॥
असाधुभ्यः समादाय दद्यात्साधुभ्य एव सः ।
वसून् वसुमतीभर्ता तत्र दोषो न विद्यते ॥

(१) आश्वस्मृ. ८।५५–६४.
(२) आश्वस्मृ. ८।६९–९७.

ब्रह्मक्षत्रं पुरा सृष्टं कुलमेकं द्विधा कृतम् ।
क्षत्रेण पालितं ब्रह्म ब्रह्मणा क्षत्रमेव च ॥
वर्धेते तावुभौ नित्यं विनश्येते ततोऽन्यथा ।
तस्माद्ब्रह्मानुगं क्षत्रं वर्धत्येव सितेन्दुवत् ॥
ब्रह्मणोऽननुगं क्षत्रं सीदत्यप्स्वश्मनौरिव ।
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ॥
स्वासु योनिषु शाम्यन्ति यद्येते विततास्त्रयः ।
तस्माद्विप्रान् वेदविदः साधून्नित्यं प्रपालयेत् ॥
दत्त्वाऽपि च स्वकोशात् स्वान् ( ? स्वं ) राजा-
ऽसाधूंश्च दण्डयेत् ।
दुष्टानां शासनाद्राजा शिष्टानां परिपालनात् ॥
महतीं श्रियमाप्नोति स्वर्गं चातुलमृच्छति ।
ब्राह्मणान्नावमन्येत कृशानपि कदाचन ॥
बालान् वा दुर्बलान् वृद्धान् भस्मच्छन्ना-
निवानलान् ।
न क्रोधं जनयेत्तेषां धनं तेषां च पालयेत् ॥
ते क्रुद्धा निर्दहिष्यन्ति तत्क्षणात्पृथिवीपतिम् ।
वाग्यज्ञा ब्राह्मणाः क्रुद्धा राज्ञा येनापचारिताः ॥
समूल सान्वयं तं ते निर्दहिष्यन्ति वह्निवत् ।
पूजितास्ते सुखाय स्युर्दानमानैर्द्विजोत्तमाः ॥
रक्षिष्यन्ति च राजानं ध्यानादपि महाभयात् ।
न ब्राह्मणसमो देवो न भूतो न भविष्यति ॥
देवानामपि देवास्ते ये सदा तपसि स्थिताः ।
नाकृत्यं ब्राह्मणस्यास्ति तपोनिष्ठस्य नित्यदा ॥
अकृत्यकारिणं राजा दण्डयेन्नापि तं द्विजम् ।
यैः पीतः सागरः पूर्वं विन्ध्यो यैश्च समीकृतः ॥
वातापिर्भक्षितो यैश्च तैः समः कोऽपरो नरः ।
शूद्रस्त्रीषु च ये जाता ब्राह्मणा एव ब्राह्मणाः ॥
पक्षिवृक्षक्ष्माद्रोणमृगादिषु च ते द्विजाः ।
येषामास्येन चाशान्तितृप्त्या ( ? चाशान्तास्तृप्ताः )
पितृसुरादयः ॥
विप्राणां वेदविदुषां किं भूतमधिकं ततः ।
तेषां बहूनां यद्द्रव्यं गौर्हिरण्यं मही च वा ॥

ब्रह्मस्वमिति निर्दिष्टं द्वयोर्वैकस्य कल्पितम् ।
तद्रक्षेत प्रयत्नेन तच्छेषादपहारिणः ॥
अन्याद्वा सुपरीक्ष्यैव ग्रामदेशाधिपान्नृपः ।
ब्राह्मणस्य तु यद्द्रव्यं देवस्वमिति कीर्तितम् ॥
तद्धि देवाः समश्नन्ति नित्यदा पाङ्क्त्यर्थिके ।
यद्युपेक्षेत नृपतिर्मूढान् ब्रह्मस्वहारिणः ॥
दोषेण युज्यते तेषां राजा राष्ट्रं च नश्यति ।
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥
एकमाशीविषो हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ।
यत्नेन रक्षते तस्माद्ब्रह्मस्वं वृत्तिमेव च ॥
देवस्वं ब्राह्मणांश्चैवं भूतिमिच्छन् स्त्रियश्च गाः ।
जीर्णानुद्धारयेत्स्थानान् देवतानां नृपोत्तमः ॥
परीक्ष्य तेषां वृत्तिं च कारयेच्च तदुत्सवान् ।
तन्नाथान् दण्डयेत्सम्यक् तद्वृत्तिमपहारिणः ॥
तत्कल्पितस्य विप्राणां चाऽऽददीत धनान्न वै ।
करं च नाऽऽहरेद्राजा दैवतब्रह्मणोर्धनात् ॥
धर्मार्थे कल्पिताच्चापि सीदन्नपि कदाचन ।
क्षीणाकारस्तु याचित्वा विप्रान् सान्त्वेन
वाऽऽपदि ॥
परचक्रादिपीडासु रक्षेद्राष्ट्रं जनेश्वरः ।
सीदमाने नृपे विप्रैर्दातव्यं वसुमत्तरैः ॥
परचक्रादिपीडासु यदि राज्ञाऽप्ययाचितैः ।
पुरोहितानुगो नित्यं चारचक्षुर्द्विजप्रियः ॥
यो रक्षति महीं राजा सोऽत्यन्तं श्रियमृच्छति ॥

प्रजारक्षणं आत्मरक्षणं शरणागतरक्षणं च, प्रजारक्षणे
धर्मांशः अरक्षणे पापांशः राजगामी

'यथा राष्ट्रप्रजाः सर्वाः सर्वबाधाविवर्जिताः ॥
तथा रक्षेन्महीं राजा सर्वज्ञः प्रियदर्शनः ।
गूहेद्राजाऽऽत्मनश्छिद्रं कूर्मोऽङ्गानीव सर्वशः ॥
व्रणे मशकवन्नित्यं छिद्रेषु परमन्वियात् ।
यस्य कृत्यं न जानन्ति कृतं जानन्ति तत्त्वतः ॥
परे स राजा निखिलां महीमाप्नोत्ययत्नतः ।
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ॥

(१) आश्वस्मृ. ८।९८-१०३.

विश्वासाद्भयमुत्पन्नमपि मूलं निकृन्तति।
कृतं विश्वासितं चार्य आत्मनः शरणागतम् ॥
रक्षेदेवाऽऽत्मवन्नित्यं तं कदाचिन्न विश्वसेत् ॥
[2]वणिग्वृत्तीन् सार्थवाहान् जलयानपसं (? परान्) नृपः ॥

विदेश्यांश्च स्वदेश्यांश्च पालयेत्सुप्रयत्नतः।
रक्षां राजा परीक्षां च रात्रौ कुर्याद्विशेषतः ॥
पुरस्य व्यवहारस्य सैन्यस्य शिबिरस्य च।
वार्षिकान् हैतुकान्नित्यानुत्सवान् तत्र तत्र तु ॥
कारयेन्नृपतिः सम्यक् कुर्यात्काले च वृद्धये।
यजेत च यथान्यायं काले यज्ञैर्द्विजादृतः ॥
दद्याच्च दक्षिणां पूर्णां दाननित्यश्च वै भवेत्।
यज्ञदानरुचिर्नित्यं प्रजारक्षणतत्परः ॥
सत्यसंधश्च शूरश्च भवेद्गोब्राह्मणप्रियः।
देवतातिथिभृत्यानां सदा संरक्षणे रतः ॥
स्थापयेद्वर्णधर्मांश्च यथावच्चाऽऽश्रमस्य च।
स्वे स्वे धर्मे प्रजाः सर्वाः विनियुज्य विमत्सरः ॥
रक्षयित्वा समाप्नोति तद्धर्मांशतुरीयकम्।
अरक्षित्वा तु नृपतिः पादं चाऽऽप्नोति चैनसः ॥
प्रजाकृतस्य प्राज्ञोऽपि सर्वधर्मकरोऽनिशम्।
आपदो निस्तरेद्राजा देवविप्रप्रसादतः ॥
तापत्रयांश्च यत्नेन स्वयं च प्रयतः सदा।
जपैर्हुतैस्तर्पणैश्च ध्यानैर्दानैश्च सामतः ॥
सर्वापदो विजयति तापांश्च त्रिविधानपि।
ग्रहशान्त्याऽखिलान् राजा जयेदेव प्रयत्नतः ॥
राजा चिरं विजित्यारीन् तृप्तात्मा श्रियमश्नुते।
राष्ट्रं च वृद्धिमाप्नोति प्रजाश्च निरुपद्रवाः ॥
एवं राजा प्रजापालो नानोपायैर्विचक्षणः।
अष्टाङ्गसंयुतो रक्षेत्प्रियप्रकृतिरात्मवान् ॥

राज्ञो नित्यकृत्यानि, सर्वधर्माणां स्थापकत्वं राज्ञः

यज्ञो दानं तपो रक्षा राज्ञां च ब्रह्मणोऽर्चना।
एतानि नित्यकृत्यानि जपहोमादयोऽपि च ॥
राजा धर्मसमासीनो न प्रमाद्येच्च जातुचित्।
सर्ववित्सर्वधर्माणां स्थापको मोहवर्जितः ॥
प्रतिलोमानुलोमांश्च जानीयान्नृपनन्दनः।
तद्धर्मांश्चान्त्यधर्मांश्च स्थापयेत्प्रयतः सदा ॥
दायाद्यस्य विभागांश्च स्थापयेद्वैतनादपि।
स्नेहं स्वेषु विसृज्येह रक्षेद्द्वेषं परेषु च ॥
एवं यो वर्तयेद्राजा प्रेत्याऽऽनन्त्याय कल्पते।
स्वर्गे सुस्थाय चेहापि महते स महीपतिः ॥

## ब्रह्माण्डपुराणम्

राज्ञः श्रेष्ठो धर्मः प्रजापालनं धर्मतः

[1]अथाऽऽतिथ्योपविश्रान्तं प्रणम्याऽऽसीनमग्रतः।
राजानमब्रवीदौर्वः शनैर्मृद्वक्षरं वचः ॥
कुशलं ननु ते राज्ये बाह्येष्वाभ्यन्तरेषु च।
अपि धर्मेण सकलाः प्रजास्त्वं परिरक्षसि ॥
अपि जेतुं त्रिवर्गं त्वमुपायैः सम्यगीहसे।
फलन्ति हि गुणास्तुभ्यं त्वया सम्यक्प्रचोदिताः ॥

दिष्ट्या त्वया जिताः सर्वे रिपवो नृपसत्तम।
दिष्ट्या च सकलं राज्यं त्वया धर्मेण रक्ष्यते ॥
धर्म एव स्थितिर्येषां तेषां नास्त्यत्र विप्लवः।
न तं रक्षति किं धर्मः स्वयं येनाभिरक्षितः ॥
पूर्वमेवाहमश्रौषं विजित्य सकलां महीम्।
सबलो नगरीं प्राप्तः कृतदारो भवानिति ॥
राज्ञां तु प्रवरो धर्मो यत्प्रजापरिपालनम्।
भवन्ति सुखिनो नूनं तेनैवेह परत्र च ॥
स भवान् राज्यभरणं परित्यज्य मदन्तिकम्।
भार्याभ्यां सहितो राजन्समायातोऽसि मे वद ॥
[2]यदह्ना कुरुते धर्मं प्रजा धर्मेण पालयन्।
दशवर्षसहस्राणि तस्य भुङ्क्ते महत्फलम् ॥

(१) आश्वस्मृ. ८।१५४–१६४.
(२) आश्वस्मृ. ८।२३२–२३८.

(१) ब्रह्माण्ड. ३।५०।५०–५७.
(२) पमा. ३९७.

## मार्कण्डेयपुराणम्

### शुल्कग्रहणं रक्षणार्थम्

[1]कस्यचित्त्वथ कालस्य कार्तवीर्योऽर्जुनो बली ।
कृतवीर्ये दिवं याते मन्त्रिभिः सपुरोहितैः ॥
पौरैश्चाऽऽत्माभिषेकार्थं समाहूतोऽब्रवीदिदम् ।
नाहं राज्यं करिष्यामि मन्त्रिणो नरकोत्तरम् ॥
यदर्थं गृह्यते शुल्कं तदनिष्पादयन् वृथा ।
पण्यानां द्वादशं भागं भूपालाय वणिग्जनः ॥
दत्त्वाऽऽत्मरक्षिभिर्मार्गे रक्षितो याति दस्युतः ।
गोपाश्च घृततक्रादेः षड्भागं च कृषीवलाः ॥
दत्त्वाऽन्यद् भूभुजे दद्युर्यदि भागं ततोऽधिकम् ।
पण्यादीनामशेषाणां वणिजो गृह्णतस्ततः ॥
अग्निहोत्रं तपः सत्यं वेदानां चैव साधनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥
वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमर्थिभ्यः पूर्तमित्यभिधीयते ॥
इष्टापूर्तविनाशाय तद्राज्ञश्चौरकर्मिणः ।
यदन्यैः पाल्यते लोकस्तद् वृत्त्यन्तरसंश्रितः ॥
गृह्णतो बलिषड्भागं नृपतेर्नरको ध्रुवम् ।
निरूपितमिदं राज्ञः पूर्वं रक्षणवेतनम् ॥
अरक्षंश्चोरतश्चोरस्तदेनो नृपतेर्भवेत् ॥

मदालसोक्ता राजनीतिः— पृथ्वीजयः साधुरक्षणं दुष्टहननं गोविप्रार्थे देहत्यागः इत्यादीनि राजकर्तव्यानि

[2]तस्मात्त्वङ्गि मे पुत्र यत्कार्यं क्षत्रयोनिभिः ।
ऐहिकामुष्मिकायालं तत्कर्म प्रतिपादय ॥
तेनैवमुक्ता सा साध्वी वरनारी मदालसा ।
अलर्कं नाम तनयं प्रोवाचोल्लापवादिनी ॥
पुत्र वर्धस्व मे भर्तुर्मनो नन्दय कर्मभिः ।
ऐहिकामुष्मिकफलं तत्सम्यक् परिपालय ।
मित्राणामुपकाराय दुर्हृदां नाशनाय च ॥

धन्योऽसि रे यो वसुधामशत्रु-
रेकश्चिरं पालयिताऽसि पुत्र ।
तत्पालनादिन्द्रसमोपभोग्यं
धर्मं फलं प्राप्स्यसि चामरत्वम् ॥

धरामरान् पर्वसु तर्पयेथाः
समीहितं बन्धुषु पूरयेथाः ।
हितं परस्मै हृदि चिन्तयेथा
मनः परस्त्रीषु निवर्तयेथाः ॥

सदा मुरारिं हृदि चिन्तयेथा-
स्तद्ध्यानतोऽन्तःषडरीन् जयेथाः ।
मायां प्रबोधेन निवारयेथा
ह्यनित्यतामेव विचिन्तयेथाः ॥

अर्थागमाय क्षितिपान् जयेथा
यशोर्जनायार्थमपि व्ययेथाः ।
परापवादश्रवणाद्बिभीथा
विपत्समुद्राज्जनमुद्धरेथाः ॥

यज्ञैरनेकैर्विबुधानजस्र-
मन्नैर्द्विजान् प्रीणय संश्रितांश्च ।
स्त्रियश्च कामैरतुलैश्चिराय
युद्धैश्चारींस्तोषयिताऽसि वीर ॥

बालो मनो नन्दय बान्धवानां
गुरोस्तथाऽऽज्ञाकरणैः कुमारः ।
स्त्रीणां युवा सत्कुलभूषणानां
वृद्धो वने वत्स वनेचराणाम् ॥

राज्यं कुर्वन् सुहृदो नन्दयेथाः
साधून् रक्षँस्तात यज्ञैर्यजेथाः ।
दुष्टान्निघ्नन् वैरिणश्चाऽऽजिमध्ये
गोविप्रार्थे वत्स मृत्युं भजेथाः ॥

---

(१) मार्क. १९।१८–२७.
(२) मार्क. २३।५३–६२.

प्रजारञ्जनं व्यसनत्यागः सर्वत्राविश्वासित्वं कामक्रोधादिजयः काककोकिलभृङ्गबकव्यालमयूरहंसादीनां चरितानुकरणं शक्रार्कादिपञ्चदेवरूपधारणं स्वधर्मे प्रजास्थापनं च राजधर्माः

पुत्र उवाच-

[1]एवमुल्लाप्यमानस्तु स तु मात्रा दिने दिने ।
ववृधे वयसा बालो बुद्ध्या चालर्कसंज्ञितः ॥

स कौमारकमासाद्य ऋतध्वजसुतस्तदा ।
कृतोपनयनः प्राज्ञः प्रणिपत्याऽऽह मातरम् ॥

मया यदम्ब कर्तव्यमैहिकामुष्मिकाय वै ।
सुखाय वद तत्सर्वं प्रश्रयावनतस्य मे ॥

ममार्थं चैव धर्मार्थं प्रजानां चैव यद्धितम् ।
श्रेयसे यच्च तत्सर्वं प्रजारञ्जनमादितः ॥

मदालसोवाच-

[2]वत्स राज्याभिषिक्तेन प्रजारञ्जनमादितः ।
कर्तव्यमविरोधेन स्वधर्मश्च महीभृताम् ॥

[3]व्यसनानि परित्यज्य सप्त मूलहराणि वै ।
आत्मा रिपुभ्यः संरक्ष्यो बहिर्मन्त्रविनिर्गमात् ॥

[4]दुष्टादुष्टांश्च जानीयादमात्यानरिदोषतः ।
अष्टधा नाशमाप्नोति सुवक्रात्स्यन्दनाद्यथा ॥

तथा राजाऽप्यसंदिग्धं बहिर्मन्त्रविनिर्गमात् ।
चरैश्चरास्तथा शत्रोरन्वेष्टव्याः प्रयत्नतः ॥

विश्वासो न तु कर्तव्यो राज्ञा मित्राप्तबन्धुषु ।
कार्ययोगादमित्रेऽपि विश्वसीत नराधिपः ॥

[1]स्थानवृद्धिक्षयज्ञेन षाड्गुण्यविदितात्मना ।
भवितव्यं नरेन्द्रेण न कामवशवर्तिना ॥

[2]प्रागात्मा मन्त्रिणश्चैव ततो भृत्या महीभृता ।
ज्ञेयाश्चानन्तरं पौरा विरुध्येत ततोऽरिभिः ॥

[3]यस्त्वेतानविजित्यैव वैरिणो विजिगीषते ।
सोऽजितात्माऽजितामात्यः शत्रुवर्गेण बाध्यते ॥

[4]तस्मात्कामादयः पूर्वं जेयाः पुत्र महीभृता ।
तज्जये हि जयो राज्ञो राजा नश्यति तैर्जितः ॥

कामः क्रोधश्च लोभश्च मदो मानस्तथैव च ।
हर्षश्च शत्रवो ह्येते नाशाय कुमहीभृताम् ॥

कामप्रसक्तमात्मानं स्मृत्वा पाण्डुं निपातितम् ।
निवर्तयेत्तथा क्रोधादनुह्रादं हतात्मजम् ॥

हतमैलं तथा लोभान्मदाद्वेनं द्विजैर्हतम् ।
मानादनायुषापुत्रं हतं हर्षात्पुरंजयम् ॥

एभिर्जितैर्जितं सर्वं मरुत्तेन महात्मना ।
स्मृत्वा विवर्जयेदेतान् षड्दोषांश्च महीपतिः ॥

काककोकिलभृङ्गाणां बकव्यालशिखण्डिनाम् ।
हंसकुक्कुटलोहानां शिक्षेत चरितं नृपः ॥

कौशिकस्य क्रियां कुर्याद्विपक्षे मनुजेश्वरः ।
चेष्टां पिपीलिकानां च काले भूपः प्रदर्शयेत् ॥

ज्ञेयाऽग्निविस्फुलिङ्गानां बीजचेष्टा च शाल्मलेः ।
चन्द्रसूर्यस्वरूपं च नीत्यर्थे पृथिवीक्षिता ॥

बन्धकीपद्मशरभशूलिकागुर्विणीस्तनात् ।
प्रज्ञा नृपेण चाऽऽदेया तथा चण्डालयोषितः ॥

[5]शक्रार्कयमसोमानां तद्वद्वायोर्महीपतिः ।
रूपाणि पञ्च कुर्वीत महीपालनकर्मणि ॥

---

(१) मार्क. २४।१-४.

(२) मार्क. २४।५ ; पमा. ३९६ स्वधर्मश्च महीभृताम् (स्वधर्मस्य महीभृता); राप्र. ३१ राज्याभि (राज्येऽभि) शेषं पमावत्.

(३) मार्क. २४।६ ; पमा. ४१४ वै (च).

(४) मार्क. २४।७-९.

(१) मार्क. २४।१० ; पमा. ४१४ ज्ञेन षा (ज्ञानषा) विदिता (विजिता).

(२) मार्क. २४।११ ; पमा. ४१४.

(३) मार्क. २४।१२ ; पमा. ४१४ नविजित्यैव (नविनिर्जित्य).

(४) मार्क. २४।१३-२२.

(५) मार्क. २४।२३ ; राप्र. ३०.

[1]यथेन्द्रश्चतुरो मासान् वार्योघेणैव भूतलम् ।
आप्याययेत्तथा लोकान् परिचारैर्महीपतिः ॥
परिहारैः दानैः । राप्र. ३१

[2]मासानष्टौ यथा सूर्यस्तोयं हरति रश्मिभिः ।
सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादिना नृपः ॥

[3]यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा प्रियाप्रिये राजा दुष्टादुष्टे समो भवेत् ॥
पूर्णेन्दुमालोक्य यथा प्रीतिमाञ्जायते नरः ।
एवं यत्र प्रजाः सर्वा निर्वृतास्तच्छशिव्रतम् ॥

[4]मारुतः सर्वभूतेषु निगूढश्चरते यथा ।
एवं चरेन्नृपश्चारैः पौरामात्यारिबन्धुषु ॥

[5]न लोभार्थैर्न कामार्थैर्नार्थार्थैर्यस्य मानसम् ।
पदार्थैः कृष्यते धर्मात्स राजा स्वर्गमृच्छति ॥

[6]उत्पथग्राहिणो मूढान् स्वधर्माच्चलितान्नरान् ।
यः करोति निजे धर्मे स राजा स्वर्गमृच्छति ॥

[7]वर्णधर्मा न सीदन्ति यस्य राष्ट्रे तथाऽऽश्रमाः ।
राज्ञस्तस्य सुखं तात परत्रेह च शाश्वतम् ॥

[8]एतद्राज्ञः परं कृत्यं तथैतद्वृद्धिकारणम् ।
स्वधर्मे स्थापनं नृणां चाल्यन्ते ये कुबुद्धिभिः ॥

(१) मार्क. २४।२४; राप्र. ३०–३१ चारैर्म (हारैर्म).

(२) मार्क. २४।२५; पमा. ४०४ दिना (दिकं); राप्र. ३१ दिना नृपः (दि भूपतिः).

(३) मार्क. २४।२६–२७; राप्र. ३१.

(४) मार्क. २४।२८; राप्र. ३१ चरेन्नृपश्चा (नृपश्चरेच्चा) त्यारिब (त्यादिब).

(५) मार्क. २४।२९; राप्र. ३१.

(६) मार्क. २४।३०; राप्र. ३१ च्चलितान्न (च्चलतो न).

(७) मार्क. २४।३१; राप्र. ३१.

(८) मार्क. २४।३२; राप्र. ३१ स्वधर्मे (स्वधर्मं) चाल्यन्ते ये (चाल्यते यत्).

[1]पालनेनैव भूतानां कृतकृत्यो महीपतिः ।
सम्यक् पालयिता भागं धर्मस्या-
ऽऽप्नोति वै यतः ॥

[2]एवमाचरते राजा चातुर्वर्ण्यस्य रक्षणम् ।
स सुखी विहरत्येष शक्रस्यैति सलोकताम् ॥

[3]दानमध्ययनं यज्ञः क्षत्रियस्याप्ययं त्रिधा ।
धर्मः प्रोक्तः क्षिते रक्षा शस्त्राजीवश्च जीविका ॥
जीविका कराद्यादानद्वारा । राप्र. १२

[4]यश्चोल्लङ्घ्य स्वकं धर्मं स्ववर्णाश्रमसंज्ञितम् ।
नरोऽन्यथा प्रवर्तेत स दण्ड्यो भूभृतो भवेत् ॥
ये च स्वधर्मसंत्यागात्पापं कुर्वन्ति मानवाः ।
उपेक्षतस्तान्नृपतेरिष्टापूर्तं प्रयात्यधः ॥
तस्माद्राज्ञा प्रयत्नेन सर्वे वर्णाः स्वधर्मतः ।
प्रवर्तन्तोऽन्यथा दण्ड्याः स्थाप्याश्चैव स्वकर्मसु ॥

## * मत्स्यपुराणम्

**ब्रह्मणो राजनीतिः—** सतां रक्षणं असतां निग्रहः संग्रामेष्वनिवर्तित्वं अनाथवृत्तिकल्पनं स्वधर्मस्थापनं सर्वत्राविश्वासित्वं बकसिंहादीनामनुकरणं इन्द्रियजयः व्यसनत्यागः सामाद्युपायैः शत्रुवशीकरणं दण्ड्यादण्ड्यविवेकश्च राजकर्तव्यानि

[5]निकायेषु निकायेषु तथा ब्रह्मा जगद्गुरुः ।
असतामुपघाताय राजानं ज्ञातवान् स्वयम् ॥

* मत्स्यपुराणसदृशानि यानि वचनानि विष्णुधर्मोत्तरे वर्तन्ते तानि पृथङ्न संगृहीतानि, अत्रैव तेषां स्थलनिर्देशादि कृतम् ।

(१) मार्क. २४।३३; पमा. ३९६ धर्मस्याऽऽप्नोति वै यतः (धर्मेष्वाप्नोति पुष्कलम्); राप्र. ३१ यतः (यमः).

(२) मार्क. २४।३४.

(३) मार्क. २५।५; राप्र. १२ जीवश्च (जीवस्य).

(४) मार्क. २५।३५–३७.

(५) मत्स्य. २११।६; विध. २।३८।६ तथा (पुरा) जगद्गु (जरद्गु) राजानं ज्ञात (राजानः कृत).

[1]नरान् परीक्षयेद्राजा साधून् संमानयेत्सदा ।
निग्रहं चासतां कुर्यात्स लोके लोकजित्तमः ॥

[2]निग्रहेणासतां राजा सतां च परिपालनात् ।
एतावदेव कर्तव्यं राज्ञा स्वर्गममीप्सुना ॥

[3]राजकृत्यं हि लोकेषु नास्त्यन्यज्जगतीपते ।
असतां निग्रहादेव सतां च परिपालनात् ॥

[4]यजेत राजा बहुभिः क्रतुभिश्च सदक्षिणैः ।
धर्मार्थं चैव विप्रेभ्यो दद्याद्भोगान् धनानि च ॥

स्वाप्तदक्षिणैः ऋत्विग्भिः प्राप्ता दक्षिणा येषु तैः ।

राप्र. १२३

[5]सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ।
स्यात्स्वाध्यायपरो लोके वर्तेत पितृबन्धुवत् ॥

[6]आवृत्तानां गुरुकुलाद्द्विजानां पूजको भवेत् ।
नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते ॥

आवृत्तानां कृतसमावर्तनानाम् । हि प्रसिद्धः ।

राप्र. १२४

[1]तं च स्तेना न वाऽमित्रा हरन्ति न विनश्यति ।
तस्माद्राज्ञा विधातव्यो ब्राह्मो वै ह्यक्षयो निधिः ॥

[2]समोत्तमाधमै राजा ह्याहूय पालयेत्प्रजाः ।
न निवर्तेत संग्रामात्क्षात्रं व्रतमनुस्मरन् ॥

[3]संग्रामेष्वनिवर्तित्वं प्रजानां परिपालनम् ।
शुश्रूषा ब्राह्मणानां च राज्ञां निःश्रेयसं परम् ॥

[4]कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च तथैव परिकल्पयेत् ॥

योगः अलब्धलाभः । क्षेमं सिद्धस्य परिपालनम् । वृत्तिः जीवनोपायः ।

राप्र. १२४

[5]वर्णाश्रमव्यवस्थानं तथा कार्यं विशेषतः ।
स्वधर्मप्रच्युतान् राजा स्वधर्मे स्थापयेत्तथा ॥

[6]आश्रमेषु तथा कार्यमन्नं तैलं च भाजनम् ।
स्वयमेवाऽऽनयेद्राजा सत्कृतान्नावमानयेत् ॥

---

(१) मत्स्य. २११।७ ; विध. २।३८।७ नरान् (चारैः) साधून् संमानयेत् (धूर्तान् संमार्जयेत्) लोके लोकजित्तमः (तु लोकजिदुत्तमः). एतदनन्तरमयं श्लोकः अधिकः— 'धान्यसंरक्षणार्थाय निर्मार्ष्टि कक्षमुद्धरन् । यथा वर्धयते धान्यं वर्धनीयास्तथा प्रजाः ॥'.

(२) मत्स्य. २११।८ ; विध. २।३८।९ राजा (राज्ञा) पालनात् (पालनैः) मभीप्सुना (मभीप्सता).

(३) मत्स्य. २११।९ ; विध. २।३८।१०.

(४) मत्स्य. २१५।५६ ; विध. २।६५।४८ बहुभिः क्रतुभिश्च स (क्रतुभिर्बहुभिस्त्वाऽऽप्त) ; राप्र. १२३ भिश्च स (भिः स्वाप्त).

(५) मत्स्य. २१५।५७ ; विध. २।६५।४९ कमाप्तै (कैराप्तै) त्स्वाध्याय (च्चाम्नाय) बन्धुवत् (बन्धुषु) ; राप्र. १२४ विधवत्, उत्त. : २५१ पू., विष्णुधर्मोत्तरम्.

(६) मत्स्य. २१५।५८ निधिर्ब्रा (विधिर्ब्रा) ; विध. २।६५।५० पूजको (पूजनं) ह्मोऽभि (ह्मो वि) ; राप्र. १२४ ब्राह्मोऽभि (वांह्मो वि) शेषं विधवत्.

(१) मत्स्य. २१५।५९ निधिः (विधिः) ; विध. २।६५।५१ पूर्वार्धे (न तं स्तेना नाप्यामित्रा हरन्ति न च नश्यति ।) विधातव्यो ब्राह्मो वै ह्यक्षयो (निधातव्यो ब्राह्मणेष्वक्षयो) ; राप्र. १२४ विधवत्, उत्त.

(२) मत्स्य. २१५।६० ; विध. २।६५।५२ ह्याहूय पालयेत्प्र (ह्याहूताः पालयन् प्र).

(३) मत्स्य. २१५।६१ ; विध. २।६५।५३ ; राप्र. १२४.

(४) मत्स्य. २१५।६२ ; विध. २।६५।५४ नाथवृ (नां च वृ) योग (योगं) ; राप्र. १२४.

(५) मत्स्य. २१५।६३ ; विध. २।६५।५५ व्यवस्थानं (व्यवस्था तु) कार्यं (कार्या) स्थापयेत्तथा (विनियोजयेत्) ; राप्र. १२१ स्वधर्मे (स्वे धर्मे) शेषं विधवत्, उत्त.

(६) मत्स्य. २१५।६४ ; विध. २।६५।५६ (आश्रमेषु यथाकालं तैलभाजनभोजनम् । स्वयमेव नयेद्राजा सत्कृतान्नवमन्य च ॥) ; राप्र. १२४ (आश्रमेषु यथाकालं तैलं भाजनभोजनम् । स्वयमेव नयेद्राजा सत्कृतानवमत्य च ॥).

आश्रमेषु स्थानेषु । सत्कृतान् कार्येषु नियुक्तान् । अवमत्य उपेक्ष्य । अनेनाऽऽदरातिशय उच्यते ।

राप्र. १२४

[1]तापसे सर्वकार्याणि राज्यमात्मानमेव च ।
निवेदयेत्प्रयत्नेन देववच्चिरमर्चयेत् ॥

[2]द्वे प्रज्ञे वेदितव्ये च ऋज्वी वक्रा च मानवैः ।
वक्रां ज्ञात्वा न सेवेत प्रतिबाधेत चाऽऽगताम् ॥

[3]नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥

[4]न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥

[5]विश्वासयेच्चाप्यपरं तत्त्वभूतेन हेतुना ।
बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ॥

[6]वृकवच्चापि लुम्पेत शशवच्च विनिक्षिपेत् ।
दृढप्रहारी च भवेत्तथा शूकरवन्नृपः ॥

यथा वृको मेषादिरक्षकानवधानमासाद्य मेषं हन्ति, एवं शत्रुरक्षकानवधाने शत्रुं हन्यात् । विनिष्पतेत् शत्रुभिरभिभूत आश्रयान्तरं गच्छेत् । राप्र. १२५

[1]चित्राकारश्च शिखिवद्दृढभक्तस्तथा श्ववत् ।
तथा च मधुराभाषी भवेत्कोकिलवन्नृपः ॥

[2]काकशङ्की भवेन्नित्यमज्ञातवसतिं वसेत् ।
नापरीक्षितपूर्वं च भोजनं शयनं व्रजेत् ।
वस्त्रं पुष्पमलंकारं यच्चान्यन्मनुजोत्तम ॥

काकशङ्की काकवन्न कमपि विश्वसेत् । राप्र. १२५

[3]न गाहेज्जनसंबाधं न चाज्ञातजलाशयम् ।
अपरीक्षितपूर्वं च पुरुषैराप्तकारिभिः ॥

[4]नाऽऽरोहेत्कुञ्जरं व्यालं नादान्तं तुरगं तथा ।
नाविज्ञातां स्त्रियं गच्छेन्नैव देवोत्सवे वसेत् ॥

[5]नरेन्द्रलक्ष्म्या धर्मज्ञ त्राताऽश्रान्तो भवेन्नृपः ॥

[6]कर्मणा केन मे लोके जनः सर्वोऽनुरज्यते ।
विरज्यते केन तथा विज्ञेयं तन्महीक्षिता ॥

[7]अनुरागकरं लोके कर्म कार्यं महीक्षिता ।
विरागजनकं लोके वर्जनीयं विशेषतः ॥

---

(१) मत्स्य. २१५।६५ ; विध. २।६५।५७ च्चिरम (च्चैनम) ; राप्र. १२४ विधवत्.

(२) मत्स्य. २१५।६६ ; विध. २।६५।५८ उत्तरार्धे (शठाञ्ज्ञात्वा न सेवेत प्रतिबोधं तदा गतान् ॥ ).

(३) मत्स्य २१५।६७ ; विध. २।६५।५९.

(४) मत्स्य. २१५।६८ ; विध. २।६५।६० ; राप्र. १२४ मनुः.

(५) मत्स्य. २१५।६९ ; विध. २।६५।६१ च्चाप्यपरं (च्चापि परं) ; राप्र. १२५ विधवत्, मनुः.

(६) मत्स्य. २१५।७० ; विध. २।६५।६२ च्चापि (श्चाव) क्षिपेत् (ष्पतेत्) शूकर (सूकर) ; राप्र. १२५ विधवत्, पूर्वार्धं मनोः, उत्तरार्धं विष्णुधर्मोत्तरे.

(१) मत्स्य. २१५।७१ ; विध. २।६५।६३ स्तथा श्व. (स्तथाऽन्ध) तथा च (भवेच्च) भवेत्को (शुकको) ; राप्र. १२५ तथा च (भवेच्च) भवेत्को (तथा को) विष्णुधर्मोत्तरम्.

(२) मत्स्य. २१५।७२ ; विध. २।६५।६४–६५ व्रजेत् (स्पृशेत्) ; राप्र. १२५ प्रथमार्धम्, विष्णुधर्मोत्तरम् : १६१ विधवत्, द्वितीयतृतीयार्धौ, विष्णुधर्मोत्तरम्.

(३) मत्स्य. २१५।७३ ; विध. २।६५।६५–६६ चाज्ञात (चाज्ञातं) अपरीक्षितपूर्वं च (नापरीक्षितपूर्वैस्तु).

(४) मत्स्य. २१५।७४ ; विध. २।६५।६६–६७ देवोत्सवे वसेत् (चाशुभवाससम्) ; राक. १५३.

(५) मत्स्य. २१५।७५.

(६) मत्स्य. २१५।९७ ; विध. २।२४।७१ केन तथा (तथा केन).

(७) मत्स्य. २१५।९८ ; विध. २।२४।७१ जनकं लोके (जननं सर्वं) विशेषतः (प्रयत्नतः) उत्त.

[1]जनानुरागप्रभवा हि लक्ष्मी
राज्ञां यतो भास्करवंशचन्द्र ।
तस्मात्प्रयत्नेन नरेन्द्रमुख्यैः
कार्योऽनुरागो भुवि मानवेषु ॥

[2]कामः क्रोधो मदो मानो लोभो हर्षस्तथैव च ।
एते वर्ज्याः प्रयत्नेन सादरं पृथिवीक्षिता ॥

[3]एतेषां विजयं कृत्वा कार्यो भृत्यजयस्ततः ।
कृत्वा भृत्यजयं राजा पौराञ्जानपदाञ्जयेत् ॥

[4]कृत्वा च विजयं तेषां शत्रून् बाह्यांस्ततो जयेत् ॥

कामादीनामाभ्यन्तराणां स्वविषयवासित्वेनाऽऽभ्यन्तराणां भृत्यादीनां च जय उक्तः- काम इति । स्वस्वविषये व्यवस्थापनं जयः । अन्तिमो जयः पराभवः ।
राप्र. १२२

[5]न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते ॥

[6]न भाव्यं दारुणेनातितीक्ष्णादुद्विजते जनः ।
काले मृदुर्यो भवति काले भवति दारुणः ॥

[1]राजा लोकद्वयापेक्षी तस्य लोकद्वयं भवेत् ।
भृत्यैः सह महीपालः परिहासं विवर्जयेत् ॥

[2]भृत्याः परिभवन्तीह नृपं हर्षवशं गतम् ।
व्यसनानि च सर्वाणि भूपतिः परिवर्जयेत् ॥

व्यसनानि पुरुषार्थविक्षेपकाणि मृगयादीनि ।
राप्र. १४७

[3]लोकसंग्रहणार्थाय कृतकव्यसनी भवेत् ।
शौण्डीरस्य नरेन्द्रस्य नित्यमुद्रिक्तचेतसः ॥

[4]जना विरागमायान्ति सदा दुःसेव्यभावतः ।
स्मितपूर्वाभिभाषी स्यात्सर्वस्यैव महीपतिः ॥

[5]वध्येष्वपि महाभाग भ्रूकुटिं न समाचरेत् ।
भाव्यं धर्मभृतां श्रेष्ठ स्थूललक्ष्येण भूभुजा ॥

[6]स्थूललक्ष्यस्य वशगा सर्वा भवति मेदिनी ।
अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः ॥

---

(१) मत्स्य. २१५।९९ ; विध. २।२४।७२ प्रभवा हि लक्ष्मी ( प्रभवो हि लक्ष्यो ) भास्कर ( भार्गव ).

(२) मत्स्य. २२०।१४ ; विध. २।६५।१५-१६ मानो ( मानं ) उत्तरार्धे ( जेतव्यमरिषड्वर्गमाहुस्तु पृथिवीक्षिताम् ॥ ) ; राक. १४७ उत्तरार्धे ( जेतव्यो रिपुषड्वर्ग आन्तरः पृथिवीक्षिता ॥ ) ; राप्र. १२२ राकवत्.

(३) मत्स्य. २२०।१५ ; विध. २।६५।१६-१७ पौराञ्जा ( पौरजा ) ; राक. १४७ विधवत् ; राप्र. १२२ स्ततः ( स्तथा ).

(४) मत्स्य. २२०।१६ ; विध. २।६५।१७ ; राक. १४७ ; राप्र. १२२.

(५) मत्स्य. २२०।२२ ; विध. २।६५।२४ ; राक. १४७ भूयते ( हीयते ) ; राप्र. १४७.

(६) मत्स्य. २२०।२३ ; विध. २।६५।२४-२५ णेनाति ( णेनापि ) ; राक. १४७ विधवत्, पू. ; राप्र. १४७.

(१) मत्स्य. २२०।२४ ; विध. २।६५।२५-२६ ; राक. १४७ उत्त. ; राप्र. १४७.

(२) मत्स्य. २२०।२५ ; विध. २।६५।२६-२७ वशं गतम् ( लसत्कथम् ) ; राक. १४७ पू., १४६ उत्त. ; राप्र. १४७ हर्षवशं गतम् ( हर्षुकसंकथम् ).

(३) मत्स्य. २२०।२६ ; विध. २।६५।२७-२८ शौण्डीरस्य ( शौण्डीर्यस्य ) मुद्रिक्त ( मुत्क्षिप्त ) ; राक. १४७ पू., १५२ उत्त. ; राप्र. १४७ कृतक ( भृतक ).

(४) मत्स्य. २२०।२७ ; विध. २।६५।२८-२९ जना ( जनो ) यान्ति ( याति ) ; राक. १५२ पूर्वार्धे ( जना उद्वेगमायान्ति सदा दुःखविभाविताः । ) पू. ; राप्र. १४७ भावतः ( भाविताः ) पू. : १२१ उत्त.

(५) मत्स्य. २२०।२८ ; विध. २।६५।२९-३० वध्ये ( मध्ये ) भ्रू ( भ्रु ) ; राप्र. १२१ भ्रू ( भ्रु ) पू. : ११९ भूभुजा ( भूभृता ) उत्त.

(६) मत्स्य. २२०।२९ ; विध. २।६५।३०-३१ ; राक. १५२ उत्त. ; राप्र. ११९ पू., ११६ उत्त.

[1]दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत् ।
रागे दर्पे च माने च द्रोहे पापे च कर्मणि ॥

दीर्घसूत्रस्य कर्महानिरुक्ता- अदीर्घेति । कार्यविशेषे दीर्घसूत्रताऽपि कर्तव्येत्युक्तम्- दोष इति ।

राप्र. ११६-११७

[2]अप्रिये चैव कर्तव्ये दीर्घसूत्रः प्रशस्यते ॥
[3]ये चास्य भूमिजयिनो भवेयुः परिपन्थिनः ॥

[4]तानानयेद्वशे सर्वान् सामादिभिरुपक्रमैः ।
यथा न स्यात्कृशीभावः प्रजानामनवेक्षया ॥

[5]तथा राज्ञा प्रकर्तव्यं स्वराष्ट्रं परिरक्षता ।
मोहाद्राजा स्वराष्ट्रं यः कर्शयत्यनवेक्षया ॥

[6]सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ।
भृतो वत्सो जातबलः कर्मयोग्यो यथा भवेत् ॥

[7]तथा राष्ट्रं महाभाग भृतं कर्मसहं भवेत् ।
यो राष्ट्रमनुगृह्णाति राज्यं स परिरक्षति ॥

(१) मत्स्य. २२०।३० ; विध. २।६५।३१-३२ ; राक. १५२-१५३ द्रोहे (क्रोधे) ; राप्र. ११६-११७ रागे (दोषे).

(२) मत्स्य. २२०।३१ ; विध. २।६५।३२ कर्तव्ये (वक्तव्ये) ; राक. १५३ ; राप्र. ११७.

(३) मत्स्य. २२०।३८ ; विध. २।६५।६८ भूमिजयिनो (भूमिं जयतो).

(४) मत्स्य. २२०।३९ ; विध. २।६५।६८-६९ वशे (वशं) ; राप्र. २५३ उत्त.

(५) मत्स्य. २२०।४० ; विध. २।६५।६९-७० प्रकर्तव्यं (विधातव्यं) यः कर्श (यत्कर्शं) ; राप्र. २५३ प्रकर्तव्यं स्वराष्ट्रं (विधातव्यं स्वराज्यं) कर्श (कर्ष).

(६) मत्स्य. २२०।४१ ; विध. २।६५।७०-७१ भ्रश्यते (भ्रंशते) ; राप्र. २५३.

(७) मत्स्य. २२०।४२ ; विध. २।६५।७१-७२ सहं (महद्) राज्यं स (राजा सु) ; राप्र. २५३ राज्यं स (राष्ट्रं स्वं).

[1]संजातमुपजीवेत्तु विन्दते स महत्फलम् ।
राष्ट्राद्धिरण्यं धान्यं च महीं राजा सुरक्षिताम् ॥

[2]महता तु प्रयत्नेन स्वराष्ट्रस्य च रक्षिता ।
नित्यं स्वेभ्यः परेभ्यश्च यथा माता यथा पिता ॥

[3]गोपितानि सदा कुर्यात्संयतानीन्द्रियाणि च ।
अजस्रमुपयोक्तव्यं फलं तेभ्यस्तथैव च ॥

[4]सर्वं कर्मेदमायत्तं विधाने दैवमानुषे ।
तयोर्दैवमचिन्त्यं च पौरुषे विद्यते क्रिया ॥

[5]एवं महीं पालयतोऽस्य भर्तु-
र्लोकानुरागः परमो भवेत्तु ।
लोकानुरागप्रभवा च लक्ष्मी-
र्लक्ष्मीवतश्चापि परा च कीर्तिः ॥

दण्डलक्षणं व्यापकं दण्डस्वरूपं च, दण्डप्रणयनविधिः

[6]यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥

[7]बालवृद्धातुरयतिद्विजस्त्रीविधवा यतः ।
मात्स्यन्यायेन भक्ष्येरन् यदि दण्डं न पातयेत् ॥

(१) मत्स्य. २२०।४३ ; विध. २।६५।७२-७३ (तं प्रजाश्चोपजीवन्ति विन्दते सुमहत्फलम् । दुह्याद्धिरण्यं धान्यं च मही राज्ञा सुरक्षिता ॥) ; राप्र. २५३-२५४ राष्ट्रा (दुह्या).

(२) मत्स्य. २२०।४४ ; विध. २।६५।७३ उत्त.

(३) मत्स्य. २२०।४५ ; विध. २।६५।७४ पूर्वार्धे (गोपिनो हि सदा कार्यः संविभागः प्रियाणि च ।).

(४) मत्स्य. २२०।४६ ; विध. २।६५।७५ विधाने दैवमानुषे (विधानं चैव पौरुषम्) च (हि).

(५) मत्स्य. २२०।४७ ; विध. २।६५।७६ उत्तरार्धे (लोकानुरागप्रभवा हि लक्ष्मीर्लक्ष्म्या भवेच्चैव परश्च लोकः ॥).

(६) मत्स्य. २२५।८ ; विध. २।७०।८; राप्र. २८५ निर्भयः (पापहा).

(७) मत्स्य. २२५।९ ; विध. २।७०।९ (बालवृद्धातुरयतिद्विजातिविकलाबलाः । मत्स्यन्यायेन भक्षेरन् यदि दण्डो न पालयेत् ॥) ; राप्र. २८५ वा यतः (वाबलाः).

[1]देवदैत्योरगगणाः सर्वे भूतपतत्त्रिणः ।
उत्क्रामयेयुर्मर्यादां यदि दण्डं न पातयेत् ॥

[2]एष ब्रह्माभिशापेषु सर्वप्रहरणेषु च ।
सर्वविक्रमकोपेषु व्यवसाये च तिष्ठति ॥

[3]पूज्यन्ते दण्डिनो देवैर्न पूज्यन्ते त्वदण्डिनः ।
न ब्रह्माणं विधातारं न पूषार्यमणावपि ॥

[4]यजन्ते मानवाः केचित्प्रशान्ताः सर्वकर्मसु ।
रुद्रमग्निं च शक्रं च सूर्याचन्द्रमसौ तथा ॥

[5]विष्णुं देवगणांश्चान्यान् दण्डिनः पूजयन्ति च ।
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ॥

[6]दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ।
राजदण्डभयादेव पापाः पापं न कुर्वते ॥

[7]यमदण्डभयादेके परस्परभयादपि ।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥

(१) मत्स्य. २२५।१० ; विध. २।७०।१० गणाः सर्वे ( नराः सिद्ध ) उत्तरार्धे ( उत्क्रामेयुः स्वमर्यादां यदि दण्डो न पालयेत् ॥ ) ; राप्र. २८५ गणाः ( नराः ) उत्तरार्धे ( उत्क्रामेयुश्च मर्यादां यदि दण्डो न पालयेत् ॥ ).

(२) मत्स्य. २२५।११ ; विध. २।७०।११ ; राप्र. २८५ कोपेषु ( कोषेषु ).

(३) मत्स्य. २२५।१२ ; विध. २।७०।१२ देवैर्न ( देवा न ) न ब्रह्माणं विधातारं ( न ब्राह्मणं न धातारं ) ; राप्र. २८५ देवैर्न ( देवा न ) ब्रह्माणं ( ब्राह्मणं ).

(४) मत्स्य. २२५।१३ ; विध. २।७०।१३ ; राप्र. २८५.

(५) मत्स्य. २२५।१४ ; विध. २।७०।१४ श्चान्यान् ( श्चान्ये ) च ( हि ) ; राप्र. २८५–२८६.

(६) मत्स्य. २२५।१५ ; विध. २।७०।१५ ; राप्र. २८६.

(७) मत्स्य. २२५।१६ ; विध. २।७०।१६ देके ( दन्ये ) ; राप्र. २८६.

[1]अन्धे तमसि मज्जेयुर्यदि दण्डं न पातयेत् ।
यस्माद्दण्डो दमयति दुर्मदान् दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥

[2]दण्डस्य भीतैस्त्रिदशैः समेतै-
भागो धृतः शूलधरस्य यज्ञे ।
दत्तं कुमारे ध्वजिनीपतित्वं
वरं शिशूनां च भयाद्बलस्थम् ॥

शिशूनां वरं श्रेष्ठम्, अतिशिशुमित्यर्थः । तं कुमारं कार्तिकेयं बलस्थं सैन्यमध्यस्थं सन्तं ध्वजिनीपतिं सेनापतिं चक्रुरित्यर्थः । राप्र. २८७

[3]ब्राह्मणं नैव हन्यात्तु सर्वपापेष्ववस्थितम् ।
प्रवासयेत्स्वकाद्राष्ट्रात्समग्रधनसंयुतम् ॥

[4]न जातु ब्राह्मणं वध्यात्पातकं त्वधिकं भवेत् ।
यस्मात्तस्मात्प्रयत्नेन ब्रह्महत्यां विवर्जयेत् ॥

[5]अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्य-
दण्डयन् ।
अयशो महदाप्नोति नरकं चाधिगच्छति ॥

(१) मत्स्य. २२५।१७ ; विध. २।७०।१७–१८ दण्डं न पातयेत् ( दण्डो न पालयेत् ) द्वितीयार्धे ( तस्माद्दम्यान् दमयति उद्दण्डान् दण्डयत्यपि । ) ; राप्र. २८६ दण्डं न पातयेत् ( दण्डो न पालयेत् ) दुर्मदान् ( अदण्ड्यान् ).

(२) मत्स्य. २२५।१८ ; विध. २।७०।१८ समेतै ( समस्तै ) दत्तं कुमारे ध्वजिनीपतित्वं ( चक्रुः कुमारं ध्वजिनीपतिं च ) ; राप्र. २८७ दत्तं कुमारे ध्वजिनीपतित्वं ( चक्रुः कुमारं ध्वजिनीपतिं च ).

(३) मत्स्य. २२७।२१४ ; विध. २।७२।१९७–१९८ ( न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् । वध्ये विवासयेद्राष्ट्रात्समग्रधनमक्षतम् ॥ ).

(४) मत्स्य. २२७।२१५ ; विध. २।७२।१९८–१९९ पूर्वार्धे ( न जातु ब्राह्मणवधात्पापमप्यधिकं क्वचित् । ).

(५) मत्स्य. २२७।२१६ ; विध. २।७२।१९९ चाधि ( चैव ).

[1]ज्ञात्वाऽपराधं पुरुषस्य राजा
कालं तथा चानुमतं द्विजानाम् ।
दण्डयेषु दण्डं परिकल्पयेत्तु
यो यस्य युक्तः स समीक्ष्य कुर्यात् ॥

## विष्णुपुराणम्

शस्त्रजीविका पृथ्वीपालनं वर्णसंस्थापनं च राजधर्माः

[2]दानानि दद्यादिच्छातो द्विजेभ्यः
क्षत्रियोऽपि हि ।
यजेच्च विविधैर्यज्ञैरधीयीत च पार्थिव ॥
शस्त्राजीवो महीरक्षा प्रवरा तस्य जीविका ।
तस्यापि प्रथमे कल्पे पृथिवीपरिपालनम् ॥
धरित्रीपालनेनैव कृतकृत्यो नराधिपः ।
भवन्ति नृपतेरंशा यतो यज्ञादिकर्मणाम् ॥
दुष्टानां त्रासनाद्राजा शिष्टानां परिपालनात् ।
प्राप्नोत्यभिमताँल्लोकान् वर्णसंस्थाकरो नृपः ॥
[3]क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम् ।
वधश्च धर्मयुद्धेन स्वराज्यपरिपन्थिनाम् ॥

## श्रीमद्भागवतम्

पृथुवैन्यवर्णनमिषेण राजधर्मवर्णनम्

[4]अथाप्युदारश्रवसः पृथोर्हरेः
कलावतारस्य कथामृतादृताः ।
यथोपदेशं मुनिभिः प्रचोदिताः
श्लाघ्यानि कर्माणि वयं वितन्महि ॥
एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् ।
गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥
एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः ।
काले काले यथाभागं लोकयोरुभयोर्हितम् ॥

वसु काल उपादत्ते काले चायं विमुञ्चति ।
समः सर्वेषु भूतेषु प्रतपन् सूर्यवद्विभुः ॥
तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि ।
भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥
देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः ।
कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥
आप्याययत्यसौ लोकं वदनामृतमूर्तिना ।
सानुरागावलोकेन विशदस्मितचारुणा ॥
अव्यक्तवर्त्मैष निगूढकार्यो
गम्भीरवेधा उपगुप्तवित्तः ।
अनन्तमाहात्म्यगुणैकधामा
पृथुः प्रचेता इव संवृतात्मा ॥
दुरासदो दुर्विषह आसन्नोऽपि विदूरवत् ।
नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥
अन्तर्बहिश्च भूतानां पश्यन् कर्माणि चारणैः ।
उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥
नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि ।
दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥
अस्याप्रतिहतं चक्रं पृथोरामानसाचलात् ।
वर्तते भगवानर्को यावत्तपति गोगणैः ॥
[1]रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः ।
अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥
दृढव्रतः सत्यसंधो ब्रह्मण्यो वृद्धसेवकः ।
शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥
मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवाऽऽत्मनः ।
प्रजासु पितृवत्स्निग्धः किङ्करो ब्रह्मवादिनाम् ॥
देहिनामात्मवत्प्रेष्ठः सुहृदां नन्दिवर्धनः ।
मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु ॥

प्रजापालनं करप्रयोजनम्

[2]श्रेयः प्रजापालनमेव राज्ञो
यत्सांपराये सुकृतात्षष्ठमंशम् ।
हर्ताऽन्यथा हृतपुण्यः प्रजाना-
मरक्षिता करहारोऽघमत्ति ॥

---

(१) मत्स्य. २२७।२१७; विध. २१७२।२०० पुरुषस्य (पुरुषं च) मतं (मते) उत्तरार्धे (दण्ड्येषु दण्डं परिकल्पयेत पापस्य ये तच्छमनं न कुर्युः ॥).
(२) विष्णु. ३।८।२६–२९.
(३) विष्णु. ६।७।३.
(४) भाग. ४।१६।३–१३.

(१) भाग. ४।१६।१५–१८. (२) भाग. ४।२०।१४.

[1]अहं दण्डधरो राजा प्रजानामिह योजितः ।
रक्षिता वृत्तितः स्वेषु सेतुषु स्थापिता पृथक् ॥
[2]य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन् ।
प्रजानां शमलं भुङ्क्ते भगं च स्वं जहाति सः ॥
[3]राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः ॥

प्रजारक्षणं राजधर्मः

[4]सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः ।
आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥
एवंविधो नरपतिर्विमानेनार्कवर्चसा ।
विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते ॥

## विष्णुधर्मोत्तरपुराणम्

**पुष्करोक्ता राजनीतिः— राजवरणं राष्ट्रप्रवरैः कर्तव्यम्, धर्मस्यपालनव्रतस्य ग्रहणं दुर्गवसतिः प्रजापालनं देवतापूजनं देवमन्दिराणां रक्षणं स्थापनं च देवद्रव्यानपहरणं अधार्मिकविवासनं च राजकर्तव्यानि**

पुष्कर उवाच—

[5]एवं गुणगणाकीर्णं वरयेयुर्नराधिपम् ।
संभूय राष्ट्रप्रवराः क्षत्रियं तु कुलोद्गतम् ॥
वृतश्च तैर्व्रतं राजा गृह्णीयाद्विजितेन्द्रियः ।
पालयिष्यामि वः सर्वान् धर्मस्थान्नात्र संशयः ॥
[6]दुर्गे सर्वगुणोपेते वास्तुलक्षणसंयुते ।
वसन् विवर्धयेत्कोशं धर्मेण पृथिवीपतिः ॥
[7]प्रजानां पालनं कार्यं तत्र स्थाने महीक्षिता ।
स्वदेशे देवता याश्च कृता राज्ञः पुरातनैः ॥

(१) भाग. ४।२१।२२.
(२) भाग. ४।२१।२४.
(३) भाग. ७।११।१४.
(४) भाग. ११।१७।४५–४६.
(५) विध. २।४।१–२.
(६) विध. २।३।१.
(७) विध. २।३।२ ; राप्र. १२८ (स्वदेशदेवताचायाः कृतारामं पुरातनैः ।। ) उत्त.



[1]दायं वित्तं जनं तासां प्रयत्नेन च पालयेत् ।
देवद्रव्यापहारेण राजा नरकमृच्छति ॥
[2]अस्मिन्नपि तथा लोके प्राप्नोति च पराभवम् ।
पालयन्ति महीं देवाः पूजिताः पृथिवीक्षिता ॥
[3]दैवायत्तमिदं सर्वं भूतलं द्विजपुङ्गव ।
धूपदीपनमस्कारपुष्पमाल्यानुलेपनैः ॥
[4]रत्नानुसंप्रदानैश्च पूजनीयाः सुरोत्तमाः ।
पूजिताः पूजयन्त्येते चाऽऽयुषा यशसा श्रिया ॥
[5]प्राप्यते देवताभक्त्या चानुष्ठाने महत्पदम् ।
पूजिताः संप्रयच्छन्ति कामान्नृणामभीप्सितान् ॥
[6]एकमप्याश्रितो देवं राजा भार्गवनन्दन ।
सर्वासां पूजनं कुर्याद्देवतानामसंशयम् ॥
[7]देवतानां न चोच्छिन्द्यात्पूर्वदायं कथंचन ।
प्राक्स्थितं तन्न चोच्छिन्द्यान्न
च च्छिन्द्यात्तथा नवम् ॥
[8]तच्छेत्ता नरकं याति सह पूर्वैः पितामहैः ।
अपि स्वल्पं न हर्तव्यं देवद्रव्यं विजानता ॥

(१) विध. २।३।३ ; राप्र. १२८ प्रयत्नेन च (प्रयत्नात्परि) पू.

(२) विध. २।३।४ ; राप्र. १२८ पूजिताः (पालिताः) उत्त.

(३) विध. २।३।५ ; राप्र. १२८ दैवा (देवा).

(४) विध. २।३।६ ; राप्र. १२८ रत्नानु (रत्नानां) चाऽऽयुषा (आयुषा).

(५) विध. २।३।७ ; राप्र. १२८ चानुष्ठाने (मनुष्येण) णामभीप्सि (णां मनोग).

(६) विध. २।३।८ ; राप्र. १२८.

(७) विध. २।३।९ ; राप्र. १४९ तानां न चो (तासु न वो) दायं (दायान्) तन्न (च न) च च्छिन्द्यात्तथा नवम् (चोच्छिन्द्यात्तथा जनात्).

(८) विध. २।३।१० ; राप्र. १४९ तच्छेत्ता (उच्छेत्ता).

[1]स्वल्पस्यापि फलं घोरं यस्माज्जन्मान्तरे भवेत् ।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥
[2]देवद्रव्यापहरणान्नरकं प्रतिपद्यते ।
सन्तीह देवताः सौम्याः सन्त्युग्राश्चापि भार्गव ॥
[3]दर्शयन्ति रुषं सौम्या राज्यभ्रंशादिभिर्नृणाम् ।
अस्मिँल्लोके रुषं क्रूरा नैव कुर्वन्ति देवताः ॥
[4]तासां वित्तापहरणाद्राजा नरकमृच्छति ।
पूर्वैः पितामहैः सार्धं प्रागुक्तं फलमेव तु ॥
[5]देवद्रव्यापहरणं नैव जातु भवेद्वृथा ।
सर्वस्वरहितान् कृत्वा देवद्रव्यापहारिणः ॥
अङ्कयित्वा द्विजश्रेष्ठ स्वराष्ट्राद्विप्रवासयेत् ।
त्रैविद्या वणिजो वैश्या लिङ्गिनो देवपालकाः ॥
[6]तथा तत्प्रतिबद्धाश्च न कुर्युः कलहं मिथः ।
तेषां सहायकः स्वामी निग्रहानुग्रही भवेत् ॥
[7]रागद्वेषवियुक्तस्तु विवास्यश्चान्यथा भवेत् ।
दण्डं च देवतागामि देवद्रव्यस्य सूचकम् ॥
[8]सर्वान् विवासयेद्राजा धार्मिको धर्मकारणात् ।
राज्ञा सर्वप्रयत्नेन पालनीयाः सुरालयाः ॥
कर्तव्याश्च महाभाग सुरलोकमभीप्सता ।
देवतास्तु प्रतिष्ठाप्य तल्लोकं ध्रुवमाप्नुयात् ॥
कृत्वा देवगृहं शुभ्रं स्वर्गमाप्नोत्यनुत्तमम् ।
तदा भोगप्रमाणेन लक्ष्मीस्तत्रापि भार्गव ॥
मृत्प्रासादाद्दशगुणं स्थूलदारुकृते भवेत् ।
फलं दशगुणं तस्मात्तथा पक्वेष्टकाकृते ॥
तस्माद्दशगुणं शैले नात्र कार्या विचारणा ।
यावत्संख्यं नरः कुर्याद्देववेश्म सुधासितम् ॥
तावज्जन्मान्तराणीह यशसा स विराजते ।
कृत्वा च चित्रविन्यासं गन्धर्वैः सह मोदते ॥
कृत्वा संशोधनं तत्र विरोगः समपद्यते ।
प्रोक्षयित्वा मनस्तापान्मानवः प्रतिमुच्यते ॥
कृत्वोपलेपनं राम नाकमाप्नोत्यनुत्तमम् ।
गन्धर्वलोकमाप्नोति कृत्वा वर्णकरञ्जितम् ॥
गन्धैः समुक्षितं कृत्वा गन्धर्वैः सह मोदते ।
उपकारप्रदानेन श्रियमाप्नोत्यनुत्तमाम् ॥
गीतवाद्यप्रदानेन सुखमाप्नोत्यनुत्तमम् ।
प्रेक्षणीयप्रदानेन रूपवानभिजायते ॥
तथा औज्ज्वल्यमाप्नोति यत्र यत्राभिजायते ।
स्नापयित्वा घृतेनार्चां सर्वपापैः प्रमुच्यते ॥
स्नापयित्वा च तैलेन विरोगः समपद्यते ।
अम्बुना स्नापयित्वा तु सौभाग्यमधिगच्छति ॥
विरूक्षयित्वा तां राम पापं जहति मानवाः ।
अनुलेपनदानेन रूपमाप्नोत्यनुत्तमम् ॥
तथा पुष्पप्रदानेन श्रियमाप्नोत्यनुत्तमाम् ।
धूपदानेन धर्मज्ञ रतिमाप्नोति शोभनाम् ॥
तथा दीपप्रदानेन चक्षुष्मानभिजायते ।
अन्नदः सर्वमाप्नोति यत्किंचिन्मनसेच्छति ॥
पानकानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ।
वसुदो रूपमाप्नोति रूपमाप्नोति रूप्यदः ॥
रुक्मदः सर्वमाप्नोति श्रियमाप्नोति सर्वदः ।
छत्रदः स्वर्गमाप्नोति तालवृन्तप्रदो दिवम् ॥
चामराणां प्रदानेन राजा भवति धार्मिकः ।
पताकायाः प्रदानेन सर्वपापान् व्यपोहति ॥
ध्वजदानेन लोकेऽस्मिन् ध्वजभूतो भवेन्नरः ।
नानाविधानां भोगानां तथा राम प्रदायकः ॥
तानेव भोगानाप्नोति सर्वमाप्नोति भूमिदः ।
देवमाल्यापनयनाद्गोदानफलमाप्नुयात् ॥

(१) विध. २।३१।११ ; राप्र. १४९ षष्टिवर्ष (षष्टिर्वर्षं).
(२) विध. २।३१।१२ ; राप्र. १४९ भार्गव (भारत).
(३) विध. २।३१।१३ सौम्या (सौम्य) क्रूरा (क्रूरां); राप्र. १५०.
(४) विध. २।३१।१४ ; राप्र. १५० फल (काल).
(५) विध. २।३१।१५–१६.
(६) विध. २।३१।१७ ; राप्र. १५० सहायकः (तन्नायकः) ग्रही (ग्रहे).
(७) विध. २।३१।१८ ; राप्र. १५० पू.
(८) विध. २।३१।१९–४२.

तदाहुतिप्रदानेन तल्लोकमभिपद्यते ।
नमस्कारप्रणामाभ्यामेनोभिः प्रतिमुच्यते ॥
प्रदक्षिणं तथा कृत्वा भवत्याचारवान्नरः ।
स्तुत्वा च देवतां राम मनोदुःखात्प्रमुच्यते ॥
संतर्पयित्वा तोयेन तृप्तिं समधिगच्छति ।
तस्मात्सर्वप्रयत्नेन विशुद्धेनान्तरात्मना ॥
अर्चास्थाः पूजयेत्सर्वा देवता भूरिदर्शन ।
तदाश्रितांश्च युञ्जीत तदा तद्विधिपारगान् ॥
[1]तत्पूजने तथा राम तांश्च संपूजयेत्सदा ।
ब्राह्मणाश्च नियोक्तव्या वेदोक्तसुरपूजने ॥
[2]यस्य राज्ञस्तु विषये देववेश्म विशीर्यते ।
तस्य सीदति तद्राष्ट्रं देववेश्म यथा तथा ॥
संस्कारं लम्भयेद्यस्तु देववेश्म पुरातनम् ।
स च सौख्यमवाप्नोति यत्र यत्राभिजायते ॥
वापीकूपतडागानां सदा त्रिदशवेश्मनाम् ।
भूयः संस्कारकर्ता च लभते मुक्तिजं फलम् ॥
देवसंपूजनाद्राम वृद्धिं समुपगच्छति ।
राज्ञस्तु विषये यस्य पूज्यन्ते सततं सुराः ॥
अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
राक्षसाश्च पिशाचाश्च रिपवश्च सुदारुणाः ॥
ईतयश्च तथैवान्या न भवन्ति द्विजोत्तम ॥
तस्मात्प्रयत्नेन सदा नरेन्द्रैः
पूजा विधेया विषये सुराणाम् ।
सुरार्चनात्पूतसमस्तपापाः
स्वर्गं क्षितीशाश्चिरमाप्नुवन्ति ॥

ब्राह्मणरक्षणम्

पुष्कर उवाच-

[3]ब्राह्मणान् पूजयेद्राजा ब्राह्मणान् पालयेत्सदा ।
ब्राह्मणा हि महाभाग देवानामपि दैवतम् ॥

(१) विध. २।३१।४३ ; राप्र. १२८ उत्त.

(२) विध. २।३१।४४-५०.

(३) विध. २।३२।१ ; राप्र. १२८ महाभाग (महाभागा) दैवतम् (देवता).

[1]ब्राह्मणानां क्षितिं दद्याद्भोगानन्यांश्च पार्थिवः ।
ब्राह्मणेषु तु यद्दत्तं निधिस्तत्पारलौकिकम् ॥

ब्राह्मणानामिति षष्ठी चतुर्थ्यर्थे । ब्राह्मणानां क्षितिं दत्वा स्वमुद्राङ्कितं पत्रमपि दद्यात् । राप्र. १२८

[2]वेदलाङ्गलकृष्टेषु द्विजक्षेत्रेषु भारत ।
उप्तस्य दानबीजस्य फलस्यान्तो न विद्यते ॥
[3]ब्रह्मस्वं चैव नाऽऽदद्याद्ब्रह्मस्वं पालयेत्तथा ।
ब्रह्मस्वहरणाद्राम नरकं पश्यते नरः ॥
[4]न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं सप्तपूरुषम् ॥
[5]ब्रह्मस्वं प्रणयाद्भुक्तं हिनस्त्यासप्तमं कुलम् ।
द्रोहाद्भुक्तं तदेवेह कुलानां पातयेच्छतम् ॥
सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥

अत्र सुवर्णशब्दः परिणामविशिष्टसुवर्णवचनः । राप्र. १५०

[6]दृष्ट्वा विटं दुराचारं ब्राह्मणं न द्विषेत्कचित् ।
ब्राह्मणानां परीवादान्नाशमाप्नोति मानवः ॥
[7]न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम् ।
नैवास्ति ब्राह्मणवधात्पापं गुरुतरं कचित् ॥

(१) विध. २।३२।२ ; राप्र. १२८ पार्थिवः (पार्थिव) पू. : १३० निधिस्त (विधिव) उत्त.

(२) विध. २।३२।३ ; राप्र. १३० भारत (भार्गव).

(३) विध. २।३२।४ ; राप्र. १५० चैव ना (नैव चा) नरकं पश्यते (नरके पच्यते).

(४) विध. २।३२।५ ; राप्र. १५० सप्तपूरुषम् (सप्त पूरुषान्).

(५) विध. २।३२।६-७ ; राप्र. १५०.

(६) विध. २।३२।८ ; राप्र. १५० विटं (ऽविटं).

(७) विध. २।३२।९ ; राप्र. १५० ष्ववस्थितम् (ष्वपि स्थितम्).

[1]ब्रह्महा नरकं याति यावदाभूतसंप्लवम् ।
वर्षाणामयुतं राम पच्यते स्नायुपूरिते ॥

[2]शोणितं यावतः पांसून् संगृह्णाति द्विजन्मनाम् ।
क्षतात्तावन्ति वर्षाणि क्षतकृन्नरके वसेत् ॥

[3]उपद्रुतो द्विजो येन त्यजेज्जीवितमात्मनः ।
ब्रह्महत्या भवेत्तस्य नात्र कार्या विचारणा ॥

[4]देहत्यागाच्च नरकं ब्राह्मणोऽपि प्रपद्यते ।
तेन चाधिकमाप्नोति राम पापं नराधमः ॥

अदैवं दैवतं कुर्युः कुर्युर्दैवमदैवतम् ।
ब्राह्मणाश्च महाभागा नमस्यास्ते सदैव हि ॥

ब्राह्मणानां तथा कार्यं यत्नात्कुर्वीत पार्थिवः ।
कालातिपातं च तथा विप्रकार्ये न कारयेत् ॥

निष्पीडितस्तूपवसेद्येन विद्वान्निशां जनः ।
स राम नरकं याति वर्षाणां तु दशायुतम् ॥

ब्राह्मणी रुदती हन्ति कुलं रोदयतो ध्रुवम् ।
तदश्रुवह्निर्दहति कुलं त्रिपुरुषं ध्रुवम् ॥

विद्वानप्यथवाऽविद्वान् ब्राह्मणो मानमर्हति ।
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्द्विजपुङ्गव ॥

प्रतिष्ठां प्राप्नुवन्तीह सुरा विप्रप्रतिष्ठिताः ॥

तन्मुखे तु तथाऽश्नन्ति देवाश्च पितृभिः सह ।
वह्नौ हुताच्छ्रेष्ठतमं हुतं विप्रमुखाग्निषु ॥

अस्कन्नमविरुद्धं च प्रायश्चित्तैर्विवर्जितम् ।
यावतो ग्रसते ग्रासान् विद्वान् विप्रः सुसंस्कृतः ॥

अन्नप्रदस्य तावन्तः क्रतवः परिकीर्तिताः ।
ब्राह्मणानां करान्मुक्तं तोयं शिरसि धारयेत् ॥

ब्राह्मणस्य करे यस्मात्सर्वतीर्थसमागमः ।
ब्राह्मणेभ्यः समुत्पन्नं त्रैलोक्यं सचराचरम् ॥

अमोघशापा धर्मज्ञ कथितास्ते जगत्त्रये ।
आशीर्वादममोघं च ब्राह्मणानां प्रकीर्तितम् ॥

आशीर्वादपराः कार्यास्तस्माद्राज्ञा द्विजोत्तमाः ।
यैः कृतः सर्वभक्ष्योऽग्निरपेयश्च महोदधिः ॥

क्षयी सोमोऽजवृषणस्तथैव च शतक्रतुः ।
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति ॥

विपुलश्च तथा येषां प्रसादो भृगुनन्दन ।
येषां प्रसादात्क्षीणोऽपि वृद्धिमिच्छति चन्द्रमाः ॥

येषां प्रसादाद्रक्षोभिर्नोभिभूयेत भास्करः ।
येषां प्रसादाद्विपुलां कार्तवीर्यः श्रियं गतः ॥

येषां प्रसादाद्धनदो धनाध्यक्षत्वमागतः ।
अस्नातः स्नानमाप्नोति व्रतमाप्नोत्यथाव्रती ॥

येषां वचनमात्रेण किंभूतमधिकं ततः ।
भोगं राज्यं तथा स्वर्गं येषां वाक्येन लभ्यते ॥

अपावनकरः क्रोधो येषां राम सदा स्थितः ।
ते पूज्यास्ते च सत्कार्यास्तेषां दाराणि दापयेत् ॥

धारयन्ति जगत्सर्वं ब्राह्मणा वेदपारगाः ।
देवानाप्याययन्तीह ब्राह्मणा भृगुनन्दन ॥

ते तृप्तास्तर्पयन्तीह भुवनं सकलं सुराः ।
ब्राह्मणेनाऽऽहुतिर्दत्ता वह्नौ भृगुकुलोद्वह ॥

आदित्यमाप्नोत्यादित्याद्वृष्टिर्भवति भूतले ।
अन्नस्य च तथोत्पत्तिरन्नाद्भूतोद्भवः स्मृतः ॥

तस्मात्त्रिभुवनं सर्वं ब्राह्मणैरेव धार्यते ।
ब्राह्मणप्रभवा भूमिर्ब्राह्मणप्रभवा दिवः ॥

ब्राह्मणानामिमे लोकाः परलोकास्तथैव च ।
इज्यास्वाध्यायतपसामुपरोधाद्यदा द्विजाः ॥

स्वाम्यं भुवि न विन्दन्ति क्षत्रियास्तु तदा कृताः ।
ब्राह्मणानां वचः कार्यं राजभिः सततोत्थितैः ॥

धर्ममर्थं च कामं च तेषां वाचि प्रतिष्ठितम् ।
ब्राह्मणानां तु वाक्येन निग्रहानुग्रहावुभौ ॥

---

(१) विध. २।३२।१० ; राप्र. १५१ स्नायुपूरिते ( चावगूरिते ).

(२) विध. २।३२।११ पांसून् संगृह्णाति ( पांशून् गृह्णातीह ) क्षतात्ता ( कर्ता ता ) क्षत (कृत) ; राप्र. १५१.

(३) विध. २।३२।१२ ; राप्र. १५१.

(४) विध. २।३२।१३-४२.

लोके कार्यो भूमिभृता भूतिकामेन नित्यदा ।
राजा ब्राह्मणवाक्येन यः कुर्याच्छासनादिकम् ॥

सम्यग्वाऽप्यथवाऽसम्यक्तेन नाके महीयते ।
उल्लङ्घ्य शास्त्रं नृपतिर्यो यथारुचि वर्तते ॥

स राम नरकं याति सुकृतेनापि कर्मणा ।
यत्र ब्राह्मणवाक्यानि न करोतीह यो नरः ॥

न तत्र दोषवान् विप्रो राजा दोषेण लिप्यते ।
ब्राह्मणं दशवर्षं च शतवर्षं च भूमिपम् ॥

पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ।
यस्य राज्ञस्तु विषये ब्राह्मणः सीदति क्षुधा ।
तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ॥

[१]तस्मात्पूज्या नमस्कार्याः संविभाज्यास्तथा द्विजाः ।
राज्ञा सर्वप्रयत्नेन लोकद्वयमभीप्सता ॥

यद्ब्राह्मणास्तुष्टतमा वदन्ति
तद्देवताः प्रत्यभिनन्दयन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति
प्रत्यक्षदेवेषु परोक्षदेवाः ॥

साध्वीनां पालनम्

पुष्कर उवाच–
[२]साध्वीनां पालनं कुर्यात्पूजनं च महीपतिः ।
एकपत्न्यः स्त्रियः सर्वा धारयन्ति जगत्त्रयम् ॥

[३]नाऽऽहूयेदपराधेषु दण्डयस्तासां पतिर्भवेत् ।
पुत्रो वाऽप्यथवा(ऽऽ)नीतौ नैव राजा प्रभुः
क्वचित् ॥

[४]नमस्कार्याश्च पूज्याश्च वन्दनीयाश्च भार्गव ।
राज्ञा सर्वप्रयत्नेन तथा लोकैश्च सर्वशः ॥

(१) विध. २।३२।४४–४५ ; राप्र. १३०.

(२) विध. २।३३।१ ; राप्र. १३०.

(३) विध. २।३३।५ ; राप्र. १३१ नाहूये ( नाह्वये ) पू.

(४) विध. २।३३।८.

[१]अनाथां च तथा साध्वीं बिभृयात्पार्थिवोत्तमः ।
तस्यै यद्दीयते दानं तदनन्तं प्रकीर्तितम् ॥

गवां पालनम्

[२]गवां हि पालनं राज्ञा कर्तव्यं भृगुनन्दन ।
गावः पवित्राः संगत्या गोषु लोकाः प्रतिष्ठिताः ॥

गर्भिणीवद्वर्तनम् , प्रजासुखकर्तव्यता

[३]नित्यं राज्ञा तथा भाव्यं गर्भिणीसहधर्मिणा ।
यथा स्वं सुखमुत्सृज्य गर्भस्य सुखमावहेत् ॥

गर्भिणी तद्वदेवेह भाव्यं भूपतिना सदा ।
*प्रजासुखं तु कर्तव्यं सुखमुद्दिश्य चाऽऽत्मनः ॥

किं यज्ञैस्तपसा तस्य प्रजा यस्य सुरक्षिताः ।
सुरक्षिताः प्रजास्तस्य स्वर्गस्तस्य गृहोपमः ॥

अरक्षिताः प्रजा यस्य नरकं तस्य मन्दिरम् ।
राजा षड्भागमादत्ते सुकृताद्दुष्कृतादपि ॥

धर्मो नाम महाभाग संपद्रक्षणतत्परः ।
अरक्षितस्तथा सर्वं पापमाप्नोति भार्गव ॥

नैव किंचिदवाप्नोति पुण्यभाक् पृथिवीपतिः ।
आपन्नमपि धार्मिष्ठं प्रजा रक्षत्यथापदि ॥

तस्माद्धर्मार्थकामेन प्रजा रक्ष्या महीक्षिता ।
सुभगैश्चाथ दुर्वृत्तराजवल्लभतस्करैः ॥

भक्ष्यमाणाः प्रजा रक्ष्याः कायस्थैश्च विशेषतः ।
रक्षितास्तद्भयेभ्यस्तु प्रजा राज्ञां भवन्ति ताः ॥

* 'प्रजासुखं तु कर्तव्यं' इत्यारभ्य 'सदा कुर्याज्जितेन्द्रियः' इत्यन्तानां श्लोकानां व्याख्यानसंग्रहः 'प्रकृतयः– राष्ट्रम्' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(१) विध. २।३३।९ ; राप्र. १३१ तथा ( सदा ) तस्यै ( तस्यां ).

(२) विध. २।४२।१ ; राप्र. १३१ पू.

(३) विध. २।६१।२२–३१. शेषः स्थलादिनिर्देशः 'प्रकृतयः– राष्ट्रम्' इत्यत्र द्रष्टव्यः ।

अरक्षिता सा भवति तेषामेवेह भोजनम् ।
साधुसंरक्षणार्थाय राजा दुष्टनिबर्हणम् ॥
तृणानामिव निर्माता सदा कुर्याजितेन्द्रियः ॥

बालदायादिवित्तरक्षणम्, चौरेभ्यो रक्षा चोरहृतधनप्रतिदानं च

[1]बालदायादिकं रिक्थं तावद्राजा तु पालयेत् ।
यावत्स स्यात्समावृत्तो यावद्वाऽतीतशैशवः ॥
[2]बालपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥
[3]जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
ताञ्शिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥

बालकादीनां धनं राज्ञैव रक्ष्यमित्युक्तम्– बालेति ।
राप्र. १२६

[4]सर्वेषामेव वर्णानां चौरैरपहृतं धनम् ।
तत्प्रमाणं स्वकात्कोशाद्दातव्यमविचारयन् ॥
[5]ततस्तु पश्चात्कर्तव्यं चौरान्वेषणमञ्जसा ।
चौररक्षाधिकारिभ्यो राजाऽपि तदवाप्नुयात् ॥

तथा चौरैरपहृतं प्रजाद्रव्यं राज्ञा स्वकोशाद्दातव्यमित्युक्तम्– सर्वेषामिति । राप्र. १२६

[6]अहृते च तथा वित्ते हृतमित्येव वादिनम् ।
निर्धनं पार्थिवः कृत्वा विषयात्स्वाद्विवासयेत् ॥

आहृते चौरान्वेषिभिरिति शेषः । हृतमित्येव वेदिनं चौरैरपहृतं न मया प्राप्तमिति निवेदयितारं चौरान्वेषिणं मिथ्यावादितया प्रमाणैर्निर्णीय निर्धनं कृत्वा स्वदेशाद्विवासयेदिति व्याख्येयम् । राप्र. १२७

[1]न तद्राज्ञा प्रदातव्यं गृहे यत्परिचारकैः ।
प्रचरद्भिर्हृतं द्रव्यं कार्यं तत्रान्ववेक्षणम् ॥

यत्तु धनस्वामिन एव परिचारकैर्नीतं तत्तु राज्ञा न देयमित्युक्तम्– न तदिति । अन्ववेक्षणम्, तर्जनताडनादिना तत्परिचारकेभ्यो दापनीयम्, न तु स्वयं दातव्यमित्यर्थः । राप्र. १२७

श्रोत्रियरक्षणम्

[2]न च क्षुधाऽवसीदेत श्रोत्रियो विषये वसन् ॥
[3]यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ।
तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ॥
[4]श्रुतवृत्ते तु विज्ञाय वृत्तिं तस्य प्रकल्पयेत् ।
रक्षेच्च सर्वतस्त्वेनं पिता पुत्रमिवौरसम् ॥
[5]संरक्ष्यमाणो राज्ञा यः कुरुते धर्मसंग्रहम् ।
तेनाऽऽयुर्वर्धते राज्ञो द्रविणं राष्ट्रमेव च ॥

स्वविषये क्षुधाऽवसद्यमानस्य श्रोत्रियस्य वृत्तिकल्पनमपि राज्ञ आवश्यकमित्युक्तम्– न चेत्यादिना ।
राप्र. १२७

अन्योन्याश्रिता धर्मार्थकामपुरुषार्थाः

पुष्कर उवाच–
[6]धर्मश्चार्थश्च कामश्च पुरुषार्थः परः स्मृतः ।
अन्योन्यरक्षणात्तेषां सेवा कार्या महीक्षिता ॥
धर्ममूलोऽर्थविटपस्तथा कामफलो महान् ।
त्रिवर्गपादपस्तस्य रक्षणात्फलभाग् भवेत् ॥

---

(१) विध. २।६१।४६ ; राप्र. १२६.

(२) विध. २।६१।४७ पुत्रासु (पुत्रेषु) ; राप्र. १२६.

(३) विध. २।६१।४८ तद्धरेयुः (धारयेयुः); राप्र. १२६.

(४) विध. २।६१।४९ मविचार (मविधार) ; राप्र. १२६.

(५) विध. २।६१।५० ; राप्र. १२६.

(६) विध. २।६१।५१ ; राप्र. १२७ अहृते (आहृते) वादिनम् (वेदिनम्).

(१) विध. २।६१।५२ ; राप्र. १२७.

(२) विध. २।६१।६४ ; राप्र. १२७.

(३) विध. २।६१।६५ ; अग्नि. २२३।३०–३१ दुर्भिक्षव्याधि (व्याधिदुर्भिक्ष) ; राप्र. १२७.

(४) विध. २।६१।६६ ; अग्नि. २२३।३१–३२ श्रुतवृत्ते तु (श्रुतं वृत्तं च) ; राप्र. १२७ स्त्वेनं (स्त्वेतान्).

(५) विध. २।६१।६७ ; अग्नि. २२३।३२–३३ संग्रहम् (मन्वहम्) ; राप्र. १२७ अग्निवत्.

(६) विध. २।६२।१–५.

धर्माविरोधिनी कार्या कामसेवा सदैव तु ।
मूलच्छेदे भवेन्नाशो विटपस्य फलस्य च ॥
कामसेवाविहीनस्य धर्मार्थावपि निष्फलौ ।
ओषधीनां फलार्थाय कीनाशो यत्नवांस्तथा ॥
कामार्थी यत्नवानेवं लाभे धर्मार्थयोर्द्विज ॥

हंसोक्ता राजनीतिः– स्वधर्मस्थापनं स्वदेशपालनं इन्द्रियजयः शक्तियुक्तिसाधनं च

हंस उवाच–

[1]स्वे स्वे धर्मे व्यवस्थानं वर्णानां पृथिवीपतेः ।
परो धर्मः सदा प्रोक्तस्तत्र यत्नपरो भवेत् ॥

व्यवस्थानं व्यवस्थापनम् । राप्र. १२१

[2]देवब्राह्मणगोसाध्वीसाधूनामपि पूजनम् ।
निग्रहश्चैव दुष्टानां नृपतेर्धर्मकारणम् ॥
[3]समता व्यवहारेषु स्वयं चैवान्ववेक्षणम् ।
राज्ञां धर्मं परं विद्यात्तथा वै चारदृष्टिता ॥

(अन्ववेक्षणम्) व्यवहाराणामिति शेषः । तदुक्तं याज्ञवल्क्येन– 'व्यवहारान् नृपः पश्येत्' (यास्मृ. २।१) इति । राप्र. १२२

[4]स्वदेशपालनं धर्मः परराष्ट्राभिमर्दनम् ।
यज्ञदानक्रिया चैव संग्रामे चापलायनम् ॥
[5]इन्द्रियाणां जये यत्नः सदा स्याद्द्विजपुङ्गवाः ॥
ततो भृत्यजयः कार्यः समस्तविजयस्ततः ।
कामः क्रोधो मदो लोभो मानो हर्षस्तथैव च ॥
आभ्यन्तरा विजेतव्या रिपवः षण्महीभुजा ।
ततस्तु शत्रवो जेयाः कुल्याश्चेतरकृत्रिमाः ॥
भूमिमित्रहिरण्यानामर्जने यत्नवान् भवेत् ।
धर्मार्थकामसेवा च सदा कार्या महीक्षिता ॥

(१) विध. ३।३२३।१ यत्नपरो भवेत् (यत्र भवेन्नरः); राप्र. १२१.
(२) विध. ३।३२३।२; राप्र. १२२ पू.
(३) विध. ३।३२३।३; राप्र. १२२ चार (चर).
(४) विध. ३।३२३।४; राप्र. १२२.
(५) विध. ३।३२३।७–१०.

देवमन्त्रप्रभूत्साहशक्तियुक्तस्तथा भवेत् ।
मङ्गलाचारयुक्तानां सिध्यन्ते दैवशक्तयः ॥
चतुरङ्गबलं कुर्यात्सुभृतं च तथा नृपः ।
कर्मणा मनसा वाचा सदा लोकं प्रसादयेत् ॥
महत्वाऽऽवरणं कार्यं नित्यमेव समृद्धये ॥

यज्ञानुष्ठानम्, देवतायतनादिनिर्माणम्, दुष्टदण्डादीनि पञ्च कर्तव्यानि, गजतुरगाभिषेकः, खड्गधारणम्

[1]कुलीनां रूपसंपन्नां सवर्णां च नराधिपः ।
कुर्याद्भार्यां सुशीलां च विनीतां धर्मवत्सलाम् ॥
तया सह सदा राजा गृहस्थाश्रमचोदितम् ।
पञ्चयज्ञविधानं तु कारयेत पुरोहितम् ॥
यजेच्च विविधैर्यज्ञैः पूजयेद्देवतास्तथा ।
देवतायतनान् कूपांस्तडागांश्चैव कारयेत् ॥
उद्यानानि विचित्राणि गोब्राह्मणगृहाणि च ।
दुष्टदण्डः सतां पूजा धर्मेण च धनार्जनम् ॥
राष्ट्ररक्षा समत्वं च व्यवहारेषु पञ्चकम् ।
भूमिपानां महायज्ञाः सर्वकल्मषनाशनाः ॥
गणं (? जं) लक्षणसंयुक्तं तुरगं चाभिषेचयेत् ।
सलक्षणं तथा रत्नं खड्गकं बिभृयान्नपः ॥

पाषण्डनैगमश्रेणीपूगव्रातगणानां समयपालनम्

हंस उवाच–

[2]पाषण्डनैगमश्रेणीपूगव्रातगणादिषु ।
संरक्षेत्समये राजा दुर्गे जनपदे तथा ॥
यो धर्मः कारयेच्चैषां चोपस्थानविधिश्च यः ।
यश्चैषां वृत्त्युपादानं चानुमन्येत तत्तथा ॥
प्रतिकूलं तु यद्राज्ञः प्रकृत्यवमतं च यत् ।
बाधकं च यदर्थानां तत्तेभ्यो विनिवर्तयेत् ॥
मिथः संघातकरणं त्विह ते शस्त्रधारणम् ।
परस्परोपघातं च तेषां राजा न मर्षयेत् ॥

(१) विध. ३।३२३।१२–१४.
(२) विध. ३।३२३।२२–२७.
(३) विध. ३।३३६।१–६.

पृथग्गणांश्च यो भिन्द्यात्ते विनेया विशेषतः ।
आवहेयुर्भयं घोरं व्याधिं वा ते ह्य(? ह्यु)पेक्षिताः ॥
दोषवत्करणं यत्स्यादनाम्नायं प्रकल्पितम् ।
प्रवृत्तमपि तद्राजा श्रेयःकामो निवर्तयेत् ॥

तस्करा दण्ड्याः, स्तेन-महापातकि-
विप्रविवासनं कर्तव्यम्

[1]धनं धर्मार्थकामानां मूलमाहुर्मनीषिणः ।
नृणां बहिश्चराः प्राणा द्रविणं च प्रकीर्तितम् ॥
तस्माद्धर्मविदा राज्ञा घातनीयास्तु तस्कराः ।
ते हि घातनमर्हन्ति सर्वा बाधा विशेषतः ॥
राज्ञो धर्मं न पश्यामि तस्करस्य वधादृते ।
स्नेहाद्वा धनलोभाद्वा राजा चेत्तस्करं त्यजेत् ॥
ब्रह्मवध्याशतं तस्य प्राहुर्धर्मविदो जनाः ।
न हन्याद्ब्राह्मणं राजा सर्वपापेष्ववस्थितम् ॥
स्तेनं विवासयेद्राष्ट्रात्समग्रधनमक्षतम् ।
महापातकिनं विप्रं कृतचिह्नं विवासयेत् ॥

## गरुडपुराणम्

बृहस्पत्युक्ता राजनीतिः- क्षितिपालनं शत्रुजयः अपीडनेन
परराष्ट्रभोगः इन्द्रियजयः युक्तियुक्तशास्त्रयुक्तयोरलङ्घनं
षड्विध उत्साहश्च

सूत उवाच--
[2]पार्थिवस्य तु वक्ष्यामि भृत्यानां चैव लक्षणम् ।
सर्वाणि हि महीपालः सम्यङ् नित्यं परीक्षयेत् ॥
राज्यं पालयते नित्यं सत्यधर्मपरायणः ।
निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥
पुष्पात्पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारण्ये न यथाऽङ्गारकारकः ॥
दोग्धारः क्षीरभुञ्जाना विकृतं तन्न भुञ्जते ।
परराष्ट्रं महीपालैर्भोक्तव्यं न च दूषयेत् ॥
नोधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी लभते पयः ।
एवं राष्ट्रं प्रयोगेण पीड्यमानं न वर्धते ॥

(१) विध. ३।३३८।१-५.
(२) गरुड. १।१११।१-८.

तस्मात्सर्वप्रयत्नेन पृथिवीमनुपालयेत् ।
पालकस्य भवेद्भूमिः कीर्तिरायुर्यशो बलम् ॥
अभ्यर्च्य विष्णुं धर्मात्मा गोब्राह्मणहिते रतः ।
प्रजाः पालयितुं शक्तः पार्थिवो विजितेन्द्रियः ॥
ऐश्वर्यमध्रुवं प्राप्य राजा धर्मे मतिं चरेत् ।
क्षणेन विभवो नश्येन्नाऽऽत्मायत्तं धनादिकम् ॥
एतदर्थं हि विप्रेन्द्रा राज्यमिच्छन्ति भूभृतः ।
यदेषां सर्वकार्येषु वचो न प्रतिहन्यते ॥
[1]एतदर्थं हि कुर्वन्ति राजानो धनसंचयम् ।
रक्षयित्वा तु चाऽऽत्मानं यद्धनं तद्द्विजातये ॥
[2]यस्य पुत्राश्च भृत्याश्च मन्त्रिणश्च पुरोहिताः ।
इन्द्रियाणि प्रसुप्तानि तस्य राज्यं चिरं न हि ॥
येनार्जितास्त्रयोऽप्येते पुत्रा भृत्याश्च बान्धवाः ।
जिता तेन समं भूपैश्चतुरब्धिर्वसुन्धरा ॥
लङ्घयेच्छास्त्रयुक्तानि हेतुयुक्तानि यानि च ।
स हि नश्यति वै राजा इह लोके परत्र च ॥
[3]मनस्तापं न कुर्वीत आपदं प्राप्य पार्थिवः ।
समबुद्धिः प्रसन्नात्मा सुखदुःखे समो भवेत् ॥
[4]धीराः कष्टमनुप्राप्य न भवन्ति विषादिनः ।
प्रविश्य वदनं राहोः किं नोदेति पुनः शशी ॥
[5]धिग्धिक् शरीरसुखलालितमानवेषु
मा खेदयेद्धनकृशं हि शरीरमेव ।
सद्दारका ह्यधनपाण्डुसुताः श्रुता हि
दुःखं विहाय पुनरेव सुखं प्रपन्नाः ॥

(१) गरुड. १।१११।१३-१४.
(२) गरुड. १।१११।२०-२२.
(३) गरुड. १।१११।२३ ; राप्र. १४६ दुःखे समो (दुःखसमो).
(४) गरुड. १।१११।२४ ; राप्र. १४६ धीराः (वीराः) प्राप्य (प्राप्ता) विषादिनः (विषादिताः) होः किं नोदेति (होर्विनोदति).
(५) गरुड. १।१११।२५-२६.

गन्धर्वविद्यामालोक्य वाद्यं च गणिकागणान् ।
धनुर्वेदार्थशास्त्राणि लोके रक्षेच्च भूपतिः ॥
[1]कारणेन विना भृत्ये यस्तु कुप्यति पार्थिवः ।
स गृह्णाति विषोन्मादं कृष्णसर्पविसर्जितम् ॥
[2]चापलाद्वारयेद्दृष्टिं मिथ्यावाक्यं च वारयेत् ।
मानवे श्रोत्रिये चैव भृत्यवर्गे सदैव हि ॥
[3]लीलां करोति यो राजा भृत्यस्वजनगर्वितः ।
शासने सर्वदा क्षिप्रं रिपुभिः परिभूयते ॥

लीलां क्रीडाम् । वादे वाक्कलहे । विग्रहे शस्त्रसाध्ये संग्रामे । राप्र. १४६

[4]हुङ्कारे भ्रुकुटीं नैव सदा कुर्वीत पार्थिवः ।
विना दोषेण यो भृत्यान् राजाऽधर्मेण शास्ति च ॥
लीलासुखानि भोग्यानि त्यजेदिह महीपतिः ।
सुखप्रवृत्तैः साध्यन्ते शत्रवो विग्रहे स्थितैः ॥
उद्योगः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
षड्विधो यस्य उत्साहस्तस्य देवोऽपि शङ्कते ॥
उद्योगेन कृते कार्ये सिद्धिर्यस्य न विद्यते ।
दैवं तस्य प्रमाणं हि कर्तव्यं पौरुषं सदा ॥

सावशेषकार्यकरणम्, अविश्वासित्वं सर्वत्र, मृदुत्वक्रूरत्वादिविवेकः

[5]सावशेषाणि कार्याणि कुर्वन्नर्थैश्च युज्यते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥
[6]न विश्वसेदविश्वस्तं विश्वस्तं नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥
वैरिणा सह संधाय विश्वस्तो यदि तिष्ठति ।
स वृक्षाग्रे प्रसुप्तो हि पतितः प्रतिबुध्यते ॥
नात्यन्तं मृदुना भाव्यं नात्यन्तं क्रूरकर्मणा ।
मृदुनैव मृदुं हन्ति दारुणेनैव दारुणम् ॥
नात्यन्तं सरलैर्भाव्यं नात्यन्तं मृदुना तथा ।
सरलास्तत्र च्छिद्यन्ते कुब्जास्तिष्ठन्ति पादपाः ॥
नमन्ति फलिनो वृक्षा नमन्ति गुणिनो जनाः ।
शुष्कवृक्षाश्च मूर्खाश्च भिद्यन्ते न नमन्ति च ॥

(१) गरुड. १।१११।२७ ; राप्र. १४६ सर्पविसर्जितम् (सर्पेण दंशितः).

(२) गरुड. १।१११।२८.

(३) गरुड. १।१११।२९ ; राप्र. १४६ भृत्यस्वजनगर्वितः (भृत्ये सज्जनगर्विते) शासने सर्वदा (स वादे विग्रहे).

(४) गरुड. १।१११।३०-३३.

(५) गरुड. १।११३।४.

(६) गरुड. १।११४।४७-५१.

## ब्रह्मपुराणम्

शिष्टपालनं दुष्टनिग्रहश्च

[1]दानानि दद्यादिच्छातो द्विजेभ्यः क्षत्रियोऽपि हि ।
यजेच्च विविधैर्यज्ञैरधीयीत च भो द्विजाः ॥
शस्त्राजीवो महीरक्षा प्रवरा तस्य जीविका ।
तस्यापि प्रथमे कल्पे पृथिवीपरिपालनम् ॥
धरित्रीपालनेनैव कृतकृत्या नराधिपाः ।
भवन्ति नृपते रक्षा यतो यज्ञादिकर्मणाम् ॥
दुष्टानां शासनाद्राजा शिष्टानां परिपालनात् ।
प्राप्नोत्यभिमताँल्लोकान् वर्णसंस्थापको नृपः ॥

## ब्रह्मवैवर्तपुराणम्

शिष्टपालनं दुष्टनिग्रहश्च

[2]यो राजा स पिता पाता प्रजानामेव निश्चितम् ॥
पालयन्ति यथा भूपाः प्रजाः पुत्रानिवौरसान् ।
प्रजास्त्रियं च पश्यन्ति राजानो मातरं यथा ॥
यज्ञं कुर्वन्ति विष्णोश्च सेवनं देवविप्रयोः ।
निवारणं च दुष्टानां शिष्टानां प्रतिपालनम् ॥
इति धर्मः क्षत्रियाणां कथितो ब्रह्मणा पुरा ॥

(१) ब्रह्म. २२२।७-१०.

(२) ब्रह्मवै. ४।५९।५५, ७४-७६.

## अग्निपुराणम्

**पुष्करोक्ता अग्निकथिता च राजनीतिः**– राजशब्द-निरुक्तिः, दुर्गे वसतिः, देवालयनिर्माणं देवपूजनं च, ब्राह्मणपालनं साध्वीपालनं बालानाथरक्षणं च, चौरहृतद्रव्यप्रत्यर्पणम्

**अग्निरुवाच–**

[1]पुष्करेण च रामाय राजधर्मं हि पृच्छते ।
यथाऽऽदौ कथितं तद्वद्वसिष्ठ कथयामि ते ॥

**पुष्कर उवाच–**

[2]राजधर्मं प्रवक्ष्यामि सर्वस्माद्राजधर्मतः ।
राजा भवेच्छत्रुहन्ता प्रजापालः सुदण्डवान् ॥
[3]पालयिष्यामि वः सर्वान् धर्मस्थान् व्रतमाचरेत् ।
संवत्सरं स वृणुयात्पुरोहितमथ द्विजम् ॥
मन्त्रिणश्चाखिलात्मज्ञान् महिषीं धर्मलक्षणाम् ॥
[4]रागापरागौ भृत्यानां जनस्य च गुणागुणान् ।
शुभानामशुभानां च ज्ञानं कुर्याद्वशाय च ॥
अनुरागकरं कर्म चरेज्जह्याद्विरागजम् ।
जनानुरागया लक्ष्म्या राजा स्याज्जनरञ्जनात् ॥
[5]वास्तुलक्षणसंयुक्ते वसन् दुर्गे सुरान् यजेत् ।
प्रजाश्च पालयेद्दुष्टाञ्जयेद्दानानि दापयेत् ॥
देवद्रव्यादिहरणात्कल्पं तु नरके वसेत् ।
देवालयानि कुर्वीत देवपूजारतो नृपः ॥
सुरालयाः पालनीयाः स्थापनीयाश्च देवताः ।
मृन्मयाद्दारुजं पुण्यं दारुजादिष्टकामयम् ॥
ऐष्टकाच्छैलजं पुण्यं शैलजात्स्वर्णरत्नजम् ।
क्रीडन् सुरगृहं कुर्वन् भुक्तिमुक्तिमवाप्नुयात् ॥

(१) अग्नि. २१८।१; राप्र. १० यथा (यदा) तद्वद्वसिष्ठ (तद्वद्विशिष्टं).
(२) अग्नि. २१८।२; राप्र. १० सर्वस्माद्रा (स्याद्राजा रा) पू.
(३) अग्नि. २१८।३–४.
(४) अग्नि. २२०।२३–२४.
(५) अग्नि. २२२।१०–१९.

चित्रकृद्गीतवाद्यादिप्रेक्षणीयादिदानकृत् ।
तैलाज्यमधुदुग्धाद्यैः स्नाप्य देवं दिवं व्रजेत् ॥
पूजयेत्पालयेद्विप्रान् द्विजस्वं न हरेन्नृपः ।
सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम् ॥
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ।
दुराचारं न द्विषेच्च सर्वपापेष्वपि स्थितम् ॥
नैवास्ति ब्राह्मणवधात्पापं गुरुतरं क्वचित् ।
अदैवं दैवतं कुर्युः कुर्युर्दैवमदैवतम् ॥
ब्राह्मणा हि महाभागास्तान्नमस्येत्सदैव तु ।
ब्राह्मणी रुदती हन्ति कुलं राज्यं प्रजास्तथा ॥
साध्वीस्त्रीणां पालनं च राजा कुर्याच्च धार्मिकः ॥
[1]बालदायादिकं रिक्थं तावद्राजाऽनुपालयेत् ॥
यावत्स्यात्स समावृत्तो यावद्वाऽतीतशैशवः ।
बालपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ॥
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ।
जीवन्तीनां तु तासां ये संहरेयुश्च बान्धवाः ॥
ताञ्शिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ।
सामान्यतो हृतं चौरैस्तद्वै दद्यात्स्वयं नृपः ॥
चौररक्षाधिकरिभ्यो राजाऽपि हृतमाप्नुयात् ।
अहृते यो हृतं ब्रूयान्निःसार्यो दण्ड्य एव सः ॥
न तद्राज्ञा प्रदातव्यं गृहे यद् गृहगैर्हृतम् ॥

अन्तःपुरम्, धर्मार्थकामाः पुरुषार्थाः, इन्द्रियजयः, भृत्यजयः, अनाथरक्षणम्, स्वधर्मरक्षणम्, बकासिंहाद्यनुकरणम्

**पुष्कर उवाच–**

[2]वक्ष्येऽन्तःपुरचिन्तां च धर्माद्याः पुरुषार्थकाः ।
अन्योन्यरक्षया तेषां सेवा कार्या स्त्रिया नृपैः ॥
धर्ममूलोऽर्थविटपस्तथा कामफलो महान् ।
त्रिवर्गपादपस्तत्र रक्षया फलभाग् भवेत् ॥
कामाधीनाः स्त्रियो राम तदर्थं रत्नसंग्रहः ।
सेव्यास्ता नातिसेव्याश्च भूभुजा विषयैषिणा ॥

(१) अग्नि. २२३।१८–२३.
(२) अग्नि. २२४।१–४.

आहारो मैथुनं निद्रा
सेव्या नाति हि रुग् भवेत् ।
मद्याधिकारे कर्तव्याः
स्त्रियः सेव्याः स्वरामिकाः ॥
[1]कामं क्रोधं मदं मानं लोभं दर्पं च वर्जयेत् ।
ततो भृत्यजयं कृत्वा पौरजानपदं जयेत् ॥
[2]राज्याङ्गद्रोहिणं हन्यात्काले तीक्ष्णो मृदुर्भवेत् ॥
एवं लोकद्वयं राज्ञो भृत्यैर्हासं विवर्जयेत् ।
भृत्याः परिभवन्तीह नृपं हर्षणसत्कथम् ॥
लोकसंग्रहणार्थाय कृतकव्यसनो भवेत् ।
स्मितपूर्वाभिभाषी स्याल्लोकानां रञ्जनं चरेत् ॥
दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत् ।
रागे दर्पे च माने च द्रोहे पापे च कर्मणि ॥
अप्रिये चैव वक्तव्ये दीर्घसूत्रः प्रशस्यते ॥
[3]पूज्या देवा द्विजाः सर्वे दद्याद्दानानि तेषु च ।
द्विजे दानं चाक्षयोऽयं निधिः कैश्चिन्न नाश्यते ॥
संग्रामेष्वनिवर्तित्वं प्रजानां परिपालनम् ।
दानानि ब्राह्मणानां च राज्ञो निःश्रेयसं परम् ॥
कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च तथैव परिकल्पयेत् ॥
वर्णाश्रमव्यवस्थानं कार्यं तापसपूजनम् ।
न विश्वसेच्च सर्वत्र तापसेषु च विश्वसेत् ॥
विश्वासयेच्चापि परं तत्त्वभूतेन हेतुना ।
बकवच्चिन्तयेदर्थं सिंहवच्च पराक्रमेत् ॥
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ।
दृढप्रहारी च भवेत्तथा शूकरवन्नृपः ॥
चित्राकारश्च शिखिवद् दृढभक्तिस्तथाऽश्ववत् ।
भवेच्च मधुराभाषी तथा कोकिलवन्नृपः ॥
काकशङ्की भवेन्नित्यमज्ञातां वसतिं वसेत् ।
नापरीक्षितपूर्वं च भोजनं शयनं स्पृशेत् ॥

(१) अग्नि. २२५।८.
(२) अग्नि. २२५।१२–१६.
(३) अग्नि. २२५।२३–३३.

नाविज्ञातां स्त्रियं गच्छेन्नाज्ञातां नावमारुहेत् ।
राष्ट्रकर्षी भ्रश्यते च राज्यार्थाच्चैव जीवितात् ॥
भृतो वत्सो जातबलः कर्मयोग्यो यथा भवेत् ।
तथा राष्ट्रं महाभाग भृतं कर्मसहं भवेत् ॥
सर्वं कर्मेदमायत्तं विधाने दैवपौरुषे ।
तयोर्दैवमचिन्त्यं हि पौरुषे विद्यते क्रिया ।
जनानुरागप्रभवा राज्ञो राज्यमहीश्रियः ॥

दण्डप्रणयनविधिः

[1]दण्डे सर्वं स्थितं दण्डो नाशयेद्दुष्प्रणीकृतः ।
अदण्ड्यान् दण्डयन्नश्येद्दण्ड्यान्राजाऽप्यदण्डयन् ॥
देवदैत्योरगनराः सिद्धा भूताः पतत्त्रिणः ।
उत्क्रमेयुः स्वमर्यादां यदि दण्डान्न पालयेत् ॥
यस्माददान्तान् दमयत्य(? त्या)दण्ड्यान् दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥

चतुर्विधं राजवृत्तं सामान्यधर्मः
सद्वृत्तं राजमहात्मवृत्तं च

अग्निरुवाच–
[2]नीतिस्ते पुष्करोक्ता तु रामोक्ता लक्ष्मणाय या ।
जयाय तां प्रवक्ष्यामि शृणु धर्मादिवर्धनीम् ॥
राम उवाच–
न्यायेनार्जनमर्थस्य वर्धनं रक्षणं चरेत् ।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥
[3]अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा ।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥
प्रजाः समनुगृह्णीयात्कुर्यादाचारसंस्थितिम् ।
वाक् सूनृता दया दानं हीनोपगतरक्षणम् ॥
इति वृत्तं सतां साधुहितं सत्पुरुषव्रतम् ।
आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ॥
को हि राजा शरीराय धर्मापेतं समाचरेत् ।
न हि स्वसुखमन्विच्छन् पीडयेत्कृपणं जनम् ॥

(१) अग्नि. २२६।१४–१६.
(२) अग्नि. २३८।१–२.
(३) अग्नि. २३८।१०–२२.

कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवम् ।
क्रियतेऽभ्यर्हणीयाय स्वजनाय यथाऽञ्जलिः ॥
ततः साधुतरः कार्यो दुर्जनाय शिवार्थिना ।
प्रियमेवाभिधातव्यं सत्सु नित्यं द्विषत्सु च ॥
देवास्ते प्रियवक्तारः पशवः क्रूरवादिनः ।
शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा ॥
देवतावद्गुरुजनमात्मवच्च सुहृज्जनम् ।
प्रणिपातेन हि गुरुं सतोऽमृषानुचेष्टितैः ॥
कुर्वीताभिमुखान् भृत्यैर्देवान् सुकृतकर्मणा ।
सद्भावेन हरेन्मित्रं संभ्रमेण च बान्धवान् ॥
स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतरं जनम् ।
अनिन्दा परकृत्येषु स्वधर्मपरिपालनम् ॥
कृपणेषु दयालुत्वं सर्वत्र मधुरा गिरः ।
प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे ॥
गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता ।
स्वसमृद्धिरनुत्सेकः परवृद्धिष्वमत्सरः ॥
अपरोपतापि वचनं मौनव्रतचरिष्णुता ।
बन्धुभिर्बद्धसंयोगः स्वजने चतुरश्रता ।
उचितानुविधायित्वमिति वृत्तं महात्मनाम् ॥

राजा सर्वप्राणिनामाजीव्यः, अध्यक्षनियोजनम्, अष्टवर्गानुपालनम्, प्रजानां पञ्चधा भयात् रक्षा, आत्मनः राष्ट्रस्य च रक्षा

[१]आजीव्यः सर्वसत्त्वानां राजा पर्जन्यवद्भवेत् ।
आयद्वारेषु चाऽऽप्त्यर्थं धनं चाऽऽददतीति च ॥
कुर्यादुद्योगसंपन्नानध्यक्षान् सर्वकर्मसु ।
कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् ॥
खन्याकरबलादानं शून्यानां च निवेशनम् ।
अष्टवर्गमिमं राजा साधुवृत्तोऽनुपालयेत् ॥
आमुक्तिकेभ्यश्चौरेभ्यः पौरेभ्यो राजवल्लभात् ।
पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम् ॥
अवेक्ष्यैतद्भयं काल आददीत करं नृपः ।
अभ्यन्तरं शरीरं स्वं बाह्यं राष्ट्रं च रक्षयेत् ॥
दण्ड्यांस्तान् दण्डयेद्राजा स्वं रक्षेच्च विषादितः ।
स्त्रियः पुत्रांश्च शत्रुभ्यो विश्वसेन्न कदाचन ॥

(१) अग्नि. २३९।४३-४८.

## देवीभागवतम्

दण्डः स्वधर्मस्थापकः

सूत उवाच–
[१]इत्युक्त्वा पितरं पुत्रः पादयोः पतितः शुकः ।
बद्धाञ्जलिरुवाचेदं गन्तुकामो महामनाः ॥
आपृच्छे त्वां महाभाग ग्राह्यं ते वचनं मया ।
विदेहान् द्रष्टुमिच्छामि पालितान् जनकेन तु ॥
विना दण्डं कथं राज्यं करोति जनकः किल ।
धर्मे न वर्तते लोको दण्डश्चेन्न भवेद्यदि ॥
धर्मस्य कारणं दण्डो मन्वादिप्रहितः सदा ।
स कथं वर्तते तात संशयोऽयं महान्मम ॥
मम माता त्वियं वन्ध्या तद्वद्भाति विचेष्टितम् ।
पृच्छामि त्वां महाभाग गच्छामि च परंतप ॥

## कामन्दकीयनीतिसारः

ग्रन्थप्रस्तावः

[२]दर्शनात्तस्य सुदृशो विद्यानां पारदृश्वनः ।
राजविद्याप्रियतया संक्षिप्तग्रन्थमर्थवत् ॥

(१) अथ सप्रयोजनं शास्त्रारम्भं श्लोकद्वयेनाऽऽह– दर्शनादित्यादि । राजविद्याविदां मतं यत्किंचिदुपदेक्ष्यामः, तद्विष्णुगुप्तस्य दर्शनादिति संबन्धः । दर्शनमाश्रित्य । सुदृश इति यथावदधिगतविद्यार्थत्वात् विशुद्धविज्ञानस्येत्यर्थः । यदाह– विद्यानां पारदृश्वन इति । राजविद्याप्रियतयेति । किंचिदेव शास्त्रं कस्यचित् प्रियम् । वयमर्थशास्त्रप्रियत्वाद्राजविद्याविदां मतमुपदेक्ष्यामः, नान्यशास्त्रविदाम् । संक्षिप्तग्रन्थं कौटिल्यशास्त्रात् । तद्धि साशीतिप्रकरणशतं षट्श्लोकसहस्रम् । इदं तु षट्त्रिंशत्प्रकरणं सपादं च श्लोकसहस्रम् । पुनरारम्भप्रयोजनमेतत् । एवं च मन्दबुद्धीनां सुबोधत्वज्ञापनार्थं काव्यचिह्नभूतं सर्गोप-

(१) देवीभाग. १।१७।१-५.
(२) कामी. १।७-८.

निबन्धनमस्योपपन्नम् । अर्थवत्, संक्षिप्तस्यापि सतः प्रकृष्टार्थाभिधानात् । जम.

( २ ) नमस्कारानन्तरं महाकाव्यस्वरूपनीतिसारस्य संबन्धाभिधेयप्रयोजनानि अभिधातुं श्लोकद्वयमाह- दर्शनादिति । तस्य परमगुरोर्विष्णुगुप्तस्य दर्शनात् ज्ञानदृष्ट्या यद् दृष्टं तदेव उपदेक्ष्याम इति संगतिः । महासंबन्धश्चायं गुरुपर्वक्रमागतः । तथा चोक्तम्- ' ब्रह्माऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् । तन्नारदेन शक्रेण गुरुणा भार्गवेण च ॥ भारद्वाजविशालाक्षभीष्मपाराशरैस्तथा । संक्षिप्तं मनुना चैव तथा चान्यैर्महर्षिभिः ॥ प्रजानामायुषो ह्रासं विज्ञाय च महात्मना । संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये ॥ ' इति । ब्रह्माद्याप्तप्रणीतसंग्रहत्वादस्मत्प्रणीतप्रबन्धोऽपि प्रमाणमिति भावः । सुदृश इति । सुदृष्टेः निर्मलज्ञानस्य । विद्यानां पारदृश्वन इति । आन्वीक्षिकीत्रयीवार्तादण्डनीतीनां पारं दृष्टवानिति पारदृश्वा । अत एव सुदृक्, तस्य । राजविद्याप्रियतयेति । प्रियस्य भावः प्रियता । राजविद्यासु दण्डनीत्यादिकासु प्रियतया हेतुभूतया । यदुपदेक्ष्याम इति संबन्धः । राजविद्याभिः भूमीश्वरं व्युत्पाद्य रक्षादिभिः जगतामुपकारात् पुण्यं भवतु इति प्रयोजनम् । संक्षिप्तग्रन्थमर्थवदिति । संक्षिप्तः संहतः ग्रन्थ एव यस्य तत् संक्षिप्तग्रन्थम् । अर्थस्तु तावानेव विद्यते यस्य तदर्थवत् । अत एव सामर्थ्यात् नीतिसारमिदमेव । उनि.

**उपार्जने पालने च भूमेर्भूमीश्वरं प्रति ।**
**यत्किंचिदुपदेक्ष्यामो राजविद्याविदां मतम् ॥**

( १ ) उपार्जने पालने च भूमेरिति मुख्यं प्रयोजनम् । ' निमित्तात् कर्मसंयोगे ' इति सप्तमी । भूमिः मनुष्यवती । तस्या अर्जनं त्रिविधम्- नवं भूतपूर्वं पित्र्यं च । रक्षणं द्विविधम्- स्वेभ्यः परेभ्यश्च । ननु रक्षितविवर्धनं वृद्धस्य च तीर्थप्रतिपादनमप्यस्ति । सत्यम्, अस्य द्वयस्यैव विशेषोऽयम् । यतो रक्षितविवर्धनमप्यर्जनमेव । वृद्धस्य तीर्थप्रतिपादनमपि गुणवति पुत्रे निक्षेपः अश्वमेधादौ विनियोगो वा । तदुभयमपि सर्वथा रक्षणमेव भूमीश्वरं प्रति, अन्यस्य तु राजविद्यायामनधिकारात् । यत्किंचिदिति स्तोकम् । तन्मतं द्विविधम्- स्वमण्डलगतं परमण्डलगतं च । तत्र पूर्वं रक्षणनिमित्तम्, इतरदर्जननिमित्तम् । तदुभयमपि नाविनीतस्येति प्रथमसर्गेण तावत् विनय उपदिश्यते । अत्र च सर्गे प्रकरणद्वयम्- इन्द्रियजयः विद्यावृद्धसंयोगश्च । तत्र चेन्द्रियजयपूर्वकत्वात् विद्यावृद्धसंयोगस्य पूर्वमिन्द्रियजय उच्यते । जम.

(२) ( एतदेवाभिधेयम् ) । उपार्जन इति । उपार्जनं लाभः । स त्रिविधः- नवो भूतपूर्वः पित्र्यश्चेति । रक्षणं द्विविधम्- स्वेभ्यः परेभ्यश्चेति । चकारो वर्धनसत्पात्रतीर्थप्रतिपादनसमुच्चयार्थः । भूमेः पृथिव्याः । भूमीश्वरं प्रति महीपतिमुद्दिश्य । यदुपदेक्ष्यामः किंचित्स्वल्पमुपदेशं दास्यामः । राजविद्याविदामिति । बार्हस्पत्यौशनसादीनां मतं अभिमतम् । विष्णुगुप्तदर्शनादेवोपदेक्ष्यामः । दृश्यते हि राजविद्याविन्मताद्भिन्नं विष्णुगुप्तदर्शनम् । तथा च कौटिल्यभाष्ये उपधाशुद्धिप्रकरणे- ' अधार्मिकोऽयं राजा साध्वेनं हत्वा अन्यं प्रतिपादयामः ' इत्यादि धर्मोपधायाम्, ' परप्रयुक्तैर्भूम्यादिलाभैश्च स्वामिनि न विकुरुते ' इत्यर्थोपधायाम्, 'राजमहिषी त्वां कामयते' इति कामोपधायाम् । शौचपरीक्षोपदेशाः सर्वाचार्याणाम् । तत्र कौटिल्य आह- ' न त्वेव कुर्यादात्मानं देवीं वा लक्ष्यमीश्वरः । शौचहेतोरमात्यानामेतत्कौटिल्यदर्शनम् ॥ न दूषणमदूष्यस्य विषेणेवाम्भसश्चरेत् । कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् ॥ कृता च कलुषा बुद्धिरुपधाभिश्चतुर्विधा । नागत्वाऽन्तं निवर्तेत स्थिरा सत्त्ववतां हृदि ॥ तस्माद्बाह्यमधिष्ठानं कृत्वा कार्ये चतुर्विधे । शौचाशौचममात्यानां राजा मार्गेत सत्रिभिः ॥ ' ( कौ. १।१० ) । एवं विष्णुगुप्तदर्शनमितरेभ्यः पृथगिति भावः । उनि.

धर्मार्थकामरूपत्रिवर्गस्य युक्त्या सेवनम्

**'धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः ।**
**आत्मानं हन्ति तौ हत्वा युक्त्या यो न निषेवते ॥**

(१) कानी. १।५१ ; नीम. ३३.

(१) तथा धर्मार्थावपि सेवेत, तयोः प्राधान्यात्। यदाह– धर्मादर्थ इति। जन्मान्तरोपार्जितधर्ममूलत्वात् तदुपबृंहणीयत्वाच्चार्थस्य। अर्थतः कामः, निरर्थस्य विषयोपभोगासंभवात्। कामात्सुखफलोदयः। यस्तु दाण्डक्यस्येव दुःखफलोदयः स द्वेष एव, न कामः। एते च युक्त्या सेवितव्याः। अन्यथा परस्परोपघातात् त्रितयमपि न स्यात्। यदाह– 'आत्मानं हन्ति तौ हत्वा युक्त्या यो न निषेवते' इति। तद्यथा– अतिदानेन धर्मः अर्थं हत्वा कामं धर्मान्तरं च हन्ति। तपश्चात्यन्तसेवितं कामं हत्वा शरीरक्षयात् धर्माथौं हन्ति। तथाऽर्थस्तादात्विकोऽप्युपादीयमान ऐलस्येव धर्मकामौ हत्वा अर्थमपि हन्ति। कामः पुनरत्यासेव्यमानः स्त्रीमृगयाद्यूतपानैश्चतुर्भिर्व्यसनैर्धर्माथौं हत्वा शरीरक्षयादात्मानमपि हन्ति। जम.

(२) विषयासक्तौ दोषान्तरं त्रिवर्गस्य च कार्यकारणभावं दर्शयितुमाह– धर्मादिति। धर्मात् शास्त्रोक्तलक्षणात् विधिनिषेधस्वरूपात् कारणभूतात् अर्थः भूहिरण्यपश्वादिस्वरूपः कार्यभूतो भवति इत्यर्थाल्लभ्यते। अर्थतोऽपि कामः। स च द्विविधः– सामान्यो विशिष्टश्च। तथा चोक्तं कामसूत्रे कौटिल्येनैव– 'श्रोत्रत्वगक्षिजिह्वाघ्राणेन्द्रियाणामात्मसंयुक्तेन मनसाऽधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः। अयं पञ्चविधोऽपि सामान्यः। स्पर्शविशेषे त्वाभिमानिकसुखानुविद्धा फलवत्यर्थप्रतीतिः प्राधान्यात् इत्ययं विशिष्टः कामः'। कामात्सुखफलोदय इति। एवंविधात् कामाद्यत्सुखं तदेव त्रिवर्गफलम्, तस्योदयः संभवति। एवं कार्यकारणभावं दर्शयित्वा अन्यतमस्याप्यत्यासक्तौ दोषं दर्शयति– आत्मानं हन्तीति। त्रिवर्गस्य मध्ये य इति य एव धर्ममर्थं कामं वा युक्त्या शास्त्रोक्तसेवाकालमात्रया न निषेवते नानुतिष्ठति, स एव तावितरौ हत्वा आत्मानमपि हन्ति। तद्यथा– धर्मातिसेवायामर्थः क्षीयते। तत्क्षयात्कामाभावः, अर्थमूलत्वात्कामस्य। अर्थाभावात् शरीरदण्डनाद्धर्मं चिकीर्षुः शरीरं क्षीणं करोति। ततः संनिपातात् धर्ममूले शरीरे विनष्टे धर्मोऽपि विनश्यति। एवमर्थोऽप्यत्यासेवितोऽर्थमूलं धर्मं न करोति कामं च। ततश्चाप्युपचितोऽर्थश्चोरराजाग्निभिरपह्रियते। तथा कामोऽप्यत्यासेवितो धर्मार्थानुष्ठानव्युपरमात् तौ विनाश्यार्थाभावादात्मानं काममपि विनाश्य शुक्रक्षयात् क्षयव्याधिना शरीरमपि नाशयति। तथा च कौटिल्यः– 'एकोऽप्यत्यासेवितो धर्मार्थकामानामात्मानमितरौ च पीडयति' इति। अयं च दोषः। उनि.

दण्डलक्षणं दण्डनीतिलक्षणं च

[१]दमो दण्ड इति प्रोक्तस्तात्स्थ्याद्दण्डो महीपतिः।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते ॥

(१) दण्डशब्दो दण्डप्रकृतावुपायविशेषे च दण्डे वर्तते। तत्र सर्वप्रकृतिविषयत्वं नयस्येति दण्डप्रकृतिमपास्य निग्रहस्वरूपमुपायमाश्रित्याह– दमो दण्ड इति। सामदानभेदसंभवेऽपि प्रायोऽनेनैव नीतेर्व्यपदेशः, लोकस्य दोषबाहुल्यात्। यदाहुः– 'सर्वो दण्डजितो लोको दुर्लभो हि शुचिः क्वचित्। दण्डस्य हि भयात्कृत्स्नं जगद्भोगाय कल्पते ॥' इति। अथवा दण्डशब्दोऽत्र दमनमात्रवृत्तिः स्वपरपक्षदमनोपायाशेषसामान्योपग्राही द्रष्टव्यः। स चोभयथापि राजाश्रित इति तात्स्थ्यात् दण्डो महीपतिः। तस्य नयनात् प्रवर्तनात् नीतिः दण्डनीतिः, राजविद्येत्यर्थः। जम.

(२) दण्डनीतेः स्वरूपमुपकारं च दर्शयन्नाह– दम इति। दमः वधपरिक्लेशार्थहरणादिना दमनक्रिया दण्ड इति प्रोक्तः अभिधीयते। तात्स्थ्यात् प्रयोक्तरि तिष्ठतीत्युपचारात् महीपतिर्दण्डः। तस्य नीतिरिदमेव शास्त्रं दण्डनीत्यभिधाना विद्या। नयनं दण्डयं प्रति दण्डस्य प्रणयनं नीतिरिहोच्यते। उनि.

चातुर्वर्ण्यधर्माः

[२]इज्याध्ययनदानानि यथाशास्त्रं सनातनः।
ब्राह्मणक्षत्रियविशां सामान्यो धर्म उच्यते ॥

(१) कानी. २।१५; नीम. ३४ प्रोक्तस्तात्स्थ्याद्दण्डो म (स्थ्यात्तस्माद्दण्डेन्म).

(२) कानी. २।१८.

(१) एवं धर्ममालोच्य लोके प्रवर्तितविद्यश्चतुर्वर्णाश्रमलक्षणं लोकं स्वधर्मकर्मसु व्यवस्थापयेदिति तद्व्यवस्थोच्यते। तत्राऽऽश्रमाणां वर्णान्तर्भावेऽपि पृथक्करणं कर्मभेदज्ञापनार्थम्। तत्र वर्णव्यवस्थां चतुर्भिः श्लोकैराह– इज्येत्यादि। इज्या दर्शपूर्णमासादि। अध्ययनं वेदाध्ययनमेव। दानं दक्षिणादानादि। यथाशास्त्रं यथागमम्। तथाहि– राजसूयाश्वमेधौ क्षत्रियस्यैव विहितौ। सनातनः नित्यः। एतदपरिहारेणान्यत् करणीयमिति दर्शयति। धर्म उच्यते, तस्य धर्मार्थत्वात्। जम.

(२) वर्णाश्रमधर्मं स्वधर्मच्युतानां दण्डप्रणयनार्थमभिधातुमाह– इज्येति। स्वयं यजनम्, अध्ययनं स्वशाखायाः पठनम्, दानं धर्माभिसंधिना पात्रेभ्यो धनोत्सर्गः, एतत्त्रितयं ब्राह्मणक्षत्रियविशां वर्णत्रयस्यापि सामान्यो धर्म उच्यते। उनि.

[1]याजनाध्यापने शुद्धे विशुद्धाच्च प्रतिग्रहः।
वृत्तित्रयमिदं प्रोक्तं मुनिभिर्ज्येष्ठवर्णिनः॥

(१) शुद्धे असामान्ये ब्राह्मणस्यैव। प्रतिग्रहश्च शुद्धः। स च विशुद्धात् अभिशस्तपतितादिवर्जम्। एते च वर्तनार्थाः। यथाह– वृत्तित्रयमिति। ज्येष्ठवर्णिनः ब्राह्मणस्य। जम.

(२) असामान्यं ब्राह्मणधर्ममाह– याजनेति। अर्थार्थं याजनमध्यापनं च शुद्धे जातिवृत्तादिभिर्विशुद्धस्य। विशुद्धाच्च प्रतिग्रहः। एतत्त्रितयं ज्येष्ठवर्णिनः ब्राह्मणस्य वृत्तित्रयं मुनयः मन्वादयः प्राहुः उक्तवन्त इति। उनि.

[2]शस्त्रेणाऽऽजीवनं राज्ञो भूतानां चाभिरक्षणम्।
पाशुपाल्यं कृषिः पण्यं वैश्यस्याऽऽजीवनं स्मृतम्॥

(१) राज्ञ इति। क्षत्रियस्य इज्यादयो धर्माः, शस्त्रेण त्वाजीवनम्। भूतानां चाभिरक्षणं आपन्नानाम्। यद्यप्यत्र रक्षणमेव कुर्वन् शस्त्रेणाऽऽजीवनं लभते, तथापि विनाऽप्याजीवनेनाऽऽपन्नत्राणं कर्तव्यमिति भूताभिरक्षणग्रहणेन ज्ञापयति। वैश्यस्येज्यादयो धर्माः, पाशुपाल्यादि वृत्तये। वार्तेति वक्तव्ये त्रयाणामुपादानं पूर्वपूर्वाभावे उत्तरोत्तरप्रतिपत्त्यर्थम्। जम.

(२) असामान्यक्षत्रियवैश्यवृत्तिमाह– शस्त्रेणेति। राज्ञः क्षत्रियस्य शस्त्रेण कण्टकान् निहत्य सेवया वा आजीवनं वृत्तिः। भूतानां प्राणिनां चाभिरक्षणमर्थार्थं धर्मार्थं वा। पाशुपाल्यं कृषिः पण्यं त्रितयमपि वैश्यस्याऽऽजीवनं स्मृतम्, स्मृतिकारैरिति शेषः। उनि.

शूद्रस्य धर्मः शुश्रूषा द्विजानामनुपूर्वशः।
शुद्धा च वृत्तिस्तत्सेवा कारुचारणकर्म च॥

(१) शुश्रूषा परिचर्या शूद्रस्य धर्मः। अनुपूर्वश इति। सति ब्राह्मणे न तावत् क्षत्रियस्य, क्षत्रिये वा न वैश्यस्येति। शुद्धा च वृत्तिरिति चशब्दात् वार्ता च सामान्या। तत्सेवा द्विजातीनामेव भृत्यतामुपगम्य। कारुकर्म तक्षणादि। चारणकर्म नृत्तगीतवाद्यादि। जम.

(२) शूद्रस्य द्विजानां ब्राह्मणक्षत्रियवैश्यानां शुश्रूषा त्राण(? वन्द)नादिभिरभ्यर्चनं धर्मः। 'त्रयो वर्णा द्विजातयः' इति। अनुपूर्वशः ब्राह्मणादीनां क्रमेण। शुद्धा च वृत्तिस्तत्सेवा। ब्राह्मणादीनां सेवया वृत्तिः जीविका, सा शुद्धा। कारुचारणकर्म च। कारवः वर्धक्यादयः, चारणाः रङ्गोपजीविनः, तत्कर्म च वृत्त्यर्थं विधेयमिति। उनि.

आश्रमचतुष्टयधर्माः

[1]गुरौ वासोऽग्निशुश्रूषा स्वाध्यायो व्रतचारणम्।
त्रिकालस्नायिता भैक्षं गुरौ प्राणान्तिकी स्थितिः॥

(१) आश्रमव्यवस्थां दशभिः श्लोकैराह– गुरावित्यादि। गुरौ वासः गुरुकुले यावद्विद्याग्रहणम्। अग्निशुश्रूषा अग्निकार्यम्। स्वाध्यायः, यस्मिन् वेदे व्रतं चरति

(१) कानी. २।१९; उनि. प्रोक्तं मुनिभिर्ज्ये (प्राहुर्मुनयो ज्ये).

(२) कानी. २।२०–२१.

(१) कानी. २।२२; उनि. चारणम् (धारणम्) भैक्षं (भैक्ष्यं).

स एवाध्येतव्य इति स्वग्रहणम् । व्रतचारणं ब्रह्मचर्यम् । त्रिकालस्नायिता त्रिसंध्यं स्नानम् । भैक्षं यत् भिक्षोपात्तं तदेव भोक्तव्यम् । एवं तावद्वेदब्रह्मचारिण उपकुर्वाणस्य आ समावर्तनात्, आमरणात्तु नैष्ठिकस्य । तस्य विशेषमाह– गुरौ आचार्यस्य कुले प्राणान्तिकी स्थितिः अवस्थानम् । प्राण एव अन्तः अवधिः अस्या इति विग्रहः । जम.

(२) आश्रमाणां धर्ममभिधातुं तावद्ब्रह्मचारिधर्मे श्लोकद्वयमाह– गुराविति । ब्रह्मचारिणो गुरौ उपाध्याये वासः तत्समीप एव वसनम् । अग्निशुश्रूषा वैश्वानराराधनम् । स्वाध्यायः स्वशाखाध्ययनम् । व्रतधारणं तदुपदिष्टानां व्रतानामनुष्ठानम् । त्रिकालस्नायिता संध्यात्रयेऽपि स्नानम् । भैक्ष्यं( ? क्षं ) भिक्षासमूहः एकभिक्षानिषेधार्थः । गुरौ प्राणान्तिकी स्थितिः । नैष्ठिकस्य मुमुक्षोः अयं नियमः प्राणान्तं यावत् गुरावेव स्थितिरिति । उनि.

[1]तदभावे गुरुसुते तथा सब्रह्मचारिणि ।
कामतो वाऽऽश्रमान्यत्वं स्वधर्मो ब्रह्मचारिणः ॥

(१) तदभावे गुरुसुते इति द्वितीयः कल्पः । तस्याप्यभावे सब्रह्मचारिणि समानचरणे तुल्यशाखाध्यायिनीति तृतीयः । कामतो वाऽऽश्रमान्यत्वम्, यदि ब्रह्मचारी नैष्ठिकत्वं नेच्छेत् । जम.

(२) तदभावे गुरोरभावे गुरुसुते तथैव प्राणान्तिकी स्थितिः । तथा सब्रह्मचारिणि समानशाखाध्यायिनि, प्राणान्तिकी स्थितिरिति वर्तते । कामतो वाऽऽश्रमान्यत्वम् । यदि न नैष्ठिकः, उपकुर्वाण एव, तदा विद्याग्रहणानन्तरमाश्रमान्यत्वम्, ब्रह्मचर्यं त्यक्त्वा गृहस्थः स्यात् । इत्ययं स्वधर्मो ब्रह्मचारिणः । उनि.

[2]समेखलो जटी मुण्डो दण्डी वा गुरुसंश्रयः ।
आ विद्याग्रहणाद्गच्छेत्कामतो वाऽऽश्रमान्तरम् ॥

(१) यश्च वेदब्रह्मचारी स चापि आ विद्याग्रहणात् गुरुकुलसंश्रितो गृहीतव्रतलिङ्गः स्यादित्याह– समेखल इत्यादि । तत्र जटी मुण्डो वा स्यात् । तयोर्मेखला दण्डकाष्ठं च समानम् । गच्छेत् कामतो वाऽऽश्रमान्तरमिति । अत्र 'आश्रमादाश्रमं गच्छेत्' इत्यस्मात्स्मृतिवाक्यात् क्रमेणोत्तरोत्तरमाश्रमं गच्छेदिति प्रथमः कल्पः । कामतो वेति द्वितीयः । तत्र ब्रह्मचारी गृहस्थश्च स्वेच्छया स्वधर्ममपास्य परिव्राड्धर्मं संश्रयेत् । वानप्रस्थधर्मं तु गृहस्थ एव, तत्राग्निहोत्रसंभवात् । जम.

(२) भूयोऽपि ब्रह्मचारिधर्मविशेषमाह– स इति । सः उपकुर्वाणो ब्रह्मचारी मेखली मुञ्जमेखला यस्यास्ति, जटी मुण्डी वा, दण्डी, पलाश( आदि )दण्डधारणात्, तथैव गुरुसंश्रयः । आ विद्याग्रहणात् अनन्तरोक्तं च व्रतादिकं विद्याग्रहणं यावत् कुर्यात् । तथेच्छा चेत् गृहस्थः स्यादन्यथा नैष्ठिकः स्यादित्यर्थः । उनि.

[1]अग्निहोत्रोपचरणं जीवनं च स्वकर्मभिः ।
धर्मदारेषु कल्येषु पर्ववर्जं रतिक्रिया ॥

(१) गृहस्थधर्ममाह– अग्निहोत्रोपचरणमिति । आहिताग्नित्वम् । जीवनं स्वकर्मभिः ब्राह्मणादेः स्वेन स्वेन कर्मणा वृत्तिः । धर्मदारेषु धर्मविवाहपरिगृहीतेषु काले ऋतुकाले प्राप्ते रतिक्रिया धर्मप्रजार्था । तत्रापि पर्ववर्जं अष्टमीचतुर्दशीपञ्चदशीपरिहारेणेत्यर्थः । जम.

(२) गृहस्थधर्ममभिधातुमाह– अग्नीति । गृहस्थोऽत्र चतुर्विधो ब्राह्मणादिः । अग्निहोत्रोपचरणं यथासंभवं ब्राह्मणक्षत्रियविशामेव द्रष्टव्यम् । जीवनं च स्वकर्मभिः ब्राह्मणस्य प्रतिग्रहेण, क्षत्रियस्य शस्त्रेण, वैश्यस्य कृषिपाशुपाल्यवाणिज्यादिभिः, शूद्रस्य कार्वादिकर्मभिरिति । अयं च नियमो धर्म्यः । धर्मदारेषु कल्येषु व्याधिरहितेषु, पर्ववर्जं पौर्णमास्यादिपुण्यतिथिवर्जं, रतिक्रिया धर्मार्थं दाररक्षणार्थं चेति । उनि.

---

(१) कानी. २।२३.

(२) कानी. २।२४; उनि. समेखलो जटी मुण्डो ( स मेखली जटी मुण्डी ).

(१) कानी. २।२५; जम. कल्येषु ( काले ...).

[1]देवपित्रतिथिभ्यश्च पूजा दीनानुकम्पनम् ।
श्रुतिस्मृत्यर्थसंस्थानं धर्मोऽयं गृहमेधिनः ॥

(१) देवपित्रतिथिभ्यश्च पूजा कृताकृतद्रव्यविनियोगेन । श्रुतिस्मृत्यर्थसंस्थानमिति । श्रुतिस्मृतिविहिते कर्मण्यवस्थानम्, न पाषण्डसिद्धान्तविहिते । गृहमेधिनः गृहस्थस्य, गृहे सतो यज्ञशीलत्वात् । जम.

(२) तथा देवपित्रतिथिभ्यः पूजा इति प्रतीतम् । दीनानुकम्पनं बालवृद्धव्याधितादीनां शक्त्याऽनुकम्पनं दानमानादिना । श्रुतिः वेदः, स्मृतिः मन्वादिशास्त्राणि, तेषामर्थः, तत्र संस्थानं अवस्थितिः, तदुक्तानुष्ठानतत्परेण भवितव्यमित्यर्थः । अयं च धर्मश्चतुर्विधस्यापि गृहमेधिनः । गृहेऽवस्थातुं मेधा बुद्धिः यस्य सः, तस्यायं धर्मः । उनि.

जटित्वमग्निहोत्रित्वं भूशय्याजिनधारणम् ।
वने वासः पयोमूलनीवारफलवृत्तिता ॥

(१) भूशय्या अनास्तरणायां भूमौ शयनम् । अजिनं मार्गं वैयाघ्रं वा । वने वासः, न ग्रामे । पयः जलम् । नीवारः अकृष्टपच्यो व्रीहिः । जम.

(२) वानप्रस्थनियममभिधातुमाह— जटित्वमिति । जटित्वं जटाधारणम् । अग्निहोत्रित्वं अग्निहोत्रपरिग्रहः । भूशय्या भूमौ शयनम् । अजिनधारणं कृष्णाजिनधारणम् । वने निर्जने वासः । पयः पानीयम्, मूलानि भक्ष्यवृक्षवल्लीनाम्, नीवाराः स्वयं जाताः सरःसु व्रीह्याकाराः, फलानि उदुम्बरजम्ब्वादीनाम्, एभिर्वृत्तिः, न कृष्टपच्यैरित्यर्थः । उनि.

[2]प्रतिग्रहनिवृत्तिश्च त्रिःस्नानं व्रतचारिता ।
देवातिथीनां पूजा च धर्मोऽयं वनवासिनः ॥

(१) व्रतचारितेति । तस्य अपत्ये संक्रमितगार्हस्थ्यधर्मस्य सपत्नीकत्वेऽपि ब्रह्मचर्यम् । तथाहि— 'पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा' ( मस्मृ. ६।३ ) इति स्मृतिः । वनवासिनः वानप्रस्थस्य । जम.

(२) प्रतिग्रहस्य हिरण्यादेर्दीयमानस्य ग्रहणनिवृत्तिः । त्रिःस्नानं संध्यात्रयेऽपि । ब्रह्मचारिता संनिहितदारेणापि ब्रह्मचर्यमेव कर्तव्यम् । उत्तरार्धं प्रतीतम् । उनि.

[1]सर्वारम्भपरित्यागो भैक्षाश्यं वृक्षमूलिता ।
निष्परिग्रहताऽद्रोहः समता सर्वजन्तुषु ॥

(१) सर्वासां यागादिक्रियाणामाश्रमधर्मातिरिक्तानामननुष्ठानम् । भैक्षाश्यं भिक्षाहारत्वम् । वृक्षमूलिता अरण्यवासः । निष्परिग्रहता प्रव्रज्योपकरणव्यतिरिक्तानुपादानम् । अद्रोहः अजिघांसा । समता सर्वभूतेषु उत्कृष्टेष्वपकृष्टेषु च । जम.

(२) परिव्राजकधर्मं श्लोकत्रयेऽभिधातुमाह— सर्वेति । सर्वे धर्मादिपुरुषार्थसाधनार्थाः आरम्भाः, तेषां परित्यागः, पुष्पसमित्कुशादीनामप्यग्रहात् । भैक्ष्यं भिक्षासमूहः, तदाशित्वम् । वृक्षमूलता, वृक्षमूलं निवासार्थं विहितं यस्य, तस्य भावः । निष्परिग्रहता पुस्तकादेर्वस्त्रास्तरणादेरपि परिग्रहो नास्तीति । अद्रोहः भूतहिंसाभावः । समता सर्वजन्तुषु समबुद्धिः सर्वप्राणिषूपकार्यपकारिष्वपि । उनि.

[2]प्रियाप्रियापरिष्वङ्गः सुखदुःखाविकारिता ।
सबाह्याभ्यन्तरं शौचं वाग्यमो व्रतचारिता ॥

(१) प्रियाप्रियापरिष्वङ्गः इष्टानिष्टसङ्गत्यागः । सुखदुःखाविकारिता, हर्षशोकाभावात् । बाह्यं शौचं मृदादिभिः लेपगन्धापनोदनार्थममेध्यस्य । आभ्यन्तरं मनःशौचम् । वाग्यमः मौनम् । जम.

(२) प्रियाप्रियापरिष्वयङ्गः, प्रियं चाप्रियं च, तयोरपरिष्वङ्गः नाऽऽसक्तिः । सुखदुःखाविकारिता, सुखे दुःखे च विकारो हर्षशोककृतो नास्तीति । सबाह्याभ्यन्तरं शौचम्, बाह्यं मृज्जलादिभिः, आन्तरं सकलसत्त्वानुग्रहबुद्ध्या । वाग्यमः मौनव्रतम् । ब्रह्मचारिता विशेषाद्ब्रह्मचर्यम् । उनि.

---

(१) कानी. २।२६–२७.
(२) कानी. २।२८ ; उनि. व्रत ( ब्रह्म ).

(१) कानी. २।२९ ; उनि. भैक्षाश्यं (भैक्ष्याश्यं) मूलिता ( मूलता ).
(२) कानी. २।३० ; उनि. व्रत ( ब्रह्म ).

[1]सर्वेन्द्रियसमाहारो धारणा ध्यानयुक्तता ।
भावसंशुद्धिरित्येष परिव्राड्धर्म उच्यते ॥

(१) सर्वेन्द्रियसमाहारः अलोलुपेन्द्रियत्वम् । धारणा मनसो निरोधः । ध्यानं ध्येयविषयावलम्बनम् । भावसंशुद्धिः अविचिकित्सा । जम.

(२) सर्वेन्द्रियसमाहारः सकलेन्द्रियाणां स्वस्वविषयं प्रति धावतां समाहरणं आत्मन्येव योजनम् । अयं च योगशास्त्रे प्रत्याहार इति स्मृतः । धारणेति । तस्याश्च लक्षणम्– 'प्रदेशे धार्यते वायुर्मनो वाऽपि सुसंयतम् । संधारकप्रयत्नेन धारणा साऽभिधीयते ॥' इति । ध्यानमिति । 'ध्यै चिन्तायाम्'। चिन्तनं ध्यानम् । तच्च द्विविधम् – काम्यफलार्थं मोक्षफलार्थं च । तत्र काम्यफलार्थं यथा– 'आत्मेन्द्रियगणं गत्वा साध्येन्द्रियगणं विशेत् । ऐक्यं गत्वा समागच्छेदिति ध्यायन्पुनः पुनः । करोति पुरुषं नारी वश्यं ध्यानप्रयोगतः ॥' इत्यादिकम् । मोक्षार्थं यथा– 'परमात्ममयं विश्वं तत्राऽऽत्मानं लयं नयेत् । ततश्च तन्मयो भूत्वा न किंचिदपि चिन्तयेत् । चिन्तास्पदं निजं चित्तं तत्रैव विलयं नयेत् ॥' इत्यादिकम् । एवंविधधारणाध्याननित्यता तदभ्यासतत्परता । भावसंशुद्धिरिति प्राणिष्वद्रोहबुद्धिः । एष परिव्राड्धर्म उच्यते । उनि.

सर्ववर्णसाधारणा धर्माः

[2]अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा ।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥

(१) विशेषमुक्त्वा सामान्यधर्ममाह– अहिंसेत्यादि । अहिंसा शास्त्रविधानादन्यत्र । सूनृता वाणी अपरुषा । दया दीनेषु । क्षमा आक्रोशादितितिक्षा । लिङ्गिनां आश्रमिणाम् । जम.

(२) वर्णाश्रमाणामसाधारणं धर्ममभिधाय साधारणमभिधातुमाह– अहिंसेति । वर्णिभिराश्रमिभिश्च परप्राणदारद्रव्यादीनामहिंसा, कर्तव्येति शेषः । सूनृता वाणी 'प्रियं तथ्यं च सूनृतम्' इत्येवंभूता सर्वेषु वाणी वक्तव्येति भावः । सत्यमित्यमृषावादः । शौचमिति बाह्याभ्यन्तरशौचं श्रुतिस्मृतिविहितम् । दया दीनानुकम्पनम् । क्षमा शान्तिः । 'वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते' इति प्रतीतम् । उनि.

धर्मप्रवर्तकः धर्मरक्षकश्च राजा

[1]स्वर्गानन्त्याय धर्मोऽयं सर्वेषां वर्णिलिङ्गिनाम् ।
अस्याभावे तु लोकोऽयं संकरान्नाशमाप्नुयात् ॥

(१) यथोक्तस्य धर्मस्य फलमाह– स्वर्गानन्त्यायेति । सर्वेषामेव वर्णिनां लिङ्गिनां यथायोगं कश्चित् स्वर्गाय, कश्चिदानन्त्याय । न विद्यते अन्तः अस्येत्यनन्तः मोक्ष उच्यते, स्वार्थिकः ष्यञ्, स्वर्गस्यान्तवत्त्वात् । अस्य धर्मस्याभावे न केवलं फलाभावः, प्रत्युत संकरान्नाशमाप्नुयात् । तत्र संकरो द्विविधः– कर्मसंकरो वर्णसंकरश्च । तत्र पूर्वः शूद्रस्य द्विजकर्म, द्विजस्यापि शूद्रकर्मेत्यादि । इतरोऽपि प्रातिलोम्येनाभिगमनम् । जम.

(२) स्वधर्मानुष्ठाने फलमभिधातुमाह– स्वर्गेति । स्वर्गश्च आनन्त्यं च स्वर्गानन्त्यम् । आनन्त्यं मोक्षः । तस्मै, भवतीति शेषः । धर्मोऽयं अनन्तरोक्तः सर्वेषां वर्णिलिङ्गिनां भवतीति । अस्य धर्मस्याभावे विनाशे अननुष्ठानात् विपरीतानुष्ठानाद्वा लोकोऽयं चतुर्वर्णाश्रमलक्षणः संकरात् वर्णसंकीर्णताया धर्मसंकराच्च नाशमाप्नुयात् । दुरनुष्ठानजनितदैवपीडनादित्यर्थः । उनि.

[2]सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्तकः ।
तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः ॥

(१) यथान्यायं यथार्हम् । संप्रवर्तकः दण्डधारितया । तस्याभावे धर्मनाश इति भूपतेरभावे यजनादिधर्मनाशः । तदभावे जगच्च्युतिः । तथाहि– 'लोकधारणाद्धर्मः' इति निरुच्यते । जम.

(२) यथा धर्माभावे लोको नाशमाप्नुयात् तथा धर्मप्रवर्तकदण्डधराभावेऽपीति दर्शयन्नाह– सर्वस्येति ।

---

(१) कानी. २।३१ ; उनि. युक्तता (नित्यता).
(२) कानी. २।३२ ; नीम. ३४.

(१) कानी. २।३३ ; नीम. ३४ वर्णि (सर्व) पू.
(२) कानी. २।३४ ; नीम. ३४.

सर्वस्यास्य धर्मस्य यथान्यायं स्मार्तन्यायानतिक्रमेण भूपतिः विजिगीषुः संप्रवर्तकः सम्यक् प्रवर्तयिता । तस्य भूपतेरभावे धर्मनाशः, दण्डाभावात् । धर्मनाशे जगच्च्युतिः जगतो विनाशः स्यादिति । उनि.

**[१]वर्णाश्रमाचारयुतो वर्णाश्रमविभागवित् ।**
**पाता वर्णाश्रमाणां च पार्थिवः स्वर्गलोकभाक् ॥**

( १ ) प्रकरणार्थस्यानुष्ठाने अनुष्ठापने च राज्ञः फलमाह– वर्णाश्रमाचारयुत इति । यस्मिन् वर्णे आश्रमे वा स्थितः स तदाचारयुतः । वर्णाश्रमविभागवित् । अन्यथा कथं पाता स्यात् । स्वर्गलोकभाक् , इहलोकभाक्त्वं सामर्थ्यलभ्यमेवेति । जम.

( २ ) वर्णाश्रमधर्मप्रभावमेवाभिधातुमाह– वर्णेति । वर्णाश्रमाचारयुक्तः तत्परः । वर्णाश्रमविभागवित् , 'कस्य का प्रतिपत्तिः ?' इति जानाति । पाता रक्षिता वर्णाश्रमाणां पार्थिवः । शक्रलोकः स्वर्गः , तद्भाग्भवतीति । उनि.

दण्डप्रणयनविधिः

**[२]इति यस्मादुभौ लोकौ धारयत्यात्मवान्नृपः ।**
**प्रजानां च ततः सम्यग्दण्डं दण्डीव धारयेत् ॥**

(१) अथ दण्डमाहात्म्यमुच्यते । तस्य संबन्धमाह– इतीति । एवं वर्णाश्रमान् व्यवस्थापयन्नुभौ लोकावात्मनः प्रजानां चेति संबन्धः । धारयति दण्डेनेत्यर्थः । दण्डीव धारयेत् । प्रजा हि यमस्थाने दण्डधरं राजानं मन्यमाना भयान्नापराध्यन्तीति । स च दण्डो वधबन्धपरिक्लेशार्थहरणलक्षणः तीक्ष्णमृदुमध्यमभेदेन त्रिविधः । जम.

( २ ) दण्डमाहात्म्यमभिधातुमाह– इतीति । इति उक्तप्रकारेण यस्मात् येन कारणेन उभौ लोकौ इहलोकपरलोकौ धारयति आत्मसात् करोति । आत्मवान् अभिहितात्मसंपद्गुणसंपन्नो जितेन्द्रियः । नृपः राजा । न केवलमात्मनः, प्रजानां चोभौ लोकौ धारयति दण्डप्रणयनादिति भावः । ततो दण्डं दण्डीव यम इव रागद्वेषरहितो धारयेत् । उनि.

**[१]उद्वेजयति तीक्ष्णेन मृदुना परिभूयते ।**
**दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते ॥**

( १ ) तत्र उद्वेजयति तीक्ष्णेन दण्डेन लोकमतिनिग्रहेणेत्यर्थः । दमनमात्रवृत्तिनाऽपि दण्डेन अतिसाम्ना अतिदानेन अतिभेदेन अतिनिग्रहेण वा लोकमुद्वेजयति । मृदुना हेतुभूतेन परिभूयते, लोकेनेति शेषः । किमयं सान्त्वयिष्यति, किं दास्यति, किं भेदयिष्यति, किं निग्रहीष्यति ? इति । युक्तदण्डः प्रशस्यते, आत्मप्रजयोस्त्रिवर्गवर्धनात् । जम.

( २ ) दण्डधारणप्रकारमभिधातुमाह– उद्वेजयतीति । तीक्ष्णः न्याय्याद्दण्डादधिकः, तेनोद्वेजयति, प्रजा इति शेषः । मृदुना न्यूनेन परिभूयते, न भवत्यस्य दण्डे पीडेति दण्डाद्भयं नास्तीति परिभूयते । दण्डेन न्यूनाधिकेन द्वेषः परिभवो वा भवतीति यस्मात् तस्मान्नृपतिः राजा युक्तदण्डः प्रशस्यते, सुविज्ञातप्रणयनादिति । उनि.

**[२]त्रिवर्गं वर्धयत्याशु राज्ञो दण्डो यथाविधि ।**
**प्रणीतोऽथाऽऽसमञ्जस्याद्वनस्थानपि कोपयेत् ॥**

( १ ) यदाह– त्रिवर्गं वर्धयतीति । यथाविधि प्रणीतः यथान्यायप्रवृत्तः । अथाऽऽसमञ्जस्यादिति । यदि कामक्रोधाज्ञानादिभिर्न सम्यक् प्रवृत्तः स्यात् , तदा वानप्रस्थानपि कोपयेत् , किं पुनर्गृहस्थान् ? । जम.

( २ ) तदेव द्रढयितुमाह– त्रिवर्गमिति । त्रिवर्गं धर्मार्थकामान् वर्धयति वृद्धिं नयति आशु शीघ्रं राज्ञो दण्डो यथाविधि (प्रणीतः), सुविज्ञातप्रणीतत्वात् । दुष्प्रणीतो हि दण्डस्त्वेषु दुष्पातितो हि यस्माद्वनस्थानपि लोकव्यवहारबाह्यानपि कोपयेत् । उक्तं च गुरुणा– 'सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति, दुष्प्रणीतो हि कामक्रोधाभ्यामज्ञानाद्वा वानप्रस्थ-

---

(१) **कानी.** २।३५ ; **उनि.** युतो ( युक्तो ) स्वर्ग ( शक्र ) ; **नीम.** ३४ युतो ( युक्तो ) स्वर्ग ( सर्व ).

(२) **कानी.** २।३६.

(१) **कानी.** २।३७.

(२) **कानी.** २।३८; **उनि.** ऽथाऽऽसमञ्जस्याद्व (दुष्प्रणीतो हि व ).

परिव्राजकानपि कोपयति, किं पुनर्गृहस्थान् ?।'

उनि.

'लोकशास्त्रानुगो नेयो दण्डोऽनुद्वेजनः श्रिये।
उद्वेजनादधर्मः स्यात्तस्माद् ध्वंसो महीपतेः॥

(१) यथाविधि प्रणयनं च लोकशास्त्रानुगमात्। यदाह– लोकशास्त्रानुगो नेय इति। नेयः प्रयोज्यः। स ह्यनुद्वेजनीयत्वात् श्रिये भवति। उद्वेजनः पुनरश्रिये इत्यर्थोक्तम्। अधर्मश्च उद्वेजनात्। तस्मात् ध्वंस इति। अनुद्वेजनात् धर्मश्च भवतीत्यर्थोक्तम्। जम.

(२) लोकशास्त्राविरोधेन दण्डः कार्य इति दर्शयन्नाह – लोकेति। लोकः वर्णाश्रमादिजनपदः, शास्त्रं श्रुतिस्मृत्यादि, तदनुगः तदनुरूपः दण्डो नेयः दण्ड्यं प्रति विधेयः। शास्त्रानुगोऽपि यदि लोकानुगो न भवति, यदि लोकानुगोऽपि शास्त्रानुगो न भवति, स उद्वेजनः। यथा लाटविषये संग्रहणे दण्डाभावः, यथा वा आभीरविषये ज्येष्ठभ्रातृभार्याग्रहणादिः। इत्येवं लोकशास्त्राविरोधेन दण्डः क्रियमाणो नोद्वेजनः, स च विजिगीषोः श्रिये भवति। उद्वेजनात् लोकोद्वेगकरणात् अधर्मस्तु देशादिधर्मनिषेधात् भवतीति शेषः। तस्मात् भ्रंशः विनाशः महीपतेः, भवतीति शेषः। उनि.

'परस्परामिषतया जगतो भिन्नवर्त्मनः।
दण्डाभावे परिध्वंसी मात्स्यो न्यायः प्रवर्तते॥

(१) दण्डस्याप्रणयने दोषमाह– परस्परामिषतयेति। अन्योन्यभक्ष्यत्वेन। भिन्नवर्त्मनः उच्छिन्नस्वधर्मकर्मणः। परिध्वंसी मात्स्यो न्यायः बलवता यदबलग्रसनम्। जम.

(२) महीपतेः जगतश्च ध्वंसकारणमभिधातुमाह– परस्परेति। परस्परं अन्योन्यं आमिषतया भक्ष्यभक्षकत्वेन स्थितस्य जगतः विश्वस्य भिन्नवर्त्मनः वर्णादीनां भिन्नमार्गत्वे दण्ड्यत्वात् दण्डाभावे दमनक्रियाभावे परिध्वंसी विनाशशीलः मात्स्यो न्यायः प्रवर्तते इति। उनि.

'जगदेतन्निराक्रन्दं कामलोभादिभिर्बलात्।
निमज्ज्यमानं निरये राज्ञा दण्डेन धार्यते॥

(१) दण्डमाहात्म्यमाह– जगदित्यादि। निराक्रन्दं निराश्रयम्। कामलोभादिभिः अरिषड्वर्गैः। निरये नरके। निमज्ज्यमानं निपात्यमानम्। दण्डेन धार्यते, स्वमार्गे प्रतिष्ठाप्यमानत्वात्। जम.

(२) एतदेव द्रढयितुमाह– जगदिति। एतत् चतुर्वर्णाश्रमादिस्वरूपं जगत् निरालम्बं आधाररहितं कामलोभादिभिः कामक्रोधलोभमदमानहर्षादिभिः बलात् बलेन निमज्ज्यमानं विक्षिप्यमाणं निरये रौरवादिनरके, राज्ञा विजिगीषुणा दण्डेन बन्धादिना धार्यते। यथा कश्चिदगाधपङ्के पतन् दण्डवता दण्डेन वंशादियष्ट्या धार्यते इति। उनि.

'इदं प्रकृत्या विषयैर्वशीकृतं
परस्परस्त्रीधनलोलुपं जगत्।
सनातने वर्त्मनि साधुसेविते
प्रतिष्ठते दण्डभयोपपीडितम्॥

(१) तदेव दर्शयन्नाह– इदमित्यादि। सनातनमिति (?) स्वस्मिन् स्वस्मिन् मार्गे प्रतिष्ठते प्रवर्तते। जम.

(२) उपसंहरन्नाह– इदमिति। इदं जगत् उक्तलक्षणं प्रकृत्या स्वभावेनैव विषयैः स्पर्शादिभिः वशीकृतं विधेयीकृतम्, आहारभयमैथुननिद्रादीनां शरीरेणैव सहोत्पद्यमानत्वात्। अत एव परस्परस्त्रीधनलोलुपं लम्पटं जगत् सनातने पुण्ये स्वर्गानन्त्यगामिनि वर्त्मनि मार्गे साधुसेविते मुमुक्षुभिरध्यासिते प्रतिष्ठते प्रस्थानं करोति दण्डभयेनैव, नान्येन, उपपीडितमिति। उनि.

नियतविषयवर्ती प्रायशो दण्डयोगा-
ज्जगति परवशेऽस्मिन् दुर्लभः साधुवृत्तः।
कृशमथ विकलं वा व्याधितं वाऽधनं वा
पतिमपि कुलनारी दण्डभीत्याऽभ्युपैति॥

---

(१) कानी. २।३९; उनि. मेः स्यात्त (र्मस्तु त) ध्वंसो (भ्रंशो).

(२) कानी. २।४०.

(१) कानी. २।४१; उनि. क्रन्दं (लम्बं).

(२) कानी. २।४२–४४.

(१) तत्र यद्यपि कश्चित् स्वमार्गे दण्डमन्तरेण प्रतिष्ठते, तथापि न प्रायश इति दर्शयन्नाह– नियतविषयवर्तीत्यादि। परवशे विषयवशीकृते। दुर्लभः साधुवृत्तः, यो दण्डं विना स्यात्। यथा कुलनारी कृशत्वादिदोषयुक्तं पतिमनिच्छन्त्यपि दण्डभीत्योपयन्ती नातिक्रामन्ती दृश्यते। विकलं हीनाङ्गम्। जम.

(२) एतदेव द्रढयितुमाह– नियतेति। नियतः शास्त्रनियमितः विषयः अनुष्ठानमार्गः, तद्वर्ती तत्र वर्तनशीलः प्रायशः बाहुल्येन दण्डयोगादेव, भवतीति शेषः। जगति संसारे परवशे कामाद्यरिषड्वर्गवशे अस्मिन् दुर्लभो दण्डं विना साधुवृत्तः शास्त्रोक्तानुष्ठानरतः। तदेवोत्तरार्धेन दर्शयन्नाह– कृशमिति। (कृशं) स्वभावक्षीणधातुम्। विकलं वा सुरतसुखप्राप्तिकलारहितम्। व्याधितं वा क्षयादिव्याधियुक्तम्। अधनं वा दरिद्रम्। इत्येतेष्वपि विरागकारणेषु सत्स्वपि पतिं परिणीतं भर्तारमपि परगृहदास्यपि भूत्वा पत्युपाधेयातिक्रमार्हाऽपि कुलनारी कुलस्त्री दण्डभीत्या अभ्युपैति पतित्वेनाङ्गीकरोति। दण्डश्च तस्याः शास्त्रोक्तः। तथा च कौटिल्यः– 'भर्तारं द्विषती स्त्री सप्तार्तवान्यमण्डयमाना तदानीमेव स्थाप्याभरणं निधाय भर्तारमन्यया सह शयानमनुशयीत' (कौ. ३।३।५९)। उनि.

यतात्मा राजैव दण्डप्रणयनाधिकृतः

**इति परिगणितार्थः शास्त्रमार्गानुसारी**
**नियमयति यतात्मा यः प्रजा दण्डनीत्या।**
**अपुनरपगमाय प्राप्तमार्गप्रचाराः**
**सरित इव समुद्रं संपदस्तं विशन्ति॥**

(१) प्रकरणानुष्ठाने फलमाह– इति परिगणितार्थ इत्यादि। एवं तीक्ष्णमृदुमध्यमप्रयोगेणाप्रयोगेण च विभक्तदण्डार्थः। शास्त्रं मानवादि, तन्मार्गानुसारी। तद्यथा – अयं वध्यः, अयं परिक्लेश्यः, अयमर्थं हर्तव्यश्चेति। नियमयति स्वमार्गे स्थापयति। यतात्मा जितेन्द्रियः। अपुनरपगमाय नित्यस्थितत्वेन न पुनरपगच्छन्तीत्यर्थः। प्राप्तमार्गप्रचारा इति। मार्गः आयद्वारम्। स हि प्रजानियमनेन निर्विघ्नो भवति। तत्र प्राप्तो मार्गप्रचार आभिरिति विग्रहः। जम.

(२) दण्डप्रणयने विजिगीषोः प्रयोजनमभिधातुमाह– इतीति। इति एवमुक्तन्यायेन परिगणिताः निर्णीताः अर्थाः दण्डस्य गुणदोषाः तदनुरूपाश्च वधादयो दण्डाः येन स तथा, अत एव शास्त्रमार्गानुसारी नियमयति एवं वर्तितव्यमिति नियमं करोति यतात्मा जितेन्द्रियः यो राजा प्रजा दण्डनीत्या। प्राप्तः सन्मार्गेषु प्रचारो याभिस्ताः समुद्रमिव अपुनरपगमाय अपुनर्निवृत्तये संपदः लक्ष्म्यः तं विशन्ति सरित इव। यथा सरितां समुद्रे प्रविष्टानामपगमो नास्तीति, तथा संपदामपि यथोक्तगुणं विजिगीषुं प्राप्तानामिति। उनि.

## शुक्रनीतिः

दण्डनीतिलक्षणम्

**[१]दमो दण्ड इति ख्यातस्तस्माद्दण्डो महीपतिः।**
**तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते॥**

दण्डः दमः दुष्टदमनमित्यर्थः, इति ख्यातः प्रसिद्धः। तस्मात् महीपतिः दण्डः। दमनकारित्वाद्दण्ड एवेति कार्यकारणयोरभेदेनोपचारः। तस्य महीपतेः नीतिः दण्डनीतिः। नयनात् दुष्टादुष्टनिर्णयात् नीतिः उच्यते कथ्यते। शुनीटी.

अर्थशास्त्रलक्षणम्

**[२]श्रुतिस्मृत्यविरोधेन राजवृत्तादिशासनम्।**
**सुयुक्त्याऽर्थार्जनं यत्र ह्यर्थशास्त्रं तदुच्यते॥**

यत्र श्रुतीनां स्मृतीनां च अविरोधेन राज्ञः वृत्तादीनां आचरितादीनां शासनं उपदेशः तथा सुयुक्त्या सुकौशलेन अर्थानां धनानां अर्जनं उपार्जनम्, वर्णितमिति शेषः, तत् अर्थशास्त्रं उच्यते। शुनीटी.

दण्डनीतिशास्त्रानुसारेणैव राज्ञा शासनं कर्तव्यम्

**[३]प्रणम्य जगदाधारं सर्गस्थित्यन्तकारणम्।**
**संपूज्य भार्गवः पृष्टो वन्दितः पूजितः स्तुतः॥**

(१) शुनी. १।१५७. (२) शुनी. ४।३।५६.
(३) शुनी. १।१–३५.

* पूर्वं देवैर्यथान्यायं नीतिसारमुवाच तान् ।
शतलक्षश्लोकमितं नीतिशास्त्रमथोक्तवान् ॥
स्वयंभूर्भगवाँल्लोकहितार्थं संग्रहेण वै ।
तत्सारं तु वसिष्ठाद्यैरस्माभिर्वृद्धिहेतवे ॥
अल्पायुर्भूभृदाद्यर्थं संक्षिप्तं तर्कविस्तृतम् ।
क्रियैकदेशबोधीनि शास्त्राण्यन्यानि सन्ति हि ॥
सर्वोपजीवकं लोकस्थितिकृन्नीतिशास्त्रकम् ।
धर्मार्थकाममूलं हि स्मृतं मोक्षप्रदं यतः ॥
अतः सदा नीतिशास्त्रमभ्यसेद्यत्नतो नृपः ।
यद्विज्ञानान्नृपाद्याश्च शत्रुजिल्लोकरञ्जकाः ॥

पूर्वं भगवान् स्वयंभूः विधाता लोकहितार्थं लोकानां हिताय शतलक्षश्लोकमितं नीतिशास्त्रं उक्तवान् । अथ अनन्तरं वसिष्ठाद्यैः अस्माभिः वृद्धिहेतवे अभ्युदयाय अल्पायुर्भूभृदाद्यर्थं अदीर्घजीविराजादिप्रयोजनार्थं संग्रहेण वै संक्षेपार्थमेव तत्सारं तस्य नीतिशास्त्रस्य ब्रह्मप्रोक्तस्य सारं तर्कैः युक्तिभिः विस्तृतं युक्तियुक्तं यथा तथा संक्षिप्तं संकलितम् । अन्यानि शास्त्राणि क्रियैकदेशबोधीनि एकदेशक्रियाप्रतिपादकानि विशेषार्थसाधकानीत्यर्थः, न तु साधारणानीत्यर्थः, सन्ति हि । हिशब्दोऽवधारणे । किंतु यतः यस्मात् कारणात् नीतिशास्त्रं सर्वेषां जनानां उपजीवकं जीवनोपयोगि लोकानां स्थितिकृत् मर्यादाविधायकं धर्मार्थकाममूलं त्रिवर्गहेतुभूतं तथा मोक्षप्रदं निर्वाणदायकं च, अतः नृपः यत्नतः सदा नीतिशास्त्रं अभ्यसेत् नीतिशास्त्रमनुसृत्य व्यवहरेदिति भावः । यस्य नीतिशास्त्रस्य विज्ञानात् विशेषेणावबोधात् नृपाद्याः राजप्रभृतयः राजा प्रजाश्च शत्रुजितः शत्रुजयिनः तथा लोकरञ्जकाः लोकानामानन्दविधायिनः, भवन्तीति शेषः । एतेन ग्रन्थस्य प्रयोजनं चतुर्वर्गप्राप्तिरूपं अभिधेयं सर्वविषयसमाचारज्ञानं संबन्धश्च साक्षात् परम्परया वा ज्ञाप्यज्ञापकत्वादिरूपो यथायथमूहनीयः । उक्तं च– 'ज्ञातार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते । ग्रन्थादौ तेन वक्तव्यः संबन्धः सप्रयोजनः ॥' इति । शुनीटी.

* अस्य व्याख्यानं 'राजनीतिप्रणेतारः' इत्यस्मिन् प्रकरणे (पृ. ५२४) द्रष्टव्यम् ।

सुनीतिकुशला नित्यं प्रभवन्ति च भूमिपाः ।
शब्दार्थानां न किं ज्ञानं विना व्याकरणं भवेत् ॥

भूमिपाः राजानश्च नित्यं सुनीतौ कुशलाः प्रभवन्ति, अस्य नीतिशास्त्रस्य ज्ञानादिति भावः । ननु व्याकरणमनधीत्य कथं शब्दज्ञानं, तदृते च कथं नीतिज्ञानसंभवः ? इत्याशङ्क्याऽऽह– शब्दार्थानामिति । व्याकरणं विना शब्दार्थानां ज्ञानं किं न भवेत् ? अपितु भवेदेव, व्याकरणस्य शब्दसाधने एव प्रयोजकत्वादिति भावः । शुनीटी.

प्राकृतानां पदार्थानां न्यायतर्कैर्विना न किम् ।
विधिक्रियाव्यवस्थानां न किं मीमांसया विना ॥

न्यायतर्कैः नैयायिकयुक्तिविज्ञानैः विना प्राकृतानां प्रकृतिसिद्धानां स्वाभाविकानामित्यर्थः, पदार्थानां ज्ञानं किं न भवेत् ? अपितु भवेदेव । तथा मीमांसया मीमांसकनिबन्धज्ञानेन विना विधिक्रियाव्यवस्थानां कार्यानुष्ठाननियमानां ज्ञानं च किं न भवेत् ? अपितु भवेदेव । नीतिज्ञानं न न्यायमीमांसाशास्त्रानुशीलनाधीनमिति भावः । शुनीटी.

देहावधि नश्वरत्वं वेदान्तैर्न विना हि किम् ।
स्वस्वाभिमतबोधीनि शास्त्राण्येतानि सन्ति हि ॥
तत्तन्मतानुगैः सर्वैर्विधृतानि जनैः सदा ।
बुद्धिकौशलमेतद्धि तैः किं स्याद्व्यवहारिणाम् ॥

वेदान्तैः विना वेदान्तज्ञानमृते देहावधि नश्वरत्वं देहपर्यन्तस्य नश्वरत्वं, न तु देहिन इत्यर्थः, किं न ? विज्ञायते इति शेषः । वेदान्तमते सर्वं वस्तु नश्वरं, केवलमात्मा नित्य इति ज्ञानसापेक्षं न नीतिशास्त्रमिति भावः । एतानि पूर्वोक्तानि व्याकरणादीनि शास्त्राणि स्वस्वाभिमतबोधीनि निजनिजमतप्रतिपादकानि सन्ति, तानि च तत्तन्मतानुगैः तत्तन्मतानुसारिभिः सर्वैर्जनैः सदा विधृतानि गृहीतानि । तैः शास्त्रैः व्यवहारिणां लौकिकाचारपरायणानां एतत् बुद्धिकौशलं प्रज्ञाचातुर्यं किं स्यात् ? नैवेत्यर्थः । तत्तच्छास्त्रानुशीलनेन तत्तद्वैशेषिकज्ञानमेव भवेत्, न तु लोकाचारज्ञानं, एतत्तु केवलं नीतिशास्त्रादेवेति फलितार्थः । शुनीटी.

**सर्वलोकव्यवहारस्थितिर्नीत्या विना न हि ।**
**यथाऽशनैर्विना देहस्थितिर्न स्याद्धि देहिनाम् ॥**

देहिनां प्राणिनां अशनैः भोजनैः विना यथा देहस्थितिः न स्यात्, तथा नीत्या विना सर्वेषां लोकानां व्यवहारस्थितिः आचाररक्षा न हि भवेदित्यर्थः । शुनीटी.

**सर्वाभीष्टकरं नीतिशास्त्रं स्यात्सर्वसंमतम् ।**
**अत्यावश्यं नृपस्यापि स सर्वेषां प्रभुर्यतः ॥**

नीतिशास्त्रं सर्वाभीष्टकरं सर्वजनमनोरथपूरकम्, अतः सर्वेषां जनानां संमतं स्यात् । नृपस्य अपि नृपस्य एव । अपिशब्दोऽत्र अवधारणे । अत्यावश्यं अतिप्रयोजनीयं, यतः सः नृपः सर्वेषां जनानां प्रभुः । प्रभौ नीतिपरायणे तदनुजीविनः सर्वे एव नीतिपरा भवन्तीति भावः । शुनीटी.

**शत्रवो नीतिहीनानां यथाऽपथ्याशिनां गदाः ।**
**सद्यः केचिच्च कालेन भवन्ति न भवन्ति च ॥**

नीतिहीनानां नीतिशास्त्रविमुखानां अपथ्याशिनां गदाः रोगाः इव सद्यः शत्रवः, केचिच्च कालेन भवन्ति, तथा अनीतिहीनानां नीतिपरायणानां पथ्याशिनां गदा इव केचिच्च केचिदपि शत्रवः सद्यः कालेन च न भवन्तीति अन्वयव्यतिरेकाभ्यां नीतिशास्त्रस्य फलमुक्तम् । शुनीटी.

**नृपस्य परमो धर्मः प्रजानां परिपालनम् ।**
**दुष्टनिग्रहणं नित्यं न नीत्या ते विना ह्युभे ॥**

नित्यं प्रजानां परिपालनं दुष्टनिग्रहणं च नृपस्य परमो धर्मः । नीत्या विना नीतिज्ञानं विना ते उभे प्रजापालनं दुष्टदमनं च न, भवतः इति शेषः । शुनीटी.

**अनीतिरेव संछिद्रं राज्ञो नित्यं भयावहम् ।**
**शत्रुसंवर्धनं प्रोक्तं बलह्रासकरं महत् ॥**

राज्ञः अनीतिः नीतिशास्त्राननुसरणं संछिद्रं सम्यक् छिद्रं रन्ध्रमभूत्, अतः नित्यं सततं भयावहं शत्रुसंवर्धनं शत्रुवृद्धिकरं तथा महत् बलह्रासकरं बलक्षयविधायकम् । शुनीटी.

**नीतिं त्यक्त्वा वर्तते यः स्वतन्त्रः स हि दुःखभाक् ।**
**स्वतन्त्रप्रभुसेवा तु ह्यसिधारावलेहनम् ॥**

यः नीतिं त्यक्त्वा स्वतन्त्रः स्वेच्छाचारी सन् वर्तते स हि दुःखभाक् । तस्य च स्वतन्त्रस्य प्रभोः सेवा तु असिधारावलेहनं हि । यथा यः असिधारामवलेढि स सद्यश्छिन्नजिह्वः प्राणसंशयमापद्यते, तथा स्वेच्छाचारिप्रभुसेवकोऽपि इति भावः । शुनीटी.

**स्वाराध्यो नीतिमान्राजा दुराराध्यस्त्वनीतिमान् ।**
**यत्र नीतिबले चोभे तत्र श्रीः सर्वतोमुखी ॥**

नीतिमान् राजा स्वाराध्यः सुखेन आराधनीयः, अनीतिमांस्तु दुराराध्यः दुखेन आराधनीयः । यत्र राज्ञि उभे नीतिबले नीतिः बलं चेत्यर्थः । विद्येते इतिपदमध्याहार्यम् । तत्र श्रीः लक्ष्मीः सर्वतोमुखी, भवतीति शेषः । शुनीटी.

**अप्रेरितहितकरं सर्वराष्ट्रं भवेद्यथा ।**
**तथा नीतिस्तु संधार्या नृपेणाऽऽत्महिताय वै ॥**

यथा सर्वं राष्ट्रं अप्रेरितं अकथितं सत् हितकरं भवेत्, नृपेण आत्महिताय तथा नीतिस्तु, तुशब्दोऽवधारणे, संधार्या । वैशब्दः पादपूरणार्थः । तादृशीं नीतिमनुसृत्य राज्ञा व्यवहर्तव्यं यथा प्रजा विनोपदेशं सदाचारपरा भवेदिति भावः । शुनीटी.

**भिन्नं राष्ट्रं बलं भिन्नं भिन्नोऽमात्यादिको गणः ।**
**अकौशल्यं नृपस्यैतदनीतेर्यस्य सर्वदा ॥**

यस्य नृपस्य सर्वदा अनीतेः दुर्नयात् हेतोः एतत् अकौशल्यं अनैपुण्यम्, भवतीति शेषः, तस्य राष्ट्रं भिन्नं विचलितम्, बलं सैन्यं भिन्नं भेदं गतम्, अमात्यादिको गणः परिषद्वर्गश्च भिन्नः भेदं गतः । सः अचिराद् भ्रश्यतीति भावः । शुनीटी.

**तपसा तेज आदत्ते शास्ता पाता च रञ्जकः ।**
**नृपः स्वप्राक्तनाद्वृत्ते तपसा च महीमिमाम् ॥**

तपसा तपोबलेन तेज आदत्ते अपहरति । तपसा परेषां दुर्धर्षो भवतीति भावः । शास्ता यथाशास्त्रव्यवहारी पाता रक्षकः च रञ्जकः लोकप्रियः भवतीत्यर्थः । अतः नृपः स्वप्राक्तनात् तपोबलात्, तपसा

च, ऐहिकेनेति शेषः, इमां महीं धत्ते रक्षति। ऐहिकं तपश्चात्र नीतिपर्यालोचनमिति भावः। शुनीटी.

**वृष्टिशीतोष्णनक्षत्रगतिरूपस्वभावतः।**
**इष्टानिष्टाधिकन्यूनाचारैः कालस्तु भिद्यते ॥**

वृष्टिः वर्षर्तुः शीतः शिशिरर्तुः उष्णः गीष्मर्तुः तथा नक्षत्राणि ज्योतींषि, तेषां गतेर्नियमात् रूपस्वभावतः स्वरूपप्रकृतेः हेतोः इष्टाः अभिमताः अनिष्टाः अनभिमताः अधिकाः अत्यभिमताः अत्यनभिमताश्च तथा न्यूनाः अल्पाः असर्वतोमुखीनाः ये आचाराः व्यवहाराः तैः करणभूतैः कालस्तु भिद्यते। तुशब्दोऽवधारणे। राज्ञ आचारैरेव कालभेदो भवतीति भावः। उक्तं च मनुना– 'कलिः प्रसुप्तो भवति स जाग्रद्द्वापरं युगम्। कर्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम् ॥' ( मस्मृ. ९।३०२ ) इति। शुनीटी.

दण्डप्रणयनविधिः

**आचारप्रेरको राजा ह्येतत्कालस्य कारणम्।**
**यदि कालः प्रमाणं हि कस्माद्धर्मोऽस्ति कर्तृषु ॥**

उक्तमर्थं विशदयति– आचारेति। राजा आचारप्रेरकः सदाचारनियामकः। हिशब्दोऽवधारणे। एतत् हि राजाचार इत्यर्थः। विधेयप्राधान्यात् नपुंसकनिर्देशः। कालस्य सत्यादियुगरूपस्य कारणं हेतुः। अतः यदि कालः प्रमाणं काल एव आचारप्रवर्तक इत्यर्थः, तदा कर्तृषु कार्यकारकेषु कस्मात् धर्मः शुभाशुभरूपः अस्ति वर्तते? कर्तुः स्वातन्त्र्याभावान्न शुभाशुभफलभोक्तृत्वमुचितमिति भावः। शुनीटी.

**राजदण्डभयाल्लोकः स्वस्वधर्मपरो भवेत्।**
**यो हि स्वधर्मनिरतः स तेजस्वी भवेदिह ॥**

लोकः राजदण्डभयात् स्वस्वधर्मपरः निजनिजधर्मप्रतिपालको भवेत्। यः स्वधर्मनिरतः निजधर्मपालनरतः स इह जगति तेजस्वी भवेत्। शुनीटी.

**विना स्वधर्मान्न सुखं स्वधर्मो हि परं तपः।**
**तपः स्वधर्मरूपं यद्वर्धितं येन वै सदा ॥**
**देवास्तु किङ्करास्तस्य किं पुनर्मनुजा भुवि।**
**सुदण्डैर्धर्मनिरताः प्रजाः कुर्यान्महाभयैः ॥**
**नृपः स्वधर्मनिरतो भूत्वा तेजःक्षयोऽन्यथा।**
**अभिषिक्तोऽनभिषिक्तो नृपत्वं तु यदाप्नुयात् ॥**
**बुद्ध्या बलेन शौर्येण ततो नीत्याऽनुपालयन्।**
**प्रजाः सर्वाः प्रतिदिनमच्छिद्रो दण्डधृक् सदा ॥**

स्वधर्मात् विना सुखं न भवति, हि यतः स्वधर्मः परं महत् तपः। येन सदा स्वधर्मरूपं निजधर्मपालनरूपं तपः वर्धितं सम्यक् कृतं तस्य तु देवाः किङ्कराः, भुवि पृथिव्यां मनुजाः मानवाः किं पुनः? अतः राजा अभिषिक्तः अनभिषिक्तः वा बुद्ध्या बलेन शौर्येण पराक्रमेण वा यदा नृपत्वं आप्नुयात् लभेत, तदा स्वधर्मनिरतः अच्छिद्रः निर्दोषः तथा दण्डधृक् दण्डधरः सन् सर्वाः प्रजाः नीत्या अनुपालयन् महाभयैः अतिभयंकरैः सुदण्डैः शोभनदण्डविधानैः प्रजाः सदा धर्मनिरताः स्वस्वधर्मपालनतत्पराः कुर्यात्। अन्यथा तासां, स्वधर्मपालने इत्यर्थः, तेजःक्षयः प्रतापहानिः, राज्ञ इति शेषः। यस्य प्रजा न सुशासनवर्तिन्यः तस्य तेजः क्व इति भावः। शुनीटी.

**नित्यबुद्धिमतोऽप्यर्थः स्वल्पकोऽपि विवर्धते।**
**तिर्यञ्चोऽपि वशं यान्ति शौर्यनीतिबलैर्धनैः ॥**

नित्यबुद्धिमतः सततं बुद्ध्या कार्यं पश्यतः इत्यर्थः। स्वल्पकः सामान्योऽपि अर्थः विवर्धते वृद्धिं गच्छति। शौर्यनीत्योः पराक्रमबुद्ध्योः बलैः तिर्यञ्चः पशुपक्ष्यादयः अपि वशं यान्ति, किं पुनर्मर्त्याः? इति भावः। शुनीटी.

त्रिविधेन तपसा सात्त्विकेन राजसेन तामसेन च राज्ञः त्रैविध्यम्

**सात्त्विकं तामसं चैव राजसं त्रिविधं तपः।**
**यादृक् तपति योऽत्यर्थं तादृग्भवति सो नृपः ॥**

तपः त्रिविधं सात्त्विकं सत्त्वगुणकृतं राजसं रजोगुणकृतं तथा तामसं तमोगुणकृतं यः अत्यर्थं अतिमात्रं यादृक् तपति तपश्चरति, स तादृक् तादृशतपोबलसंपन्नः नृपः राजा भवति। राजत्वस्य तपःसाध्यत्वादिति भावः। शुनीटी.

यो हि स्वधर्मनिरतः प्रजानां परिपालकः।
यष्टा च सर्वयज्ञानां नेता शत्रुगणस्य च ॥
दानशौण्डः क्षमी शूरो निःस्पृहो विषयेष्वपि ।
विरक्तः सात्त्विकः सो हि नृपोऽन्ते मोक्षमन्वियात् ॥

यः नृपः, हिशब्दोऽवधारणे, स्वधर्मनिरतः राजधर्मपालनपरः, प्रजानां परिपालकः सर्वतो रक्षिता, सर्वयज्ञानां अश्वमेधादीनां यष्टा याज्ञिकः, शत्रुगणस्य च शत्रूणामपीत्यर्थः, नेता शास्ता, दानशौण्डः बहुदानशीलः, क्षमी क्षमावान्, शूरः वीर्यसंपन्नः, विषयेष्वपि ऐश्वर्येषु अपि निस्पृहः विरक्तश्च, सः सात्त्विकः सत्त्वगुणावलम्बी । सः अन्ते परिणामे मोक्षं निर्वाणं अन्वियात् प्राप्नुयात् । शुनीटी.

विपरीतस्तामसः स्यात्सोऽन्ते नरकभाजनः।
निर्घृणश्च मदोन्मत्तो हिंसकः सत्यवर्जितः ॥

यः नृपः विपरीतः पूर्वोक्तधर्मबहिर्भूतः, निर्घृणः निर्दयः, मदेन मद्यपानजनितेन विकारेण गर्वेण वा उन्मत्तः, हिंसकः, तथा सत्यवर्जितः अलीकरतः, सः तामसः तमोगुणावलम्बी । सः अन्ते नरकभाजनः निरयगामी भवतीति शेषः । शुनीटी.

राजसो दाम्भिको लोभी विषयी वञ्चकः शठः।
मनसाऽन्यश्च वचसा कर्मणा कलहप्रियः ॥
नीचप्रियः स्वतन्त्रश्च नीतिहीनश्छलान्तरः ।
स तिर्यक्त्वं स्थावरत्वं भविताऽन्ते नृपाधमः ॥

यश्च दाम्भिकः दम्भमयः, लोभी लुब्धः, विषयी विषयलोलुपः, वञ्चकः प्रतारकः, शठः धूर्तः, मनसा अन्यः, वचसा अन्यः, कर्मणा च अन्यः, कलहप्रियः विवादरतः, नीचप्रियः नीचानां दुर्जनानां प्रियः, स्वतन्त्रः स्वेच्छाचारी, नीतिहीनः नीतिशास्त्रविमुखः, तथा छलान्तरः कपटपूर्णः, स नृपाधमः अन्ते तिर्यक्त्वं पश्वादिभावं वा स्थावरत्वं वृक्षादिभावं भविता प्राप्स्यति । भूधातोः प्राप्त्यर्थकत्वमिह बोद्धव्यम् । शुनीटी.

देवांशान् सात्त्विको भुङ्क्ते राक्षसांशांस्तु तामसः ।
राजसो मानवांशांस्तु सत्त्वे धार्यं मनस्ततः ॥

सात्त्विकः सत्त्वगुणावलम्बी देवांशान्, तामसः तमोगुणावलम्बी राक्षसांशान्, तथा राजसः रजोगुणावलम्बी मानवांशान् प्राप्नोति । ततः तस्मात् हेतोः सत्त्वे मनो धार्यम् । सत्त्वगुणः एवाऽऽश्रयणीयः इति भावः । शुनीटी.

राजा कालस्य कारणम्

[१]कालस्य कारणं राजा सदसत्कर्मणस्त्वतः ।
स्वकार्योद्यतदण्डाभ्यां स्वधर्मे स्थापयेत्प्रजाः ॥

राजा कालस्य कारणम् । अयं भावः– यदा राजा सम्यक् कार्यं पश्यति स कालः सत्ययुगम्, यदा सामान्यतः पश्यति तदा त्रेतायुगम्, यदा न कार्यं पश्यति तदा द्वापरयुगम्, यदा निद्राति तदा कलियुगमिति । अतः सदसत्कर्मणः कारणं तु एव । तुशब्दः अवधारणे । राज्ञ एव लोकानां सदसत्कर्मप्रवर्तकत्वादिति भावः । तस्मात् राजा स्वकार्ये उद्यतं उद्योगः, भावे क्तप्रत्ययः, दण्डश्च, ताभ्यां प्रजाः स्वधर्मे स्थापयेत् । शुनीटी.

[२]न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाः ।
त्रिवर्गेणोपसंधत्ते निहन्ति ध्रुवमन्यथा ॥

नृपतिः न्यायप्रवृत्तः न्यायपरायणः सन् आत्मानं प्रजाश्च त्रयाणां धर्मार्थकामानां वर्गैः उपसंधत्ते योजयति । अन्यथा अन्यायप्रवृत्तश्चेत् आत्मानं प्रजाश्च ध्रुवं निश्चितं निहन्ति नाशयति । शुनीटी.

धर्मं द्वैतवने राजा विधाय बुभुजे भुवम् ।
अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥

राजा युधिष्ठिरः इत्यर्थः । द्वैतवने धर्मं विधाय भुवं बुभुजे । नहुषः अधर्मात् रसातलं प्रतिपेदे च । एवशब्दोऽवधारणे । शुनीटी.

(१) शुनी. १।६०.
(२) शुनी. १।६७–७०.

**वेनो नष्टस्त्वधर्मेण पृथुर्वृद्धस्तु धर्मतः ।**
**तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय पार्थिवः ॥**

वेनो नाम नृपतिः अधर्मेण नष्टः । पृथुः वेनपुत्रः धर्मतः धर्मेण वृद्धिं गतः । तस्मात् पार्थिवः धर्मं पुरस्कृत्य आश्रित्य अर्थाय अर्थलाभाय यतेत यत्नं कुर्यात् । शुनीटी.

राजा देवांशो रक्षोंशश्च,

सप्तगुणो राजा

**यो हि धर्मपरो राजा देवांशोऽन्यश्च रक्षसाम् ।**
**अंशभूतो धर्मलोपी प्रजापीडाकरो भवेत् ॥**

यः राजा धर्मपरः स देवांशः । अन्यः रक्षसां अंशभूतः नृपः धर्मलोपी प्रजानां पीडाकरश्च भवेत् । शुनीटी.

**[1]पिता माता गुरुर्भ्राता बन्धुर्वैश्रवणो यमः ।**
**नित्यं सप्तगुणैरेषां युक्तो राजा न चान्यथा ॥**

पिता जनकः । माता जननी । गुरुः आचार्यः । भ्राता सोदरः । बन्धुः सुहृत् । वैश्रवणः धनपतिः । यमः दण्डधरः । एषां सप्तगुणैः राजा नित्यं युक्तः भवेत् । अन्यथा एषां गुणैर्विहीनः इत्यर्थः, न च रञ्जको भवेत् । शुनीटी.

**गुणसाधनसंदक्षः स्वप्रजायाः पिता यथा ।**
**क्षमयित्र्यपराधानां माता पुष्टिविधायिनी ॥**

राजा पिता यथा जनकः इव स्वप्रजायाः गुणसाधने गुणोपार्जने संदक्षः सम्यक् तत्परः, भवेदिति शेषः । तथा पुष्टिविधायिनी पोषणकारिणी अपराधानां दोषाणां क्षमयित्री माता यथा जननीव प्रजानां पोषकः क्षमाशीलश्च भवेत् । शुनीटी.

**हितोपदेष्टा शिष्यस्य सुविद्याध्यापको गुरुः ।**
**स्वभागोद्धारकृद्भ्राता यथाशास्त्रं पितुर्धनात् ॥**

सुविद्याध्यापकः शोभनविद्याशिक्षकः गुरुर्यथा शिष्यस्य उपदेष्टा तथा राजा प्रजानां विद्यादाता उपदेष्टा च भवेत् । भ्राता यथा पितुर्धनात् स्वस्य भागस्य उद्धारं करोतीति स्वभागोद्धारकृत्, तथा राजा प्रजाभ्यः स्वभागमुद्धरेदिति भावः । शुनीटी.

**आत्मस्त्रीधनगुह्यानां गोप्ता बन्धुस्तु मित्रवत् ।**
**धनदस्तु कुबेरः स्याद्यमः स्याच्च सुदण्डकृत् ॥**

राजा मित्रवत् आत्मनः स्त्रीणां धनानां तथा गुह्यानां विषयाणां गोप्ता रक्षिता अत एव बन्धुः, धनदः अत एव कुबेरः, तथा सुदण्डकृत् यथान्यायं दण्डयिता अत एव यमः स्यात् । शुनीटी.

**प्रवृद्धिमति संराज्ञि निवसन्ति गुणा अमी ।**
**एते सप्त गुणा राज्ञा न हातव्याः कदाचन ॥**

प्रवृद्धिमति प्रकृष्टाभ्युदयशालिनि संराज्ञि शोभने राजनि अमी पूर्वोक्ताः पित्रादिगुणाः निवसन्ति । अतः राज्ञा कदाचन एते सप्त गुणाः न हातव्याः न त्यक्तव्याः । शुनीटी.

**क्षमते योऽपराधं स शक्तः सुदमने क्षमी ।**
**क्षमया तु विना भूपो न भात्यखिलसद्गुणैः ॥**

यः शक्तः समर्थः सन् अपराधं क्षमते स सुदमने प्रजानां सुशासने क्षमी सक्षमः । क्षमया तु विना भूपः अखिलैः समग्रैः सद्गुणैः उपलक्षितोऽपीत्यर्थः, न भाति न शोभते । शुनीटी.

**स्वान् दुर्गुणान् परित्यज्य ह्यतिवादांस्तितिक्षते ।**
**दानैर्मानैश्च सत्कारैः स्वप्रजारञ्जकः सदा ॥**

यः स्वान् निजान् दुर्गुणान् दोषान् परित्यज्य अतिवादान् निन्दावादान् तितिक्षते सहते । किंच सदा दानैः मानैः सत्कारैः समादरविशेषैश्च स्वप्रजानां रञ्जकः प्रीतिजनकः । शुनीटी.

*** दान्तः शूरश्च शस्त्रास्त्रकुशलोऽरिनिषूदनः ।**
**अस्वतन्त्रश्च मेधावी ज्ञानविज्ञानसंयुतः ॥**

(१) शुनी. १।७८-९१.

* 'दान्तः शूरश्च' इत्यादिसार्धश्लोकद्वयस्य व्याख्यानसंग्रहः 'प्रकृतयः — स्वामी' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

नीचहीनो दीर्घदर्शी वृद्धसेवी सुनीतियुक् ।
गुणिजुष्टस्तु यो राजा स ज्ञेयो देवतांशकः ॥
विपरीतस्तु रक्षोंशः स वै नरकभाजनः ॥

नृपसहायगणः नृपांशसदृशः

नृपांशसदृशो नित्यं तत्सहायगणः किल ॥

तस्य राज्ञः सहायगणः सहचरवर्गः नृपांशसदृशः राजांशसमानः । यादृशो राजा तादृश एव तत्पार्श्वचर इत्यर्थः । ' यस्य देवस्य यद्रूपं यथा भूषणवाहनम् । तद्वदेव हि तच्छक्तिः ' इति भावः । शुनीटी.

तत्कृतं मन्यते राजा संतुष्यति च मोदते ।
तेषामाचरणैर्नित्यं नान्यथा नियतेर्बलात् ॥

राजा नित्यं सततं तत्कृतं तेषां पार्श्वचराणां कृतं कार्यं मन्यते अनुमोदते । तथा नियतेः अदृष्टस्य बलात् प्रभावात् तेषां आचरणैः व्यवहारैः संतुष्यति संतोषं लभते । अन्यथा न मोदते न हृष्यति । शुनीटी.

अवश्यमेव भोक्तव्यं कृतकर्मफलं नरैः ।
प्रतिकारैर्विना नैव प्रतिकारे कृते सति ॥

नरैः मानवैः प्रतिकारैः विना शान्तिमन्तरेण कृतकर्मफलं अवश्यमेव निश्चितमेव भोक्तव्यम् । प्रतिकारे शान्तौ कृते सति नैव भोक्तव्यमिति । शुनीटी.

तथा भोगाय भवति चिकित्सितगदो यथा ।
उपदिष्टेऽनिष्टहेतौ तत्तत्कर्तुं यतेत कः ॥

चिकित्सितगदः प्रतिकृतरोगः यथा भोगाय भवति शक्नोति तथा प्रतिकृतकर्मफलः राजा भोगाय भवति । अनिष्टहेतौ उपदिष्टे उपदेशेन सम्यग्विदिते सति कः तत् तत् अनिष्टं कर्तुं यतेत ? न कोऽपीत्यर्थः । शुनीटी.

रज्यते सत्फले स्वान्तं दुष्फले न हि कस्यचित् ।
सदसद्बोधकान्येव दृष्ट्वा शास्त्राणि चाऽऽचरेत् ॥

सत्फले सुन्दरे फले सति स्वान्तं मनः रज्यते हृष्यति । दुष्फले मन्दफले सति कस्यचिदपि न हि नैव । सदसद्बोधकानि हिताहितप्रतिपादकानि शास्त्राणि दृष्ट्वा आचरेत् । यथा दुष्फलं न स्यात् तथा व्यवहरेदित्यर्थः । शुनीटी.

राज्ञः सद्वृत्तम्

[१]किमुच्यते कुटुम्बीति परस्त्रीसंगमान्नरः ।
स्वप्रजादण्डनाच्छूरो धनिकोऽन्यधनैश्च किम् ॥

नरः परस्त्रीसंगमात् किं कुटुम्बी गृही उच्यते ? नैवेत्यर्थः । तथा स्वप्रजादण्डनात् शूरः बलवान् वा ? अन्यधनैः परधनैः, हृतैरिति शेषः, धनिकः धनवान् किं उच्यते ? नैवेत्यर्थः । शुनीटी.

अरक्षितारं नृपतिं ब्राह्मणं चातपस्विनम् ।
धनिकं चाप्रदातारं देवा घ्नन्ति त्यजन्त्यधः ॥

देवाः अरक्षितारं प्रजापालनमकुर्वाणं नृपतिम्, अतपस्विनं तपोविरहितं ब्राह्मणम्, तथा अप्रदातारं कृपणं धनिकं देवाः घ्नन्ति नाशयन्ति, अधः त्यजन्ति कुर्वन्ति च । शुनीटी.

स्वामित्वं चैव दातृत्वं धनिकत्वं तपःफलम् ।
एनसः फलमर्थित्वं दास्यत्वं च दरिद्रता ॥

स्वामित्वं आधिपत्यं, दातृत्वं दानशीलत्वं, तथा धनिकत्वं धनवत्त्वं तपसः फलम् । तपोबलेनैवैतानि लभ्यन्ते इति भावः । तथा अर्थित्वं याचकत्वं, दासत्वं दासवृत्तिः, दरिद्रता निर्धनता च एनसः पापस्य फलम् । पापेनैवैतानि संभवन्तीति भावः । शुनीटी.

दृष्ट्वा शास्त्राण्यतोत्मानं सनियम्य यथोचितम् ।
कुर्यान्नृपः स्ववृत्तं तु परत्रेह सुखाय च ॥

अतः कारणात् नृपः शास्त्राणि दृष्ट्वा समालोच्य आत्मानं संनियम्य वशीकृत्य परत्र इह च सुखाय यथोचितं स्ववृत्तं स्वकर्तव्यं कार्यं कुर्यात् । शुनीटी.

दण्डप्रयोजनम्

[२]जायते धर्मनिरता प्रजा दण्डभयेन च ।
करोत्याधर्षणं नैव तथा चासत्यभाषणम् ॥
क्रूराश्च मार्दवं यान्ति दुष्टा दौष्ट्यं त्यजन्ति च ।
पशवोऽपि वशं यान्ति विद्रवन्ति च दस्यवः ॥

---

(१) शुनी. १।१२०-१२३.
(२) शुनी. ४।१।४८-५०, ५२.

**पिशुना मूकतां यान्ति भयं यान्त्याततायिनः ।**
**करदाश्च भवन्त्यन्ये वित्रासं यान्ति चापरे ।**
**अतो दण्डधरो नित्यं स्यान्नृपो धर्मरक्षणे ॥**

दण्डभयेन प्रजा धर्मनिरता धर्मनिष्ठा जायते, आधर्षणं दुर्बलाक्रमणं तथा असत्यभाषणं च नैव करोति । क्रूराः दुर्जनाः मार्दवं मृदुत्वं यान्ति प्राप्नुवन्ति । दुष्टाः जनाः दौष्ट्यं दोषं त्यजन्ति च । पशवः अपि वशं यान्ति । दस्यवः विद्रवन्ति पलायन्ते च । पिशुनाः खलाः धूर्ता इत्यर्थः, मूकतां मौनभावं यान्ति । आततायिनः उत्कटपापकारिणः जनाः भयं यान्ति च । अन्ये अकरदा जना इत्यर्थः, करदाः राजस्वदायिनः भवन्ति । अपरे वित्रासं विशेषेण त्रासं यान्ति च । अतः अस्मात् कारणात् नृपः धर्मरक्षणे विषये नित्यं सततं दण्डधरः स्यात् । शुनीटी.

**राज्ञां सदण्डनीत्या हि सर्वे सिध्यन्त्युपक्रमाः ।**
**दण्ड एव हि धर्माणां शरणं परमं स्मृतम् ॥**

राज्ञां सदण्डनीत्या सदण्डया दण्डसहितया नीत्या सर्वे उपक्रमाः कार्याणि सिध्यन्ति हि । हि यतः दण्ड एव धर्माणां परमं शरणं आश्रयः स्मृतम् । शुनीटी.

शुक्रोक्तनीतेर्महिमा

**[1]मन्वाद्यैराद्दतो योऽर्थस्तदर्थो भार्गवेण वै ।**
**द्वाविंशतिशतं श्लोका नीतिसारे प्रकीर्तिताः ॥**

यः अर्थः विषयः मन्वाद्यैः मनुप्रभृतिभिः आद्दतः, भार्गवेण भृगुणा च तदर्थः तस्य मानवधर्मस्य अर्थः आद्दतः । तदर्थसंकलिताः द्वाविंशतिशतं श्लोकाः नीतिसारे प्रकीर्तिताः निबद्धाः, मयेति शेषः । शुनीटी.

**शुक्रोक्तनीतिसारं यश्चिन्तयेदनिशं सदा ।**
**व्यवहारधुरं वोढुं स शक्तो नृपतिर्भवेत् ॥**

यः नृपतिः शुक्रेण उक्तं नीतिसारं अनिशं चिन्तयेत् सः सदा व्यवहारधुरं राजकार्यभारं वोढुं शक्तः भवेत् । शुनीटी.

(१) शुनी. ४।७।४२३–४२६.

**न कवेः सद्दशा नीतिस्त्रिषु लोकेषु विद्यते ।**
**काव्यैव नीतिरन्या तु कुनीतिर्व्यवहारिणाम् ॥**

त्रिषु लोकेषु कवेः शुक्रस्य सद्दशी नीतिः न विद्यते । तस्मात् काव्यैव कविकृतैव शुक्रकृतैव इत्यर्थः, नीतिः, अन्या तु तद्भिन्ना तु व्यवहारिणां कुनीतिः । शुनीटी.

**नाश्रयन्ति च ये नीतिं मन्दभाग्यास्तु ते नृपाः ।**
**कातर्याद्धनलोभाद्वा स्युर्वै नरकभाजनाः ॥**

ये नृपाः कातर्यात् अक्षमत्वात् धनलोभाद्वा नीतिं न आश्रयन्ति ते मन्दभाग्याः नरकभाजनाः स्युः । वैशब्दः अवधारणार्थः । निश्चितं नरकं गच्छन्तीत्यर्थः । शुनीटी.

## नीतिवाक्यामृतम्

धर्मार्थकामानां स्वरूपादिविचारः

**[1]यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥**

अथ धर्मलक्षणमाह– यत इति । अभ्युदयशब्देनात्र स्वर्गः प्रोच्यते । यतः यस्मात् स्वर्गप्राप्तिर्भवति तथा निःश्रेयसस्य मोक्षस्य सिद्धिर्भवति स धर्मः, न पुनर्यः कौलनास्तिकैरुक्तः स्त्रीसेवामद्यपानादिलक्षणः । उक्तं च यतो नारदेन– ‘ नास्तिकोक्तस्तु यो धर्मस्तं विद्यात्केवलं मलम् । सुरापानाद्यतः स्वर्गस्तत्रोक्तश्चानिषेवणात् ॥ ’ । नीवाटी.

**अधर्मः पुनरेतद्विपरीतफलः ॥**

अथाधर्मस्य लक्षणमाह– अधर्म इति । अधर्मस्तु पुनरेतस्य पूर्वोक्तस्य विपरीतफलः, यत्र न स्वर्गसिद्धिर्न मोक्षसिद्धिश्च । तथापि स धर्मः कौलैर्नास्तिकैश्च कथ्यते, परं न भवति, यतः स मद्यमांसस्त्रीनिषेवणद्वारेण । तथा च नारदः– ‘ मद्यमांसाशनासङ्गैर्यो धर्मः कौलसंमतः । केवलं नरकायैव न स कार्यो विवेकिभिः ॥ ’ । नीवाटी.

**आत्मवत्परत्र कुशलवृत्तिचिन्तनं शक्तितस्त्यागतपसी च धर्माधिगमोपायाः ॥**

(१) नीवा. १।१–४८.

अथ धर्माधिगमोपायानाह– आत्मवदिति । त्यागः कार्यः शक्तितः । उक्तं च यतः शुक्रेण– ' आत्मवित्तानुसारेण त्यागः कार्यो विवेकिना । कृतेन येन नो पीडा कुटुम्बस्य प्रजायते ॥ कुटुम्बं पीडयित्वा तु यो धर्मं कुरुते कुधीः । न स धर्मो हि पापं तद्देशत्यागाय केवलम् ॥ ' । तथा शक्तितः शरीरस्य तपः कार्यम् । तथा च गुरुः – ' शरीरं पीडयित्वा तु यो व्रतानि समाचरेत् । न तस्य प्रीयते चाऽऽत्मा तत्तुष्यात्तप आचरेत् ॥ ' इत्येवं धर्माधिगमोपायाः सर्वेऽपि पूर्वोक्ताः शक्तितः कर्तव्या इति । नीवाटी.

**सर्वसत्त्वेषु हि समता सर्वाचरणानां परमाचरणम् ॥**

अथ सर्वाचरणानां यत्प्रधानमाचरणं तदाह– सर्वेति । समताशब्देन निर्वैरता कथ्यते । सा यस्य पुरुषस्य भवति शत्रूणामप्युपरि, तत्तस्य परमाचरणं कृतं कथ्यते । यानीहान्यान्याचरणानि स्नानदानजपहोमपूर्वाणि शुभकृत्यानि, तेषां मध्ये येषां निर्वैरता सर्वसत्त्वानामुपरि दया तत् प्रधानमाचरणम् । तथा च नारदः– ' यूकामत्कुणदंशान्यपि पाल्यानि पुत्रवत् । एतदाचरणं श्रेष्ठं यत्त्यागो वैरसंभवः ॥ ' । नीवाटी.

**न खलु भूतद्रुहां काऽपि क्रिया प्रसूते श्रेयांसि ॥**

अथ वधात्मकानां पुरुषाणां यद्भवति तदाह– न खल्विति । भूतानि चतुर्विधानि स्वेदजाण्डजजरायुजोद्भिज्जसंज्ञानि तानि यदभिद्रुहन्ति व्यापादयन्ति, तेषां काचिदपि क्रिया शुभाऽपि क्रियमाणा निःश्रेयांसि कल्याणानि न प्रसूते न जनयति । कोऽर्थः ? व्यसनात् व्यसनमुत्पद्यते । तथा च व्यासः– ' अहिंसकानि भूतानि यो हिनस्ति स निर्दयः । तस्य कर्मक्रिया व्यर्था वर्धन्ते वाऽऽपदः सदा ॥ ' । नीवाटी.

**परत्राजिघांसुमनसां व्रतरिक्तमपि चित्तं स्वर्गाय जायते ॥**

अथाहिंसकानां यद्भवति तदाह– परत्रेति । परत्रशब्देन सर्वोऽपि जनः कथ्यते । तत्र विषये अजिघांसुमनसां अद्रोहचित्तानां यच्चित्तं दयान्वितं भवति, तत् व्रतरिक्तमपि प्रव्रज्यारिक्तमपि स्वर्गार्थं भवतीत्यर्थः । तथा च व्यासः– ' येषां परविनाशाय नात्र चित्तं प्रवर्तते । अव्रता अपि ते मर्त्याः स्वर्गे यान्ति दयान्विताः ॥ ' । नीवाटी.

**स खलु त्यागो देशत्यागाय यस्मिन् कृते भवत्यात्मनो दौःस्थित्यम् ॥**

अथासत्त्यागे कृते यद्भवति तदाह– स खल्विति । अत्र आत्मशब्देन सकलमपि कुटुम्बं ग्राह्यम् । तथा च शुक्रः– ' आगतेरधिकं त्यागं यः कुर्यात्तत्सुतादयः । दुःस्थिताः स्युर्ऋणग्रस्ताः सोऽपि देशान्तरं व्रजेत् ॥ ' । नीवाटी.

**स खल्वर्थी परिपन्थी यः परस्य दौःस्थित्यं जानन्नप्यभिलषत्यर्थम् ॥**

अथाविद्यमानं यो याचते तत्स्वरूपमाह– स इति । स पुरुषः खलु निश्चयेन परिपन्थी शत्रुभूतः, यः किं कुर्यात् ? यो जानन्नपि परस्य दारिद्र्यमविद्यमानमभिलषति याचते । तथा च बृहस्पतिः– ' असन्तमपि यो लौल्याज्जानन्नपि च याचते । साधुः स तस्य शत्रुर्हि यद्दानो दुःखश्चायच्छति ( ? ) ॥ ' । नीवाटी.

**तद्व्रतमाचरितव्यं यत्र न संशयतुलामारोहतः शरीरमनसी ॥**

अथ तद्वृथा अशक्त्या यद्व्रतं क्रियते, तदर्थमाह– तद्व्रतमिति । पुरुषेण नार्या वा तद्व्रतं नियमलक्षणं आचरितव्यं करणीयम्, यस्मिन् कृते संशयतुलां संदेहं नारोहतः न चटतः । के ? शरीरमनसी कायचित्ते । तथा च चारायणः– ' अशक्त्या यः शरीरस्य व्रतं नियममेव वा । करोत्यार्तो भवेत्पश्चात्पश्चात्तापात्फलच्युतिः ॥ ' । नीवाटी.

**ऐहिकामुत्रिकफलार्थमर्थव्ययस्त्यागः ॥**

अथ त्यागस्य माहात्म्यमाह– ऐहिकेति । ऐहिकं मर्त्यलोकोद्भवं, आमुत्रिकं स्वर्गलोकोत्पन्नं फलं यस्मिन् त्यागे कृते भवति स त्यागः । योऽन्यः स वित्तक्षय एव,

ऐहिकामुत्रिकफलवर्जितो व्यसनेन यः क्रियते इति । तथा च चारायणः– 'धूर्ते बन्दिनि मल्ले च कुवैद्ये कैतवे शठे । चाटुचारणचौरेषु दत्तं भवति निष्फलम् ॥' । नीवाटी.

**भस्मनि हुतमिवापात्रेष्वर्थव्ययः ॥**

अथापात्रदाने यद्भवति तदाह– भस्मनीति । न केवलं मुर्ख एवापात्रम्, कुभृत्ये कुवाहने कुशास्त्रे कुतपस्विनि कुविप्रे कुस्वामिनि यो व्ययः स भस्महोमविधिरेव । ऐहिकामुत्रिकवर्जितो निष्फल एव । तथा च नारदः– 'कुभृत्ये च कयाने च कुशास्त्रे कुतपस्विनि । कुविप्रे कुत्सिते नाथे व्ययो भस्मकृतं यथा ॥' । नीवाटी.

**पात्रं च त्रिविधं धर्मपात्रं कार्यपात्रं कामपात्रं चेति ॥**

अथाऽऽचार्यमतेन पात्रस्वरूपमाह– पात्रमिति । अत्र यद्धर्मपात्रं विद्याधिकमनुष्ठानसहितं दौहित्रादिलक्षणं तत्पारत्रिकम् । यत्पुनः कार्यपात्रं तत्प्रयोजनलक्षणमैहिकं च । यत्पुनः कामपात्रं तत्स्वकलत्रलक्षणमैहिकं पारत्रिकं च । तथा च वसिष्ठः– 'स्वर्गाय धर्मपात्रं च कार्यपात्रमिह स्मृतम् । कामपात्रं निजा कान्ता लोकद्वयप्रदायकम् ॥' । नीवाटी.

**किं तया कीर्त्या या आश्रितान्न बिभर्ति, प्रतिरुणद्धि वा धर्मं, भागीरथीश्रीपर्वतवद्भावानामन्यदेव प्रसिद्धेः कारणं, न पुनस्त्यागः, यतो न खलु ग्रहीतारो व्यापिनः सनातनाश्च ॥**

अथ कीर्तिदूषणमाह– किमिति । प्रतिरुणद्धि निषेवति ( ते ) मद्यस्त्रीद्यूतकारेण, तया ऐहिकामुत्रिके न भवतः । तथा च विदुरः– 'आश्रितान् पीडयित्वा च धर्मं त्यक्त्वा सुदूरतः । या कीर्तिः क्रियते मूढैः कि तयाऽपि प्रभूतया ॥' । अनु च– 'कैतवा यं प्रशंसन्ति यं प्रशंसन्ति मद्यपाः । यं प्रशंसन्ति बन्धक्यः कीर्तिः साऽकीर्तिरूपिणी ॥' । नीवाटी.

**स खलु कस्यापि मा भूदर्थो यत्रासंविभागः शरणागतानाम् ॥**

अथ अर्थस्य विद्यमानस्य यद्दूषणं तदाह– स खल्विति । यत्र यस्मिन्नर्थे विद्यमाने असंविभागः सामान्यभोजनाच्छादनादीनि न भवन्ति । केषाम् ? शरणागतानां समाश्रितानाम् । सोऽर्थो मनुष्याणां मा भूत् मा भवतु । तथा च वल्लभदेवः– 'किं तया क्रियते लक्ष्म्या या वधूरिव केवला । या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥' । नीवाटी.

**अर्थिषु संविभागः स्वयमुपभोगश्चार्थस्य हि द्वे फले, नास्त्यौचित्यमेकान्तलुब्धस्य ॥**

अथ अर्थलुब्धस्य यद्भवति तदाह– अर्थिष्विति । एकान्तं अनवरतं अर्थलुब्धस्य पुरुषस्यौचित्यं नास्ति । कोऽर्थः ? यत् यस्य योग्यं तत् लोभान्न करोति । तथा च गुरुः– 'लोभात्समुद्रतरणं लोभात्पापनिषेवणम् । ब्राह्मणोऽपि करोत्यत्र तस्मात्तं नातिकारयेत् ॥' । नीवाटी.

**स खलु लुब्धो सत्सु विनियोगादात्मना सह जन्मान्तरेषु नयत्यर्थम् ॥**

अथ लुब्धस्य प्रशंसामाह– स खल्विति । स खलु लुब्धो लोलुपी स स्यात् यः सत्सु विनियोगात् साधुजनेभ्यो दत्त्वा अर्थं पश्चादात्मना सह नयति । एतदुक्तं भवति– साधुजनदत्तं दातुर्दानमक्षयं स्यात्, सर्वास्वपि योनिषु तदुपतिष्ठते, तस्मान्नार्थलुब्धो लुब्धः, इत्थंभूतो लुब्धः कथ्यते । तथा च वर्गः– 'दत्तं पात्रेऽत्र यद्दानं जायते चाक्षयं हि तत् । जन्मान्तरेषु सर्वेषु दातुश्चैवोपतिष्ठते ॥' । नीवाटी.

**अदातुः प्रियालापोऽन्यस्य लाभस्यान्तरायः ॥**

अथ याचकस्य यथाऽन्यलाभक्षतिर्भवति तदाह– अदातुरिति । याचकस्य अदाता पुरुषो यः प्रियं वक्ति सोऽन्यलाभान्तरायः अन्यलाभविनाशकारीत्यर्थः । तथा च वर्गः– 'प्रत्याख्यानमदातानां ( ?ता ना ) याचकाय करोति यः । तत्क्षणाच्चैव तस्याऽऽशा वृथा स्यान्नैव दुःखदा ॥' । नीवाटी.

**सदैव दुःस्थितानां को नाम बन्धुः ॥**

अथ दरिद्रस्य यद्भवति तदाह– सदैवेति । सदैव सर्वकालमपि दुःस्थितानां दरिद्राणां को नामाहो बन्धुः ?

न कोऽपीत्यर्थः । तथा च जैमिनिः— 'उपकर्तुमपि प्राप्तं निःस्वं दृष्ट्वा स्वमन्दिरे । गुप्तं करोति चाऽऽत्मानं गृही याचनशङ्कया ॥' । नीवाटी.

**नित्यमर्थयतां को नाम नोद्विजते ॥**

अथ याचकदूषणमाह— नित्यमिति । सर्वदा सर्वकालं प्रार्थयतां को नामाहो नोद्विजते नोद्वेगं करोति निजपुत्राणामपि ? तथा च व्यासः— 'मित्रैवं बन्धुवानौ वातिप्रार्थनार्दितं कुर्यात् (?) । अपि वत्समतिपिबन्तं विषाणैरधिक्षिपति धेनुः ॥' । नीवाटी.

**इन्द्रियमनसोर्नियमानुष्ठानं तपः ॥**

अथ तपःस्वरूपमाह— इन्द्रियेति । इन्द्रियं च मनश्च इन्द्रियमनसी, तयोर्नियमानुष्ठानं तदेव तपः, न केवलं लिङ्गधारणम् । तथा च व्यासः— 'यदि वहति च दण्डं नग्नमुण्डं करण्डं यदि वससि गुहायां वृक्षमूले शिलायाम् । यदि पठसि पुराणं वेदसिद्धान्ततत्त्वं यदि हृदयमशुद्धं सर्वमेतन्न किंचित् ॥' । तथा च विदुरः— 'पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेवमिन्द्रियम् । ततोऽस्य स्रवति प्रज्ञा हारः (? हरेः) पादादिवोदकम् ॥' । नीवाटी.

**विहिताचरणं निषिद्धपरिवर्जनं च नियमः ॥**

अथ नियमलक्षणमाह— विहिताचरणमिति । व्रतादेः प्रारब्धस्याऽऽचरणं यत्किंचिद्भिक्षाद्यं निषिद्धं तस्य वर्जनं च नियमः प्रोच्यते । तथा च नारदः— 'यद्व्रतं क्रियते सम्यगन्तरायविवर्जितम् । न भक्षयेन्निषिद्धं यो नियमः स उदाहृतः ॥' । नीवाटी.

**विधिनिषेधावैतिह्यायत्तौ ॥**

अथ ऐतिह्यमाहात्म्यमाह— विधीति । विधिश्च निषेधश्च विधिनिषेधौ । आयत्तौ वशगौ । कस्य ? ऐतिह्यस्य आगमस्य । विधानं विधिः, निषेधः अकृत्यनिवृत्तिः, ताभ्यां यत्फलं भवति तदागमायत्तं शुभाशुभम् । तथा च भागुरिः— 'विधिना विहितं कृत्यं परं श्रेयः प्रयच्छति । विधिना रहितं यच्च यथा भस्महुतं तथा ॥' । अन्त्र च— 'निषेधं यः पुरा कृत्वा कस्यचिद्वस्तुनः पुमान् । तदेव सेवते पश्चात् सत्यहीनः स पापकृत् ॥' । नीवाटी.

**तत्खलु सद्भिः श्रद्धेयमैतिह्यं यत्र न प्रमाणबाधा पूर्वापरविरोधो वा ॥**

अथ ऐतिह्यनिर्णयमाह— तत्खल्विति । ऐतिह्यशब्देन आगम उच्यते । यत्र यस्मिन्नैतिह्ये प्रमाणबाधा प्रमाणदूषणं न भवति तदैतिह्यं स आगमः सद्भिः शिष्टैः श्रद्धेयो मन्यते । प्रमाणशब्देन स्वदर्शनाभिप्रायः कथ्यते । तथा च यत्र पूर्वापरविरोधो न भवति । कोऽर्थः ? यत्र प्रथमं उक्त्वा दर्शनाभिप्रायं पश्चात्तं न दूषयति, प्रतिष्ठापयतीत्यर्थः, सोऽपि श्रद्धेयः । तथा च नारदः— 'स्वदर्शनस्य माहात्म्यं यो न हन्यात्स आगमः । पूर्वापर(? परा)विरोधश्च शस्यते स च साधुभिः ॥' । नीवाटी.

**हस्तिस्नानमिव सर्वमनुष्ठानमनियमितेन्द्रियमनोवृत्तीनाम् ॥**

अथ चञ्चलमनसां यद्भवति तदाह— हस्तिस्नानमिवेति । वर्तनं वृत्तिः, अनियमितानि इन्द्रियाणि मनोवृत्तिश्च येषां ते अनियमितेन्द्रियमनोवृत्तयः, तेषामनियमितेन्द्रियमनोवृत्तीनां यदनुष्ठानं क्रियालक्षणम् । तत् किंविशिष्टमिव ? हस्तिस्नानमिव । व्यर्थमित्यर्थः । यथा हस्ती सुस्नापितोऽपि भूयोऽपि प्रकृत्याऽऽत्मानं पांसुभिरुद्धूलयति, तत्स्नानं व्यर्थतां नयति, तथा चञ्चलेन्द्रियमनाः । तथा च सौनकः— 'अशुद्धेन्द्रियचित्तो यः कुरुते कांचित्सत्क्रियाम् । हस्तिस्नानमिव व्यर्था तस्य सा परिकीर्तिता ॥' । नीवाटी.

**दुर्भगाभरणमिव देहखेदावहमेव ज्ञानं स्वयमनाचरतः ॥**

अथ ज्ञानवानपि यः शुभं न करोति तदर्थमाह— दुर्भगाभरणमिवेति । यः प्रभूतशास्त्रज्ञोऽपि शास्त्रार्थं न करोति तस्य (ज्ञानं) निष्फलं शरीरखेदाय केवलम् । किमिव ? दुर्भगाभरणमिव । यथा दुर्भगा स्त्री हारकेयूरादिभिरात्मानं शृङ्गारयति, वल्लभसंयोगं न लभते, तत्तस्या देहखेदावहं व्यर्थमित्यर्थः । तथा च राजपुत्रः—

'यः शास्त्रं जानमानोऽपि तदर्थं न करोति च। तदर्थं तस्य विज्ञेयं दुर्भगाभरणं यथा ॥'। नीवाटी.

**सुलभः खलु कथक इव परस्य धर्मोपदेशे लोकः ॥**

परधर्मोपदेशकस्य स्वरूपमाह— सुलभ इति। कथकः देवायतनवाचकः अन्येषां कथयति धर्मोपदेशम्, स्वयं न करोति। तथा च वाल्मीकिः— 'सुलभा धर्मवक्तारो यथा पुस्तकवाचकाः। ये कुर्वन्ति स्वयं धर्मं विरलास्ते महीतले ॥'। नीवाटी.

**प्रत्यहं किमपि नियमेन प्रयच्छतस्तपस्यतो वा भवन्त्यवश्यं महीयांसः परे लोकाः ॥**

अथ दानतपोभ्यां यद्भवति तदाह— प्रत्यहमिति। भवन्ति प्रवर्तन्ते। के? कर्तृभूता लोकाः। किंविशिष्टाः? परे स्वर्गलक्षणाः। पुनरपि कथंभूताः? महीयांसः उत्तमोत्तमाः। कस्य? पुरुषस्य। किं कुर्वतः? प्रयच्छतः ददतः। किमपि कियन्मात्रमपि वित्तम्। किं कुर्वतः? तपस्यतः तपः कुर्वाणस्य स्तोकमपि। तथा च चारायणः— 'नित्यं दानप्रवृत्तस्य तपोयुक्तस्य देहिनः। सत्पात्रं वाऽथ कालो वा स स्याद्येन गतिर्वरा ॥'। नीवाटी.

**कालेन संचीयमानः परमाणुरपि जायते मेरुः ॥**

अथ संचयपराणां यद्भवति तदाह— कालेनेति। जायते संपद्यते। कोऽसौ? मेरुः। किंविशिष्टः सन्? संचीयमानः वृद्धिं नीयमानः। कः? परमाणुरपि तिलतुषमात्रमपि। केन कृत्वा? कालेन दिवसोच्चयेन। तथा च भागुरिः— 'नित्यं कोशविवृद्धिं यः कारयेद्यत्नमास्थितः। अनन्तता भवेत्तस्य मेरोर्हेम्नो यथा तथा ॥'।

नीवाटी.

**धर्मश्रुतधनानां प्रतिदिनं लवोऽपि संगृह्यमाणो भवति समुद्रादप्यधिकः ॥**

अथ धर्मश्रुतधनानां स्वल्पेनापि संग्रहेण नित्यं विहितेन यद्भवति तदाह— धर्मेति। धर्मश्च श्रुतं च धनं च धर्मश्रुतधनानि, तेषां धर्मश्रुतधनानां मध्याल्लवोऽपि लेशोऽपि संगृह्यमाणः पुरुषेण प्रतिदिनं गच्छता कालेन समुद्रो भवति। कोऽर्थः? अनन्तो भवति। तथा च वर्गः— 'उपार्जयति यो नित्यं धर्मश्रुतधनानि च। सुस्तोकान्यप्यनन्तानि तानि स्युर्जलधिर्यथा ॥'। नीवाटी.

**धर्माय नित्यमनाश्रयमाणानामात्मवञ्चनं भवति ॥**

अथ धर्माय ये निरुद्यमास्तानुद्दिश्याऽऽह— धर्मायेति। आत्मा वञ्चितो भवति। केषाम्? अनाश्रयमाणानाम्। कस्मै? धर्माय धर्मार्थम्। तथा वसिष्ठः— 'मनुष्यत्वं समासाद्य यो न धर्मं समाश्रयेत्। आत्मा प्रवञ्चितस्तेन नरकाय निरूपितः ॥'। नीवाटी.

**कस्य नामैकदैव संपद्यते पुण्यराशिः ॥**

अथ धर्मराशिविषये प्राह— कस्येति। कस्य नाम एकदैव हेलयेत्यर्थः। संपद्यते इति निश्चयः। तथा च भागुरिः— 'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्। न हेलया सुखं नास्ति(?) मर्त्यलोके भवेन्नृणाम् ॥'।

नीवाटी.

**अनाचरतो मनोरथाः स्वप्नराज्यसमाः ॥**

अथाऽऽलस्योपहतस्य मनोरथा यथा भवन्ति तथाह— अनाचरत इति। अनाचरतः उद्यममकुर्वाणस्य पुरुषस्य मनोरथाः ये हृदि चिन्तितास्ते सुखाभिप्रायाः स्वप्नराज्यतुल्याः तावन्मात्रसौख्यदा इत्यर्थः। तथा च वल्लभदेवः— 'उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः। न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः ॥'।

नीवाटी.

**धर्मफलमनुभवतोऽप्यधर्मानुष्ठानमनात्मज्ञस्य ॥**

अथ यो धर्मफलं भजमानोऽप्यधर्मानुष्ठानं कुरुते तदर्थमाह— धर्मफलमिति। यः पुरुषो धर्मफलं सेवमानः सन् अधर्मानुष्ठानं करोति सोऽनात्मज्ञो मूर्ख इत्यर्थः। ननु कथं ज्ञायते पुरुषस्य धर्मफलभुक्तिः? यश्चात्र हस्त्यश्वादिको विभवो भवति तेन ज्ञायते धर्मफलमेतत् तज्ज्ञैरन्यजन्मकृतम्, तत्सेवमाना अपि मूर्खा न जानन्ति, पापानुष्ठानं कुर्वन्ति। तथा च रैभ्यः—

'अन्यजन्मकृताद्धर्मात्सौख्यं संजायते नृणाम्। तद्विज्ञैर्ज्ञायते नाज्ञैस्तेन ते पापसेवकाः ॥'। नीवाटी.

**कः सुधीर्भेषजमिवाऽऽत्महितं धर्मं परोपरोधादनुतिष्ठति ॥**

अथ धर्मानुष्ठानार्थमाह– क इति। को नाम विद्वान् आत्महितं धर्मं अन्यदाक्षिण्यादनुतिष्ठति करोतीत्यर्थः। यस्मात्तत्फलमाप्नोति। किमिव? भेषजमिव औषधमिव। यथौषधं परोपरोधात्कृतं चित्तानिष्टं न आरोग्यं कुरुते तथा धर्मोऽपि। तथा च भागुरिः– 'परोपरोधतो धर्मं भेषजं च करोति यः। आरोग्यं स्वर्गगामित्वं न ताभ्यां संप्रजायते ॥'। नीवाटी.

**धर्मानुष्ठाने भवत्यप्रार्थितमपि प्रातिलोम्यं लोकस्य ॥**

अथ धर्मानुष्ठाने कृते यद्भवति तदाह– धर्मानुष्ठान इति। लोकस्य जनस्य धर्मानुष्ठाने क्रियमाणे अप्रार्थितमपि प्रातिलोम्यं विघ्नं भवति, पापानुष्ठाने न स्यात्। तथा च वर्गः– 'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां यान्ति क्वापि विलीनताम् ॥'। नीवाटी.

**अधर्मकर्मणि को नाम नोपाध्यायः पुरश्चारी वा ॥**

अथाधर्मप्रवृत्तस्य यद्भवति तदाह– अधर्मकर्मणीति। पापकर्मणि प्रवृत्तस्य लोकस्य को नामाहो नोपाध्यायः नोपदेशदाता? अपि सर्वोऽपि जनः पापार्थं प्रेरयतीत्यर्थः। पुरश्चारी वा अग्रेसरः? अहमेतत्करोमि त्वमपि कुरु एवं जल्पते इत्यग्रेसरो भवति। तथा च रैभ्यः– 'सुलभाः पापरक्तस्य लोकाः पापोपदेशकाः। स्वयं कृत्वा च ये पापं तदर्थं प्रेरयन्ति च ॥'। नीवाटी.

**कण्ठगतैरपि प्राणैर्नाशुभं कर्म समाचरणीयं कुशलमतिभिः ॥**

अथ पापनिषेधार्थमाह– कण्ठगतैरपीति। उत्कृष्टबुद्धिभिः पुरुषैरशुभं कर्म न समाचरणीयं न कर्तव्यं विद्यमानैः प्राणैः। किंविशिष्टैः? कण्ठगतैरपि। कोऽर्थः? यदि प्राणत्यागो भवति, किं पुनः स्वस्थचित्तैः? तथा च देवलः– 'धीमद्भिर्नाशुभं कर्म प्राणत्यागेऽपि संस्थिते। इह लोके यतो निन्दा परलोकेऽधमा गतिः ॥'। नीवाटी.

**स्वव्यसनतर्पणाय धूर्तैर्दुरीहितवृत्तयः क्रियन्ते श्रीमन्तः ॥**

अथेश्वरा धूर्तैः स्वार्थार्थं पापमार्गे नियोज्यन्ते तदर्थमाह– स्वव्यसनतर्पणायेति। श्रीमन्तः धनिनो जनाः क्रियन्ते विधीयन्ते। किंविशिष्टाः? दुरीहितवृत्तयः पापमार्गरताः। कैः? धूर्तैः वञ्चनपरैः। किमर्थम्? स्वव्यसनतर्पणाय निजापन्नाशाय। न तेषां सकाशादर्थं लभन्ते। कथं क्रियन्ते? यतः स्नानदानजपहोमतीर्थयात्रादिकं कष्टेन क्रियमाणं धर्ममार्गं दूषयित्वा स्त्रीसेवादिकं सुखकारकं (इति) स्वमतिविहितव्याख्यानैः तथा प्रबोधयन्ति धनिनो यथा तेषां तत्सत्यं मत्वा धनानि लिप्सन्ते। 'यतो (हि) माक्षिका धारा विप्रुषो ब्रह्मबिन्दवः। स्त्रीमुखं बालवृद्धं च न दुष्यन्ति कदाचन ॥ स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित्। मासि मासि रजो यासां दुष्कृतान्यपि कर्षति ॥ सोमस्तासां ददौ शौच गन्धर्वाश्च कलां गिरम्। पावकः सर्वमेध्यत्वं तस्मान्मेध्यतमाः स्त्रियः ॥ ब्राह्मणाः पादतो मेध्या गावो मेध्याश्च पृष्ठतः। अजाश्च मुखतो मेध्याः स्त्रियो मेध्याश्च सर्वतः ॥ स्त्रीमुद्रां मकरध्वजस्य परमां सर्वार्थसंपत्करीमेनां ये प्रविहाय यान्ति कुधियः स्वर्गापवर्गेच्छया। तैर्दैवैर्विनिहत्य ते हततरं नग्नीकृता मुण्डिताः केचित् रत्नपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ कामार्तां कामिनीं प्राप्तां पापं मत्वा त्यजन्ति ये। ते मृता नरकं यान्ति तन्निःश्वाससमाहताः ॥ परदारविरक्तानां कुदाराणां नृणामिह। वेश्या साधारणा प्रोक्ता तस्मात्सेव्या प्रयत्नतः ॥ ब्रह्मचर्येण चेत्स्वर्गो नराणामिह जायते। ते षण्ढाः प्रथमं यान्ति ततोऽन्ये ब्रह्मचारिणः ॥' इत्येवमादिभिरन्यैरपि धर्मविषये सुखावहैर्वाक्यैः स्नानदानजपहोमकृते(? तो) धूर्तैः दुरीहितवृत्तयः क्रियन्त इति। नीवाटी.

**खलसङ्गेन किं नाम न भवत्यनिष्टम् ॥**

अथ खलसङ्गेन यद्भवति तदाह– खलसङ्गेनेति । खलः दुर्जनः, तेन सह सङ्गेन कृतेन तत्किं नामाहो न भवति यदनिष्टं पापलक्षणमित्यर्थः । तस्मात्खलसङ्गस्त्याज्यः । तथा च वल्लभदेवः– 'असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् । दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥' । नीवाटी.

**अग्निरिव स्वाश्रयमेव दहन्ति दुर्जनाः ॥**

अथ दुर्जनानां स्वरूपमाह– अग्निरिवेति । दुर्जनाः खलाः स्वाश्रयमपि यस्मिन् गृहे जायन्ते तदपि दहन्ति, किं पुनरन्येषां साधूनां दहन्ति ? क इव ? अग्निरिव वैश्वानरवत् । यथा वैश्वानरो यत्र काष्ठे उत्पन्नस्तदपि दहति तथा दुर्जनाः स्वगृहक्षयं कृत्वा ततश्च साधूनामपि गृहाणि नाशयन्ति । तथा च वल्लभदेवः– 'धूमः पयोधरपदं कथमप्यवाप्य एषोऽम्बुभिः शमयति ज्वलनस्य तेजः । दैवादवाप्य खलु नीचजनः प्रतिष्ठां प्रायः स्वयं बन्धुजनमेव तिरस्करोति ॥' ।

नीवाटी.

**वनगज इव तदात्वसुखलुब्धः को नाम न भवत्यास्पदमापदाम् ॥**

अथ तदात्वसुखलुब्धस्य यद्भवति तदाह– वनेति । अत्र तदात्वसुखशब्देन परस्त्रीस्पर्शः तात्कालिकसुखमभिधीयते । तत्र यो लुब्धः पुरुषः को नामाहो कासामापदां व्यसनलक्षणानां नाऽऽस्पदं स्थानं भवति ? क इव ? वनगज इव अरण्यहस्तीव । यथा वनहस्ती दृष्ट्वा कामैरानीतां वनकरेणुकां स्पर्शमात्रं सुखमनुभवन् बन्धनमाप्नोति, तद्वत् पुरुषोऽपि यस्मात् परस्त्रीस्पर्शमात्रं सुखं लभते । तथा च नारदः– 'करिणीस्पर्शसौख्येन प्रमत्ता वनहस्तिनः । बन्धमायान्ति तस्माच्च तदात्वं वर्जयेत् सुखम् ॥' । नीवाटी.

**धर्मातिक्रमाद्धनं परेऽनुभवन्ति स्वयं तु परं पापस्य भाजनं सिंह इव सिन्धुरवधात् ॥**

अथ धर्मातिक्रमेण यद्भवति तदाह– धर्मातिक्रमादिति । धर्मातिक्रमेण चौर्यादिभिरकृत्यैर्यद्धनं प्राप्यते तदपरे पुत्रकलत्रादयो भक्षयन्ति, उपार्जकस्तु पुनः केवलं उत्कृष्टं पापस्य भाजनं पापस्थानं भवति । क इव ? सिंहवत् । यथा सिंहः सिन्धुरं गजं हत्वा अन्येषां शृगालादीनां भोज्यं करोति, केवलं स्वयं पापवान् भवति, तथा पुरुषोऽपि । तथा च विदुरः– 'एकाकी कुरुते पापं फलं भुङ्क्ते महाजनः । भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥' । नीवाटी.

**बीजभोजिनः कुटुम्बिन इव नास्त्यधार्मिकस्याऽऽयत्यां किमपि शुभम् ॥**

अथाधार्मिकस्य यद्भवति तदाह– बीजभोजिन इति । अत्र आयतिशब्देन परिणाम उच्यते । तस्मिन् परिणामे पुरुषस्य न किंचिच्छुभं भवति । किंविशिष्टस्य पुरुषस्य ? अधार्मिकस्य । कस्येव ? कुटुम्बिन इव कर्षकस्येव । किंविशिष्टस्य ? बीजभोजिनः । वप्तुं योग्यस्य भक्षकस्य न किंचिदन्नं भवति आयत्यां शरदि वसन्ते वा । तथा च भागुरिः– 'पापासक्तस्य नो सौख्यं परलोके प्रजायते । बीजाशिहालिकस्येव वसन्ते शरदि स्थिते ॥' । नीवाटी.

**यः कामार्थावुपहत्य धर्ममेवोपास्ते स पक्वं क्षेत्रं परित्यज्यारण्यं कृषति ॥**

अथ कामार्थत्यागेन केवलं धर्माश्रितस्य यद्भवति तदाह– य इति । यः पुरुषः कामार्थौ त्यक्त्वा धर्ममेकं करोति स किं कुरुते ? पक्वं लवनयोग्यं क्षेत्रं त्यक्त्वा अरण्यकर्षणं करोति । कोऽर्थः ? यौ कामार्थौ पक्वक्षेत्रसमौ तौ ज्ञेयौ । यः पुनः धर्मः सोऽरण्यकर्षणसमः । न तस्य धर्मस्यापि माहात्म्यं मन्यते कामार्थाभ्यां विना । तदर्थमाह– अरण्यकर्षणादपि सस्योत्पत्तिर्भवति, परं कालक्रमेण तत्रारण्यस्यानावृष्टिरिति उपद्रवो यदि न भवति । यौ पुनः कामार्थौ तौ सद्यः सुखफलौ । तस्मात् कामार्थाभ्यां सह धर्मः कर्तव्यः सुखार्थिभिः । तथा च

रैभ्यः— ‘ कामार्थसहितो धर्मो न क्लेशाय प्रजायते । तस्मात्ताभ्यां समेतस्तु कार्य एव सुखार्थिभिः ॥ ’ ।

नीवाटी.

**स खलु सुधीर्योऽमुत्र सुखाविरोधेन सुखमनुभवति ॥**

अथ सुमतिर्यथा भवति तथाऽऽह— स इति । सः पुरुषः खलु निश्चयेन सुधीः सुमतिः विज्ञेयः । यः किं करोति ? योऽनुभवति सेवते । किं तत् ? सुखम् । केन कृत्वा ? अमुत्र सुखाविरोधेन । अमुत्रशब्देन परलोकोऽभिधीयते । तस्य येन सुखेनानुभूतेन विरोधो न भवति तथा तदनुभवितव्यम् । यत्पुनः परदारचौर्यादिकं तेन परलोके विरोधः स्यात्, नरकपातो भवतीत्यर्थः । स्नानदानस्वकलत्रादिकं सुखमनुभवितव्यमेव । तथा च वर्गः— ‘ सेवनाद्यस्य धर्मस्य नरकं प्राप्यते ध्रुवम् । धीमता तन्न कर्तव्यं कौलनास्तिककीर्तितम् ॥ ’ । नीवाटी.

**इदमिह परमाश्चर्यं यदन्यायसुखलवादिहामुत्र चानवधिर्दुःखानुबन्धः ॥**

अथान्यायसुखलेशेन यद्भवति तदाह— इदमिति । हे जनाः, एतदाश्चर्यमिह जगति अपरं अपूर्वं न दृश्यते मूर्खजनानाम्, यत् किंचिदन्यायचौर्यादिभिरुपार्जनं कृत्वा तेन यं सुखलवमनुभवति तस्यानवधिः अनन्तः दुःखानुबन्धः दुःखपरिणामः । क्व ? इह अस्मिन् जगति अमुत्र च परलोके च । कथंचिद्यदि तावद्राजा जानाति तदा दण्डयति, अथवा परलोकेऽपि धर्मराजो निग्रहं करोति, तस्मादन्यायोपार्जना न कर्तव्या । तथा च वसिष्ठः— ‘ चित्रमेतद्धि मूर्खाणां यदन्यायार्जनात्सुखम् । अल्पं प्रान्तविहीनं च दुःखं लोकद्वये भवेत् ॥ ’ ।

नीवाटी.

**सुखदुःखादिभिः प्राणिनामुत्कर्षापकर्षौ धर्माधर्मयोर्लिङ्गम् ॥**

अथान्यजन्मकृतयोर्धर्माधर्मयोः किं लिङ्गं तदर्थं व्याख्यायते— सुखेति । उत्कर्षशब्देन वृद्धिरुच्यते, अपकर्षशब्देन हानिश्च । उत्कर्षश्चापकर्षश्च उत्कर्षापकर्षौ, ताभ्यां ज्ञायते । किं तत् ? लिङ्गं चिह्नम् । कयोः ? धर्माधर्मयोः । केषाम् ? नराणाम् । कैः कृत्वा ? सुखदुःखादिभिः । यदा पुरुषाणां सुखं परं भवति तदा ज्ञायते एतैरन्यजन्मनि धर्मः कृतः । यदा पुनः दुःखोत्कर्षो भवति तदा ज्ञायते एतैः पापं कृत्वाऽधर्मः कृतः । तथा च दक्षः— ‘ धर्माधर्मौ कृतं पूर्वं प्राणिनां ज्ञायते स्फुटम् । विवृद्धया सुखदुःखस्य चिह्नमेतत्परं तयोः ॥ ’ ।

नीवाटी.

**किमपि हि तद्वस्तु नास्ति यत्र नैश्वर्यमदृष्टाधिष्ठातुः ॥**

अथ धर्माधिष्ठातुर्माहात्म्यमाह— किमपीति । अत्र अधिष्ठातृशब्देनैके आत्मानं कथयन्ति, अन्ये प्राक्तनं कर्म । तस्य अधिष्ठातुरदृष्टस्य परोक्षस्य तत्किंचिद्वस्तु पदार्थः स कोऽपि नास्ति यत्र नैश्वर्यं प्रभुत्वं समर्थता, सर्वमपि शुभाशुभं स करोति, स न केनापि निवार्यते । हि यस्मादर्थे स्फुटार्थे वा । तथा च भृगुः— ‘ अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति । जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति ॥ ’ । नीवाटी.

**[1]यतः सर्वप्रयोजनसिद्धिः सोऽर्थः ॥**

अथ अर्थसमुद्देशो लिख्यते । तत्राऽऽदावेवार्थस्य स्वरूपमाह— यतः सर्वप्रयोजनसिद्धिः सोऽर्थः कथ्यते, नान्यो यः कृपणैर्गर्तेषु स्थापितस्तिष्ठति । उक्तं च वल्लभदेवेन— ‘ गृहमध्यनिखातेन धनेन धनिनो यदि । भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ’ । तथा च— ‘ यन्न धर्मस्य कृते प्रयुज्यते यन्न कामस्य च भूमिमध्यगम् । तत्कदर्यपरिरक्षितं धनं चौरपार्थिवगृहेषु भुज्यते । संचितमृतुषु नैव भुज्यते याचितं गुणवते न दीयते ॥ ’ ।

नीवाटी.

**सोऽर्थस्य भाजनं योऽर्थानुबन्धेनार्थमनुभवति ॥**

अथ यादृक् पुमानर्थस्य भाजनं भवति तदाह— सोऽर्थस्येति । सः पुरुषः सर्वकालमर्थस्य धनस्य भाजनं

(१) नीवा. २१-११.

स्थानं भवति । यः किं कुर्यात् ? योऽर्थानुबन्धेन आगामिकसूत्रन्यायेनार्थमनुभवति सेवते । तथा च वर्गः– ' अर्थानुबन्धमार्गेण योऽर्थं संसेवते सदा । स तेन मुच्यते नैव कदाचिदिति निश्चयः ॥ ' । नीवाटी.

**अलब्धलाभो लब्धपरिरक्षणं रक्षितपरिवर्धनं चार्थानुबन्धः ॥**

अर्थानुबन्धलक्षणमाह– अलब्धलाभ इति । सामादिभिरुपायैस्तावत् पुरुषेणार्थ उपार्जनीयः । उक्तं च यतो हारीतेन– ' असाध्यं नास्ति लोकेऽत्र यस्यार्थः साधनं परम् । सामादिभिरुपायैश्च तस्मादर्थमुपार्जयेत् ॥ ' । तथा च लब्धोऽर्थो यथा भवति तथा रक्षणीयो यत्नेन, यतस्तस्य बहवो हिंसका भवन्ति । तथा च व्यासः– ' यथाऽऽमिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि । आकाशे पक्षिभिश्चैव तथाऽर्थोऽपि च मानवैः ॥ ' । तथा रक्षितो वृद्धिं नेयः । यस्तं सद्व्यवहारैः कुसीदादिभिर्वृद्धिं नयति स तस्य भाजनं भवति । उक्तं च यतो गर्गेण– ' वृद्धे तु परिदातव्यः सदाऽर्थो धनिकेन च । ततः स वृद्धिमायाति तं विना क्षयमेव च ॥ ' । इत्यर्थानुबन्धः । नीवाटी.

**तीर्थमर्थेनासंभावयन् मधुच्छत्रमिव सर्वात्मना विनश्यति ॥**

अथ सामादिभिरुपार्जितोऽर्थोऽपि यथा नाशमायाति तथाऽऽह– तीर्थमिति । तीर्थभूतपुरुषलक्षणं आगामिकसूत्रे वदिष्यति । यो धनी तीर्थलक्षणं पुरुषमर्थेन न संभावयति स सर्वात्मना निश्चितं विनश्यति । किं कुर्वन् ? असंभावयन् अनियोजयन् । किं तत् ? तीर्थं पात्रम् । केन ? अर्थेन वित्तेन । कथं विनश्यति ? मधुच्छत्रवत् । मधुच्छत्रशब्देन मधुजालकमुच्यते । तस्य तीर्थं भ्रमराः । माक्षिकोऽर्थः । तेन यत् भ्रमरान् न संभावयति तत्सर्वात्मना विनश्यति, तथा मदनमपि न भवति, सूक्ष्मोत्पन्नकीटैर्भक्ष्यते । यस्य पुनर्भ्रमरा मधु पिबन्ति, अन्यच्च श्रावयन्ति ( ? ) तच्छेषं सिक्थकसंज्ञं भवति । एवं धनी पुमानपि सत्पात्रेषु धनं नियोजयति तस्य तत्प्रभावाच्छेषमपि वित्तं भूत्योपभोग्यं भवति । तथा च वर्गः– ' यो न यच्छति पात्रेभ्यः स्वधनं कृपणो जनः । तेनैव सह भूपालैश्चौराद्यैर्वा स हन्यते ॥ ' । केचित् मधुच्छत्रशब्देन बालकजालं कथयन्ति । तस्य तीर्थभूतानि पात्राणि, अर्थभूतो गन्धः । तेभ्यः पात्रेभ्यस्तीर्थभूतेभ्यो गन्धरूपेणार्थं (अ)प्रयच्छत् (अ)प्रददत् बालकजालमपि विनश्यति । नीवाटी.

**धर्मसमवायिनः कार्यसमवायिनश्च पुरुषास्तीर्थम् ॥**

अथ तीर्थलक्षणमाह– धर्मसमवायिन इति । ये पुरुषाः समवायिनः धर्मकृत्येषु सहायाः भवन्ति, येषां सकाशात् धर्मकार्यं निरूपितं भवति, ते धर्मसमवायिनः प्रोच्यन्ते । ये च सर्वकृत्येषु सहाया भवन्ति, येषां सकाशात् महदपि कृत्यं सिद्धिं गच्छति, ते कार्यसमवायिनः । तत्र सर्वेऽपि तीर्थं भण्यते । तान् योऽर्थेन संभावयेत् तेभ्यः योऽर्थं नियोजयेत् तस्य वृद्धिर्धर्मवृद्धिश्च भवति । तथा च बृहस्पतिः– ' तीर्थेषु योजिता अर्था धनिनां वृद्धिमाप्नुयुः । अतीर्थेषु पुनर्लाभं योजिता व्याललोभतः ( ? ) ॥ ' । नीवाटी.

**तादात्विकमूलहरकदर्येषु नासुलभः प्रत्यवायः ॥**

अथ येषां धनिनां धननाशो भवति तानाह– तादात्विकेति । एतेषां तादात्विकमूलहरकदर्याणां संज्ञा आगामिकसूत्रेषु वदिष्यति । किं बहुना ? एतेषां धनिनां प्रत्यवायः अर्थनाशः सदैव भवतीति । तथा च शुक्रः– ' अचिन्तितार्थमश्नाति योऽन्योपार्जितभक्षकः । कृपणश्च त्रयोऽप्येते प्रत्यवायस्य मन्दिरम् ॥ ' । नीवाटी.

**यः किमप्यसंचिन्त्योत्पन्नमर्थं व्ययति स तादात्विकः ॥**

अथ तादात्विकलक्षणमाह– य इति । यः उपार्जनां कृत्वा अनुचितं व्ययति । कोऽर्थः ? असद्व्ययं करोति, न जानाति ममैतत्प्रयोजनमर्थेन भविष्यति, आगतेरप्यधिकं ददातीत्यर्थः । स धनी तादात्विक उच्यते । तथा च शुक्रः– ' आगमे यस्य चत्वारो निर्गमे सार्धपञ्चमः । तस्यार्थः प्रक्षयं याति सुप्रभूतोऽपि चेत्स्थितः ॥ ' । नीवाटी.

**यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः ॥**

अथ मूलहरलक्षणमाह– य इति । यः पुनर्धनी पितृपैतामहमर्थं अन्यायेन द्यूतवेश्यादिना व्ययति, नान्यदुपार्जयति, स मूलहरः प्रोच्यते । तथा च गुरुः– 'पितृपैतामहं वित्तं व्यसनैर्यस्तु भक्षयेत् । अन्यन्नोपार्जयेत्किंचित् स दरिद्रो भवेद्ध्रुवम् ॥ ' । नीवाटी.

**यो भृत्यात्मपीडाभ्यामर्थं संचिनोति स कदर्यः ॥**

अथ कदर्यलक्षणमाह– य इति । यः पुनर्भृत्यानात्मानं च पीडयति, विभवे विद्यमानेऽपि भृत्येभ्यो न प्रयच्छति, न च स्वयं भक्षयति, स कदर्यः । स च त्रयाणामप्यधर्मः । तस्य द्रव्यं राजा तस्करा वा हरन्ति । नीवाटी.

**तादात्विकमूलहरयोरायत्यां नास्ति कल्याणम् ॥**

अथ तादात्विकमूलहरयोर्यद्भवति तदाह—तादात्विकेति । आयतिशब्देन परिणाम उच्यते । तस्यामायत्यां परिणामे कल्याणं शुभं न भवति । कयोः ? तादात्विकमूलहरयोः । एतदुक्तं भवति– यन्मूलहरः पितृपैतामहमर्थं अन्यायेन भक्षयति, यच्च तादात्विकोऽनुचितं व्ययं करोति, तत्तयोरपि द्वयोर्दरिद्रता भवति द्वौ दौःस्थ्यं व्रजतः । तथा च कपिपुत्रः– ' आगमाभ्यधिकं कुर्याद्यो व्ययं यश्च भक्षति । पूर्वजोपार्जितं नान्यदर्जयेच्च स सीदति ॥ ' । नीवाटी.

**कदर्यस्यार्थसंग्रहो राजदायादतस्कराणामन्यतमस्य निधिः ॥**

अथ कदर्यस्य यद्भवति तदाह– कदर्यस्येति । कदर्यस्य तु पुनर्यो धनसंचयः स किंविशिष्टः ? निधिः । केषाम् ? राजदायादतस्कराणां अन्यतमस्य एकस्य । एतदुक्तं भवति– भूपेन गोत्रजेन तस्करेण वा ह्रियते इति। तथा च वल्लभदेवः– ' दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ ' । तथा च शुक्रः– ' शेषो धारयते पृथ्वीं संनिधानां सदोष्मणाम् । कृपणैर्निहितानि च तस्य शक्तिर्न चान्यथा (१) ॥ ' । नीवाटी.

**[1]आभिमानिकरसानुविद्धा यतः सर्वेन्द्रियप्रीतिः स कामः ॥**

अथ कामसमुद्देशः कथ्यते । तत्राऽऽदावेव कामस्य लक्षणमाह– आभिमानिकेति । कामशब्देन स्त्रियामभिलाषः कथ्यते । यतः यस्मादभिलाषात् सर्वेन्द्रियप्रीतिर्जायते स कामः, न केवलं रतिलक्षणः । किंविशिष्टा सर्वेन्द्रियप्रीतिः ? आभिमानिकरसानुविद्धा । आभिमानिकरसशब्देन निर्गलता प्रोच्यते । तयाऽनुविद्धा याऽसौ स्नेहलक्षणसर्वेन्द्रियप्रीतिः कामाभिलाषो भवति । तदाह– ' यस्याः नायिकायाः कलशब्दं श्रुत्वा कर्णाभ्यां निरर्गला प्रीतिर्जायते । तस्याः सुकोमलाङ्गस्पर्शेन च निरर्गला प्रीतिर्भवति । तथा यस्या रूपावलोकनेन नेत्रयोर्निरर्गला प्रीतिः । तथा यस्याः परिमलाढ्याङ्गस्याऽऽघ्राणात् घ्राणस्य निरर्गला प्रीतिः । तथा तस्या अधरपानात् जिह्वाया अमृतपानादिव निरर्गला प्रीतिर्भवति । स कामः पञ्चप्रकारेण नैकेनापि हीयते ' । तथा च राजपुत्रः– ' सर्वेन्द्रियानुरागः स्याद्यस्याः संसेवनेन च । स च कामः परिज्ञेयो यत्तदन्यद्विचेष्टितम् ॥ ' । तथा च– ' इन्द्रियाणामसंतोषं यः कश्चित् सेवते स्त्रियम् । स करोति पशोः कर्म नररूपस्य मोहनम् ॥ ' । अपि च– ' यदिन्द्रियविरोधेन मोहनं क्रियते जनैः । तदन्धस्य पुरो नृत्यं सुगीतं बधिरस्य च ॥ ' । नीवाटी.

**धर्मार्थाविरोधेन कामं सेवेत ततः सुखी स्यात् ॥**

अथ यथा कामसेवनेन पुमान् सुखी भवति तथाऽऽह– धर्मार्थेति । धर्मार्थयोरविरोधेन अनुकूलतया कामं सेवेत । कोऽर्थः ? यथा धर्मक्षतिर्न भवति । परदारान् वर्जयेदित्यर्थः । यथाऽर्थस्य क्षतिर्न भवति तथा वेश्यासक्तिर्वर्जनीया । एवं वर्तमानः स्वकलत्रं सेवमानः सुखी भवति । तथा च हारीतः– ' परदारांस्त्यजेद्यस्तु वेश्यां चैव सदा नरः । न तस्य कामजो दोषः सुखिनो न धनक्षयः ॥ ' । नीवाटी.

---

(१) नीवा. ३।१–१५.

**समं वा त्रिवर्गं सेवेत ॥**

अथ यथा त्रिवर्गः सेव्यस्तथाऽऽह– सममिति । वा विकल्पेन समं एकहेलं त्रिवर्गं सेवेत । यदि धर्मार्थपीडनं पृथक्कामसेवनेन भवति, अथवा धर्मसेवनेन कामार्थाभ्यां पीडनं भवति, अथवा अर्थसेवनेन धर्मकामाभ्यां पीडनं भवति । त्रयोऽपि सेव्याः । कथम्? सत्रिभागं प्रहरं यावत् धर्मचिन्ता कार्या, सत्रिभागं प्रहरमर्थचिन्ता, ततः कामचिन्तेति । तथा च नारदः– 'प्रहरं सत्रिभागं च प्रथमं धर्ममाचरेत् । द्वितीयं तु ततो वित्तं तृतीयं कामसेवनम् ॥' । नीवाटी.

**एको ह्यत्यासेवितो धर्मार्थकामानामात्मानमितरौ च पीडयति ॥**

अथ त्रिवर्गमध्यादेकेनातिसेवितेन यद्भवति तदाह– एक इति । एतेषां त्रयाणां मध्यादेकोऽप्यतिसेवितः आत्मानं वृद्धिं नयति इतरौ तु पीडयति । एतदुक्तं भवति– यदि धर्मः सततं सेव्यते ततोऽर्थकामौ न भवतः । उक्तं च यतो बृहस्पतिना– 'धर्मसंसक्तमनसां कामे स्यात्सुविरागता । अर्थे चापि विशेषेण यतः स स्यादधर्मतः ॥' । तथा अर्थः केवलं सेव्यमानो धर्मकामौ पीडयति । तथा कामोऽप्यतिसेवितः स धर्मार्थौ पीडयति । कथम्? केवलं धर्मासक्तोऽर्थोपार्जनादिकं व्यवसायं न करोति, स्त्रीविषयविरक्तो भवति । यद्यर्थासक्तो भवति तद्धर्मं न करोति, तदासक्तश्च निष्कामो भवति । तथा कामासक्तो धर्मं न करोति धनक्षयं च करोति । तथा च वसिष्ठः– 'एको हि सेव्यमानस्तु त्रिवर्गं च प्रपीडयेत् । द्वावन्यौ सेवयेदस्मिंस्त्रींश्च तांश्च यथोदितान् ॥' । नीवाटी.

**परार्थं भारवाहिन इवाऽऽत्मसुखं निरुन्धानस्य धनोपार्जनम् ॥**

अथ कष्टेन यद्धनोपार्जनं क्रियते तदर्थमाह– परार्थमिति । आत्मसुखं निरुन्धानस्य महता क्लेशेन युक्तस्य पुरुषस्य यद्धनोपार्जनम् । किंविशिष्टम्? परार्थम् । भारवाहसदृशं व्यर्थमित्यर्थः । यथा कश्चित्पुरुषः पशुर्वाऽन्यस्यार्थे शिरसा पृष्ठया वा भारं वहति, न तद्भोक्तुं लभते, केवलं क्लेशभागी स्यात् । तथा च व्यासः– 'अतिक्लेशेन ये चार्था धर्मस्यातिक्रमेण च । शत्रूणां प्रतिपातेन माऽऽत्मन् तेषु मनः कृथाः ॥' । नीवाटी.

**इन्द्रियमनःप्रसादनफला हि विभूतयः ॥**

अथ विभूतीनां साफल्यं यथा भवति तथाऽऽह– इन्द्रियमनःप्रसादनफला हि विभूतयः संपदः कथ्यन्ते । याः पुनः सेविता अपि तुष्टिं न जनयन्ति ता असंपदस्तस्य । एतदुक्तं भवति– यकाभिर्विभूतिभिर्विद्यमानाभिर्ये कृपणा न गीतश्रवणेन, न प्रियतमास्पर्शेन, न मिष्टान्नास्वादनेन, न सुरूपस्त्रीवेश्यास्वकलत्ररूपावलोकनेन सुखमनुभवन्ति, कर्पूरप्रभृतिसुगन्धवस्तूनां नाघ्राणं कुर्वन्ति, तका निष्फलास्तेषाम् । तथा च व्यासः– 'यद्धनं विषयाणां च नैवाह्लादकरं परम् । तत्तेषां निष्फलं ज्ञेयं षण्ढानामिव यौवनम् ॥' । तथा यकाभिर्विभूतिभिर्विद्यमानाभिर्मनसस्तुष्टिर्न भवति ताश्चापि निष्फलाः पुंसाम् । कोऽर्थः? विद्यमाने धने यः सेवाक्लेशेन खेदं जनयति प्रवासेन वा, तस्यापि ता निष्फलाः । तथा च चारायणः– 'सेवादिभिः परिक्लेशैर्विद्यमानधनोऽपि यः । संतापं मनसः कुर्यात्तत्तस्योषरघ( ? क )र्षणम् ॥' । नीवाटी.

**नाजितेन्द्रियाणां काऽपि कार्यसिद्धिरस्ति ॥**

अथाजितेन्द्रियाणां यथा स्वल्पाऽपि कार्यसिद्धिर्न भवति तदाह– नाजितेन्द्रियाणामिति । अजितेन्द्रियाणां पुरुषाणां काऽपि स्वल्पाऽपि कार्यसिद्धिर्न विद्यते । कथम्? यो गीतलालसो भवति स गीतं शृण्वन् स्वकृत्येषु विलम्बं करोति, विलम्बे कृते कार्यनिष्फलता स्यात् । उक्तं च शुक्रेण– 'यस्य तस्य च कार्यस्य सफलस्य विशेषतः । क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम् ॥' । एवं यः प्रियालिङ्गनलालसः, तथा मिष्टान्नास्वादरतः, तथा रूपाढ्यस्त्रियामवलोकनरतः, तथा परिमलाघ्राणनिरतश्च । तथा च ऋषिपुत्रकः– 'स्वकृत्येषु विलम्बन्ते विषयासक्तचेतसः । क्षिप्रमक्रियमाणेषु तेषु तेषां न तत्फलम् ॥' ।

नीवाटी.

**इष्टेऽर्थेऽनासक्तिर्विरुद्धे चाप्रवृत्तिरिन्द्रियजयः ॥**

अथ पुरुषाणां यथेन्द्रियजयो भवति तदाह– इष्ट इति। इष्टे वल्लभे वस्तुनि अनासक्तो भवति, युक्तमात्रं निषेवते, न तत्रैवाऽऽसक्तिं करोति, स जितेन्द्रियः कथ्यते। संसारस्य फलं यद्यप्येतदिष्टनिषेवणं युक्तं तथाप्यधिकमयुक्तम्, यतोऽजीर्णे पथ्यमप्यन्नं व्याधये मरणाय वा भवति। तथा विरुद्धे पदार्थे याऽप्रवृत्तिः अप्रवर्तनं यस्य पुरुषस्य भवति सोऽपि जितेन्द्रियः। अविरुद्धशब्देन शिष्टाचारः कथ्यते। तथा च भृगुः– 'अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते। स्वल्पमप्यनुगन्तव्यं येन स्यात् खविनिर्जयः॥'। नीवाटी.

**अर्थशास्त्राध्ययनं वा ॥**

अथान्येन पदार्थेन यथा स्यादिन्द्रियजयस्तदर्थमाह– अर्थशास्त्राध्ययनमिति। वा विकल्पेन यदि शिष्टमार्गो न ज्ञायते तदर्थं शास्त्राध्ययनं कुर्यात्, येन जितेन्द्रियता भवति। तथा च वर्गः– 'नीतिशास्त्राण्यधीते यस्तस्य दुष्टानि खान्यपि। वशगानि शनैर्यान्ति कशाघातैर्हया यथा॥'। नीवाटी.

**योऽनङ्गेनापि जीयते स कथं पुष्टाङ्गानरातीन् जयेत् ॥**

अथ शब्दच्छलेन कामदूषणमाह– य इति। यः नरः अनङ्गेन कामदेवेन जीयते स कथं केन प्रकारेण अरातीन् परान् जेतुं समर्थो भवति? न कथंचिदेवेत्यर्थः। किंविशिष्टानरातीन्? पुष्टाङ्गान्, पुष्टानि बलवन्ति राज्याङ्गानि येषां ते पुष्टाङ्गाः, तान्। पुष्टाङ्गशब्देन स्वाम्यमात्यश्च राष्ट्रं दुर्गं कोशो बलं सुहृदो राज्याङ्गानि, न शरीराणीत्यर्थः। तथा च भागुरिः– 'ये भूपाः कामसंसक्ता निजराज्याङ्गदुर्बलाः। पुष्टाङ्गास्तान् पराहन्युः पुष्टाङ्गा दुर्बलानिव॥'। नीवाटी.

**कामासक्तस्य नास्ति चिकित्सितम् ॥**

अथ कामासक्तस्य यद्भवति तदाह– कामासक्तस्येति। नास्ति न विद्यते। किं तत्? चिकित्सितं शुभकर्मोपदेशः। कस्य? कामासक्तस्य पुरुषस्य। कोऽर्थः? न किंचिद्धितं शृणोति। तथा च जैमिनिः– 'न शृणोति पितुर्वाक्यं न मातुर्न हितस्य च। कामेन विजितो मर्त्यस्ततो नाशं प्रगच्छति॥'। नीवाटी.

**न तस्य धनं धर्मः शरीरं वा यस्यास्ति स्त्रीष्वत्यासक्तिः ॥**

अथ स्त्रीसमासक्तस्य यद्भवति तदाह– नेति। यस्य पुरुषस्य स्त्रीविषयेऽत्यासक्तिर्भवति तस्य तावद्धनं न भवति, तस्यामासक्तौ व्यवसायं न करोति, तेन विना दरिद्रता भवति। उक्तं च कामन्दकिना– 'नितान्तं संप्रसक्तानां कान्तामुखविलोकने। नाशमायान्ति सुव्यक्तं यौवनेन समं श्रियः॥' (कानी. १।५०)। तथा च धर्मश्च न भवति देवकृत्यस्य पितृकार्यस्य वा। पुनः तथा च शरीरं न भवति अतिवीर्यक्षयात् क्षयव्याधिश्च संजायते। तथा च वल्लभदेवः– 'यः संसेवयते कामी कामिनीं सततं प्रियाम्। तस्य संजायते यक्ष्मा धृतराष्ट्रपितुर्यथा॥'। नीवाटी.

**विरुद्धकामवृत्तिः समृद्धोऽपि न चिरं नन्दति ॥**

अथ विरुद्धकामवृत्तेर्यद्भवति तदाह– विरुद्धेति। यः पुमान् विरुद्धकामवृत्तिः स समृद्धोऽपि लक्ष्मीवानपि चिरकालं न नन्दति न पुनर्लक्ष्मीवान् भवति। विरुद्धकामशब्देन परदारसेवा कथ्यते। तया यो वर्तत इति। तथा च ऋषिपुत्रकः– 'परदाररतो योऽत्र पुरुषः संप्रजायते।....॥'। नीवाटी.

**धर्मार्थकामानां युगपत्समवाये पूर्वः पूर्वो गरीयान् ॥**

अथ धर्मार्थकामानामेककालप्राप्तानां यः प्रथमं सेव्यस्तमाह– धर्मेति। धर्मार्थकामानामेतेषां त्रयाणां यः पूर्वः प्रथमः स गरीयान् गुरुतरः। एतदुक्तं भवति– अर्थाद्धर्मः प्रथमं प्रोक्तः स तस्मात् प्रधानतरः। तस्मात् क्रमेण ते सेव्यास्त्रयोऽपि गृहस्थेन। कथम्? सत्रिभागं प्रहरं यावत् धर्मचिन्ता कर्तव्या, ततः सत्रिभागं प्रहरं यावदर्थचिन्ता, ततः कामचिन्ता। तथा च भागुरिः– 'धर्मचिन्तां तृतीयांशं दिवसस्य समाचरेत्। ततो वित्तार्जने तावन्मात्रं कामार्जने तथा॥'। नीवाटी.

**कालासहत्वे पुनरर्थ एव ॥**

अथ कालापेक्षया त्रयाणां मध्ये यः प्रथमं कार्यस्तदर्थमाह– कालेति । कालासहत्वात् असहिष्णुतया कालस्य धर्मादर्थो गुरुः । यतोऽर्थबाह्यो धर्मो न भवति । यदि पुनर्धर्मकामयुक्तः पुरुषो भवति तदाऽर्थः कार्यः, यतोऽर्थो मूलं धर्मकामयोः, तं विना तौ न भवतः। तस्मात्त्रयाणामप्येतेषामर्थो गुरुतरः, सत्रिभागं प्रहरं यावदर्थश्चिन्तनीयस्ततो धर्मस्ततः काम इति । तथा च नारदः– 'धर्मकामौ न सिध्येते दरिद्राणां कथंचन । तस्मादथा गुरुस्ताभ्यां संचिन्त्यो ज्ञायते बुधैः ॥'।

नीवाटी.

आयुर्वेदवत् दण्डनीतिः दोषविशुद्धिहेतुः

**'चिकित्सागम इव दोषविशुद्धिहेतुर्दण्डः ॥**

अथ दण्डनीतिरारभ्यते । तत्र तावद्दण्डमाहात्म्यमाह– चिकित्सागम इति । योऽसौ अपराधिनां दण्डः क्रियते स किंविशिष्टः ? दोषविशुद्धिहेतुः कारणम् । एतदुक्तं भवति– योऽसौ राजा चौरजारादीनां निग्रहं करोति स निग्रहः किंविशिष्टः ? सर्वदोषविशुद्धिहेतुः । क इव ? चिकित्सागम इव । यथा चिकित्सागमः वैद्यकं सर्वदोषसंनिपातादीनां विनाशहेतुर्भवति तथा दण्डः । तथा च गर्गः– 'अपराधिषु यो दण्डः स राष्ट्रस्य विशुद्धये । विना येन न संदेहो मात्स्यो न्यायः प्रवर्तते ॥'।

नीवाटी.

**यथादोषं दण्डप्रणयनं दण्डनीतिः ॥**

अथ दण्डनीतेः स्वरूपमाह– यथादोषमिति । यथादोषं यत्प्रमाणापराधस्य दण्डप्रणयनं दण्डग्रहणं सा दण्डनीतिः । न शतार्हस्य द्विशतमात्रो दण्डः । तथा हस्तपादच्छेदार्हस्य न शिरः( छेदः ) कार्यः । तथा विप्रस्य न क्षत्रियवद्दण्डः । न क्षत्रियस्य वैश्यवत् । न वैश्यस्य शूद्रवत् । न शूद्रस्य अन्त्यजवत् । एते सर्वेऽपि दण्डाः भूभुजा धर्माधिकरणे निश्चेतव्याः । तथा च गुरुः– 'स्मृत्युक्तवचनैर्दण्डं हीनाधिक्यं प्रपातयन् । अपराधकपापेन लिप्यते न विशुध्यति ॥'। नीवाटी.

दण्डप्रणयनविधिः

**प्रजापालनाय राज्ञा दण्डः प्रणीयते न धनार्थम् ॥**

अथ यन्निमित्तं राजा दण्डं करोति तदाह– प्रजापालनायेति । योऽसौ राज्ञा दण्डः प्रणीयते कृतापराधेभ्यो दीयते स प्रजापालनाय देशविवृद्ध्यर्थम्, न धनार्थम् । तस्माद्भूभुजा धनलोभो न कर्तव्यः । तथा च गुरुः– 'यो राजा धनलोभेन हीनाधिककरप्रियः । तस्य राष्ट्रं व्रजेन्नाशं न स्यात्परमवृद्धिमत् ॥' नीवाटी.

**स किं राजा वैद्यो वा यः स्वजीवनाय प्रजासु दोषमन्वेषयति ॥**

अथ राज्ञो वैद्यस्य वा छिद्रान्वेषणपरस्य यद्भवति तदाह– स किमिति । स किं राजा यः प्रजासु विषये दोषमन्वेषयति छिद्रान्वेषणपरो भवति स कण्टकः शत्रुः । कासाम् ? प्रजानाम् । यतः कलिकाले कामक्रोधलोभादयो दोषाः प्रायेण संभवन्ति, तेन 'सर्वं छिद्रमयं जगत्' एवं ज्ञात्वा परिभूतपुरुषस्य तच्छत्रौ यथार्हो दण्डः कार्यः, न परवाक्येन स्वजीवनाय निर्वहणनिमित्तम् । तथा च शुक्रः– 'यो राजा परवाक्येन प्रजादण्डं प्रयच्छति । तस्य राज्यं क्षयं याति तस्माज्ज्ञात्वा प्रदण्डयेत् ॥'। अपि च– 'छिद्रान्वेषणचित्तेन नृपस्तन्त्रं न पोषयेत् । तस्य तन्नाशमभ्येति तस्मात्त्ववज्ञाजनारिता (?) ॥'। तथा च वैद्यः स्वजीवनाय प्रजासु दोषमन्वेषयति, रोगवृद्धिकराणि भेषजानि प्रयच्छति धनिनाम्, स वैद्यो न भवति, सोऽपि प्रजाकण्टकः । तथा च गुरुः– 'प्रत्यूषे प्रोत्थिता वैद्याः कृतावश्यकसत्क्रियाः । वैद्यनाथं हृदि स्थाप्य श्लोकमेनं पठन्ति च ॥ वातपित्तादिका रोगा ये चाजीर्णसमुद्भवाः । ते सर्वे धनिनां सन्तु वैद्यनाथ तवाऽऽज्ञया ॥'। नीवाटी.

**दण्डद्यूतमृतविस्मृतचौरपारदारिकप्रजाविप्लवजानि द्रव्याणि न राजा स्वयमुपयुञ्जीत ॥**

अथ राजा न यानि द्रव्याणि स्वयमुपयुञ्जीत तानि कथ्यन्ते– दण्डेति । दण्डवित्तं अपराधिजनोत्थम्, द्यूते

---

(१) नीवा. ९।१–७.

जितम्, तथा संग्रामे मृतस्य, तथा विस्मृतं यज्जानाति वित्तम्, तथा चौराद्यत्प्राप्तम्, (पारदारिकाद्यत्प्राप्तम्,) तथा प्रजाविप्लवात् परचक्रभयत्रासात् प्रजाभिः परित्यक्तम्। तेषां द्रव्याणि न राजा स्वयं गृह्णीयात्। यदि गृह्यन्ते तेन, कस्मात्कारणात्? तदर्थमुच्यते– तानि भूभुजा धर्मार्थे विप्रादीनां देयानि, न च कोशे क्षेप्तव्यानि, यतो दुष्प्रणीतानि द्रव्याणि सर्वाणि। तथा च शुक्रः–
'दुष्प्रणीतानि द्रव्याणि कोशे क्षिपति यो नृपः। स याति धनं गृह्यगृह्यार्थखनिधिर्यथा (?)॥' नीवाटी.

**दुष्प्रणीतो हि दण्डः कामक्रोधाभ्यामज्ञानाद्वा सर्वविद्वेषं करोति॥**

अथ दुष्प्रणीतदण्डेन कोशक्षितेन यद्भवति तदाह– दुष्प्रणीत इति। तेषां पूर्वोक्तानां यो दण्डः स दुष्प्रणीतः पापदण्डः, स स्वयं भुञ्जानस्य नृपतेर्विद्वेषं करोति सर्वनाशं करोति अन्यस्यापि शुभार्जितस्य। काभ्यां सकाशात्? कामक्रोधाभ्यामज्ञानाद्वा मूर्खत्वाद्वा। तथा च शुक्रः–
'यथा कुमित्रसङ्गेन सर्वं शीलं विनश्यति। तथा पापोत्थदण्डेन मिश्रं नश्यति तद्धनम्॥ किंचित्कामेन क्रोधेन किंचित्किंचिच्च जाड्यतः। तस्माद्दूरेण संत्याज्यं पापवित्तं कुमित्रवत्॥' नीवाटी.

**अप्रणीतो दण्डो मात्स्यन्यायमुत्पादयति, बलीयानबलं ग्रसतीति मात्स्यन्यायः॥**

अथ दुष्प्रणीतदण्डभीतस्य राज्ञो राष्ट्रे यद्भवति तदाह– अप्रणीत इति। अप्रणीतः अकृतः अपराधिनां भूभुजा दण्डो मात्स्यन्यायमुत्पादयति। बलीयान् पुरुषः अबलं निर्बलं ग्रसतीति मात्स्यन्यायः। तस्मात् भूभुजा दण्डो ग्राह्यः, परं कोशे न निक्षेप्तव्यः। तथा च गुरुः–
'दण्ड्यं दण्डयति नो यः पापदण्डसमन्वितः। तस्य राष्ट्रे न संदेहो मात्स्यो न्यायः प्रकीर्तितः॥' नीवाटी.

## युक्तिकल्पतरुः

### त्रिवर्गसिद्धिर्दण्डप्रयोजनम्

'दण्डः संरक्षते धर्मं तथैवार्थं विधानतः।
कामं संरक्षते यस्मात्त्रिवर्गो दण्ड उच्यते॥
राजदण्डभयाल्लोकाः पापाः पापं न कुर्वते।
यमदण्डभयादेके परलोकभयात्तथा॥
दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधु वा।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः॥
'यत्त्रिवर्गाविरुद्धं स्याद्राजनीतिस्तदुच्यते॥

## मानसोल्लासः

### दण्डप्रणयनविधिः

'दण्डो रक्षति मर्यादां दण्डो धर्मं प्रवर्तयेत्।
निवारयेदधर्मांश्च तस्माद्दण्डं प्रयोजयेत्॥
दण्डहीने यतो राष्ट्रे मात्स्यो न्यायः प्रवर्तते।
तस्माद्दण्डं प्रयुञ्जीत दुष्टानां धार्मिको नृपः॥
दण्डपातभयाल्लोको धर्मे तिष्ठति सूत्रितः।
करीव विजयो मत्तोऽप्यङ्कुशेन वशीकृतः॥
तीव्रदण्डभयाल्लोके भृशमुद्विजते जनः।
तस्मान्मृदुप्रयोगेण प्रजापालनमाचरेत्॥
यथोक्तदण्डविन्यासाद् भूपतेर्धर्मचारिणः।
यशो धर्मस्तथा राष्ट्रं कोशश्च परिवर्धते॥

(१) युक. १०३-१०५ पृ. १५.
(२) युक. ११७ पृ. १७.
(३) मासो. २।२०।१२९४-१२९८.

# राजशब्दार्थविचारः

## निरुक्तम्

राजपदव्युत्पत्तिः

[1]राजा राजतेः ॥

## शङ्खः

राजत्वमभिषेकेण

[2]स मूर्धाभिषिक्तो राजा भवति ॥

## महाभारतम्

राजपदव्युत्पत्तिः क्षत्रियपदव्युत्पत्तिश्च

[3]पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥

[4]रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्यते ।
ब्राह्मणानां क्षतत्राणात्ततः क्षत्रिय उच्यते ॥

क्षत्रियजातिबाह्योऽपि ब्राह्मणो वैश्यः शूद्रो वा यः कोऽपि प्रजाया धर्मेण रक्षकः राजत्वाधिकृतः

युधिष्ठिर उवाच–

[5]अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसंकरे ।
संप्रमूढेषु वर्णेषु यद्यन्योऽभिभवेद्बली ॥

[6]ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
दस्युभ्योऽथ प्रजा रक्षेद्दण्डं धर्मेण धारयन् ॥

[1]कार्यं कुर्यान्न वा कुर्यात्संवार्यो वा भवेन्न वा ।
न स्म शस्त्रं ग्रहीतव्यमन्यत्र क्षत्रबन्धुतः ॥

भीष्म उवाच–

[2]अपारे यो भवेत्पारमप्लवे यः प्लवो भवेत् ।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति ॥

[3]यमाश्रित्य नरा राजन् वर्तयेयुर्यथासुखम् ।
अनाथाः पाल्यमाना वै दस्युभिः परिपीडिताः ॥

[4]तमेव पूजयेरंस्ते प्रीत्या स्वमिव बान्धवम् ।
महद्ध्यभीक्ष्णं कौरव्य कर्ता सन्मानमर्हति ॥

[5]किमुक्ष्णाऽवहता कृत्यं किं धेन्वा चाप्यदुग्धया ।
वन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाऽप्यरक्षता ॥

[6]यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
यथा ह्यनेत्रः शकटः पथि क्षेत्रं यथोषरम् ॥

[7]एवं ब्रह्मानधीयानं राजा यश्च न रक्षिता ।
न वर्षति च यो मेघः सर्व एते निरर्थकाः ॥

---

(१) नि. २।३।१.

(२) मभा. ८।१.

(३) भा. १२।२९।१३१ ; भामु. १२।२९।१३९.

(४) भा. १२।५९।१२७–१२८ ; भामु. १२।५९।१२५–१२६.

(५) भा. १२।७९।३४; भामु. १२।७८।३५ वर्णेषु ( क्षत्रेषु ).

(६) भा. १२।७९।३५; भामु. १२।७८।३६.

(१) भा. १२।७९।३६ ; भामु. १२।७८।३७ त्संवार्यो ( त्स वार्यो ) न स्म ( तस्मात् ).

(२) भा. १२।७९।३७ ; भामु. १२।७८।३८.

(३) भा. १२।७९।३८ ; भामु. १२।७८।३९ पाल्यमाना वै ( परिकाल्यन्तो ).

(४) भा. १२।७९।३९; भामु. १२।७८।४० येरंस्ते ( येयुस्ते ) महद्ध्यभी ( अभीरमी ).

(५) भा. १२।७९।४० ; भामु. १२।७८।४१ किमुक्ष्णाऽवहता कृत्यं ( किं तैर्येऽनड्वाहो नोह्याः ) चाप्य ( वाऽप्य ).

(६) भा. १२।७९।४१ ; भामु. १२।७८।४२ ह्यनेत्रः शकटः पथि ( ह्यनर्थः षण्ढो वा पार्थ ).

(७) भा. १२।७९।४२ ; भामु. १२।७८।४३ ब्रह्मानधीयानं ( विप्रोऽनधीयानो ) उत्तरार्धे ( मेघो न वर्षते यश्च सर्वथा ते निरर्थकाः ॥ ).

'नित्यं यस्तु सतो रक्षेदसतश्च निबर्हयेत् ।
स एव राजा कर्तव्यस्तेन सर्वमिदं धृतम् ॥
रञ्जनात् खलु राजत्वं प्रजानां पालनादपि ॥

## मनुः

'अभिषेकाधिपत्यादिगुणवानेव राजपदवाच्यार्थः, न क्षत्रियः केवलम्' 'प्रजापालकः केवलशौर्यो्पात्त-राज्यो वा राजपदवाच्यार्थः' 'क्षत्रिय एव राजपदवाच्यार्थः, प्रजारञ्जकः राज्यधारी वा अन्यो वर्णः लक्षणया राजपदबोध्यः' इति टीकासु मतभेदाः

'राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।
संभवश्च यथा तस्य सिद्धिश्च परमा यथा ॥

(१) कः पुनरयं नरेन्द्रो नाम ? यस्य ग्रहाधीनौ पातोच्छ्रायौ । ननु च प्रसिद्धो राजनि नरेन्द्रशब्दः । किं क्षत्रिये ? बाढम् । तथा चोक्तम्- 'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्' (यास्मृ. १।११९) इति । उक्तं च स्वयंभुवा- 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि । सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥' (मस्मृ. ७।२) इति । अयं तु विशेषः- अभिषेकादि-गुणयुक्तस्यैव राज्याधिकारः, न क्षत्रियमात्रस्य, 'स मूर्ध्नो राजानमसृजत स मूर्धन्यभिषिक्तो राजा भवेत्' इत्याम्नायात् । विश्व.१।३०३

(२) धर्मशब्दः कर्तव्यतावचन इत्युक्तम् । यद्राज्ञा कर्तव्यं तदिदानीमुच्यते इति प्रतिज्ञा । कर्तव्यं च दृष्टार्थं षाड्गुण्यादि, अदृष्टार्थं अग्निहोत्रादि । तत्रेह प्राधान्येन दृष्टार्थमुपदिश्यते । तत्रैव च राजधर्मप्रसिद्धिः । राज-शब्दस्तु नेह क्षत्रियजातिवचनः, किं तर्हि ? अभिषेकाधि-पत्यादिगुणयोगिनि पुरुषे वर्तते । अत एवाऽऽह- 'यथा-वृत्तो भवेन्नृपः' । नृपग्रहणेन जनपदैश्वर्यवतोऽधिकार-माह । प्रमाणान्तरमूला ह्यत्र धर्मा उच्यन्ते, न सर्वे वेदमूलाः । अन्यमूलत्वे च यदत्र धर्मशास्त्राविरुद्धं तदुच्यते । तथा च कात्यायनः- 'अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्' इति । यथावृत्तः यत् वृत्तं यत्प्रकारं वाऽस्येति च बहुव्रीहिः । अन्यपदार्थो राजा । यथार्थप्राधान्येऽव्ययीभावः स्यात् । वृत्तं परिपालनार्थो व्यापारोऽदृष्टार्थश्च । संभवश्चोत्पत्तिः । स उक्तः 'राजा-नमसृजत् प्रभुः' (मस्मृ. ७।३) इत्यादिना । परमा प्रकृष्टा सिद्धिः विजिगीषोरैकाधिपत्यम् । राजवृत्तस्य फलप्रतिज्ञेयम् । मेधा.

(३) नृपतिना यथाचारेण भवितव्यं वीक्ष्य दृष्टा-दृष्टार्थान् कर्तव्यान् कथयिष्यामि । तथा येन प्रकारेण राज्ञ उत्पत्तिर्यथा च प्रकृष्टा दृष्टादृष्टार्थफलसंपत्तिस्त-द्वक्ष्यामि । गोरा.

(४) यद्यपि राजानमधिकृत्यायं राजधर्मकलाप उक्तस्तथाऽपि वर्णान्तरस्यापि विषयमण्डलादिपरिपालना-धिकृतस्यायं धर्मो वेदितव्यः, 'राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः' इत्यत्र पृथङ्नृपग्रहणात् । मिता. १।३६८

(५) एवं तावत् पञ्चभिरध्यायैर्ब्राह्मणस्यासाधारण-धर्माः कथिताः । अधुना द्वितीयवर्णस्य क्षत्रियस्या-साधारणधर्मानाह- राजधर्मानिति । धर्मः धर्मसाधनम् । यथावृत्तः यदाचारः । संभवः सृष्ट्यादौ । सिद्धिः दृष्टार्थसिद्धिः । मवि.

(६) धर्मशब्दोऽत्र दृष्टादृष्टार्थानुष्ठेयपरः, षाड्गुण्या-देरपि वक्ष्यमाणत्वात् । राजशब्दोऽपि नात्र क्षत्रियजाति-वचनः, किंतु अभिषिक्तजनपदपुरपालयितृपुरुषवचनः । अत एवाऽऽह- 'यथावृत्तो भवेन्नृपः' इति । यथाव-दाचारो नृपतिर्भवेत्तथा तस्यानुष्ठेयानि कथयिष्यामि । यथा येन प्रकारेण वा 'राजानमसृजत् प्रभुः' (मस्मृ. ७।३) इत्यादिना तस्योत्पत्तिः, यथा च दृष्टादृष्टफल-संपत्तिस्तदपि वक्ष्यामि । ममु.

(७) मनुः- 'अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् । रक्षार्थमस्य सर्वस्य राजानमसृजत्

---

(१) भा. १२।७९।४३ ; भामु. १२।७८।४४ निवर्हयेत् (निवर्तयेत्).

(२) पमा. ३९५.

(३) मस्मृ. ७।१ ; मिता. १।३६८ (=) पू. ; राक. २ ; रार. २ ; राप्र. १० : १४ निर्देशमात्रम्.

प्रभुः ॥ ' (७।३) । राजानमित्यस्य राजमात्रे तात्पर्यम्, विशेषानभिधानात् । असृजदिति क्रियामात्रम्, काल उपलक्षणम्, ' राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः । संभवश्च यथा तस्य सिद्धिश्च परमा यथा ॥ ' इत्यादि प्रागविशेषेणोपादानात् । तथा च प्रजारक्षको राजेत्यर्थः । ननु प्रजाऽरक्षकस्य वेनादेः कथं राजत्वमिति चेत्, न, दृष्टतद्योग्यताया एव विवक्षितत्वात् । अत एव कुल्लूकभट्टः– ' राजशब्दोऽपि नात्र क्षत्रियजातिपरः, किंतु अभिषिक्तजनपदपालयितृपुरुषपरः ' । राजनीतिकामधेनौ– ' राज्याभिषिक्तो राजा, प्रजापालनादेस्तदीयत्वात् तत्प्राक् ज्ञानासंभवाच्च ' इति । प्रजापालने प्रवृत्त इति बहवः । वस्तुतस्तु प्रजापालनप्रवृत्त्यभिषेकादयोऽस्य कारणमात्रं प्रजास्वामित्वे । ' राजत्वेन प्रसिद्धो राजा, केवलशौर्याद्यवाप्तराज्यस्य राजत्वव्यवहारात् ' इति गुरवः ।

रार. २–३

(८) * ननु ' दण्डयेत् राजा ' (पस्मृ. १।६०) इति भूपालस्यापि दण्डयितृत्वमुक्तम्, तत्कथं क्षत्रियस्यासाधारणधर्मः ? मैवम्, राजशब्दस्य क्षत्रियविषयत्वेनावेष्ट्यधिकरणे (जैसू. २।३।२) निर्णीतत्वात् । तथाहि द्वितीयाध्याये अवेष्ट्यधिकरणे श्रूयते– ' आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा ' (तैसं. १।८।१९।१) इत्यादिना राजकर्तृके राजसूये अवेष्टिनामकेष्टिं प्रकृत्य ' यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये विधायाऽऽहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेवम् ' इति । तत्र संशयः– किं ब्राह्मणादीनामवेष्टौ प्राप्तानां वर्णानां राजसूये अधिकारः, उत क्षत्रियस्यैव ? इति । तदर्थं च किं राजशब्दः त्रयाणामपि वर्णानां वाचकः, किंवा क्षत्रियस्यैव ? इति । ततोऽपि पुनर्विचारयितव्यम्– किं राजशब्दो राज्ययोगनिमित्तः, क्षत्रियत्वनिमित्तो वा ? इति । तत्र राजशब्दो राज्ययोगनिमित्त एव, आर्यप्रसिद्धेः सर्वलोकप्रसिद्धत्वादविगानाच्च । न तु क्षत्रियत्वनिमित्तः, अनार्यप्रसिद्धेरार्यप्रसिद्ध्यपेक्षया दुर्बलत्वात्, द्रविडेषु विगानात्, तदन्येष्वप्रसिद्धेश्च । तत्र स्यात् राज्ययोगात् राजानस्त्रयोऽपि भवन्ति । राज्यपदं तु रूढ्या जनपदरक्षणे वर्तते, न राजयोगमपेक्षते । ननु ' कर्मणि ' इत्यधिकृत्य ' पत्यन्तपुरोहितादिभ्यो यक् ' (पा. ५।१।१२८) इति वचनात् राजशब्दस्य तत्र पाठादाचाराच्च स्मृतेर्बलीयस्त्वात् राजयोग एव राज्यपदप्रवृत्तिनिमित्तमिति चेत्, लोकप्रयोगस्यैव शब्दार्थावधारणे प्रमाणत्वात् स्मृतेरपि स एव मूलम्, नान्यत् । प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यं तन्निमित्तत्वं च राजशब्दस्यावगम्यते । ततस्तदनुसारेण स्मरणं शब्दापशब्दविभागमात्रपरं व्याख्येयम् । अतस्त्रयाणामपि राजपदाभिधेयत्वेन राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि । यदिशब्दोऽपि राजशब्दस्य राज्ययोगनिमित्तत्वे प्रमाणम् । अन्यथा प्राप्त्यभावात् यदिशब्दोऽनुपपन्नः स्यात् । वैदिकश्च निर्देशः स्मृतेरपि बलीयान् । तस्मात् निमित्तार्थानि श्रवणानि इति प्राप्ते ब्रूमः– न तावद्वैदिकनिर्देशादत्र निर्णयः शक्यते, अन्यथाऽपि तत्सद्भावात् । ' राजानमभिषेचयेत् ' इति ह्यभिषेकविधौ प्रागेव राज्ययोगात् राजशब्दः क्षत्रियमात्रे एव प्रयुक्तः । तेन रूढमेव राजपदं निर्णीयते । यदिशब्दस्तु निपातत्वात् यथाकथंचिदपि नियमे न दुष्यतीति । स्मरणाच्च स्वतन्त्रमेव राजपदम् । न च तस्य निर्मूलत्वम्, द्रविडप्रयोगस्यैव मूलस्य संभवात् । अतो न यथार्थत्वे स्मरणस्य प्रमाणमस्तीति तेनैवाभियुक्तप्रणीतेनाऽऽचारस्य संभवात् गौणभ्रान्त्यादिप्रयोगप्रसूतस्य बाधात् राजयोगेन राज्यशब्दः, स्वतन्त्रस्तु राजशब्दः क्षत्रियवचन इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात् प्रापकानि वचनानीति । एवमत्रापि राजशब्दः क्षत्रियपरः । ननु जनरञ्जनाद्राजत्वं महाभारते अभिहितम्– ' रञ्जनात् खलु राजत्वं प्रजानां पालनादपि ' इति । बाढम्, संभवत्येतत् क्षत्रियस्यापि रञ्जकत्वम् ।

पमा. ३९३–३९५

(९) ' राजा धर्मस्य कारणम् ' इत्यनुशासनान्नृपतिधर्मयोः कार्यकारणसंगतिरध्यायद्वये । राजधर्मानिति । राजपदमत्रावेष्ट्यधिकरणन्यायेन आन्ध्रप्रसिद्धि-

* मनुवचनस्याधृतत्वेऽपि विषयसंगत्याऽत्र पराशरमाधवीया टीका संगृहीता ।

माश्रित्य राजन्यपरम्, प्रजापालनकण्टकोद्धरणादिना राज्यस्य कर्तरि वर्णान्तरे च लाक्षणिकमिति, उत्तरे च 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण' (मस्मृ. ७।२) इति, अन्ते च 'क्षत्रियस्यापराधेन ब्राह्मणः सीदति क्षुधा' (मस्मृ. ११।२१), 'वेदाभ्यासो हि विप्रस्य क्षत्रियस्याभिरक्षणम्' (मस्मृ. १०।८०), 'नाक्षत्रं ब्रह्म वर्धते' (मस्मृ. ९।३२२), 'क्षत्रियाय ददौ राज्यम्', 'संध्यां चोपास्य शृणुयात्' (मस्मृ. ७।२२३) इत्यादिस्वरसात्। न तु ब्राह्मणादौ राजधर्मप्राप्तिरिति, 'अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन तेजसा। जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः॥' (मस्मृ. १०।८१) इत्यापदि मनुवचनादेव धर्माः कर्तव्याः। तत्रादृष्टमग्निहोत्रादि, तदर्थं ऋत्विगादि, दृष्टं प्रजापालनादि, तदर्थं षाड्गुण्यादि, तयोः प्राप्तिः। यथावृत्तः यथाचारः भवेत्। संभवश्च इन्द्रादिभ्य उत्पत्तिः। सिद्धिः रणेनैव। मच.

(१०) तत्र महाभारते– 'युधिष्ठिर उवाच– श्रोतुमिच्छामि भगवन् विस्तरेण महामुने। राजधर्मान् द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान्॥' इत्युपक्रम्य राजधर्मा उक्ताः। अग्निपुराणेऽपि– 'अग्निरुवाच– पुष्करेण च रामाय राजधर्मे हि पृच्छते। यदादौ कथितं तद्वद्विशिष्टं कथयामि ते॥ पुष्कर उवाच– राजधर्मं प्रवक्ष्यामि स्याद्राजा राजधर्मतः'। मनुस्मृतावपि– 'राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः। संभवश्च यथा तस्य सिद्धिश्च परमा यथा॥' इत्युपक्रम्य तत्र तत्र राजधर्मा उक्ताः। तत्र राजशब्दार्थस्तावद्विचार्यते– किमयं राजशब्दो यस्मिन् कस्मिंश्चित् प्रजापालके वर्तते, उत क्षत्रियजातौ, किंवा अभिषिक्तक्षत्रियजातौ वर्तते? इति। तत्र अवेष्ट्यधिकरणे 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र पूर्वपक्षे लिखितम्– 'राज्यस्य कर्ता राजेति सर्वलोकेषु गीयते। महाविषयता चैवं शास्त्रस्यापि भविष्यति॥' (जैसू. २।३।२ वार्तिकम्)। तस्मात् ब्राह्मणादयो राज्यं कुर्वाणा राजान इति। राज्यं तु जनपदपरिपालनम्। लोकप्रयोग एव शब्दार्थावधारणे प्रमाणम्। लोके च ब्राह्मणादिषु राज्यकर्तृषु राजशब्दो वर्तते। यास्कोऽपि 'राजा राजतेः' (२।३।१) इति ब्रुवन् यौगिकं राजशब्दमीश्वरवचनमेवाभ्युपैति। राजनोत्कर्षश्च प्रजापरिपालनादिरेव। वेदेऽपि– 'सोमोऽस्माकं ब्राह्मणानां राजा' (तैसं. १।८।१०।२), 'यो राजा चर्षणीनाम्' (ऋसं. ८।७०।१), 'सोमो वै राजा गन्धर्वेषु' (ऐब्रा. ५।१) इत्यादावपि ईश्वरवचन एव राजशब्दः प्रतीयते। कोषेऽपि– 'राजा तु प्रणताशेषसामन्तः स्यात्', तथा 'अथ राजकम्। राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्॥' इति। अत्र यदि राजन्यशब्दवद्राजशब्दोऽपि क्षत्रियवचन एव स्यात्तदा राजकं राजन्यकं च क्षत्रियगणे इत्येव ब्रूयात्, न तु नृपतिगणे इति पृथगुपाददीत। तस्माद्राजशब्दो नृपतीनां वाचक इति केचित्। अपरे त्वाहुः– राजशब्दः क्षत्रियजातिवचनः। मन्वादयो हि 'राजधर्मान् प्रवक्ष्यामि' इत्युपक्रम्य जनपदपरिपालनरूपं राज्यं क्षत्रियस्यैव स्मरन्ति। तत्र मनुः– 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि। सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम्॥'। ब्रह्म वेदः, तत्कृतः श्रवणाध्ययनजन्यो ग्रहणावबोधलक्षणः संस्कारो ब्राह्मः। यद्वा, ब्रह्म वेदः, तत्प्राप्त्यर्थं उपनयनादिः संस्कारो ब्राह्मः। यथाविधि यथाशास्त्रम्। एतच्च प्राप्तेनेत्यनेनान्वितम्। यथान्यायं वक्ष्यमाणदण्डप्रणयनशास्त्रमनतिक्रम्येत्यर्थः। परिरक्षणं दुर्बलानां बलवद्भिरनभिभवः। अनेन क्षत्रिय एव मुख्यो राज्याधिकारीति दर्शितम्। अत एव क्षत्रियस्य क्षितिरक्षाजीवनार्थं शस्त्रास्त्रभृत्त्वं चोक्तं मार्कण्डेयपुराणे– 'दानमध्ययनं यज्ञः क्षत्रियस्याप्ययं त्रिधा। धर्मः प्रोक्तः क्षिते रक्षा शस्त्राजीवोऽस्य जीविका॥'। जीविका कराद्यादानद्वारा। तथा याज्ञवल्क्यः– 'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्' (यास्मृ. १।११९) इति। प्रधानं धर्मार्थं वृत्त्यर्थं च। पाणिनिरपि राज्ञः कर्मणि ष्यञं विदधाति– 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा. ५।१।१२४) इति, 'पत्यन्तपुरोहितादिभ्यो यक्' (पा. ५।१।१२८) इति यकं वा। तेन राज्ञः क्षत्रियस्य कर्म राज्यमिति मन्वाद्येकवाक्यत्वात्सिद्धं

भवति । तथा 'राजश्वशुराद्यत्' (पा. ४।१।१३७), 'राज्ञोऽपत्ये जातौ' इति सूत्रवार्तिकाभ्यां राजशब्दः क्षत्रियवचनोऽवसीयते । तन्निष्पन्नराजन्यशब्दस्य क्षत्रियपर्यायेषु पाठात् जातिश्चेह क्षत्रियजातिर्गृह्यते । राज्ञः क्षत्रियापत्ये यत्, स च जातिग्रहणात् वैश्यापत्ये निवार्यते । तथा 'राजानमभिषेचयेत्' इत्यत्राभिषेकोऽपि क्षत्रियस्यैव विज्ञायते । दृष्टं हि राजत्वमुद्दिश्याभिषेको विधीयते । तेन राजानं सन्तमभिषेकेण संस्कुर्यात्, न त्वदृष्टं यूपत्वं 'यूपं तक्षति' इत्यत्र यथा विधीयते 'तक्षणेन यूपं कुर्यात्' इति, तद्वत् 'अभिषेकेण राजानं कुर्यात्' इति, यूपशब्दस्यालौकिकत्वात्, राजशब्दस्य तु क्षत्रियवचनत्वेन प्रसिद्धत्वात् । राजधर्मानित्युपक्रम्य 'क्षत्रियस्य परो धर्मः प्रजानां परिपालनम्' (मस्मृ. ७।१४४), 'क्षत्रियस्यापराधेन ब्राह्मणः सीदति क्षुधा' (मस्मृ. ११।२१), 'वेदाभ्यासो हि विप्रस्य क्षत्रियस्याभिरक्षणम्' (मस्मृ. १०।८०), 'क्षत्रियाय ददौ राज्यम्' इत्याद्युपसंहारस्वरसाच्च क्षत्रियजातावेव राजशब्दः । अत एव अनेकार्थकोषोऽपि – 'राजा शशाङ्के क्षत्रिये नृपे' इति । राज्यकर्तरि च वर्णान्तरे लाक्षणिकः । ननु ब्राह्मणस्य कथं राज्यकर्तृत्वम् ? उच्यते– 'अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा । जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥' (मस्मृ. १०।८१) इति मनुवचनात् । वस्तुतस्तु अभिषेकादिगुणयुक्तस्य वक्ष्यमाणधर्माः । तथा च मत्स्यपुराणे मत्स्यं प्रति मनुरुवाच– 'राज्ञोऽभिषिक्तमात्रस्य किं नु कृत्यतमं भवेत् । एतन्मे सर्वमाचक्ष्व सम्यग्वेत्ति यतो भवान् ॥' (मत्स्य. २१५।१) इति । अत्र मात्रपदेन तमपा च अभिषेकानन्तरमेव प्रजापालनं तदङ्गसंपत्तिश्च संपादनीयेति गम्यते । तदुक्तं तत्रैव– 'अभिषेकार्द्रशिरसा राज्ञा राज्यावलोकिना । सहायवरणं कार्यं तत्र राज्यं प्रतिष्ठितम् ॥' (मत्स्य. २१५।२) । सहायाः अमात्यादयः । मेधातिथिस्तु– 'राजशब्दश्च नेह क्षत्रियजातिवचनः, किं तर्हि ? अभिषेकाधिपत्यादिगुणयोगिनि पुरुषे वर्तते' । कुल्लूकभट्टोऽपि– 'राजशब्दो नात्र क्षत्रियजातिवचनः, किंत्वभिषिक्तजनपदपरिपालनकर्तृवचनः' इति । 'राजा सर्वस्येष्टे ब्राह्मणवर्जम्' (गौध. ११।१) इतिगौतमव्याख्याने हरदत्तोऽपि– 'राजा अभिषिक्तः क्षत्रियः' इति । विज्ञानेश्वरोऽपि राजधर्मादावाह– 'साधारणान् गृहस्थधर्मानुक्त्वा इदानीं राज्याभिषेकादिगुणयुक्तस्य गृहस्थस्य विशेषधर्मानाह' इति । एष्वपि पक्षेषु 'राजधर्मान् प्रवक्ष्यामि' इत्यादिराजधर्मप्रतिपादकवचनेषु राजशब्दो जनपदैश्वर्यवन्नृपतिं लक्षणया प्रतिपादयतीति पक्षः साधुः, उक्तयुक्त्या क्षत्रियसामान्यवाचित्वात् । तथा च बृहत्पराशरः– 'अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया' (बृपस्मृ. १२।१) इति । तथा विज्ञानेश्वरोऽपि– 'अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परो धर्मः' (२।१) इति । तथापि नृपग्रहणसमभिव्याहारादनभिषिक्तेऽपि जनपदैश्वर्यवति लोकप्रसिद्ध्या राजशब्दो वर्तते । तथा– "यद्यपि राजानमधिकृत्यायं राजधर्मकलाप उक्तस्तथापि वर्णान्तरस्यापि कियन्मण्डलादिपरिपालनाधिकृतस्यायं राजधर्मो वेदितव्यः, 'राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः' इति पृथक् नृपग्रहणात्, करग्रहणस्य रक्षार्थत्वाच्च, रक्षणस्य दण्डप्रणयनायत्तत्वात्" (मिता. १।३६८) इति । तथा 'नृप इति न क्षत्रियमात्रस्यायं धर्मः किंतु प्रजापालनेऽधिकृतस्यान्यस्यापि (इति दर्शयति)' (मिता. २।१) । तदेवमुक्तदिशा वक्ष्यमाणवैदिकाभिषेकानधिकृतस्य पौराणोऽमन्त्रको वाऽभिषेको विधेयः । तथा च 'अभिषेकार्द्रशिरसा' इत्यादि संगच्छते । अपरार्कस्तु– 'प्रजापालनादि क्षत्रियस्य राज्यं कुर्वतो विहितम् । यदा पुनरक्षत्रियोऽपि क्षत्रियकार्यं करोति तेनाप्येतत् सर्वमनुष्ठेयम्, तत्कार्यापत्त्या तद्धर्मलाभात्" (१।३६६) इति वदन् प्रजापालनादिविधिषु राजशब्दोऽभिषिक्तक्षत्रियवचन इति मन्यते । तत्तु पूर्वोक्तयुक्तिनिचयबलादयुक्तम् । तदेवं 'राजधर्मान् प्रवक्ष्यामि' इत्यत्र राजशब्दः प्रजापालनाधिकृतपरः । धर्मशब्दः कर्तव्यतावचनः । यद्राज्ञा कर्तव्यं दृष्टादृष्टार्थरूपं षाड्गुण्याद्यग्निहोत्रादि तद्वक्ष्यामि । तत्र प्राधान्येनासाधारणं दृष्टार्थमुपदिश्यते, अदृष्टार्थस्य साधारणधर्मेषूक्तत्वात् । अत एवोक्तं

मनुव्याख्यायाम्– 'साधारणं वेदोक्तसंस्कारं प्राप्यासाधारणं प्रजापालनादि कर्तव्यम्' इति, "स यथावृत्तो यथाचारो भवेत् तानाचारान्, यथा च तस्य संभवः 'राजानमसृजत् प्रभुः' (७।३) इत्यादिना उत्पत्तिस्तम्, यथा च तस्योत्कृष्टा ऐकाधिपत्यलक्षणा सिद्धिस्तत्सर्वं वक्ष्यामि" इति च। राप्र. १०–१५

(११) एवं प्रतिपादितस्याश्रमधर्मस्य रक्षाधिकारिणं राजानं प्रति धर्मान् प्रस्तौति– राजेति। यथावृत्तः यत्प्रकारवृत्तः नृपो भवेत् नून् पातुं शक्नुयात् तथा च वक्ष्यामि। सिद्धिः ऐहिकामुष्मिकफलम्। नन्द.

(१२) राजधर्मानाह– राजधर्मानिति। यथावृत्तः यथाचारः नृपो भवेत्। तस्य राज्ञः यथा संभवः सृष्ट्यादौ जन्म, तस्य यथा सिद्धिः कार्यसिद्धिः, एतादृशान् वक्ष्यमाणलक्षणान् राजधर्मान् प्रवक्ष्यामि। भाच.

*** 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि।**
**सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम्॥**

(१) ब्रह्म वेदः। तत्र श्रुतः संस्कारो ब्राह्मः। स वेदाध्ययनजन्यो ग्रहणवतोऽर्थलक्षणो वेदस्य, स्वाध्यायविधिनिर्वर्त्य इत्यर्थः। उपनयनं तु ब्रह्मग्रहणार्थत्वात् ब्राह्ममिति युक्तम्। तथा च वक्ष्यति– 'त्रैविद्येभ्यस्त्रयीं विद्यात्' (मस्मृ. ७।४३) इति। इतरथा विदितवेदितोपदेशः स्यात्। गर्भाधानादिस्मृतिशास्त्रादष्टाचत्वारिंश (? शत्) संस्कारम्। क्षत्रियेणेति। एतेन क्षत्रिय एव राज्याधिकारीति सूचितम्। क्षत्रियाभावे तदतिदेशोऽपि ग्राह्यः। अन्यथा प्रजालोपः स्यादिति भावः। सर्वस्य करदस्य दीनानाथादेश्च। अस्येति स्वविषयवासिनां यथास्वं जनपदपुरनिर्देशः। यथान्यायम्, न्यायः शास्त्रं धर्मशास्त्ररूपम्, नार्थशास्त्रमौशनसादिप्रणीतम्, तमनतिक्रम्य। परिरक्षणं परिपालनं अपायपरिहारः दुर्बलानां बलवद्भिरनभिभवः शास्त्रमर्यादानतिक्रमश्च। दुःखत्राणं परिरक्षा। शास्त्रातिक्रमे चादृष्टं दुःखम्। अतस्तदनतिक्रमे राजभयेन रक्षिता भवन्ति। राजदण्डे दुःखमिति चेन्महतो नरकादिदुःखाद्राजदण्डनमल्पीयः। कर्तव्यमिति विधिः। अधिकारश्चाष्टमे निरूपितः। मेधा.

(२) वेदाधिगमार्थमुपनयनाख्यं स्नानपर्यन्तं यथाशास्त्रं संस्कारं प्राप्तवता क्षत्रियेण सर्वस्यास्य जगतः शास्त्रमर्यादानतिक्रमेण नियमतो रक्षणं कर्तव्यम्। वृत्त्यर्थत्वेऽपि 'तपः क्षत्रस्य रक्षणम्' (मस्मृ. ११।२३५) इत्यदृष्टार्थत्वेनापि रक्षणोपदेशात्। * गोरा. ८८

(३) ब्राह्मं संस्कारं ब्राह्मणेन क्रियमाणमभिषेकमित्यर्थः। † राक. ८४

(४) ब्रह्म वेदः, तत्प्राप्त्यर्थतयोपनयनसंस्कारः, तं यथाशास्त्रं प्राप्नुवता क्षत्रियेण अस्य सर्वस्य स्वविषयावस्थितस्य शास्त्रानुसारेण नियमतो रक्षणं कर्तव्यम्। एतेन क्षत्रिय एव राज्याधिकारी, नान्य इति दर्शितम्। अत एव शस्त्रास्त्रभृत्त्वं क्षत्रियस्य जीवनार्थम्, तथा क्षत्रियस्य तु रक्षणं स्वकर्मसु श्रेष्ठं च वक्ष्यति। ब्राह्मणस्य ह्यापदि 'जीवेत् क्षत्रियधर्मेण' (मस्मृ. १०।८१) इत्यभिधास्यति। वैश्यस्यापि क्षत्रियधर्मम्, शूद्रस्य च क्षत्रियवैश्यकर्मणी जीवनार्थमापदि जगाद नारदः– 'न कथंचन कुर्वीत ब्राह्मणः कर्म वार्षलम्। वृषलः कर्म च ब्राह्मं पतनीये हि ते तयोः॥ उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते। मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते॥ रक्षणं वेदधर्मार्थे तपः क्षत्रस्य रक्षणम्॥' (नास्मृ. ४।५७–५८) इति। 'सर्वतो धर्मषड्भागो राज्ञो भवति रक्षणे' (मस्मृ. ८।३०४) इति च वक्ष्यमाणत्वात् रक्षितुर्बलिषड्भागग्रहणात् दृष्टार्थमपि 'योऽरक्षन् बलिमादत्ते' (मस्मृ. ८।३०७) इति नरकपातं वक्ष्यति। मम.

---

* राप्र.व्याख्यानं 'राजधर्मान् प्रवक्ष्यामि' इति पूर्ववचने द्रष्टव्यम्।

(१) मस्मृ. ७।२; विश्व. १।३०४; गोरा. ब्राह्मं (ब्राह्मार्थं); राक. ८४; रार. ८ (=); मच. ७।१ पू.; राप्र. ११–१२; नीम. १.

* मवि., मच., भाच. गोरागतम्।

† नीम. राकगतम्।

(५) अत्र क्षत्रियपदं राजपरम् । उपनयनादिसंस्कारवता परिरक्षणं कार्यमिति प्राशस्त्यपरम्, 'बालोऽपि नावमन्तव्यः' (मस्मृ. ७।८) इति मनोरेव प्रागुक्तेः । रार. ८

(६) अभिषेकादिसंस्कारयुक्तस्य क्षत्रियस्य रक्षायामधिकारः, नान्यस्येत्याह- ब्राह्ममिति । ब्राह्मं संस्कारं वैदिकमुपनयनाभिषेकादिकं संस्कारं प्राप्तो यस्तस्यैव रक्षायामधिकारः, नान्यस्येति । नन्द.

## बृहस्पतिः

बलेन प्रजारञ्जको वपुषा दीप्यमानश्च राजपदवाच्यार्थः

[1]बलेन चतुरङ्गेण यतो रञ्जयति प्रजाः ।
दीप्यमानः स वपुषा तेन राजाऽभिधीयते ॥

बलेन सेनया । चतुरङ्गेण हस्त्यश्वरथपादातेन । राप्र. २४

## जैमिनिसूत्रम्

प्रजारक्षणादिगुणयुक्तः क्षत्रिय एव राजपदवाच्यार्थः

*[2]अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥

## आश्वलायनः

धर्मेण प्रजारञ्जकः क्षत्रियः राजपदवाच्यार्थः

[3]धर्मेण रञ्जनाद्राजा क्षतत्राणाच्च क्षत्रियः ॥

* अधिकरणरचना 'राजधर्मान् प्रवक्ष्यामि' इति मनुवचने पमान्याख्याने द्रष्टव्या ।

(१) राक. ७; राप्र. २४.
(२) जैसू. २।३।२।३.
(३) आश्वस्मृ. ८।५.

## हरिवंशः

प्रजानुरञ्जनात् राजा

[1]सोऽभिषिक्तो महातेजा विधिवद्धर्मकोविदैः ।
आदिराज्ये तदा राज्ञां पृथुर्वैन्यः प्रतापवान् ॥
[2]पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः ।
अनुरागात्ततस्तस्य नाम राजेत्यजायत ॥

## अग्निपुराणम्

प्रजानुरञ्जनात् राजा

पुष्कर उवाच-
[3]राजधर्मं प्रवक्ष्यामि स्याद्राजा राजधर्मतः ॥
[4]अनुरागकरं कर्म चरेज्जह्याद्विरागजम् ।
जयानुरागया लक्ष्म्या राजा स्याज्जनरञ्जनात् ॥

## अनिर्दिष्टकर्तृकवचनम्

राज्यकर्ता राजपदवाच्यार्थः

[5]राज्यस्य कर्ता राजेति सर्वलोकेषु गीयते ।
महाविषयता चैवं शास्त्रस्यापि भविष्यति ॥

(१) हरि. १।५।२९; विष्णु. १।१३।४७ पू.
(२) हरि. १।५।३०; विष्णु. १।१३।४८ स्तस्य प्र (स्तत्र प्र) रञ्जिताः (रञ्जितम्).
(३) अग्नि. २१८।२ स्याद्राजा रा (सर्वस्माद्रा); राप्र. १०.
(४) अग्नि. २२०।२४.
(५) राप्र. ११.

## गौतमः

राजब्राह्मणयोः धर्मरक्षणं प्रजारक्षणं भूतपालनं च धर्मः

**[1]द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतः ॥**

( १ ) अथ यद्यापद्विहिते कर्मणि कश्चिद्दोषापरिज्ञानात् लोभाद्वा प्रसज्येत, ततोऽसौ केन निवार्यः ? राजब्राह्मणाभ्यामुपदेशदण्डाभ्याम् । यतस्तावेव– द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतः । द्वाविति प्रकर्षवाची, न संख्यानिर्देशः, द्विवचननिर्देशादेव द्वित्वसिद्धेः । अस्ति चातिशयार्थः संख्यानिर्देशः, यथा 'अस्मिन् ग्रामे द्वावेव ब्राह्मणौ' इति । तत्र गम्यते– अन्येऽपि ब्राह्मणाः सन्ति, द्वावेवानुष्ठानपराविति । अत्रापि राजब्राह्मणयोरतिशयेन धृतव्रतत्वार्थम्, नान्येषां प्रतिषेधार्थम् । लोकग्रहणं वीप्सार्थम् । लोकसंघाते लोके राष्ट्रे इत्यर्थः । अन्यथा सर्वकर्मणां लोकाधिकारत्वादनर्थकमेवैतत्स्यादिति । एवं च यथा प्रतिराष्ट्रं राज्ञा भवितव्यं तथा बहुश्रुतेनापि भवितव्यमिति गम्यते । धृतव्रतौ व्रतानां कर्मणां धारयितारौ । राजा क्षत्रियः, स चाभिषेकादिगुणयुक्तः, 'स मूर्धाभिषिक्तो राजा भवति' इति शङ्खवचनात् । ब्राह्मणश्च बहुश्रुतः । सत्यपि ब्राह्मणस्य प्राधान्ये राज्ञः पूर्वनिर्देशो बहुश्रुतत्वस्य ब्राह्मणविशेषणार्थम् । राज्ञोऽपि बहुश्रुतत्वानुकर्षणार्थश्चकारः । ततश्च राज्ञोऽपि बहुश्रुतत्वेन भवितव्यम्, ब्राह्मणस्य विशेषेणेति द्रष्टव्यम् । बहुश्रुतः बहु अनेन श्रुतमिति । राजब्राह्मणौ बहुश्रुताविति वक्तव्ये विसमासनिर्देशो राज्ञोऽप्यतिशयेन शौर्यादिगुणयोगार्थः । ततश्च तौ धृतव्रतौ स्यातामिति शेषः । मभा.

( २ ) आपद्वृत्तिमाश्रितो यदि तत्रैव रमेत केनासौ निवार्यते इत्याह– द्वाविति । लोकः राष्ट्रम् । वीप्सालोपश्चात्र द्रष्टव्यः । लोके लोके धृतव्रतौ व्रतानां कर्मणां धारयितारौ द्वौ राजा बहुश्रुतश्च ब्राह्मणः । तौ सर्वस्य सर्वापदः दण्डोपदेशाभ्यां निवारयितारौ । गौमि.

**[1]तयोश्चतुर्विधस्य मनुष्यजातस्यान्तःसंज्ञानां च चलनपतनसर्पणानामायत्तं जीवनम् ॥**

( १ ) यतः– तयोरिति । तयोः समुदितयोः, समाननिर्देशात् । चतुर्विधस्य मनुष्यजातस्य चातुर्वर्ण्यस्येत्यर्थः । अन्तःसंज्ञाः अनुलोमप्रतिलोमाः । चकारात् देवानां च, 'इतः प्रतिदानाद्धि देवा उपजीवन्ति' इति श्रुतेः । चलनाः स्थावरा वृक्षादयः, पतनाः पक्षिणः, सर्पणाः कीटादयः, एतेषामायत्तं अधीनं जीवनं प्राणधारणम् । कथम् ? ब्राह्मणेनानुगृह्यमाणा वर्णाश्रमिणः दृष्टादृष्टार्थक्रियानुष्ठानात् वृष्ट्यादिनिमित्तद्वारेण लोकोपकारे वर्तन्ते इति तावद्ब्राह्मणायत्तम् । तथा च मनुः– 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' ( मस्मृ. ३।७६ ) इत्यादि । राजा च परिपन्थिनिग्रहद्वारेण हिंसानिग्रहद्वारेण च साक्षाज्जीवनहेतुरिति । मभा.

(२) चतुर्विधस्य मनुष्यजातस्य चातुर्वर्ण्यस्य । अवान्तरप्रभवास्त्वनुलोमादयस्तन्मूलत्वात्पृथक् नोक्ताः । अन्तःसंज्ञाः वृक्षादयः स्थावरा वृद्धिक्षयवन्तः, येषामन्तः संज्ञा, न बहिस्ते तथोक्ताः । तथा च मनुः– 'तमसा बहुरूपेण वेष्टिताः कर्महेतुना । अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥' ( मस्मृ. १।४९ ) इति । चलनाः पश्वादयः । पतनाः पक्षिणः । सर्पणाः सरीसृपा भुजगादयः । एषां मनुष्यादीनां जीवनं तयोः राजब्राह्मणयोरायत्तं तदधीनम् । राजा तु परिपन्थिनिग्रहादिना तेषां जीवनहेतुः । इतरस्तु कथं बहुश्रुत इत्यत आह– 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' ( मस्मृ. ३।७६ ) इत्यादिन्यायेन जीवने हेतुः । गौमि.

---

( १ ) गौध. ८।१ ; मभा. ; गौमि.

( १ ) गौध. ८।२ ; मभा. ; गौमि. ; बौवि. १।१८।३ ( तयोः० ) ( च० ).

**[1]प्रसूती रक्षणमसंकरो धर्मः ॥**

न च जीवनमात्रमेव तयोरायत्तम्, किंतु— प्रसूती रक्षणमिति । प्रसूतिः अभिवृद्धिः, सा च तदायत्ता, राजब्राह्मणदण्डधारणोपदेशाभ्यां यथोक्तकारित्वात् वृष्ट्यादिद्वारेण रोगाद्युपद्रवाभावाच्च वृद्धिर्भवतीति । चोरादिनिग्रहाद्रक्षणं च । दण्डधारणप्रायश्चित्तोपदेशात् संकराभावश्च । यमनियमोपदेशात् विहिताकरणे प्रतिषिद्धसेवने च दण्डधारणाद्धर्मोऽपि तदायत्त एव । * मभा.

राजोपासना प्रजाधर्मः राजाचार्यनिन्दावर्जनं च

**[2]तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यः ॥**

(१) तं एवंगुणसंपन्नं राजानमुपरि स्थितं नीचैः समीपतः सेवेरन् क्षत्रियादयः । अब्राह्मणा इति वक्तव्ये अन्ये ब्राह्मणेभ्य इति गुणवद्ब्राह्मणोपसंग्रहणार्थम्, न तु जातिमात्रस्येति । तमधस्तादा( ?दुपा )सीरन्निति सिद्धे उपरिग्रहणमुत्सवादिष्वप्युपरिभावार्थम् । मभा.

(२) तं एवंगुणं राजानं उपरि सिंहासनादौ उच्चैरासीनं अधस्तात् भूमावेव आ(?उपा)सीरन् । किमविशेषेण ? न, अन्ये ब्राह्मणेभ्यः ब्राह्मणव्यतिरिक्ताः । अथ उपासीरन्नित्येव सिद्धे उपर्यासीनमिति स्वभावानुवादः । सर्वदा अयमुपर्यासीनो भवति, न तु रहस्यपि भूमाविति । † गौमि.

**[3]तेऽप्येनं मन्येरन् ॥**

(१) तेऽपि गुणवन्तो ब्राह्मणा अपि एनं अधस्तात्स्थितं मन्येरन् पूजयेयुः आशीर्वादादिभिः लोकपालांश इति मत्वा । यथा च मनुः— 'यस्मादेष सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः' इत्यादि । अपिशब्दान्नीचैः स्थिता अगुणवन्तो ब्राह्मणाश्च । मभा.

(२) तेऽपि ब्राह्मणा एनं राजानं मन्येरन् आशीर्वादादिभिः पूजयेयुः । * गौमि.

**† [1]वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते ॥**

**विष्वञ्चो विपरीता नश्यन्ति ॥**

**तानाचार्योपदेशो दण्डश्च पालयते ॥**

**[2]तस्माद्राजाचार्यावनिन्द्यौ ॥**

(१) ततश्च रक्षणहेतुत्वात् कारणे सति पारुष्याद्यपि वक्तव्यम् । अतः परुषमप्युपदिशन्नाचार्यः उग्रमपि दण्डं धारयन् राजा च अत्यन्तोपकारित्वादकुत्सनीयौ । मभा.

(२) यत एवम्— तस्मादिति । तस्माद्धेतोः राजाचार्यौ मान्यावनिन्द्याविति । यद्यपि नियमनकाले हितैषितया प्रमुखपुरुषौ भवतस्तथापि तयोर्निन्दा न कार्या (!)। गौमि.

## महाभारतम्

अराजकत्वजन्यधर्मातिक्रमदोषनिवारणार्थं लोकराष्ट्रधारणार्थं च राजोत्पत्तिः

**[3]अराजके जनपदे दोषा जायन्ति वै सदा ।**
**उद्वृत्तं सततं लोकं राजा दण्डेन शास्ति वै ॥**

दोषाः दस्युपीडादयः । जायन्ति उद्भवन्ति । नीटी.

---

* गौमि. मभावत् ।

† राप्र. गौमिगतम् ।

(१) गौध. ८।३ ; मभा. ; गौमि. ; बौवि. १।१८।३ (प्रसूतिरक्षणम्) एतावदेव.

(२) गौध. ११।७ ; राक. ७ ; मभा. ११।७ : १३।२७ (अन्ये ब्राह्मणेभ्यः०) ; गौमि. ; राप्र. १७.

(३) गौध. ११।८ ; राक. ७ ; मभा. ; गौमि. ; राप्र. १७.

* राप्र. गौमिगतम् ।

† व्याख्यानानि 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे ( पृ. ५३५–५३७ ) द्रष्टव्यानि ।

(१) गौध. ११।३१–३३. शेषः स्थलादिनिर्देशः 'राजनीतेः सामान्यसिद्धान्ताः०' इति प्रकरणे ( पृ. ५३५–५३७ ) द्रष्टव्यः .

(२) गौध. ११।३४ ; विश्व. १।३५० ; मभा. ; गौमि. ११।३२.

(३) भाशु. १।४१।२७–३१.

दण्डात्प्रतिभयं भूयः शान्तिरुत्पद्यते तदा ।
नोद्विग्नश्चरते धर्मं नोद्विग्नश्चरते क्रियाम् ॥
राज्ञा प्रतिष्ठितो धर्मो धर्मात्स्वर्गः प्रतिष्ठितः ।
राज्ञो यज्ञक्रियाः सर्वा यज्ञाद्देवाः प्रतिष्ठिताः ॥
दैवाद्वृष्टिः प्रवर्तेत वृष्टेरोषधयः स्मृताः ।
ओषधिभ्यो मनुष्याणां धारयन् सततं हितम् ॥

धारयन् कुर्वन् मनुष्याणां हितम् । नीटी.

मनुष्याणां च यो धाता राजा राज्यकरः पुनः ।
दशश्रोत्रियसमो राजा इत्येवं मनुरब्रवीत् ॥

धाता पोषकः । श्रोत्रियः वेदाध्यायी । अक्षराधिक्यमार्षम् । नीटी.

सत्यवत्युवाच-

[1]यथा सद्यः प्रपद्येत देवी गर्भं तथा कुरु ।
अराजकेषु राष्ट्रेषु नास्ति वृष्टिर्न देवता ॥
[2]कथमराजकं राष्ट्रं शक्यं धारयितुं प्रभो ।
तस्माद्गर्भं समाधत्स्व भीष्मस्तं वर्धयिष्यति ॥
[3]राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ॥

ब्रह्मक्षत्रे प्रजानां शत्रुनाशके, ब्राह्मणेभ्योऽपि क्षत्रं वरीयः अधर्मनिवारणबलयोगात्

[4]ब्रह्म क्षत्रेण सहितं क्षत्रं च ब्रह्मणा सह ।
संयुक्तौ दहतः शत्रून् वनानीवाग्निमारुतौ ॥
[5]राजा वै प्रथमो धर्मः प्रजानां पतिरेव च ।
स एव शक्रः शुक्रश्च स धाता स बृहस्पतिः ॥

(१) भा. १।९९।४० ; भामु. १।१०५।४३–४४ ( सद्यो यथा प्रपद्येते देव्यौ गर्भं तथा कुरु ॥ अराजकेषु राष्ट्रेषु प्रजाऽनाथा विनश्यति । नश्यन्ति च क्रियाः सर्वा नास्ति वृष्टिर्न देवता ॥ ).

(२) भा. १।९९।४१ ; भामु. १।१०५।४५ कथमरा ( कथं चारा ) ष्मस्तं व ( ष्मः संव ).

(३) भामु. २।३८।२७ ; राप्र. २९.

(४) भा. ३।१८३।२२ पू. ; भामु. ३।१८५।२५.

(५) भा. ३।१८३।२२ ; भामु. ३।१८५।२६ प्रथमो ( प्रथितो ) धाता स ( धाता च ).

प्रथितः प्रथां गतः । धर्मः धर्मस्थापकः । शक्रः रक्षिता । शुक्रः नीतिवित् । धाता अत एव जनकः । बृहस्पतिः हितोपदेष्टा । नीटी.

[1]प्रजापतिर्विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥
पुरायोनिर्युधाजिच्च अभिया मुदितो भवः ।
स्वर्णेता सहजिद्बभ्रुरिति राजाऽभिधीयते ॥

पुरायोनिः धर्मप्रवर्तकत्वेन प्रथमं कारणम् । युधाजित् संग्रामे जयकर्तृत्वेन उपद्रवनाशकः । अभियाः अभितो याति यामिकवत् रक्षणार्थं इति अभियाः । मुदितो भवः ईश्वरः । स्वर्णेता स्वर्गं प्रति गमयिता । सहजित् सद्यो जयशीलः । बभ्रुः विष्णुः । ' बभ्रुर्ना नकुले विष्णौ विपुले पिङ्गले त्रिषु ' इति बलशर्मा । नीटी.

[2]सत्यमन्युर्युधाजीवः सत्यधर्मप्रवर्तकः ।
अधर्मादृषयो भीता बलं क्षत्रे समादधन् ॥

अधर्मादिति । सर्वं ब्राह्मं बलं क्षत्रे अस्तीत्यर्थः । नीटी.

[3]आदित्यो दिवि देवेषु तमो नुदति तेजसा ।
तथैव नृपतिर्भूमावधर्मं नुदते भृशम् ॥
[4]अतो राज्ञः प्रधानत्वं शास्त्रप्रामाण्यदर्शनात् ।
उत्तरः सिध्यते पक्षो येन राजेति भाषितम् ॥
[5]भृतं राष्ट्रमराजकम् ॥

(१) भा. ३।१८३।२३–२४ ; भामु. ३।१८५।२७–२८.

(२) भा. ३।१८३।२५ ; भामु. ३।१८५।२९ मन्युर्युधाजीवः ( योनिः पुराविच्च ).

(३) भा. ३।१८३।२६ ; भामु. ३।१८५।३० धर्मं ( धर्मान् ).

(४) भा. ३।१८३।२७ ; भामु. ३।१८५।३१ अतो ( ततो ).

(५) भा. ३।२९७।५९ ; भामु. ३।३१३।८४.

स्वयंभुवा प्रजापालनार्थं क्षत्रियः सृष्टः

[1]क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
येषां च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयंभुवा ॥

[2]अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयंभुवा ।
उरस्तः क्षत्रियः सृष्टो बाहुवीर्योपजीविता ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ॥

धनभार्यारक्षको राजा

[3]राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥

प्रथमं श्रेष्ठम् । असति अशुभे ।　नीटी.

अन्यमानवसमान एव राजा एकः कृत्स्नपृथ्वीशासनक्षमः कथमिति प्रश्नः

वैशम्पायन उवाच–

[4]ततः काल्यं समुत्थाय कृतपौर्वाह्णिकक्रियाः ।
ययुस्ते नगराकारै रथैः पाण्डवयादवाः ॥

'ततः कल्यम्' इत्यध्यायो दण्डनीतिशास्त्रस्य राज्ञश्च उत्पत्तिं वक्तुं प्रवर्तते । कल्यं प्रातः ।　नीटी.

[5]प्रपद्य च कुरुक्षेत्रं भीष्ममासाद्य चानघम् ।
सुखां च रजनीं पृष्ट्वा गाङ्गेयं रथिनां वरम् ॥

[6]व्यासादीनभिवाद्यर्षीन् सर्वैस्तैश्चाभिनन्दिताः ।
निषेदुरभितो भीष्मं परिवार्य समन्ततः ॥

(१) भामु. ५।६३।१२.

(२) भा. ५।१३२०।७ ; भामु. ५।१३२।७–८ द्वितीयार्धे ( बाहुभ्यां क्षत्रियाः सृष्टा बाहुवीर्योपजीविनः । ).

(३) भा. १२।५७।४१ : १।१४८।१२ पू. ; भामु. १२।५७।४१ : १।१६०।१२ पू.

(४) भा. १२।५९।१ ; भामु. १२।५९।१ काल्यं ( कल्यं ) पौर्वा ( पूर्वा ).

(५) भा. १२।५९।२ ; भामु. १२।५९।२ प्रपद्य च ( प्रतिपद्य ) चानघम् ( चानघ ).

(६) भा. १२।५९।३ ; भामु.

[1]ततो राजा महातेजा धर्मराजो युधिष्ठिरः ।
अब्रवीत्प्राञ्जलिर्भीष्मं प्रतिपूज्याभिवाद्य च ॥

[2]य एष राजा राजेति शब्दश्चरति भारत ।
कथमेष समुत्पन्नस्तन्मे ब्रूहि पितामह ॥

मानुषत्वे समानेऽपि किंनिमित्तेयं एकस्मिन्निग्रहानुग्रहशक्तिरिति पृच्छति– य इत्यादिना ।　नीटी.

[3]तुल्यपाणिशिरोग्रीवस्तुल्यबुद्धीन्द्रियात्मकः ।
तुल्यदुःखसुखात्मा च तुल्यपृष्ठभुजोदरः ॥

[4]तुल्यशुक्रास्थिमज्जश्च तुल्यमांसासृगेव च ।
निःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ॥

[5]समानजन्ममरणः समः सर्वगुणैर्नृणाम् ।
विशिष्टबुद्धीञ्शूरांश्च कथमेकोऽधितिष्ठति ॥

[6]कथमेको महीं कृत्स्नां वीरशूरार्यसंकुलाम् ।
रक्षत्यपि च लोकोऽस्य प्रसादमभिवाञ्छति ॥

[7]एकस्य च प्रसादेन कृत्स्नो लोकः प्रसीदति ।
व्याकुलेनाऽऽकुलः सर्वो भवतीति विनिश्चयः ॥

(१) भा. १२।५९।४ ; भामु. १२।५९।४ पूज्याभिवाद्य च ( पूज्य यथाविधि ).

(२) भा. १२।५९।५ ; भामु. १२।५९।५ 'युधिष्ठिर उवाच' इत्यधिकम्, राजा राजेति ( राजन् राजेति ) पितामह ( परंतप ).

(३) भा. १२।५९।६ ; भामु. १२।५९।६ शिरो ( भुज ) भुजोदरः ( मुखोदरः ).

(४) भा. १२।५९।७ ; भामु. १२।५९।७ मज्जश्च ( मज्जा च ).

(५) भा. १२।५९।८ ; भामु. १२।५९।८ सर्वगु ( सर्वैर्गु ).

(६) भा. १२।५९।९ ; भामु. १२।५९।९ वीरशूरार्य ( शूरवीरार्य ) लोकोऽस्य ( लोकस्य ).

(७) भा. १२।५९।१० ; भामु. १२।५९।१० च ( तु ) लेनाऽऽकुलः ( ले चाऽऽकुलः ).

[१]एतदिच्छाम्यहं सर्वं तत्त्वेन भरतर्षभ ।
श्रोतुं तन्मे यथातत्त्वं प्रब्रूहि वदतां वर ॥
[२]नैतत्कारणमल्पं हि भविष्यति विशां पते ।
यदेकस्मिञ्जगत्सर्वं देववद्याति संनतिम् ॥

प्रथमो राजा दण्डनीतिव्यपाश्रयो महर्षिभिर्निर्मितो वैन्यः पृथुः

[३]अथ देवाः समागम्य विष्णुमूचुः प्रजापतिम् ।
एको योऽर्हति मर्त्येभ्यः श्रैष्ठ्यं तं वै समादिश ॥

एवं शास्त्रोत्पत्तिमुक्त्वा नृपोत्पत्तिमाह– अथेत्यादिना । नीटी.

[४]ततः संचिन्त्य भगवान् देवो नारायणः प्रभुः ।
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम् ॥
[५]विरजास्तु महाभाग विभुत्वं भुवि नैच्छत ।
न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव ॥
[६]कीर्तिमांस्तस्य पुत्रोऽभूत्सोऽपि पञ्चातिगोऽभवत् ।
कर्दमस्तस्य च सुतः सोऽप्यतप्यन्महत्तपः ॥

पञ्चातिगः विषयातिगः मुक्तः । नीटी.

[७]प्रजापतेः कर्दमस्य अनङ्गो नाम वै सुतः ।
प्रजानां रक्षिता साधुर्दण्डनीतिविशारदः ॥

अनङ्ग इत्यङ्गस्यैव नामान्तरम् । नीटी.

[१]अनङ्गपुत्रोऽतिबलो नीतिमानधिगम्य वै ।
अभिपेदे महीराज्यमथेन्द्रियवशोऽभवत् ॥
[२]मृत्योस्तु दुहिता राजन् सुनीथा नाम मानसी ।
प्रख्याता त्रिषु लोकेषु या सा वेनमजीजनत् ॥
[३]तं प्रजासु विधर्माणं रागद्वेषवशानुगम् ।
मन्त्रपूतैः कुशैर्जघ्नुर्ऋषयो ब्रह्मवादिनः ॥
[४]ममन्थुर्दक्षिणं चोरुमृषयस्तस्य मन्त्रतः ।
ततोऽस्य विकृतो जज्ञे ह्रस्वाङ्गः पुरुषो भुवि ॥
[५]दग्धस्थाणुप्रतीकाशो रक्ताक्षः कृष्णमूर्धजः ।
निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः ॥
[६]तस्मान्निषादाः संभूताः क्रूराः शैलवनाश्रयाः ।
ये चान्ये विन्ध्यनिलया म्लेच्छाः शतसहस्रशः ॥
भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः ।
ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः ॥
कवची बद्धनिस्त्रिंशः सशरः सशरासनः ।
वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः ॥
तं दण्डनीतिः सकला श्रिता राजन्नरोत्तमम् ॥

धर्मेण प्रजापालनस्य ब्राह्मणपालनस्य च प्रतिज्ञा वैन्येन कृता

[७]ततः स प्राञ्जलिर्वैन्यो महर्षींस्तानुवाच ह ॥

---

(१) भा. १२।५९।११ ; भामु. १२।५९।११ सर्वं (श्रोतुं) श्रोतुं (कृत्स्नं).

(२) भा. १२।५९।१२ ; भामु.

(३) भा. १२।५९।९३ ; भामु. १२।५९।८७ तं वै (वै तं).

(४) भा. १२।५९।९४ ; भामु. १२।५९।८८.

(५) भा. १२।५९।९५ ; भामु. १२।५९।८९ भाग विभुत्वं (भागः प्रभुत्वं).

(६) भा. १२।५९।९६ ; भामु. १२।५९।९० च (तु).

(७) भा. १२।५९।९७ ; भामु. १२।५९।९१ अनङ्गो (त्वनङ्गो) प्रजानां रक्षिता (प्रजा रक्षयिता).

(१) भा. १२।५९।९८ ; भामु. १२।५९।९२ नधिगम्य (नाभिगम्य) अभिपेदे महीराज्य (प्रतिपेदे महाराज्य).

(२) भा. १२।५९।९९ ; भामु. १२।५९।९३ या सा (याऽसौ).

(३) भा. १२।५९।१०० ; भामु. १२।५९।९४ पूतैः (भूतैः).

(४) भा. १२।५९।१०१ ; भामु. १२।५९।९५.

(५) भा. १२।५९।१०२ ; भामु. १२।५९।९६ स्थाणु (स्थूणा).

(६) भा. १२।५९।१०३–१०६ ; भामु. १२।५९।९७–१००.

(७) भा. १२।५९।१०६ ; भामु. १२।५९।१०० ततः स (ततस्तु).

[1]सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धर्मार्थदर्शिनी ।
अनया किं मया कार्यं तन्मे तत्त्वेन शंसत ॥

यन्मां भवन्तो वक्ष्यन्ति कार्यमर्थसमन्वितम् ।
तदहं वै करिष्यामि नात्र कार्या विचारणा ॥

[2]तमूचुरथ देवास्ते ते चैव परमर्षयः ।
नियतो यत्र धर्मो वै तमशङ्कः समाचर ॥

[3]प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु ।
कामक्रोधौ च लोभं च मानं चोत्सृज्य दूरतः ॥

[4]यश्च धर्मात्प्रविचलेल्लोके कश्चन मानवः ।
निग्राह्यस्ते स बाहुभ्यां शश्वद्धर्ममवेक्षतः ॥

[5]प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा ।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ॥

[6]यश्चात्र धर्मनीत्युक्तो दण्डनीतिव्यपाश्रयः ।
तमशङ्कः करिष्यामि स्ववशो न कदाचन ॥

स्ववशः स्वानि इन्द्रियाणि तद्वशः न कदाचन भविष्यामीति शेषः । खेति स्वच्छः पाठः । नीटी.

[7]अदण्ड्या मे द्विजाश्चेति प्रतिजानीष्व चाभिभो ।
लोकं च संकरात्कृत्स्नात्त्राताऽस्मीति परंतप ॥

(१) भा. १२।५९।१०७–१०८; भामु. १२।५९। १०१–१०२.

(२) भा. १२।५९।१०९; भामु. १२।५९।१०३ चुरथ (चुस्तत्र).

(३) भा. १२।५९।११०; भामु. १२।५९।१०४ कामक्रोधौ (कामं क्रोधं).

(४) भा. १२।५९।१११; भामु. १२।५९।१०५ स बाहु (स्वबाहु) क्षतः (क्षता).

(५) भा. १२।५९।११२; भामु. १२।५९।१०६.

(६) भा. १२।५९।११३; भामु. १२।५९।१०७ धर्मनीत्युक्तो (धर्मो नित्योक्तो).

(७) भा. १२।५९।११४; भामु. १२।५९।१०८ जानीष्व चाभिभो (जानीहि हे विभो) त्कृत्स्नात् (त्कृत्स्नं).

[1]वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान् ।
ब्राह्मणा मे सहायाश्चेदेवमस्तु सुरर्षभाः ॥

[2]एवमस्त्विति वैन्यस्तु तैरुक्तो ब्रह्मवादिभिः ।
पुरोधाश्चाभवत्तस्य शुक्रो ब्रह्ममयो निधिः ॥

[3]मन्त्रिणो वालखिल्यास्तु सारस्वत्यो गणो ह्यभूत् ।
महर्षिर्भगवान् गर्गस्तस्य सांवत्सरोऽभवत् ॥

सांवत्सरः ज्यौतिषिकः । नीटी.

[4]आत्मनाऽष्टम इत्येव श्रुतिरेषा परा नृषु ।
उत्पन्नौ बन्दिनौ चास्य तत्पूर्वौ सूतमागधौ ॥

आत्मनां स्वशरीरेण सहाष्टमः पृथुर्विष्णोः सकाशादित्यर्थः । तथा हि– विष्णुः प्रथमः, विरजा द्वितीयः, कीर्तिमांस्तृतीयः, कर्दमश्चतुर्थः, अनङ्गः पञ्चमः, अतिबलः षष्ठः, वेनः सप्तमः, पृथुरष्टम इति । नीटी.

[5]तयोः प्रीतो ददौ राजा पृथुर्वैन्यः प्रतापवान् ।
अनूपदेशं सूताय मगधं मागधाय च ॥

[6]समतां वसुधायाश्च स सम्यगुपपादयत् ।
वैषम्यं हि परं भूमेरासीदिति ह नः श्रुतम् ॥

[7]मन्वन्तरेषु सर्वेषु विषमा जायते मही ।
उज्जहार ततो वैन्यः शिलाजालान् समन्ततः ॥
धनुष्कोट्या महाराज तेन शैला विवर्धिताः ॥

(१) भा. १२।५९।११५; भामु. १२।५९।१०९ उत्तरार्धे (ब्राह्मणा मे महाभागा नमस्याः पुरुषर्षभाः ॥).

(२) भा. १२।५९।११६; भामु. १२।५९।११०.

(३) भा. १२।५९।११७; भामु. १२।५९।१११ खिल्यास्तु (खिल्याश्च) गणो ह्यभूत् (गणस्तथा).

(४) भा. १२।५९।११८; भामु. १२।५९।११२.

(५) भामु. १२।५९।११३.

(६) भा. १२।५९।११९; भामु. १२।५९।११४ गुपपाद (गुदपाद) ह नः (च नः).

(७) भामु. १२।५९।११५–११६.

विष्ण्वादिदेवैः कृतः पृथुवैन्यस्य प्रजापालत्वे अभिषेकः

[1]स विष्णुना च देवेन शक्रेण विबुधैः सह ।
ऋषिभिश्च प्रजापाल्ये ब्रह्मणा चाभिषेचितः ॥

[2]तं साक्षात्पृथिवी भेजे रत्नान्यादाय पाण्डव ।
सागरः सरितां भर्ता हिमवांश्चाचलोत्तमः ॥

[3]शक्रश्च धनमक्षय्यं प्रादात्तस्य युधिष्ठिर ।
रुक्मं चापि महामेरुः स्वयं कनकपर्वतः ॥

[4]यक्षराक्षसभर्ता च भगवान्नरवाहनः ।
धर्मे चार्थे च कामे च समर्थं प्रददौ धनम् ॥

हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा ।
प्रादुर्बभूवुर्वैन्यस्य चिन्तनादेव पाण्डव ।
न जरा न च दुर्भिक्षं नाऽऽधयो व्याधयस्तथा ॥

सरीसृपेभ्यः स्तेनेभ्यो न चान्योन्यात्कदाचन ।
भयमुत्पद्यते तत्र तस्य राज्ञोऽभिरक्षणात् ॥

[5]आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥

[6]तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च ।
यक्षराक्षसनागैश्चापीप्सितं यस्य यस्य यत् ॥

तेन धर्मोत्तरश्चायं कृतो लोको महात्मना ।
रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते ॥

[1]ब्राह्मणानां क्षतत्राणात्ततः क्षत्रिय उच्यते ।
प्रथिता धनतश्चेयं पृथिवी साधुभिः स्मृता ॥

'प्रथिताऽवनता च' इति विग्रहे वर्णलोपविकाराभ्यां पृथिवी । नीटी.

विष्णुकृतस्थापनात् राज्ञि विष्णोरावेशाच्च जगत्
सर्वं राजानं नमति वशे च तिष्ठति च
इति प्रथमकृतप्रश्नोत्तरम्

[2]स्थापनं चाकरोद्विष्णुः स्वयमेव सनातनः ।
नातिवर्तिष्यते कश्चिद्राजंस्त्वामिति पार्थिव ॥

स्थापनं मर्यादाम् । नीटी.

[3]तपसा भगवान् विष्णुराविवेश च भूमिपम् ।
देववन्नरदेवानां नमते यज्जगन्नृप ॥

[4]दण्डनीत्या च सततं रक्षितं तं नरेश्वर ।
नाधर्षयत्ततः कश्चिच्चारनित्याच्च दर्शनात् ॥

रक्षितव्यं राज्यम्, तच्चान्यो न आधर्षयेत् । तत्र हेतुः– चाराणां निष्पन्दः संचारः, तद्द्वारा यद्दर्शनं लोकवृत्तान्तस्य, दृष्ट्वा च पालनम्, तत इत्यर्थः । नीटी.

[5]आत्मना करणैश्चैव समस्येह महीक्षितः ।
को हेतुर्यद्वशे तिष्ठेल्लोको दैवादृते गुणात् ॥

आत्मना चित्तेन कारणैः क्रियाभिश्च समस्य महीक्षितः कर्मेति संबन्धः । 'विष्णुर्भूमिपमाविवेश' इत्युक्तम्, तत्रोपपत्तिः– क इत्यर्धेन । नीटी.

---

(१) भा. १२।५९।१२० ; भामु. १२।५९।११६–११७ पाल्ये ब्रह्मणा चा ( पालैर्ब्राह्मणैश्चा ).

(२) भा. १२।५९।१२१ ; भामु. १२।५९।११७–११८.

(३) भा. १२।५९।१२२ ; भामु. १२।५९।११८–११९ तस्य ( तस्मै ).

(४) भा. १२।५९।१२३–१२५ ; भामु. १२।५९।११९–१२२.

(५) भामु. १२।५९।१२३.

(६) भा. १२।५९।१२६–१२७ ; भामु. १२।५९।१२४–१२५.

(१) भा. १२।५९।१२८ ; भामु. १२।५९।१२६ धनत ( धर्मत ) साधुभिः ( बहुभिः ).

(२) भा. १२।५९।१२९ ; भामु. १२।५९।१२७ पार्थिव ( भारत ).

(३) भा. १२।५९।१३० ; भामु. १२।५९।१२८ यज्जगन्नृप ( यं जगन्नृपम् ).

(४) भा. १२।५९।१३१ ; भामु. १२।५९।१२९ रक्षितं तं ( रक्षितव्यं ) उत्तरार्धे ( नाधर्षयेत्तथा कश्चिच्चारनिष्पन्ददर्शनात् ॥ ).

(५) भा. १२।५९।१३२ ; भामु. १२।५९।१३०–१३१ करणै ( कारणै ) 'आत्मना करणैः' इत्यस्मात् प्राक् 'शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते' इत्यधिकम्.

[1]विष्णोर्ललाटात्कमलं सौवर्णमभवत्तदा ।
श्रीः संभूता यतो देवी पत्नी धर्मस्य धीमतः ॥

पत्नी पालयित्री । नीटी.

श्रियः सकाशादर्थश्च जातो धर्मेण पाण्डव ।
अथ धर्मस्तथैवार्थः श्रीश्च राज्ये प्रतिष्ठिता ॥

[2]सुकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीम् ।
पार्थिवो जायते तात दण्डनीतिवशानुगः ॥

[3]महत्त्वेन च संयुक्तो वैष्णवेन नरो भुवि ।
बुद्ध्या भवति संयुक्तो माहात्म्यं चाधिगच्छति ॥

[4]स्थापनामथ देवानां न कश्चिदतिवर्तते ।
तिष्ठत्येकस्य च वशे तं चेदनुविधीयते ॥

स्थापितं अभिषिक्तम् । एकस्य राज्ञो वशे इदं तिष्ठति, तं चेदं लक्षीकृत्य न विधीयते इदं जगद्विधानसामर्थ्यं न भवति । नीटी.

[5]शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते ।
तुल्यस्यैकस्य यस्यायं लोको वचसि तिष्ठति ॥

तुल्यस्य हस्ताद्यवयवैः समस्य । नीटी.

[6]यो ह्यस्य मुखमद्राक्षीत्सोम्य सोऽस्य वशानुगः ।
सुभगं चार्थवन्तं च रूपवन्तं च पश्यति ॥

(१) भा. १२।५९।१३३–१३४ ; भामु. १२।५९।१३१–१३३.

(२) भा. १२।५९।१३५ ; भामु. १२।५९।१३३–१३४ वशानुगः ( विशारदः ).

(३) भा. १२।५९।१३६ ; भामु. १२।५९।१३४–१३५.

(४) भा. १२।५९।१३७ ; भामु. १२।५९।१३५ स्थापनामथ देवानां न ( स्थापितं च ततो देवैर्न ) चेदनुवि ( चेदं न वि ).

(५) भा. १२।५९।१३८ ; भामु. १२।५९।१३६ तिष्ठति ( तिष्ठते ).

(६) भा. १२।५९।१३९ ; भामु. १२।५९।१३७ यो ह्यस्य ( योऽस्य वै ) त्सोम्य ( त्सौम्यं ).

अस्य राज्ञः सौम्यं मुखमद्राक्षीत् सुभगादिरूपं चैनं पश्यति, अस्य द्रष्टुः स राजा वशानुगः आज्ञाकारीति ज्ञेयम् (?) । नीटी.

[1]ततो जगति राजेन्द्र सततं शब्दितं बुधैः ।
देवाश्च नरदेवाश्च तुल्या इति विशां पते ॥
एतत्ते सर्वमाख्यातं महत्त्वं प्रति राजसु ।
कार्त्स्न्येन भरतश्रेष्ठ किमन्यदिह वर्तताम् ॥

धर्मकामो मनुष्याणामधिपतिः देव एव

[2]परलोकगुरुं चैव राजानं योऽवमन्यते ।
न तस्य दत्तं न हुतं न श्राद्धं फलति क्वचित् ॥
[3]मानुषाणामधिपतिं देवभूतं सनातनम् ।
देवाश्च बहु मन्यन्ते धर्मकामं नरेश्वरम् ॥

धार्मिकराजस्थापना राष्ट्रस्य कर्तव्यम् , मात्स्यन्यायेन परस्परनाशभयात् मनुः प्रजया राजेति वृतः, राजप्रजयोः समयबन्धः करप्रदाने प्रजारक्षायां च

युधिष्ठिर उवाच–

[4]चातुराश्रम्य उक्तोऽत्र चातुर्वर्ण्यस्तथैव च ।
राष्ट्रस्य यत्कृत्यतमं तन्मे ब्रूहि पितामह ॥

भीष्म उवाच–

[5]राष्ट्रस्यैतत्कृत्यतमं राज्ञ एवाभिषेचनम् ।
अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्ति च ॥

राष्ट्रस्य तात्स्थ्यात् राष्ट्रवासिनो जनस्य कृत्यतमं मुख्यं कार्यम् । अनिन्द्रं अराजकं अत एवाबलम् । नीटी.

(१) भा. १२।५९।१४०–१४१ ; भामु. १२।५९।१४४–१४५ वर्तताम् ( वर्तते ).

(२) भा. १२।६५।२८ ; भामु. १२।६५।२८ परलोक ( सर्वलोक ) फलति ( फलते ).

(३) भा. १२।६५।२९ ; भामु. १२।६५।२९ देवाश्च बहु ( देवाऽपि नाव ).

(४) भा. १२।६७।१ ; भामु. १२।६७।१ म्य उक्तोऽत्र ( म्यमुक्तं ते ) र्ण्यस्त ( र्ण्यं त ) तन्मे ( ततो ).

(५) भा. १२।६७।२ ; भामु. १२।६७।२ भवन्ति च ( भवन्त्युत ).

[1]अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते ।
परस्परं च खादन्ति सर्वथा धिगराजकम् ॥

न व्यवतिष्ठते अन्योन्यं लोका धर्मव्यवस्थापनं न कुर्वन्तीत्यर्थः । नीटी.

[2]इन्द्रमेनं प्रवृणुते यद्राजानमिति श्रुतिः ।
यथैवेन्द्रस्तथा राजा संपूज्यो भूतिमिच्छता ॥
[3]नाराजकेषु राष्ट्रेषु वस्तव्यमिति वैदिकम् ।
नाराजकेषु राष्ट्रेषु हव्यमग्निर्वहत्यपि ॥
[4]अथ चेदभिवर्तेत राज्यार्थी बलवत्तरः ।
अराजकानि राष्ट्राणि हतराजानि वा पुनः ॥
[5]प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम् ।
न हि पापात्पापतरमस्ति किंचिदराजकात् ॥

अथेति । राज्यार्थी अन्योऽपि कश्चिदायाति तदा संपूज्यः राष्ट्रस्थैरित्युभयोः संबन्धः । अपूजने दोषमाह- न हीति । नीटी.

[6]स चेत्समनुपश्येत समग्रं कुशलं भवेत् ।
बलवान्हि प्रकुपितः कुर्यान्निःशेषतामपि ॥

तत्प्रसादप्रकोपायत्ते कुशलाकुशले राष्ट्रस्येत्यर्थः । नीटी.

[7]भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
सुदुहा या तु भवति नैव तां क्लेशयन्त्युत ॥

(१) भा. १२।६७।३ ; भामु. ; राप्र. २४.
(२) भा. १२।६७।४ ; भामु. १२।६७।४ मेनं (मेव) ; राप्र. २४ मेनं (मेव).
(३) भा. १२।६७।५ ; भामु. १२।६७।५ वैदिकम् (रोचये) हत्यपि (हत्युत) ; राप्र. २४ भामुवत्.
(४) भा. १२।६७।६ ; भामु. १२।६७।६ राजानि (वीर्याणि) ; राप्र. २४ राज्यार्थी (राज्यार्थ) शेषं भामुवत्.
(५) भा. १२।६७।७ ; भामु. १२।६७।७ त्पापतर (त्परतर) ; राप्र. २५ उत्त.
(६) भा. १२।६७।८ ; भामु. ; राप्र. २५ पू.
(७) भा. १२।६७।९ ; भामु. १२।६७।९ उत्तरार्धे (अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ॥).

[1]यदतप्तं प्रणमति न तत्संतापयन्त्युत ।
यच्च स्वयं नतं दारु न तत्संनामयन्त्यपि ॥
[2]एतयोपमया धीरः संनमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥
[3]तस्माद्राजैव कर्तव्यः सततं भूतिमिच्छता ।
न धनार्थो न दारार्थस्तेषां येषामराजकम् ॥

धनादेरर्थः उपभोगः । नीटी.

प्रीयते हि हरन्पापः परवित्तमराजके ।
यदाऽस्य उद्धरन्त्यन्ये तदा राजानमिच्छति ॥
[4]पापा अपि तदा क्षेमं न लभन्ते कदाचन ।
एकस्य हि द्वौ हरतो द्वयोश्च बहवोऽपरे ॥
[5]अदासः क्रियते दासो ह्रियन्ते च बलात्स्त्रियः ।
एतस्मात्कारणाद्देवाः प्रजापालान्प्रचक्रिरे ॥
[6]राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः ।
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥
[7]अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम् ।
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ॥
[8]ताः समेत्य ततश्चक्रुः समयानिति नः श्रुतम् ।
वाक्क्रूरो दण्डपरुषो यश्च स्यात्पारदारिकः ।
यश्च नस्स्वमथाऽऽदद्यात्त्याज्या नस्तादृशा इति ॥

(१) भा. १२।६७।१० ; भामु. १२।६७।१० पूर्वार्धे (यदतप्तं प्रणमते नैतत्संतापमर्हति ।) यच्च स्वयं नतं (यस्स्वयं नमते).
(२) भा. १२।६७।११ ; भामु. १२।६७।११ धीरः (वीर).
(३) भा. १२।६७।१२-१३ ; भामु.
(४) भा. १२।६७।१४ ; भामु. १२।६७।१४ अपि (ह्यपि).
(५) भा. १२।६७।१५ ; भामु.
(६) भा. १२।६७।१६ ; भामु. १२।६७।१६ शूले (जले) पक्ष्यन्दुर्बलान् (भक्ष्यन्दुर्बलं).
(७) भा. १२।६७।१७ ; भामु.
(८) भा. १२।६७।१८ ; भामु. १२।६७।१८-१९ ताः समेत्य त (समेत्य तास्त) वाक्क्रूरो (वाक्शूरो) दारिकः (जारिकः) यश्च नस्व (यः परस्व).

वाक्शूरः निष्ठुरभाषी । दण्डपरुषः उग्रदण्डः । पारजायिकः परस्त्रीगामी । नीटी.

[1]विश्वासनार्थं वर्णानां सर्वेषामविशेषतः ।
तास्तथा समयं कृत्वा समये नावतस्थिरे ॥

[2]सहितास्तास्तदा जग्मुरसुखार्ताः पितामहम् ।
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥

असुखार्ताः दुःखपीडिताः । असुखार्थाः इति पाठे सुखैरर्थैश्च हीनाः । दिश देहि । नीटी.

[3]यं पूजयेम संभूय यश्च नः परिपालयेत् ।
ताभ्यो मनुं व्यादिदेश मनुर्नाभिननन्द ताः ॥

ताः प्रजाः नाभिननन्द नाङ्गीचकार । नीटी.

मनुरुवाच–

[4]बिभेमि कर्मणः क्रूराद्राज्यं हि भृशदुष्करम् ।
विशेषतो मनुष्येषु मिथ्यावृत्तिषु नित्यदा ॥

भीष्म उवाच–

[5]तमब्रुवन्प्रजा मा भैः कर्मणैनो गमिष्यति ।
पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च ।
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम् ॥

अधिपञ्चाशत् पञ्चाशतमधिकृत्य पञ्चाशत्पशुलाभे एकं भागं तुभ्यं दास्याम इत्यर्थः । तथैव हिरण्यस्यापि । नीटी.

[6]कन्यां शुल्के चारुरूपां विवाहेषूद्यतासु च ॥

विवाहेषूद्यतासु कन्यासु शुल्के मौल्यप्रसङ्गे सति सुरूपां कन्यां तुभ्यं दास्याम इति पूर्वेणान्वयः । 'विवादेषु ततासु च' इति प्राचां पाठः । इयं मया क्रेया इयं मया क्रेयेति विवादविषयास्विति तदर्थः । 'विवादे द्यूततासु च' इति पाठे द्यूतता द्यूते पणीकृतत्वम् । नीटी.

[1]मुख्येन शस्त्रपत्रेण ये मनुष्याः प्रधानतः ।
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः ॥

मुखेन मुखतः प्रथममित्यर्थः । शस्त्रपत्रेण शस्त्रेण वाहनेन च प्रधानतः श्रेष्ठाः । प्रथमार्थे तसिः । नीटी.

[2]स त्वं जातबलो राजन्दुष्प्रधर्षः प्रतापवान् ।
सुखे धास्यसि नः सर्वान्कुबेर इव नैर्ऋतान् ॥

[3]यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं नो भविष्यति ॥

[4]तेन धर्मेण महता सुखलब्धेन भावितः ।
पाह्यस्मान्सर्वतो राजन्देवानिव शतक्रतुः ॥

[5]विजयायाऽऽशु निर्याहि प्रतपन्रश्मिमानिव ।
मानं विधम शत्रूणां धर्मो जयतु नः सदा ॥

मानं दर्पं विधम नाशय । नीटी.

[6]स निर्ययौ महातेजा बलेन महता वृतः ।
महाभिजनसंपन्नस्तेजसा प्रज्वलन्निव ॥

[7]तस्य तां महिमां दृष्ट्वा महेन्द्रस्येव देवताः ।
अपतत्रसिरे सर्वे स्वधर्मे च दधुर्मनः ॥

अपतत्रसिरे त्रासं प्राप्ताः । नीटी.

---

(१) भा. १२।६७।१९ ; भामु. १२।६७।१९ सनार्थं वर्णानां सर्वेषा ( सार्थं च सर्वेषां वर्णाना ).

(२) भा. १२।६७।२० ; भामु.

(३) भा. १२।६७।२१ ; भामु. १२।६७।२१ परि ( प्रति ) ताभ्यो ( ततो ).

(४) भा. १२।६७।२२ ; भामु. १२।६७।२२ क्रूरा ( पापा ) दुष्करम् ( दुस्तरम् ) वृत्तिषु ( वृत्तेषु ).

(५) भा. १२।६७।२३ ; भामु. १२।६७।२३–२४ कर्मणैनो ( कर्तॄनेनो ).

(६) भामु. १२।६७।२४.

(१) भा. १२।६७।२४ ; भामु. १२।६७।२५ मुख्येन ( मुखेन ).

(२) भा. १२।६७।२५ ; भामु. १२।६७।२६ राजन् (राजा).

(३) भा. १२।६७।२६ ; भामु. १२।६७।२७ नो ( वै ).

(४) भा. १२।६७।२७ ; भामु. १२।६७।२८ सुख ( सुखं ).

(५) भा. १२।६७।२८ ; भामु. १२।६७।२९ याऽऽशु ( य हि ) धर्मो जयतु नः सदा ( जयोऽस्तु तव सर्वदा ).

(६) भा. १२।६७।२९ ; भामु. १२।६७।३०.

(७) भा. १२।६७।३० ; भामु. १२।६७।३१ तां महिमां दृष्ट्वा ( दृष्ट्वा महत्त्वं ते ) दधु ( ददु ).

[1]ततो महीं परिययौ पर्जन्य इव वृष्टिमान् ।
शमयन्सर्वतः पापान्स्वकर्मसु च योजयन् ॥

एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ॥

[2]नमस्येयुश्च तं भक्त्या शिष्या इव गुरुं सदा ।
देवा इव सहस्राक्षं प्रजा राजानमन्तिके ॥

[3]सत्कृतं स्वजनेनेह परोऽपि बहु मन्यते ।
स्वजनेन त्ववज्ञातं परे परिभवन्त्युत ॥

[4]राज्ञः परैः परिभवः सर्वेषामसुखावहः ।
तस्माच्छत्रं च पत्रं च वासांस्याभरणानि च ॥

पत्रं वाहनम् । नीटी.

[5]भोजनान्यथ पानानि राज्ञे दद्युर्गृहाणि च ।
आसनानि च शय्याश्च सर्वोपकरणानि च ॥

[6]गुप्तात्मा स्याद्दुराधर्षः स्मितपूर्वाभिभाषिता ।
आभाषितश्च मधुरं प्रतिभाषेत मानवान् ॥

[7]कृतज्ञो दृढभक्तिः स्यात्संविभागी जितेन्द्रियः ।
ईक्षितः प्रतिवीक्षेत मृदु चर्जु च वल्गु च ॥

संविभागी विभज्य भोक्ता । वल्गु शोभनम् ।
नीटी.

राज्ञोऽभावे वृत्तिलोपात् धर्मलोपात् च प्रजाक्षयः,
राजमूलकं धनधर्मरक्षणादिद्वारा प्रजारक्षणम्

युधिष्ठिर उवाच–

[8]किमाहुर्दैवतं विप्रा राजानं भरतर्षभ ।
मनुष्याणामधिपतिं तन्मे ब्रूहि पितामह ॥

भीष्म उवाच–

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतिं वसुमना यथा पप्रच्छ भारत ॥

[1]राजा वसुमना नाम कौसल्यो धीमतां वरः ।
महर्षिं परिपप्रच्छ कृतप्रज्ञो बृहस्पतिम् ॥

[2]सर्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतेः ।
दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्वकम् ॥

वैनयिकं अभ्युत्थानाभिवादनादिकम् । दक्षिणा दक्षिणातः अनन्तरः समीपे भूत्वा प्रदक्षिणीकृत्येत्यर्थः ।
नीटी.

[3]विधिं पप्रच्छ राज्यस्य सर्वभूतहिते रतः ।
प्रजानां हितमन्विच्छन्धर्ममूलं विशां पते ॥

[4]केन भूतानि वर्धन्ते क्षयं गच्छन्ति केन च ।
कमर्चन्तो महाप्राज्ञ सुखमत्यन्तमाप्नुयुः ॥

[5]इति पृष्टो महाराज्ञा कौसल्येनामितौजसा ।
राजसत्कारमव्यग्रः शशंसास्मै बृहस्पतिः ॥

[6]राजमूलो महाराज धर्मो लोकस्य लक्ष्यते ।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥

[7]राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकम् ।
प्रसादयति धर्मेण प्रसाद्य च विराजते ॥

---

(१) भा. १२।६७।३१–३२ ; भामु. १२।६७।३२–३३.

(२) भा. १२।६७।३३ ; भामु. १२।६७।३४ स्येयुश्च (स्येरंश्च) सहस्राक्षं प्रजा ( च देवेन्द्रं तत्र ).

(३) भा. १२।६७।३४ ; भामु. १२।६७।३५.

(४) भा. १२।६७।३५ ; भामु. १२।६७।३६.

(५) भा. १२।६७।३६ ; भामु. १२।६७।३७.

(६) भा. १२।६७।३७ ; भामु. १२।६७।३८ गुप्तात्मा स्या ( गोप्ता तस्मा ) प्रति ( प्रत्या ).

(७) भा. १२।६७।३८ ; भामु. १२।६७।३९ चर्जु च वल्गु ( वल्गु च सुष्ठु ).

(८) भा. १२।६८।१–२ ; भामु.

(१) भा. १२।६८।३ ; भामु. १२।६८।३ परि ( किल) प्रज्ञो ( प्रज्ञं ).

(२) भा. १२।६८।४ ; भामु. १२।६८।४ बृहस्पतेः ( बृहस्पतिम् ).

(३) भा. १२।६८।५ ; भामु. १२।६८।५ भूत ( लोक ) हित ( सुख ) मूलं विशां पते ( शीलं बृहस्पतिम् ).

(४) भा. १२।६८।६ ; भामु. १२।६८।६ ‘ वसुमना उवाच’ इत्यधिकम्, च ( वा ) मत्यन्त ( मव्यय ).

(५) भा. १२।६८।७ ; भामु. १२।६८।७ इति ( एवं ) महाराज्ञा ( महाप्राज्ञः ) मव्यग्रः ( मव्यग्रं ).

(६) भा. १२।६८।८ ; भामु. १२।६८।८ ‘ बृहस्पतिरुवाच ’ इत्यधिकम्, महाराज ( महाप्राज्ञ ); पमा. ३९३ लक्ष्यते ( रक्ष्यते ) ; राप्र. २५ भामुवत् .

(७) भा. १२।६८।९ ; भामु. ; राप्र. २६ प्रसाद्य च वि ( प्रसादयति ).

(१) समुदीर्णे सम्यक्कृतोदीरणं समीचीनप्रकारेण स्वस्वदुःखाद्याख्यायकम्। समुत्सुकं दुःखवशेन देश-ग्रामादि परित्यक्तुमुत्कण्ठावन्तम्। राप्र. २६

(२) समुदीर्णे त्यक्तमर्यादम्। समुत्सुकं परदारा-द्यासक्तम्। प्रसादयति दण्डेन शुद्धं करोति। नीटी.

[१]यथा ह्यनुदये राजन्भूतानि शशिसूर्ययोः।
अन्धे तमसि मज्जेयुरपश्यन्तः परस्परम्॥
[२]यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः।
विहरेयुर्यथाकाममभिसृत्य पुनः पुनः॥

अनुदके ह्यल्पोदके। निराक्रन्दे हिंस्रभयरहिते। नीटी.

[३]विमथ्यातिक्रमेरंश्च विषह्यापि परस्परम्।
अभावमचिरेणैव गच्छेयुर्नात्र संशयः॥
एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः।
अन्धे तमसि मज्जेयुरगोपाः पशवो यथा॥
[४]हरेयुर्बलवन्तो हि दुर्बलानां परिग्रहान्।
हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत्॥

परिग्रहान् गृहादीन्। व्यायच्छमानान् स्वं स्वमर्थं आग्रहेण रक्षमाणान्। नीटी.

[५]यानं वस्त्रमलंकारान्रत्नानि विविधानि च।
हरेयुः सहसा पापा यदि राजा न पालयेत्॥
[६]ममेदमिति लोकेऽस्मिन्न भवेत्संपरिग्रहः।
विश्वलोपः प्रवर्तेत यदि राजा न पालयेत्॥

(१) भा. १२।६८।१० ; भामु. ; राप्र. २६.

(२) भा. १२।६८।११ ; भामु. १२।६८।११ ममभिसृत्य (मं विहिंसन्तः) ; राप्र. २६ भामुवत्.

(३) भा. १२।६८।१२-१३ ; भामु. ; राप्र. २६ विमथ्या (न मिथ्या).

(४) भा. १२।६८।१४ ; भामु. १२।६८।१४ वन्तो हि (वन्तोऽपि) ; राप्र. २६ भामुवत्.

(५) भा. १२।६८।१५ ; भामु. १२।६८।१६ ; पमा. ४१५ वस्त्रमलं (वस्त्राण्यलं); राप्र. २६.

(६) भा. १२।६८।१६ ; भामु. १२।६८।१५ पूर्वार्धानन्तरं 'न दारा न च पुत्रः स्यान्न धनं न परिग्रहः।' इदमर्धमधिकम्, विश्वलोपः (विष्वग्लोपः) ; राप्र. २६ विश्वलोपः (विष्वग्लोपः).

ममेदमिति न स्यात्, अपि तु बलवत इदमित्येव स्यात्। विष्वक् सर्वतः लोपः अर्थानां लुम्पनम्। नीटी.

[१]मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम्।
क्लिश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत्॥
[२]पतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु।
अधर्मः प्रगृहीतः स्याद्यदि राजा न पालयेत्॥
[३]वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत्।
ममत्वं च न विन्देयुर्यदि राजा न पालयेत्॥
[४]अन्तश्चाऽऽकाशमेव स्याल्लोकोऽयं दस्युसाद्भवेत्।
पतेच्च नरकं घोरं यदि राजा न पालयेत्॥

अन्ताः मृत्यवः। दस्युसात् चोराधीनः। नीटी.

[५]न योनिपोषो वर्तेत न कृषिर्न वणिक्पथः।
मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत्॥

(१) योनिदोषः योनिदोषकृताऽव्यवहार्यता दण्डादिश्च। राप्र. २७

(२) योनिदोषः व्यभिचारे विगानम्। नीटी.

[६]न यज्ञाः संप्रवर्तेरन्विधिवत्स्वाप्तदक्षिणाः।
न विवाहाः समाजा वा यदि राजा न पालयेत्॥

(१) भा. १२।६८।१७ ; भामु. १२।६८।१८ ; राप्र. २७.

(२) भा. १२।६८।१८ ; भामु. १२।६८।१७ ; पमा. ४१५ प्रथमपादः ; राप्र. २६.

(३) भा. १२।६८।१९ ; भामु. ; राप्र. २७.

(४) भा. १२।६८।२० ; भामु. १२।६८।२० अन्तश्चाऽऽकाशमेव स्याल्लो (अन्ताश्चाकाल एव स्युर्लो) पतेच्च न (पतेयुर्न) ; राप्र. २७ भामुवत्.

(५) भा. १२।६८।२१ ; भामु. १२।६८।२१ पोषो (दोषो) ; पमा. ४१५ प्रथमपादं विना ; राप्र. २७ भामुवत्.

(६) भा. १२।६८।२२ ; भामु. १२।६८।२२ वर्तेरन्वि (वर्तेयुर्वि) समाजा वा (समाजो वा) ; राप्र. २७ भामुवत्.

[1]न वृषाः संप्रवर्तेरन्न मथ्येरंश्च गर्गराः ।
घोषाः प्रणाशं गच्छेयुर्यदि राजा न पालयेत् ॥

(१) गद्गराः साहसिकाः । राप्र. २७

(२) न संप्रवर्तेरन् न रेतः सिञ्चेरन् । गर्गराः मन्थन्यः । 'गर्गरो मीनभेदेऽस्त्री मन्थन्याम्' इति मेदिनी । नीटी.

त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् ।
क्षणेन विनशेत्सर्वं यदि राजा न पालयेत् ॥
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् ॥
[2]ब्राह्मणाश्चतुरो वेदान्नाधीयेरंस्तपस्विनः ।
विद्यास्नातास्तपःस्नाता यदि राजा न पालयेत् ॥
[3]हस्तो हस्तं स मुष्णीयाद्भिद्येरन्सर्वसेतवः ।
भयार्तं विद्रवेत्सर्वं यदि राजा न पालयेत् ॥

(१) सर्वसेतवः ग्रामश्रेणीधर्ममर्यादाः । राप्र. २८

(२) हस्ताद्धस्तं हस्तस्थमपि चोरा हरेयुः । नीटी.

[4]न लभेद्धर्मसंश्लेषं हतविप्रहतो जनः ।
कर्ता स्वेच्छेन्द्रियो गच्छेद्यदि राजा न पालयेत् ॥

हतैः धर्महीनैर्विप्रैर्हतः अनुपदिष्टधर्मः । यद्वा, हतः किंचित्पीडितः, विप्रहतः विशेषेण प्रहतः प्रपीडितः । धर्मसंश्लेषं धर्मसंबन्धम् । राप्र. २७

[5]अनयाः संप्रवर्तेरन्भवेद्वै वर्णसंकरः ।
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् ॥

(१) भा. १२।६८।२३–२५ ; भामु. ; राप्र. २७ न्न मथ्येरंश्च गर्गराः ( न्नुन्मथ्येरंश्च गद्गराः ).

(२) भा. १२।६८।२६ ; भामु. १२।६८।२६ येरं ( यीरं ) तास्तपः ( ता व्रत ); राप्र. २७ भामुवत्.

(३) भा. १२।६८।२७ ; भामु. १२।६८।२८ हस्तो हस्तं स मुष्णीया ( हस्ताद्धस्तं परिमुषे ) ; राप्र. २८ स मुष्णीया ( परिमुषे ).

(४) भा. १२।६८।२८ ; भामु. १२।६८।२७ कर्ता स्वेच्छे ( हर्ता स्वस्थे ) ; राप्र. २७–२८ कर्ता स्वेच्छे ( हर्ता सुस्थे ).

(५) भा. १२।२८।२९–३० ; भामु. ; राप्र. २८.

अनयाः अनीतयः । अनायासमिति पाठे अक्लेशं यथा स्यात्तथा प्रवर्तेरन् परदारादिषु । नीटी.

विवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ॥

विवृत्य उद्घाट्य । नीटी.

[1]नाऽऽक्रुष्टं सहते कश्चित्कुतो हस्तस्य लङ्घनम् ।
यदि राजा मनुष्येषु त्राता भवति धार्मिकः ॥

हस्तलाघवं तत्साध्यं ताडनं आक्रुष्टं गालनं वा कुतो न सहते ? अपि तु अनायकत्वात्सहत एव । गां पृथ्वीम् । नीटी.

[2]स्त्रियश्चापुरुषा मार्गं सर्वालंकारभूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदा रक्षति भूमिपः ॥

(१) प्रजारक्षणे राज्ञः श्रेयोविशेष ऐहिक आमुष्मिकश्च शान्तिपर्वणि दर्शितः— स्त्रियश्चेत्यादिना । पमा. ४१४

(२) अपुरुषाः अरक्षिता अपि । नीटी.

[3]धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति चान्योन्यं यदा रक्षति भूमिपः ॥
[4]यजन्ते च त्रयो वर्णा महायज्ञैः पृथग्विधैः ।
युक्ताश्चाधीयते शास्त्रं यदा रक्षति भूमिपः ॥

(१) भा. १२।६८।३१ ; भामु. १२।६८।३१ हस्तस्य लङ्घनम् ( वा हस्तलाघवम् ) मनुष्येषु त्राता भवति ( न सम्यग्गां रक्षयत्यपि ) ; राप्र. २८ नाऽऽक्रुष्टं ( नाऽऽक्रोष्टुं ) हस्तस्य लङ्घनम् ( वा हस्तलाघवम् ) उत्तरार्धे ( यदि राजा न सम्यक्तान् रक्षयत्यतिधार्मिकः ॥ ).

(२) भा. १२।६८।३२ ; भामु. १२।६८।३२ यदा ( यदि ) ; पमा. ४१५ श्चापु ( श्च पु ) ; राप्र. २८ भामुवत्.

(३) भा. १२।६८।३३ ; भामु. ; पमा. ४१५ गृह्णन्ति ( युद्ध्यन्ति ) ; राप्र. २८ यदा ( यदि ).

(४) भा. १२।६८।३४ ; भामु. १२।६८।३४ त्रयो वर्णा महायज्ञैः ( महायज्ञैस्त्रयो वर्णाः ) शास्त्रं ( विद्यां ) ; पमा. ४१५ शास्त्रं ( वेदान् ) शेषं भामुवत् ; राप्र. २८ यदा ( यदि ) शेषं भामुवत् .

[1]वार्तामूलो ह्ययं लोकस्त्रय्या वै धार्यते सदा ।
तत्सर्वं वर्तते सम्यग्यदा रक्षति भूमिपः ॥

वार्ता जीविका, तन्मूलः । त्रय्या च वृष्ट्यादिहेतुतया त्रायते रक्ष्यते सर्वम् । त्रयी वार्तादिः ।　　　नीटी.

[2]यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः ।
महता बलयोगेन तदा लोकः प्रसीदति ॥

[3]यस्याभावे च भूतानामभावः स्यात्समन्ततः ।
भावे च भावो नित्यः स्यात्कस्तं न प्रतिपूजयेत् ॥

[4]तस्य यो वहते भारं सर्वलोकसुखावहम् ।
तिष्ठेत्प्रियहिते राज्ञ उभौ लोकौ हि यो जयेत् ॥

[5]यस्तस्य पुरुषः पापं मनसाऽप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्टः प्रेत्यापि नरकं पतेत् ॥

वञ्चकानां दाहकः अग्निः चारद्वारेण सर्वद्रष्टा भास्करः अशुत्रीनां नाशकर्ता अन्तकः अधार्मिकाणां दण्डेन शास्ता धार्मिकाणां चानुग्राहकः यमः धनधाराभिस्तर्पणात् वैश्रवणः इति पञ्चदेवतामयो राजा नावमन्तव्यः

[6]न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥

कुरुते पञ्च रूपाणि कालयुक्तानि यः सदा ।
भवत्यग्निस्तथाऽऽदित्यो मृत्युर्वैश्रवणो यमः ॥

यदा ह्यासीदतः पापान्दहत्युग्रेण तेजसा ।
मिथ्योपचरितो राजा तदा भवति पावकः ॥

आसीदतः समीपस्थान् । मिथ्योपचरितः वञ्चितः ।
नीटी.

यदा पश्यति चारेण सर्वभूतानि भूमिपः ।
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ॥

अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान् ।
सपुत्रपौत्रान्सामात्यांस्तदा भवति सोऽन्तकः ॥

यदा त्वधार्मिकान्सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति ।
धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥

यदा तु धनधाराभिस्तर्पयत्युपकारिणः ।
आच्छिनत्ति च रत्नानि विविधान्यपकारिणाम् ॥

[1]श्रियं ददाति कस्मैचित्कस्माच्चिदपकर्षति ।
तदा वैश्रवणो राजँल्लोके भवति भूमिपः ॥

[2]नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा ।
धर्म्यमाकाङ्क्षता लाभमीश्वरस्यानसूयता ॥

[3]न हि राज्ञः प्रतीपानि कुर्वन्सुखमवाप्नुयात् ।
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत् ॥

[4]कुर्यात्कृष्णगतिः शेषं ज्वलितोऽनिलसारथिः ।
न तु राज्ञाऽभिपन्नस्य शेषं क्वचन विद्यते ॥

कृष्णगतिः अग्निः । अभिपन्नस्य तिरस्कृतस्य ।
नीटी.

---

(१) भा. १२।६८।३५ ; भामु. ; राप्र. २८ यदा (यदि).

(२) भा. १२।६८।३६ ; भामु. ; पमा. ४१५ धुरं श्रेष्ठामा (ऽऽयुधं श्रेष्ठमा) लोकः प्रसीदति (लोकान् समश्नुते); राप्र. २८ यदा (यदि).

(३) भा. १२।६८।३७; भामु. १२।६८।३७ यस्याभावे च (यस्याभावेन) नित्यः (नित्यं); राप्र. २८ भामुवत्.

(४) भा. १२।६८।३८ ; भामु. १२।६८।३८ सुखा (मया) तिष्ठेत्प्रि (तिष्ठन्प्रि) लोकौ हि यो (लोकाविमौ); राप्र. २८-२९ लोकौ हि यो (लोकाविमौ).

(५) भा. १२।६८।३९ ; भामु. १२।६८।३९ पतेत् (व्रजेत्); राप्र. २९ भामुवत्.

(६) भा. १२।६८।४०-४६ ; भामु. ; राप्र. २९.

(१) भा. १२।६८।४७ ; भामु. १२।६८।४७ राजँल्लो (राजा लो) ; राप्र. २९ भामुवत्.

(२) भा. १२।६८।४८; भामु. १२।६८।४८ लाभ (लोक) ; राप्र. २९ भामुवत्.

(३) भा. १२।६८।४९ ; भामु. ; राप्र. २९.

(४) भा. १२।६८।५० ; भामु. १२।६८।५० राज्ञाऽभि (राजाऽभि).

राजस्वं सर्वथा रक्षणीयम्

[1]तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत् ।
मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः ॥

सर्वाणि द्रव्याणि रक्ष्याण्येव, न तु हर्तव्यानि । यद्वा रक्षणीयानि द्रव्याण्येव रक्ष्याणि । नीटी.

[2]नश्येदभिमृशन्सद्यो मृगः कूटमिव स्पृशन् ।
आत्मस्वमिव संरक्षेद्राजस्वमिह बुद्धिमान् ॥

कूटं मारणयन्त्रम् । 'कूटोऽस्त्री सीरावयवयन्त्रयोः' इति मेदिनी । नीटी.

[3]महान्तं नरकं घोरमप्रतिष्ठमचेतसः ।
पतन्ति चिररात्राय राजवित्तापहारिणः ॥

[4]राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एवं स्तूयते शब्दैः कस्तं नार्चितुमिच्छति ॥

राजा रञ्जकः । भोजः सुखानां भोजयिता । विविधं राजते इति विराट् श्रीमान् । सम्राडिति राज्ञामपि राजेत्यकुण्ठितैश्वर्यः । नीटी.

जितात्मनो मेधाविनो राजा आश्रयः

[5]तस्माद्बुभूषुर्नियतो जितात्मा संयतेन्द्रियः ।
मेधावी स्मृतिमान्दक्षः संश्रयेत महीपतिम् ॥

बुभूषुः भवितुमिच्छुः । नीटी.

(१) भा. १२।६८।५१ ; भामु.

(२) भा. १२।६८।५२ ; भामु. १२।६८।५२ संरक्षेद्रा ( रक्षेत रा ).

(३) भा. १२।६८।५३ ; भामु. १२।६८।५३ चेतसः ( चेतनम् ).

(४) भा. १२।६८।५४ ; भामु. १२।६८।५४ एवं ( याभिः ) मिच्छति ( मर्हति ).

(५) भा. १२।६८।५५ ; भामु. १२।६८।५५ संयते ( नियते ).

[1]राजा प्रगल्भं पुरुषं करोति
राजा कृशं बृंहयते मनुष्यम् ।
राजाभिपन्नस्य कुतः सुखानि
राजाऽभ्युपेतं सुखिनं करोति ॥

राजाभिपन्नस्य राज्ञा अभिपन्नस्य कृताभियोगस्य । राप्र. २५

राज्ञः शरीरं प्रजा प्रजायाः शरीरं राजा इति परस्पराश्रयसंबन्धः, इन्द्रयमधर्मरूपो राजा

[2]राजा प्रजानां प्रथमं शरीरं
प्रजाश्च राज्ञोऽप्रतिमं शरीरम् ।
राज्ञा विहीना न भवन्ति देशा
देशैर्विहीना न नृपा भवन्ति ॥

[3]राजा प्रजानां हृदयं गरीयो
गतिः प्रतिष्ठा सुखमुत्तमं च ।
यमाश्रिता लोकमिमं परं च
जयन्ति सम्यक्पुरुषा नरेन्द्रम् ॥

समाश्रिताः राजानमिति शेषः । नीटी.

[4]नराधिपश्चाप्यनुशिष्य मेदिनीं
दमेन सत्येन च सौहृदेन ।
महद्भिरिष्ट्वा क्रतुभिर्महायशा-
स्त्रिविष्टपे स्थानमुपैति सत्कृतम् ॥

[5]एवमेव प्रजाः सर्वा राजानमभिसंश्रिताः ।
सम्यग्वृत्ताः स्वधर्मस्था न कुतश्चिद्भयान्विताः ॥

(१) भा. १२।६८।५८ ; भामु. १२।६८।५८ राजा प्रगल्भं पुरुषं करोति (प्रज्ञा प्रगल्भं कुरुते मनुष्यं) बृंहयते (वै कुरुते) ; राप्र. २५.

(२) १२।६८।५८ इत्यस्यानन्तरं भा-भामु-टिप्पण्योरयं श्लोकः ।

(३) भा. १२।६८।५९ ; भामु. १२।६८।५९ यमाश्रिता (समाश्रिता) नरेन्द्रम् (नरेन्द्र); राप्र. २५ नरेन्द्रम् (नरेन्द्र).

(४) भा. १२।६८।६० ; भामु. १२।६८।६० सत्कृतम् (शाश्वतम्).

(५) भा. १२।७३।१९ ; भामु. १२।७२।१८-१९.

[1]राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः।
चतुर्थं तस्य धर्मस्य राजा भागं स विन्दति ॥
[2]देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः।
यज्ञमेवोपजीवन्ति नास्ति चेष्टमराजके ॥
[3]इतो दत्तेन जीवन्ति देवताः पितरस्तथा।
राजन्येवास्य धर्मस्य योगक्षेमः प्रतिष्ठितः ॥
[4]छायायामप्सु वायौ च सुखमुष्णेऽधिगच्छति।
अग्नौ वाससि सूर्ये च सुखं शीतेऽधिगच्छति ॥
शब्दे स्पर्शे रसे रूपे गन्धे च रमते मनः।
तेषु भोगेषु सर्वेषु नभीतो लभते सुखम् ॥

छायायामिति। उष्णजं शीतजं च भयं छायादिनाऽग्न्यादिना च नश्यति, शब्दादिना च रमते, अराजकभयक्रान्तस्तु कुत्रापि सुखं न लभते इति श्लोकद्वयतात्पर्यम्। नीटी.

[5]अभयस्यैव यो दाता तस्यैव सुमहत्फलम्।
न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते ॥
[6]इन्द्रो राजा यमो राजा धर्मो राजा तथैव च।
राजा बिभर्ति रूपाणि राज्ञा सर्वमिदं धृतम् ॥

यत एवं अतः अभयदानमेव मुख्यं दानम्, तद्दातेन्द्रादिरूप एवेत्याह द्वाभ्याम्– अभयस्येति। नीटी.

राजा प्रत्यक्षदेवता

[7]परोक्षा देवताः सर्वा राजा प्रत्यक्षदेवता।
प्रसादश्च प्रकोपश्च प्रत्यक्षो यस्य दृश्यते ॥

(१) भा. १२।७३।२०; भामु. १२।७२।१९–२० स (तु).
(२) भा. १२।७३।२१; भामु. १२।७२।२०–२१.
(३) भा. १२।७३।२२; भामु. १२।७२।२१–२२ इतो (ततो).
(४) भा. १२।७३।२३–२४; भामु. १२।७२।२२–२४.
(५) भा. १२।७३।२५; भामु. १२।७२।२४–२५ यस्यैव (यस्य हि).
(६) भा. १२।७३।२६; भामु. १२।७२।२५.
(७) पमा. ३९३.

राजा माता पिता चैव राजा कुलवतां कुलम्।
राजा सत्यं च धर्मश्च राजा हितकरो नृणाम् ॥

## वाल्मीकिरामायणम्

अराजकं राष्ट्रं विनश्यति अतः राजस्थापना पुरोहितेन कर्तव्या, राष्ट्रे सत्यधर्मौ राजमूलकौ, राज्ञः इन्द्रवरुणादिरूपता

[1]यथा ह्यगोपाः पशवो यथा सैन्यमनायकम् ॥
एवं प्रजाः प्रजापाल भवन्ति ह्यनधिष्ठिताः।
चन्द्रहीना यथा रात्रिः सूर्यहीनमहो यथा ॥
तथा भवति तद्राष्ट्रं यत्र राजा न दृश्यते ॥
[2]व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः।
समेत्य राजगुरवः सभामीयुर्द्विजातयः ॥
[3]वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः।
मार्कण्डेयो गौतमश्च मौद्गल्यश्च महातपाः ॥
[4]एते द्विजाः सहामात्यैः पृथग्वाच उदैरयन्।
वसिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥
[5]शर्वरी समतीतेयं क्रूरा वर्षशतोपमा।
शोचतां पुत्रशोकेन मृतं दशरथं नृपम् ॥

(१) वारा. २।६६।२८–३०; वाराकु. २।१४।५६–५७ (यथा ह्यपालाः पशवो यथा सेना ह्यनायका। यथा चन्द्रं विना रात्रिर्यथा गावो विना वृषम् ॥ एवं हि भवता राष्ट्रं यत्र राजा न दृश्यते ॥) एतावदेव.
(२) वारा. २।७३।१; वाराकु. २।६७।२ गुरवः (कर्तारः).
(३) वारा. २।७३।२; वाराकु. २।६७।३ (मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः। कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥).
(४) वारा. २।७३।३; वाराकु. २।६७।४ वाच उदै (वाचमुदी).
(५) वारा. २।७३।४; वाराकु. २।६७।५ (अतीता शर्वरी दुःखं या नो वर्षशतोपमा। अस्मिन्पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥).

[1]स्वर्गतश्च महाराजो रामश्चारण्यमाश्रितः ।
लक्ष्मणश्चापि तेजस्वी रामेण सहितो गतः ॥
[2]उभौ भरतशत्रुघ्नौ केकयेषु परंतपौ ।
गिरिव्रजे पुरवरे वसतः प्रागितो गतौ ॥
[3]इक्ष्वाकुवंशप्रभवः को नु राजा भविष्यति ।
अराजकमिदं राष्ट्रं विनाशमुपयास्यति ।
इक्ष्वाकुः कश्चिदेवेह राजाऽस्माकं विधीयताम् ॥
[4]नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥
[5]नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्राः सम्यक तिष्ठन्ति शासने ॥
[6]नाराजके पतिं भार्या यथावदनुवर्तते ।
नाराजके गुरोः शिष्यः शृणोति नियतं हितम् ॥
स्वं नास्त्यराजके राष्ट्रे प्रशान्तश्च परिग्रहः ।
अराजके स्वात्मनोऽपि प्रभुत्वं न हि कस्यचित् ॥
[7]नाराजके धनं चास्ति नास्ति भार्याऽप्यराजके ।
इदमत्याहितं चान्यत्कुतः सत्यमराजके ॥
[8]नाराजके जनपदे यज्ञशीला द्विजातयः ।
विविधांस्तन्वते यज्ञान् दस्युसंघैः प्रपीडिताः ॥

(१) वारा. २।७३।५ ; वाराकु. २।६७।६ रामेण सहितो गतः ( रामेणैव गतः सह ).

(२) वारा. २।७३।६ ; वाराकु. २।६७।७ केकयेषु (कैकयेषु) उत्तरार्धे (पुरे राजगृहे रम्ये. मातामहनिवेशने ॥ ).

(३) वारा. २।७३।७; वाराकु. २।६७।८ (इक्ष्वाकूणामिहैवाद्य कश्चिद्राजा विधीयताम् । अराजकं हि नो राष्ट्रं न विनाशमवाप्नुयात् ॥ ) तृतीयार्धं नास्ति.

(४) वारा. २।७३।८; वाराकु. २।६७।९.

(५) वारा. २।७३।९; वाराकु. २।६७।१० उत्तरार्धे (नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ ).

(६) वारा. २।७३।१०–११.

(७) वाराकु. २।६७।११.

(८) वारा. २।७३।१२ ; वाराकु. २।६७।१३ उत्तरार्धे ( सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ ).

[1]नाराजके जनपदे कारयन्ति नराः सभाः ।
उद्यानानि च रम्याणि प्रपाः पुण्या गृहाणि च ॥
[2]नाराजके जनपदे महायज्ञेषु यज्वनः ।
ब्राह्मणा वसुसंपन्ना विसृजन्त्याप्तदक्षिणाः ॥
[3]नाराजके जनपदे प्रभूतनटनर्तकाः ।
उत्सवाश्च समाजाश्च वर्तन्ते जनहर्षणाः ॥
[4]नाराजके जनपदे कश्चिदर्थः प्रसिध्यति ।
व्यवहारा न वर्धन्ते कन्यानां जनहर्षणाः ॥
[5]नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभिरनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥
[6]नित्योद्विग्नाः प्रजाः सर्वा दुःखिताश्च भवन्त्यपि ।
नाराजके जनपदे विश्वस्ताः कुलकन्यकाः ।
अलंकृता राजमार्गे क्रीडन्ति विहरन्ति च ॥
नाराजके जनपदे विचरन्त्यकुतोभयाः ।
कामिनः सह कान्ताभिर्विहारोद्यानभूमिषु ॥
नाराजके जनपदे धनवन्तः कुटुम्बिनः ।
शेरते विवृतद्वारा विश्वस्तमकुतोभयाः ॥
[7]नाराजके जनपदे नराः पण्योपजीविनः ।
पण्यान्यादाय गच्छन्ति देशाद् देशान्तरं तथा ॥
[8]नाराजके कृषिकराः कर्षन्ति भयपीडिताः ।
पशवो नाभिवर्धन्ते नित्यं राष्ट्रे ह्यराजके ॥

(१) वारा. २।७३।१३; वाराकु. २।६७।१२ नराः सभाः (सभां नराः) प्रपाः पुण्या गृ ( हृष्टाः पुण्यगृ ).

(२) वाराकु. २।६७।१४.

(३) वारा. २।७३।१४; वाराकु. २।६७।१५ वर्तन्ते जनहर्षणाः ( वर्धन्ते राष्ट्रवर्धनाः ).

(४) वारा. २।७३।१५.

(५) वाराकु. २।६७।१६.

(६) वारा. २।७३।१६–१८.

(७) वारा. २।७३।१९; वाराकु. २।६७।२२ ( नाराजके जनपदे वणिजो दूरगामिनः । गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ ).

(८) वारा. २।७३।२०.

[1]नाराजके जनपदे उद्यानानि समागताः ।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥
नाराजके जनपदे वाहनैः शीघ्रगामिभिः ।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥
नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥
नाराजके जनपदे बद्धघण्टा विषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥
नाराजके जनपदे शरान् सततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥
[2]नाराजके जनपदे चरत्येकचरो वशी ।
भावयंस्तपसाऽऽत्मानं यत्र सायंगृहो मुनिः ॥
[3]नाराजके जनपदे योगक्षेमः प्रकल्पते ।
न चाप्यराजकं सैन्यं शत्रून् विजयते युधि ॥
[4]नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नराः संयान्ति सहसा रथैश्च परिमण्डिताः ॥
नाराजके जनपदे नराः शास्त्रविशारदाः ।
संवदन्तोऽवतिष्ठन्ते वनेषूपवनेषु च ॥
नाराजके जनपदे माल्यमोदकदक्षिणाः ।
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥
नाराजके जनपदे चन्दनागरुरूषिताः ।
राजपुत्रा विराजन्ते वसन्त इव शाखिनः ॥

(१) वाराकु. २।६७।१७–२१.

(२) वारा. २।७३।२१ ; वाराकु. २।६७।२३ यंस्तपसा (यत्नात्मना).

(३) वारा. २।७३।२२; वाराकु. २।६७।२४ क्षेमः प्रकल्पते (क्षेमं प्रवर्तते) उत्तरार्धे (न चाप्यराजके सेना शत्रून्विषहते युधि ॥) ; राक. ७ योगक्षेमः प्रकल्पते (योगः क्षेमं प्रवर्तते) उत्तरार्धे (न चाप्यराजके सेना शत्रून् विषहते परान् ॥); राप्र. २५ राकवत्.

(४) वाराकु. २।६७।२५–२८.

[1]नदी शुष्कजला यद्वद्यद्वच्चातृणकं वनम् ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥
[2]ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥
[3]नाराजके जनपदे स्वकं भवति कस्यचित् ।
हरन्ति दुर्बलानां हि स्वमाक्रम्य बलाधिकाः ॥
[4]अराजके जनपदे दुर्बलान् बलवत्तराः ।
क्षपयन्ति निरुद्वेगा मत्स्यान् मत्स्या इवाल्पकान् ॥
[5]व्युत्क्रान्तधर्ममर्यादा नास्तिका निरपत्रपाः ।
भवन्त्यराजके राष्ट्रे मानवाः क्रूरनिश्चयाः ॥
[6]ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥
यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥
राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥
यमो वैश्रवणः शक्रो वरुणश्च महाबलः ।
विशेष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥

(१) वारा. २।७३।२३ ; वाराकु. २।६७।२९ पूर्वार्धे (यथा ह्यनुदका नद्यो यथा वाऽप्यतृणं वनम् ।) ; राक. ७–८ (विपालाश्च यथा गावो यथा चातृणकं वनम् । अजलाश्च यथा नद्यस्तथा राष्ट्रमराजकम् ॥ ); राप्र. २५ राकवत्.

(२) वाराकु. २।६७।३०.

(३) वारा. २।७३।२४ स्वकं (स्वास्थ्यं) ; वाराकु. २।६७।३१ पू.

(४) वारा. २।७३।२५ ; वाराकु. २।६७।३१ (मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् । ) उत्त.

(५) वारा. २।७३।२६.

(६) वाराकु. २।६७।३२–३५.

[1]अन्धं तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधु वा ॥
[2]दस्यवोऽपि न च क्षेमं राष्ट्रे विन्दन्त्यराजके ।
द्वावाददाते ह्येकस्य द्वयोश्च बहवो धनम् ॥
तस्माद्राजैव कर्तव्य इच्छद्भिः शुभमात्मनः ।
द्विजानां वचनं श्रुत्वा वसिष्ठं मन्त्रिणोऽब्रुवन् ॥
[3]जीवत्यपि महाराजे महाभाग वयं प्रभो ।
शासने तव तिष्ठामः स नः शाधि तपोधन ॥
[4]वसिष्ठ धर्मज्ञ महानुभाव
स नः समीक्ष्यार्हसि विप्रवर्य ।
कुमारमिक्ष्वाकुकुलप्रसूतं
तमाशु राजानमिहाभिषेक्तुम् ॥

पञ्चानां अग्नीन्द्रसोमवरुणयमानां रूपाणि धारयन्
राजा देवः मान्यः पूज्यश्च सर्वदा

[5]पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य वरुणस्य यमस्य च ॥
[6]औष्ण्यं तथा विक्रमं च सौम्यं दण्डं प्रसन्नताम् ।
धारयन्ति महात्मानो राजानः क्षणदाचर ।
तस्मात्सर्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः ॥

धर्मजीवनसुखदानेन प्रजारक्षणकर्ता राजा

[1]राज्ञो हि प्रतिकूलो यो न जातु सुखमेधते ॥
[2]दुर्लभस्य हि धर्मस्य जीवितस्य सुखस्य च ।
राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥
[3]तान्न हिंस्यान्न चाऽऽक्रोशेन्नाऽऽक्षि-
पेन्नाप्रियं वदेत् ।
देवा मानुषरूपेण चरन्त्येते महीतले ॥
[4]राजैव कर्ता भूतानां राजैव च विनाशकः ।
राजा सुप्तेषु जागर्ति राजा पालयते प्रजाः ॥
[5]राजा नीत्यां सुनीतायां धर्मं रक्षति रक्षिता ।
यदा न पालयेद्राजा क्षिप्रं नश्यन्ति वै प्रजाः ॥
[6]राजा कर्ता च गोप्ता च सर्वस्य जगतः पिता ।
राजा कालो युगश्चैव राजा सर्वमिदं जगत् ॥

धर्मविग्रही सर्वभूतहिते रतः षाड्गुण्यवेत्ता नीतिकर्ता
रामो राजा सोममृत्युयमकुबेरवह्नीन्द्रसूर्य-
वरुणरूपः समबुद्धिः दुर्बलस्य बलम्

[7]देवागारे नृपागारे द्विजवेश्मसु वै तथा ।
वह्निः शतक्रतुश्चैव सूर्यो वायुश्च तिष्ठति ।
नात्र योग्यास्तु सौमित्रे योनीनामधमा वयम् ॥

---

(१) वारा. २।७३।२७; वाराकु. २।६७।३६ अन्धं (अहो) साधु वा (साधुनी); राक. ८ न्न प्रज्ञा (न्नेह ज्ञा) साधु वा (साधुनी); राप्र. २५ राकवत्.

(२) वारा. २।७३।२८–२९.

(३) वारा. २।७३।३०; वाराकु. २।६७।३७ (जीवत्यपि महाराजे तवैव वचनं वयम् । नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥).

(४) वारा. २।७३।३१; वाराकु. २।६७।३८ (स नः समीक्ष्य द्विजवर्य वृत्तं नृपं विना राज्यमरण्यभूतम् । कुमारमिक्ष्वाकुसुतं वदान्यं त्वमेव राजानमिहाभिषिञ्च ॥).

(५) वारा. ३।४३।१२ यन्त्यमितौजसः (यन्ति महौजसः) वरुणस्य यमस्य (यमस्य वरुणस्य); वाराकु. ३।४०।१२.

(६) वारा. ३।४३।१३ मान्याः पूज्याश्च (पूज्यमानाश्च) तृतीयार्धमात्रम्; वाराकु. ३।४०।१३.

(१) वारा. ३।४३।२२; वाराकु. ३।४०।२६ कूलो यो (कूलस्थो).

(२) वारा. ४।१४।२०; वाराकु. ४।१८।४३ हि (च) सुखस्य (शुभस्य).

(३) वारा. ४।१४।२१; वाराकु. ४।१८।४४ मानुष (मनुष्य).

(४) वारा. ७।६२।३; वाराकु. ७।५९ (प्रक्षिप्तः २)। ४ राजैव च (राजा चैव) पालयते (पालयाति).

(५) वारा. ७।६२।४; वाराकु. ७।५९ (प्रक्षिप्तः २)। ६ राजा नीत्यां सुनितायां (नीत्या सुनीतया राजा).

(६) वारा. ७।६२।५; वाराकु. ७।५९ (प्रक्षिप्तः २)। ५ युगश्चै (युगं चै).

(७) वारा. ७।६१।२० योग्यास्तु (योग्योऽसि) वयम् (त्वियम्) द्वितीयार्धं नास्ति; वाराकु. ७।५९ (प्रक्षिप्तः १)। २०–२१.

[1]प्रवेष्टुं नात्र शक्ष्यामो धर्मो विग्रहवान्नृपः ।
सत्यवादी रणपटुः सर्वभूतहिते रतः ॥

[2]षाड्गुण्यस्य पदं वेत्ता नीतिकर्ता च राघवः ।
धर्मज्ञः सर्वदर्शी च रामो रमयतां वरः ॥

[3]स सोमश्च स मृत्युश्च स यमो धनदस्तथा ।
वह्निः शतक्रतुश्चैव सूर्यो वरुण एव च ॥

[4]सोमाच्छतक्रतोः सूर्याद्धनदाद्वा यमात्तथा ॥
जायते वै नृपो राम किंचिद्भवति मानुषः ।
त्वं तु सर्वमयो देवो नारायण इवापरः ॥

[5]या च ते सौम्यता राजन्सम्यक्प्रणिहिता विभो ।
सम्यक् च करुणाविष्टस्तेन सोमाङ्गजो भवान् ॥

[6]कोशे दण्डे प्रजानाथ दाने पापभयापहः ।
दाता भोक्ता प्रहर्ता च तेनेन्द्र इव नो भवान् ॥

[7]अधृष्यः सर्वभूतेषु तेजसा चानलोपमः ।
अभीक्ष्णं तपसे पापांस्तेन भास्करसंनिभः ॥

[1]साक्षाद्वित्तेशतुल्योऽसि ह्यथवा धनदाधिकः ।
वित्ते यत्ता सपद्मा श्रीर्नित्यं ते राजसत्तम ॥

[2]धनदस्य च कोपेन धनदस्तेन नो भवान् ।
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥

[3]शत्रौ मित्रे च ते दृष्टिः समतां याति राघव ।
धर्मेण शासनं दिव्यं व्यवहारविधिक्रमात् ॥

[4]यस्य रुष्यसि वै राम मृत्युस्तस्याभिधावति ।
गीयसे तेन वै राजन् यम इत्युरुविक्रमः ॥

[5]यश्चैष मानुषो भावो भवतो नृपसत्तम ।
आनृशंस्यपरो राजा सर्वेषु कृपयाऽन्वितः ॥

[6]दुर्बलस्य त्वनाथस्य राजा भवति वै बलम् ।
अचक्षुषो भवेच्चक्षुरगतेश्च गतिर्भवेत् ॥

राजा प्रजारक्षणकर्ता धर्मरूपश्च

[7]त्वं प्रमाणं महाराज राजा हि परमा गतिः ।
राजमूलाः प्रजाः सर्वा राजा धर्मः सनातनः ॥

---

(१) वारा. ७।६१।२१ शक्ष्यामो (शक्ष्यामि) भूत (सत्त्व); वाराकु. ७।५९ (प्रक्षिप्तः १)। २१-२२.

(२) वारा. ७।६१।२२; वाराकु. ७।५९ (प्रक्षिप्तः १)। २२-२३ वेत्ता (वेत्ति) कर्ता च (कर्ता स) धर्मज्ञः (सर्वज्ञः).

(३) वारा. ७।६१।२३; वाराकु. ७।५९ (प्रक्षिप्तः १)। २४ सोमश्च स (सोमः स च) वरुण एव च (वै वरुणस्तथा).

(४) वारा. ७।६३।१२-१३; वाराकु. ७।५९ (प्रक्षिप्तः ३)। १४.

(५) वारा. ७।६३।१४; वाराकु. ७।५९ (प्रक्षिप्तः ३)। १५ उत्तरार्धे (समं चरसि चान्विष्य तेन सोमांशको भवान् ॥).

(६) वारा. ७।६३।१५; वाराकु. ७।५९ (प्रक्षिप्तः ३)। १६ कोशे (क्रोधे) भोक्ता प्रहर्ता च (हर्ताऽसि गोप्ताऽसि).

(७) वारा. ७।६३।१६; वाराकु. ७।५९ (प्रक्षिप्तः ३)। १७ पापांस्तेन (लोकांस्तेन).

(१) वारा. ७।६३।१७; वाराकु. ७।५९ प्रक्षिप्तः ३)। १८ ह्यथवा (अथवा) वित्ते यत्ता सपद्मा (वित्तेशस्यैव पद्मा).

(२) वारा. ७।६३।१८; वाराकु. ७।५९ प्रक्षिप्तः ३)। १९ स्य च (स्य तु).

(३) वारा. ७।६३।१९; वाराकु. ७।५९ (प्रक्षिप्तः ३)। २० दिव्यं (नित्यं) हारविधि (हारे विधि).

(४) वारा. ७।६३।२०; वाराकु. ७।५९ (प्रक्षिप्तः ३)। २१ रुष्यसि (कुप्यसि) मृत्युस्तस्याभि (तस्य मृत्युर्वि) राजन् (राम) इत्युरु (इत्यति).

(५) वारा. ७।६३।२१; वाराकु. ७।५९ (प्रक्षिप्तः ३)। २२ सर्वेषु कृपयाऽ (सत्त्वेषु क्षमयाऽ).

(६) वारा. ७।६३।२२; वाराकु. ७।५९ (प्रक्षिप्तः ३)। २३ उत्तरार्धे (अचक्षुषोत्तमं चक्षुरगतेः स गतिर्भवान् ॥).

(७) वारा. ७।६३।३५; वाराकु. ७।५९ (प्रक्षिप्तः ३)। ३९.

[1]शास्ता राजा नृणां येषां न ते गच्छन्ति दुर्गतिम् ।
वैवस्वतेन मुक्तास्ते भवन्ति पुरुषोत्तम ॥

कृतयुगे अराजकप्रजाभिः राजा रक्षणार्थं वृतः, इन्द्रवरुणकुबेरयमानां तेजोभागान् समाहृत्य ब्रह्मणा राजा सृष्टः

[2]आसन् कृतयुगे राम ब्रह्मभूते पुरा युगे ।
अपार्थिवाः प्रजाः सर्वाः सुराणां तु शतक्रतुः ॥
[3]ताः प्रजा देवदेवेशं राजार्थं समुपाद्रवन् ॥

[4]पप्रच्छुः सुरलोकेशं पार्थिवं सुरसत्तमम् ॥

[5]सुराणां स्थापितो राजा त्वया देव शतक्रतुः ।
प्रयच्छ नो हि लोकेश पार्थिवं नरपुंगवम् ॥
[6]यस्मै पूजां प्रयुञ्जाना धूतपापाश्चरेमहि ॥

[7]न वसामो विना राज्ञा एष नो निश्चयः परः ।
प्रजानां वचनं श्रुत्वा निश्चयित्वाऽर्थमुत्तमम् ॥

[8]ततो ब्रह्मा सुरश्रेष्ठो लोकपालान् सवासवान् ।
समाहूयाब्रवीत्सर्वांस्तेजोभागान्प्रयच्छत ॥

[9]ततो ददुर्लोकपालाश्चतुर्भागान् स्वतेजसाम् ।
अक्षुपश्च ततो ब्रह्मा यतो जातः क्षुपोऽभवत् ॥

(१) वारा. ७।६३।३६; वाराकु. ७।५९ (प्रक्षिप्तः ३)।४० राजा नृणां (नृणां नृपो) न ते (ते न) मुक्तास्ते (मुक्तास्तु) षोत्तम (षोत्तमाः).

(२) वारा. ७।७९।१६; वाराकु. ७।७६।३७.

(३) वाराकु. ७।७६।३८.

(४) वारा. ७।७९।१६.

(५) वाराकु. ७।७६।३९.

(६) वारा. ७।७९।१७; वाराकु. ७।७६।४० यस्मै (तस्मै).

(७) वाराकु. ७।७६।४०-४१.

(८) वारा. ७।७९।१८; वाराकु. ७।७६।४१.

(९) वारा. ७।७९।१९; वाराकु. ७।७६।४२ पूर्वार्धे (ततो ददुर्लोकपालाः सर्वे भागान् स्वतेजसः ।) ऽभवत् (नृपः).

[1]तं ब्रह्मा लोकपालानां समांशैः समयोजयत् ।
ततो ददौ नृपं तासां प्रजानां जयसंयुतम् ॥
[2]तत्रेन्द्रेण तु भागेन महीमाज्ञापयन्नृपः ।
वारुणेन तु भागेन वपुः पुष्णाति राघव ॥
[3]कौबेरेण तु भागेन ह्यादत्तेऽर्थान्ददाति च ।
यस्तु याम्यो भवेद्भागस्तेन शासति स प्रजाः ॥
[4]पुरा कृतयुगे राम मनुर्दण्डधरः प्रभुः ।
तस्य पुत्रो महानासीदिक्ष्वाकुः कुलनन्दनः ॥
[5]तं पुत्रं पूर्वजं राज्ये निक्षिप्य भुवि संमतम् ।
पृथिव्यां राजवंशानां भव कर्तेत्युवाच ह ॥
[6]तथेति च प्रतिज्ञातं पितुः पुत्रेण राघव ॥

धर्मतः राजा पिता प्रजानाम्

[7]आदौ प्रभृति गातव्यं न चावज्ञाय पार्थिवम् ।
पिता हि सर्वभूतानां राजा भवति धर्मतः ॥

## कौटिलीयमर्थशास्त्रम्

योगक्षेमार्थं मात्स्यन्यायाभिभूताभिः प्रजाभिः मनुः राजा कृतः राजभृतिप्रकल्पनेन

[8]मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे । धान्यषड्भागं पण्यदशभागं

(१) वारा. ७।७९।२०; वाराकु. ७।७६।४३ समांशैः (सहांशैः) नां जयसंयुतम् (नामीश्वरं क्षुपम्).

(२) वारा. ७।७९।२१; वाराकु. ७।७६।४४ न्द्रेण तु (न्द्रेण च) पुष्णाति (पुष्यति).

(३) वारा. ७।७९।२२; वाराकु. ७।७६।४५ ह्यादत्तेऽर्थान् ददाति च (वित्तमासां ददौ तदा) भवेद्भा (ऽभवद्भा) शासति (शास्ति स्म).

(४) वारा. ७।८१।५; वाराकु. ७।७९।५.

(५) वारा. ७।८१।६; वाराकु. ७।७९।६ पूर्वजं (पूर्वकं) संमतम् (दुर्जयम्).

(६) वारा. ७।८१।७; वाराकु. ७।७९।७.

(७) वारा. ७।९५।१५; वाराकु. ७।९३।१५ आदौ प्रभृति गातव्यं (आदिप्रभृति गेयं स्यात्).

(८) कौ. १।१३.

हिरण्यं चास्य भागधेयं प्रकल्पयामासुः । तेन भृता राजानः प्रजानां योगक्षेमवहाः ॥

मनुं वैवस्वतं मनुनामानं विवस्वतः सूनुम् । धान्यषड्भागं धान्यस्य षष्ठमंशम् । पण्यदशभागं पण्यादीनां वस्त्रादीनां विक्रेयद्रव्याणां दशमांशम् । हिरण्यं यथादेशप्रसिद्धम् । भागधेयं अंशम् । तेन भृताः यथोक्तभागधेयरूपभृतिग्राहिणः सन्तः । प्रजानां योगक्षेमवहाः पौरजानपदानां योगक्षेमवहनरूपकर्मकराः । श्रीमूला.

इन्द्रयमस्थानं राजा माननीयः

इन्द्रयमस्थानमेतद्राजानः प्रत्यक्षहेडप्रसादाः । तानवमन्यमानं दैवोऽपि दण्डः स्पृशति । तस्माद्राजानो नावमन्तव्याः ...... ॥

राजानः प्रत्यक्षहेडप्रसादाः प्रत्यक्षनिग्रहानुग्रहाः, अत एव एतत् इन्द्रयमस्थानं इमे इन्द्रयमस्थानस्थिताः इन्द्रयमतुल्या इत्यर्थः । तात्स्थ्यात् ताच्छब्द्यम् । श्रीमूला.

## चाणक्यसूत्राणि

राजा नावमन्तव्यः

(१)दुर्बलोऽपि राजा नावमन्तव्यः ॥
नास्त्यग्नेर्दौर्बल्यम् ॥

राजा परं दैवतं पूज्यम्

(२)राज्ञो भेतव्यं सार्वकालम् ॥
न राज्ञः परं दैवतम् ॥
सुदूरमपि दहति राजवह्निः ॥
रिक्तहस्तो न राजानमभिगच्छेत् ॥

(१) चास. ८७–८८.
(२) चासू. ३७१–३७४.

## मनुः

ब्रह्मणा ईश्वरेण लोकरक्षणार्थं वर्णाश्रमधर्मरक्षणार्थं च राजा सृष्टः

* (१)अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥

(१) विद्रुते पीडिते अप्रतिष्ठिते वा । प्रभुः प्रजापतिः । स्तुतिरियम् । † मेधा.

(२) यस्मात् पूर्वमविद्यमानराजके अस्मिन् जगति भयेन समन्तात् प्रचलति सति अस्य जगतो रक्षार्थं हिरण्यगर्भो राजानं सृष्टवान् । तस्मात् तेन रक्षणं कर्तव्यम् । ‡ गोरा.

(३) विद्रुते कल्पादौ । मवि.

(४) अराजके राजरहिते । सर्वतः, पञ्चम्यन्तात्तसिः । सर्वस्मात् बलवतः । अभिद्रुते पीडिते । अस्य लोकस्य । प्रभुः ब्रह्मा । विद्रुते इति क्वचित् पाठः । विद्रुते धर्मात् प्रचलिते । सप्तम्यन्तात् तसिः । 'चक्षुर्धर्मस्य सर्वस्य' इति मेधातिथौ पाठः § । तदा भयात् अधर्मभयात् धर्मस्य चक्षुः द्रष्टारं प्रवर्तकमिति यावत्, 'राजा धर्मस्य कारणम्' इति वचनात् । राप्र. १५–१६

(५) तत्र हेतुः तां (रक्षां) अधिकृत्य तस्य सृष्टत्वमित्याह– अराजके हीति । सर्वतो भयात् दैविकान्मानुषाच्च । प्रभुः प्रजापतिः । नन्द.

* राव्याख्यानं 'राजशब्दार्थविचारः' इत्यस्मिन् प्रकरणे 'राजधर्मान् प्रवक्ष्यामि' इति मनुवचने (राका. पृ. ७८१–७८२) द्रष्टव्यम् ।

† मच. मेधावत् ।

‡ ममु., भाच. गोरागतम् ।

§ नायं पाठो विद्यमानमुद्रितमेधातिथौ समुपलभ्यते ।

(१) मस्मृ. ७।३; राक. २ तो वि (तोऽभि); रार. २; पमा. ३९१; राप्र. १५ राकवत्, 'विद्रुते' इत्यपि पाठः, तृतीयचरणे 'चक्षुर्धर्मस्य सर्वस्य– इति मेधातिथौ पाठः' इत्युक्तम्.

'स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः ।
वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता ॥

( १ ) स्वधर्माणां ( ? स्वधर्मनिष्ठानां ) च राजा सृष्टोऽभिरक्षिता । स्वधर्मनिष्ठानामपालने राज्ञः प्रत्यवायः । धर्मच्युतास्तु यदि केनचिदुपहन्येरन् न तत्र राज्ञोऽतीव दोष इति 'स्वे स्वे धर्मे' इत्यनेन दर्शयति । अथवा 'न' श्लिष्यते 'अनिविष्टानाम्' इति । ये तु शास्त्रात् मित्राद्युपदेशाद्वा स्वधर्मायत्ताः, न तेषां राजा द्वैधेन वर्तेत । वर्णग्रहणं स्त्रीबालवृद्धानां रक्षार्थम् । न हि ते आश्रमस्थाः । आश्रमग्रहणं तर्हि किमर्थम् ? प्राधान्यार्थं ब्राह्मणवसिष्ठवत् । प्रयोजननिर्देशो वाऽयम् । आश्रमसंध्योपासनादिधर्मात् चलितुमेषां न देयम् । न चैवं दण्डाद्युपघातः कर्तुमेतेषां देयः । इतरथा बाधापरिहारः । एवं रक्षा विज्ञेया । संध्योपासनाद्यकरणेषु नामान्यस्य कस्यचित् भवति ( ? ) । द्विरूपा राज्ञः कर्तव्यतेति वर्णाश्रमग्रहणम् । एतदेवोक्तम्— 'वर्णानाश्रमांश्च न्यायतोऽभिरक्षेत्' ( गौध. ११।९ ) इति । मेधा.

( २ ) क्रमेण स्वधर्मरतानां सर्वेषां ब्राह्मणादीनां वर्णानां ब्रह्मचर्यादीनां चाश्रमाणां ब्रह्मणा राजा रक्षिता सृष्टः । उत्तरविवक्षार्थमुक्तवान् । गोरा.

( ३ ) स्वे स्वे इति प्रकारान्तरारम्भार्थः प्रागुक्तानुवादः । मवि.

( ४ ) तस्मात्तेषां रक्षणमकुर्वतो राज्ञः प्रत्यवायः, स्वधर्मविरहिणां त्वरक्षणेऽपि न प्रत्यवाय इत्यस्य तात्पर्यार्थः । * ममु.

( ५ ) उक्तविधं राजानं महीकरोति— स्व इति । रक्षितेति कृत्वा सृष्टः ब्रह्मणेति शेषः । मच.

( ६ ) अर्थान्तरविवक्षार्थमुपसंहरति— स्व इति । वर्णानामित्यधर्माधिकारिणां निर्देशः । आश्रमाणामिति धर्माधिकारिणामिति । अभिरक्षिता सृष्टो रक्षितृत्वेन सृष्ट इत्यस्माभिरुक्तं हीति भावः । नन्द.

---

* शेषं गोरागतम् ।

( १ ) मस्मृ. ७।३५; मेधा. 'ऽनिविष्टानां' इत्यपि पाठः ; राक. १५६ ऽभि ( हि ).

राजा इन्द्रवायुयमसूर्याग्निवरुणचन्द्रकुबेराणामंशैर्निर्मितः नावमन्तव्यः न च द्वेष्यः न च तस्य धर्मनिर्णयोऽतिक्रमणीयः

'इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥

( १ ) अनिलो वायुः । वित्तेशः धनपतिर्वैश्रवणः । मात्राः अवयवाः । शाश्वतीः सारभूताः । निर्हृत्य निष्कृष्य । * मेधा.

( २ ) कथमसृजदित्याह— इन्द्रानिलेति । इन्द्रवायुयमादित्याग्निवरुणचन्द्रवैश्रवणानां संबन्धिनोंऽशान् सारभूतान्निष्कृष्य राजानमसृजत् । § गोरा.

( ३ ) सर्वनियन्तृत्वविधानार्थमुत्पत्तिस्वरूपकथनेन स्तौति— इन्द्रेति द्वाभ्याम् । वित्तेशः कुबेरः । मात्राः सारभूतांशाः दधिमण्डस्य नवनीतवत् । शाश्वतीः मन्वन्तरव्यापिनीः । निर्हृत्य निष्कृष्य । मच.

( ४ ) शाश्वतीः सारभूताः स्थिरा वा । तथा बृहत्पराशरोऽपि— 'सुत्रामानलवायूनां यमस्येन्दोर्विवस्वतः । वारिवित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममे नृपम् ॥' इति । तत्रैवेशानमात्राऽप्यधिकोक्ता— 'इन्द्राग्नियमवित्तेशवारीशमातरिश्वनाम् । शीतांश्वीशानमात्राश्च ब्रह्माऽऽदायासृजन्नृपम् ॥' इति । राप्र. १६

( ५ ) किमुपादायासृजदित्यपेक्षायामाह— इन्द्रेति । शाश्वतीर्मात्राः स्वाभाविकानंशान् इन्द्रस्यैश्वर्यं अनिलस्य बलं इत्यादिकाः शक्तीरित्यर्थः । निर्हृत्य असृजदित्यनुषङ्गः । नन्द.

'यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥

---

* मवि. मेधागतम् ।

§ ममु. गोरावत् ।

( १ ) मस्मृ. ७।४; राक. २; रार. ४; ममा. ३९२; राप्र. १६ ; नीम. ३२.

( २ ) मस्मृ. ७।५; मेधा. 'मात्राभिः' इत्यपि पाठः ; राक. २ ; ममा. ११।८ देषां (देष) पू. ; रार. ४ ;

(१) एषां इन्द्रादीनां सुरश्रेष्ठानां मात्राभिः तेजोंऽशैः निर्मितः तस्माद्धेतोः अभिभवति दुर्निरीक्ष्यमुखो भवति। तेजसा हेतुना। निष्कृष्य निर्मितः उत्पादितः, यतः कृषिरुत्पादने (? निर्मितः निष्कृष्य उत्पादितः, यतः निष्कृष्योत्पादने) धातुर्वर्तते। तेनापायावधित्वान्मात्राभ्य इति पञ्चमी। तृतीया वा पठितव्या। मेधा.

(२) तेषां इन्द्रादीनां देवेश्वराणां संबन्धिभ्यः अंशेभ्यो यस्मात् नृपतिः कृतः, तस्मादेष प्राणिनो वीर्येणाधरीकरोति। * गोरा.

(३) यस्मादेषां देवश्रेष्ठानामिन्द्रादीनां मात्राभ्यः अंशसमुदायेभ्यः अंशान् सारभूतान्निर्हृत्य निर्मितः उत्पादितः इति तेजसा सर्वभूतान्यतिशेते, सर्वोत्कृष्टो भवतीत्यर्थः। अथवा 'इन्द्रानिल' इत्यस्य 'अराजके हि' इत्यनेन संबन्धः। मात्रा निर्हृत्य राजानमसृजत् इत्यन्वयः। यस्मादेषामित्यत्र मात्राभिरिति वा पाठः। राप्र. १६

[१]तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्॥

(१) तपति तपतीव। संमुखोऽशक्यदर्शनत्वादेवमुच्यते। तदाह— न चैनं भुवि शक्नोति। ब्राह्मणा जात्युत्कृष्टा ब्रह्मवर्चस्विनोऽपि नैनमभिमुखं वीक्षितुं शक्नुवन्ति। तदुक्तम्— 'तमुपर्यासीनमधस्तादुपासीरन्' (गौध. ११।७)। मेधा.

(२) एष च राजा पश्यतां स्ववीर्येण चक्षूंषि मनांसि च आदित्यवत् संतापयति, न चैनं राजानं वीर्येणातिशययोगात् कश्चिदपि पृथिव्यामाभिमुख्येन वीक्षितुं शक्नोति। एवं चेन्द्रांशांशोद्भवत्वात् कथनार्थम् (?)। † गोरा.

(३) तपत्यादित्यवदित्यादित्यांशोपपादनम्। इतरेष्वप्येवं स्वयमूह्यम्। मवि.

(४) कार्येणापि तदंशोऽनुमेय इत्याह— तपतीति द्वाभ्याम्। दुष्टानां चक्षुर्मनसोः संतापजननात्तद्दर्शना- (निष्ठा ?)क्षमत्वं सूचितम्। साधूनां न तपति विमलं प्रसाधयति। मच.

(५) अयं स्वतेजसा पश्यतां सूर्य इव चक्षूंषि मनांसि च तापयति। तपिरन्तर्भावितण्यर्थः। दुर्निरीक्ष्यमुखत्वादेवमुच्यते। तदाह— न चैनमिति। एनं राजानं पृथिव्यां कश्चिदप्याभिमुख्येन वीक्षितुं न क्षमते। अत्र मेधातिथिः— "ब्राह्मणा जात्युत्कृष्टा ब्रह्मवर्चस्विनोऽपि नैनमभिमुखं वीक्षितुं शक्नुवन्ति। तदुक्तं गौतमेन— 'तमुपर्यासीनमधस्तादुपासीरन्" इति व्याचख्यौ। तदयुक्तम्, 'अन्ये ब्राह्मणेभ्यः' इति वाक्यशेषविरोधात्। तथा च गौतमः— 'तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यः। तेऽप्येनं मन्येरन्' (गौध. ११।७–८) इति। तं राजानं उपर्यासीनं सिंहासनस्थितं अधस्तात् भूमावेव उपासीरन् अन्ये ब्राह्मणेभ्यः ब्राह्मणातिरिक्ताः। ब्राह्मणास्त्वाशीर्वादादिभिरभिपूजयेयुः। वस्तुतस्तु 'तमुपर्यासीनम्' इत्यस्य विधिरूपत्वात् भिन्नविषयत्वाच्च 'न चैनं भुवि शक्नोति' इत्यस्य संमतिरूपत्वमेवायुक्तम्, अदृष्टेनापि दोषेण राज्ञोऽवज्ञा न युज्यते इत्येतन्निषेधार्थवादत्वात् पूर्वोक्तश्लोकानाम्। राप्र. १६–१७

[१]सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट्।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः॥

(१) अग्न्यादिदेवतानां मात्राश्रयत्वात् तच्छक्तियोगितयैवमुच्यते। प्रभावः अलौकिकी या शक्तिः। मेधा.

---

* मवि., ममु., मच., भाच. गोरागतम्।

† ममु., भाच. गोरागतम्।

पमा. ३९२; मच. मात्राभ्यो नि (मात्राभिर्नि); राप्र. १६ दभिभ (दतिभ) 'मात्राभिः' इत्यपि पाठः; नीम. ३२ निर्मितो (निर्गतो).

(१) मस्मृ. ७।६; राक. २ चैनं (चैवं); रार. ४ चैष (चैव); पमा. ३९२ रारवत्; राप्र. १६ रारवत्.

(१) मस्मृ. ७।७, ख. ग. महेन्द्रः प्रभावतः (चेन्द्रः स्वप्रभावतः); राक. २ भवति (भवतु); रार. ६८; पमा. ३९२; राप्र. १७; नीम. ३२ उत्तरार्धे (स महेन्द्रः स ईशः स कुबेरश्च प्रभावन॥).

(२) 'प्रतापयुक्तस्तेजस्वी' (९।३१०) इत्यादि-वक्ष्यमाणात् आदित्यतुल्यव्यापारकरणात् असौ अलौकिकशक्तियोगेन तासु क्रियासु राजाग्निवाय्वादित्य-चन्द्रयमवैश्रवणवरुणेन्द्रतुल्यो भवति। गोरा.

(३) प्रभावतः प्रभाववानेवैवं भवतीत्यर्थः। मवि.

(४) एवं चाग्न्यादीनां पूर्वोक्तांशभवत्वात् तत्कर्म-कारित्वाच्च 'प्रतापयुक्तस्तेजस्वी' इत्यादिना नवमाध्याये वक्ष्यमाणत्वात् स राजा शक्त्यतिशयेनाग्न्यादिरूपो भवति। ममु.

(५) स धर्मराट् यमः। प्रभावतः ऐश्वर्येण। मच.

(६) इन्द्रादिमात्रा निर्हृत्य कृतत्वात् तस्यापि तद्रूपतामाह– सोऽग्निरिति। धर्मराट् यमः। अग्न्या-द्यंशसंभवत्वात् तत्कार्यकारित्वाच्च ताद्रूप्यम्। प्रभावः अलौकिकी शक्तिः। * राप्र. १७

**'बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।**
**महती देवता ह्येषा नररूपेण तिष्ठति॥**

(१) मनुष्योऽयमित्येवं बालोऽपि भूमिपः राजा नावमन्तव्यः। किं तर्हि? महती काचिदेषा देवता एतेन मानुषेण रूपेण स्थितेति। अतोऽदृष्टेनापि दोषेण राजन्यवज्ञा न युज्यते। मेधा.

(२) भूपतिर्बालोऽपि मनुष्यबुद्ध्या नावज्ञेयः, यस्मात् देवांशोद्भवत्वात् महत्येषा देवता मनुष्य-रूपेणाऽऽस्ते। गोरा.

(३) महती देवता ईश्वरः। मवि.

(४) एतेन देवतावज्ञायामधर्मादयोऽदृष्टदोषा उक्ताः। † ममु.

(५) एतेन देवतावमानने यो दोषः स राजाव-ज्ञायामित्यदृष्टदोष उक्तः। राप्र. १७

(६) एवं देवांशप्रभवत्वात् राजा नावमन्तव्य इत्याह– बाल इति। महती देवता अग्निरित्यर्थः। हिशब्दो हेतौ। नन्द.

**'एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्।**
**कुलं दहति राजाग्निः सपशुद्रव्यसंचयम्॥**

(१) अस्य विधेरर्थवादश्लोका एते। राजधर्मोऽपि सन् सर्वपुरुषार्थोऽयम्। योऽग्निं हस्तादिना स्पृशति, समिद्धस्याप्यन्तिकवर्ती भवति, स दुरुपसर्पी नरः प्रमाद-स्खलितो दह्यते। राजा तु क्रुद्धः सपुत्रधनदारबान्धवं दहति। कुलं ये केचित् ज्ञातयः स्वजनाश्च। तानप्य-पराधसंबन्धात् पशुभिः धनसंचयैश्च सह नाशयति। मेधा.

(२) अग्निरनुपायसेविनं मनुष्यमेकमेव दहति। राजाग्निः पुनः पशुधनसमूहसहितं अपराधिसंबन्धिबन्धु-वर्गमपि नाशयति। तस्मादसौ नावमन्तव्यो राजा, अग्निरिव विनाशकत्वात्। न च स्नेहातिशयातिदर्शनेन तं प्रत्याश्वसनीयम्। गोरा.

(३) दुरुपसर्पिणं दुष्टेन प्रकारेणोपसर्पन्तं अभि-भवार्थमग्नेः स्वयमेव तन्मध्ये प्रवेशादिकारिणम्। मवि.

(४) संप्रति दृष्टदोषमाह– एकमेवेति। योऽग्ने-रतिसमीपमनवहितः सन्नुपसर्पति, तं दुरुपसर्पिणमेक-मेवाग्निर्दहति, न तत्पुत्रादिकम्। क्रुद्धो राजाग्निः पुत्रदार-भ्रात्रादिरूपं कुलमेव गवाश्वादिपशुसुवर्णादिधनसंचय-सहितं सापराधं निहन्ति। ममु.

(५) महत्त्वमेवाऽऽह– एकमिति। दुरुपसर्पिणं दुःखार्थे मरणाद्युद्यतं उपसर्पिणं समिपगामिनम्। राजा तु देशान्तरस्थमपि कुलादिविशिष्टमपि हन्ति। अग्निदेवतातोऽप्यधिक इति भावः। मच.

(६) इदानीं दृष्टदोषमाह– एकमिति। योऽग्नेरति-समीपमनवहितः सन्नुपसर्पति तमेकमेवाग्निर्दहति, न

---

* नन्द. राप्रगतम्।

† शेषं गोरागतम्।

(१) मस्मृ. ७।८; राक. ५; रार. ८ प्रथमः पादः; ६८; पमा. ३९२; राप्र. १७.

(१) मस्मृ. ७।९; राक. ६; रार. ४; पमा. ३९२; राप्र. १८.

तत्पुत्रादिकमिति, अन्यैस्तु दुःखेन मरणाद्युचतं अग्निसमीपगामिनमिति व्याख्यातम् । एतद्व्याख्याद्वितयादपि दुरुपसर्पिणं स्वापराधं ज्ञात्वाऽपि बलात्तत्सदिच्ये प्रवृत्तमग्निरेकमेव दहति, तं अन्यायपथगामिनं ज्ञात्वा क्रुद्धो राजा तं तदीयकुलं च पुत्रभ्रात्रादिरूपं पशुभिः धनसंचयैश्च सहितं नाशयतीति व्याख्यानं युक्तम् । एवमेकविषयताऽपि लभ्यते । राप्र. १८

(७) अग्नितोऽपि राजा दाहशक्तौ विशिष्टतर इत्याह– एकमिति । दुरुपसर्पिणं उपसर्पणानिपुणम्, प्रमादादग्नौ पतितमिति यावत् । कुलं दहति यस्मात्तस्मान्नावमन्तव्यः । नन्द.

(८) दुरुपसर्पिणं दुष्टेन प्रकर्षेण उपसर्पन्तं विलङ्घयन्तम् । * भाच.

**'कार्यं सोऽवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ।**
**कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥**

(१) नैतन्मन्तव्यं बन्धुर्मे राजा सुहृद्वेति । 'कस्य राजा भवेन्मित्रं कानि मित्राणि राजनि'। प्रयोजनापेक्षया च शत्रौ मित्रवदाचरन्ति मित्रे शत्रुवत् । तथाऽशक्ताः कंचिदपराधं क्षमन्ते, शक्तिं प्राप्योन्मूलयन्ति । एवं देशकालावपि । अतो धर्मसिद्ध्यर्थं कार्यसिद्ध्यर्थं विश्वरूपं कुरुते । क्षणान्मित्रं क्षणेन शत्रुः, नैकरूप एव राजा भवति । अतो न विश्वसितव्यं राजनि । मैत्र्यात् वाल्लभ्यात् सौजन्याद्वा तत्तुल्यवयोदृष्ट्या न वर्तितव्यम्, अपि तु सर्वदा नयेन द्रष्टव्यः । † मेधा.

(२) स राजा प्रयोजनं पर्यालोच्य आत्मशक्तिं देशकालौ च, स्नेहवैरकरणोचितैः सम्यगवेक्ष्य शास्त्रव्यवस्थासिद्ध्यर्थं मित्रशत्रुमध्यस्थतया मुहुर्मुहुः नानाविधरूपं कुरुते । गोरा.

(३) कार्यं प्रयोजनम् । शक्तिं स्वस्य । देशकालौ विग्रहादियोग्यौ । विश्वरूपं मित्रेऽपि शत्रुतां शत्रावपि मैत्रीम् । अतो मित्रमित्यत्र ना(१ न)विश्वसनीयमित्यर्थः । मवि.

(४) स राजा प्रयोजनापेक्षया स्वशक्तिं देशकालौ चावेक्ष्य कार्यसिद्ध्यर्थं तत्त्वतो विश्वरूपं बहूनि रूपाणि करोति । जातिविवक्षया बहुष्वेकवचनम् । अशक्तिदशायां क्षमते, शक्तिं प्राप्योन्मूलयति । एवमेकस्मिन्नपि देशे काले च प्रयोजनानुरोधेन शत्रुर्वा मित्रं वा उदासीनो वा भवति । अतो राजवल्लभोऽहमितिबुद्ध्या नावज्ञेयः । ममु.

(५) कार्ये अनुग्रहनिग्रहौ । शक्तिं बाल्ययौवनाद्यनुरूपाम् । देशः दूरनिकटादिः । कालः सुभिक्षदुर्भिक्षादिः । अवेक्ष्य निश्चित्यैव । विश्वरूपं प्रयोजनानुरूपेण शत्रुमित्रोदासीनतया । मच.

(६) कार्यं सोऽवेक्ष्येति क्वचित्पाठः । कार्यं अनुग्रहनिग्रहादियोग्यताम्, शक्तिं बलम्, देशं दूरनिकटादिकम्, कालं सुभिक्षदुर्भिक्षादिमवेक्ष्य आत्मानं विश्वरूपं नानारूपं करोति । क्षणे तुष्टः क्षणे रुष्टः अशक्तौ शान्तः शक्तौ उन्मूलकः स्वकार्यानुरोधेन शत्रुर्मित्रमुदासीनो वा भवति । अत एव– 'कस्य राजा भवेन्मित्रं कानि मित्राणि राजनि' 'राजा मित्रं केन दृष्टं श्रुतं वा' इत्युक्तम् । तेन मैत्र्यादिनाऽपि नावमन्तव्यः । राप्र. १८

(७) विश्वरूपं नानादेवतारूपम् । नन्द.

(८) देशकालौ विग्रहादियोग्यौ ज्ञात्वा धर्मसिद्ध्यर्थं पुनः पुनः विश्वरूपं नानारूपं इन्द्रयमादिरूपं मित्रे शत्रुतां शत्रौ मित्रतां वा कुरुते । भाच.

**'यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।**
**मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥**

(१) प्रसन्नः आराधनया श्रियं ददाति । क्रुद्धो मृत्युना योजयति । अतः श्रीकामेनाऽऽराधनीयः । न केवलं श्रिया योजयति, यावदस्य शत्रवः सन्ति तानपि पराक्रम्य परितोषितो हन्ति । अतः शत्रुवधकामेन यथावत्

---

* शेषं ममुगतम् ।

† राप्र. मेधागतं मचगतं च ।

(१) मस्मृ. ७।१०; राक. ६ सोऽवेक्ष्य (चावेक्ष्य); पमा. ३९२; राप्र. १८ कार्यं सोऽवेक्ष्य (कार्याण्यवेक्ष्य).

(१) मस्मृ. ७।११; राक. ६; पमा. ३९२ पद्मा श्रीः (पद्माऽऽस्ते); राप्र. १८; नन्द. यस्य (तस्य).

परिचरणीयः । पद्मा, श्रीपर्यायोऽपि पद्माशब्दो महत्त्वप्रतिपादनार्थः प्रयुक्तः, महतीं श्रियं ददातीत्यर्थः'। एते चार्थाः राज्ञः प्राप्यन्ते, यतः सर्वतेजोमयोऽसौ अग्न्यादित्यचन्द्रमसां तेजो बिभर्ति । * मेधा.

( २ ) यस्मादसौ अग्न्याद्यंशोद्भवत्वात् अग्न्यादिसर्वतेजोयुक्तः तस्मात् तद्गतायां प्रसन्नतायां महती श्रीर्वसति । एवं च श्रीकामेनासौ आराधनीयः । वीर्ये तदीये शत्रुपराजय आस्ते । अतः शत्रुविनाशकामेनाप्यसावेव परिचरणीयः । क्रोधे च तद्गते मृत्युस्तिष्ठति । तस्मान्न कदाचिदसौ कोपनीयः । गोरा.

( ३ ) यस्य प्रसाद इत्यादि त्रयं क्रमात् कुबेरशक्रयमानां व्यापारकथनम् । पद्मा पद्महस्ता । यतः पद्मादयः तदुद्भवाः अतः सर्वतेजोमयः । एवमन्येष्वप्युक्तांशेषु व्यापारो ज्ञेय इत्याशयः । मवि.

(४) विश्वरूपत्वं व्यनक्ति– यस्येति । प्रसादे अनुग्रहविषये । पद्मा श्रीरिति पर्यायत्वेऽपि महत्त्वानपायत्वख्यापनार्थं पद्मालयत्वसूचनेन वा सुखहेतुत्वं ख्यापितम् , श्रियः सत्त्वेऽपि नृणामसंतुष्टे राजनि सुखादर्शनात् । पराक्रमे शत्रुं प्रति गमने विजयः तत्संभावना । तदवमानात् तत्क्रोधानन्तरं प्रजामृत्युदर्शनात् मृत्युः । तस्माच्छ्रीप्राप्तिशत्रुजयशत्रुवधादिकामैः नृपः सेव्य इति ध्वनिः । मच.

( ५ ) श्रीकामेन श्रीप्राप्त्यै शत्रुमता शत्रुहननाय जीवितार्थिना जीवस्थित्यै राजा सेव्यः । अत्र मेधातिथ्यादयः– 'पद्माशब्दः श्रीपर्यायोऽपि महत्त्वप्रतिपादनाय, अर्थात् वैयर्थ्यं पद्माशब्दस्य । वस्तुतस्तु पद्मा लक्ष्मीः, श्रीः शरीरशोभा । तथा च 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' (शुसं. ३१।२२) इत्यत्र व्याख्यातम्– 'श्रीः शरीरशोभा, लक्ष्मीः प्रसिद्धा' इति । यद्वा प्रसादे पद्मा, पराक्रमे श्रीर्विजयश्च । राप्र. १८–१९

( ६ ) अत्रोदाहरणमाह– तस्येति । तस्य प्रसादे श्रीर्वसति, तस्य प्रसादे सति लक्ष्मीर्जायते इत्यर्थः । पद्मा पद्मवती । विजयः इन्द्रः । सर्वतेजोमयः सर्वदेवताशक्तिमयः । नन्द.

**तं यस्तु द्वेष्टि संमोहात्स विनश्यत्यसंशयम् ।**
**तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥**

( १ ) प्रत्यवायाद्यथा नश्यति जनो नैवमभिप्रेतार्थलोभेन, अतः पुनः पुनराह । तं राजानं यो द्वेष्टि प्रातिकूल्येन वर्तते तस्मिन् , स त्वसंशयं नश्यति । तस्य ह्याशु विनाशाय । अन्यः कश्चिदपराधं क्षमते अशक्यराजनिवेदनेन । तत्र व्यवहारभागस्य धनपरिक्षयो भवति, भूतोऽप्यर्थः साक्षिणां चित्तवैचित्र्यादन्यथात्वमायाति, इत्युपेक्षमाणः कश्चित् क्षमेतापि । राज्ञा तद्विनाशार्थमपराधेन मनसि स्थितेन बाध्यत एवासौ । शक्तिमत्त्वाद्राज्ञः प्रयतमानस्य स्वतन्त्रविरोधो जायते । मेधा.

( २ ) यो मनुष्यः तद्वीर्यातिशयानभिज्ञतया तस्य प्रतिपक्षो भवति स निःसंशयं विनश्यति । यस्मात् तस्य समनन्तरं विनाशार्थं राजा मनः संकल्पयति । * गोरा.

( ३ ) तस्मात्तत्र द्वेषोऽपि न कर्तव्य इत्यर्थः । मवि.

( ४ ) तं राजानं द्वेष्टि तदाज्ञाभङ्गं करोति स विनश्यति राजकृतवधभाग्भवतीत्यर्थः । राप्र. २३

**तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।**
**अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥**

( १ ) यतः सर्वतेजोमयो राजा तस्माद्धेतोः इष्टेषु वल्लभेषु मन्त्रिपुरोहितादिषु कार्यगत्या धर्मं कार्यव्यवस्थां ('यं धर्मं यां व्यवस्थां' इति राप्रपाठः) शास्त्रा-

* ममु. मेधागतम् ।

* ममु. गोरावत् । मच., नन्द. गोरागतम् ।

( १ ) मस्मृ. ७।१२ ; राक. ६ तस्य ह्याशु (तस्मात्त्वाशु) ; पमा. ३९२ तं यस्तु (यस्तु तं) ; राप्र. २३ पमावत्.

( २ ) मस्मृ. ७।१३ ; गोरा. स व्यवस्येन्न (वर्तयेत्तं न) ; राक. ६ विचाल (विचार) ; रार. ६८ स व्यव (संव्यव) तं धर्मं (तद्धर्मं) ; पमा. ३९२–३९३ पूर्वार्धे (तस्माद्धर्ममभीष्टेषु सत्यं पश्येन्नराधिपः ।) तं धर्मं (तद्धर्मं) ; राप्र. २३ स व्यव (संव्यव) ; भाच. राकवत्.

चाराविरुद्धां व्यवस्येत् निश्चित्य स्थापयेत्, न ('तां न' इति राप्रपाठः) विचालयेत्। सा तादृशी राज्ञोऽनुज्ञा नातिक्रमणीया। अद्य पुरे सर्वैरुत्सवः कर्तव्यः, मन्त्रिगेहे विवाहो वर्तते तत्र सर्वैः संनिधातव्यम्, तथा पशवो नाद्य सैनिकैः ('सौनिकैः' इति राप्रपाठः) हन्तव्याः, न शकुनयो बन्धयितव्याः, नर्तिकाः धनिकैराराधनीयाः ('नर्णिका धनिकैरुपरोधनीयाः' इति राप्रपाठः) एतावन्त्यहानि। एवमनिष्टेष्वपि 'एतेन संसर्गो न कर्तव्यः, एतस्य गृहे प्रवेशो न देयः' एवंविधोऽत्र धर्मः पटहघोषादिना ('स्पृहादोषादिना' इति राप्रपाठः) राज्ञाऽऽदिष्टो नातिक्रमणीयः। न त्वग्निहोत्रादिधर्मव्यवस्थायै वर्णाश्रमिणां राजा प्रभवति, स्मृत्यन्तरविरोधप्रसङ्गात्, अविरोधे चास्मिन् विषये वचनस्यार्थवत्त्वात्।

* मेधा.

(२) यं धर्मव्यवहारं इष्टेषु क्षुद्रेषु अपि अक्षुद्रयोग्यं नियमयेत्, एवं महत्स्वप्यनिष्टेषु क्षुद्रयोग्यम्। न तु दण्डादिनियमोऽपि राज्ञ इच्छया कार्यः, तस्य शास्त्रीयस्यैव राज्ञाऽपि कार्यत्वात्। मवि.

(३) यतः सर्वतेजोमयो नृपतिः, तस्मात् अपेक्षितेषु यमिष्टं शास्त्रानुष्ठेयं शास्त्राविरुद्धं निश्चित्य व्यवस्थापयति, अनपेक्षितेषु चानिष्टं नियमं नातिक्रामेत्।

† ममु.

(४) प्रकरणमुपसंहरति— तस्मादिति। इष्टेषु प्रियेषु धर्मं अयमेवमर्हत्ययमेवं नार्हतीति स्थापयेत्, स्थापयितुस्तं प्रौढ्यादिना न चालयेत्। यतः क्रुद्धो हन्ति, प्रसन्नोऽनुगृह्णीयात्। मच.

(५) तस्मात् कारणात् इष्टेषु क्षुद्रेषु यं धर्मं स नराधिपः व्यवस्येत् निश्चिनोति, च पुनः अनिष्टं अयोग्यं अनिष्टेषु अक्षुद्रेषु अनिन्द्येषु, तं धर्मं न विचारयेत्।

भाच.

* राप्र. मेधातिथिमनुल्लिख्य मेधातिथेरनुवादः।

† गोरा., रार., नन्द. ममुगतम्।

अष्टौ देवव्रतानि राज्ञः

**[1]इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च।**
**चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत्॥**

(१) तेजः शुक्रं कार्ये सामर्थ्यमित्यर्थः। मेधा.

(२) इन्द्रादीनां प्रत्येकं वृत्तानुवृत्तिं प्रागुक्तामपि विवरीतुमनुवदति— इन्द्रस्येति। तेजोवृत्तमिति। तेजो बलं यथा वृत्तं चरितम्। मवि.

(३) इन्द्रादिसंबन्धिनो वीर्यस्यानुरूपं चरितं राजा अनुतिष्ठेत्। तथा च राजा कण्टकोद्धारेण प्रतापानुरागाभ्यां संयुक्तः स्यात्। ममु.

(४) न केवलमेवम्, किन्तु— इन्द्रस्येति। तेजोवृत्तं तत्तदीयां प्रागल्भ्येन चेष्टाम्। मच.

(५) दिक्पालरूपत्वात्तस्य तत्कार्यकारित्वमाह— इन्द्रस्येति। तेजोवृत्तं इन्द्राद्यंशसदृशमाचरणम्।

राप्र. १९

(६) तेजः प्रभावः, तदर्थं वृत्तं तेजोवृत्तम्। नन्द.

**[2]वार्षिकांश्चतुरो मासान्यथेन्द्रोऽभिप्रवर्षति।**
**तथाऽभिवर्षेत्स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन्॥**

(१) नात्र प्रकरणे मासनियमोऽभिप्रेतः। केवलं चतुर्षु मासेषु संततवर्षी पर्जन्यो भवति। अतः संततं सर्वकालं स्वं राष्ट्रं कामैः पूरयेदित्युक्तं भवति। तथा कर्तव्यं यथा स्वराष्ट्रिया अनुरक्ता भवन्ति। मेधा.

(२) कामैः अपेक्षितदानैः। मवि.

(३) कथं इन्द्रादिचरितमनुतिष्ठेदित्याह— वार्षिकानिति। ऋतुसंवत्सरपक्षाश्रयणेनेदमुच्यते। यथा श्रावणादींश्चतुरो मासान् इन्द्रः सस्यादिसिद्धये वर्षति, एवमिन्द्रचरितमनुतिष्ठन् राजा स्वदेशायातसाधूनभिलषितार्थैः पूरयेत्।

* ममु.

* राप्र., नन्द. ममुगतम्।

(१) मस्मृ. ९।३०३; राक. ३ वायोश्च (वातस्य) चन्द्रस्याग्नेः (सोमस्याग्नेः); राप्र. १९ राकवत्.

(२) मस्मृ. ९।३०४; राक. ३ स्वं राष्ट्रं (तद्राष्ट्रं); राप्र. १९ राकवत्.

(४) तदेवाऽऽह– वार्षिकानित्यष्टभिः । कामैः दानमानाद्यैः । मच.

[1]**अष्टौ मासान्यथाऽऽदित्यस्तोयं हरति रश्मिभिः ।**
**तथा हरेत्करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥**

(१) तोयं स्तोकमपि रसं ईषत्तापेनाऽऽदत्ते यथाऽऽदित्यस्तथा करमादद्यादित्येष उपमार्थः । मेधा.

(२) तथा हरेत् करं क्रमेण । मवि.

(३) यथा सूर्यो मार्गशीर्षाद्यष्टमासान् रश्मिभिः स्तोकं स्तोकं रसमीषत्तापेनाऽऽदत्ते, तथा राजा शास्त्रीयकरानपीडया सदा राष्ट्रात् गृह्णीयात् । यस्मादेतदस्य अर्कव्रतम् । * ममु.

(४) रश्मिस्थानीयैः करग्राहकचराद्यैः । हरेत् गृह्णीयात् । मच.

(५) अष्टौ मासाः कार्तिकादयः । नन्द.

[2]**प्रविश्य सर्वभूतानि यथा चरति मारुतः ।**
**तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥**

(१) चारैः चरद्वारा प्रवेष्टव्यं परराष्ट्रे । मवि.

(२) यथा प्राणाख्यो वायुः सर्वजन्तुष्वन्तः प्रविश्य विचरति, एवं चारद्वारेण स्वपरमण्डलजालेषु चिकीर्षितार्थज्ञानार्थमन्तः प्रवेष्टव्यम् । यस्मादेतन्मारुतं चरितम् । ममु.

(३) चारैः उक्तकापटिकादिपञ्चविधैः । प्रवेष्टव्यं भद्राभद्रं ज्ञातव्यम् । मच.

[3]**यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।**
**तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥**

(१) अपराधे प्रियद्वेष्ययोर्निग्रहसमत्वेन वर्तितव्यम् । मेधा.

(२) नियन्तव्याः प्राप्ते काले । मवि.

(३) यद्यपि यमस्य शत्रुमित्रे न स्तस्तथापि तन्निन्दकार्चकयोः शत्रुमित्रयोर्यथा यमः शत्रुमित्रमरणकाले तुल्यवन्नियमयति, एवं राज्ञाऽपराधकाले रागद्वेषपरिहारेण प्रजाः प्रमापणीयाः । यस्मादेतदस्य याम्यं व्रतम् । ममु.

(४) यथा यमः प्रियद्वेष्यौ हित्वा प्रजाः कृतानुरूपेण नियच्छति दण्डादि करोति, एवमसौ । मच.

(५) सर्वे प्रियद्वेष्याः । नन्द.

(६) प्राप्ते काले मरणकाले । नियच्छति नियमयति । भाच.

[1]**वरुणेन यथा पाशैर्बद्ध एवाभिदृश्यते ।**
**तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥**

(१) अविशङ्किता एव अकार्यकारिणो निग्रहीतव्याः, यथा न पलायन्ते । मेधा.

(२) बद्ध एव दृश्यते, न तु बन्धनप्राप्तिकाले ज्ञायते । मवि.

(३) यो वरुणस्य रज्जुभिर्बन्धयितुमिष्टः स यथा तेनाविशङ्कितः पाशैर्बद्ध एव लक्ष्यते, तथा पापकारिणोऽविशङ्कितानेव यावन्न पार( ? पला)यन्ते तावच्छासयेत् । यस्मादेतदस्य वारुणं व्रतम् । ममु.

(४) यथा वारुणैः पाशैर्बद्धो नरकस्थः, एवं साहसिकादिर्निगडैः बद्धो दृश्येतेति । मच.

(५) गृह्णीयात् निबध्नीयात् । नन्द.

(६) पापं पापकारिणम् । निगृह्णीत गृह्णीयात् । भाच.

[2]**परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।**
**तथा प्रकृतयो यस्मिन्स चान्द्रव्रतिको नृपः ॥**

---

* राप्र. ममुगतम् ।

(१) मस्मृ. ९।३०५ ; राक. ३ न्नित्यमर्क (त्सम्यगर्क) ; राप्र. १९ राकवत्.

(२) मस्मृ. ९।३०६ ; राक. ३ ; राप्र. १९.

(३) मस्मृ. ९।३०७ ; राक. ४ न्तव्याः प्रजा (न्तव्यः सर्वे) ; राप्र. १९ राकवत् ; नन्द. प्रजास्त (सर्वे त).

(१) मस्मृ. ९।३०८ ; राक. ४ एवाभि (एव हि) ; राप्र. १९ राकवत् ; भाच. पापान्निगृह्णीयाद्व्र (पापं निगृह्णीत व्र).

(२) मस्मृ. ९।३०९ ; राक. ४ चान्द्र (चन्द्र) ; राप्र. १९ राकवत्.

(१) अक्रोधनेन प्रसाधनालंकारवता प्रहृष्टवदनेन प्रजादर्शनकाले भवितव्यं (यथा) निर्वातपरितापा भवन्तीत्यर्थः । मेधा.

(२) प्रकृतयो यस्मिन् परिपूर्णे हृष्यन्तीत्यनुषङ्गः । मवि.

(३) यथा पूर्णेन्दुदर्शनेन मनुष्या हर्षमुत्पादयन्ति, एवममात्यादयो यस्मिन् दृष्टे तुष्टिमुपगच्छन्ति स चन्द्राचारचारी नरेन्द्रः । * ममु.

(४) परिपूर्णे यथा चन्द्रं दृष्ट्वा तथा सर्वाङ्गेन पूर्णे राजानं दृष्ट्वा प्रकृतयो हृष्यन्ति । भाच.

[1]प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु ।
दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥

(१) भृशमुद्वेजनीयो दुष्ट इत्याग्नेयव्रतम् । सामन्ताः अमात्या एव बहुसाधनयुक्ताः । मेधा.

(२) प्रतापयुक्तः तापकारी । तेजस्वी अधृष्यः । यथा दुष्टदिव्येऽग्निः हिनस्ति तथा दुष्टानां सामन्तानां राज्यसमीपवर्तिनां हिंस्रः । मवि.

(३) पापकारिषु सदा दण्डपातेन प्रचण्डोऽसहनः ‡ स्यात्, तथा प्रतिकूलमात्यहिंसनशीलो भवेत् । तदस्य अग्निसंबन्धि व्रतं स्मृतम् । ममु.

(४) पापकर्मसु प्रतापयुक्तः स्यात् तेजस्वी च घृतकाञ्चनपरीक्षादौ दाहस्तद्वत्, दुष्टसामन्तेषु हिंस्रोऽपि । मच.

(५) दुष्टसामन्ताः संसक्तकास्तु सामन्ताः । भाच.

[2]यथा सर्वाणि भूतानि धरा धारयते समम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥

(१) धरा पृथ्वी । तद्वद्दीनानाथाश्च वंशा(? श्या)-श्च भरणीयाः । मेधा.

(२) समं धारयेत्, न त्वेकं परित्यज्यैकमेव । बिभ्रतः पुष्णतः । मवि.

(३) यथा पृथिवी सर्वाण्युच्चावचानि स्थावरजङ्गमानि उत्कृष्टापकृष्टानि समं कृत्वा धारयते, तद्वत् विद्वद्धनिकगुणवद्भूतानि तदितराणि च दीनानाथादिसर्वभूतानि रक्षणधनादानादिना सामान्येन धारयतः पृथिवीसंबन्धि व्रतं भवति । ¶ ममु.

(४) समं भूतानि प्रजाः बिभ्रतः पुष्णतः राज्ञः पार्थिवं व्रतं ज्ञेयम् । मच.

[1]एतैरुपायैरन्यैश्च युक्तो नित्यमतन्द्रितः ।
स्तेनान् राजा निगृह्णीयात्स्वराष्ट्रे पर एव च ॥

(१) उपसंहारश्लोकः । एतैः देवव्रतैः । अन्यैः लोकतोऽवगम्यैः । मेधा.

(२) एतैः प्राग्व्यवधानेनोक्तैः । स्वराष्ट्रे स्वराष्ट्रस्थितान् । पर एव च परराष्ट्रादागतान् । मवि.

(३) एतैः उक्तोपायैः अन्यैश्च अनुक्तैरपि स्वबुद्धिप्रयुक्तः राजा अनलसः सन् स्वराष्ट्रे ये चौरा वसन्ति ये च परराष्ट्रे वसन्तः तद्देशमागत्य मुष्णन्ति तान् उभयप्रकारान् निगृह्णीयात् । 'सोऽग्निर्भवति वायुश्च' (मस्मृ. ७।७) इत्यादिना पूर्वं सिद्धवदुक्तमग्न्यादिरूपत्वम्, इह तु तद्गुणयोगेन स्फुटीकृतमित्यपुनरुक्तिः । * ममु.

(४) परे परराष्ट्रे जयादिनाऽऽत्मसात्कृते तत्रत्यानपि स्तेनान्निगृह्णीयात् । ‡ मच.

## नारदः

प्रजानां मात्स्यन्यायेनाभिभवस्य परिहारार्थं राजा

[2]राजानश्चेन्नाभविष्यन् पृथिव्यां दण्डधारणे ।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥

---

* मच., नन्द, ममुगतम् ।

‡ निर्णयसागरमुद्रितपुस्तके तु 'अनलसः' इति पाठः ।

(१) मस्मृ. ९।३१० ; गोरा. ७।७ प्रथमपादः ; राक. ४ ; ममु. ७।७ प्रथमपादः ; राप्र. १९.

(२) मस्मृ. ९।३११ ; राक. ४ ; राप्र. १९.

¶ राप्र. ममुवत् । भाच. ममुगतम् ।

* राप्र., भाच, ममुगतम् ।

‡ शेषं मेधागतम् ।

(१) मस्मृ. ९।३१२ ; राप्र. २०.

(२) नासं. १९।१६ ; नास्मृ. २०।१५-१६ पूर्वार्धे (राजानश्चेन्नाकरिष्यन् प्रजानां दण्डधारणम् ।) पक्ष्यन् दु. (श्रीयुद्).

[1]लोकेऽस्मिन् द्वाववक्तव्यावदण्ड्यौ च प्रकीर्तितौ ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभृतो जगत् ॥

अत्र हेतुरुच्यते— लोक इति । यतो लोकेऽस्मिन् द्वाववक्तव्यौ यथाऽब्रूतां तथा कर्तव्यम् । यच्च ताभ्यां कृतं तन्न विचार्य प्रमाणीकर्तव्यम् । अदण्ड्यौ च अन्यथाकृतेऽपि । तत् प्रमाणमेव ब्राह्मणश्च राजा च । यतस्तौ जगत् बिभृतः । ब्राह्मणः प्रतिग्रहादिनेतरान् धर्मे स्थापयति ' अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ' ( मस्मृ. ३।७६ ) इत्यादिना । राजा च पालनादिना । नाभा.

अग्नीन्द्रसोमयमकुबेरपञ्चदेवतात्मको राजा नावमन्तव्यः नमस्यश्च, तस्याऽऽज्ञा च नातिक्रमणीया

[2]पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ॥

इयं नारदोक्तपञ्चरूपता तु कियन्माण्डलिकस्य भूपस्य । अत एव बृहत्पराशरेण— ' हर्यश्ववह्न्यन्तकविश्वनाथशीतांशुरूपाणि हि बिभ्रतीह । सर्वेऽपि भूपास्त्विह पञ्चरूपास्तत्कथ्यमानं शृणुत द्विजेन्द्राः ॥ ' ( बृपसं. १२।८८ ) इत्यत्र सामान्यवाचि सर्वपदमुपात्तम् । राप्र. २०

[3]कारणान्निर्निमित्तं वा यदा क्रोधवशं गतः ।
प्रजा दहति भूपालस्तदाऽग्निरभिधीयते ॥
[4]यदा तेजः समालम्ब्य विजिगीषुरुदायुधः ।
अभियाति परान् राजा तदेन्द्रः समुदाहृतः ॥

[1]विगतक्रोधसंतापो हृष्टरूपो यदा नृपः ।
प्रजानां दर्शनं याति सोम इत्युच्यते तदा ॥
[2]धर्मासनगतः श्रीमान् दण्डं धत्ते यदा नृपः ।
समः सर्वेषु भूतेषु तदा वैवस्वतो यमः ॥
[3]यदाऽतिथिगुरुप्राज्ञान् भृत्यादीनवनीपतिः ।
अनुगृह्णाति दानेन तदा स धनदः स्मृतः ॥

( १ ) अग्न्यादिकार्यकारित्वेन तत्तद्रूपतां द्रढयति— कारणादिति । राप्र. २०

( २ ) गतार्थाः श्लोकाः । पञ्चानां रूपाणि धारयन्तीत्युक्त्या पञ्चापि स इत्युक्तम् । अतस्तद्भाव इत्युक्ते तद्रूपकारणमुक्तमेव भवतीति तद्रूपकारणप्रकर्ष उक्तो भेदेन । नाभा.

[4]अनादिश्चाप्यनन्तश्च द्विपदां पृथिवीपतिः ।
दीप्तिमत्त्वाच्छुचित्वाच्च यदि स्यान्न पथश्च्युतः ॥

( १ ) अग्न्यादिपञ्चरूपत्वमुक्त्वाऽनाद्यनन्तात्मकविष्णुरूपत्वमाह— अनादिरिति । पथश्च्युतो भ्रष्टाचारः । राप्र. २१–२२

( २ ) अविद्यमानाद्यन्तः । न चास्यादिरन्तो वा विद्यते । तस्मादविद्यमानाद्यन्तकार्योऽयम् । स करोति धर्मम् । न स इदानींतन इति न परिभवितव्यः । अनादिरेव सः । न च तस्यान्तोऽस्ति । कालान्तरेऽपि प्रमाणं भवति धर्मः । अनाद्यन्तः द्विपदां मध्ये राजा ।

( १ ) नासं. १६,१७।१९ ; नास्मृ. १८।२० दण्ड्यौ ( वध्यौ ).

( २ ) नासं. १९।२४ ; नास्मृ. २०।२६ ; राक. २ ; राप्र. २०.

( ३ ) नासं. १९।२५ ; नास्मृ. २०।२७ निर्निमित्तं ( दानिमित्तं ) ; राक. ३ ; राप्र. २०.

( ४ ) नासं. १९।२६ ; नास्मृ. २०।२८ समुदा ( स उदा ) ; राक. ३ लम्ब्य विजि ( लम्बेद्विजि ) ; राप्र. २०–२१ राकवत्.

( १ ) नासं. १९।२७ ; नास्मृ. २०।२९ ; राक. ३ ; राप्र. २१.

( २ ) नासं. १९।२८ ; नास्मृ. २०।३० तो यमः ( तः स्मृतः ) ; राक. ३ ; राप्र. २१.

( ३ ) नासं. १९।२९ ; नास्मृ. २०।३१ पूर्वार्धे ( यदा त्वर्थिगुरुप्राज्ञभृत्यादीन् पृथिवीपतिः । ) ; राक. ३ पूर्वार्धे ( यदा त्वर्थिगुरून् प्राज्ञान् भृत्यादीन् पृथिवीपतिः । ) स धनदः स्मृतः ( धनद उच्यते ) ; राप्र. २१ राकवत्.

( ४ ) नासं. १९।१३ ; नास्मृ. २०।१२ पूर्वार्धे ( अनिर्देश्यावनिन्द्यौ च राजा ब्राह्मण एव च । ) स्यान्न ( न स्यात् ) ; राक. ४ उत्तरार्धे ( दीप्तत्वाच्च शुचित्वाच्च यद्यसौ न पथश्च्युतः ॥ ) ; राप्र. २१–२२ राकवत्.

दीप्तिमत्त्वादीश्वरत्वाच्च तस्यानादित्वम् । शुचित्वात् सर्वकालं हितत्वात् ततश्चा(? तस्या)नन्तत्वम् । यदि स्वधर्मान्न च्युतः । च्युतश्चेन्न कश्चिदपि, ' संभूय निहन्तव्यश्चेतसोन्माद आतुरः ' इत्युक्तः । नाभा.

[1]अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः ।
शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् ॥

अशुचिरित्यादिः ' तस्मात्तं नावजानीयात् ' इत्यस्याग्रेतनस्य अर्थवादः । राप्र. २२

[2]तस्मात्तं नावजानीयान्नाक्रोशेन्न विशेषयेत् ।
आज्ञायां तस्य तिष्ठेत्तु मृत्युः स्यात्तद्व्यतिक्रमात् ॥

वस्त्रालंकारादिभिस्तमपेक्ष्याऽऽत्मानं नाधिकं कुर्यात् । राप्र. २२

[3]आज्ञा तेजः पार्थिवानां सा च वाचि प्रतिष्ठिता ।
ते यद्ब्रूयुरसत्सद्वा स धर्मो व्यवहारिणाम् ॥

तेजोनिमित्तत्वात् तेज आज्ञा राज्ञाम् । सा च वाचि प्रतिष्ठिता वाङ्मात्रे प्रतिष्ठिता । तेज आज्ञारूपेण वाचि स्थितं यस्मात्, तस्मात् ते यत् ब्रूयुरसाधु साधु वा, स धर्मो मनुष्याणाम्, तेजसो माहात्म्यात् । नाभा.

[4]राजा नाम चरत्येष भूमौ साक्षात्सहस्रदृक् ।
न तस्याऽऽज्ञां व्यतिक्रम्य संतिष्ठेरन्प्रजाः क्वचित् ॥

राजा नाम साक्षादिन्द्रः । तस्याऽऽज्ञामतिक्रम्यावस्थानं प्रजानां नास्ति । तस्मादनुवर्त्यते । नाभा.

[1]रक्षाधिकारादीशत्वाद्भूतानुग्रहदर्शनात् ।
यदेव कुरुते राजा तत्प्रमाणमिति स्थितिः ॥

अहं रक्षिताऽस्मीति रक्षायामधिकृतो यः सोऽहितं कथं करिष्यति ? न हि भोजनेऽधिकृतः कश्चित् तद्विपरीतं करिष्यति । ऐश्वर्यात् बलादपि शक्तो व्यवस्थापयितुम् । ईष्टे च सर्वस्य । नान्यः कश्चित् बलात् प्रतिज्ञाविपरीतस्य कारयिताऽस्ति । दृश्यते चानुग्रहं कुर्वन् । तस्मात् तद्वचःप्रमाणेन स हितं प्रजानां करोति, यथैतैर्धर्मैर्युक्ता माता पुत्रस्य । नाभा.

[2]निर्गुणोऽपि यथा स्त्रीणां पूज्य एव पतिः सदा ।
प्रजानां निर्गुणोऽप्येवं पूज्य एव नराधिपः ॥

[3]राज्ञामाज्ञाभयाद्यस्मान्न च्यवेरन् पथः प्रजाः ।
व्यवहारादतो ज्ञेयं संवृत्तं राजशासनम् ॥

[4]स्थित्यर्थं पृथिवीपालैश्चरित्रविषयाः कृताः ।
चरित्रेभ्योऽस्य तत्प्राहुर्गरीयो राजशासनम् ॥

चारित्रविधयः राजकृता भागादिव्यवस्थाप्रकाराः । राजशासनं राजाज्ञा । * राक. ५

(१) नासं. १९।४९; नास्मृ. २०।५२ पूरुषः (मानवः) सद्यः (सम्यक्); राक. ४; राप्र. २२.

(२) नासं. १९।३० तस्य तिष्ठेत्तु (चास्य तिष्ठेत) क्रमात् (क्रमे); नास्मृ. २०।३२ शेन्न विशेषयेत् (शेच्च विशेषतः) तस्य तिष्ठेत्तु (चास्य तिष्ठेत); राक. ४; राप्र. २२ आज्ञायां (आज्ञया) क्रमात् (क्रमे).

(३) नासं. १९।१९; नास्मृ. २०।१९ आज्ञा (प्रज्ञा); राक. ५ ते यद्ब्रूयुर (स यद्ब्रूयाद); राप्र. २२ राकवत्.

(४) नासं. १९।२०; नास्मृ. २०।२० राजा नाम (राजेति सं) ज्ञां व्यति (ज्ञामति); राक. ५ राजा नाम (राजनामा) उत्तरार्धे (न तस्याऽऽज्ञामतिक्रम्य प्रतिष्ठेरन्निमाः प्रजाः ॥); राप्र. २२ उत्तरार्धं राकवत्.

* राप्र. राकवत्.

(१) नासं. १९।२१; नास्मृ. २०।२१; राक. ५; राप्र. २२.

(२) नासं. १९।२२ निर्गुणो (विगुणो); नास्मृ. २०।२२ निर्गुणोऽपि (निर्बलोऽपि) निर्गुणोऽप्ये (विगुणोऽप्ये) नराधिपः (प्रजापतिः); राक. ५; राप्र. २२.

(३) नास्मृ. २०।२३; राक. ५ च्यवेरन् (च्यवन्ते) उत्तरार्धे (व्यवहारस्ततो ज्ञेयः शंसतो राज्यशासनम् ॥); राप्र. २२ राज (राज्य) शेषं राकवत्.

(४) नास्मृ. २०।२४; राक. ५ श्चरित्रविषयाः (श्चारित्रविधयः) भ्योऽस्य तत्प्रा (भ्योऽप्यतः प्रा); राप्र. २२ श्चरित्रविषयाः (श्चारित्रविधयः) चरित्रेभ्योऽस्य तत्प्रा (चारित्रेभ्योऽप्यतः प्रा).

[1]तपःक्रीताः प्रजा राज्ञा प्रभुरासां ततो नृपः ।
तस्मात्तद्वचसि स्थेयं वार्ता चाऽऽसां तदाश्रया ॥

(१) वार्ता कृषिपाशुपाल्यादिवृत्तिः । * राक. ५

(२) पूर्वकृतेन तपसा साधिता राज्ञा प्रजाः । तस्मात् प्रभुत्वात् तद्वचसि स्थेयं पितृवचसीव । वार्ता जीवनं च तदाश्रया पितरीव । अन्यथा मात्स्यन्यायात् विनाशः स्यात् । नाभा.

[2]विदुर्य एव देवत्वं राज्ञो ह्यमिततेजसः ।
तस्य ते प्रतिगृह्णन्तो न लिप्यन्ते कथंचन ॥

[3]लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥

[4]एतानि सततं पश्येन्नमस्येदर्चयेच्च तान् ।
प्रदक्षिणं च कुर्वीत तथा ह्यायुर्न हीयते ॥

राजब्राह्मणयोरधीना जगत्स्थितिः

[5]वर्णाश्रमाणां संस्थानमानुपूर्व्याऽनुपूर्वशः ।
तेषां हेतुरवस्थाने राजा सुप्रस्थितो यदि ॥
राजमूलमिदं राष्ट्रं ब्रह्मक्षत्रपुरोगमम् ।
स्थिते राजनि तद्धर्मे दुराचारान्न कुर्वते ॥

## बृहस्पतिः

राजा सोमाद्यष्टदेवतांशैर्निर्मितः

[6]सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च ।
तेजोमात्रां समुद्धृत्य राज्ञो मूर्तिर्हि निर्मिता ॥

* राप्र. राकवत् ।

(१) नासं. १९।२३ रासां त (रासीत्त); नास्मृ. २०।२५ तस्मात्त (ततस्त); राक. ५ राज्ञा (राज्ञः) ततो (तथा) चाऽऽसां (तासां); राप्र. २२ राज्ञा (राज्ञः) ततो नृपः (नराधिपः) चाऽऽसां (तासां).

(२) नासं. १९।५० ये एव (येस्यैव) ते (हि) कथंचन (कदाचन); नास्मृ. २०।५३.

(३) नासं. १९।५१; नास्मृ. २०।५४.

(४) नासं. १९।५२; नास्मृ. २०।५५ च तान् (त्स्वयम्) तथा ह्यायुर्न हीयते (यथाऽस्याऽऽयुः प्रवर्तते).

(५) विर. ६२४.

(६) पमा. (व्यव.) ४-५.



राजा वर्णाश्रमाणां नेता निर्मितः

तस्य सर्वाणि भूतानि चराणि स्थावराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥
नाराजके कृषिवणिक्कुसीदपरिपालनम् ।
तस्माद्वर्णाश्रमाणां तु नेताऽसौ निर्मितः पुरा ॥

## कात्यायनः

राजा इन्द्ररूपः

[1]सुराध्यक्षश्च्युतः स्वर्गान्नृपरूपेण तिष्ठति ।
कर्तव्यं तेन तन्नित्यं येन तत्त्वं समाप्नुयात् ॥

तत्त्वं सुरेशत्वम् । राक. २१

दुर्बलानां बलं राजा

[2]श्रोत्रिया विधवा बाला दुर्बलाश्च कुटुम्बिनः ।
एते राजबला राज्ञा रक्षितव्याः प्रयत्नतः ॥
अनाथस्य नृपो नाथस्त्वगृहस्य नृपो गृहम् ।
अपुत्रस्य नृपः पुत्रो ह्यपितुः पार्थिवः पिता ॥

## व्यासः

राजा लोकानामाधारः

[3]पर्जन्य इव लोकानामाधारः पृथिवीपतिः ॥

## अङ्गिराः

राजा गुरुः प्रजानाम्

[4]गुरुवद्येन भूपालः पापं दण्डेन भूयसा ।
संस्करोत्यवनाच्चैव तेनासौ गुरुरुच्यते ॥

(१) पापं पापकारिणम् । अवनात् रक्षणात् । राक. ७

(२) संस्करोति शुद्धं करोति । शुद्धं कृत्वाऽवति च । * राप्र. २४

* शेषं राकगतम् ।

(१) राक. २१; राप्र. १३९.

(२) राक. ८४; राप्र. ३०.

(३) रार. ४.

(४) राक. ७; राप्र. २४.

## पराशरः

नित्यं राजदर्शनं कर्तव्यम्

[1]अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्तु नित्यशः ॥

अथ पुण्यवस्तुदर्शनं विधत्ते– अग्निचिदिति । इष्टकाचयनसंस्कृतेनाग्निना युक्तोऽग्निचित् । कपिला कपिलवर्णा धेनुः । सत्री द्वादशाहमारभ्य सहस्रसंवत्सर-पर्यन्तेषु सत्रेषु यस्य कस्यचित् सत्रस्यानुष्ठाता । शास्त्रीयेण मार्गेण प्रजानां पालको राजा । चतुर्थाश्रमस्य यथावत् पालको भिक्षुः । महोदधिः लवणसमुद्रादिः । एते दृष्टाः सन्तो द्रष्टारं पुनन्ति । कुशहिरण्यादयो द्रष्टव्यविशेषाः पुनन्तोऽपि धारणादिकमपेक्षन्ते, न तु दर्शनमात्रेण पुनन्ति । अतस्तद्वैलक्षण्याय दृष्टमात्राः इत्युक्तम् ।

पमा.

## बृहत्पराशरः

ब्रह्मणा इन्द्राग्निवायुयमचन्द्रसूर्यवरुणकुबेराणामंशैः निर्मितः राजा नावमन्तव्यः पूज्यश्च, जगतः स्थितिः राजाधीना

[2]भूभृद्भूमौ परो देवः पूज्योऽसौ परदेववत् ।
स विधाताऽपि सर्वस्य रक्षिता शासिता च सः ॥

[3]इन्द्राग्नियमवित्तेशवारीशमातरिश्वनाम् ।
शीतांश्वीशानमात्राश्च ब्रह्माऽऽदायासृजन्नृपम् ॥

[4]सुत्रामानलवायूनां यमस्येन्दोर्विवस्वतः ।
वारिवित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममे नृपम् ॥

[5]नृपो वेधा नृपः शम्भुर्नृपोऽर्को विष्टरश्रवाः ।
दाता हर्ता नृपः कर्ता नृणां कर्मानुसारतः ॥

(१) पस्मृ. १२।४४.

(२) बृपसं. १२।२.

(३) बृपसं. १२।३ (इन्द्राग्नियमवित्तेशानलेशमातरिश्वनः । शीतांशुस्तीव्रभासश्च ब्रह्मादयोऽसृजन्नृपम् ॥ ).

(४) राप्र. १६.

(५) बृपसं. १२।४.

[1]हर्यश्ववह्नियमवित्तनाथ-
शीतांशुरूपाणि हि बिभ्रतीह ।
सर्वेऽपि भूपास्त्विह पञ्चरूपा-
स्तत्कथ्यमानं शृणुत द्विजेन्द्राः ॥

हर्यश्वः इन्द्रः । राप्र. २०

[2]यदा जिगीषुर्धृतशस्त्रपाणि-
स्त्विषुं समालम्ब्य सचिह्नसैन्यः ।
सर्वान्सपत्नानिह जेतुकाम-
स्तदा स हर्यश्व इवेह भाति ॥

[3]अकारणात्कारणतोऽपि चैष
प्रजां दहेत्कोपसमिद्धरोचिः ।
यदा तदैनं नृपनीतिविज्ञा-
स्तनूनपातं प्रवदन्ति भूपम् ॥

अकारणादिति दुष्टनृपविषयम् । राप्र. २०

[4]धर्मासनस्थः श्रुतिशास्त्रदृष्ट्या
शुभाशुभाचारविचारकृत्स्यात् ।
धर्म्येषु दानं त्वघकृत्सु दण्डं
तदाऽवनीशस्त्विह धर्मराजः ॥

[5]यदा त्वमात्यद्विजयाचकादीन्
प्रहृष्टचित्तस्तु यथोचितेन ।
धनप्रदानेन करोति हृष्टान्
भूभृत्तदाऽसौ द्रविणेशवत्स्यात् ॥

(१) बृपसं. १२।८८ रूपास्तत् ( रूपास्तं ); राप्र. २० वह्नियमवित्तनाथ ( वह्न्यन्तकविश्वनाथ ).

(२) बृपसं. १२।८९ सचिह्न (स विद्ध) ; राप्र. २१.

(३) बृपसं. १२।९०; राप्र. २० प्रजां ( प्रजा ).

(४) बृपसं. १२।९१; राप्र. २१ श्रुति ( श्रुत ) धर्म्येषु ( धर्मेषु ) त्वघकृत्सु ( त्वथ कृत्स्व ).

(५) बृपसं. १२।९२; राप्र. २१ याच ( पाव ) चित्तस्तु ( चित्तश्च ).

[1]समस्तशीतांशुगुणप्रयुक्तो
यदा प्रजामेष शुभाय पश्येत् ।
प्रसन्नमूर्तिर्गतमत्सरः सन्
तदोच्यते सोम इति क्षितीशः ॥

[2]आज्ञा नृपाणां परमं हि तेजो
यस्तां न मन्येत स शस्त्रवध्यः ।
श्रूयाच्च कुर्याच्च वदेच्च भूभृ-
त्तदेव कार्यं भुवि सर्वलोकैः ॥

[3]दुर्धर्षतिग्मांशुसमानदीप्ते-
र्ब्रूयान्मनुष्यः परुषं नृपस्य ।
यस्तस्य तेजोऽप्यवमन्यमानः
सद्यः स पञ्चत्वमुपैति पापात् ॥

[4]योऽह्नाय सर्वं विदधाति पश्येत्
शृणोति जानाति चकास्ति शास्ति ।
कस्तस्य चाऽऽज्ञां न बिभर्ति राज्ञः
समस्तदेवांशभवः स यस्मात् ॥

[5]नास्रक्ष्यद्यदि राजानं नापि दण्डं व्यधास्यत ।
नामंस्यत यदा चैषा काऽभविष्यज्जगत्स्थितिः ॥
नाग्रहीष्यन् पुरोडाशान् मनुष्यपितृदेवताः ।
नाभविष्यच्छ्वकाकानां भागधेयं हुतं हविः ॥
निर्गुणोऽपि यथा स्त्रीणां सदा पूज्यः पतिर्भवेत् ।
तथा राजाऽपि लोकानां पूज्यः स्याद्विगुणोऽपि सन् ॥

## आश्वलायनः

धर्मपर एव राजा पृथिवीपालः

[6]यत्राधर्मरुचिर्भूपो न तत्र सुखमृच्छति ।
लोकोऽयं निखिलं शश्वद्राष्ट्रं तस्य प्रणश्यति ॥
यत्र धर्मरुचिः शश्वद्राजा तत्राखिलो जनः ।
सुखं विन्दति राष्ट्रं च श्रीश्च तत्राधितिष्ठति ॥
तस्माद्धर्मपरो राजा पालयेद्भूमिमां यतः ॥

राजा अष्टलोकपालांशसृष्टो नावमन्तव्यः अर्चनीयश्च

धाता मात्राः समादाय सर्वस्माज्जगतोऽसृजत् ॥
राजानं सर्वभूतानां पतिमीश्वरमुत्तमम् ।
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ॥
स्वगुणेन कलेश्चापि कृतादिषु महीतले ।
राजा कार्यवशादेव लोकपालत्वमृच्छति ॥
अष्टानां लोकपालानामंशभूतो महीपतिः ।
महैश्वर्ये महाभोगे शत्रूणां च पराजये ॥
महाश्रयो महान्राजा महेन्द्रत्वेन राजते ।
राजाऽधर्मप्रवृत्तेषु दहत्यग्निवदुल्बणः ॥
यमवद्दण्डयत्येतानपराधानुरूपतः ।
धनं हरति रक्षोवदसाधूनां महीपतिः ॥
न्याय्यवृत्तेषु धर्मात्मा प्रसीदति जलेशवत् ।
वायुवद्ध्वंसतेऽरीणां बलवान् भवतीपरः ॥
कोशसंवर्धने सोमो भवतीतस्ततो नृपः ॥
सर्वज्ञत्वेमधृष्यत्वे (?) शूली भवति भूपतिः ॥
धृष्णुत्वे हि पतिर्ब्रह्मा कामसृष्टौ सदा नृषु ।
बुद्ध्या संप्राप्य भाद्विष्णुः कामायाम्बुधरा मही ॥
स्थैर्ये महीधरो वीर्ये त्रिपुरारिर्महीपतिः ।
बार्हस्पत्यं चोशनसो नये दधति वै वपुः ॥
सूर्यत्वं तेजसाऽम्बुत्वं प्रसादेन दधाति सः ।
गाम्भीर्ये सागरत्वं च समत्वे चाम्बरत्वताम् ॥
कालाग्नित्वं महाक्रोधे रुद्रत्वं लोकसंहृतौ ।
एवं सर्वामरत्वं च कालेकाले दधाति सः ॥
सर्वदेवमयो राजा तस्माद्भवति मानवः ।
यस्य दर्शनमात्रेण त्रसन्ति स्थावरा अपि ॥
असाधवो दुराचारा राज्ञो धर्मेण रक्षतः ।
यस्य दर्शनमात्रेण तुष्यन्ति ह सुसाधवः ॥
वसन्ति च सुखं राष्ट्रे स्वपन्ति विगतज्वराः ।
एवंविधं महात्मानं कोऽवमन्येत बुद्धिमान् ॥
अवमत्य क्षणादेव विनशिष्यन्ति सान्वयाः ।
राजा भोजो विराट् सम्राट् भूपतिर्जगतीपतिः ॥

(१) बृपसं. १२।९३ ; राप्र. २१.
(२) बृपसं. १२।९४ श्रूयाच्च (ब्रूयाच्च) त्तदेव कार्यं (त्कार्यं तदेवं) ; राप्र. २३.
(३) बृपसं. १२।९५ ; राप्र. २३ तिग्मांशु (तीव्रांशु).
(४) बृपसं. १२।९६ भवः स (भवो हि); राप्र. २३.
(५) बृपसं. १२।५-७.
(६) आश्वस्मृ. ८।३-२२.

सर्वैरर्च्यतमः शश्वद्व्रजद्भिर्दैवतैरपि ।
एवंभूतो भवेद्राजा जीवात्मानं परात्मनः (?) ॥

## मार्कण्डेयपुराणम्

इन्द्रसूर्ययमसोमवायुरूपो राजा

[1]शक्रार्कयमसोमानां तद्वद्वायोर्महीपतिः ।
रूपाणि पञ्च कुर्वीत महीपालनकर्मणि ॥
[2]यथेन्द्रश्चतुरो मासान् वार्योघेणैव भूतलम् ।
आप्याययेत्तथा लोकान् परिचारैर्महीपतिः ॥
परिहारैः दानैः । राप्र. ३१
[3]मासानष्टौ यथा सूर्यस्तोयं हरति रश्मिभिः ।
सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादिना नृपः ॥
[4]यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा प्रियाप्रिये राजा दुष्टादुष्टे समो भवेत् ॥
पूर्णेन्दुमालोक्य यथा प्रीतिमाञ्जायते नरः ।
एवं यत्र प्रजाः सर्वा निर्वृतास्तच्छशिव्रतम् ॥
[5]मारुतः सर्वभूतेषु निगूढश्चरते यथा ।
एवं चरेन्नृपश्चारैः पौरामात्यारिबन्धुषु ॥

## मत्स्यपुराणम्

देवतांशसृष्टो राजा, अष्टौ देवव्रतानि राज्ञः

मत्स्य उवाच–

[1]दण्डप्रणयनार्थाय राजा सृष्टः स्वयंभुवा ।
देवभागानुपादाय सर्वभूतादिगुप्तये ॥
तेजसा यदमुं कश्चिन्नैव शक्नोति वीक्षितुम् ।
ततो भवति लोकेषु राजा भास्करवत्प्रभुः ॥
यदाऽस्य दर्शने लोकः प्रसादमुपगच्छति ।
नयनानन्दकारित्वात्तदा भवति चन्द्रमाः ॥
यथा यमः प्रियद्वेष्ये प्राप्ते काले प्रयच्छति ।
तथा राज्ञा विधातव्याः प्रजास्तद्धि यमव्रतम् ॥
वरुणेन यथा पाशैर्बद्ध एव प्रदृश्यते ।
तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥
परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यति मानवः ।
तथा प्रकृतयो यस्मिन् स चन्द्रप्रतिमो नृपः ॥
प्रतापयुक्ततेजस्वी नित्यं स्यात्पापकर्मसु ।
दुष्टसामन्तहिंस्रेषु राजाऽऽग्नेयव्रते स्थितः ॥
यथा सर्वाणि भूतानि धरा धारयते स्वयम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥
इन्द्रस्यार्कस्य वातस्य यमस्य वरुणस्य च ।
चन्द्रस्याग्नेः पृथिव्याश्च तेजोव्रतं नृपश्चरेत् ॥
वार्षिकांश्चतुरो मासान् यथेन्द्रोऽप्यभिवर्षति ।
तथाऽभिवर्षेत्स्वं राष्ट्रं काममिन्द्रव्रतं स्मृतम् ॥
अष्टौ मासान्यथाऽऽदित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत्करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥
प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥

## विष्णुपुराणम्

सर्वदेवमयो नृपः, तदाज्ञा पालनीया सर्वैः

वेन उवाच–

[1]मत्तः कोऽभ्यधिकोऽन्योऽस्ति कश्चाऽऽराध्यो ममापरः ।
कोऽयं हरिरिति ख्यातो यो वो यज्ञेश्वरो मतः ॥
ब्रह्मा जनार्दनो रुद्र इन्द्रो वायुर्यमो रविः ।
हुतभुग्वरुणो धाता पूषा भूमिर्निशाकरः ॥
एते चान्ये च ये देवाः शापानुग्रहकारिणः ।
नृपस्य ते शरीरस्थाः सर्वदेवमयो नृपः ॥
एतज्ज्ञात्वा यथाऽऽज्ञप्तं यद्यथा क्रियतां तथा ॥

---

(१) मार्क. २४।२३; राप्र. ३०.
(२) मार्क. २४।२४; राप्र. ३०-३१ चारैर्म (हारैर्म).
(३) मार्क. २४।२५; पमा. ४०४ दिना (दिकं); राप्र. ३१ शुल्कादिना नृपः (शुल्कादि भूपतिः).
(४) मार्क. २४।२६-२७; राप्र. ३१.
(५) मार्क. २४।२८; राप्र. ३१ चरेन्नृपश्चा (नृपश्चरेच्चा) त्यारि (त्यादि).

(१) मत्स्य. २२६।१-१२.

(१) विष्णु. १।१३।२०-२३.

लोकपाला राजानो विष्णोर्विभूतिरूपाः

पराशर उवाच–

[1]यदाऽभिषिक्तः स पृथुः पूर्वं राज्ये महर्षिभिः ।
ततः क्रमेण राज्यानि ददौ लोकपितामहः ॥
नक्षत्रग्रहविप्राणां वीरुधां चाप्यशेषतः ।
सोमं राज्येऽददद्ब्रह्मा यज्ञानां तपसामपि ॥
राज्ञां वैश्रवणं राज्ये जलानां वरुणं तथा ।
आदित्यानां पतिं विष्णुं वसूनामथ पावकम् ॥
प्रजापतीनां दक्षं तु वासवं मरुतामपि ।
दैत्यानां दानवानां च प्रह्लादमधिपं ददौ ॥
पितॄणां धर्मराजं तु यमं राज्येऽभ्यषेचयत् ।
ऐरावतं गजेन्द्राणामशेषाणां पतिं ददौ ॥
पतत्रिणां च गरुडं देवानामपि वासवम् ।
उच्चैःश्रवसमश्वानां वृषभं तु गवामपि ॥
शेषं तु नागराजानं मृगाणां सिंहमीश्वरम् ।
वनस्पतीनां राजानं प्लक्षमेवाभ्यषेचयत् ॥
एवं विभज्य राज्यानि दिशां पालाननन्तरम् ।
प्रजापतिपतिर्ब्रह्मा स्थापयामास सुव्रत ॥
पूर्वस्यां दिशि राजानं वैराजस्य प्रजापतेः ।
दिशः पालं सुधन्वानं राजानं सोऽभ्यषेचयत् ॥
दक्षिणस्यां दिशि तथा कर्दमस्य प्रजापतेः ।
पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयत् ॥
पश्चिमस्यां दिशि तथा रजसः पुत्रमच्युतम् ।
केतुमन्तं महात्मानं राजानमभिषिक्तवान् ॥
तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः ।
उदीच्यां दिशि दुर्धर्षं राजानं सोऽभ्यषेचयत् ॥
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्मतः प्रतिपाल्यते ॥
एते सर्वे प्रवृत्तस्य स्थितौ विष्णोर्महात्मनः ।
विभूतिभूता राजानो ये चान्ये मुनिसत्तम ॥
ये भविष्यन्ति येऽतीताः सर्वे भूतेश्वरा द्विज ।
ते सर्वे सर्वभूतस्य विष्णोरंशा द्विजोत्तम ॥
ये च देवाधिपतयो ये च दैत्याधिपास्तथा ।
दानवानां च ये नाथा ये नाथाः पिशिताशिनाम् ॥
पशूनां ये च पतयः पतयो ये च पक्षिणाम् ।
मनुष्याणां च सर्पाणां नागानां चाधिपाश्च ये ॥
वृक्षाणां पर्वतानां च ग्रहाणां चापि येऽधिपाः ।
अतीता वर्तमानाश्च ये भविष्यन्ति चापरे ॥
ते सर्वे तस्य देवस्य विष्णोरंशसमुद्भवाः ।
न हि पालनसामर्थ्यमृते विश्वेश्वरं हरिम् ॥
स्थितौ स्थितं महाप्राज्ञ भवत्यन्यस्य कस्यचित् ॥

## श्रीमद्भागवतम्

सर्वदेवमयो नृपः

[1]नावध्येयः प्रजापालः प्रजाभिरघवानपि ।
यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥

वेन उवाच–

[2]विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः ।
पर्जन्यो धनदः सोमः क्षितिरग्निरपांपतिः ॥
एते चान्ये च विबुधाः प्रभवो वरशापयोः ।
देहे भवन्ति नृपतेः सर्वदेवमयो नृपः ॥
तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ।
बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥

[3]अथाप्युदारश्रवसः पृथोर्हरेः
कलावतारस्य कथामृतादृताः ।
यथोपदेशं मुनिभिः प्रचोदिताः
श्लाघ्यानि कर्माणि वयं वितन्महि ॥

अन्तर्बहिश्च भूतानां पश्यन् कर्माणि चारणैः ।
उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥
नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि ।
दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥
एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् ।
गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥
एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः ।
काले काले यथाभागं लोकयोरुभयोर्हितम् ॥

(१) विष्णु. १।२२।१–२०.

(१) भाग. ४।१३।२३.
(२) भाग. ४।१४।२६–२८.
(३) भाग. ४।१६।३–१३.

वसु काल उपादत्ते काले चायं विमुञ्चति ।
समः सर्वेषु भूतेषु प्रतपन् सूर्यवद्विभुः ॥

तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि ।
भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥

देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः ।
कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥

आप्याययत्यसौ लोकं वदनामृतमूर्तिना ।
सानुरागावलोकेन विशदस्मितचारुणा ॥

अव्यक्तवर्त्मैष निगूढकार्यो
गम्भीरवेधा उपगुप्तवित्तः ।
अनन्तमाहात्म्यगुणैकधामा
पृथुः प्रचेता इव संवृतात्मा ॥

दुरासदो दुर्विषह आसन्नोऽपि विदूरवत् ।
नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥

## लिङ्गपुराणम्

अष्टलोकपालरूपो नृपः नावमन्तव्यः पूजनीयश्च

शैलादिरुवाच –

[1]ब्रह्मपुत्रो महातेजा राजा क्षुप इति स्मृतः ।
अभून्मित्रो दधीचस्य मुनीन्द्रस्य जनेश्वरः ॥

चिरात्तयोः प्रसङ्गाद्वै वादः क्षुपदधीचयोः ।
अभवत्क्षत्रियः श्रेष्ठो विप्र एवेति विश्रुतः ॥

अष्टानां लोकपालानां वपुर्धारयते नृपः ।
तस्मादिन्द्रो ह्यहं वह्निर्यमश्च निर्ऋतिस्तथा ॥

वरुणश्चैव वायुश्च सोमो धनद एव च ।
ईश्वरोऽहं न संदेहो नावमन्तव्य एव च ॥

महती देवता या सा महतश्चापि सुव्रत ।
तस्मात्त्वया महाभाग च्यावनेय सदा ह्यहम् ।
नावमन्तव्य एवेह पूजनीयश्च सर्वथा ॥

(१) लिङ्ग. १।३५।३-७.

## विष्णुधर्मोत्तरपुराणम्

मात्स्यन्यायजन्यनाशपरिहारार्थं धार्मिकराजस्थापना राष्ट्रस्य कर्तव्यम्

मार्कण्डेय उवाच–

[1]सुखासीनो नरश्रेष्ठः पुष्करस्य निवेशने ।
पप्रच्छ पुष्करं रामो धर्मनित्यो जितेन्द्रियः ॥

राम उवाच–

राष्ट्रस्य किं कृत्यतमं तन्ममाऽऽचक्ष्व पृच्छतः ।
आदावेव महाभाग यादोगणनृपात्मज ॥

पुष्कर उवाच–

राष्ट्रस्य कृत्यं धर्मज्ञ राज्ञ एवाभिषेचनम् ।
अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत ॥
अराजकेषु राष्ट्रेषु धर्मावस्था न विद्यते ।
वर्णानामाश्रमाणां च व्यवस्थानं च भार्गव ॥
अराजकेषु राष्ट्रेषु नैव कन्या प्रदीयते ।
विद्यते ममता नैव तथा वित्तेषु कस्यचित् ॥
मात्स्यो न्यायः प्रवर्तेत विश्वलोपस्तथैव च ।
लोके न कश्चिद्विद्येत गुरोर्वचनकारकः ॥
नाधीयीरंस्त्रयीं विद्यां त्रयो वर्णा द्विजातयः ।
देवानां यजनं न स्यादनावृष्टिस्ततो भवेत् ॥
नृलोकसुरलोकौ च स्यातां संशयितावुभौ ।
जनमारी भवेद्घोरा यदि राजा न पालयेत् ॥
प्रजानां रक्षणार्थाय विष्णुतेजोपबृंहितः ।
मानुष्ये जायते राजा देवसत्त्ववपुर्धरः ॥
यस्मिन्प्रसन्ने देवस्य प्रसादस्तूपजायते ।
यस्मिन् क्रुद्धे जनस्यास्य क्रोधः समुपजायते ॥
महद्भिः पुण्यसंभारैः पार्थिवो राम जायते ।
यस्यैकस्य जगत्सर्वं वचने राम तिष्ठति ॥
चातुर्वर्ण्यं स्वधर्मस्थं तेषु देशेषु जायते ।
येषु देशेषु राजेन्द्र राजा भवति धार्मिकः ॥
मारकं न च दुर्भिक्षं नाग्निचौरभयं तथा ।
न च व्यालभयं तेषां येषां धर्मपरो नृपः ॥

(१) विष्ण. २।२।१-१६.

आदौ विन्देत नृपतिं ततो भार्यां ततो धनम् ।
कुराजनि जनस्यास्य कुतो भार्या कुतो धनम् ॥
तस्मात्सर्वप्रयत्नेन राष्ट्रमुख्ये नरेश्वरः ।
परीक्ष्य पूर्वैः कर्तव्यो धार्मिकः सत्यसंगरः ॥

येषां हि राजा भुवि धर्मनित्य-
स्तेषां न लोके भयमस्ति किंचित् ।
तस्मात्प्रयत्नेन नरेन्द्र कार्यो
राष्ट्रप्रधानैर्नृपतिर्विनीतः ॥

[1]निकायेषु निकायेषु पुरा ब्रह्मा जरद्गुरुः ।
असतामुपघाताय राजानः कृतवान् स्वयम् ॥

दण्डप्रणयनाय ब्रह्मणा सृष्टः सर्वदेवमयो राजा,
तस्य तिस्रः शक्तयः वैष्णव्यः

राम उवाच–
[2]दण्डप्रणयनार्थाय राजा सृष्टः स्वयंभुवा ।
देवभागानुपादाय सर्वभूताभिगुप्तये ॥
तेजसा यदयं कश्चिन्नैव शक्नोति वीक्षितुम् ।
तदा भवति लोकेषु राजा भास्करवत्प्रभुः ॥
यदस्य दर्शने लोकः प्रसादमुपगच्छति ।
नयनानन्दकारित्वात्तदा भवति चन्द्रमाः ॥
चारैर्यदाऽयं व्याप्नोति सर्वलोकं यदृच्छया ।
तदा भवति लोकेषु राजा देवः समीरणः ॥
यदाऽपराधिनां चैव विधत्ते निग्रहं नृपः ।
तदा भवति लोकेषु राजा वैवस्वतः सदा ॥
यदा भवति माहात्म्यात्क्रुद्धबुद्धान्नरान्नृपः ।
अनिच्छन्नपि लोकेषु तदा भवति पावकः ॥
करोति च यदा दानं धनानां सर्वतो नृपः ।
विसर्गार्थं सुरश्रेष्ठ तदा भवति वित्तदः ॥
यदा च धनधाराभिर्वर्षन् प्लावयते जगत् ।
तदा स वरुणः प्रोक्तो राजा नयविशारदैः ॥
क्षमाबलेन मनसा धारयन् सकलाः प्रजाः ।
अविशेषेण धर्मज्ञ पार्थिवः पार्थिवो भवेत् ॥

यदाऽऽधिपत्येन जनान् समग्रान् परिरक्षति ।
तदा भवति देवेन्द्रः सर्वभूतानुकम्पिता ॥
[1]उत्साहमन्त्रशक्तिर्या प्रभुशक्तिश्च दैविकी ।
चतस्रः(?) शक्तयस्तत्र वैष्णव्यः परिकीर्तिताः ॥
[2]कः समर्थः प्रजाः पातुं विना वैष्णवतेजसा ।
तिस्रस्तु शक्तयस्तस्य वैष्णव्यः पृथिवीपते (?) ॥

राजब्राह्मणौ पूज्यौ

[3]राजा च ब्राह्मणश्चैव लोके पूज्यतमौ मतौ ॥

## गरुडपुराणम्

अबलानां बलं राजा

[4]धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम् ॥
[5]कालविच्छ्रोत्रियो राजा नदी साधुश्च पञ्चमः ।
एते यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥
[6]अबलस्य बलं राजा बालस्य रुदितं बलम् ।
बलं मूर्खस्य मौनं हि तस्करस्यानृतं बलम् ॥
[7]अनायके न वस्तव्यं न चैव बहुनायके ।
स्त्रीनायके न वस्तव्यं तथा च शिशुनायके ॥

## पद्मपुराणम्

सर्वदेवमयो रामो राजा, दुर्बलानां च बलं रामो राजा

उलूक उवाच –
[8]शृणु देव मम ज्ञाप्यमेकचित्तो नराधिप ।
सोमाच्छतक्रतोः सूर्याद्धनदाच्च यमात्तथा ॥

---

(१) विध. २।३८।६.
(२) विध. २।७१।१–१०.

---

(१) विध. २।७१।११ ; राप्र. २९५ शक्तिर्या (शक्तिभ्यां) स्तत्र (स्तस्य).
(२) विध. २।७१।१२ ; राप्र. २९५ उत्तरार्धे (सर्वदेवमयस्यैवं वारुणे पृथिवीपतेः ॥).
(३) विध. ३।३३८।२९.
(४) गरुड. १।११०।२६ ; राप्र. २५.
(५) गरुड. १।११०।२८.
(६) गरुड. १।११५।४१ ; राप्र. ३० हि (तु).
(७) गरुड. १।११५।६२ ; राप्र. ३० न चैव (तथा च) तथा च शिशु (वस्तव्यं बाल).
(८) पद्म. ५।३४।७६–८६.

जायते वै नृपो राम किंचिद्भवति मानुषः ।
त्वं तु सर्वमयो देव नारायण इवापरः ॥
प्रोच्यते सोमता राजन् सम्यक्कार्ये विचारिते ।
सम्यग्रक्षसि तापेभ्यस्तमोघ्नो हि यतो भवान् ॥
दोषे दण्डात्प्रजानां त्वं यतः पापभयापहः ।
दाता प्रहर्ता गोप्ता च तेनेन्द्र इव नो भवान् ॥
अधृष्यः सर्वयोधेषु तेजसा चानलो भवान् ।
अभीक्ष्णं तपसे पापांस्तेन त्वं राम भास्करः ॥
साक्षाद्वित्तेशतुल्योऽसि अथवा धनदाधिकः ।
चित्तायत्ता तु पत्नी श्रीर्नित्यं ते राजसत्तम ॥
धनदस्य तु कोशेन धनदस्तेन वै भवान् ।
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥
शत्रौ मित्रे च ते दृष्टिः समन्ताद्याति राघव ।
धर्मेण शासनं नित्यं व्यवहारविधिक्रमात् ॥
यस्य रुष्यसि वै राम मृत्युस्तस्याभिधीयते ।
गीयसे तेन वै राजन् यम इत्यभिविश्रुतः ॥
यश्चैष मानुषो भावो भवतो नृपसत्तम ।
आनृशंस्यपरो राजा सर्वेषु कृपयाऽन्वितः ॥
दुर्बलस्य त्वनाथस्य राजा भवति वै बलम् ।
अचक्षुषो भवेच्चक्षुरगतौ च गतिर्भवेत् ॥

राजा एव धर्मः प्रजापालकश्च

[1]त्वं प्रमाणं महाराज राजा हि परमा गतिः ।
राजमूलाः प्रजाः सर्वा राजा धर्मः सनातनः ॥
शास्ता राजा नृणां येषां न ते गच्छन्ति दुर्गतिम् ।
वैवस्वतेन मुक्ताश्च भवन्ति पुरुषोत्तमाः ॥

## अग्निपुराणम्

राजा सूर्यादिदेवतारूपः

[2]तेजसा दुर्निरीक्ष्यो हि राजा भास्करवत्ततः ।
लोकप्रसादं गच्छेत दर्शनाच्चन्द्रवत्ततः ॥
जगद्व्याप्नोति वै चारैरतो राजा समीरणः ।
दोषनिग्रहकारित्वाद्राजा वैवस्वतः प्रभुः ॥

(१) पद्म. ५।३४।१०२–१०३.
(२) अग्नि. २२६।१७–२०.

यदा दहति दुर्बुद्धिं तदा भवति पावकः ।
यदा दानं द्विजातिभ्यो दद्यात्तस्माद्धनेश्वरः ॥
धनधाराप्रवर्षित्वाद्देवादौ वरुणः स्मृतः ।
क्षमया धारयँल्लोकान् पार्थिवः पार्थिवो भवेत् ।
उत्साहमन्त्रशक्त्याद्यैः रक्षेद्यस्माद्धरिस्ततः ॥

## कालिकापुराणम्

राजा मनुष्याणां मित्रम् ; राजा सर्वदेवमयः

[1]अपुत्रस्य नृपः पुत्रो निर्धनस्य धनं नृपः ।
अमातुर्जननी राजा ह्यतातस्य पिता नृपः ॥
अनाथस्य नृपो नाथो ह्यभर्तुः पार्थिवः पतिः ।
अभृत्यस्य नृपो भृत्यो नृप एव नृणां सखा ॥
[2]सर्वदेवमयो राजा तस्मात्त्वामर्थये नृप ॥

## कामन्दकीयनीतिसारः

राजा जगतो नेता

[3]यस्य प्रभावाद्भुवनं शाश्वते पथि तिष्ठति ।
देवः स जयति श्रीमान् दण्डधारो महीपतिः ॥

( १ ) अस्य श्लोकस्याऽऽदावुपन्यासो विघ्नोपशमनार्थः, शास्त्रमारभ्यमाणं हि पूज्यपूजनपूर्वकमविघ्नितप्रसरं भवतीति । तत्र प्रजापालनार्थमिदं शास्त्रम् । तत्पालने च साक्षादधिकृतः स्थितिकर्ता जगतो विष्णुः । पालनशक्तिश्च तस्यैव । यथाऽऽहुः पौराणिकाः– 'स्थितिकर्ताऽस्य जगतो विष्णुरेव सनातनः । न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम् ॥' इति । तदनु तदंशभूतास्तदनुप्रवेशाप्यायितशक्तयश्च शक्रादयो देवाः, स्वायंभुवादयो मनवः, तद्वंशप्रसूताः स्वयं विष्णुनाऽनुप्रविश्योपबृंहिता राजानश्च । यथोक्तम्– 'शक्रादिरूपी परिपाति विश्वमर्केन्दुरूपश्च तमो हिनस्ति । पाकाय योऽग्नित्वमुपेत्य लोकान् बिभर्ति पृथ्वीवपुरव्ययात्मा ॥ सर्वे च देवा मनवः समस्ताः सप्तर्षयो ये मनुसूनवश्च । इन्द्रश्च योऽयं त्रिदशेशभूतो विष्णोरशेषास्तु विभूतय–

(१) कालिका. ५३।३१–३२ ; राप्र. ३०.
(२) कालिका. ५३।३३.
(३) कामी. १।१.

स्ताः ॥ '। तथा- ' अग्निवायुयमार्काणामिन्द्रस्य वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ यस्मादेषां सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ' ( मस्मृ. ७।४,५,८ ) । तथा- ' ततः स भगवान् विष्णुराविवेश च पार्थिवान् । देववन्नरदेवानां नमतीदं जगत्ततः ॥ ' इति । तस्माद्राजा लोकपालांशत्वात् विष्णवनुप्रवेशाच्च देव इति पूजास्पदं भवितुमर्हतीति शास्त्रकारः शास्त्रारम्भे दृष्टादृष्टविघ्नोपशमनार्थं तस्यैव पूजां प्रयुक्तवान् । प्रभावादिति प्रभुशक्तेः । सा च दण्डधारणादाविर्भवति । भुवनं चतुर्वर्णाश्रमलक्षणो लोकः । शाश्वते पथि स्वस्मिन् स्वस्मिन् मार्गे । स्वधर्मकर्माभिरतं तिष्ठति अभ्युदयनिःश्रेयसप्रापकं यथास्वं पन्थानं नातिक्रामतीत्यर्थः । देव इति सविशेषं भगवद्विष्णवनुप्रवेशाल्लोकपालांशत्वाच्च पूज्यतां दर्शयति । श्रीमानिति विष्णुशक्त्यनुप्रवेशं दर्शयति । किंच त्रिवर्गसुखं श्रीमत्ता, तया फलभूतया प्रजापालनवृत्तौ नियुज्यते, अतः स्वार्थसंपन्नः श्रीमानिति । दण्डधार इति कर्मण्यण् । अनेन पालनोपायमाचष्टे । दण्डो हि दमनम्, तं यथार्हप्रयोक्तृतया बिभ्राणो लोकं स्वमार्गे व्यवस्थापयति । उक्तं च- ' चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः । स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु ॥ ' ( कौ. १।४ ) । जम.

(२) शास्त्रकारः स्वशास्त्रादौ नमस्यनमस्कारं करोति । किमर्थमिति चेत्, नमस्यनमस्कारात् पुण्यमुत्पद्यते । तदुत्पद्यमानं विरोधादपुण्यं निवर्तयति । तन्निवृत्तौ तत्कार्याणां विघ्नादीनामभावं मन्यमानः सकलार्थशास्त्रपारावारपारदृश्वा कामन्दकिराह- यस्येति । स देवो महीपतिर्जयति । यस्य महीपतेः प्रभावात् प्रभुशक्तेः, कोशदण्डबलं हि प्रभुशक्तिः, भुवनं जगदिदं शाश्वते नित्ये पथि स्वर्गमोक्षगामिनि मार्गे तिष्ठति अवस्थानं करोति । देव इति । दीव्यतीति । ' दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ' इति धातूक्तसमस्तगुणसंपन्नत्वात् महीपतिरेव देवः । तथा चोक्तं स्मृतिकारैः- ' अग्निवायुयमार्काणामिन्द्रस्य वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ यस्मादेषां सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ बालोऽपि नावमन्तव्यो मनुष्य इति पार्थिवः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ' ( मस्मृ. ७।४,५,८ ) । एवं देवांशैर्निर्मितत्वान्महीपतिरेव देवः । कौटिल्याचार्येणाप्युक्तम्- ' इन्द्रयमस्थानमेतत्, राजानः प्रत्यक्षहेडप्रसादाः, तानवमन्यमानान् दैवो दण्डः स्पृशति । तस्माद्राजानो नावमन्तव्याः । अपि च मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे । धान्यषड्भागं पण्यदशभागं हिरण्यं चाग्न्यं (? चास्य) भागधेयं कल्पयामासुः । तेन भृता राजानः प्रजानां योगक्षेमावहाः । तासां किल्बिषमदण्डकरा हरन्ति । अयोगक्षेमावहाश्च प्रजानाम् । तस्मादुञ्छषड्भागमारण्यका अपि निर्वपन्ति, तस्यैतद्भागधेयं योऽस्मान् गोपायतीति ' ( कौ. १।१३ ) । अतः सर्वस्मात् महीपतिरेव देवः । विशिष्टदेवसद्भावेऽपि महीपतिरेव देवः अधिकृतः । अधिकृतानधिकृतयोः अधिकृते प्रतिपत्तिर्गरीयसी । कौटिल्येन अत एव 'राजवृत्तिः' इत्युक्तम् । स जयति, बाह्याभ्यन्तरानरीन् जयतीत्यर्थः । श्रीमानिति । श्रीर्हि नृपस्याऽऽत्मसंपत्तिः । आत्मसंपत्तिं च स्वयमेव वक्ष्यति- ' शास्त्रं प्रज्ञा ' इत्यादिना । दण्डधार इति । वधः परिक्लेशः अर्थग्रहणं च दण्डः । तं दण्ड्येषु प्रजापालनार्थे धारयतीति दण्डधारः । दण्डभयादेव भुवनं शाश्वते पथि तिष्ठतीति श्लोकार्थः । उनि.

**'राजाऽस्य जगतो हेतुर्वृद्धेर्वृद्धाभिसंमतः ।**
**नयनानन्दजननः शशाङ्क इव तोयधेः ॥**

(१) अथ किमर्थं राजानमधिकृत्येदं शास्त्रमुच्यते इति चेत्, लोकवृद्धिहेतुत्वाद्राज्ञः, तदभावे च लोकविनाशात् । यद्दर्शयति- राजाऽस्येत्यादिना श्लोकद्वयेन । वृद्धिः लोकस्य त्रिवर्गप्राप्तिः, उदधेः उद्धतजलता ।

---

(१) कानी. १।९ ; राप्र. ३० ; नीम. ३२.

वृद्धाभिसंमतः प्रजापालने। तथाहि अस्वामिकाः प्रजाः परस्पराभिभूता व्यवस्थाकारिणं राजानं चक्रुः। यथोक्तम् – 'मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे। धान्यषड्भागं पण्यदशभागं हिरण्यं चास्य भागधेयं प्रकल्पयामासुः' (कौ. १।१३) इति। नयनानन्दजनन इति। नयनानामानन्दं जनयतीति, न्यायेनैव पालनात्। जम.

(२) भवति चात्र नीतिशास्त्रादौ भावसूत्रम्– 'राजवृत्तम्' इति। न ह्यसूत्रितमुपदेक्ष्यन्ति विष्णुगुप्तशिष्याः। प्रजारञ्जनात् राजा, तस्य वृत्तं अनुष्ठानम्, तदुपदिश्यते इति सूत्रार्थः। संबन्धात्तु यद्यपि यथायोगमितरजनवृत्तमपि संभाव्यते तथापि प्राधान्यात् राजवृत्तमभिधीयते इत्याह– राजाऽस्येति। राजा विजिगीषुः अस्य जगतः चतुर्वर्णाश्रमलक्षणस्य हेतुः कारणम्। वृद्धेः अभ्युदयस्य। वृद्धाभिसंमत इति। विद्यावृद्धानामभिसंमतः। विद्याग्रहणात् विद्योक्तानुष्ठानाच्च गुरूणां हृदयंगमो भवतीत्यर्थः। उनि.

**[1]यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा।**
**अकर्णधारा बलवद्विप्लवेतेह नौरिव॥**

(१) यदि राजा न स्यात् सम्यङ्नेता सम्यक् पालयिता, बलवद्विप्लवेत अत्यर्थं विनश्येत्। इहेति भूमण्डले। जम.

(२) अन्वयेन जगतो वृद्धेर्हेतुत्वमभिधाय नृपतेर्व्यतिरेकेणाप्यभिधातुमाह– यदीति। यदि नरपतिः न स्यात्तदा प्रजा विप्लवेतेति संबन्धः। सम्यङ्नेतेति। सम्यक् शास्त्रस्थित्या नेता नायकः प्रजायाः न्याय्येन मार्गेण प्रजां नयति कर्णधारो नावमिव। ततः प्रजेति। तदनन्तरमेव प्रजा चतुर्वर्णाश्रमलक्षणो लोकः। अकर्णधारेति। करिणोऽङ्कुशमिव नावां नियामकः काष्ठविशेषः कर्णः 'अरिण' इति लोके प्रसिद्धः। तं धारयतीति कर्णधारः। स न विद्यते यस्या नावः सा तथोक्ता। बलवदिति। प्रतीकारानुत्क्रम्येत्यर्थः। विप्लवेतेति। नश्येत्। इह जगति। नौरिव यानपात्रवत्। उनि.

**[1]धार्मिकं पालनपरं सम्यक् परपुरंजयम्।**
**राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः॥**

(१) कीदृशं पुनस्तमिच्छन्तीत्याह– धार्मिकमित्यादि। धर्मासुरलोभविजयिनस्त्रयो राजानः। तेषां धार्मिकं धर्मविजयिनम्, धर्माविरोधेन प्रवृत्तत्वात्, प्रजापतिमिवाभिमन्यन्ते प्रजाः लोकाः। लोभासुरविजयिनौ तु सर्वलोकोद्वेगकारित्वादनभिमतौ। तस्य च व्यापारद्वयं सम्यक् स्वराष्ट्रपरिपालनम्, अपायादुद्धरणं च। यदाह– 'धार्मिकं पालनपरं सम्यक् परपुरंजयम्' इति। पुरं दुर्गं, तदवमर्दनाच्छत्रुरुच्छिन्नो भवति, अन्यथा तदवष्टम्भादुपहन्यात्। तदनेन स्वपरमण्डलभेदात् द्विविधो राजव्यापार इत्याख्यातो भवति। तत्र धर्मविजयिनः पूर्वं प्रधानमितरदानुषङ्गिकम्, शत्रूननवजित्य स्वराष्ट्रानुग्रहस्याशक्यत्वात्। जम.

(२) सम्यङ्नेतरि राजन्यपि प्रजाभिः कृतज्ञतया एवंभूताभिर्भवितव्यमित्याह– धार्मिकमिति। धर्मो हि राज्ञां नीतिशास्त्रोक्तः। तद्यथा– 'राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम्। दक्षिणा वृत्तिसाम्यं तु दीक्षा तस्याभिषेचनम्॥'। गृहस्थसामान्यतस्तु सर्वेषामहिंसा, सत्यम्, शौचम्, अनसूया, आनृशंस्यम्, क्षमा च, देवतातिथिपूजा, भृत्येषु त्यागः, शेषभोजनं चेत्यादिकम्। तेन चरतीति धार्मिकः, तम्। पालनपरमिति प्रजापालनपरम्। तथा चोक्तं गुरुणा– 'प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्। नाऽऽत्मप्रियं हितं राज्ञः प्रजानां च प्रियं हितम्॥' इति। सम्यक् परपुरंजयमिति। यथोक्तनीत्यनुष्ठानात् परेषां दुर्गाणि पुराणि जयतीति परपुरंजयः महाविजिगीषुः, तम्। राजानमभिमन्यन्ते मनस्यवधारयन्ति। प्रजापतिमिव सृष्टिकर्तारं यथोत्पत्तिस्थितिकर्तारम्। प्रजाः चतुर्वर्णाश्रमलक्षणाः। उनि.

---

(१) कानी. १।१० ; राप्र. ३० बलवद्वि (जलधौ वि); नीम. ३२ राप्रवत्.

(१) कानी. १।११ ; नीम. ३२.

'आयत्तं रक्षणं राज्ञि वार्ता रक्षणमाश्रिता।
वार्ताच्छेदे हि लोकोऽयं श्वसन्नपि न जीवति ॥

(१) एवं च कृत्वा पूर्वमेव व्यापारमभिसंधाय वार्तिकभूतान् षट् श्लोकानाह । तत्र पालनमधिकृत्योच्यते– आयत्तमित्यादि । वार्ता कृष्यादिलक्षणा रक्षणमाश्रिता, अन्यथा नीरक्षा परैरुपहन्यमाना कथं प्रवर्तेत ? छेदः अप्रवृत्तिः । श्वसन्नपि चेष्टमानोऽपि कर्मान्तरेषु न जीवति, वार्ताप्रतिबद्धत्वाच्छरीरस्थितेः । जम.

(२) नरपतेरभावे प्रजाविप्लवस्य युक्तिमभिधातुमाह– आयत्तमिति । आयत्तं स्वायत्तम् । रक्षणं कण्टकादिभ्यः परित्राणम्। राज्ञः दण्डधारस्य विजिगीषोः। वार्तेति । वृत्तिरेव वार्ता प्रजानाम्, 'कृषिः पाशुपाल्यं वाणिज्यं च वार्ता' इति वचनात् । सा वार्ता रक्षणमाश्रिता चौरादिभ्यः परित्राणमाश्रिता । वार्ताच्छेदेन वार्तानाशेन लोकोऽयं जगदिदं श्वसन्नपि किंचित्कालमुच्छ्वसन्नपि न जीवति न प्राणिति । एतदुक्तं भवति– नृपाभावात् रक्षणाभावः, तदभावात् वार्ताभावः, वार्ताभावाल्लोकस्य प्राणाभावो भवतीति । जगद्रक्षणार्थं राज्ञा दण्डधारेण भवितव्यमित्यर्थः । उनि.

'पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥

(१) तत्र पर्जन्यः सस्यहेतुना प्रवर्षणेनाऽऽश्रयः। राजा पालनेन । द्वयोराधारत्वेऽपि राजा त्वतिरिच्यते । यदाह– विकलेऽपीति। वृष्ट्या विकलेऽपि जीव्यते कन्दशाकमत्स्याद्यशनेन, न तु भूपतौ रक्षाविकले, परस्पराभिभवात्। जम.

(२) अमुमेवार्थं द्रढयितुमाह– पर्जन्य इति । पर्जन्यः प्रावृट्कालः, स यथा सस्यादेरुत्पादनात् भूतानां प्राणिनां जीवनहेतुत्वादाधारः, तथैव दण्डधार इति पृथिवीपतिः । स लोकानामाधारः । विकलेऽपि पर्जन्ये विनष्टेऽपि वर्षाकाले जीव्यते हि कन्दमूलफलाहारैः । श्रूयते हि द्वादशवार्षिक्यामप्यवृष्टौ वन्याहारैः प्राणिभिः प्राणधारणं कृतमिति । भूपतौ तु विकले दण्डधाराभावादहरेव मात्स्यन्यायात् केनापि न जीव्यत इति । उनि.

'प्रजां संरक्षति नृपः सा वर्धयति पार्थिवम् ।
वर्धनाद्रक्षणं श्रेयस्तन्नाशेऽन्यत्सदप्यसत् ॥

(१) प्रजां संरक्षतीत्येतद्दर्शयति– पालनमस्य न निष्फलम्, परस्परोपकारादिति । सा प्रजा वर्धयति धान्यषड्भागादिना। तत्रापि वर्धनात् रक्षणं श्रेयः । कारणमाह– तन्नाश इति । रक्षणाभावे अन्यदिति वर्धनं सदप्यसदेव भवतीत्यर्थः । यदपि किंचित् कथंचित् प्रजयाऽस्य वर्धनं क्रियते, तदप्यसत् न परिशुद्धं प्रजाकिल्बिषसन्नीतमित्यर्थः । जम.

(२) प्रजापार्थिवयोः परस्परोपकारित्वं दर्शयितुमाह –प्रजामिति । प्रजां चातुर्वर्ण्यं संरक्षति सम्यक् प्रतिपालयति नृपः पृथिवीपतिः दण्ड्यदण्डनात् । सा प्रजा वर्धयति वृद्धिं नयति धान्यहिरण्यपण्यादिभिः पार्थिवं पृथिवीश्वरम् । वर्धनात् उक्तलक्षणात् रक्षणं कण्टकेभ्यः पालनं श्रेयः श्रेयस्करम् । तन्नाशे रक्षणाभावे अन्यत् वर्धनं सदपि विद्यमानमपि असत् अशोभनम्, निरयहेतुत्वात् । उनि.

'न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाम् ।
त्रिवर्गेणोपसंधत्ते निहन्ति ध्रुवमन्यथा ॥

(१) 'सम्यक्' (?) इत्येतदधिकृत्याऽऽह– न्यायप्रवृत्त इत्यादि । मन्वादिप्रणीतः पालनधर्मो न्यायः । तद्विपरीतस्त्वन्यायः । त्रिवर्गेण धर्मार्थकामैः उपसंधत्ते योजयति वैजवनवत् । अन्यथेति । अन्यायप्रवृत्तः निहन्ति नहुषवत् । जम.

(२) 'प्रजां संरक्षति नृपः' इत्युक्तम्, स किमनुष्ठानस्तद्रक्षणक्षमः ? इत्येतद्दर्शयितुमाह– न्यायेति ।

(१) कानी. १।१२ ; उनि. राज्ञि (राज्ञः) च्छेदे हि (च्छेदेन).

(२) कानी. १।१३.

(१) कानी. १।१४ ; रार. ५५ पार्थिवम् (तं नृपम्) ऽन्यत्सद (हि तद).

(२) कानी. १।१५ ; रार. ५५ प्रजाम् (प्रजाः) णोप (णाभि); उनि. प्रजाम् (प्रजाः); नीम. ३२ उनिवत्.

न्यायप्रवृत्त इति । नीतिशास्त्रोक्तमनुष्ठानं न्यायः, तस्मिन् प्रवृत्तः न्यायप्रवृत्तः नृपतिः महीपतिः आत्मानं त्रिवर्गेण धर्मार्थकामलक्षणेन उपसंधत्ते संयोजयति प्रथमम् । अथ च अनन्तरं प्रजास्त्रिवर्गेणोपसंधत्ते इति समुच्चयः । तथा चोक्तं कौटिल्येन- 'सुविज्ञाय प्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति, दुष्प्रणीतस्तु कामक्रोधाभ्यामज्ञानात् वानप्रस्थपरिव्राजकानपि कोपयति, किं पुनर्गृहस्थान् ?' (कौ. १।४) इति । ततश्च सम्यक् दण्डप्रणयनमेव राज्ञां न्यायः । निहन्ति ध्रुवमन्यथेति । अन्यायप्रवृत्तो ध्रुवं निश्चयेन आत्मानं निहन्ति, अनन्तरं मात्स्यन्यायेन प्रजाश्च । तस्मान्न्यायप्रवृत्तेन राज्ञा भवितव्यमिति भावः । उनि.

*[1]सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्तकः ।
तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः ॥

### शुक्रनीतिः

प्रजानां नेता आचारप्रेरको राजा

†[2]वृष्टिशीतोष्णनक्षत्रगतिरूपस्वभावतः ।
इष्टानिष्टाधिकन्यूनाचारैः कालस्तु भिद्यते ॥
आचारप्रेरको राजा ह्येतत्कालस्य कारणम् ।
यदि कालः प्रमाणं हि कस्माद्धर्मोऽस्ति कर्तृषु ॥
राजदण्डभयाल्लोकः स्वस्वधर्मपरो भवेत् ।
यो हि स्वधर्मनिरतः स तेजस्वी भवेदिह ॥
विना स्वधर्मान्न सुखं स्वधर्मो हि परं तपः ।
तपः स्वधर्मरूपं यद्वर्धितं येन वै सदा ॥
देवास्तु किंकरास्तस्य किं पुनर्मनुजा भुवि ।
सुदण्डैर्धर्मनिरताः प्रजाः कुर्यान्महाभयैः ॥

[1]राजाऽस्य जगतो हेतुर्वृद्धयै वृद्धाभिसंमतः ।
नयनानन्दजनकः शशाङ्क इव तोयधेः ॥

वृद्धाभिसंमतः सुविज्ञप्राचीनजनमतानुवर्ती राजा तोयधेः समुद्रस्य शशाङ्कः चन्द्रः इव नयनानन्दजनकः, लोकानामिति शेषः, तथा अस्य जगतः वृद्धयै अभ्युदयाय हेतुः । शुनीटी.

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥

यदि नरपतिः सम्यक् नेता नायकः कार्यदर्शीति यावत्, न स्यात् ततः तदा प्रजा जलधौ समुद्रे अकर्णधारा नाविकरहिता नौः अर्णवतरिरिव इह जगति विप्लवेत विपद्यते । शुनीटी.

न तिष्ठन्ति स्वस्वधर्मे विना पालेन वै प्रजाः ।
प्रजया तु विना स्वामी पृथिव्यां नैव शोभते ॥

प्रजाः पालेन रक्षकेण विना स्वस्वधर्मे न तिष्ठन्ति । वैशब्दोऽवधारणे । तथा स्वामी प्रजया विना पृथिव्यां न शोभते । राजप्रजयोः परस्परसापेक्ष्यं प्रयोजनीयमिति भावः । शुनीटी.

न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाः ।
त्रिवर्गेणोपसंधत्ते निहन्ति ध्रुवमन्यथा ॥

नृपतिः न्यायप्रवृत्तः न्यायपरायणः सन् आत्मानं प्रजाश्च त्रयाणां धर्मार्थकामानां वर्गैः उदसंधत्ते योजयति, अन्यथा अन्यायप्रवृत्तश्चेत् आत्मानं प्रजाश्च ध्रुवं निश्चितं निहन्ति नाशयति । शुनीटी.

जगतः रक्षणार्थं इन्द्रादिदेवमयो राजा ब्रह्मणा सृष्टः

[2]अराजके हि सर्वस्मिन् सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चापि मात्रा निर्हृत्य शाश्वतीः ॥

सर्वस्मिन् जगति अराजके अत एव भयात् सर्वतः समन्ततः विद्रुते पलायिते सति प्रभुः ब्रह्मा अस्य

---

* व्याख्यासंग्रहः 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ७५६) द्रष्टव्यः ।

† 'वृष्टिशीतोष्ण०' इत्यारभ्य पञ्च श्लोकानां व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन्प्रकरणे (पृ. ७६२) द्रष्टव्यम् ।

(१) कानी. २।३४; नीम. ३४.
(२) शुनी. १।२१-२५.

(१) शुनी. १।६४-६७.
(२) शुनी. १।७१-७७.

सर्वस्य जगतः रक्षार्थं इन्द्रस्य अनिलस्य यमस्य अर्कस्य अग्नेः वरुणस्य चन्द्रस्य कुबेरस्य च अष्टानामेतेषां देवानां शाश्वतीः चिरंतनीः तेजस्विनीरित्यर्थः, मात्राः अंशान् निर्हृत्य संगृह्य राजानमसृजत् सृष्टवान् । शुनीटी.

**जङ्गमस्थावराणां च ह्रीशः स्वतपसा भवेत् ।**
**भागभाग्रक्षणे दक्षो यथेन्द्रो नृपतिस्तथा ॥**

यथा इन्द्रः स्वतपसा निजेन तपोबलेन जङ्गमस्थावराणां चराचराणां जगतां ईशः अधिपतिः सन् भागभाक् तथा रक्षणे दक्षः रक्षाकुशलः नृपतिः भागभाक् करग्राही भवेत् । शुनीटी.

**वायुर्गन्धस्य सदसत्कर्मणः प्रेरको नृपः ।**
**धर्मप्रवर्तको धर्मनाशकस्तमसो रविः ॥**

वायुः गन्धस्य प्रेरकः, नृपस्तु सदसत्कर्मणः प्रेरकः धर्मप्रवर्तकः तथा तमसः रविरिव अधर्मस्य नाशकः । शुनीटी.

**दुष्कर्मदण्डको राजा यमः स्याद्दण्डकृद्यमः ।**
**अग्निः शुचिस्तथा राजा रक्षार्थं सर्वभागभुक् ॥**

दुष्कर्मणां पापिनां दण्डकः दण्डयिता राजा यमः स्यात् यतः यमः दण्डकृत् । अग्निः शुचिः पवित्रः सन् यथा सर्वेषां देवानां भागं अग्नौ हुतमिति भावः, भुङ्क्ते इति सर्वभागभुक्, तथा शुचिः राजा रक्षार्थं सर्वेषां जगतां प्रजानामित्यर्थः, भागभुक् स्वग्राह्यांशग्राहीत्यर्थः । शुनीटी.

**पुष्यत्यपां रसैः सर्वं वरुणः स्वधनैर्नृपः ।**
**करैश्चन्द्रो ह्लादयति राजा स्वगुणकर्मभिः ॥**

वरुणः अपां रसैः सलिलरसैः सर्वं जगत् पुष्यति, नृपः स्वधनैः सर्वं पुष्यति । चन्द्रः करैः किरणैः सर्वं ह्लादयति प्रीणयति, राजा स्वस्य गुणैः दयादाक्षिण्यादिभिः कर्मभिः रथ्यासंक्रमादिभिश्च सर्वं रञ्जयति । शुनीटी.

**कोशानां रक्षणे दक्षः स्यान्निधीनां धनाधिपः ।**
**चन्द्रोंऽशेन विना सर्वैरंशैर्नो भाति भूपतिः ॥**

कोशानां धनानां रक्षणे संचये दक्षः पटुः राजा निधीनां धनाधिपः कुबेरः इव प्रभूतधनशाली स्यात् । कोशानां संचये आवश्यकतामाह– चन्द्रः अंशेन विना न भाति, भूपतिस्तु सर्वैः अंशैः विपुलकोषैः विना नो भाति न शोभते । शुनीटी.

प्रजानां दासः स्वामी देववत् राजा धर्मनीतिपरः

**[1]स्वभागभृत्या दास्यत्वे प्रजानां च नृपः कृतः ।**
**ब्रह्मणा स्वामिरूपस्तु पालनार्थं हि सर्वदा ॥**

ब्रह्मणा विधात्रा स्वभागः राजग्राह्यांशः एव भृतिः वेतनं तया प्रजानां दास्यत्वे किंकरत्वे स्थित इति शेषः, नृपः सर्वदा पालनार्थं प्रजानामेव रक्षणार्थं हि स्वामिरूपः कृतः कल्पित इत्यर्थः । राज्ञः राजस्वरूपवेतनग्रहणात् प्रजानां भृत्यत्वं रक्षणकारित्वात् स्वामित्वं चेति भावः । शुनीटी.

**[2]कुबेरता शतगुणाधिका सर्वगुणात्ततः ।**
**ईशता चाधिकतरा सा नाल्पतपसः फलम् ॥**

कुबेरता धनपतित्वं शतगुणेभ्यः अधिका श्रेष्ठा, ईशता स्वामित्वं तु ततः सर्वगुणात् अधिकतरा श्रेष्ठतरा । सा कुबेरता ईशता च अल्पतपसः फलं न, बहुतपस्यायाः फलमित्यर्थः । शुनीटी.

**स दीव्यति पृथिव्यां तु नान्यो देवो यतः स्मृतः ॥**

सः धनस्वामी प्रभुश्च पृथिव्यां दीव्यति क्रीडति विराजते इत्यर्थः । यतः अन्यः जनः देवः न स्मृतः न कथितः । धनवान् प्रभुरेव देवशब्देनाभिधीयते इति भावः । शुनीटी.

**यस्याऽऽश्रितो भवेल्लोकस्तद्वदाचरति प्रजा ।**
**भुङ्क्ते राष्ट्रफलं सम्यगतो राष्ट्रकृतं त्वघम् ॥**

लोकः यस्य प्रभोः आश्रितः भवेत्, प्रजा तद्वत् प्रभुवत् प्रभुमतानुसारेणेत्यर्थः, आचरति । अतः कारणात् स्वामी राष्ट्रफलं सुखादिकं राष्ट्रकृतं अघं पापं च, तुशब्दश्चार्थः, सम्यक् भुङ्क्ते । शुनीटी.

(१) शुनी. १।१८८.
(२) शुनी. ४।३।३–६.

**स्वस्वधर्मपरो लोको यस्य राष्ट्रे प्रवर्तते ।**
**धर्मनीतिपरो राजा चिरं कीर्तिं स चाश्नुते ॥**

यस्य राष्ट्रे लोकः स्वस्वधर्मपरः निजनिजानुष्ठानतत्परः प्रवर्तते चलति, सः राजा धर्मनीतिपरः भवतीति शेषः, चिरं कीर्तिं च अश्नुते लभते ।

शुनीटी.

**[1]धर्माधर्मप्रवृत्तौ तु नृप एव हि कारणम् ।**
**स हि श्रेष्ठतमो लोके नृपत्वं यः समाप्नुयात् ॥**

नृप एव धर्मस्य अधर्मस्य च प्रवृत्तौ कारणं हि । यः नृपत्वं समाप्नुयात् लोके जगति स हि स एव श्रेष्ठतमः ।

शुनीटी.

## नीतिवाक्यामृतम्

राजा परमं दैवतम्

**[2]राजा हि परमं दैवतम्, नासौ कस्मैचित् प्रणमत्यन्यत्र गुरुजनेभ्यः ॥**

अथ राजा यादृशो भवति तदाह — राजेति । योऽसौ राजा स किंविशिष्टः ? परमं दैवतं कर्तारमित्यर्थः । तेन कस्यचिन्नम्रतां न गच्छति । अन्यत्र गुरुजनेभ्यः पूज्यान् मुक्त्वा मातृपितृपूर्वकान् । तथा च भृगुः– 'अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च । तेजसाऽस्य नृपस्तेन कस्यचिन्न नतिं व्रजेत् ॥' ।

नीवाटी.

न्यायतः पालनं राजप्रयोजनम्

**[3]न्यायतः परिपालके राज्ञि प्रजानां कामदुघा भवन्ति सर्वा दिशः ॥**

अथ न्यायतः परिपालके राज्ञि प्रजानां यद्भवति तदाह– न्यायत इति । यदि राजा न्यायेन परिपालनं करोति तत् प्रजानां सर्वा दिशः कामदुघा भवन्ति । कार्यैः कृषिवाणिज्यकुसीदकरणादिभिः सर्वलोकः सर्वासु दिक्षु वाञ्छितं प्राप्नोतीत्यर्थः । तथा च– 'राज्ञि चिन्तापरे देशे स्वार्थसिद्धिः प्रजायते । क्षेमेण कर्षकाः सस्यं प्राप्नुयुर्धनिनो धनम् ॥' ।

नीवाटी.

**काले वर्षति मघवान् सर्वाश्चेतयः प्रशाम्यन्ति राजानमनुवर्तन्ते सर्वेऽपि लोकपालाः ॥**

अथान्यदपि यद्भवति तदाह– काल इति । ये लोकपालाः शक्रप्रभृतयस्ते राजानमनुवर्तन्ते । यदि राजा परिपालको भवति तत् लोकपाला अपि तस्य राष्ट्रे वृष्ट्यादिभिः प्रजासौख्यं कुर्वन्ति । यदि पुनः राजा लञ्चादिभिः पीडयति...... । तथा च गुरुः– 'इन्द्रादिलोकपाला ये पार्थिवे परिपालके । पालयन्ति च तद्राष्ट्रं वामे वामं च कुर्वते ॥' ।

नीवाटी.

**तेन मध्यममप्युत्तमं लोकपालं राजानमाहुः ॥**

अथ राजा मध्यमोऽप्युत्तमो येन भवति तदाह– तेनेति । तेन कारणेन आहुः कथयन्ति स्म । के ? जनाः लोकाः । कम् ? राजानम् । किंविशिष्टम् ? उत्तमम् । किंविशिष्टमपि ? मध्यममपि । कथंभूतम् ? लोकपालं प्रजारक्षणतत्परम् । तथा च रैभ्यः– 'लञ्चादिभिरतो राजा मध्यमोऽप्यथ मानवैः । श्लाघ्यते यस्तु लोकानां सम्यक् स्यात्परिपालकः ॥' ।

नीवाटी.

ब्रह्मविष्णुमहेशात्मको राजा प्रत्यक्षदैवतम्, स नावमन्तव्यः

**[1]त्रिपुरुषमूर्तित्वान्न भूभुजः प्रत्यक्षं दैवमस्ति ॥**

अथ राज्ञः स्वरूपमाह– त्रिपुरुषेति । नास्ति न विद्यते । किं तत् ? दैवम् । किंविशिष्टम् ? प्रत्यक्षम् । कस्मात् ? भूभुजः राज्ञः सकाशात् । कुतः ? त्रिपुरुषमूर्तित्वात् हरिहरहिरण्यगर्भमूर्तित्वात् । एतदुक्तं भवति — येऽन्ये देवास्ते परोक्षाः, न केनापि दृश्यन्ते, एष पुना राजा प्रत्यक्षं ब्रह्मविष्णुमहेश्वरमयः, तस्मादनेन समो देवो नास्ति । तथा च मनुः– 'सर्वदेवमयो राजा सर्वेभ्योऽप्यधिकोऽथवा । शुभाशुभफलं सोऽत्र देयाद्देवो भवान्तरे ॥' ।

नीवाटी.

**प्रतिपन्नप्रथमाश्रमः परे ब्रह्मणि निष्णातमतिरुपासितगुरुकुलः सम्यग्विद्यायामधीती कौमारवयोऽलंकुर्वन् क्षत्रपुत्रो भवति ब्रह्मा ॥**

अथ राजा येन प्रकारेण ब्रह्मा भवति तदाह– प्रतिपन्नेति । ब्रह्मा भवति । कोऽसौ ? क्षत्रपुत्रः क्षत्रियः ।

(१) शुनी. ४।७।४२२.
(२) नीवा. ५।६७.
(३) नीवा. १७।४५–४७.

(१) नीवा. २९।१६–१९.

कथंभूतः ? प्रतिपन्नप्रथमाश्रमः, प्रतिपन्नः रचितः प्रथमाश्रमः ब्रह्मचारिलक्षणः येन सः। तथा क्षत्रियोऽपि द्वादशमे ब्रह्मचारित्रतं धत्ते। तथा परे ब्रह्मणि विष्णुरूपे निष्णातः (? तमतिः) संसक्त इति। क्षत्रियस्य यत् ब्रह्मचारित्रतं तदेव ब्रह्म, तत्र निष्णातबुद्धिः। तथा ब्रह्मा उपासितगुरुकुलः, उपासितं सृष्टं गुरुकुलं बृहद्धंसमरीचिप्रमुखं येन सः। तथा ब्रह्मा विद्यायां वेदलक्षणायां अधीती पाठकः, क्षत्रियश्च पुनर्विद्यायाश्चतुर्विधाया आन्वीक्षिकीपूर्वाया अधीती पाठकः। तथा ब्रह्मा कौमारवयोऽलंकुर्वन् कुमारवयसः कुमारादयो ये षट् बुधास्तानलंकरोति, क्षत्रियस्तु कौमारं युवराजलक्षणं यद्वयस्तदलंकरोति। नीवाटी.

**संजातराज्यलक्ष्मीदीक्षाभिषेकं स्वगुणैः प्रजास्वनुरागं जनयन्तं राजानं नारायणमाहुः ॥**

अथ विष्णुस्वरूपो राजा यथा भवति तदाह—संजातेति। 'नाविष्णुः पृथिवीपतिः' इति वाक्यात् योऽसौ विष्णुस्तस्य किल लक्ष्मीर्भवति, तया सह दीक्षाभिषेको भवति, तथा च नारायणः। ब्रह्म सृजति हरिस्तद्धरः संहरति(?) तथा राजाऽपि प्रजापालनेन रञ्जयमानो नारायणत्वमाप्नोति। तथा 'नाविष्णुः पृथिवीपतिः' इति वचनात्। तथा च व्यासः— 'नामुनिः कुरुते काव्यं नाविष्णुः पृथिवीपतिः। नाबलिर्दानं(?) स्यान्नावीरः शौर्यभाग्भवेत् ॥'। नीवाटी.

**प्रवृद्धप्रतापतृतीयलोचनानलः परमैश्वर्यमातिष्ठमानो राष्ट्रकण्टकान् द्विषद्दानवाञ्छेत्तुं यतते विजिगीषुभूपतिर्भवति पिनाकपाणिः ॥**

अथ राजा पिनाकपाणिर्यथा भवति तथाऽऽह—प्रवृद्धेति। योऽसौ पिनाकपाणिः महेश्वरः तस्य तृतीयं नयनं तदाग्नेयम्, स तेन तृतीयनयनसंभवो लोचनानलः(?), राजा प्रवृद्धप्रतापानलः। तथा पिनाकपाणिः परमैश्वर्यमातिष्ठमानः असुरान् द्विषद्दानवान् उच्छेत्तुं यतते यत्नं करोति यथा, तथा राजाऽपि जिगीषू राष्ट्रकण्टकानेवासुरान् द्विषद्दानवान् दुष्टदायादान् उच्छेत्तुं यत्नपरः पिनाकपाणिर्भवतीति। नीवाटी.

**[1]चित्रगतमपि राजानं नावमन्येत, क्षात्रं हि तेजो महतीसत्पुरुषदेवतास्वरूपेण तिष्ठति ॥**

अथ भूपतेः यत्कर्तव्यं तदाह— चित्रेति। यदि चित्रगतोऽपि (राजा) दृश्यते तदपि नावमन्येत नावज्ञया द्रष्टव्यो हीनकोशोऽयं परिग्रहरहितः। यतः क्षात्रं तेजः पुरुषशरीरदेवतास्वरूपेण तिष्ठति। तथा च गर्गः— 'नावमन्येत भूपालं हीनकोशं सुदुर्बलम्। क्षात्रं तेजो यतस्तस्य देवरूपं तनौ वसेत् ॥'। नीवाटी.

## अनिर्दिष्टकर्तृकवचनम्

धर्मो राजाधीनः

**[2]राजा धर्मस्य कारणम् ॥**

---

(१) नीवा. ३२।६६.

(२) मच. ७।१; राप्र. १६.

# *राजप्रकाराः

## महाभारतम्

राज्ञो यस्याऽऽज्ञायामन्ये राजानस्तिष्ठन्ति स राज्ञां राजा सम्राट् यथा हरिश्चन्द्रः

नारद उवाच–

[1]यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो ।
तत्तेऽहं संप्रवक्ष्यामि माहात्म्यं तस्य धीमतः ॥

'यन्मां पृच्छसि' इत्यादेः 'दाशार्हनगरीं प्रति' इत्यन्तस्य परमतात्पर्यं शक्रलोकप्रापको राजसूयः अतियत्नसाध्यः, सिद्धश्च तीव्रानर्थहेतुः, अतः ब्रह्मसभाप्रापकमेव व्रतमनुष्ठेयमिति । अवान्तरतात्पर्यं तु भूभारहरणार्थं ब्रह्मणा प्रेरितो नारदः सर्वसंहारहेतुं राजसूयं युधिष्ठिरद्वारा कारयितुं युधिष्ठिरं कृष्णं चोद्योजयतीति । नीटी.

स राजा बलवानासीत्सम्राट् सर्वमहीक्षिताम् ।
तस्य सर्वे महीपालाः शासनावनताः स्थिताः ॥

'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाऽऽज्ञया राज्ञः स सम्राडिति शब्द्यते ॥'। नीटी.

[2]तेनैकं रथमास्थाय जैत्रं हेमविभूषितम् ।
शस्त्रप्रतापेन जिता द्वीपाः सप्त नरेश्वर ॥

'जम्बूद्वीपः कुशद्वीपः शाकः क्रौञ्चश्च शाल्मलिः । गोमेदः पुष्करश्चैव सप्त द्वीपाः प्रकीर्तिताः ॥'। नीटी.

[3]स विजित्य महीं सर्वां सशैलवनकाननाम् ।
आजहार महाराज राजसूयं महाक्रतुम् ॥

* ये न राजानः अपि तु राजसमा भृत्या अनुसामन्तादयः तेऽप्यत्र संगृहीताः ।

(१) भा. २।११।५२–५३; भामु. २।१२।१०–११.

(२) भा. २।११।५४ ; भामु. २।१२।१२ नरे (जने).

(३) भा. २।११।५५ ; भामु. २।१२।१३ विजित्य (निर्जित्य) सर्वां (कृत्स्नां).

[1]तस्य सर्वे महीपाला धनान्याजह्रुराज्ञया ।
द्विजानां परिवेष्टारस्तस्मिन्यज्ञे च तेऽभवन् ॥

[2]प्रादाच्च द्रविणं प्रीत्या याजकानां नरेश्वरः ।
यथोक्तं तत्र तैस्तस्मिंस्ततः पञ्चगुणाधिकम् ॥

[3]अतर्पयच्च विविधैर्वसुभिर्ब्राह्मणांस्तथा ।
प्रासर्पकाले संप्राप्ते नानादिग्भ्यः समागतान् ॥

'प्रसर्पः अग्निविसर्जनम्' इति निघण्टुः । नीटी.

[4]भक्ष्यैर्भोज्यैश्च विविधैर्यथाकामपुरस्कृतैः ।
रत्नौघतर्पितैस्तुष्टैर्द्विजैश्च समुदाहृतम् ।
तेजस्वी च यशस्वी च नृपेभ्योऽभ्यधिको-
ऽभवत् ( ? को भव ) ॥

[5]एतस्मात्कारणात्पार्थ हरिश्चन्द्रो विराजते ।
तेभ्यो राजसहस्रेभ्यस्तद्विद्धि भरतर्षभ ॥

[6]समाप्य च हरिश्चन्द्रो महायज्ञं प्रतापवान् ।
अभिषिक्तः स शुशुभे साम्राज्येन नराधिप ॥

राज्ञां राजा सम्राट् चक्रवर्ती च

[7]एतस्मात्कारणाद्राजन् विश्रुतः स करंधमः ॥

(१) भा. २।११।५६ ; भामु. २।१२।१४.

(२) भा. २।११।५७ ; भामु. २।१२।१५ याज (याच) यथोक्तं तत्र तैस्त (यथोक्तवन्तस्ते त).

(३) भा. २।११।५८ ; भामु. २।१२।१६ स्तथा (स्तदा) प्रासर्प (प्रसर्प).

(४) भा. २।११।५९ ; भामु. २।१२।१७ भक्ष्यैर्भो (भक्ष्यभो).

(५) भा. २।११।६० ; भामु. २।१२।१८ त्पार्थ (द्राजन्).

(६) भा. २।११।६१ ; भामु. २।१२।१९ षिक्तः स (षिक्तश्च).

(७) भा. १४।४।१६ ; भामु. १४।४।१७.

[3]तस्य कारंधमः पुत्रस्त्रेतायुगमुखेऽभवत् ।
इन्द्रादनवरः श्रीमान् देवैरपि सुदुर्जयः ॥
[4]तस्य सर्वे महीपाला वर्तन्ते स्म वशे तदा ।
स हि सम्राडभूत्तेषां वृत्तेन च बलेन च ॥
[5]तस्य पुत्रोऽतिचक्राम पितरं गुणवत्तया ।
मरुत्तो नाम धर्मज्ञश्चक्रवर्ती महायशाः ॥
[1]पारावारमभिव्याप्य शासना यस्य नान्यथा ।
तस्याधीनास्तु विज्ञेया राजानश्च अधीश्वराः ॥

## नारदः

राजा त्रिविधः– (१) सम्राट् चक्रवर्ती वा (२) सकरः
(३) अकरोऽधीश्वरो वा

[2]राजानमविशेषेण निजगाद मनुः पुरा ।
विशेषेणैव वक्ष्यामि संशयो न यथा भवेत् ॥
राजा तु त्रिविधो ज्ञेयः सम्राट् च सकरोऽकरः ।
सर्वेभ्यः क्षितिपालेभ्यो नित्यं गृह्णाति वै करम् ॥
स सम्राडिति विज्ञेयश्चक्रवर्ती स एव हि ।
मासि मासि करं दद्यात्प्रत्यब्दं च तथैव च ॥
सकरः स तु विज्ञेयो राजलक्षणसंयुतः ।
करं संदेशव्याजेन यो ददाति हि स्वेच्छया ।
अधीश्वरं तमेवाहुः शास्त्रे शास्त्रविदो जनाः ॥

राजा त्रिविधः– सम्राट्, सकरः, अकरश्च । तदाह नीतौ नारदः– राजानमित्यादि । महाभारते–‘ इन्द्रादनवरः श्रीमान् देवैरपि सुदुर्जयः । तस्य सर्वे महीपाला वर्तन्ते स्म वशे सदा ॥ स हि सम्राडभूतेषां वित्तेन च बलेन च । पारावारमभिव्याप्य शासना यस्य नान्यथा । तस्याधीनास्तु विज्ञेया राजानश्च अधीश्वराः ॥ ’ (भा. १४।४।१७–१८) । तथा च सकलराजेभ्यो यः करग्राही स सम्राट् । सम्राजे करदो यः स सकरः । स्वेच्छया करदोऽकरः । स्मृत्यादावमी राजत्वेन प्रख्याताः । लोके तु राजेति सकरः, चक्रवर्ती सम्राट्, अधीश्वरो महाराज इति प्रसिद्धाः, विशेषप्रतिपत्त्यनुरोधात् । परंतु त्रयाणामपि धर्मं सममेव (आहुः), विशेषानभिधानात् । तथा च मनुः– ‘ इन्द्रानिलयमार्काणाम् ......’ (७।४–६,९) । व्यासः– ‘पर्जन्य इव लोकानामाधारः पृथिवीपतिः । ’ । राजनीतिकामधेनौ– ‘अधीश्वरो द्विविधः– शौर्यादकरः, सम्राडनुग्रहादकरः । आद्यः स्वेच्छयैव दण्डादि ददाति, द्वितीयोऽप्यनुग्रहात्, ‘अकरस्तु स्वयं सर्वं यदि सम्राडनुग्रहः । तदा न्यायपथेनैव कुरुते रिपुसूदन ॥ ’ इति स्मृतेः । द्वितीयाभिप्रायेणेदम् । आद्यः शमार्थं संदेशव्याजेन किंचित् करं ददाति । सकरोऽपि द्विविधः– अधिकृतदण्डादिः, अनधिकृतदण्डादिः । आद्यस्य न्याये पुनर्न्यायः, तेन कृतो दण्डो न निवर्तते । द्वितीयस्य न्यायेऽधिकारः, दण्डे नाधिकारः । न्यायस्य पुनर्न्यायोऽपि । यदि हठात्कारेण विरुद्धमाचरति तदा साहसे यथासाहसं धनग्रहणदण्डः, असाहसे तत्समीपं गते प्रसादकरमनादाय दिनद्वयं दिनत्रयं वा स्वदर्शनं न कारयतीति तिरस्कारः सम्राजा करणीयः । तत्प्रजासु तत्कृतं सम्राजाऽनिवर्त्यम्, ‘ अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः’ (नास्मृ. ४।३३) इति नारदीयात् । अस्याप्यत्रैव तात्पर्यम्, सम्राडादौ तदसंभवात् । संप्रदायोऽपि तथैव ’ इति । रार. ३–५

## आश्वलायनः

सार्वभौमलक्षणम्

[1]सर्वभूमेः पतित्वाच्च सार्वभौमः स भूपतिः ॥

## शुक्रनीतिः

राजानः सामन्तमाण्डलिकराजमहाराजस्वराट्सम्राड्विराट्सार्वभौमाः अष्टविधाः उत्तरोत्तरं वरीयांसः

[2]लक्षकर्षमितो भागो राजतो यस्य जायते ।
वत्सरे वत्सरे नित्यं प्रजानां त्वविपीडनैः ॥

---

(१) भा. १४।४।१७ ; भामु. ; रार. ३ उत्त.
(२) भा. १४।४।१८ ; भामु. ; रार. ३ तदा (सदा) वृत्तेन (वित्तेन).
(३) भा. १४।४।२३ ; भामु.
(४) रार. ४.
(५) रार. ३.

(१) आश्वस्मृ. ८।६.
(२) शुनी. १।१८३–१८७.

सामन्तः स नृपः प्रोक्तो यावल्लक्षत्रयावधि ।
तदूर्ध्वं दशलक्षान्तो नृपो माण्डलिकः स्मृतः ॥

यस्य वत्सरे वत्सरे प्रतिवत्सरं प्रजानां अविपीडनैः पीडनं विना नित्यं निश्चितं लक्षकर्षमितः लक्षकर्षपरिमितः राजतः भागः रौप्यमुद्रारूपराजस्वं जायते सः सामन्तः प्रोक्तः कथितः । लक्षत्रयावधि यावत् लक्षत्रितयपरिमित-रौप्यमुद्रारूपराजस्वं यस्य प्रतिवत्सरं उत्पद्यते स नृपः । तदूर्ध्वं दशलक्षान्तः लक्षचतुष्टयावधिदशलक्षपर्यन्तराजस्वं यस्य प्रतिवत्सरं उत्पद्यते स नृपः माण्डलिकः स्मृतः कथितः । शुनीटी.

तदूर्ध्वं तु भवेद्राजा यावद्विंशतिलक्षकः ।
पञ्चाशल्लक्षपर्यन्तो महाराजः प्रकीर्तितः ॥

तदूर्ध्वं यावद्विंशतिलक्षकः एकादशलक्षावधिविंशति-लक्षपर्यन्ताधिपतिरित्यर्थः, राजा भवेत् । तदूर्ध्वं पञ्चाशल्लक्ष-पर्यन्तः एकविंशत्यवधिपञ्चाशल्लक्षपर्यन्ताधिपतिः महाराजः प्रकीर्तितः कथितः । शुनीटी.

ततस्तु कोटिपर्यन्तः स्वराट् सम्राट् ततः परम् ।
दशकोटिमितो यावद्विराट् तु तदनन्तरम् ॥
पञ्चाशत्कोटिपर्यन्तः सार्वभौमस्ततः परम् ।
सप्तद्वीपा च पृथिवी यस्य वश्या भवेत्सदा ॥

ततः तदूर्ध्वं कोटिपर्यन्तः एकपञ्चाशदवधिकोटिपर्यन्ता-धिपतिः स्वराट्, ततः तदूर्ध्वं दशकोटिमितः कोटिद्वया-वधिदशकोटिपर्यन्ताधिपतिः सम्राट्, तदनन्तरं पञ्चाश-त्कोटिपर्यन्तः एकादशकोट्यवधिपञ्चाशत्कोटिपर्यन्ताधिपतिः विराट् भवति । ततः परं सप्तद्वीपा पृथिवी यस्य सदा वश्या वशं गता भवेत् सः सार्वभौमः सर्वभूमीश्वरः चक्रवर्तीत्यर्थः, भवेत् । शुनीटी.

[1]सामन्तादिसमा ये तु भृत्या अधिकृता भुवि ।
तेऽनुसामन्तसंज्ञाः स्यू राजभागहराः क्रमात् ॥

ये तु भुवि पृथिव्यां भृत्या वेतनेन केनचित् निर्दिष्टमूल्येनेत्यर्थः, अधिकृताः प्रजानां पालनकर्मणि नियुक्ता इत्यर्थः, ते सामन्तादिसमाः सामन्तादीनां पूर्वोक्तानां समाः समानकार्यकारिण इत्यर्थः, ते तु क्रमात् यथाक्रमं राजभागहराः राजग्राह्यांशहारिणः सामन्तसंज्ञाः सामन्तादिनामधारिणो न भवन्तीति शेषः (१) । शुनीटी.

सामन्तादिपदभ्रष्टास्तत्तुल्यं भृतिपोषिताः ।
महाराजादिभिस्ते तु हीनसामन्तसंज्ञकाः ॥

ये तु सामन्तादिपदेभ्यो भ्रष्टाः विच्युताः अपि महाराजादिभिः तत्तुल्यं यथा तथा भृत्या वेतनेन पोषिताः पालिताः भवन्ति ते तु हीनसामन्तसंज्ञकाः हीन-सामन्ता इति कथिताः । शुनीटी.

शतग्रामाधिपो यस्तु सोऽपि सामन्तसंज्ञकः ।
शतग्रामे चाधिकृतोऽनुसामन्तो नृपेण सः ॥

यस्तु शतग्रामाणां अधिपः सोऽपि सामन्तसंज्ञकः सामन्त इति कथितः । यस्तु नृपेण शतग्रामे अधिकृतः नियुक्तः सः अनुसामन्तः, उक्त इति शेषः । स्वायत्त-परायत्ततया भेद इति भावः । शुनीटी.

अधिकृतो दशग्रामे नायकः स च कीर्तितः ।
आशापालोऽयुतग्रामभागभाक् च स्वराडपि ॥

यः दशग्रामे अधिकृतः दशानां ग्रामाणां रक्षणकर्मणि नियुक्त इत्यर्थः, सः नायकः कीर्तितः । यस्तु अयुत-ग्रामाणां दशसहस्रग्रामाणां भागभाक् राजस्वग्राही सः आशापालः दिक्पालः तथा स्वराट् अपि, कीर्तित इति शेषः । शुनीटी.

## अनिर्दिष्टकर्तृकवचनम्

### अकरप्रकारौ

*[1]अकरस्तु स्वयं सर्वं यदि सम्राडनुग्रहः ।
तदा न्यायपथेनैव कुरुते रिपूसूदन ॥

* राख्याख्याने ' राजानमविशेषेण ' इत्यादिनारद-वचनेषु (पृ. ८३५) द्रष्टव्यम् ।

(१) शुनी. १।१८९-१९२.

(१) रार. ४.

# राज्याधिकारी

## हारीतः

राज्येऽधिकृतो लक्षणसंपन्नो ज्येष्ठः पुत्रः

*[1]यदा राजा जरायुक्तो रोगार्तो निःस्पृहोऽपि च ।
आसन्नमृत्युं विज्ञाय कुलधर्मं विचारयन् ॥
तदा पौरजनान् सर्वानाहूय मन्त्रयेच्च तैः ।
सप्ताङ्गानि च राज्यानि ज्येष्ठपुत्राय दापयेत् ॥

दापयेत् दद्यात् । रार. ६६

## आपस्तम्बः

पुत्रो ज्येष्ठ एव राज्येऽधिकृतः

[2]ज्येष्ठो दायाद इत्येके ॥

( १ ) एके मन्यन्ते ज्येष्ठ एव पुत्रो दायहरः, इतरे तु तमुपजीवेयुः, सोऽपि तान् पितेव परिपालयेदिति । तथा च गौतमः– 'सर्वे वा पूर्वजस्येतरान् बिभृयात्पितृवत्' ( गौध. २८।३ ) । उ.

( २ ) इदं राज्ये विभागाभावस्य वक्ष्यमाणत्वात् राज्यविषयमिति बहुभिर्व्याख्यातम् । राप्र. ३५

* राजनीतिरत्नाकरे 'यदा राजा ...' 'तदा पौरजनान् ...' 'विधाय वृत्तिं बहूनां राज्यं ज्येष्ठाय दापयेत्' इति त्रीणि वचनानि अनुक्रम्य 'इति राजनीतौ हारीतनारदवचनेभ्यः' इत्युक्तम् । तत्र इमानि त्रीण्यपि वचनानि हारितनारदयोः प्रत्येकमित्येकः पक्षः, आद्ययोरेकवाक्यत्वात् ते हारीतस्य, तृतीयं नारदस्येति द्वितीयो यथासंख्यपक्षश्च संभवति । तत्र अस्माभिः लाघवानुरोधेन द्वितीयपक्षमाश्रित्य वचनसंग्रहः कृतः ।

( १ ) रार. ६६.

( २ ) आध. २।१४।६ ; राप्र. ३५ (इत्येके०).

## महाभारतम्

ज्येष्ठः पुत्रो राज्याधिकृतः पितुर्वाऽभिमतः कनीयानपि पुत्रः इति मतद्वयम्

वैशम्पायन उवाच–

[1]पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम् ।
राज्यं चैव गृहाणेदं त्वं हि मे प्रियकृत्सुतः ॥
[2]प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा ।
यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मनः ॥
[3]अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम् ।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥

कनीयसं कनीयांसम् । नीटी.

[4]कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ।
ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रदास्यसि ॥

नप्तारं दौहित्रम् । नीटी.

[5]यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्वसुः ।
शर्मिष्ठायाः सुतो द्रुह्युस्ततोऽनुः पूरुरेव च ॥

( १ ) भा. १।८०।१० ; भामु. १।८५।१७ चैव गृहाणेदं ( चेदं गृहाण त्वं ).

( २ ) भा. १।८०।११ ; भामु. १।८५।१८ ; मत्स्य. ३४।१४ च ( स ).

( ३ ) भा. १।८०।१२ ; भामु. १।८५।१९ ; मत्स्य. ३४।१५ नृपतिं ( च नृपं ) ; लिङ्ग. १।६६।८१ मत्स्यवत्.

( ४ ) भा. १।८०।१३ ; भामु. १।८५।२० प्रदास्यसि (प्रयच्छसि ) ; मत्स्य. ३४।१६ नप्तारं (दौहित्रं) ; लिङ्ग. १।६६।८२ राज्यं पूरोः प्रदास्यसि (कनीयान् राज्यमर्हति).

( ५ ) भा. १।८०।१४ ; भामु. १।८५।२१ ; मत्स्य. ३४।१७ पूर्वार्धे ( ज्येष्ठो यदुस्तव सुतस्तुर्वसुस्तदनन्तरम् । ) ततोऽनुः ( तथाऽनुः ).

[1]कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति ।
एतत्संबोधयामस्त्वां धर्मं त्वमनुपालय ॥

ज्येष्ठं तिरस्कृत्य कनीयसे राज्यदानमधर्मं इति वचनाशयः । रार. ६७

ययातिरुवाच–

[2]ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः ।
ज्येष्ठं प्रति यथा राज्यं न देयं मे कथंचन ॥

[3]मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।
प्रतिकूलः पितुर्यश्च न स पुत्रः सतां मतः ॥

नियोगः आज्ञा । नीटी.

[4]मातापित्रोर्वचनकृद्धितः पथ्यश्च यः सुतः ।
स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥

अनौरसोऽपि यः पुत्रवद्वर्तते स एव पुत्रः, न त्वन्यः । नीटी.

[5]यदुनाऽहमवज्ञातस्तथा तुर्वसुनाऽपि च ।
द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशम् ॥

(१) भा. १।८०।१५ ; भामु. १।८५।२२ त्वमनु (त्वं प्रति) ; मत्स्य. ३४।१८ ज्येष्ठान (ज्येष्ठम) धर्मं त्वम (स्वधर्मम) ; लिङ्ग. १।६६।८२–८३ धर्मं त्वम (धर्मं च अ) उत्त. ; रार. ६७ त्वमनु (त्वं परि).

(२) भा. १।८०।१६ ; भामु. १।८५।२३ ; मत्स्य. ३४।१९ यथा (यतो) ; लिङ्ग. १।६७।१.

(३) भा. १।८०।१७ ; भामु. १।८५।२४ ; मत्स्य. ३४।२० ; लिङ्ग. १।६७।२ कूलः पितुर्यश्च (कूलमतिश्चैव).

(४) भा. १।८०।१८ ; भामु. १।८५।२५ ; मत्स्य. ३४।२१ ; लिङ्ग. १।६७।३ द्धितः पथ्यश्च यः सुतः (त्सद्भिः पुत्रः प्रशस्यते) यश्च (यस्तु) पितृमातृषु (मातापितृषु).

(५) भा. १।८०।१९ ; भामु. १।८५।२६ ; मत्स्य. ३४।२२ ऽपि च (ऽपि वा) मय्यवज्ञा (मय्यवज्ञा) ; लिङ्ग. १।६७।४ द्रुह्युना (द्रुह्येन).

[1]पूरुणा मे कृतं वाक्यं मानितश्च विशेषतः ।
कनीयान् मम दायादो जरा येन धृता मम ।
मम कामः स च कृतः पूरुणा पुत्ररूपिणा ॥
[2]शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ।
पुत्रो यस्त्वाऽनुवर्तेत स राजा पृथिवीपतिः ।
भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् ॥

प्रकृतय ऊचुः–

[3]यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा ।
सर्वमर्हति कल्याणं कनीयानपि स प्रभो ॥
[4]अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव ।
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् ॥

वैशम्पायन उवाच–

[5]पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा ।
अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मजम् ॥

(१) भा. १।८०।२० ; भामु. १।८५।२७–२८ मे (तु) मानितश्च (मानितं च) जरा येन धृता (धृता येन जरा) पुत्र (मित्र) ; मत्स्य. ३४।२३–२४ मानितश्च (मानितं च) ; लिङ्ग. १।६७।५ मे (च) एतच्छ्लोकानन्तरं 'शुक्रेण मे समादिष्टा देवयान्याः कृते जरा । प्रार्थितेन पुनस्तेन जरा संचारिणी कृता ॥' अयं श्लोकः अधिकः ।

(२) भा. १।८०।२१ ; भामु. १।८५।२८–२९ ; मत्स्य. ३४।२४–२५ भवतोऽनुनयाम्येवं (भवन्तः प्रतिजानन्तु) ; लिङ्ग. १।६७।७–८ राजा पृथिवीपतिः (ते राज्यधरास्त्विति) तृतीयार्धे (भवन्तोऽप्यनुजानन्तु पूरू राज्येऽभिषिच्यते ।).

(३) भा. १।८०।२२ ; भामु. १।८५।३० स प्रभो (सत्तमः) ; मत्स्य. ३४।२६ सर्वम (सर्वं सोऽ) ; लिङ्ग. १।६७।८–९ प्रभो (प्रभुः).

(४) भा. १।८०।२३ ; भामु. १।८५।३१ ; मत्स्य. ३४।२७ अर्हः पूरुरिदं (अर्हं पूरोरिदं) सुतः (प्रियः) ; लिङ्ग. १।६७।९–१० [illegible] (वाक्य) वक्तुमुत्तरम् (कर्तुमन्यथा).

(५) भा. १।८०।२४ ; [illegible]. १।८५।३२ मात्मजम् (मात्मनः) ; मत्स्य. ३४।२८ अभ्यषिञ्चत्त (अभिषिच्य त)

पित्रा शंतनुना अनुमतः भीष्मात् कनीयान् सत्यवतीसुतः भीष्मेण प्रतिज्ञया राज्येऽधिकृत इति स्वीकृतः

[1]कन्यापितृत्वात् किंचित्तु वक्ष्यामि भरतर्षभ।
बलवत्सपत्नतामत्र दोषं पश्यामि केवलम् ॥
[2]यस्य हि त्वं सपत्नः स्या गन्धर्वस्यासुरस्य वा।
न स जातु सुखं जीवेत्त्वयि क्रुद्धे परंतप ॥
[3]एतावानत्र दोषो हि नान्यः कश्चन पार्थिव।
एतज्जानीहि भद्रं ते दानादाने परंतप ॥
एवमुक्तस्तु गाङ्गेयस्तद्युक्तं प्रत्यभाषत।
शृण्वतां भूमिपालानां पितुरर्थाय भारत ॥
[4]इदं मे मतमादत्स्व सत्यं सत्यवतां वर।
नैव जातो न वाऽजात ईदृशं वक्तुमुत्सहेत् ॥
[5]एवमेतत्करिष्यामि यथा त्वमनुभाषसे।
योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति ॥
[6]इत्युक्तः पुनरेवाथ तं दाशः प्रत्यभाषत।
चिकीर्षुर्दुष्करं कर्म राज्यार्थे भरतर्षभ ॥
[7]त्वमेव नाथः पर्याप्तः शंतनोरमितद्युतेः।
कन्यायाश्चैव धर्मात्मन् प्रभुर्दानाय चेश्वरः ॥

स्वे सुत ( स्वसुत ); लिङ्ग. १।६७।१०-११ पौरजान ( एवं जान ) उत्तरार्धे ( अभिषिच्य ततो राज्ये पूरुं स सुतमात्मनः ॥ ).

( १ ) भा. १।९४।७४ ; भामु. १।१००।८२ भरतर्षभ ( त्वां नराधिप ).

( २ ) भा. १।९४।७५ ; भामु. १।१००।८३ सुखं ( चिरं ).

( ३ ) भा. १।९४।७६-७७ ; भामु. १।१००।८४-८५.

( ४ ) भा. १।९४।७८ ; भामु. १।१००।८६ मत (व्रत).

( ५ ) भा. १।९४।७९ ; भामु. १।१००।८७ ; राप्र. ४१.

( ६ ) भा. १।९४।८० ; भामु. १।१००।८८ ; राप्र. ४१ तं दाशः ( स दाशः ) पू.

( ७ ) भा. १।९४।८१ ; भामु. १।१००।८९ पर्याप्तः शंतनो ( संप्राप्तः शांतनो ).

[1]इदं तु वचनं सौम्य कार्यं चैव निबोध मे।
कौमारिकाणां शीलेन वक्ष्याम्यहमरिंदम ॥

कौमारिकाणां कुमारीस्नेहवताम्। नीटी.

*[2]यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण।
राजमध्ये प्रतिज्ञातमनुरूपं तवैव तत् ॥
[3]नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन।
तवापत्यं भवेद्यत्तु तत्र नः संशयो महान् ॥
[4]तस्य तन्मतमाज्ञाय सत्यधर्मपरायणः।
प्रत्यजानात्तदा राजन् पितुः प्रियचिकीर्षया ॥

देवव्रत उवाच—

[5]दाशराज निबोधेदं वचनं मे नृपोत्तम।
शृण्वतां भूमिपालानां यद्ब्रवीमि पितुः कृते ॥
[6]राज्यं तावत्पूर्वमेव मया त्यक्तं नराधिप।
अपत्यहेतोरपि च करोम्येष विनिश्चयम् ॥

* राप्रव्याख्यानं 'ज्येष्ठ एव तु गृह्णीयात्' इति मनुवचने द्रष्टव्यम्।

( १ ) भा. १।९४।८२ ; भामु. १।१००।९०.

( २ ) भा. १।९४।८३ ; भामु. १।१००।९१ ; राप्र. ४१ तवैव ( तथैव ) ; राकौ. २३६ राप्रवत् ; बाल. १।३०९ पृ. ६१५.

( ३ ) भा. १।९४।८४ ; भामु. १।१००।९२ ; राप्र. ४१ यत्तु ( यस्तु ) ; राकौ. २३६ था तन्म ( थैतन्म ) शेषं राप्रवत् ; बाल. १।३०९ पृ. ६१५.

( ४ ) भा. १।९४।८५ ; भामु. १।१००।९३ तस्य तन्मत ( तस्यैतन्मत ).

( ५ ) भा. १।९४।८६ ; भामु. १।१००।९४.

( ६ ) भा. १।९४।८७ ; भामु. १।१००।९५ नराधिप ( नराधिपाः ) करोम्येष ( करिष्येऽद्य ) ; राप्र. ४२ मया ( यथा ) शेषं भामुवत् ; राकौ. २३६ करोम्येष ( करिष्येऽद्य ) ; बाल. १।३०९ पृ. ६१६ राकौवत्.

[1]अद्य प्रभृति मे दाश ब्रह्मचर्यं भविष्यति ।
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि ॥

अन्धस्य संकरजस्य च राज्येऽनधिकारः

*[2]नान्धः कुरूणां नृपतिरनुरूपस्तपोधन ॥

[3]धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत ।
करणत्वाच्च विदुरः पाण्डुरासीन्महीपतिः ॥

पारशवत्वात् शूद्रायां ब्राह्मणाज्जातत्वात् । करणत्वाच्चेत्यपपाठः । लक्षणया वा तथा व्याख्येयम् , 'शूद्रायां करणो वैश्यात्' इति तन्निर्वचनात् । नीटी.

ज्येष्ठः पुत्रो राज्ये यौवराज्ये चाधिकृतः यथा युधिष्ठिरः

[4]ततः संवत्सरस्यान्ते यौवराज्याय पार्थिव ।
स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ॥

[5]गुणैः समुदितान् दृष्ट्वा पौराः पाण्डुसुतांस्तदा ।
कथयन्ति स्म संभूय चत्वरेषु सभासु च ॥

---

* राप्रव्याख्यानं 'ज्येष्ठ एव तु गृह्णीयात्' इति मनुवचने द्रष्टव्यम् ।

(१) भा. १।९४।८८ ; भामु. १।१००।९६ ; राप्र. ४२ पू. ; राको. २३६ पू. ; बाल. १।३०९ पृ. ६१६ पू.

(२) भा. १।१००।११ ; भामु. १।१०६।११ ; राप्र. ३९.

(३) भा. १।१०२।२३; भामु. १।१०९।२५ उत्तरार्धे ( पारशवत्वाद्विदुरो राजा पाण्डुर्बभूव ह ॥ ) ; राप्र. ४० द्राज्यं न प्रत्यपद्यत ( त्तद्राज्यं न प्रपद्यत ) उत्तरार्धे ( पारशवत्वाच्च विदुरो राजा पाण्डुर्बभूव ह ॥ ) ; राको. २३५ भामुवत् ; बाल. १।३०९ पृ. ६१५ द्राज्यं न प्रत्यपद्यत ( त्तद्राज्यं न प्रतिपद्यते ) शेषं राप्रवत्.

(४) भामु. १।१३९।१ ; राप्र. ४१.

(५) भा. १।१२९।४ ; भामु. १।१४१।२३-२४ 'गुणैः समुदितान्' इत्यर्धानन्तरम् 'कथयांचक्रिरे तेषां गुणान् संसत्सु भारत । राज्यप्राप्तिं च संप्राप्तं ज्येष्ठं पाण्डुसुतं तदा ॥' इत्ययं श्लोकोऽधिकः ; राप्र. ४० सर्वं भामुवत्.

[1]प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः ।
राज्यमप्राप्तवान् पूर्वं स कथं नृपतिर्भवेत् ॥

प्रज्ञाचक्षुः अन्धः , अत एव अनधिकाराद्राज्यं न प्राप्तवान् । स इदानीमपि पुत्रद्वारा कथं नृपतिर्भवेत् ? न कथमपि, द्वारलोपादित्यर्थः । नीटी.

[2]तथा भीष्मः शान्तनवः सत्यसंधो महाव्रतः ।
प्रत्याख्याय पुरा राज्यं नाद्य जातु ग्रहीष्यति ॥

[3]ते वयं पाण्डवं ज्येष्ठं तरुणं वृद्धशीलिनम् ।
अभिषिञ्चाम साध्वद्य सत्यं करुणवेदिनम् ॥

सत्यं कारुण्यं वेदश्च तद्वन्तम् । नीटी.

[4]स हि भीष्मं शान्तनवं धृतराष्ट्रं च धर्मवित् ।
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ॥

[5]पितृतः प्राप्तवान्राज्यं पाण्डुरात्मगुणैः पुरा ।
त्वमप्यगुणसंयोगात्प्राप्तं राज्यं न लब्धवान् ॥

प्राप्तं ज्येष्ठत्वात्प्राप्तमपि । नीटी.

[6]स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः ।
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्येति चापरः ॥

---

(१) भा. १।१२९।५ ; भामु. १।१४१।२५ ज्यमप्राप्त ( ज्यं न प्राप्त ) ; राप्र. ४० भामुवत् ; राको. २३६ भामुवत् ; बाल. १।३०९ पृ. ६१६ भामुवत्.

(२) भा. १।१२९।६ ; भामु. १।१४१।२६ भीष्मः शान्तनवः ( शान्तनवो भीष्मः ) नाद्य ( न स ) ; राप्र. ४०-४१ भामुवत् ; राको. २३६ भामुवत् ; बाल. १।३०९ पृ. ६१६ भामुवत्.

(३) भा. १।१२९।७ ; भामु. १।१४१।२७ पाण्डवं ज्येष्ठं ( पाण्डवज्येष्ठं ) सत्यं करुण ( सत्यकारुण्य ) ; राप्र. ४१ साध्वद्य ( साध्वग्र्यं ) करुण ( कारुण्य ) ; राको. २३६ राप्रवत् ; बाल. १।३०९ पृ. ६१६ शीलिनम् ( शालिनम् ) साध्वद्य ( साध्वग्र्यं ) शेषं भामुवत्.

(४) भा. १।१२९।८ ; भामु. १।१४१।२८.

(५) भा. १।१२९।१४ ; भामु. १।१४१।३४ 'दुर्योधन उवाच' इत्यधिकम् , त्वमप्य ( त्वमन्ध ).

(६) भा. १।१२९।१५ ; भामु. १।१४१।३५ तस्येति ( तस्यापि ).

दायाद्यं दायादः पुत्रः तद्योग्यं राज्यम् । तस्य पाण्डवस्य । नीटी.

[1]ते वयं राजवंशेन हीनाः सह सुतैरपि ।
अवज्ञाता भविष्यामो लोकस्य जगतीपते ॥

[2]सततं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवेम यथा राजंस्तथा शीघ्रं विधीयताम् ॥

निरयं दुःखम् । नीटी.

[3]अभविष्यः स्थिरो राज्ये यदि हि त्वं पुरा नृप ।
ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने ॥

[4]तत्र केचिद्ब्रुवन्ति स्म ब्राह्मणा निर्भयास्तदा ।
शोचमानाः पाण्डुपुत्रानतीव भरतर्षभ ॥

[5]विषमं पश्यते राजा सर्वथा तमसाऽऽवृतः ।
धृतराष्ट्रः सुदुर्बुद्धिर्न च धर्मं प्रपश्यति ॥

[6]न हि पापमपापात्मा रोचयिष्यति पाण्डवः ।
भीमो वा बलिनां श्रेष्ठः कौन्तेयो वा धनंजयः ।
कुत एव महाप्राज्ञौ माद्रीपुत्रौ करिष्यतः ॥

[7]तद्राज्यं पितृतः प्राप्तं धृतराष्ट्रो न मृष्यते ।
अधर्ममखिलं किं नु भीष्मोऽयमनुमन्यते ।
विवास्यमानानस्थाने कौन्तेयान् भरतर्षभान् ॥

---

(१) भा. १।१२९।१६ ; भामु. १।१४१।३६.

(२) भा. १।१२९।१७ ; भामु. १।१४१।३७ शीघ्रं वि ( नीतिर्वि ).

(३) भा. १।१२९।१८ ; भामु. १।१४१।३८ पूर्वार्धे ( यदि त्वं हि पुरा राजन्निदं राज्यमवाप्तवान् । ).

(४) भा. १।१३३।६ ; भामु. १।१४५।६ उत्तरार्धे ( दीनान् दृष्ट्वा पाण्डुसुतानतीव भृशदुःखिताः ॥ ).

(५) भा. १।१३३।७ ; भामु. १।१४५।७ तमसाऽऽवृतः ( स सुमन्दधीः ) धृतराष्ट्रः सुदुर्बुद्धिर्न ( कौरव्यो धृतराष्ट्रस्तु न ).

(६) भा. १।१३३।८ ; भामु. १।१४५।८-९ महाप्राज्ञौ ( महात्मानौ ).

(७) भा. १।१३३।९ ; भामु. १।१४५।९-१० तद्राज्यं ( तान् राज्यं ) प्राप्तं ( प्राप्तान् ) द्वितीयार्धे ( अधर्म्यमिदमत्यन्तं कथं भीष्मोऽनुमन्यते । ) कौन्तेयान् भरतर्षभान् ( नगरे योऽभिमन्यते ) ; राप्र. ४१ ( तान् राज्यं पितृतः प्राप्तान् धृतराष्ट्रो न मृष्यति । ) प्रथमार्धमात्रम्.

[1]पितेव हि नृपोऽस्माकमभूच्छान्तनवः पुरा ।
विचित्रवीर्यो राजर्षिः पाण्डुश्च कुरुनन्दनः ॥

[2]स तस्मिन् पुरुषव्याघ्रे दिष्टभावं गते सति ।
राजपुत्रानिमान् बालान् धृतराष्ट्रो न मृष्यते ॥

[3]वयमेतदमृष्यन्तः सर्व एव पुरोत्तमात् ।
गृहान् विहाय गच्छामो यत्र याति युधिष्ठिरः ॥

[4]ततः पाण्डुर्नरपतिः सत्यसंधो जितेन्द्रियः ।
राजा कुरूणां धर्मात्मा सुव्रतः सुसमाहितः ॥

[5]ज्येष्ठाय राज्यमददाद्धृतराष्ट्राय धीमते ।
यवीयसस्तथा क्षत्तुः कुरुवंशविवर्धनः ॥

ज्येष्ठः अन्धत्वादनर्हः, क्षत्ता वियोनित्वादनर्हः इति सूचयन् यथा ज्येष्ठायाददात् तथा क्षत्त्रे विदुरायापि न्यासभूतमददादिति भावः । नीटी.

[6]ततः सिंहासने राजन् स्थापयित्वैनमच्युतम् ।
वनं जगाम कौरव्यो भार्याभ्यां सहितो नृपः ॥

[7]ततोऽथ राज्ञः सुबलस्य पुत्री
धर्मार्थयुक्तं कुलनाशभीता ।
दुर्योधनं पापमतिं नृशंसं
राज्ञां समक्षं सुतमाह कोपात् ॥

---

(१) भा. १।१३३।१० ; भामु. १।१४५।११.

(२) भा. १।१३३।११ ; भामु. १।१४५।१२ दिष्ट ( देव ) ; राप्र. ४१ मृष्यते ( मृष्यति ) उक्त.

(३) भा. १।१३३।१२ ; भामु. १।१४५।१३ दमृष्यन्तः ( दनिच्छन्तः ) याति ( गन्ता ) ; राप्र. ४१ दमृष्यन्तः ( दनिच्छामः ) याति ( गन्ता ).

(४) भा. ५।१४६।३; भामु. ५।१४८।३ ततः (तथा).

(५) भा. ५।१४६।४ ; भामु. ५।१४८।४ ददाद्धृ ( ददद्धृ ) उत्तरार्धे (यवीयसे तथा क्षत्रे कुरूणां वंशवर्धनः ॥).

(६) भा. ५।१४६।५ ; भामु. ५।१४८।५.

(७) भा. ५।१४६।२७-२८ ; भामु. ५।१४८। २८-२९.

ये पार्थिवा राजसभां प्रविष्टा
ब्रह्मर्षयो ये च सभासदोऽन्ये ।
शृण्वन्तु वक्ष्यामि तवापराधं
पापस्य सामात्यपरिच्छदस्य ॥

[1]राज्यं कुरूणामनुपूर्वभोग्यं
क्रमागतो नः कुलधर्म एषः ।
त्वं पापबुद्धेऽतिनृशंसकर्मन्
राज्यं कुरूणामनयाद्विहंसि ॥

[2]राज्ये स्थितो धृतराष्ट्रो मनीषी
तस्यानुजो विदुरो दीर्घदर्शी ।
एतावतिक्रम्य कथं नृपत्वं
दुर्योधन प्रार्थयसेऽद्य मोहात् ॥

[3]राजा च क्षत्ता च महानुभावौ
भीष्मे स्थिते परवन्तौ भवेताम् ।
अयं तु धर्मज्ञतया महात्मा
न राज्यकामो नृवरो नदीजः ॥

[4]राज्यं तु पाण्डोरिदमप्रधृष्यं
तस्याद्य पुत्राः प्रभवन्ति नान्ये ।
राज्यं तदेतन्निखिलं पाण्डवानां
पैतामहं पुत्रपौत्रानुगामि ॥

[5]यद्वै ब्रूते कुरुमुख्यो महात्मा
देवव्रतः सत्यसंधो मनीषी ।
सर्वं तदस्माभिरहत्य धर्मं
ग्राह्यं स्वधर्मं परिपालयद्भिः ॥

(१) भा. ५।१४६।२९ ; भामु. ५।१४८।३० भोग्यं (भोज्यं).

(२) भा. ५।१४६।३० ; भामु. ५।१४८।३१.

(३) भा. ५।१४६।३१ ; भामु. ५।१४८।३२ राज्यकामो (कामयेयो).

(४) भा. ५।१४६।३२ ; भामु. ५।१४८।३३.

(५) भा. ५।१४६।३३ ; भामु. ५।१४८।३४ धर्मं ग्राह्यं स्वधर्मं (कार्यं राज्यं स्वधर्मान्).

[1]अनुज्ञया चाथ महाव्रतस्य
ब्रूयान्नृपो यद्विदुरस्तथैव ।
कार्यं भवेत्तत्सुहृद्भिर्नियुज्य
धर्मं पुरस्कृत्य सुदीर्घकालम् ॥

[2]न्यायागतं राज्यमिदं कुरूणां
युधिष्ठिरः शास्तु वै धर्मपुत्रः ।
प्रचोदितो धृतराष्ट्रेण राज्ञा
पुरस्कृतः शान्तनवेन चैव ॥

पितुरनुमतः कनीयानपि पुत्रो राज्येऽधिकृतः

वासुदेव उवाच—

[3]एवमुक्ते तु गान्धार्या धृतराष्ट्रो जनेश्वरः ।
दुर्योधनमुवाचेदं नृपमध्ये जनाधिप ॥

[4]दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि पुत्रक ।
तथा तत्कुरु भद्रं ते यद्यस्ति पितृगौरवम् ॥

[5]सोमः प्रजापतिः पूर्वं कुरूणां वंशवर्धनः ।
सोमाद्बभूव षष्ठो वै ययातिर्नहुषात्मजः ॥

[6]तस्य पुत्रा बभूवुश्च पञ्च राजर्षिसत्तमाः ।
तेषां यदुर्महातेजा ज्येष्ठः समभवत्प्रभुः ॥

[7]पूरुर्यवीयांश्च ततो योऽस्माकं वंशवर्धनः ।
शर्मिष्ठायाः संप्रसूतो दुहितुर्वृषपर्वणः ॥

(१) भा. ५।१४६।३४ ; भामु. ५।१४८।३५ यद्वि (ऽयं वि) युज्य (योज्यं).

(२) भा. ५।१४६।३५ ; भामु. ५।१४८।३६.

(३) भा. ५।१४७।१ ; भामु. ५।१४९।१ नृप (राज).

(४) भा. ५।१४७।२ ; भामु. ५।१४९।२.

(५) भा. ५।१४७।३ ; भामु. ५।१४९।३ षष्ठो वै (षष्ठोऽयं).

(६) भा. ५।१४७।४ ; भामु. ५।१४९।४ वुश्च (वुर्हि).

(७) भा. ५।१४७।५ ; भामु. ५।१४९।५ शर्मिष्ठायाः (शर्मिष्ठया) दुहितुर्वृष (दुहित्रा वृष).

[1]यदुश्च भरतश्रेष्ठ देवयान्याः सुतोऽभवत् ।
दौहित्रस्तात शुक्रस्य काव्यस्यामिततेजसः ॥
यादवानां कुलकरो बलवान् वीर्यसंमतः ।
अवमेने स तु क्षत्रं दर्पपूर्णः सुमन्दधीः ॥
न चातिष्ठत्पितुः शास्त्रे बलदर्पविमोहितः ।
अवमेने च पितरं भ्रातॄंश्चाप्यपराजितः ॥
[2]पृथिव्यां चतुरन्तायां यदुरेवाभवद्बली ।
वशे कृत्वा स नृपतीनवसन्नागसाह्वये ॥
[3]तं पिता परमक्रुद्धो ययातिर्नहुषात्मजः ।
शशाप पुत्रं गान्धारे राज्याच्च व्यपरोपयत् ॥
[4]ये चैनमन्ववर्तन्त भ्रातरो बलदर्पितम् ।
शशाप तानपि क्रुद्धो ययातिस्तनयानथ ॥
[5]यवीयांसं ततः पूरुं पुत्रं स्ववशवर्तिनम् ।
राज्ये निवेशयामास विधेयं नृपसत्तमः ॥
[6]एवं ज्येष्ठोऽप्यथोत्सिक्तो न राज्यमभिजायते ।
यवीयांसोऽभिजायन्ते राज्यं वृद्धोपसेवया ॥

अभिजायते प्राप्नोति । जायन्ते लभन्ते । नीटी.

चिररोगी अङ्गहीनो वा ज्येष्ठोऽपि पुत्रो राज्येऽनधिकृतः, यवीयानपि अनामयः अव्यङ्गः पुत्रो राज्येऽधिकृतः

[7]तथैव सर्वधर्मज्ञः पितुर्मम पितामहः ।
प्रतीपः पृथिवीपालस्त्रिषु लोकेषु विश्रुतः ॥

(१) भा. ५।१४७।६–८ ; भामु. ५।१४९।६–८.

(२) भा. ५।१४७।९ ; भामु. ५।१४९।९ तीनव (तीन्यव).

(३) भा. ५।१४७।१० ; भामु. ५।१४९।१० च व्यपरो (च्चापि न्यरो).

(४) भा. ५।१४७।११ ; भामु. ५।१४९।११ दर्पितम् (दर्पिताः) तानपि (तानभि).

(५) भा. ५।१४७।१२ ; भामु. ५।१४९।१२.

(६) भा. ५।१४७।१३ ; भामु. ५।१४९।१३ सोऽभिजा (सोऽपि जा).

(७) भा. ५।१४७।१४–१५ ; भामु. ५।१४९।१४–१५.



तस्य पार्थिवसिंहस्य राज्यं धर्मेण शासतः ।
त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः ॥
[1]देवापिरभवज्ज्येष्ठो बाह्लीकस्तदनन्तरम् ।
तृतीयः शंतनुस्तात धृतिमान्मे पितामहः ॥
[2]देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः ।
धार्मिकः सत्यवादी च पितुः शुश्रूषणे रतः ॥

त्वग्दोषी कुष्ठी । नीटी.

पौरजानपदानां च संमतः साधुसत्कृतः ।
सर्वेषां बालवृद्धानां देवापिर्हृदयंगमः ॥
[3]प्राज्ञश्च सत्यसंधश्च सर्वभूतहिते रतः ।
वर्तमानः पितुः शास्त्रे ब्राह्मणानां तथैव च ॥
[4]बाह्लीकस्य प्रियो भ्राता शंतनोश्च महात्मनः ।
सौभ्रात्रं च परं तेषां सहितानां महात्मनाम् ॥
[5]अथ कालस्य पर्याये वृद्धो नृपतिसत्तमः ।
संभारानभिषेकार्थं कारयामास शास्त्रतः ।
मङ्गलानि च सर्वाणि कारयामास चाभिभूः ॥

वृद्धः प्रतीपः । नीटी.

[6]तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह ।
सर्वे निवारयामासुर्देवापेरभिषेचनम् ॥

(१) भा. ५।१४७।१६ ; भामु. ५।१४९।१६ ज्ज्येष्ठो (च्छ्रेष्ठो) शंतनु (शांतनु).

(२) भा. ५।१४७।१७–१८ ; भामु. ५।१४९। १७–१८.

(३) भा. ५।१४७।१९ ; भामु. ५।१४९।१९ प्राज्ञश्च (वदान्यः).

(४) भा. ५।१४७।२० ; भामु. ५।१४९।२० शंतनोश्च (शांतनोश्च).

(५) भा. ५।१४७।२१ ; भामु. ५।१४९।२१–२२ तृतीयार्धे (कारयामास सर्वाणि मङ्गलार्थानि वै विभुः ।).

(६) भा. ५।१४७।२२–२५ ; भामु. ५।१४९। २२–२५.

स ताच्छ्रुत्वा तु नृपतिरभिषेकनिवारणम् ।
अश्रुकण्ठोऽभवद्राजा पर्यशोचत चाऽऽत्मजम् ॥

आत्मजं देवापिम् । नीटी.

एवं वदान्यो धर्मज्ञः सत्यसंधश्च सोऽभवत् ।
प्रियः प्रजानामपि संस्त्वग्दोषेण प्रदूषितः ॥
हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः ।
इति कृत्वा नृपश्रेष्ठं प्रत्यषेधन् द्विजर्षभाः ॥
[1]ततः प्रव्यथितात्माऽसौ पुत्रशोकसमन्वितः ।
ममार तं मृतं दृष्ट्वा देवापिः संश्रितो वनम् ॥
[2]वाह्लीको मातुलकुले त्यक्त्वा राज्यं व्यवस्थितः ।
पितॄन्भ्रातॄन्परित्यज्य प्राप्तवान्पुरमृद्धिमत् ॥

राज्यं त्यक्त्वा मातुलकुलं समाश्रित इति संबन्धः । नीटी.

[3]वाह्लीकेन त्वनुज्ञातः शंतनुर्लोकविश्रुतः ।
पितर्युपरते राजन्राजा राज्यमकारयत् ॥

अकारयत् अकरोत् । नीटी.

[4]तथैवाहं मतिमता परिचिन्त्येह पाण्डुना ।
ज्येष्ठः प्रभ्रंशितो राज्याद्धीनाङ्ग इति भारत ॥
पाण्डुस्तु राज्यं संप्राप्तः कनीयानपि सन्नृपः ।
विनाशे तस्य पुत्राणामिदं राज्यमरिंदम ।
मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि ॥
[5]अराजपुत्रो ह्यस्वामी परस्वं हर्तुमिच्छसि ॥

क्रमागतो गुणसंपन्नो राजपुत्र एव राज्येऽधिकृतः

[1]युधिष्ठिरो राजपुत्रो महात्मा
न्यायागतं राज्यमिदं च तस्य ।
स कौरवस्यास्य जनस्य भर्ता
प्रशासिता चैव महानुभावः ॥
[2]स सत्यसंधः सततप्रमत्तः
शास्त्रे स्थितो बन्धुजनस्य साधुः ।
प्रियः प्रजानां सुहृदानुकम्पी
जितेन्द्रियः साधुजनस्य भर्ता ॥

आसमन्तात् अनुकम्पी दयावान् । नीटी.

[3]क्षमा तितिक्षा दम आर्जवं च
सत्यव्रतत्वं श्रुतमप्रमादः ।
भूतानुकम्पा ह्यनुशासनं च
युधिष्ठिरे राजगुणाः समस्ताः ॥
[4]अराजपुत्रस्त्वमनार्यवृत्तो
लुब्धस्तथा बन्धुषु पापबुद्धिः ।
क्रमागतं राज्यमिदं परेषां
हर्तुं कथं शक्ष्यसि दुर्विनीतः ॥

भ्राता पुत्रः पौत्रो वा पुत्राभावे कन्या वा अन्यगोत्रः प्रशस्तः क्षत्रियो वा राज्येऽधिकृतः

[5]सोऽयं त्वमिह संक्रान्तो विक्रमेण वसुंधराम् ।
निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ ॥
[6]तेषां पुराणि राष्ट्राणि गत्वा राजन् सुहृद्वृतः ।
भ्रातॄन्पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ॥

---

(१) भा. ५।१४७।२६; भामु. ५।१४९।२६ तात्माऽसौ (ताङ्गोऽसौ) ममार तं मृतं (निवारितं नृपं).

(२) भा. ५।१४७।२७; भामु. ५।१४९।२७ कुले (कुलं) व्यवस्थितः (समाश्रितः) न्पुरमृद्धिमत् (न्परमर्द्धिमत्).

(३) भा. ५।१४७।२८; भामु. ५।१४९।२८ शंतनु (शांतनु).

(४) भा. ५।१४७।२९–३०; भामु. ५।१४९।२९–३१.

(५) भामु. ५।१४९।३१.

(१) भा. ५।१४७।३१; भामु. ५।१४९।३२ जनस्य (कुलस्य).

(२) भा. ५।१४७।३२; भामु. ५।१४९।३३ सततप्र (स तथाऽप्र).

(३) भा. ५।१४७।३३; भामु. ५।१४९।३४.

(४) भा. ५।१४७।३४; भामु. ५।१४९।३५ लुब्धस्तथा (लुब्धः सदा) दुर्विनीतः (दुर्विनीत).

(५) भा. १२।३४।३०; भामु. १२।३३।४२ पूर्वार्धे (सेयं त्वामनुसंप्राप्ता विक्रमेण वसुंधरा ।).

(६) भा. १२।३४।३१; भामु. १२।३३।४३.

हतनाथानां स्त्रीणां शोकेन मम दोषोऽनन्त इत्युक्तं तत्राऽऽह- तेषामिति । नीटी.

[1]बालानपि च गर्भस्थान् सान्त्वानि समुदाचरन् ।
रञ्जयन् प्रकृतीः सर्वाः परिपाहि वसुंधराम् ॥

कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ॥

[2]स्थापयित्वा प्रजापालं पुत्रं राज्ये च पाण्डव ।
अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ ॥

अरक्षितारं राजानमपास्य अन्यस्य राज्याभिषेके राष्ट्रस्याधिकारः

व्यास उवाच-

[3]आसीत्कृतयुगे पूर्वं मनुर्दण्डधरः प्रभुः ।
तस्य पुत्रो महेष्वासः प्रजातिरिति विश्रुतः ॥

[4]प्रजातेरभवत्पुत्रः क्षुप इत्यभिविश्रुतः ।
क्षुपस्य पुत्रस्त्विक्ष्वाकुर्महीपालोऽभवत्प्रभुः ॥

[5]तस्य पुत्रशतं राजन्नासीत्परमधार्मिकम् ।
तांस्तु सर्वान् महीपालानिक्ष्वाकुरकरोत्प्रभुः ॥

तेषां ज्येष्ठस्तु विंशोऽभूत्प्रतिमानं धनुष्मताम् ।
विंशस्य पुत्रः कल्याणो विविंशो नाम भारत ॥

विविंशस्य सुता राजन् बभूवुर्दश पञ्च च ।
सर्वे धनुषि विक्रान्ता ब्रह्मण्याः सत्यवादिनः ॥

[6]दानधर्मरताः सन्तः सततं प्रियवादिनः ।
तेषां ज्येष्ठः खनीनेत्रः स तान् सर्वानपीडयत् ॥

(१) भा. १२।३४।३२–३३ ; भामु. १२।३३।४४–४५ सान्त्वानि ( सान्त्वेन ).

(२) भा. १२।६३।१९ ; भामु.

(३) भा. १४।४।२ ; भामु. १४।४।२ पूर्वं (तात) महेष्वासः प्रजाति ( महाबाहुः प्रसंधि ).

(४) भा. १४।४।३ ; भामु. १४।४।३ प्रजाते ( प्रसंधे ) पुत्रस्त्वि ( पुत्र इ ) .

(५) भा. १४।४।४–६ ; भामु.

(६) भा. १४।४।७ ; भामु. १४।४।७ सन्तः ( [illegible] ).

[1]खनीनेत्रस्तु विक्रान्तो जित्वा राज्यमकण्टकम् ।
नाशक्नोद्रक्षितुं राज्यं नान्वरज्यन्त तं प्रजाः ॥

[2]तमपास्य च तद्राष्ट्रं तस्य पुत्रं सुवर्चसम् ।
अभ्यषिञ्चत राजेन्द्र मुदितं चाभवत्तदा ॥

## वाल्मीकिरामायणम्

कुलक्रमागते राज्ये ज्येष्ठो गुणसंपन्नः पुत्र एव अधिकृतः, राज्यमविभाज्यं पुत्रेषु

[3]तमेवं बहुभिर्युक्तं गुणैरनुपमं सुतम् ।
प्रेक्ष्य राजा दशरथश्चिन्तयामास तं प्रति ॥

[4]तस्य बुद्धिरियं जाता वृद्धस्य चिरजीविनः ।
यौवराज्येऽभिषिञ्चामि सुतं राममिति स्थिरा ॥

[5]सा तस्य परमा प्रीतिर्हृदये पर्यवर्तत ।
कदा रामं सुतं द्रक्ष्याम्यभिषिक्तमिति प्रभोः ॥

[6]वृद्धिकामो हि राष्ट्रस्य सर्वभूतानुकम्पकः ।
मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥

[7]यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ ।
महीधरसमो धृत्यां गाम्भीर्ये सागरोपमः ॥

(१) भा. १४।४।८ ; भामु. १४।४।८ नाशक्नो ( नाशक ).

(२) भा. १४।४।९ ; भामु. १४।४।९ द्राष्ट्रं (द्राज्ये) षिञ्चत (षिञ्चन्त) मुदितं चाभवत्त (मुदिता अभवस्त).

(३) वारा. २।३।२९ ; वाराकु. २।१।३४ तमेवं ( एतैस्तु ) नुपमं ( नुपमैः ) उत्तरार्धे ( दृष्ट्वा दशरथो राजा चक्रे चिन्तां परंतपः ॥ ).

(४) वारा. २।३।३० ; वाराकु. २।१।३५ ( अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः । प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ॥ ).

(५) वारा. २।३।३१ ; वाराकु. २।१।३६ ( एषा ह्यस्य परा प्रीतिर्हृदि संपरिवर्तते । कदा नाम सुतं द्रक्ष्याम्यभिषिक्तमहं प्रियम् ॥ ).

(६) वारा. २।३।३२ ; वाराकु. २।१।३७ राष्ट्रस्य ( लोकस्य ) कम्पकः ( कम्पनः ).

(७) वारा. २।३।३३ ; वाराकु. २।१।३८ गाम्भीर्ये सागरोपमः ( मत्तश्च गुणवत्तरः ).

[1]महीमहमिमां कृत्स्नामधितिष्ठन्तमात्मजम् ।
अनेन वयसा दृष्ट्वा जीवन् स्वर्गमवाप्नुयाम् ॥
[2]कुलक्रमागतं राज्यं क्रम एव नियुज्य हि ।
तं समीक्ष्य महाराजः समुपेतं सुतं गुणैः ।
सह निश्चित्य सचिवैर्यौवराज्यममन्त्रयत् ॥
[3]दिव्यं चैवान्तरिक्षे च भौमं चोत्पातजं भयम् ।
आचचक्षे स मेधावी शरीरे चाऽऽत्मनो जराम् ॥
[4]ततस्ते मन्त्रयामासुर्यौवराज्यमभीप्सवः ।
तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः ॥
[5]ब्राह्मणा मन्त्रिमुख्याश्च सर्वे वचनमब्रुवन् ।
पूर्णचन्द्राननस्यास्य सदृशस्याऽऽत्मनो गुणैः ॥
[6]लोकप्रियत्वं रामस्य बुध्यते वै महात्मनः ।
आत्मनश्च प्रजानां च श्रेयसा च प्रियेण च ॥
[7]काले काङ्क्षति संयोगं तेन त्वरति भूमिपः ।
अर्हत्येष हि धर्मात्मा यौवराज्यं महाबलः ॥

(१) वारा. २।३।३४ ; वाराकु. २।१।३९ जीवन् (यथा).

(२) वारा. २।३।३५ ; वाराकु. २।१।४१ जः समुपेतं सुतं गुणैः (जो युक्तं समुदितैः शुभैः) उत्तरार्धे (निश्चित्य साचिवैः सार्धं युवराजममन्यत ॥) 'कुलक्रमागतं' इत्यर्धं नास्ति.

(३) वारा. २।३।३६ ; वाराकु. २।१।४२ पूर्वार्धे (दिव्यन्तरिक्षे भूमौ च घोरमुत्पातजं भयम् ।) आचचक्षे स (संचचक्षे च).

(४) वारा. २।३।३७.

(५) वारा. २।३।३८ ; वाराकु. २।१।४३ (पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः ।) उत्त.

(६) वारा. २।३।३९ ; वाराकु. २।१।४३-४४ पूर्वार्धे (लोके रामस्य बुबुधे संप्रियत्वं महात्मनः ।) श्रेयसा (श्रेयसे).

(७) वारा. २।३।४० ; वाराकु. २।१।४४ (प्राप्तकालेन धर्मात्मा भक्त्या त्वरितवान्नृपः ।) पू.

[1]धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः प्रियवादिभिः ।
यन्मे ज्येष्ठं प्रियं पुत्रं युवराजमिहेच्छथ ॥
[2]*आदिष्टो ह्यसि मे ज्येष्ठः प्रसूतः सदृशो गुणैः ॥
[3]ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः ।
उत्पन्नस्त्वं गुणश्रेष्ठो मम रामात्मजः प्रियः ॥
[4]त्वया यतः प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः ।
तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ॥

* राप्रव्याख्यानं 'ज्येष्ठ एव तु गृह्णीयात्' इति मनुवचने अस्मिन्नेव प्रकरणे द्रष्टव्यम् ।

(१) वारा. २।५।२ ; वाराकु. २।३।२ पूर्वार्धे (अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।) युवराजमिहेच्छथ (यौवराज्यस्थमिच्छथ) ; राप्र. ३७ (जन्मज्येष्ठं प्रियं पुत्रं यौवराज्ये यदीप्सथ ।) उत्त. ; राकौ. २३५ राप्रवत्, उत्त. ; बाल. १।३०९ पृ. ६१५ राप्रवत्, उत्त.

(२) राक. १७ ; राप्र. ३६ ; राकौ. २३४ ; बाल. १।३०९ पृ. ६१४.

(३) वारा. २।५।२५ उत्पन्नस्त्वं गुणश्रेष्ठो (उत्पन्नः सद्गुणैः पूज्यो) ; वाराकु. २।३।३९ ; राक. १७ यामसि (यामपि) उत्तरार्धे (उत्पन्नः स्वैर्गुणैर्ज्येष्ठो रामो नामाऽऽत्मजः प्रियः ॥) ; राप्र. ३६ यामसि (यामपि) उत्तरार्धे (तन्मतस्त्वं गुणज्येष्ठो रामनामात्मजः प्रियः ॥) ; राकौ. २३४ यामसि (यामपि) उत्तरार्धे (तन्मतस्त्वं गुणज्येष्ठो रामनामात्मजः प्रियः ॥) ; बाल. १।३०९ पृ. ६१४ यामसि (यामपि) उत्तरार्धे (उत्पन्नस्त्वं गुणज्येष्ठो रामनामात्मजः प्रियः ॥).

(४) वारा. २।५।२६ ; वाराकु. २।३।४० त्वया यतः (यतस्त्वया) ; राक. १७ यतः प्रजाश्चेमाः (तात प्रजा ह्येताः) मवाप्नुहि (मवाप्स्यसि) ; राप्र. ३६ राकवत् ; राकौ. २३४ यतः प्रजाश्चेमाः (तात प्रजा ह्येताः) गैरनु (गैरति) मवाप्नुहि (मभीप्ससि) ; बाल. १।३०९ पृ. ६१४ राकवत्.

[1]धर्मात्मा गुरुवर्ती च कृतज्ञः सत्यवाक् शुचिः ।
रामो राज्ञः सुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥

[2]भ्रातॄन् सर्वान् स दीर्घायुः पितृवत्पालयिष्यति ।
मातॄणां चैव सर्वासां प्रियाण्युपहरिष्यति ॥

[3]विशेषतः पूजयति कौसल्यामप्यतीत्य माम् ।
रामो राजीवताम्राक्षः सर्वत्र समदर्शनः ॥

[4]अकल्याणं नास्ति रामे प्रद्वेषश्च महात्मनि ।
संतापं मा कृथास्तस्माच्छ्रुत्वा रामाभिषेचनम् ॥

[5]भरतश्चापि रामस्य ध्रुवं वर्षशतात्परम् ।
पितृपैतामहं राज्यं क्रमप्राप्तमवाप्स्यति ॥

[6]सा त्वमभ्युदये प्राप्ते ममाऽऽनन्दे च मन्थरे ।
भविष्यति च कल्याणे कथं नु परितप्यसे ॥
[7]यथा मे भरतो मान्यस्तथा भूयोऽपि राघवः ।
कौसल्यातोऽतिरिक्तं च सोऽनुशुश्रूषते हि माम् ॥

राज्यं यदि हि रामस्य भरतस्यापि तत्तथा ।
मन्यते हि यथाऽऽत्मानं तथा भ्रातॄंस्तु राघवः ॥

---

(१) वारा. २।१०।८ यौवराज्यमतोऽर्हति (युवराजत्व-मर्हति) ; वाराकु. २।८।१४ धर्मात्मा गुरुवर्ती च (धर्मज्ञो गुरुभिर्दान्तः) ; राप्र. ३६ धर्मात्मा गुरुवर्ती च (धर्मज्ञो गुणवान् दान्तः) राज्ञः सुतो (राजसुतो).

(२) वारा. २।१०।९ ; वाराकु. २।८।१५ सर्वान् स (भृत्यांश्च) पू.

(३) वारा. २।१०।१०.

(४) वारा. २।१०।११ ; वाराकु. २।८।१५ संतापं मा कृथास्तस्माच्छ्रु (संतप्यसे कथं कुब्जे श्रु) उत्त.

(५) वारा. २।१०।१२ ; वाराकु. २।८।१६ ज्यं क्रमप्राप्तमवाप्स्यति (ज्यमवाप्ता पुरुषर्षभः).

(६) वारा. २।१०।१३ ; वाराकु. २।८।१७ ममा-ऽऽनन्दे (वर्तमाने) कथं नु (किमर्थं).

(७) वाराकु. २।८।१८–१९.

[1]इत्येवं वचनं श्रुत्वा मन्थरा भृशदुःखिता ।
दीर्घमुष्णं च निःश्वस्य कैकयीं पुनरब्रवीत् ॥

[2]अनर्थदर्शिन्यप्रज्ञे नाऽऽत्मानमवबुध्यसे ।
अगाधे दुःखपाताले मज्जन्ती त्वमनन्तके ॥

[3]भविता राघवो राजा रामस्य च सुतस्ततः ।
तस्यान्यस्तस्य चाप्यन्यो वंश्यो राजा भविष्यति ॥

[4]राजवंशात्तु कैकेयि भरतः परिहास्यते ।
न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि ॥

[5]बहूनामपि पुत्राणामेको राज्येऽभिषिच्यते ।
स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥

स्थाप्यमानेष्वित्यादियुक्त्या एक एव राजा, तत्रापि ज्येष्ठ एवेति दर्शितम् । रार. ६७

[6]तस्माज्ज्येष्ठेषु पुत्रेषु राज्यतन्त्राणि पार्थिवाः ।
आसज्जन्त्यनवद्याङ्गि गुणवत्स्वितरेषु वा ॥

---

(१) वारा. २।१०।१४ ; वाराकु. २।८।२० इत्ये-तद्व (कैकेय्या व) च निः (विनिः) यीं पुनरब्र (यीमिदमब्र).

(२) वारा. २।१०।१५ ; वाराकु. २।८।२१ दर्शिन्यप्रज्ञे (दर्शिनी मौर्ख्यात्) उत्तरार्धे (शोकव्यसनविस्तीर्णे मज्जन्ती दुःखसागरे ॥).

(३) वारा. २।१०।१६ ; वाराकु. २।८।२२ रामस्य च सुतस्ततः (राघवस्यानु यः सुतः) पू.

(४) वारा. २।१०।१७ राज (राज्य) कैकेयि (कैकेयी) राज्ञः (राज्ञां) सुताः (सुतः) ; वाराकु. २।८। २२–२३ ; रार. ६७ उत्त. ; राप्र. ३९ उत्त.

(५) वारा. २।१०।१८ ; वाराकु. २।८।२३ उत्त. ; रार. ६७ : ७१ उत्तरार्धस्य निर्देशमात्रम्.

(६) वारा. २।१०।१९ ; वाराकु. २।८।२४ ज्ज्येष्ठेषु पुत्रेषु (ज्ज्येष्ठे हि कैकेयि) आसज्जन्त्य (स्थापयन्त्य) रेषु वा (रेष्वपि) ; रार. ६७ ज्ज्येष्ठेषु पुत्रेषु (ज्ज्येष्ठे हि कैकेयि) आसज्जन्त्य (आसजन्त्य) रेषु वा (रेष्वपि) ; राप्र. ३९ वा (च).

आसज्जन्ति निःक्षिपन्ति । तन्त्राणि कार्याणि ।
रार. ६७

[1]ते च ज्येष्ठाः स्वपुत्रेषु ज्येष्ठेष्वेव न संशयः ।
आसज्जन्त्यखिलं राज्यं न भ्रातृषु कथंचन ॥

[2]अतोऽत्यन्तमपूजार्हस्तव पुत्रो भविष्यति ।
अनाथवत्सुखाद्धीनो राजवंशाच्च शाश्वतात् ॥

( कैकेयीं प्रति दशरथवाक्यम् – )

[3]बालोऽप्यसौ कथं राज्यं भरतः कारयिष्यति ।
ज्येष्ठे तिष्ठति राज्यार्हे रामे राजीवलोचने ॥

( कैकेयीं प्रति भरतवाक्यम्– )

[4]अस्मिन्कुले हि पूर्वेषां ज्येष्ठो राज्येऽभिषिच्यते ।
अपरे भ्रातरस्तस्मिन्प्रवर्तन्ते समाहिताः ॥
न हि मन्ये नृशंसे त्वं राजधर्ममवेक्षसे ।
गतिं वा न विजानासि राजवृत्तस्य शाश्वतीम् ॥
सततं राजवृत्ते हि ज्येष्ठो राज्येऽभिषिच्यते ।
राज्ञामेतत्समं तत्स्यादिक्ष्वाकूणां विशेषतः ॥

( सभां प्रति भरतवाक्यम्– )

[5]ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः ।
नैवं भवन्तो मां वक्तुमर्हन्ति कुशला जनाः ॥
रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः ॥

( १ ) वारा. २।१०।२० ; रार. ६७ स्वपुत्रेषु ( सुपुत्रेषु ) आसज्जन्त्य ( आसजन्त्य ) ; राप्र. ३९ ते च ज्येष्ठाः स्वपुत्रेषु ( तेषु ज्येष्ठेषु पुत्रेषु ).

( २ ) वारा. २।१०।२१ ; वाराकु. २।८।२५ अतोऽत्यन्तमपूजार्हस्त ( असावत्यन्तनिर्भग्नस्त ) सुखाद्धीनो ( सुखेभ्यश्च ) शाश्वतात् ( वत्सले ).

( ३ ) वारा. २।३७।७.

( ४ ) वाराकु. २।७३।२१–२३.

( ५ ) वारा. २।९०।१०–११ ( ज्येष्ठो भ्राता सदा राज्ये मामतोऽनुचितं कुले । भवन्तो वक्तुमर्हन्ति नैवं मां कुशला इव ॥ भ्राता मे गुणवान् ज्येष्ठो राजा भवितुमर्हति ॥ ) ; वाराकु. २।७९।७–८.

[1]ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः ।
लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ॥

[2]अयोध्यायामहं वस्तुं नोत्सहे भ्रातरं विना ।
सर्वश्रेष्ठगुणं ज्येष्ठं रामं राजीवलोचनम् ॥

पित्रा भुक्ता नृपश्रीर्मे दायाद्यं तस्य धीमतः ।
नाधिगन्तुं मया शक्या सावित्री वृषलैरिव ॥

पितर्युपरते तस्मिंल्लोकनाथे महात्मनि ।
शरणं च गतिर्ज्येष्ठो भ्राता चैव पिता च मे ॥

( रामं प्रति भरतवाक्यम्– )

[3]शाश्वतोऽयं सदा धर्मः स्थितोऽस्माकं नरर्षभ ।
ज्येष्ठे त्वयि स्थिते राजन्न कनीयान्भवेन्नृपः ॥

[4]अजस्य चैव धर्मात्मा राजा दशरथः सुतः ॥

[5]तस्य ज्येष्ठोऽसि दायादो राम इत्यभिविश्रुतः ।
तद्गृहाण स्वकं राज्यमवेक्षस्व जनं नृप ॥

[6]इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः ।
पूर्वजे नावरः पुत्रो ज्येष्ठो राज्येऽभिषिच्यते ॥

( १ ) वारा. २।९२।१२ ; वाराकु. २।८२।१३.

( २ ) वारा. २।९२।१७–१९.

( ३ ) वारा. २।११६।१२ ; वाराकु. २।१०१।२ ऽस्माकं ( ऽस्मासु ) उत्तरार्धे ( ज्येष्ठपुत्रे स्थिते राजन्न कनीयान्नृपो भवेत् ॥ ) ; रार. ६६ ( शाश्वतोऽयं स्मृतो धर्मः पार्थिवानां नरर्षभ । न यवीयान् स्थिते ज्येष्ठे राजा भवितुमर्हति ॥ ) व्यासः.

( ४ ) वारा. २।१२३।३० स्य चैव ( स्यापि हि ) ; वाराकु. २।११०।३२.

( ५ ) वारा. २।१२३।३१ ( तस्य पुत्रोऽसि वै ज्येष्ठो राम इत्यभिसंज्ञितः । प्रतिगृह्णीष्व राज्यं स्वमवेक्षस्व जगन्नृप ॥ ) ; वाराकु. २।११०।३३.

( ६ ) वारा. २।१२३।३२ हि ( तु ) उत्तरार्धे ( पूर्वजान्नावरः पुत्रो राज्ये समभिषिच्यते ॥ ) ; वाराकु. २।११०।३४ ; रार. ६७ हि ( च ) ज्येष्ठो राज्येऽभि ( राज्ये समभि ).

[१]स राघवाणां कुलधर्ममात्मनः
सनातनं नाद्य विहन्तुमर्हसि ।
प्रभूतरत्नामनुशाधि मेदिनीं
प्रभूतराष्ट्रां पितृवन्महायशः ॥

भ्राताऽपि राज्येऽधिकृतः

[२]युक्तं यत्प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि ।
अयुक्तं यदधर्मेण त्वयाऽहं निहतो रणे ॥

कुलक्रमागते राज्ये ज्येष्ठस्य ज्येष्ठः पुत्रोऽधिकृतः

[३]इममप्यङ्गदं वीर यौवराज्येऽभिषेचय ।
ज्येष्ठस्य स सुतो ज्येष्ठः सदृशो विक्रमेण ते ।
अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम् ॥

## कौटिलीयमर्थशास्त्रम्

आत्मसंपन्नो विनीतः पुत्रः राज्येऽधिकृतः, तदभावे पौत्रः पुत्रिकापुत्रो वा, तदभावे क्षेत्रजः, बहुषु पुत्रेषु ज्येष्ठोऽधिकृतोऽनापदि

[४]आत्मसंपन्नं सैनापत्ये यौवराज्ये वा स्थापयेत् ॥ स यद्येकपुत्रः पुत्रोत्पत्तावस्य वियतेत । पुत्रिकापुत्रानुत्पादयेद्वा। वृद्धस्तु व्याधितो वा राजा मातृबन्धुकुल्यगुणवत्सामन्तानामन्यतमेन क्षेत्रे बीजमुत्पादयेत् । न चैकपुत्रमविनीतं राज्ये स्थापयेत् ॥

सः दुर्बुद्धिः एकपुत्रो यदि एक एव राज्ञः पुत्रश्चेत् अस्य दुर्बुद्धेः पुत्रोत्पत्तौ पुत्रस्य राज्यार्हस्योत्पत्तौ वियतेत विशेषेण यत्नं कुर्यात् । अथवा पुत्रिकापुत्रान् पुत्रिकायाः ' अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ' इति परिभाषापूर्वं वराय दत्तायाः सुतायाः पुत्रान् उत्पादयेत् राज्यार्थम् । अदुहितृको वृद्धभावात् व्याधेर्वा गर्भाधानाक्षमश्चेत् राजा तदा मातृबन्धोः स्वकुलजातस्य गुणवत्सामन्तस्य वा नियोगेन स्वमहिष्यां बीजमुत्पादयेदित्याह– वृद्धस्त्वित्यादि । सर्वथा तु अशिक्षितमेकं पुत्रं राज्ये न निवेशयेदित्याह– न चेत्यादि । श्रीमूला.

बहूनामेकसंरोधः पिता पुत्रहितो भवेत् ।
अन्यत्राऽऽपद ऐश्वर्यं ज्येष्ठभागि तु पूज्यते ॥

बहूनां पुत्राणां मध्ये एकसंरोधः एकस्य दुर्बुद्धेः संरोधः प्रत्यन्तादिष्ववरोधः कर्तव्य इति शेषः । पिता आपदोऽन्यत्र अनापदि पुत्रहितः पुत्रानुकूलवृत्तिः भवेत् । पुत्रेषु बहुषु पितृप्रियेषु विद्यमानेषु कस्य राज्यभाक्त्वमित्यत्राऽऽह– ऐश्वर्यं राजत्वं ज्येष्ठभागि तु ज्येष्ठपुत्राश्रयमेव पूज्यते प्रशस्यते । श्रीमूला.

' कुलं राज्येऽधिकृतम्, नैकः कोऽपि ' इति पक्षान्तरम्

कुलस्य वा भवेद्राज्यं कुलसंघो हि दुर्जयः ।
अराजव्यसनाबाधः शश्वदावसति क्षितिम् ॥

पक्षान्तरमाह– कुलस्येति । अथवा राज्यं कुलस्य बहुपुत्रसंघस्य भवेत्, बहुपुत्रसंघनेतृकं कार्यमित्यर्थः । तथा करणे गुणमाह– कुलसंघः कुलात्मको राज्यनेता संघः दुर्जयः जेतुमशक्यः शत्रुणा भवति । गुणान्तरमाह– अराजव्यसनाबाधः राजव्यसनदोषनिमित्त आबाधः जनपीडा राजव्यसनाबाधः, तस्याभावः, शश्वत् सर्वदा क्षितिं आवसति भूमिमधितिष्ठति राज्येऽनुवर्तत इत्यर्थः, नेतृसंघस्यावयव एकस्मिन् व्यसनविनष्टेऽप्यन्यैः सम्यक् प्रजापरिपालननिर्वर्तनादिति भावः । श्रीमूला.

आत्मसंपन्नो राजपुत्रः, तदभावे अव्यसनी राजपुत्रः, राजकन्या, गर्भिणी राज्ञी वा राज्येऽधिकृताः

[१]राजपुत्रमात्मसंपन्नं राज्ये स्थापयेत् । संपन्नाभावे ... ( अव्यसनिनं ) कुमारं राजकन्यां गर्भिणीं देवीं वाऽधिकुर्वीत ॥

---

( १ ) वारा. २।१२३।३ प्रथमचरणे ( स राघवेमं बत वंशमात्मनः ) विहन्तु ( विहातु ) चतुर्थचरणे ( समृद्धराज्यां पितृवन्महायशाः ).

( २ ) वारा. ४।१३।२६ रणे ( वृथा ); वाराकु. ४।१७।५२.

( ३ ) वारा. ४।१९।१२ वीर ( राजन् ) प्रथमार्धमात्रम्; वाराकु. ४।२६।१२.

( ४ ) कौ. १।१७.

( १ ) कौ. ५।६.

### मनुः

कुलक्रमागते राज्ये अदोषो गुणवान् ज्येष्ठ औरसः पुत्रोऽधिकृतः टीकानुसारेण, ज्यैष्ठ्यनिर्णयः

**'ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः ।**
**शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥**

(१) एतज्ज्येष्ठस्य गुणवत्त्वे अन्येषां च हीनत्वे । मवि.

(२) यदा पुनर्ज्येष्ठो धार्मिको भवति तदा– ज्येष्ठ इति । ज्येष्ठ एव पितृसंबन्धि धनं गृह्णीयात् । कनिष्ठाः पुनः ज्येष्ठं भक्ताच्छादनाद्यर्थं पितरमिवोपजीवेयुः । एवं सर्वेषां सहैवावस्थानम् । * ममु.

(३) अथ राज्याधिकारिनिर्णयः । तत्रौरसो ज्येष्ठ एवाधिकारी । तदुक्तं कालिकापुराणे राजेत्युपक्रम्य– 'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च दासश्च षडिमे पुत्रपांसनाः ॥' । दासः स्वोत्पन्नो दासीपुत्रः, रागादिना द्विजातीनामपि दास्यामुत्पन्नस्य पुत्रस्य संभवात् । 'अभावे पूर्वपूर्वेषां परान् समभिषेचयेत्' इति । मनुः– 'ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः । शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥' इति । आपस्तम्बोऽपि– 'ज्येष्ठो दायादः' (आध. २।१४।६) इति । इदं राज्ये विभागाभावस्य वक्ष्यमाणत्वात् राज्यविषयमिति बहुभिर्व्याख्यातम् । मनुरपि– 'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितॄणामनृणश्चैव स तस्मात् सर्वमर्हति ॥' (९।१०६) इति । कालिकापुराणे तु ज्येष्ठौरसस्य राज्यं स्पष्टमेवाभिहितम् – 'अथोपरिचरं राजा यौवराज्येऽभ्यषेचयेत् । ज्यायांसमौरसं पुत्रं सर्वराजगुणैर्युतम् ॥' इति । रामायणेऽपि मन्थरां प्रति कैकयीवाक्यम्– 'धर्मज्ञो गुणवान् दान्तः कृतज्ञः सत्यवाक् शुचिः । रामो राजसुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥' (२।८।१४) । राजसुत इत्यौरसत्वज्ञापनार्थम् । तथा रामं प्रति दशरथवाक्यम्– 'आदिष्टो ह्यसि मे ज्येष्ठः प्रसूतः सदृशो गुणैः । ज्येष्ठायामपि मे पत्न्यां सदृश्यां सदृशः सुतः ॥ तन्मत्तस्त्वं गुणज्येष्ठो रामनामाऽऽत्मजः प्रियः । त्वया तात प्रजा ह्येताः स्वगुणैरनुरञ्जिताः ॥ तस्मात् त्वं पुष्ययोगेन यौवराज्यमवाप्स्यसि ॥' इति । प्रसूतः औरसः । अस्मादपि ज्येष्ठस्यौरसस्यैव राज्यमिति गम्यते । ज्येष्ठायामिति यदा एकदोत्पन्नयोः ज्यैष्ठ्यं न निर्णेतुं शक्यते, तदा ज्येष्ठापुत्रस्य प्राप्त्यर्थम्, न तु महिष्या अन्यस्या वा ज्येष्ठायाः पुत्रस्य कनीयसोऽपि प्राप्त्यर्थम्, यदा ज्येष्ठाया अनभिषिक्ताया वा पुत्रो ज्येष्ठस्तदा तस्यैव राज्यमित्याचारदर्शनात्, 'सदृशस्त्रीषु जातानां पुत्राणामविशेषतः । न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥' इति (९।१२५) मनुना स्पष्टमभिधानाच्च, रामायणेऽपि– 'जन्मज्येष्ठं प्रियं पुत्रं यौवराज्ये यदीप्सथ' इति ज्यैष्ठ्यस्य जन्मनैवोक्तत्वाच्च । एवं यमयोरपि जन्मनैव ज्यैष्ठ्यं, न निषेकेण । निषेकज्यैष्ठ्ये तु अनेकपत्नीकस्य एकस्यां (? यस्यां) पूर्वं निषेकः पश्चात् पुत्रजन्म, यस्यां पश्चात् निषेकः पूर्वं पुत्रजन्म, तत्पुत्रयोर्मध्ये पूर्वापुत्रस्यैव राज्यं स्यात् । न चेष्टापत्तिः, आचारविरोधात् उक्तवचनविरोधाच्च । मनुरपि जन्मनैव ज्यैष्ठ्यमाह– 'जन्मज्यैष्ठ्येन चाऽऽह्वानं सुब्रह्मण्यायामपि स्मृतम् । यमयोश्चैव गर्भेषु जन्मना ज्यैष्ठ्यमुच्यते ॥' (९।१२६) । सुब्रह्मण्याख्यो मन्त्रो ज्योतिष्टोमे इन्द्रस्य आह्वानार्थे प्रयुज्यते । तत्र प्रथमं प्रथमपुत्रेण पितरमुद्दिश्याऽऽह्वानं क्रियते– 'अमुकस्य पिता यजते' इति । तत्र जन्मज्येष्ठतामादृत्यैवाऽऽह्वानम्, यस्य च यजमानस्य यमजौ पुत्रौ तत्र गर्भे एककालनिषिक्तयोरपि यमयोः जन्मना ज्यैष्ठ्यमुच्यते, जन्मज्यैष्ठ्येन पुत्रस्य ज्येष्ठतामादृत्याऽऽह्वानं क्रियते इति वाक्यार्थः । गर्भेष्विति बहुवचनं तु लोके स्त्रीबहुत्वमपेक्ष्योक्तं द्रष्टव्यम् । तथा च स्मृत्यर्थतत्त्वे देवलः– 'यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् । संतानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम् ॥' इति । संतानः वंशः । मनु– पूर्वं निषिक्तस्य पश्चादुत्पन्नस्य

---

* मच. ममुगतम् ।

(१) मस्मृ. ९।१०५ ; राप्र. ३५.

हिरण्यकशिपोः कथं पूर्वं नामकरणम् ? तथा च श्रीभागवते– 'प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत । तं वै हिरण्यकशिपुं विदुर्बुधा यं तं हिरण्याक्षमसूत साऽग्रतः ॥' । स्वदेहात् पितृदेहात् । प्राक् गर्भनिषेककाले । सा अदितिः । गर्भाधानकाले यथा प्राक्पश्चाद्भावस्तथोक्तः पिण्डसिद्धौ– 'यदा विशेत् द्विधाभूतं बीजं पुष्पं परिक्षरत् । द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात् ॥' । सूतिः प्रसवः । वेशविपर्ययात् वेशो बीजप्रवेशः, तद्विपर्ययात् तद्वैपरीत्येन । यस्य पूर्वं निषेकः तस्य पश्चादुत्पत्तिः, यस्य च पश्चान्निषेकः तस्य पूर्वमुत्पत्तिः– इति चेत्, उच्यते– 'जन्मना ज्यैष्ठ्यमुच्यते' (मस्मृ. ९।१२६) इति, 'तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम्' इति मनुदेवलवचनाभ्यां विरोधे 'प्रजापतिर्नाम तयोरकार्षीत्' इति भागवतवचनस्य सिद्धार्थमात्रबोधकस्य ज्यैष्ठ्यविधायकत्वमिति वक्तुमशक्यत्वात् । 'सूतिर्वेशविपर्ययात्' इत्यस्यापि एकदा निषिक्तयोरुपरिभागनिषिक्तस्य पश्चान्निर्गम इति दैशिक एव विपर्ययोऽर्थः, न तु गर्भे पूर्वमुत्पन्नस्येत्येतावत्पर्यन्तमर्थः, एकस्यापि संकीर्णवीथीस्थितस्य गजादेः पराङ्मुखतयैव परावृत्तौ 'विपरीतो निर्गतः' इति प्रयोगात् । न च मनुवाक्ये गर्भेषु जन्मनेत्यन्वयो युक्तः, गर्भसंभूतौ 'अपत्यजन्माभूत्' इत्यप्रयोगात् निर्गमे च तादृशप्रयोगात् देवलवाक्यैकवाक्यत्वाच्च पूर्वोक्तमेधातिथ्यादिकृतव्याख्यानस्यैवोचितत्वात् । इतरथा निषेकक्रमेण ज्येष्ठत्वे अनेकपत्नीकस्य एकस्यां पूर्वं निषिक्तो गर्भः शल्यीभूतः अन्यस्यां च अनन्तरनिषिक्तः स्वकाले उत्पन्नः तदपेक्षया शल्यवृद्ध्या विंशतिवर्षानन्तरोत्पन्नस्य ज्येष्ठत्वव्यवहारप्रसङ्गः । यदि चैकगर्भ एव निषेकक्रमेण ज्यैष्ठ्यम्, न पृथग्गर्भे, भागवतवचनानुरोधादित्युच्यते, तत्रोक्त एव मनुदेवलवचनविरोधः । अस्तु वा तथा, तथापि को हि अयोगी तद्वेद यदुपर्यधो वा पूर्वं निषेक एकदैवोभयत्र वेति, त्रितयस्यापि वक्तुं शक्यत्वात्, योगी हि प्रजापतिः क्रमं विदित्वा नाम चकारेत्यस्यापि सुवचत्वात् । अत एव 'यः प्राक् स्वदेहात्' इत्येवोक्तम्, न तूपरिस्थितत्वादेराद्यसंभूतौ हेतुत्वेनोक्तिः । तस्माज्जन्मनैव ज्यैष्ठ्यमिति दिक् ।

अथौरसे कनीयस्यपि सति क्षेत्रजादीनां राज्यदाननिषेधः कालीपुराणे दर्शितः– 'न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत् । पितॄणां शोधयन्नित्यमौरसे तनये सति ॥' । शोधयन् ऋणमिति शेषः । औरसे तनये सतीति तत्संततेरप्युपलक्षणम् । पुत्रेभ्यो राज्यं विभज्य न देयम् । तथा च रामायणे कैकयीं प्रति वाक्यम्– 'न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि । स्थाप्यमानेषु सर्वेषु महान् विनयो भवेत् ॥ तस्माज्ज्येष्ठेषु पुत्रेषु राज्यतन्त्राणि पार्थिवाः । आसजन्त्यनवद्याङ्गि गुणवत्स्वितरेषु च ॥ तेषु ज्येष्ठेषु पुत्रेषु ज्येष्ठेष्वेव न संशयः । आसजन्त्यखिलं राज्यं न भ्रातृषु कथंचन ॥' इति । गुणवत्स्वितरेष्विति ज्यायसि दोषसद्भावे कनीयसां मध्ये एकस्य कस्यचित् राज्यदाने गुणवत्त्वं हेतुत्वेनोपन्यस्तम् । ज्येष्ठस्यान्धत्वादिदोषसद्भावे न राज्यभाक्त्वम् । तदुक्तं महाभारते– 'नान्धः कुरूणां नृपतिरनुरूपस्तपोधन', तथा 'धृतराष्ट्रस्त्वचक्षुष्ट्वात्तद्राज्यं न प्रपद्यत । पारशवत्वाच्च विदुरो राजा पाण्डुर्बभूव ह ॥' । अत्राऽऽन्ध्यमुपलक्षणं बधिरमूकषण्डादीनाम्, तेषां ग्रासाच्छादनमात्रांशित्वेन राज्यप्राप्तिप्रसङ्गस्याप्यभावात् । यथोक्तं मनुना– 'अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥ सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा । ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥' (मस्मृ. ९।२०१–२०२) । निरिन्द्रियः व्याध्यादिनोपहतेन्द्रियः । अत्यन्तं यावज्जीवम् । अन्धत्वादिदोषेण कुतश्चित् कारणाद्वा त्यक्तराज्यानां ज्येष्ठानां राज्याभावेऽपि तत्पुत्राणां राज्यं भवत्येव, यथा असमञ्जःपुत्रस्यांशुमतः । इदं तु राज्याभिषेकात् पूर्वमुत्पन्नस्यान्धादिपुत्रस्य । यदा तु कनीयसोऽभिषेकानन्तरं ज्यायसोऽन्धादेः औरसस्तदा कनीयसोऽभिषिक्तस्यैव पुत्रादेः । यथा पाण्डुपुत्रस्य युधिष्ठिरस्य, नान्धपुत्रस्य दुर्योधनादेः । तथा च महाभारते– 'गुणैः समुदितान् दृष्ट्वा पौराः पाण्डुसुतांस्तदा । कथयां-

चक्रिरे तेषां गुणान् संसत्सु भारत ॥ राज्यप्राप्तिं च संप्राप्तं ज्येष्ठं पाण्डुसुतं तदा । कथयन्ति स्म संभूय चत्वरेषु सभासु च ॥ प्रज्ञाचक्षुरचक्षुष्ट्वात् धृतराष्ट्रो जनेश्वरः । राज्यं न प्राप्तवान् पूर्वं स कथं नृपतिर्भवेत् ॥ तथा शान्तनवो भीष्मः सत्यसंधो महाव्रतः । प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥ ते वयं पाण्डवं ज्येष्ठं तरुणं वृद्धशीलिनम् । अभिषिञ्चाम साध्वद्य सत्यं कारुण्यवेदिनम् ॥' (भा. १।१४१।२३–२७) । तथा अन्यदपि पौरवाक्यम्– 'तान् राज्यं पितृतः प्राप्तान् धृतराष्ट्रो न मृष्यति' (भा. १।१३३।९), तथा 'राजपुत्रानिमान् बालान् धृतराष्ट्रो न मृष्यति । वयमेतदनिच्छामः सर्व एव पुरोत्तमात् । गृहान् विहाय गच्छामो यत्र गन्ता युधिष्ठिरः ॥' (भा. १।१३३।११–१२), तथा 'ततः संवत्सरस्यान्ते यौवराज्याय पार्थिव । स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ॥' (भा. १।१३९।१) । ज्येष्ठपुत्रसुतस्य कनिष्ठपुत्रसमवायेऽपि पौत्रस्यैव राज्यम् । तथा च महाभारते लिङ्गं शंतनोः सत्यवतीप्राप्त्यै त्यक्तराज्यस्य भीष्मस्य दाशं प्रत्युक्तिः– 'योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति । इत्युक्तः पुनरेवाथ स दाशः प्रत्यभाषत ॥ यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण । राजमध्ये प्रतिज्ञातमनुरूपं तथैव तत् ॥ नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन । तवापत्यं भवेद्यस्तु तत्र नः संशयो महान् ॥' (भा. १।१००।८७–८८,९१–९२) । मद्दौहित्रत्वत्पुत्रसमवाये त्वत्पुत्रस्यैव राज्यमतः संशय इत्यर्थः । भीष्म उवाच– 'राज्यं तावत् पूर्वमेव यथा त्यक्तं नराधिपाः । अपत्यहेतोरपि च करिष्येऽद्य विनिश्चयम् ॥ अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥' (भा. १।१००।९५–९६) इति । सति पुत्रे स राज्याधिकारी स्यादतो ब्रह्मचर्यमङ्गीकृतं भीष्मेण । असत्यौरसे पुत्रे तत्संततौ च क्षेत्रजादीनां क्षत्रियाजातानामुदाहृतकालीपुराणवचनेनोक्त एवाभिषेकः, तेषामपि मातृसमानजातीयत्वेन व्यासोत्पन्नपाण्डोरिव 'राजानमभिषेचयेत्' इति विधिप्राप्तेः । तेष्वपि केषांचिन्नाधिकार इत्युक्तं तत्रैव– 'पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत्' इति । गौणस्यापि पुत्रस्याभावे भ्रात्रादीनामधिकारस्य दायक्रमलभ्यत्वात् तत्क्रमविचारो नेह विविच्यते । इति राज्याधिकारिनिर्णयः । राप्र. ३५–४२

(४) पक्षान्तरमाह– ज्येष्ठ एवेति । नन्द.

**ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।**
**पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥**

(१) पितॄणामनृणः, तेनैव तदृणापगमात् । अयं पूर्वस्यार्थवादः । मवि.

(२) उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान् भवति । ततश्च 'नापुत्रस्य लोकोऽस्ति' (ऐब्रा. ३३।२) इति श्रुतेः (? श्रुत-) पुण्यलोकाभावपरिहारो भवति । तथा 'प्रजया पितृभ्यः' (तैसं. ६।३।१०।५) इति श्रुतेः पुत्रेण जातमात्रेण पितॄणामनृणश्च सः इति (? भवति) । अतो ज्येष्ठ एव सर्वधनमर्हति पूर्वस्य । अनुजाः तेन साम्ना वर्तेरन् । ममु.

(३) ज्येष्ठस्य सर्वधनभुक्तौ हेतुमाह– ज्येष्ठेनेति । अनृणः निस्तीर्णर्णः, 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' (तैसं. ६।३।१०।५) इति श्रुतेः पितुर्ऋणवतः श्रवणात् । मच.

(४) कनिष्ठेभ्यो ज्येष्ठस्य विशेषमाह– ज्येष्ठेनेति । नन्द.

**यस्मिन्नृणं संनयति येन चाऽऽनन्त्यमश्नुते ।**
**स एव धर्मजः पुत्रः कामजानितरान् विदुः ॥**

(१) इतरानित्यर्थवादोऽयम् । यथाश्रुततात्पर्यग्रहणाद्धि कनीयसां अभागार्हतैव स्यात् । ततश्च वक्ष्यमाणविरोधः । मेधा.

(२) आनन्त्यं अमृतत्वम्, उत्पादितपुत्रस्यैव मोक्षाश्रमाधिकारात् । धर्मजः धर्मार्थमुत्पादितः । कामजान्, एकेनैव धर्मस्य सिद्धेः । मवि.

---

(१) मस्मृ. ९।१०६ ; राप्र. ३५–३६ ; राकौ. २३४ पू. ; बाल. १।३०९ पृ. ६१५ पू.

(२) मस्मृ. ९।१०७ ; रार. ६६.

(३) यस्मिन् जाते ऋणं शोधयति। येन जातेनामृतत्वं प्राप्नोति। तथा च श्रुतिः— 'ऋणमस्मिन् समुन्नयत्यमृतत्वं च गच्छति। पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥' (ऐब्रा. ३३।१) इति। स एव पितुर्धर्मेण हेतुना जातः पुत्रो भवति, तेनैकेनैव ऋणापनयनाद्युपकारस्य कृतत्वात्। इतरांस्तु कामजान् मुनयो जानन्ति। ततश्च सर्वं धनं गृह्णीयादित्यस्यैवायमपि विशेषः। * ममु.

(४) क्वचित् कुले ज्येष्ठो गुणहीनः कनिष्ठो गुणवांश्च दृश्यते, तत्र किं प्रवर्तितव्यमित्यपेक्षायामाह— यस्मिन्नृणमिति। ऋणं पितृभ्यः प्रदेयं पिण्डादिकं संनयति निक्षिपति, येन यशस्विना संतानकरेणाऽऽनन्त्यं मरणराहित्यमश्नुते, स एव पुत्रो धर्मजः धर्मार्थं जातः ज्येष्ठ इत्यर्थः। इतरान् निर्गुणान्। नन्द.

(५) यस्मिन् पुत्रे ऋणं त्रिविधं देवर्षिपित्र्यं संनयति समाप्तिं नयति। धर्मतः(? जः) धर्मार्थं जातः। भाच.

ज्यैष्ठ्यनिर्णयः

**'सदृशस्त्रीषु जातानां पुत्राणामविशेषतः।**
**न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते॥**

(१) सिद्धान्तस्त्वयमुच्यते— सदृशेति। सदृशः (? शाः) समानजातीयः(? याः)। मेधा.

(२) अभिवादनादिक्रियां प्रति विशेषमाह— सदृशेति। वयोज्येष्ठ एव अभिवादनादिविषय इत्यर्थः। मवि.

(३) समानजातीयस्त्रीषु जातानां पुत्राणां जातिगतविशेषाभावे सति न मातृक्रमेण ज्यैष्ठ्यमृषिभिरुच्यते। जन्मज्येष्ठानां तु पूर्वोक्त एव विंशतिभागादिरुद्धारो बोद्धव्यः। एवं च मातृज्यैष्ठ्यस्य विहितप्रतिषिद्धत्वात् षोडशिग्रहणाग्रहणवद्विकल्पः। स च गुणवन्निर्गुणतया भ्रातॄणां गुरुलघुत्वावगमात् व्यवस्थितः। अत एव 'जन्मविद्यागुणज्येष्ठस्त्र्यंशं दायादवाप्नुयात्' इति बृहस्पत्यादिभिः जन्मज्येष्ठस्य विद्याद्युत्कर्षेणोद्धारोत्कर्ष उक्तः। निर्गुणस्य 'एकं वृषभम्' इति, मन्दगुणस्य 'वृषभषोडशाः' इति मातृज्यैष्ठ्याश्रयणेनोद्धारो बोद्धव्यः। मातृज्यैष्ठ्यविधिं त्वनुवादं मेधातिथिरवदत्। गोविन्दराजस्त्वन्यमतं जगौ। ममु.

(४) 'पुत्रः कनिष्ठः' इत्यादिश्लोकत्रयेणैकदेशिमते विभागमुक्त्वा स्वमते तूक्तविभागान् वक्तुं पुत्राणां जन्मत एव ज्यैष्ठ्यमाह— सदृशस्त्रीष्विति। लाघवात् सदृशस्त्रीषु जन्मोत्कर्ष उद्धारप्रयोजकः, न तूद्वाहस्य यौगपद्यं क्रमिकत्वं चेति। मातृज्येष्ठत्वविधिनिषेधयोः पुत्रगतगुणवद्गुणवत्त्वव्यवस्थितविकल्पेन समाधिः इति कुल्लूकः। मेधातिथिस्त्वर्थवादमाह। वस्तुतस्तु जन्मज्यैष्ठ्यमेव प्रयोजकम्। मच.

(५) इदं मातृतो ज्यैष्ठ्यं विभागविधावेव, नान्यत्रेति श्लोकाभ्यामाह— सदृशस्त्रीष्विति। सदृशस्त्रीषु सवर्णस्त्रीषु। नन्द.

**'जन्मज्येष्ठेन चाऽऽह्वानं सुब्रह्मण्यास्वपि स्मृतम्।**
**यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता॥**

(१) अर्थवादोऽयं जन्मज्येष्ठतामभ्युपगमयति। सुब्रह्मण्या नाम मन्त्रो ज्योतिष्टोमे छन्दोगैः प्रयुज्यते इन्द्राह्वानाय 'सुब्रह्मण्योमिन्द्राऽऽगच्छ' इत्यादिः। प्रयोगबहुत्वात् बहुवचनम्। तत्रेदमुच्यते— प्रथमपुत्रेण पितरं व्यपदिश्य हूयते 'देवदत्तस्य पिता यजते'। जन्मतो ज्यैष्ठ्यं मुख्यम्। अन्यत्तु मातृविवाहसंबन्धात् गौणम्। यमयोर्गर्भे एककालनिषिक्तयोरपि जन्मतो ज्यैष्ठ्यम्। मेधा.

(२) जन्मतो ज्येष्ठतेति युक्तिप्राप्तस्यैवानुवादः। * मवि.

---

* मच, ममुगतम्।

(१) मस्मृ. ९।१२५; राप्र. ३६.

* शेषं मेधागतम्।

(१) मस्मृ. ९।१२६; राप्र. ३७ ज्येष्ठेन (ज्यैष्ठ्येन) न्यास्वपि (न्यायामपि) जन्मतो ज्येष्ठता स्मृता (जन्मना ज्यैष्ठ्यमुच्यते); नन्द. श्चैव गर्भेषु (श्चैकगर्भेऽपि).

(३) गर्भेष्विति बहुवचनं स्त्रीबहुत्वापेक्षया। * मसु.

(४) अत एव यमयोरपि प्रथममेकजस्यैव ज्येष्ठतामाह- यमेति। 'गर्भेषु जन्मतः' इति वचनात् निषेककाले प्रथमनिषिक्तस्यैव ज्येष्ठत्वं योनिनिःसरणापेक्षया तु कनिष्ठत्वेऽपि। अन्यथा गर्भेष्विति व्यर्थम्। बहुवचनं स्त्रीषु व्यक्त्यपेक्षया। तेन मातृद्वयं गर्भद्वयं यदा धत्ते तत्रापि पूर्वनिषिक्तस्यैव ज्येष्ठता, न तु दैवात् अष्टमासादिजातस्येति भावः। * मच.

(५) एकगर्भेऽप्येककालनिषिक्तयोरपि सतोः। नन्द.

(६) सुब्रह्मण्यासु क्रियासु सोमयागादौ को यजति? अमुकशर्मणः प्रपौत्रो यजति। च पुनः कः? अमुकशर्मणः पौत्रो यजति। च पुनः अमुक शर्मणः पुत्रो यजति। च पुनः अमुकशर्मा यजति। च पुनः (?) एवंविधक्रियासु जन्मज्येष्ठेन आह्वानं स्मृतम्। यतः सुब्रह्मण्यवेदाध्यायिनां घोषा एवं भवन्ति। यमयोः निषिक्तयोः गर्भेषु जन्मतो ज्येष्ठता स्मृता। भाच.

†'अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥

(१) अचिकित्स्यः क्लीबः। पतितः महापातकी प्रायश्चित्तात् पूर्वम्। बधिरोऽपि जात्या। उन्मत्तादयोऽचिकित्स्याः। जडः अस्ववशकर्मेन्द्रियः। निरिन्द्रियाः स्पर्शग्रहणादिरहिताः कुणिप्रभृतयश्च। मवि.

(२) नपुंसकपतितजात्यन्धश्रोत्रविकलोन्मत्तजडमूकाश्च ये च कुणिपङ्ग्वादयो विकलेन्द्रियास्ते पित्रादिधनहरा न भवन्ति, किंतु ग्रासाच्छादनभागिनः। ममु.

(३) ननु 'दद्यात्पिण्डं हरेद्धनम्' (मस्मृ. ९।१३६) इत्यादिषु पिण्डदातृत्वेन धनहारित्वस्य सामानाधिकरण्यश्रवणात् अन्धादेः का गतिरिति चेत्-त्राऽऽह- अनंशाविति द्वाभ्याम्। जडः धर्मापेतो निरुत्साहः। निरिन्द्रियाः हस्तादिरहिताः। मच.

(४) ज्येष्ठस्याप्यन्धत्वादिदोषे कनिष्ठस्यैवाधिकारः, 'अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा। उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥ सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतिताः स्युरदित्सवः॥' इति मनुना ग्रासदानार्हत्वेनोक्तस्य राज्यार्हत्वासंभवात्, 'धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत। पारशवत्वाद्विदुरो राजा पाण्डुर्बभूव ह॥' इति महाभारतोक्तेश्च। * राकौ. २३५

(५) निरिन्द्रियाः कर्मेन्द्रियरहिताः पङ्ग्वादयो निर्वीर्याश्च। नन्द.

(६) अनंशाविति अभाज्यानाह। अनंशौ अंशानामनर्हौ। जात्यन्धबधिरौ, उन्मत्तः वातपित्तश्लेष्मसंनिपातकैः ग्रहावेशलक्षणैः कम्पाद्यैरभिभूतः, जडः विकलान्तःकरणो हितावधारणाक्षमः, च पुनः ये केचिन्निरिन्द्रियाः व्याध्यादिना निर्गतं इन्द्रियं येषां ते। भाच.

†'दत्त्वा धनं तु विप्रेभ्यः सर्वदण्डसमुत्थितम्।
पुत्रे राज्यं समासृज्य कुर्वीत प्रायणं रणे॥

रणमुपलक्षणम्, मोक्षसाधनोपाय इत्यर्थः। अयमर्थः- राजा राज्यान्निःस्पृहत्वे ज्येष्ठपुत्राय राज्यं दत्त्वा मोक्षसाधनोपायं कुर्यात्। ननु पुत्रमात्रोपादाने कथं ज्येष्ठायैवेति चेत्, न, 'यदा राजा जरायुक्तो रोगार्तो निःस्पृहोऽपि च। आसन्नमृत्युं विज्ञाय कुलधर्मं विचारयन्॥ तदा पौरजनान् सर्वानाहूय मन्त्रयेच्च तैः। सप्ताङ्गानि च राज्यानि ज्येष्ठपुत्राय दापयेत्॥' दापयेत् दद्यात्, 'विधाय वृत्तिं बहूनां राज्यं ज्येष्ठाय दापयेत्' इति राजनीतौ हारीतनारदवचनेभ्यः, पुत्र इत्येकवचनेन अनेकस्या-

---

* शेषं मेधागतम्। राप्र. मेधावत् ममुवच्च।

† राप्रव्याख्यानं अस्मिन्नेव प्रकरणे 'ज्येष्ठ एव तु गृह्णीयात्' इति मनुवचने द्रष्टव्यम्।

(१) मस्मृ. ९।२०१; राप्र. ४०; राकौ. २३५; बाल. १।२०९ पृ. ६१५.

* बाल. राकौवत्।

† श्लोकस्यास्य इतराणि व्याख्यानानि 'राजकर्तव्यप्रकरणे' द्रष्टव्यानि।

(१) मस्मृ. ९।३२३; रार. ६६ धनं (दानं) समुत्थितम् (समुच्छ्रितम्) समासृज्य (समासज्य).

संभवात्, प्राधान्याज्ज्येष्ठस्य न्याय्यत्वाच्च । अत्रार्थे मनुः– 'यस्मिन्नृणं संनयति येन चाऽऽनन्त्यमश्नुते । स एव धर्मजः पुत्रः कामजानितरान् विदुः ॥' (मस्मृ. ९।१०७)। अत्रैवैतदर्थे व्यासः– 'शाश्वतोऽयं स्मृतो धर्मः पार्थिवानां नरर्षभ । न यवीयान् स्थिते ज्येष्ठे राजा भवितुमर्हति ॥'। यवीयान् कनिष्ठः। शाश्वतोऽयमिति सनातनोऽनादिपरंपरागतधर्मोऽयं पार्थिवानामित्यन्वयः। भारते– 'कथं ज्येष्ठानतिक्रम्य कनीयान् राज्यमर्हति । एतत् संबोधयामस्त्वां धर्मं त्वं परिपालय ॥' (भा. ११ ८०।१५)। ज्येष्ठं तिरस्कृत्य कनीयसे राज्यदानमधर्म इति वचनाशयः। रामायणे– 'न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि । बहूनामपि पुत्राणामेको राज्येऽभिषिच्यते ॥ स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् । तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः ॥ आसज्जन्त्यनवद्याङ्गि गुणवत्स्वितरेष्वपि । ते च ज्येष्ठाः सुपुत्रेषु ज्येष्ठेष्वेव न संशयः ॥ आसज्जन्त्यखिलं राज्यं न भ्रातृषु कथंचन ॥' (वारा. २।१०।१७-२०)। स्थाप्यमानेष्वित्यादियुक्त्या एक एव राजा, तत्रापि ज्येष्ठ एवेति दर्शितम्। आसज्जन्ति निःक्षिपन्ति तन्त्राणि कार्याणि। अत्रैव वसिष्ठवाक्यम्– 'इक्ष्वाकूणां च सर्वेषां राजा भवति पूर्वजः । पूर्वजे नावरः पुत्रो राज्ये समभिषिच्यते ॥' (वाराकु. २।११०।३४)। इक्ष्वाकूणामित्युपलक्षणम्, चशब्दात्, 'राज्ञामेतत् समं तस्मादिक्ष्वाकूणां विशेषतः' इति पुनस्तत्रैव तेनोक्तत्वाच्च। ननु राज्यदानमेकस्मै इति (?), 'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' इति वचनात् धर्मशास्त्रस्य प्राबल्ये 'पैतामहं च पित्र्यं च' इत्यादिवाक्येन तस्यापि विभाज्यतेति चेत्, न, राज्यमविभाज्यमिति वक्ष्यमाणत्वात्, तदुभयान्यथासिद्धौ तद्वचनाप्रसक्तेः राज्ञा दत्तस्यानिवर्त्यत्वेनापि राज्यस्याविभज्यत्वाच्च। अत्र मनुः– 'तस्माद्धर्मं यमिष्टेषु संव्यवस्येन्नराधिपः । अनिष्टं चाप्यनिष्टेषु तद्धर्मं न विचालयेत् ॥'। न विचालयेत् नोल्लङ्घयेत्। नारदः– 'अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः' (नास्मृ. ४।३३)। 'स्वातन्त्र्यमप्रतिहतेच्छत्वम्। राजा महीपतिः' इति कामधेनौ स्पष्टम्। न च 'भूर्या' (यास्मृ. २।१२१) इत्यादिवचनेन क्रमागते राज्ये स्वाम्यसाम्यात् स्वार्जितं राज्यं देयमिति वाच्यम्, तेषां मुनिभिरविशेषेणोपादेयत्वात्, क्रमागतराज्यदान एव वसिष्ठाद्युक्तेः, 'लोकवृत्तात् राजवृत्तमन्यदाह बृहस्पतिः' इति वचनात् तेषां राज्यातिरिक्तपरत्वाच्च।

रार. ६६-६८

**'वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः ।**
**योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥**

(१) वस्त्रपत्रालंकारकृतान्नोदकानामेकत्वं विवक्षितम्। पत्रं वाहनं गन्त्रीशकटादि। अलंकारः अङ्गुलीयकादि। वस्त्रं सममूल्यम्, न तु महार्घम्। उदकं कूपवाप्यादि। स्त्रियः दास्यः। योगक्षेमं यतो योगे क्षेमो भवति, मन्त्रिपुरोहितामात्यवृद्धाः वास्तु च । चौरादिभ्यस्ततो रक्षा भवति। स्मृत्यन्तरे च पठ्यते– 'वास्तुनि विभागो न विद्यते'। प्रचारं यत्र गावश्चरन्ति । प्रवेत्रे(?)त्याह। तेन यत्पैतृकेनोक्तम्– 'न ह्यत्र धर्मातिक्रमः कश्चिदस्ति' इति, तदनुपपन्नं दर्शयति। अदृष्टासु हि ते प्रतिषेधाः। तदतिक्रमादधर्मो न स्यात्। मेधा.

(२) वस्त्रं तेन तेन परिहितमधिकत्वेनापि दृश्यमानम्। पत्रं वाहनं अश्वादि तेन तेन परिगृहीतम्। एवमलंकारः अङ्गुलीयादिः । कृतान्नं तत्तदुद्देशेन यत्सिद्धमन्नं विषममपि। उदकं कूपादि। स्त्रियः भार्याः एकस्यैका अन्यस्य द्वे एवं वैषम्येऽपि। योगक्षेमं योगः राजादिलभ्यो निबन्धादिः स्वयमुपात्तः, क्षेमः रक्षोपायः प्राकारेष्टकादिः। प्रचारः वर्त्म। यत्तु 'कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यते' इत्याद्युक्तं बृहस्पतिना, तदतिप्रचुरकृतान्नादेरपि तन्मात्रधनैर्विभागः कार्य इत्येतत्। मवि.

(३) वस्त्रं वाहनमाभरणमविभागकाले यद्येनोपभुक्तं तत्तस्यैव, न विभाज्यम्। एतच्च नातिन्यूनाधिकमूल्यविषयम्। यत्तु बहुमूल्यमाभरणादिकं तद्विभाज्यमेव।

(१) मस्मृ. ९।२१९ ; रार. ७१ ; मच. क्षेमं प्र (क्षेमप्र) ; नन्द. पत्र (पात्र).

तद्विषयमेव 'विक्रीय वस्त्राभरणम्' इति बृहस्पतेर्विभाग-वचनम्। कृतान्नं ओदनसक्त्वादि। तन्न विभजनीयम्। तत्र अतिप्रचुरतरमूल्यं सक्त्वादि तावन्मात्रमूल्यधनेन 'कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यते' इति बृहस्पति-वचनाद्विभजनीयमेव। उदकं कूपादिगतं सर्वैरुपभोग्य-मविभजनीयम्। स्त्रियः दास्याद्याः यास्तुल्यभागा न भवन्ति ता न विभाज्याः, किंतु तुल्यं कर्म कारयि-तव्याः। योगक्षेमं मन्त्रिपुरोहितादि, योगक्षेमहेतुत्वात्। प्रचारः गवादीनां प्रचारमार्गः। एतत्सर्वं मन्वादयो-ऽविभाज्यमाहुः। मनु.

(४) राज्यमविभाज्यमाह मनुः– वस्त्रेति। योगक्षेमं मन्त्रिपुरोहितादि। केचित्तु नौकादि, तन्न, 'योगक्षेमं स्मृतं राज्यम्' इति कोषात्। रार. ७१

(५) न्यूनाधिकमूल्याभावे तु पित्रादिधनं यद्येन भुज्यते तत्तस्यैवेति दृष्टार्थतयाऽऽह– वस्त्रमिति। पत्रं अश्वादि। कृतान्नं अविभागकाले यद्येन भुक्तम्। योगः अलब्धलाभः, लब्धस्य परिरक्षणं क्षेमः, तयोः प्रचारं प्रचर्यते निर्वाह्यते येनेति तद्धेतुमन्त्रिपुरोहितादिः। एता-न्यपि दत्तानि न विभजनीयानि, अत्यन्तमूल्ये विभजनी-यानि, 'विक्रीय वस्त्राभरणम्' इति बृहस्पत्युक्तेः। दासदास्यस्तु समं कर्म कार्या इति भावः। * मच.

(६) पात्रं उदपात्रम्। स्त्रियः भार्यात्वेन परिगृहीता दास्यादयः, तासां स्वत्वेन विभागप्रसक्तावप्यविभाज्यत्व-मुच्यते। ऋणं वा धनं वा विभागात् पश्चात् कुत्रचित् दृश्येतोभयमपि सर्वे विभक्ताः संविभजेरन्नित्यर्थः। योग-क्षेम इति। अप्राप्तप्रापणं योगः, प्राप्तस्य रक्षणं क्षेमः। अत्र योगक्षेमशब्देन योगक्षेमहेतवो विवक्षिताः। योगहेतवो याज्याः शिष्यादयः, क्षेमहेतवो द्वारग्रामपालादयः, उभय-हेतवो ग्रामपत्तनाधिपादयः। तेऽपि पूर्ववदेव स्थापनीयाः, न विभाज्याः। प्रचारः क्षेत्रारामादिप्रवेशयोग्यो मार्गः, सोऽपि सर्वैः प्रचरितव्यः अनुभावयितव्यः, न विभाज्यः। * नन्द.

## नारदः

कुलक्रमागते राज्ये ज्येष्ठ औरसः पुत्रोऽधिकृतः

'ज्येष्ठो नरकनिस्तारो लोके पूज्यतमः स्मृतः।
ज्येष्ठो रत्नाकरः प्रोक्तो राज्यार्हो ज्येष्ठ एव हि॥(१)

राज्यमदत्त्वैव राज्ञि मृते राजपुत्राय पुरोहितमन्त्रि-भिरपि राज्यं दातव्यम्, वैदिकलौकिककर्मसु राजप्राति-निध्यात्। बहुषु ज्येष्ठायेति संप्रदायः। ननु राजपरोक्षे राजपुत्रस्यैव राज्यं कथं तैर्दातव्यमिति चेत्, न, तैरेव न ग्राह्यमधर्मश्रवणादित्यभिप्रायात्। 'अत्र विवादपरि-हारार्थम्' इति लक्ष्मीधरः। 'राज्यभङ्गभिया' इति पल्लवकारः। राजनीतौ नारदः– 'ज्येष्ठो नरकनिस्तारो लोके पूज्यतमः स्मृतः। ज्येष्ठो रत्नाकरः प्रोक्तो राज्यार्हो ज्येष्ठ एव हि॥'। राजनीतौ शुक्रः– 'राज्यं पुरो विवाहं च सपिण्डीकरणं पितुः। गुणवत्सु कनिष्ठेषु ज्येष्ठ एव समर्हति॥'। इदं बार्हस्पत्यपद्ययोरपि। भागवते– 'शंतनुर्ब्राह्मणैरुक्तः परिवेत्ताऽयमग्रभुक्। राज्यं देह्यग्रजा-याऽऽशु पुरराष्ट्रविवृद्धये॥' (भाग. ९।२२।१५)। तथा च राज्ययोग्ये ज्येष्ठे सति स एव राजा, तदभावे कनिष्ठः, तदभावे राजवंश्यः। अत्र ज्येष्ठः पिता यस्य प्रथमं मुखं पश्यति स एव। तेन वैमात्रेयस्यापि संग्रहः, न विवाहसाहचर्यात्सोदरपरनियमः, पितुः सपिण्डीकरण-साहचर्यात्। अन्यथा रामायणे रामादीनुपलक्ष्य वसिष्ठादि-वाक्यस्यालग्नतापत्तिः स्यात्। किंच, 'स्थाप्यमानेषु' इत्यादियुक्तिः समैव चेति तत्त्वम्। अत एव राज्य-मविभाज्यमाह मनुः– 'वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः। योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते॥' (मस्मृ. ९।२१९)। योगक्षेमं मन्त्रिपुरोहितादि। केचित्तु नौकादि, तन्न, 'योगक्षेमं स्मृतं राज्यम्' इति कोषात्। नारदः– 'स्त्रीधनं च नरेन्द्राणां न कदापि च जीर्यति' (नास्मृ. ४।८३)। स्त्रीधनं सौदायिकम्। नरेन्द्रधनं राज्यम्। कात्यायनः– 'निबन्धो यः क्रमा-गतः'। तथा च धर्मशास्त्रेऽपि राज्यमविभाज्यमित्येवम्।

---

* शेषं मनुगतम्।

(१) रार. ७०.

अर्थशास्त्रे ज्येष्ठ एव राजा भवेदित्युभयोरविरोधः। तर्हि लोकवृत्ताद्राजवृत्तस्य को भेद इति, नैतत्, 'विकारं याति पुत्रोऽपि राज्यलोभाद्यथा पिता। तल्लोकवृत्तान्नृपतेरन्यद्वृत्तं प्रचक्षते॥' इति शुक्रवचनेन भेदप्रतीतेः। राजधने दीनानाथादिसकलप्राणिनामंशित्वं बहुनायकत्वाद्राज्यविनाशश्चेति युक्तिरिति गोपाललक्ष्मीधरश्रीकरादयः। अर्थप्रदीपे व्यासः — 'पूर्वजन्मार्जितं पापमुपभोक्तुमिह व्रजेत्। राज्ञो द्वितीयकः पुत्रस्तृतीयो यदजासुतः॥ उत्पत्तिकालादारभ्य सदा तौ दुःखभागिनौ॥'। एतन्मूलक एव लोके तदुद्घोष इति। तथा च ज्येष्ठगामित्वमविभाज्यत्वं राज्यस्येति बुद्ध्वा पुरोहितादिनाऽपि राज्यदानं कर्तव्यमिति प्रकरणार्थः। रार. ७०–७२

अनधिकारेण भुज्यमानेऽपि राज्ये नाधिकारोत्पत्तिः

'स्त्रीधनं च नरेन्द्राणां न कथंचन जीर्यति।
अनागमं भुज्यमानं वत्सराणां शतैरपि॥

(१) स्त्रीधनं सौदायिकम्। नरेन्द्रधनं राज्यम्। रार. ७१

(२) स्त्री परकीया धनं च राज्ञां न केनचित् प्रकारेण जीर्यति। अनागमं अप्रमाणकं भुज्यमानं वर्षशतैरपि, किं पुनर्द्विदशैरिति। 'स्त्रीनरेन्द्रधनात्' इत्यत्र द्विदशैर्न जीर्यतीत्युक्तम्। कियता कालेन जीर्यति न वा जीर्यतीत्यविशेषितत्वात् अनेन विशेषितम्। नाभा.

ज्येष्ठस्यैव राज्याधिकारः, इतरेषां वृत्तिमात्राधिकारः

*'विधाय वृत्तिं बहूनां राज्यं ज्येष्ठाय दापयेत्॥

## बृहस्पतिः

ज्येष्ठ एव राज्याधिकारी

'राज्यं पुरो विवाहं च सपिण्डीकरणं पितुः।
गुणवत्सु कनिष्ठेषु ज्येष्ठ एव समर्हति॥

* 'यदा राजा जरायुक्तो' इति हारीतवचने (पृ. ८३७) टिप्पणी द्रष्टव्या।

(१) नासं. २।७५ स्त्रीधनं (स्त्री धनं); नास्मृ. ४।८३ जीर्यति (जीर्यते); रार. ७१ कथंचन (कदाऽपि च) पू.

(२) रार. ६६.

(३) रार. ७० शुक्रनीतिबार्हस्पत्यपद्मपुराणेषु.

## व्यासः

ज्येष्ठ एव राज्याधिकारी

'शाश्वतोऽयं स्मृतो धर्मः पार्थिवानां नरर्षभ।
न यवीयान् स्थिते ज्येष्ठे राजा भवितुमर्हति॥

यवीयान् कनिष्ठः। शाश्वतोऽयमिति सनातनोऽनादिपरंपरागतधर्मोऽयं पार्थिवानामित्यन्वयः। रार. ६७

'पूर्वजन्मार्जितं पापमुपभोक्तुमिह व्रजेत्।
राज्ञो द्वितीयकः पुत्रस्तृतीयो यदजासुतः।
उत्पत्तिकालादारभ्य सदा तौ दुःखभागिनौ॥

## मार्कण्डेयपुराणम्

ज्येष्ठस्यैव राज्ये सार्वभौमाधिकारः, कनिष्ठभ्रातॄणां अवान्तरराज्याधिकारः

'प्रजातेस्तनयाः पञ्च खनित्रप्रमुखा मुने।
तेषां खनित्रो राजाऽभूत्प्रख्यातो निजविक्रमैः॥
तेन ते भ्रातरः प्रीत्या पृथग्राज्येषु योजिताः।
स्वयं च पृथिवीमेतां बुभुजे सागराम्बराम्॥
प्राच्यां तेन कृतः शौरिर्दक्षिणस्यामुदावसुः॥
दिशि प्रतीच्यां सुनय उत्तरस्यां महारथः।
तेषां तस्य च भूपस्य पृथग्गोत्राः पुरोहिताः॥
बभूवुर्मुनयश्चैव मन्त्रिवंशक्रमागताः।
शौरेरत्रिकुलोद्भूतः सुहोत्रो नाम वै द्विजः॥
उदावसोः कुशावर्तो गौतमान्वयजोऽभवत्।
काश्यपः प्रमतिर्नाम सुनयस्य पुरोहितः॥
महारथस्य वासिष्ठः पुरोधाऽभून्महीभृतः।
बुभुजुस्ते स्वराज्यानि चत्वारोऽपि नराधिपाः॥
खनित्रश्चाधिपस्तेषामशेषवसुधाधिपः।
तेषु भ्रातृष्वशेषेषु खनित्रः स महीपतिः॥
प्रजासु च समस्तासु पुत्रेष्विव सदा हितः।
एकदा मन्त्रिणा शौरिः स प्रोक्तो विश्ववेदिना॥

(१) रार. ६६.

(२) रार. ७२.

(३) मार्कं. ११४।९–१०, २१–५१.

विविक्ते पृथिवीपाल किंचिद्वक्तव्यमस्ति नः ।
यस्येयं पृथिवी कृत्स्ना यस्य भूपा वशानुगाः ॥
स राजा तस्य पुत्रश्च तत्पौत्राश्चान्वयस्ततः ।
इतरे भ्रातरस्तस्य प्राक्स्वल्पविषयाधिपाः ॥
तत्पुत्राश्चाल्पकास्तस्मात्तत्पौत्राश्चाल्पकाल्पकाः ।
कालेन ह्रासमासाद्य पुरुषात्पुरुषान्तरम् ॥
कृष्योपजीविनो भूप भवन्तीति तदन्वयाः ।
नोद्धारं कुरुते भ्राता भ्रातृस्नेहबलार्पणः ॥
स्नेहः कः पृथिवीपाल परयोर्भ्रातृपुत्रयोः ।
तत्पुत्रयोः परतरा मतिर्भवति पार्थिव ॥
तत्पुत्रः केन कार्येण प्रीतियुक्तो भविष्यति ।
अथवा येन तेनैव संतोषं कुरुते नृपः ॥
क्रियते तत्किमर्थं तु भूपैर्मन्त्रिपरिग्रहः ।
भुज्यते सकलं राज्यं मया ते मन्त्रिणा सता ॥
तत्किं मुधा धारयसे संतोषं कुरुते यदि ।
कार्यनिष्पादकं राज्यं करणं कर्तुरिष्यते ॥
राज्यलब्धुश्च ते कार्यं त्वं कर्ता करणं वयम् ।
सोऽस्माभिः करणै राज्यं पितृपैतामहं कुरु ।
फलप्रदा भविष्यामः परलोके न ते वयम् ॥

राजोवाच—

ज्येष्ठो भ्राता महीपालो वयं तस्यानुजा यतः ।
ततः स भुङ्क्ते पृथिवीं वयं चाल्पवसुंधराम् ॥
वयं तु भ्रातरः पञ्च पृथ्वी चैका महामते ।
अतोऽस्याः पृथगैश्वर्यं कथं कृत्स्नं भविष्यति ॥

विश्ववेद्युवाच—

एवमेतद्भवत्वत्र यद्येका वसुधा नृप ।
तां त्वमेवाभिपद्यस्व ज्येष्ठः शास्तु यथा भवान् ॥
सर्वाधिपत्यः सर्वेभ्यो भव त्वमखिलेश्वरः ।
यतन्ते च यथाऽहं ते तेषामपि हि मन्त्रिणः ॥

राजोवाच—

ज्येष्ठो राजा यथा प्रीत्या भजतेऽस्मान् सुतानिव ।
कथं तस्य करिष्यामि ममत्वं जगतीगतम् ॥

विश्ववेद्युवाच—

राज्ये स्थितः पूजयेथा ज्येष्ठं भूपार्हणैर्धनैः ।
कनिष्ठज्येष्ठता केयं राज्यं प्रार्थयतां नृणाम् ॥

मार्कण्डेय उवाच—

तथेति च प्रतिज्ञाते भूभुजा तेन सत्तम ।
विश्ववेदी ततो मन्त्री तद्भ्रातॄननयद्वशम् ॥
तेषां पुरोहितांश्चैव आत्मनः शान्तिकादिषु ।
नियोजयामास ततः खनित्रस्याऽऽभिचारके ॥
बिभेद तस्य निभृतान्सामदानादिभिस्तथा ।
चक्रे च परमोद्योगं निजदण्डप्रभावने ॥
आभिचारिकमत्युग्रमहन्यहनि कुर्वताम् ।
पुरोधसां चतुर्णां च जज्ञे कृत्याचतुष्टयम् ॥
विकरालं महावक्त्रमतिभीषणदर्शनम् ।
समुद्यतमहाशूलं प्रभूतमतिदारुणम् ॥
ततस्तदागतं तत्र खनित्रो यत्र पार्थिवः ।
निरस्तं चाप्यदुष्टस्य तस्य पुण्यचयेन तत् ॥
कृत्याचतुष्टयं तेषु निपपात दुरात्मसु ।
पुरोहितेषु भूपानां तथा वै विश्ववेदिनि ॥
ततो निहन्त्या निर्दग्धाः कृत्यया ते पुरोहिताः ।
विश्ववेदी तथा मन्त्री स शौरेर्दुष्टमन्त्रतः ॥

## हरिवंशः

कुलक्रमागते राज्ये औरसो ज्येष्ठः पुत्रोऽधिकृतः

वैशम्पायन उवाच—

'स* तासु नागकन्यासु कालेन महता नृपः ।
जनयामास विक्रान्तान् पञ्च पुत्रान् कुलोद्वहान् ॥
मुचुकुन्दं महाबाहुं पद्मवर्णं तथैव च ।
माधवं सारसं चैव हरितं चैव पार्थिवम् ॥
एतान् पञ्च सुतान् राजा पञ्चभूतोपमान् भुवि ।
ईक्षमाणो नृपः प्रीतिं जगामातुलविक्रमः ॥
ते प्राप्तवयसः सर्वे स्थिताः पञ्च यथाऽद्रयः ।
तेजिता बलदर्पाभ्यामूचुः पितरमग्रतः ॥

* सः यदुः ।

(१) हरि. २।३८।१–११.

तात युक्ताः स्म वयसा बले महति संस्थिताः ।
क्षिप्रमाज्ञप्तुमिच्छामः किं कुर्मस्तव शासनात् ॥
स तान् नृपतिशार्दूलः शार्दूलानिव वेगितान् ।
प्रीत्या परमया प्राह सुतान् वीर्यकुतूहलात् ॥
विन्ध्यर्क्षवन्तावभितो द्वे पुर्यौ पर्वताश्रये ।
निवेशयतु यत्नेन मुचुकुन्दः सुतो मम ॥
सह्यस्य चोपरिष्टात्तु दक्षिणां दिशमाश्रितः ।
पद्मवर्णोऽपि मे पुत्रो निवेशयतु मा चिरम् ॥
तत्रैव परतः कान्ते देशे चम्पकभूषिते ।
सारसो मे पुरं रम्यं निवेशयतु पुत्रकः ॥
हरितोऽयं महाबाहुः सागरे हरितोदके ।
द्वीपं पन्नगराजस्य सुतो मे पालयिष्यति ॥
माधवो मे महाबाहुर्ज्येष्ठपुत्रश्च धर्मवित् ।
यौवराज्येन संयुक्तः स्वपुरं पालयिष्यति ॥

## श्रीमद्भागवतम्

कुलक्रमागते राज्ये ज्येष्ठपुत्र एवाधिकृतः

[1]देवापिः शंतनुस्तस्य* वाह्लीक इति चाऽऽत्मजाः ।
पितृराज्यं परित्यज्य देवापिस्तु वनं गतः ॥
अभवच्छंतनू राजा प्राङ्महाभिषसंज्ञितः ।
यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥
शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शंतनुः ।
समा द्वादश तद्राज्ये न ववर्ष यदा विभुः ॥
[2]शंतनुर्ब्राह्मणैरुक्तः परिवेत्ताऽयमग्रभुक् ।
राज्यं देह्यग्रजायाऽऽशु पुरराष्ट्रविवृद्धये ॥
[3]एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ।
तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा ॥
वेदवादातिवादान् वै तदा देवो ववर्ष ह ॥

* प्रतीपस्य ।

(१) भाग. ९।२२।१२–१४.

(२) भाग. ९।२२।१५ ; रार. ७० शंतनु (शुमन्तु) चाऽयम (चा त्वम).

(३) भाग. ९।२२।१६–१७.



## पद्मपुराणम्

ज्येष्ठस्यैव राज्याधिकारः

[1]राज्यं पुरो विवाहं च सपिण्डीकरणं पितुः ।
गुणवत्सु कनिष्ठेषु ज्येष्ठ एव समर्हति ॥

## कालिकापुराणम्

औरसादिद्वादशपुत्रेषु औरसस्य राज्येऽधिकारः प्रथमः, तदभावेऽन्येषां क्रमेण पौनर्भवस्वयंदत्तदासान् वर्जयित्वा

[2]अथोपरिचरं राजा यौवराज्येऽभ्यषेचयत् ।
ज्यायांसमौरसं पुत्रं सर्वराजगुणैर्युतम् ॥
[3]न क्षेत्रजादींस्तनयान् राज्ये राजाऽभिषेचयेत् ।
पितॄणां शुद्धये नित्यमौरसे तनये सति ॥
[4]औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे ॥
[5]कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च दासश्च षडेते पुत्रपांसुलाः ॥
[6]अभावे पूर्वपूर्वेषां परान् समभिषेचयेत् ।
पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत् ॥
[7]दत्ताद्याश्चापि तनया निजगोत्रेण संस्कृताः ।
आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥

(१) रार. ७० शुक्रनीतिबार्हस्पत्यपद्मपुराणेषु.

(२) कालिका. ५३।१०–११ ; राप्र. ३६.

(३) कालिका. ९१।३४; राप्र. ३९ राज्ये राजा (राजा राज्ये) शुद्धये (शोधयन्) ; राकौ. २३५ राप्रवत् ; बाल. १।३०९ पृ. ६१५ याम्राज्ये राजा (यानात्मराज्ये) शुद्धये नि (शोधयेन्नि).

(४) कालिका. ९१।३५ ; राप्र. ३५ ; राकौ. २३४ पू. ; बाल. १।३०९ पृ. ६१४ पू.

(५) कालिका. ९१।३६ ; राप्र. ३५ षडेते पुत्रपांसुलाः (षडिमे पुत्रपांसनाः).

(६) कालिका. ९१।३७ ; राप्र. ३५ पू., ४२ उत्त. ; राकौ. २३४ पू.

(७) कालिका. ९१।३८–४६.

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपतेः ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥
चूडान्ता यदि संस्कारा निजगोत्रेण संस्थिताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥
ऊर्ध्वं तु पञ्चमाद्वर्षाद्दत्ताद्यांश्च सुतान् नृप ।
गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥
पौनर्भवं तु तनयं जातमात्रं समानयेत् ।
कृत्वा पौनर्भवष्टोमं जातमात्रस्य तस्य वै ॥
सर्वांस्तु कुर्यात्संस्कारान् जातकर्मादिकान्नरः ।
कृते पौनर्भवष्टोमे सुतः पौनर्भवः स्मृतः ॥
एकोद्दिष्टं पितुः कुर्यान्न श्राद्धं पार्वणादिकम् ।
क्रीता या वनिता मूल्यैः सा दासीति निगद्यते ॥
तस्यां यो जायते पुत्रो दासः पुत्रस्तु स स्मृतः ।
न राज्ञो राज्यभाक्स स्याद्विप्राणां नापि श्राद्धकृत् ॥
अधमः सर्वपुत्रेभ्यस्तं तस्मात्परिवर्जयेत् ॥

## शुक्रनीतिः

औरसो ज्येष्ठः पुत्रोऽदोषः राज्येऽधिकृतः, तदभावे कनिष्ठो भ्राता, तत्पुत्रोऽग्रजः, तदभावे कनिष्ठोऽपि, न राज्यविभागः पुत्रेषु, दत्तादयोऽपि औरसाभावे राज्येऽधिकृताः, मित्रमपि राज्येऽधिकरोति

[१]सदैकनायकं राज्यं कुर्यान्न बहुनायकम् ॥

किंच, राज्यं सदा एकनायकं एकस्वामिकं कुर्यात्, बहुस्वामिकं न, तथात्वे राज्यस्यास्थायित्वप्रसङ्गादिति भावः । शुनीटी.

नानायकं क्वचिदपि कर्तुमीहेत भूमिपः ।
राजकुले तु बहवः पुरुषा यदि सन्ति हि ॥
तेषु ज्येष्ठो भवेद्राजा शेषास्तत्कार्यसाधकाः ।
गरीयांसो वराः सर्वसहायेभ्योऽभिवृद्धये ॥

भूमिपः राजा क्वचिदपि अनायकं अस्वामिकं राज्यमिति शेषः, कर्तुं न ईहेत चेष्टेत । यदि राजकुले बहवः पुरुषाः सन्ति विद्यन्ते, हिशब्दः अवधारणे, तेषु बहुषु ज्येष्ठः वयसा गुणेन चेति भावः, राजा भवेत् । शेषाः अवशिष्टाः तस्य ज्येष्ठस्य कार्यसाधकाः सर्वसहायेभ्यः सर्वेभ्यः सहकारिभ्यः गरीयांसः वराः श्रेष्ठाश्च, अतः अभिवृद्धये अभ्युदयाय भवन्ति । शुनीटी.

ज्येष्ठोऽपि बधिरः कुष्ठी मूकोऽन्धः षण्ड एव यः ।
स राज्यार्हो भवेन्नैव भ्राता तत्पुत्र एव हि ॥

ज्येष्ठोऽपि, अपिकारात् मध्यमादयो दण्डापूपन्यायसिद्धा वेदितव्याः । यः बधिरः श्रवणेन्द्रियहीनः, कुष्ठी महाव्याधिग्रस्तः, मूकः वर्णानुच्चारकः, अन्धः चक्षुर्द्वयहीनः, तथा षण्डः क्लीबः, सः, तथा भ्राता राज्ञ इति शेषः, तत्पुत्रः तस्य भ्रातुः पुत्रो वा बधिरादिश्चेत् नैव राज्यार्हः राज्याधिकारी नैव भवेदित्यन्वयः । शुनीटी.

स्वकनिष्ठोऽपि ज्येष्ठस्य भ्रातुः पुत्रस्तु राज्यभाक् ।
यथाऽग्रजस्य चाभावे कनिष्ठा राज्यभागिनः ।
दायादानामैकमत्यं राज्ञः श्रेयस्करं परम् ॥

स्वस्य राज्ञः कनिष्ठोऽपि तथा ज्येष्ठस्य भ्रातुः पुत्रस्तु पुत्रो वा, तुशब्दो विकल्पवाची, उक्तदोषरहितश्चेत् राज्यभाक् । यथाहि अग्रजस्य ज्येष्ठस्य च अभावे कनिष्ठाः राज्यभागिनः । किंच, दायादानां भ्रातृप्रभृतीनां ऐकमत्यं एकमतावलम्बनं राज्ञः परं अत्यन्तं श्रेयस्करं शुभावहम्, अन्यथा राज्यहानिप्रसङ्गादिति भावः । शुनीटी.

पृथग्भावो विनाशाय राज्यस्य च कुलस्य च ।
अतः स्वभोगसदृशान् दायादान् कारयेन्नृपः ।
अव्याहताज्ञः सन्तुष्येच्छत्रसिंहासनैरपि ॥

पृथग्भावः दायादानामनैक्यं राज्यस्य कुलस्य वंशस्य च विनाशाय भवति, अतः अस्मात् कारणात् नृपः अव्याहताज्ञः अप्रतिहतादेशः सन् छत्रसिंहासनैरपि राज्यशासनाधिकारैरेव संतुष्येत्, दायादान् भ्रात्रादीन् स्वभोगसदृशान् समानभोगिनः कारयेत् । तथात्वे सर्वे एव संतुष्टास्तिष्ठेयुरिति भावः । शुनीटी.

राज्यविभजनाच्छ्रेयो न भूपानां भवेत्खलु ।
अल्पीकृतं विभागेन राज्यं शत्रुर्जिघृक्षति ॥

---

(१) शुनी. १।३४०–३४६.

राज्यविभागे दोषमाह— राज्येति । राज्यस्य विभजनात् विभागकरणात् भूपानां राज्ञां श्रेयः शुभं न खलु नैव भवेत् । खलुशब्दोऽवधारणे । यतः विभागेन अल्पीकृतं खण्डीकृतं क्षुद्रमित्यर्थः, राज्यं शत्रुः जिघृक्षति ग्रहीतुमिच्छति, अल्पस्य अनायासेनैव जेतुं शक्यत्वादिति भावः । शुनीटी.

[1]मुद्रां विनाऽखिलं राजकृत्यं कर्तुं क्षमं सदा ।
कल्पयेद्युवराजार्थमौरसं धर्मपत्निजम् ॥

मुद्रां आलस्यं विना, परित्यज्य इत्यर्थः, सदा अखिलं समग्रं राजकृत्यं कर्तुं क्षमं धर्मपत्नीजं औरसं पुत्रं युवराजार्थं युवराजशब्दाभिधेयं कल्पयेत् । शुनीटी.

स्वकनिष्ठं पितृव्यं वाऽनुजं वाऽग्रजसंभवम् ।
पुत्रं पुत्रीकृतं दत्तं यौवराज्येऽभिषेचयेत् ॥

वा अथवा स्वकनिष्ठं भ्रातरं अनुजं वयःकनिष्ठं पितृव्यं अग्रजसंभवं पुत्रं ज्येष्ठभ्रातृपुत्रं वा पुत्रीकृतं पुत्रप्रतिनिधित्वेन परिगृहीतं दत्तं दत्तकपुत्रं यौवराज्ये अभिषेचयेत् । शुनीटी.

क्रमादभावे दौहित्रं *स्वप्रियं वा नियोजयेत् ।
स्वहितायापि मनसा नैतान् संकर्षयेत्कचित् ॥

अभावे पूर्वोक्तानामिति शेषः, क्रमात् दौहित्रं वा स्वप्रियं आत्मनः प्रियं जनं यं कंचन जनं नियोजयेत् । कचित् कदाचित् स्वहिताय स्वस्य आत्मनः हिताय यदि हितमिच्छेत् तदेत्यर्थः, एतान् यथोक्तान् युवराजान् मनसाऽपि न संकर्षयेत् न पीडयेत् । शुनीटी.

[2]स्वसापिण्ड्यविहीना ये ह्यन्योत्पन्ना नराः खलु ॥
मनसाऽपि न मन्तव्या दत्ताद्याः स्वसुता इति ।
ते दत्तकत्वमिच्छन्ति दृष्ट्वा यद्धनिकं नरम् ॥

ये नराः स्वस्य राज्ञः सापिण्ड्यविहीनाः असपिण्डजाः अन्योत्पन्नाः अपरवंशजाः खलु निश्चितम्, ते दत्ताद्याः दत्तकप्रभृतयः स्वसुताः इति मनसा नैव मन्तव्याः, यत् यस्मात् ते धनिकं धनवन्तं नरं दृष्ट्वा दत्तकत्वं इच्छन्ति दत्तकसुता भवितुमिच्छन्तीत्यर्थः । शुनीटी.

स्वकुलोत्पन्नकन्यायाः पुत्रस्तेभ्यो वरो ह्यतः ।
अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम् ॥

हि यतः दुहिता पुत्रवत् नृणां अङ्गात् अङ्गात् संभवति, अतः अस्मात्कारणात् स्वकुलोत्पन्नकन्यायाः पुत्रः दौहित्र इत्यर्थः, तेभ्यः दत्तकेभ्यः वरः श्रेष्ठः । शुनीटी.

पिण्डदाने विशेषो न पुत्रदौहित्रयोस्त्वतः ।
भूप्रजापालनार्थं हि भूपो दत्तं तु पालयेत् ॥

अतस्तु अत एव पुत्रदौहित्रयोः पिण्डदाने विशेषः (न) अस्तीति शेषः । भूपः भूप्रजापालनार्थं भूमेः प्रजानां च रक्षणार्थं दत्तं दत्तकपुत्रं दौहित्राभावे इति शेषः, पालयेत् । हिशब्दः अवधारणे । शुनीटी.

नृपः प्रजापालनार्थं सधनश्चेन्न चान्यथा ।
परोत्पन्ने स्वपुत्रत्वं मत्वा सर्वं ददाति तम् ॥

नृपः सधनश्चेत् समधिकधनशाली यदि तदा प्रजापालनार्थं परोत्पन्ने पुत्रे स्वपुत्रत्वं मत्वा परपुत्रं दत्तकत्वेन परिगृह्येत्यर्थः, तं दत्तकं सर्वं ददाति । तमिति आर्षप्रयोगः, संप्रदाने चतुर्थीविधानात् । अन्यथा निर्धनत्वे न दत्तकपुत्रग्रहणमिति भावः । शुनीटी.

किमाश्चर्यमतो लोके न ददाति यजत्यपि ।
प्राप्यापि युवराजत्वं प्राप्नुयाद्विकृतिं न च ॥

लोके जगति दत्तकाय सर्वं रक्षेत् तथापि न ददाति कस्मैचित् किमपीति शेषः, नापि यजति देवान् अर्चयति, किमाश्चर्यम् ? किंच युवराजत्वं प्राप्यापि विकृतिं न च प्राप्नुयात् न विकारं गच्छेत् । शुनीटी.

जीवता राज्ञा पुत्राय अखिलराज्याधिकारो न देयः

[1]जीवन् सन् स्वामिता पुत्रे
न देयाऽप्यखिला कचित् ॥

* 'स्वलीयं' इति अन्यत्र पाठः ।

(१) शुनी. २।१४–१६.

(२) शुनी. २।३०–३५.

(१) शुनी. ५।१७–१९.

**स्वभावसद्गुणे यस्मान्महानर्थमदावहा ।**
**विष्ण्वाद्यैरपि नो दत्ता स्वपुत्रे स्वाधिकारता ॥**

जीवन् शक्त इत्यर्थः, सन् ... ... ... ... स्वभावसद्गुणेऽपि पुत्रे क्वचित् कदाचित् अखिला संपूर्णा स्वामिता प्रभुता न देया, यस्मात् सा महानर्थमदावहा महान्तं अनर्थं मदं च आवहतीति तथोक्ता महानर्थकारिणी मदवर्धनी च । तस्मात् विष्ण्वाद्यैः विष्णुप्रभृतिभिरपि स्वपुत्रे स्वाधिकारता स्वस्य अधिकारः तस्य भावः स्वस्वाम्यं नो दत्ता । शुनीटी.

**स्वायुषः स्वल्पशेषे तु सत्पुत्रे स्वाम्यमादिशेत् ।**
**नाराजकं क्षणमपि राष्ट्रं धर्तुं क्षमाः किल ।**
**युवराजादयः स्वाम्यलोभचापलगौरवात् ॥**

स्वस्य आत्मनः आयुषः जीवनकालस्य स्वल्पशेषे अत्यल्पावशेषे सति सत्पुत्रे सुपुत्रे स्वाम्यं आदिशेत् अर्पयेत् । युवराजादयः स्वाम्यलोभेन यद्यत् चापलं चाञ्चल्यं तस्य गौरवात् आतिशय्यात् अराजकं राजरहितं राष्ट्रं क्षणमपि धर्तुं ग्रहीतुं शासितुमित्यर्थः, न किल नैव क्षमाः शक्ताः भवन्ति । शुनीटी.

ज्येष्ठे सति गुणवतोऽपि कनिष्ठस्यानधिकारः

**[1]राज्यं पुरो विवाहं च सपिण्डीकरणं पितुः ।**
**गुणवत्सु कनिष्ठेषु ज्येष्ठ एव समर्हति ॥**

## नीतिवाक्यामृतम्

संस्कारहीनानां न राज्येऽधिकारः

**[2]स्वजातियोग्यसंस्कारहीनानां राज्ये प्रव्रज्यायां च नास्त्यधिकारः ॥**

अथ यादृशानां पुरुषाणां राज्याधिकारो भवति प्रव्रज्याधिकारश्च तानाह— स्वजातीति । नास्ति न विद्यते । कोऽसौ ? अधिकारः । क्व ? राज्ये । केषाम् ? स्वजातियोग्यसंस्कारहीनानाम् । स्वकीया जातिः स्वजातिः, तस्या योग्यो योऽसौ संस्कारोऽनुष्ठानलक्षणः, तेन हीना ये तेषामधिकारो नास्ति राज्ये प्रव्रज्यायां च । तथा च शुक्रः— 'स्वजातियोग्यसंस्कारैर्ये नराः परिवर्जिताः । अधिकारो न राज्येषु न च तेषां व्रतेषु च ॥'। नीवाटी.

अङ्गविहीनानां पुत्रोत्पत्तिपर्यन्तं राज्याधिकारः

**[1]असति योग्येऽन्यस्मिन्नङ्गविहीनोऽपि पितृपदमर्हत्या पुत्रोत्पत्तेः ॥**

अथ व्यङ्गानां यथा राज्याधिकारोऽस्ति तदाह— असतीति । असति अविद्यमानेऽन्यस्मिन् पुत्रे योग्ये व्यङ्गोऽपि पुत्रः काणः कुब्जोऽन्धो वा पितृपदमर्हति राजावसाने स्थितः । कियत्कालं यावत् ? आ पुत्रोत्पत्तेः यावत्तद्व्यङ्गस्य पुत्रो भवति । पुत्रे जाते सति स जातमात्रोऽपि राज्यपदे कर्तव्यः, न व्यङ्गः । तथा च शुक्रः— 'राजाभावे तु संजाते योग्यः पुत्रो न चेद्भवेत् । तदा व्यङ्गोऽपि संस्थाप्यो यावत्पुत्रसमुद्भवः ॥'। नीवाटी.

राज्येऽधिकारक्रमः पुत्रादीनाम्

**सुतसोदरसपत्नपितृव्यकुल्यदौहित्रागन्तुकेषु पूर्वपूर्वाभावे भवत्युत्तरस्य राज्यपदावाप्तिः ॥**

अथ ये राजन्युपरते राज्यार्हा भवन्ति तानाह— सुतेति । राजन्युपरते एतेषां सप्तसंख्यानां उत्तरोत्तरन्यायेन (तयोर्यस्य कुर्वतस्तस्य ?) तद्राज्यपदस्याधिकारः । पुत्रस्य तावत् प्रथमाधिकारः । तदभावे सोदरस्य भ्रातुः । तदभावे सपत्नस्य वैमात्रिकस्य । तदभावे पितृभ्रातुः । तदभावे कुल्यस्य गोत्रिणः । तदभावे दौहित्रस्य सुतासुतस्य । तदभावे आगन्तुकस्य राज्यार्हस्य पदं योग्यम् । तथा च शुक्रः— 'सुतः सोदरसापत्नपितृव्या गोत्रिणस्तथा । दौहित्रागन्तुका योग्या पदे राज्ञो यथाक्रमम् ॥'। नीवाटी.

**'औरसः क्षेत्रजो दत्तः कृत्रिमो गूढोत्पन्नोऽपविद्ध एते षट् पुत्रा दायादाः पिण्डदाश्च ॥**

अथ पुत्राणां विशेषमाह— औरस इति । अथ तेषां स्वरूपमाह— 'औरसो धर्मपत्नीतः संजातः पुत्रिकासुतः । क्षेत्रजः क्षेत्रजातः (स्यात्) स्वगोत्रेणेतरेण वा ॥ दत्ता-

(१) रार. ७० शुक्रनीतिबार्हस्पत्यपद्मपुराणेषु.
(२) नीवा. २४।६९–७०, ८६.

(१) नीवा. ३२।४१–४२.

न्माता पिता बन्धुः स पुत्रो दत्तसंज्ञितः । कृत्रिमो मोचितो बन्धात् क्षत्रयुद्धेन वा जितः ॥ गृहप्रच्छन्नकोत्पन्नो गूढजस्तु सुतः स्मृतः । गते मृतेऽथवोत्पन्नः सोऽपविद्धसुतः पतौ ॥ ' । अथ ' कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा । स्वयंदत्तश्च शौद्रश्च षट् पुत्रा अधमाः स्मृताः ॥ एते नैव तु दायादा नैव पिण्डप्रदाः स्मृताः । कानीनः कन्यकापुत्रो मातामहसुतो मतः ॥ सहोपनीतः सुतया सहोढः संचकीस्तथा । मात्रा पित्रा च विक्रीत आत्मना क्रीत एव वा ॥ अकृतायां कृतायां वा जातः पौनर्भवः सुतः । आत्मानं यः स्वयं दद्यात्स्वयंदत्तसुतो मतः ॥ उत्कृष्टो गृह्यते यस्तु स शौद्रः परिकीर्तितः ॥ ' । तथा च मनुः– 'दायादाः पिण्डदाश्चाऽऽद्याश्चत्वारः परिकीर्तिताः । कथिताश्चापरे ये च न दायादा न पिण्डदाः ॥ ' ।

नीवाटी.

राज्यं अविभाज्यम्

**देशकालकुलापत्यस्त्रीसमापेक्षो दायादविभागोऽन्यत्र यतिराजकुलाभ्याम् ॥**

अथ तेषां यो विशेषो भवति तमाह– देशेति । यतिकुले तपस्विकुले तथा राजकुले एतेषां दायादार्हः स एकः पुत्रः स्थाने नियोजनीयः । तथा च गुरुः– ' देशाचारानयाचारौ क्रियापेक्षासमन्वितौ ( ? ) । देयो दायादभागस्तु तेषां चैवानुरूपतः ॥ एकस्मै दीयते सर्वं विभवं रूपसंभवम् । यः स्याददद्भुतस्तु सर्वेषां तथा च स्यात्समुद्भवः ॥ ' ।

नीवाटी.

## अनिर्दिष्टकर्तृकवचनानि

राज्येऽधिकृतो लक्षणसंपन्नो ज्येष्ठः पुत्रः, तदभावे ज्येष्ठपौत्रादयः क्रमेण

**'यौवराज्येऽथवा राज्ये यदि राजा विमत्सरः ।
अभिषिञ्चेद्विधानेन धर्मजं वीक्ष्य लक्षणम् ॥**

**तत्सुतं तत्कनिष्ठादिक्रमात्कामजमात्मजम् ।
संनिकृष्टान्वयं चान्यं प्रजाविप्रानुमोदितम् ॥**

युवराजेति वृद्धराजसापेक्षं, वृद्धराजपरतन्त्र इत्यर्थः । विमत्सरः विगतराज्यमात्सर्यः । धर्मजं ज्येष्ठम् । कामजं कनिष्ठम् । तथा च यदि राजलक्षणं ज्येष्ठे तदा ज्येष्ठमेव । तदभावे ज्येष्ठपुत्रस्य ज्येष्ठमेव पुत्रम्, ' तेऽपि ज्येष्ठाः स्वपुत्रेषु ज्येष्ठेष्वेव न संशयः ' इति वचनात् । तदभावे यथाक्रमं कनिष्ठं ( तदभावे ? ) संनिकृष्टसंतानम् । संनिकृष्टान्वयमिति । संनिहितसंबन्धिमात्रमिति पल्लवः । तद्वंश्यमेवेति लक्ष्मीधरः । तदभावेऽन्यमप्यभिषिञ्चेत् । न च पिण्डदातरि पुत्रे सति पौत्राभिषेकस्यान्याय्यत्वम्, अतो नात्र क्रमादरः, पुत्रपौत्रादौ पिण्डदातृत्वेनाविशेषात् । अत एव पौत्रे समांशिताविधानमिति । किंच ' आत्मा वै जायते पुत्रः ' इति तत्स्वरूपत्वात् । वस्तुतस्तु ' राजवृत्तमन्यत् ' इति युक्तिरेव बलवतीति । रार. ७३–७४

**तेऽपि ज्येष्ठाः स्वपुत्रेषु ज्येष्ठेष्वेव न संशयः ॥**

( १ ) रार. ७३ राजनीतौ इत्युक्तम्.

( २ ) रार. ७३.

# राजशिक्षा

## गौतमः

धर्मशास्त्रान्वीक्षिक्योः शिक्षा राज्ञः

*[1]त्रय्यामान्वीक्षिक्यां चाभिविनीतः ॥

## हारीतः

विद्यावृद्धोपासना राज्ञः सिद्धिदा

[2]अविद्वानपि भूपालो विद्यावृद्धोपसेवया ।
परां सिद्धिमवाप्नोति जलासन्नतरुर्यथा ॥

## विष्णुः

वृद्धसेवा कर्तव्या

[3]वृद्धसेवी भवेत् ॥

## महाभारतम्

वेदवेदाङ्गधनुर्वेदनीतिशास्त्रेतिहासपुराणेषु राजपुत्रशिक्षा

[4]धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥

[5]संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥

[6]धनुर्वेदेऽश्वपृष्ठे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ॥

* व्याख्यासंग्रहः 'प्रकृतयः— स्वामी' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(१) गौध. ११।३. शेषः स्थलादिनिर्देशः 'प्रकृतयः— स्वामी' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(२) रार. ९.

(३) विस्मृ. ३।७७.

(४) भा. १।१०२।१५ ; भामु. १।१०९।१७.

(५) भा. १।१०२।१६ ; भामु. १।१०९।१८.

(६) भा. १।१०२।१७ ; भामु. १।१०९।१९ ऽश्वपृष्ठे (च वेदे) शास्त्रे च (शास्त्रेषु).

[1]इतिहासपुराणेषु नानाशिक्षासु चाभिभो ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्रमाः ॥

श्रमः शास्त्राभ्यासः । व्यायामः बाहुयुद्धाद्यभ्यासः ।

नीटी.

धर्मविद्यार्जनं विद्यावृद्धोपासना च राज्ञा कर्तव्या,
त्रयीवार्तादण्डनीतिसाध्या लोकयात्रा

[2]येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ।
तान्सेवेत्तैः समास्या हि शास्त्रेभ्योऽपि गरीयसी ॥

(१) अवदातानि शुद्धानि । विद्या वैदिकी, न तु लौकिक्यादिः । कर्म वेदार्थानुष्ठानम् । योनिः पूर्वप्रज्ञा । श्येनयागादेर्हिंसासाधनस्य वेदार्थत्वेऽपि नावदातत्वमस्ति । अतो जन्मान्तरीयसंस्कारोऽपि शुद्ध एवापेक्षितः । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतेः अत्र योनिशब्देन मुख्यं प्रवृत्तिकारणं पूर्वप्रज्ञैव ग्राह्यम् । अन्ये तु योनिशब्देन पितृमातृशुद्धिमाहुः । समास्या संगतिः । संपूर्वस्य 'आस गतौ' इत्यस्य रूपम् । अपिशब्दाच्छास्त्रमपि सम्यक् ज्ञानहेतुतया गुरु । सत्सङ्गस्तु ततोऽपि गरीयान् । 'न गाथा गाथिनं शास्ति' इति केवलशास्त्रस्य प्रागेव अकिंचित्करत्वोक्तेः । नीटी.

(२) समास्या सम्यक्प्रकारेण आस्या उपवेशनम् । राप्र. १३२

[3]सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥

(१) भा. १।१०२।१८ ; भामु. १।१०९।२०. चाभिभो (बोधिताः) निश्रमाः (निश्चयाः).

(२) भा. ३।१।२५ ; भामु. ३।१।२७ योनिर्विद्या च (विद्या योनिश्च); राक. १४९ समास्या (सहास्या); राप्र. १३२.

(३) भा. ३।७०।८ ; भामु. ३।७२।८ ; राक. १४९ ; राप्र. १३१-१३२.

सर्वस्य ज्ञानस्य एकत्र पुरुषे परिनिष्ठा अवस्थितिः नास्तीत्यर्थः । राप्र. १३२

[1]न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च ।
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि ॥

[2]त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या विजानताम् ।
ताभिः सम्यक्प्रयुक्ताभिर्लोकयात्रा विधीयते ॥

[3]कृषिगोरक्ष्यवाणिज्यमिह लोकस्य जीवनम् ।
दण्डनीतिस्त्रयी विद्या तेन लोका भवन्त्युत ॥

[4]न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य च ।
धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ॥

[5]सुहृदामर्थकामानां यो न तिष्ठति शासने ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥

शत्रुनन्दनः शत्रूणामानन्दजनकः । राप्र. १३२

त्रयी आन्वीक्षिकी वार्ता दण्डनीतिश्चेति विद्याः

[6]त्रयी चाऽऽन्वीक्षिकी चैव वार्ता च भरतर्षभ ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥

त्रयी कर्मकाण्डः । आन्वीक्षिकी ज्ञानकाण्डः । वार्ता कृषिवाणिज्यादि जीविकाकाण्डः । दण्डनीतिः पालनविद्या । नीटी.

वेदधनुर्वेदयुक्तिशास्त्रशब्दशास्त्रगन्धर्वशास्त्रपुराणेतिहासकलाः अध्येयाः राज्ञा

[1]धनुर्वेदे च वेदे च यत्नः कार्यो नराधिप ।
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव ह ।
यत्नवान् भव राजेन्द्र यत्नवान् सुखमेधते ॥

[2]अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च ।
प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित् ॥

[3]युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ।
गन्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप ॥

[4]पुराणमितिहासाश्च तथाऽऽख्यानानि यानि च ।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥

विद्यावृद्धोपासना राज्ञा कर्तव्या

[5]विद्यावृद्धान् सदैव त्वमुपासीथा युधिष्ठिर ।
शृणुयास्ते च यद्ब्रूयुः कुर्यांश्चैवाविचारयन् ॥

[6]प्रातरुत्थाय तान् राजन् पूजयित्वा यथाविधि ।
कृत्यकाले समुत्पन्ने पृच्छेथाः कार्यमात्मनः ॥

[7]ते तु संमानिता राजंस्त्वया राज्यहितार्थिना ।
प्रवक्ष्यन्ति हितं तात सर्वं कौरवनन्दन ॥

---

(१) भा. ३।१४९।२६ ; भामु. ३।१५०।२६ धर्मो वै (धर्मार्थौ) शक्यो (शक्यौ).

(२) भा. ३।१४९।३१ ; भामु. ३।१५०।३१.

(३) भा. ३।१९८।२३ ; भामु. ३।२०७।२४ लोका भवन्त्युत (लोको भवत्युत).

(४) भामु. ५।३९।४०-४१ च (वा); राक. १४९ वेदितुं (विदितुं) ; राप्र. १३२.

(५) भा. ५।१२७।३८; भामु. ५।१२९।३९ ; राक. १५० पूर्वार्धे (सदैव हितकामानां सुहृदां न शृणोति यः।) ; राप्र. १३२ राकवत्.

(६) भा. १२।५९।३३ ; भामु.

(१) भा. १३।१०७।१३८; भामु. १३।१०४।१४६ –१४७ ; राक. १४९ दे च वेदे (देतिहासे) नराधिप (विजानता) ह (हि) तृतीयार्धं नास्ति ; राप्र. १३२ सर्वं राकवत्.

(२) भा. १३।१०७।१३९ ; भामु. १३।१०४। १४७-१४८.

(३) भा. १३।१०७।१४० ; भामु. १३।१०४। १४८-१४९ गन्धर्व (गान्धर्व).

(४) भा. १३।१०७।१४१ ; भामु. १३।१०४। १४९-१५०.

(५) भा. १५।९।१० ; भामु. १५।५।१० ; राक. १४९ युधिष्ठिर (नराधिप) शृणुयास्ते च यद्ब्रूयुः (शृणुया यच्च ते ब्रूयुः) ; राप्र. १३२ राकवत्.

(६) भा. १५।९।११ ; भामु. १५।५।११.

(७) भा. १५।९।१२ ; भामु. १५।५।१२ राज्य (कार्ये) सर्वं कौरवनन्दन (सर्वथा तव भारत).

चतसृषु तर्कत्रयीवार्तादण्डनीतिविद्यासु विनयः राज्ञाऽधिगन्तव्यः

[1]सदाऽधिगच्छेद्विनयं विनीतात्मा हि पार्थिवः ।
विनीतात्मा हि नृपतिर्न कचित्परिभूयते ॥
[2]ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
विद्यानां ग्रहणं कार्यं यथान्यायं नराधिपः(१प) ॥
[3]त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं प्रयोक्तृतः ।
आन्वीक्षिकीं तर्कविद्यां वार्तारम्भांश्च लोकतः ॥
[4]द्वौ भागावितिहासार्थं भागस्त्रय्यां विधीयते ।
इष्वस्त्रादिषु भागोऽन्यश्चतुर्थैवमहः स्मृतम् ॥

वृद्धोपासना विद्याश्रवणं च राज्ञः श्रेयस्करम्

[5]गुरुपूजां च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव विद्यानां कुर्वन् श्रेयोऽधिगच्छति ॥
[6]सहस्रमपि मूर्खाणां यद्युपास्ते महीपतिः ।
अथवाऽप्ययुतान्येव नास्ति तेषु सहायता ॥

## वाल्मीकिरामायणम्

वेदशास्त्रधनुर्विद्यास्त्रशस्त्रविद्यागन्धर्वविद्यासु विविधेषु शिल्पेषु च प्रावीण्यं राजपुत्रेण अधिगन्तव्यम्

[7]आर्यकस्य च ते नित्यं काले कालेऽभिवादनम् ।
व्रतचर्या च ते पुत्र कर्तव्या नियतात्मना ॥
ब्राह्मणैः सह धर्मात्मन् वासः सद्भिरुदाहृतः ।
काले काले यथोक्तं च ब्राह्मणानभिवादय ॥
ब्राह्मणा हि श्रियो मूलं पुरुषस्य शुभार्थिनः ।
सहायार्थे च कर्तव्याः प्रणम्य नियतात्मना ॥

(१) राक. १४८.
(२) राक. १४८-१४९.
(३) राक. १४९.
(४) राक. १४९ ; राप्र. १३२ त्रय्यां (त्रय्या).
(५) राक. १४९ ; राप्र. १३२.
(६) राक. १४९-१५० सहायता (सहायिता); राप्र. १३२.
(७) वारा. २।१।१९-२५.

सर्वविद्यान्तगा धन्या ब्राह्मणा मङ्गलावहाः ।
देवाः पुत्रभवार्थं वै प्रजानां सुरसत्तमैः ॥
प्रेषिता मानुषं लोकं भूमिदेवा इति श्रुतिः ।
तेभ्यः सर्वाणि शास्त्राणि वेदांश्च वदतां वर ॥
अस्त्रं शस्त्रं महास्त्रं च विधिवत्पुत्र धारय ।
अश्वपृष्ठे रथे चैव व्यायामं कुरु नित्यशः ॥
गन्धर्वविद्यासु तथा पारगो भव पुत्रक ।
अन्येष्वपि च शिल्पेषु यत्नः कार्यः सुत त्वया ॥

वेदाचार्यान् लेख्यसंस्थानशब्दज्ञान् नीतिशास्त्रार्थपारगान् हस्त्यश्वरथयानविद्याकुशलान् गन्धर्वविद्यानानाशिल्पविदश्च वृद्धान् उपास्य भरतः वेदधनुर्वेदनीतिशास्त्रार्थशास्त्रहस्तिशिक्षारथशिक्षाऽऽलेख्यज्यौतिषादिविद्यानिष्णातो जातः

[1]कदाचिद्भरतः श्रीमान् वृद्धं मातामहं नृपम् ।
अभिवाद्य महात्मानमिदं वचनमब्रवीत् ॥
आचार्याननुगच्छेयं भवतोऽनुमते प्रभो ।
लेख्यसंस्थानशब्दज्ञान्नीतिशास्त्रार्थपारगान् ॥
विविधासु च विद्यासु सुनिष्ठान् ब्राह्मणानपि ।
हस्त्यश्वरथयानेषु तथैव परिनिष्ठितान् ॥
गन्धर्वविद्याकुशलान्नानाशिल्पविदस्तथा ।
नरान् विनीतान् वृद्धान्वै वेत्तुमिच्छामि तत्त्वतः ॥
ब्राह्मणान्वेदविदुषो वृद्धान् परमपूजितान् ।
व्यादिष्टान् पुरुषांस्तत्र सर्वविद्याविशारदान् ॥
उपसेवितुमिच्छामि श्रेयोर्थी दृढमात्मनः ।
भवतोऽनुमते राजन् प्रदेष्टुं तान्ममार्हसि ॥
श्रुत्वैवं नृपतिर्वाक्यं कैकेयो भरतस्य सः ।
व्यादिदेश प्रहृष्टात्मा तस्याऽऽचार्यान्विपश्चितः ॥
तानुपास्य प्रयत्नेन भरतः केकयीसुतः ।
वेदवेदाङ्गशास्त्राणां पठने तत्परोऽभवत् ॥
सर्वविद्यासु कुशलान् परं हर्षमवाप ह ।
प्रदाय शिष्यमात्मानं तेभ्यः स रघुनन्दनः ॥

(१) वारा. २।२।१-३०.

आचार्येभ्यस्ततो विद्यां धर्मेणाधिजगाम ह ।
जग्राह वेदवेदाङ्गशास्त्राणि गुणवृद्धये ॥
सोऽनूपूर्वेण तान्सर्वान् परिजग्राह सुव्रतः ।
सह भ्रात्रा महातेजाः शत्रुघ्नेन यशस्विना ॥
एवमाचार्यहस्तेषु वर्तमानो नरोत्तमः ।
रममाणो नरव्याघ्रः परं हर्षमवाप ह ॥
शुश्रूषते यथान्याय्यमाचार्यं नियतेन्द्रियः ।
अर्थमानप्रदानाभ्यां यथाकालमतन्द्रितः ॥
ज्ञानाभ्यासे प्रवृत्तस्य विज्ञानेऽभिरतस्य च ।
एवं कालो व्यतिक्रामत्सुमहान् भरतस्य च ॥
यदा ज्ञानेषु निष्ठां वै प्राप्तवान् रघुनन्दनः ।
ततोऽस्य बुद्धिः संजाता धर्मं श्रोतुं सनातनम् ॥
ब्राह्मणेभ्योऽथ वृद्धेभ्यो भिक्षुकेभ्यश्च धार्मिकः ।
ये चान्ये च महाभागा धर्मेषु कुशला द्विजाः ॥
तान् सर्वान् स महातेजाः सेवते धर्मकारणात् ।
अन्तरात्मनि धर्मेभ्यः सततं पर्यवर्तत ॥
कथायां धर्मयुक्तायां रमते रघुनन्दनः ।
तपोऽहिंसारता नित्यं ये च धर्मपरायणाः ॥
तान् सर्वान् स महातेजा उपास्ते निभृतः शुचिः ।
शास्त्राणि च महाप्राज्ञो नित्यशो गुणवन्त्यपि ॥
वेदविद्यासु चान्यासु कुशलः सर्वशास्त्रवित् ।
कृतकृत्यमिवाऽऽत्मानं मन्यते धर्मसेवनात् ॥
तस्य बुद्धिः समभवत्पितुः संप्रेक्षणं प्रति ।
संदिदेश तदा दूतं ब्राह्मणं शुभलक्षणम् ॥
अयोध्यां गच्छ भद्रं ते दूत शीघ्रं नृपोत्तमम् ।
पितरं कुशलं ब्रूहि मातॄश्च भ्रातरौ तथा ॥
पृष्ट्वा च कुशलं तेभ्यो वाच्यो दशरथः प्रभुः ।
मातामहगृहे तात वर्तते त्वदनुग्रहात् ॥
यथाज्ञप्तं कृतं तात महत्तव शुभं प्रियम् ।
स तु तेनाभ्यनुज्ञातो भरतेन यशस्विना ॥
दूतः परमसंहृष्टः प्रयातो येन सा पुरी ।
अयोध्यां नगरीं रम्यां प्रविवेश महातपाः ॥



यां स राजीवताम्राक्षो राजा दशरथोऽवसत् ।
प्राप्तवानथ तां दूतो भरतस्यानुशासनात् ॥
न्यवेदयत तद्राज्ञे मातृभ्योऽथ द्विजस्तथा ।
कृतकृत्यो हि राजेन्द्र भरतः सत्यविक्रमः ॥
धनुर्वेदे च वेदे च नीतिशास्त्रे च पारगः ।
अर्थशास्त्रे च कुशलो व्यायामे च तथैव हि ।
हस्तिशिक्षासु निष्णातो रथशिक्षासु निष्ठितः ॥
आलेख्ये चैव लक्ष्ये च लङ्घने प्लवने तथा ।
ज्योतिर्गतिषु निष्णातस्तव वाक्येन नोदितः ॥
एवंविधानि कर्माणि कृत्वा च सुबहून्यपि ।
कृतार्थो भरतो राजंस्त्वत्सकाशमुपैष्यति ॥

विद्याविनीतो राजा शास्ता

[1]विद्यास्वभिविनीतो यो राजा राजन्नयानुगः ।
स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे ॥

## कौटिलीयमर्थशास्त्रम्

विद्यापरिगणनम्, विद्यालक्षणम्

[2]आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः ॥

विद्यासमुद्देश इति हि प्रथमं सूत्रम् । कास्ता विद्या इत्याकाङ्क्षायामाह– आन्वीक्षिकीत्यादि । अर्थतत्त्वस्य हेतुभिः परीक्षणमन्वीक्षा, सा प्रयोजनमस्या इति आन्वीक्षिकी हेतुविद्या । ऋग्यजुःसामानि त्रयी । तेषां अभिचारकर्मज्ञानादिफलादथर्ववेदात् भिन्नप्रस्थानतया पृथक्पङ्क्तिनिवेश्यानां संभूयैकक्रतुकार्यसाधकत्वात् तत्समुदायस्य त्रयीति संज्ञा । कृषिः पाशुपाल्यं वणिज्या च वार्ता । दण्डनीतिस्तु राजनीतिः । इति एवं प्रसिद्धा इति शेषः । श्रीमूला.

त्रयी वार्ता दण्डनीतिश्चेति मानवाः, त्रयीविशेषो ह्यान्वीक्षिकीति ॥

तत्र मनुशिष्याणां पक्षमाह– त्रयीत्यादि । आन्वीक्षिकी त्रयीविशेषो हि त्र्यनुगामितया त्र्यर्थविचाररूप-

---

(१) वारा. ६।११।९ विद्यास्वभिवि (विद्याऽवियावि) स शास्ति (प्रशास्ति); वाराकु. ६।३५।७.

(२) कौ. १।२.

तया च त्रय्याः प्रकार एव, न विद्यान्तरमित्यर्थः । तत्र त्रय्यनुगामिनी आन्वीक्षिकी सांख्ययोगतर्कशास्त्राणि, अन्या तु पूर्वोत्तरमीमांसे । आह च कामन्दकः– 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च त्रयीदं सर्वमुच्यते ॥' ( कानी. २।१३ ) इति । श्रीमूला.

**वार्ता दण्डनीतिश्चेति बार्हस्पत्याः, संवरणमात्रं हि त्रयी लोकयात्राविद इति ॥**

बृहस्पतिशिष्याणां मतमाह– वार्ता दण्डेत्यादि । त्रय्याः विद्यान्तरत्वाभावे हेतुमाह– संवरणमात्रं हीति । त्रयी लोकयात्राविदः वार्तादण्डनीत्यनुष्ठानलक्षणलोकतन्त्रविदुषः संवरणमात्रं हि नास्तिकोऽयमिति लोकनिन्दाद्वारसंवृतिसाधनमेव केवलम् । लोकतन्त्रसम्यङ्निर्वहणसमर्थमपि त्रय्यपरिग्राहिणं सन्तं नास्तिक इति लोको निन्देदिति त्रयीपरिग्रहस्य यथोक्तनिन्दाद्वारगोपनमात्रफलत्वेनाल्पप्रयोजनत्वान्न सा विद्यान्तरमित्यभिप्रायः । त्रयीनिरासेन तदन्तर्गताया आन्वीक्षिक्या अपि निरासः सिद्धः ।

श्रीमूला.

**दण्डनीतिरेका विद्येत्यौशनसाः, तस्यां हि सर्वविद्यारम्भाः प्रतिबद्धा इति ॥**

मतान्तरमाह– दण्डनीतिरेकेत्यादि । दण्डनीतिः एका एकैव विद्या प्राधान्येन विद्याव्यपदेशमर्हतीत्यर्थः । इति औशनसाः शुक्रशिष्याः । कुतः ? सर्वासां विद्यानामारम्भाः योगक्षेमाः तस्यां हि प्रतिबद्धाः दण्डनीतावेव प्रतिष्ठिताः इति कृत्वा । यद् वक्ष्यति– ' आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः ' (कौ. १।४) इति । श्रीमूला.

**चतस्र एव विद्या इति कौटिल्यः । ताभिर्धर्मार्थौ यद्विद्यात्, तद्विद्यानां विद्यात्वम् ॥**

स्वमतमाह– चतस्र एवेत्यादि । विद्याः चतस्र एव । एवकारेण त्रित्वादिपक्षव्यवच्छेदः । आसां विद्यात्वविद्यान्तरत्वयोर्विद्यात्वमादौ निर्वचनभङ्ग्या स्थापयति– ताभिरित्यादि । विद्यात्वं नाम धर्मार्थवेदनकरणत्वम् । तच्चान्वीक्षिक्यादिषु चतसृषु अविशिष्टमित्यर्थः । विद्यान्तरत्वं तु परस्परविसदृशस्वरूपफलनिरूपणेन यथाक्रमं स्थापयिष्यते । श्रीमूला.

आन्वीक्षिकीत्रयीवार्तादण्डनीतीनां लक्षणानि प्रयोजनानि च

**सांख्यं योगो लोकायतं चेत्यान्वीक्षिकी । धर्माधर्मौ त्रय्याम् । अर्थानर्थौ वार्तायाम् । नयापनयौ दण्डनीत्याम् । बलाबले चैतासां हेतुभिरन्वीक्षमाणाऽऽन्वीक्षिकी लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति, प्रज्ञावाक्यक्रियावैशारद्यं च करोति ॥**

तत्राऽऽन्वीक्षिक्याः स्वरूपमाह– सांख्यमित्यादि । सांख्यं प्रकृतिपुरुषविवेचकं शास्त्रं कपिलप्रोक्तम्, योगः प्रत्याहारध्यानधारणादिप्रतिपादकं महेश्वरप्रोक्तम्, लोकायतं न्यायशास्त्रं ब्रह्मगार्ग्योक्तम् । एतत्त्रितयात्मिका आन्वीक्षिकी । धर्माधर्मौ त्रय्यामित्यादिना त्रय्यादीनां फलसूचनम्, तच्चाऽऽन्वीक्षिकीफलस्य तद्विसदृशत्वव्युत्पादनार्थम् । धर्माधर्माविति, प्राधान्येन प्रतिपाद्याविति शेषः । तेन त्रय्यां अर्थानर्थनयापनयानामानुषङ्गिकतया क्वचित् क्वचित् प्रतिपादनेऽप्यविरोधः । एवं वार्तादण्डनीत्योरपि ज्ञेयम् । तत्र धर्मः अध्ययनयजनादिः, अधर्मः श्वमांसभक्षणादिः । अर्थः कालबीजवापादिजन्यं फलम्, अनर्थः अकालबीजवापादिजन्यम् । नयः ज्यायसा संध्यादिः येन योगक्षेमो निष्पाद्यते, अपनयस्तु ज्यायसा विग्रहादिः येन योगक्षेमो विहन्यते । एतासां त्रय्यादीनाम् । हेतुभिरन्वीक्षमाणा न्यायैः संप्रधारयन्ती । व्यसने इत्यादिनोपकारस्वरूपोक्तिः । बुद्धिमवस्थापयति अविकृतां करोति, बुद्धिर्दुःखे यथा नोद्विजेत सुखे च न प्रहृष्येत् तथा तां नियच्छतीत्यर्थः । यदाहुः– ' न प्रहृष्येत् सुखं प्राप्य नोद्विजेतासुखादपि ' इति । प्रज्ञावाक्यक्रियावैशारद्यं विचारवचनकर्मसु पाटवम् ।

श्रीमूला.

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।**
**आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥**

आन्वीक्षिकी सर्वविद्यानां प्रदीपः, परीक्षणसाधनत्वात्, सर्वकर्मणां उपायः आरम्भादिफलाधिगमपर्यन्तानुष्ठानवैचित्र्यप्रतिभोत्पादकत्वात्, सर्वधर्माणां शश्वत् आश्रयः वैदिकलौकिकानां सर्वेषां धर्माणामन्वीक्षावधार्यत्वात् सर्वदा आश्रयभूता । एवं च त्रय्यादिविसदृश-

स्वरूपफलत्वात् आन्वीक्षिक्या विद्यान्तरत्वं सिद्धमित्यभिप्रायः। श्रीमूला.

इतिहासपञ्चमा वेदाः षडङ्गानि च

**[1]सामर्ग्यजुर्वेदास्त्रयस्त्रय्यथर्ववेदेतिहासवेदौ च वेदाः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविचितिर्ज्योतिषमिति चाङ्गानि॥**

त्रयीस्थापनार्थं तत्स्वरूपमाह– सामेत्यादि। सामवेदः ऋग्वेदो यजुर्वेद इति त्रयः त्रयीपदवाच्याः, अथर्ववेदः, इतिहासवेदो महाभारतादिश्च वेदपदार्थाः। शिक्षा वर्णोच्चारणोपदेशकं शास्त्रम्। कल्पः क्रत्वनुष्ठानोपदेशपरं आश्वलायनादिप्रणीतं सूत्रम्। व्याकरणं शब्दानुशासनं पाणिनीयादि। निरुक्तं निर्वचनशास्त्रं यास्कप्रणीतम्। छन्दोविचितिः छन्दःशास्त्रं पैङ्गलादि। ज्योतिषं सूर्यादिगत्यादिप्रतिपादकं शास्त्रम्। श्रीमूला.

त्रयीधर्मप्रयोजनम्

**एष त्रयीधर्मश्चतुर्णां वर्णानामाश्रमाणां च स्वधर्मस्थापनादौपकारिकः॥**

त्रय्याः फलं वक्तुमाह– एष इति। एष त्रयीधर्मः त्रय्युपदिष्टो धर्मः चतुर्णां ब्राह्मणादिवर्णानां ब्रह्मचर्याद्याश्रमाणां च औपकारिकः उपकारफलः। कस्मात्? स्वधर्मस्थापनात् स्वधर्मेषु स्थापनात् स्वधर्मानुपदिश्य तेषु नियन्त्रणात्, अर्थात् वर्णाश्रमाणाम्। श्रीमूला.

चातुर्वर्ण्यधर्माः

**स्वधर्मो ब्राह्मणस्याध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति। क्षत्रियस्याध्ययनं यजनं दानं शस्त्राजीवो भूतरक्षणं च। वैश्यस्याध्ययनं यजनं दानं कृषिपाशुपाल्ये वणिज्या च। शूद्रस्य द्विजातिशुश्रूषा वार्ता कारुकुशीलवकर्म च॥**

वर्णधर्मं विवृणोति– स्वधर्म इत्यादि। शस्त्राजीवः शस्त्रेण आजीवः वृत्तिः। भूतरक्षणं प्राणिपालनम्। कृषिपाशुपाल्ये कृषिः केदारेषु बीजवापपरिकर्मादिविधानम्, पाशुपाल्यं पशुपालनकर्म गवाश्वादीनां पोषणचिकित्सादि। वणिज्या क्रयविक्रयव्यवहारः। द्विजातिशुश्रूषा द्विजातयो ब्रह्मक्षत्रियवैश्याः, तेषां परिचरणम्। वार्ता कृषिपाशुपाल्यवणिज्याः। कारुकुशीलवकर्म शिल्पिकर्म चारणकर्म च। श्रीमूला.

आश्रमचतुष्टयधर्माः

**गृहस्थस्य स्वकर्माजीवस्तुल्यैरसमानर्षिभिर्वैवाह्यमृतुगामित्वं देवपित्रतिथिभृत्येषु त्यागः शेषभोजनं च॥**

आश्रमधर्ममाह– गृहस्थस्येत्यादि। गृहिणः स्वकर्माजीवः स्ववर्णोक्तकर्मणा वृत्तिः। तुल्यैः कुलादिना समानैः असमानर्षिभिः भिन्नार्षगोत्रैः वैवाह्यं विवाहः। स्वार्थे ष्यञ्। ऋतुगामित्वं ऋतुः पुष्पस्नानदिनादूर्ध्वं द्वादशनिशाः, तस्मिन् स्त्रीगमनशीलत्वम्। शेषभोजनं देवादिदत्तावशिष्टाशनम्। श्रीमूला.

**ब्रह्मचारिणः स्वाध्यायोऽग्निकार्याभिषेकौ भैक्षव्रतत्वमाचार्ये प्राणान्तिकी वृत्तिस्तदभावे गुरुपुत्रे सब्रह्मचारिणि वा॥**

ब्रह्मशब्दो वेदवाची तद्ग्रहणार्थे दण्डाजिनधारणादिलक्षणे व्रते वर्तते, तत् चरितुं शीलमस्येति ब्रह्मचारी, तस्य ब्रह्मचारिणः। स्वाध्यायः स्ववेदाध्ययनम्। अग्निकार्याभिषेकौ अग्निशुश्रूषात्रिषवणस्नाने। भैक्षव्रतत्वं भैक्षं भिक्षावृत्तिः, व्रतत्वं व्रतित्वं गोदानान्तं कर्म, तदुभयम्। एवं तावदुपकुर्वाणस्य वेदब्रह्मचारिण आसमावर्तनादनुष्ठानम्। नैष्ठिकस्य विशेषमाह– आचार्ये प्राणान्तिकी वृत्तिरित्यादि। गुरुकुले आप्राणोत्क्रमणकालभाविनी स्थितिः। गुरुपुत्रे आचार्यपुत्रसमीपे। सब्रह्मचारिणि वा समानशाखाध्यायिनि वा वृद्धे। कार्येति शेषः। श्रीमूला.

**वानप्रस्थस्य ब्रह्मचर्यं भूमौ शय्या जटाजिनधारणमग्निहोत्राभिषेकौ देवतापित्रतिथिपूजा वन्यश्चाहारः॥**

वानप्रस्थस्य वने प्रकर्षेण तिष्ठतीति वनप्रस्थः, वनप्रस्थ एव वानप्रस्थः, स्वार्थेऽण्, तस्य। ब्रह्मचर्यं ऊर्ध्वरेतस्त्वम्। भूमौ शय्या स्थण्डिले शयनम्। अग्निहोत्रं सायंप्रातरनुष्ठेयमग्निकार्यम्। अग्नये होत्रं हविराज्यादि

(१) कौ. १।३.

यस्मिंस्तदिति व्युत्पत्तिः । तच्च अभिषेकस्त्रिकालस्नानं च अग्निहोत्राभिषेकौ । वन्यः आहारः कन्दमूलफलादिः ।

श्रीमूला.

**परिव्राजकस्य संयतेन्द्रियत्वमनारम्भो निष्किंचनत्वं सङ्गत्यागो भैक्षमनेकत्रारण्यवासो बाह्याभ्यन्तरं च शौचम् ॥**

परिव्राजकस्य परित्यज्य सर्वं व्रजतीति परिव्राजकः संन्यासी, तस्य । संयतेन्द्रियत्वं जितेन्द्रियता । अनारम्भः नैष्कर्म्यम् । निष्किंचनत्वं निःस्वत्वम् । सङ्गत्यागः प्रव्रजितान्तरेणापि संसर्गपरिहारः । अनेकत्र भैक्षं प्राणयात्रापर्याप्तस्यान्नस्य बहुषु गृहेषु भिक्षित्वा ग्रहणम् । बाह्याभ्यन्तरशौचं कायवाङ्मानसनैर्मल्यम् । श्रीमूला.

साधारणधर्माः

**सर्वेषामहिंसा सत्यं शौचमनसूयाऽऽनृशंस्यं क्षमा च ॥**

सर्ववर्णाश्रमसाधारणान् धर्मानाह– सर्वेषामिति । अनसूया गुणपक्षपातः । आनृशंस्यं अनिष्ठुरत्वम् । श्रीमूला.

स्वधर्मपालनफलं स्वधर्मोल्लङ्घनफलं च

**स्वधर्मः स्वर्गायाऽऽनन्त्याय च । तस्यातिक्रमे लोकः संकरादुच्छिद्येत ॥**

स्वधर्मः किमर्थमादर्तव्यस्तत्राऽऽह– स्वधर्म इति । स्वर्गाय परलोकसुखाय आनन्त्याय च इहाविनाशाय मोक्षाय वा । अतिक्रमे उल्लङ्घने । संकरादुच्छिद्येत अनुष्ठातृव्यवस्थाविरहेण कर्मसंकराद्वर्णसंकराच्च उत्सादं प्राप्नुयात् । अयमाशयः– वर्णाश्रमधर्मा हि यथोक्ता अविवादसिद्धलोकयोगक्षेमहेतुभावाः तदुपासकबीजक्षेत्रसंक्रान्ततदनुष्ठानवासनासनाथैः तत्तद्वर्णाश्रमिभिरेव स्वकुलधर्मत्वबुद्ध्या भक्तिश्रद्धापुरःसरमनुष्ठीयमानाः सन्तः सौष्ठवविशेषं प्रतिपत्तुं लोकोपकारे च कमपि कमप्यतिशयमाधातुं क्षमन्ते । ते चेदव्यवस्थमन्यैः कथंचिदनुष्ठीयेरन् ध्रुवं तर्हि सौष्ठवाद्धीयेरन् , लोकोपकारे च नातिशयमादधीरन् , अनुष्ठातबाहुल्यं च क्रमेणाऽऽसादयेयुरिति धर्मव्याकुलीभावाल्लोकविनाशः स्यादिति । श्रीमूला.

**तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत् । स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति ॥**

अतः किं कर्तव्यं तत्राऽऽह– तस्मादित्यादि । भूतानां मनुष्याणाम् । न व्यभिचारयेत् व्यभिचरन्तं नानुमन्येत । स्वधर्मं संदधानः सम्यगनुष्ठापयन् । प्रेत्य परलोके । ल्यप्प्रतिरूपो निपातः । श्रीमूला.

**व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः । त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥**

वर्णाश्रमधर्मविधानद्वारेण त्रय्याः महाफलत्वं वदन्नध्यायमुपसंहरति– व्यवस्थितेत्यादि । व्यवस्थिता वर्णाश्रमप्रतिबद्धा आर्यमर्यादा सदाचारनियमः यस्य सः व्यवस्थितार्यमर्यादः । प्रसीदति मोदते । न सीदति न नश्यति । श्रीमूला.

वार्तादण्डनीत्योः स्वरूपं प्रयोजनं च

**[1]कृषिपाशुपाल्ये वणिज्या च वार्ता धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारिकी । तया स्वपक्षं परपक्षं च वशीकरोति कोशदण्डाभ्याम् ॥**

अथ वार्ताया विद्यात्वं स्थापयितुं स्वरूपादिकमाह –कृषिपाशुपाल्ये इत्यादि । कृषिः क्षेत्रबीजवापपरिकर्मादिप्रतिपादकं शास्त्रं पराशरप्रोक्तम् । पाशुपाल्यं गवाश्वादिपालनप्रकारोपदेशकं शास्त्रं गौतमशालिहोत्रादिप्रणीतम् । वणिज्या क्रयविक्रयव्यवहारतन्त्रं विदेहराजप्रणीतम् । धान्येत्यादि । तत्र हिरण्यं अकुप्यं सुवर्णादि । कुप्यं स्वर्णरजतातिरिक्तं ताम्रादि तैजसं सारदारुवेणुवल्लीवल्कादिकमतैजसं च । विष्टिः कर्मकरः । तया कोशदण्डाभ्यां वार्तया जनिताभ्यां कोशदण्डाभ्यां कोशः धननिचयः, दण्डः सेना, ताभ्याम् । स्वपक्षं परपक्षं च वशीकरोति स्वायत्तीकरोति, अर्थात् राजा । श्रीमूला.

**आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः । तस्य नीतिर्दण्डनीतिरलब्धलाभार्था लब्धपरिरक्षणी रक्षितविवर्धनी वृद्धस्य तीर्थेषु प्रतिपादनी**

(१) कौ. १।४.

च । तस्यामायत्ता लोकयात्रा । तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात् ॥

दण्डनीतेः स्वरूपादिकमाह– आन्वीक्षिकीत्यादि । योगक्षेमौ साधयतीति योगक्षेमसाधनः । दण्डः दमः सामादिषु प्रधानभूत उपायविशेषः । अथवा दण्डस्थत्वाद् राजा दण्डः । सति दण्डभये लोकः आन्वीक्षिक्यादिषु सम्यक् प्रवर्तते, न त्वितरथेति दण्डस्याऽऽन्वीक्षिक्यादियोगक्षेमसाधनत्वं विज्ञेयम् । अत एवाऽऽहुः – 'सर्वो दण्डजितो लोको दुर्लभो हि शुचिः क्वचित् । दण्डस्य हि भयात् कृत्स्नं जगद्भोगाय कल्पते ॥' इति । तस्य नीतिः नयनं अनुष्ठानं अर्थात् तदुपदेशशास्त्रम् । अलब्धलाभार्थेत्यादि दण्डनीतेः फलकथनम् । दण्डेन ह्यलब्धं लभ्यते, लब्धं परिरक्ष्यते, परिरक्षितं वर्ध्यते, वर्धितं च तीर्थेषु पुण्यक्षेत्राध्वरादिषु विनियुज्यते । तस्मादिति । तस्मात् लोकवृत्तेर्दण्डनीत्यधीनत्वात् नित्यमुद्यतदण्डः सर्वदा दण्डप्रणयनोद्युक्तः स्यात्, अर्थात् राजा । श्रीमूला.

शिक्षा (विनय) प्रयोजनं शिक्षास्वरूपं च

'तस्माद्दण्डमूलास्तिस्रो विद्याः । विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः ॥

तस्मात् चतुर्वर्णाश्रमस्य लोकस्य राज्ञा सुविज्ञातप्रयुक्तदण्डमुखेन पाल्यमानस्यैव स्वधर्मकर्मानुष्ठानप्रवणतोत्पादात् तिस्रो विद्याः आन्वीक्षिकीत्रयीवार्तालक्षणाः दण्डमूलाः दण्डाधीनस्थितिकाः । दण्डश्च विनयलक्षणेन शास्त्रविज्ञानेन दत्तहस्तः प्राणिनां योगक्षेमसंपत्तिहेतुरित्याह– विनयेत्यादि । श्रीमूला.

कृतकः स्वाभाविकश्च विनयः । क्रिया हि द्रव्यं विनयति नाद्रव्यम् । शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम् ॥

तत्र विनयः क्रियया अभियोगलक्षणया निर्वृत्तः कृतक इत्येकः, विनाऽपि क्रियां वासनावशात् सिद्धः स्वाभाविक इत्यपरः । यथा हि संस्करणाभियोगः शाणघर्षणादिः द्रव्यं खन्यादिप्रभवं पाषाणादिविशेषं संस्करोति, न पुनरद्रव्यं यं कमपि शिलादिखण्डम्, तथा विद्याभियोगः स्वतःसिद्धशुश्रूषादिबुद्धिगुणसंपन्नमेव जनं संस्करोति, न तु तद्रहितम् । बुद्धिगुणाश्च तेऽष्टौ भवन्ति– शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाख्याः । तत्र शुश्रूषा श्रवणार्हेषु श्रोतुमिच्छा । तस्यां सत्यां श्रवणं आसेवा । ग्रहणं श्रुतार्थज्ञानम् । धारणं गृहीताविस्मरणम् । विज्ञानं धारितेष्वर्थेषु साध्यसाधनादिस्वरूपविवेकज्ञानम् । ऊहः शब्दानुक्तस्य लिङ्गेनावगतिः । अपोहः युक्त्यपेतस्य हानम् । तत्त्वाभिनिवेशः वस्तुयाथात्म्यज्ञानम् । श्रीमूला.

विद्यानां तु यथास्वमाचार्यप्रामाण्याद्विनयो नियमश्च ॥

एवं विद्याधिकारिणं तदनधिकारिणं चोक्त्वा विद्याग्रहणकाले शिष्येणाऽऽचरणीयमाह– विद्यानां त्विति । विद्यानां आचार्यप्रामाण्यात् यस्या विद्याया यो य आचार्यः उपदेष्टा, तस्य प्रामाण्यात् तदध्ययनकाले तं तं शिष्यं प्रति धर्मानुशासनप्रभविष्णुत्वात् यथास्वं तत्तदाचार्यानुशासनानतिक्रमेण विनयः शिक्षणं 'आहूतश्चाप्यधीयीत' इत्युक्तप्रकारं समुदाचारो वा गुर्वागमनोपवेशादौ प्रत्युत्थानानुपवेशादिः नियमश्च गुरुपरिचरणादिव्रतं च अर्थाच्छिष्यस्य भवति । श्रीमूला.

राजपुत्रशिक्षापद्धतिः, राजपुत्रशिक्षाप्रयोजनम्, ब्रह्मचर्यकालः, ब्रह्मचर्योत्तरमपि शिक्षासमयः

वृत्तचौलकर्मा लिपिं संख्यानं चोपयुञ्जीत । वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः, वार्तामध्यक्षेभ्यः, दण्डनीतिं वक्तृप्रयोक्तृभ्यः ॥

वृत्तचौलकर्मा कृतचौलः त्रिवर्षः पञ्चवर्षो वेत्यर्थः, लिपिं अक्षरं संख्यानं गणितं च उपयुञ्जीत नियमपूर्वमधीयीत । त्रयीमित्यादिनाऽप्येतत् संबध्यते । वृत्तोपनयनः लब्धगायत्र्युपदेशः त्रयीं आन्वीक्षिकीं च शिष्टेभ्यः सम्यगधिगततद्विद्येभ्यः उपयुञ्जीत । वार्तां अध्यक्षेभ्यः

(१) कौ. १।५.

सीताध्यक्षादिभ्यः उपयुञ्जीत । दण्डनीतिं वक्तृप्रयोक्तृभ्यः प्रवचनप्रयोगकुशलेभ्यः उपयुञ्जीत ।

श्रीमूला.

**ब्रह्मचर्यं चाऽऽ षोडशाद्वर्षात् । अतो गोदानं दारकर्म च । अस्य नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं तन्मूलत्वाद्विनयस्य ॥**

आ षोडशात् वर्षात् षोडशं वयोऽभिव्याप्य ब्रह्मचर्यम्, रक्ष्यमित्यार्थम् । अतः पश्चात् गोदानं केशान्तकर्म दारकर्म च विवाहश्च । अस्य कृतदारस्य विद्यावृद्धसंयोगः विद्यावृद्धैः सह परिचयः नित्यः दारकर्मोत्तरकालेऽप्यनुवर्त्यः । किमर्थम् ? विनयवृद्ध्यर्थं विनयस्य शास्त्रसंस्कारस्य वृद्धये । कस्मात् ? विनयस्य तन्मूलत्वात् विद्यावृद्धसंयोगप्रभवत्वात् । श्रीमूला.

**पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु विनयं गच्छेत्, पश्चिममितिहासश्रवणे । पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः । शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं च कुर्यादगृहीतानामाभीक्ष्ण्यश्रवणं च ॥**

भूयः कलाभ्यासं राज्ञ उपदेष्टुमाह– पूर्वमिति । पूर्वं अहर्भागम् । अत्यन्तसंयोगे द्वितीया । हस्त्यश्वरथप्रहरणविद्यासु हस्तिचर्यायामश्वचर्यायां रथचर्यायां आयुधविद्यायां च विनयं शिक्षां गच्छेत् । पश्चिमं तृतीयमहर्भागं इतिहासश्रवणे विनयं गच्छेत् । इतिहासपदार्थविवरणम्– पुराणमित्यादि । पुराणं ब्राह्मादि । इतिवृत्तं श्रीरामायणमहाभारतादि । आख्यायिका दिव्यमानुषादिचरितम् । उदाहरणं न्यायोपन्यासशास्त्रं मीमांसादि । धर्मशास्त्रं मानवादि । अर्थशास्त्रं औशनसबार्हस्पत्यादि । शेषं मध्यमं अहर्भागम् । अहोरात्रभागमिति मूलग्रन्थेषु पठ्यते । तदा शिष्टं मध्यममहर्भागं रात्रौ कार्यान्तरनिद्रादिविनियुक्तावशिष्टतया लभ्यमानं रात्रिभागं चेति व्याख्येयम् । अपूर्वग्रहणं प्रतिनवप्रमेयश्रवणं गृहीतपरिचयं गृहीतधारणार्थं चिन्तनं च कुर्यात् । अगृहीतानां आभीक्ष्ण्यश्रवणं ईषद्गृहीतानां सम्यङ्मनःप्रवेशार्थं पुनः पुनः श्रवणं च । श्रीमूला.

**श्रुताद्धि प्रज्ञोपजायते प्रज्ञाया योगो योगादात्मवत्तेति विद्यासामर्थ्यम् ॥**

श्रुतात् श्रवणात् प्रज्ञा त्रैकालिकी बुद्धिः उपजायते । प्रज्ञाया योगः शास्त्रोक्तानुष्ठानश्रद्धा, योगात् आत्मवत्ता मनस्विता सत्त्ववत्ता उपजायते । इति विद्यासामर्थ्यं इत्येतत् विद्याशक्तिजन्यं फलमित्यर्थः ।

श्रीमूला.

**विद्याविनीतो राजा हि प्रजानां विनये रतः ।**
**अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः ॥**

विनये शिक्षणे । अनन्यां नाथान्तरशून्यां एकनाथामित्यर्थः । शेषं स्फुटम् । श्रीमूला.

## चाणक्यसूत्राणि

विनयवृद्धसेवाविज्ञानात्मसंपत्तीनां कार्यकारणभावः

[1]**विनयस्य मूलं वृद्धोपसेवा ॥**

**वृद्धसेवाया विज्ञानम् ॥**

**विज्ञानेनाऽऽत्मानं संपादयेत् ॥**

## चाणक्यनीतिदर्पणः

मनुष्येतरे प्राणिनः मानवशिक्षकाः

[2]**सिंहादेकं बकादेकं शिक्षेच्चत्वारि कुक्कुटात् ।**
**वायसात्पञ्च शिक्षेच षट् शुनस्त्रीणि गर्दभात् ॥**

[3]**प्रभूतं कार्यमल्पं वा यो नरः कर्तुमिच्छति ।**
**सर्वारम्भेण तत्कुर्यात्सिंहादेकं प्रचक्षते ॥**

---

(१) चासू. ६–८.

(२) चाद. ६।१४; वृचा. ५।३; चानी. ६४ शिक्षेच्चत्वारि कुक्कुटात् (षट् शुनस्त्रीणि गर्दभात्) षट् शुनस्त्रीणि गर्दभात् (चत्वारि कुक्कुटादपि); चासा. २।२१.

(३) चाद. ६।१५; वृचा. ५।४ प्रचक्षते (प्रकीर्तितम्); चानी. ६५ वृचावत्; चासा. २।२२ रम्भेण (रम्भेषु) प्रचक्षते (विधीयते).

इन्द्रियाणि च संयम्य बकवत्पण्डितो नरः ।
देशकालबलं ज्ञात्वा सर्वकार्याणि साधयेत् ॥
प्रत्युत्थानं च युद्धं च संविभागं च बन्धुषु ।
स्वयमाक्रम्य भुञ्जीत शिक्षेच्चत्वारि कुक्कुटात् ॥
गूढमैथुनं धाष्टर्यं च काले काले च संग्रहम् ।
अप्रमत्तमविश्वासं पञ्च शिक्षेच्च वायसात् ॥
बह्वाशी स्वल्पसंतुष्टः सुनिद्रो लघुचेतनः ।
स्वामिभक्तश्च शूरश्च षडेते श्वानतो गुणाः ॥
सुश्रान्तोऽपि वहेद्भारं शीतोष्णं न च पश्यति ।
संतुष्टश्चरते नित्यं त्रीणि शिक्षेच्च गर्दभात् ॥

(१) चाद. ६।१६ ; वृचा. ५।५ ; चानी. ६६ इन्द्रियाणि च (सर्वेन्द्रियाणि) नरः (जनः) देशकालबलं ज्ञात्वा (कालदेशोपपन्नानि) ; चासा. २।२३ च (तु) देशकालबलं ज्ञात्वा (कार्यकालोपपन्नानि).

(२) चाद. ६।१७ ; वृचा. ५।६ ; चानी. ७० (युद्धं च प्रातरुत्थानं भोजनं सह बन्धुभिः । स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥) ; चासा. २।२४ प्रत्यु (प्राग्) स्वयमा (स्त्रियमा).

(३) चाद. ६।१८ ; वृचा. ५।७ मैथुनं धा (मैथुन-धा) काले च सं (चाऽऽलयसं) अप्रमत्त (अप्रमाद) ; चानी. ६९ मैथुनं धाष्टर्यं (मैथुनधर्मं) उत्तरार्धे (अप्रमाद-मनालस्यं पञ्च शिक्षेत वायसात् ॥) ; चासा. २।२५ (गूढ-मैथुनधृष्टत्वं काले च बलिसंग्रहः । अप्रमादी सुधूर्तं च पञ्च शिक्षेच्च वायसात् ॥).

(४) चाद. ६।१९ ; वृचा. ५।८ स्वल्प (चाल्प) ; चानी. ६७ द्रो लघु (द्रः शीघ्र) स्वामि (प्रभु) षडेते श्वानतो (ज्ञातव्याः षट् शुनो) ; चासा. २।२६ स्वल्प (चाल्प) द्रो लघु (द्रः शीघ्र).

(५) चाद. ६।२० ; वृचा. ५।९ सुश्रान्तोऽपि (अविश्रामं) पश्यति (विन्दति) संतुष्टश्चरते (सुसंतुष्टः सदा) ; चानी. ६८ सुश्रान्तोऽपि (अविश्रामं) न च पश्यति (च न विन्दति) संतुष्टश्चरते (ससंतोषस्तथा) शिक्षेच्च (शिक्षेत) ; चासा. २।२७ (अविश्रान्तं वहेद् भारं शीतोष्णं च न विन्दति । सुसंतुष्टो भवेन्नित्यं त्रीणि शिक्षेत गर्दभात् ॥).

य एतान् विंशतिगुणानाचरिष्यति मानवः ।
कार्यावस्थासु सर्वासु अजेयः स भविष्यति ॥

## मनुः

त्रैविद्यवृद्धोपासनया शिक्षाप्राप्तिः राज्ञः

*तेन यद्यत्सभृत्येन कर्तव्यं रक्षता प्रजाः ।
तत्तद्वोऽहं प्रवक्ष्यामि यथावदनुपूर्वशः ॥

(१) वक्ष्यमाणावबोधार्थः श्लोकः । तेन राज्ञा सभृत्येन तदीयैः सहायैः (सह) यत् कर्तव्यं प्रजारक्षणार्थे तदिदानीमुच्यते । मेधा.

(२) तेन राज्ञा प्रजाः पालयता अमात्यसहितेन यत् कर्तव्यं तत् कृत्स्नं क्रमेण युष्माकमहं कथयिष्यामि । $ गोरा.

(३) यथावत् यस्य यदर्हम् । अनुपूर्वशः प्रातरारभ्य कार्यम् । मवि.

(४) अर्थान्तरमेव प्रस्तौति– तेनेति । रक्षता कर्तव्यं रक्षार्थं कर्तव्यमिति यावत् । नन्द.

ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः ।
त्रैविद्यवृद्धान् विदुषस्तिष्ठेत्तेषां च शासने ॥

(१) प्रातरुत्थाय शयनं त्यक्त्वा यथाविधानं कृतसंध्योपासनः प्रथमं ब्राह्मणानां दर्शनं दद्यात् । उपासनं अन्तिकोपवेशनकुशलप्रश्नादिकरणम् । परिः पादपूरणः । तिष्ठेत्तेषां च शासने । आज्ञाकरणं तेषां शासनम् । यदि

* राज्ञः अन्यानि कर्तव्यानि भृत्यकर्तव्यानि च यथाप्रकरणं संगृहीतानि संग्रहीष्यन्ते च ।

$ ममु., मच., भाच. गोरागतम् ।

(१) चाद. ६।२१ ; वृचा. ५।१० (एतानि विंशतिपदान्याचरिष्यति यो नरः । स जेष्यति रिपून् सर्वान् कल्याणश्च भविष्यति ॥) ; चासा. २।२८ (विंशत्येते गुणाः प्रोक्ता यस्तु कुर्याद् विचक्षणः । स जेष्यति रिपून् सर्वान् जेयश्च न भविष्यति ॥).

(२) मस्मृ. ७।३६ ; राक. १५६.

(३) मस्मृ. ७।३७ ; राक. १५६ ; रार. ५ वृद्धान् (विद्वान्).

कस्यचिदुपकारायाऽऽवि(?दि)शेयुः तद्विरुद्धं न शक्यम्, नाप्यनर्थकमनुतिष्ठेत् । त्रैविद्यवृद्धान् । तिसृणां विद्यानां समाहारः त्रैविद्यम्, तदधीतिनः त्रैविद्याः, रूढ्या ऋग्वेदादिवेदत्रयाध्यायिन उच्यन्ते । विदुषः तदर्थवेदिनश्च । एवंविधा ये ब्राह्मणाः तानुपासीत तदीयामाज्ञां कुर्यात् । वृद्धाः त्रैविद्यानां श्रेष्ठाः प्रकर्षवन्तोऽध्ययनविज्ञानयोः । मेधा.

( २ ) अहरहः प्रातरुत्थाय ब्राह्मणान् ऋग्यजुःसामाख्यविद्यात्रयग्रन्थार्थपारगान् विदुषः वक्ष्यमाणान्वीक्षिकीदण्डनीत्यभिज्ञान् सेवेत तदाज्ञां चानुतिष्ठेत् ।

* गोरा.

( ३ ) त्रैविद्येन वेदविद्यया वृद्धान् श्रेष्ठान् । तथा विदुषः शास्त्रसंस्कृतमतीन् । मवि.

( ४ ) त्रयी दण्डनीतिः आत्मविद्या चेति तिस्रो विद्याः त्रिविद्या, तामधीयते इति त्रैविद्याः । विद्वांसः तत्तत्त्ववेदिनः । उपासीत तदहःकृत्यसाधनार्थमिति भावः । नन्द.

( ५ ) त्रैविद्यवृद्धान् वेदवयस्तपःसंपन्नान् । †भाच.

(१)वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन् ।
वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥

( १ ) ¶वृद्धान् वयस्थब्राह्मणान् । एतदपूर्वम्, अन्यत् पूर्वसिद्धं विप्रानित्यादि । शुचीन् निरुपाधीन् । एतदप्यपूर्वम् । यथैवाध्ययनविज्ञाने उपास्यत्वकारणमेवं शुचित्वमपि । द्वितीयश्लोकार्था( ? र्धोऽ )र्थवादः । रक्षोभिः, रक्षांसि निर्दयानि महाबलानि सर्वधर्मशून्यानि, तान्यपि वृद्धसेविनं पूजयन्ति । मेधा.

( २ ) तांश्च विप्रान् वयोवृद्धान् वेदज्ञानार्थादिशुद्धान् विश्वसनीयत्वोत्पादनार्थमपि नित्यं सेवेत । यस्मात् वृद्धसेवी यः सोऽत्यन्ताविश्वासिभी राक्षसैरपि पूज्यते । तेषामपि विश्वसनीयो भवति, किं पुनर्मनुष्याणाम् ? गोरा.

( ३ ) वृद्धान् वयोवृद्धान्, तेषां पुरावृत्तज्ञतयोहापोहशक्तत्वात् । तानपि वेदार्थज्ञान् शुचीन् शौचयुक्तानेव, नान्यानित्येतदर्थं विशेषणद्वयम् । मवि.

( ४ ) तांश्च ब्राह्मणान् वयस्तपस्यादिवृद्धानर्थतो ग्रन्थतश्च वेदज्ञान् बहिरन्तश्चार्थदानादिना शुचीन्नित्यं सेवेत । यस्मात् वृद्धसेवी सततं हिंस्रैः राक्षसैरपि पूज्यते । तैरपि तस्य हितं क्रियते, सुतरां मनुष्यैः । ‡ ममु.

( ५ ) वृद्धसेविनां गुणमाह— वृद्धांश्चेति । वृद्धान् पित्रादीन् । वेदविदः वेदाध्ययनमात्रशालिनः । तावन्मात्रत्वेऽपि न तपस्वित्वं महत्त्वे कारणमित्याह— शुचीनिति । वृद्धसेवीति कृत्वा रक्षोभिः राक्षसाद्यैः । मच.

( ६ ) 'वृद्धान् वयस्तः, ब्राह्मणानब्राह्मणान् वा । विप्रानित्यादि व्याख्यातप्रायम् । शुचीन् निरुपधीन् । एतदप्यपूर्वम्' इति मेधातिथिः । कुल्लूकभट्टस्तु विप्रानित्यस्य सर्वाणि विशेषणानीत्याह । रक्षांसि निर्दयानि महाबलानि सर्वधर्मशून्यानि, तैरपि पूज्यते, किमुत मनुष्यैः ? इति कैमुतिकन्यायद्योतनार्थमिदम् । राप्र. ११९.

( ७ ) उक्तमेवार्थमादरार्थमाह— वृद्धानिति । वृद्धान् शीलेन वयसा च । रक्षोभिरपि दुर्जनैरपि । नन्द.

(१)तेभ्योऽधिगच्छेद्विनयं विनीतात्माऽपि नित्यशः ।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥

( १ ) वृद्धसेवायाः प्रयोजनमाह— तेभ्य इति । तेभ्यः विद्वद्ब्राह्मणेभ्यो वृद्धेभ्यः विनयं राजवृत्तं अधिगच्छेत् शिक्षेत । विनीतात्मा यद्यपि स्वयंबुद्ध्याऽपि विनीतोऽर्थशास्त्रैर्वा, तथापि वृद्धोपदेशे यत्नवान् स्यात् । दृष्टकर्माणः शास्त्रज्ञेभ्यो निपुणतराः । अथवा पाटवातिशयजननार्थं विनीतेनापि स्वभावतो वृद्धेभ्य आर्येभ्य आत्मा विनेयः ।

* ममु., मच. गोरागतम् ।

† शेषं गोरागतम् ।

¶ राप्रव्याख्यानमत्रानुसंधेयम् ।

‡ भाच. ममुगतम् ।

(१) मस्मृ. ७।३८ ; राक. १५६ हि (च) ; रार. ५ रपि पू (रभिपू) ; राप्र. ११९ राकवत्.

(१) मस्मृ. ७।३९ ; राक. १५६ ; रार. ५; राप्र. ११९.

स्वभावशुद्धस्य सुवर्णस्य तेजःसंयोगादिनाऽऽधीयमान-संस्कारो विशुद्धतररूपवानसौ दृश्यते । अस्य विनयाधानस्य फलं न विनश्यतीति । मेधा.

(२) यद्यपि अशक्य( ? अर्थ )शास्त्राभिज्ञतया सहजप्रज्ञया वा अतिविनीतो भवति, तथाप्यतिशयार्थं तेभ्यो ब्राह्मणेभ्यो नीतिमार्गं नित्यं शिक्षेत । यस्मान्नीतिप्रधानो राजा न कदाचिदपि नश्येत् । गोरा.

(३) विनयं इन्द्रियजयोपायम् । विनीतात्माऽप्यविनया( ? )दधिकं शिक्षेदित्यर्थः । ‘ बहवोऽविनयात् ’ (४०) ‘ वेनो विनष्टः ’ (४१) ‘ पृथुस्तु विनयात् ’ (४२) इति श्लोकत्रयमस्यैव प्रपञ्चः । * मवि.

(४) सहजप्रज्ञया अर्थशास्त्रादिज्ञानेन च विनीतोऽप्यतिशयार्थं तेभ्यो विनयमभ्यसेत् । यस्मात् विनीतात्मा राजा न कदाचित् नश्यति । ममु.

(५) विनयः सुनीतिः । सुशीलमिति केचित् ।

रार. ६

(६) वृद्धसेवाप्रयोजनमाह– तेभ्य इति । विनीतात्माऽपि, स्वयमिति शेषः । कर्हिचित् शत्रुतः पराजयदशायामपि विनयेन ततोऽपि राज्यमाप्नुयात् । मच.

(७) वृद्धसेवायाः फलमाह– तेभ्य इति । विनीतात्माऽपि पाटवातिशयजननार्थं विनयमधिगच्छेत् ।

राप्र. ११९

शिक्षां विना राज्ञो नाशः

'बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः ।
वनस्था अपि राज्यानि विनयात् प्रतिपेदिरे ॥

(१) पूर्वोक्त एवार्थः श्लोकत्रयेण दृढीक्रियते । अविनीताः सपरिग्रहाः नष्टाः । पुत्रदारहस्त्यश्वादिसंपत् परिग्रहः । ये तु विनयिनः, न ते राष्ट्रं प्राप्य हारयन्ति । यावत्ते दूरस्था वनस्था अपि कोशहीना अपि राज्यं प्रतिपेदिरे लब्धवन्तः । मेधा.

(२) बहवो राजानो हस्त्यश्वकोशादिपरिच्छदयुक्ता अपि अविनीततया नष्टाः । अन्ये पुनर्वनवासिनोऽपरिच्छदा अपि विनय( ? विनयि )त्वेन राज्यानि प्राप्तवन्तः । * गोरा.

(३) अत्राविनयः कामक्रोधलोभमदमानहर्षरूपारिषड्वर्गपारवश्यम्, विनयः तदपारवश्यम् ।

† मवि.

(४) अत्रैव गुणदोषावाचष्टे– बहव इति । अविनयादिति छेदः । परिच्छदः चतुरङ्गसेनाः । अहो विनयस्य माहात्म्यं यत्तावन्मात्रेणापरिच्छदा अपि राज्यान्यापुरित्याह– वनस्थाश्चेति । मच.

(५) विनयस्यावश्याधिगम्यतां व्यतिरेकान्वयाभ्यामाह– बहव इति । नन्द.

'वेनो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ।
सुदाः पैजवनश्चैव सुमुखो निमिरेव च ॥

(१) उभयत्राप्युदाहरणानि लोकसिद्धानि वर्णयन्ति । एतानि महाभारतादावाख्यानानि ज्ञेयानि । $ मेधा.

(२) वेनो नहुषश्चापि पिजवनस्य च पुत्रः सुदा नाम सुमुखो निमिश्चाविनयान्नष्टाः । ‡ गोरा.

(३) वेनः पृथोः पिता मानमदाभ्याम् । नहुषो मदक्रोधाभ्याम् । सुदानामा पिजवनापत्यं मदात् क्रोधाच्च । सुमुखो लोभात् । निमिः हर्षात् । हर्षः आत्मन्यकस्मात् प्रीत्युद्रेकः । मवि.

---

* भाच. विनयशब्दार्थः मविवत् ।

(१) मस्मृ. ७।४० ; मेधा. सपरिच्छदाः (सपरिग्रहाः) ; राक. १५६–१५७ स्था अपि (स्थाश्चैव) श्लोकार्धौ व्यत्यासेन पठितौ ; रार. ५ राकवत् ; राप्र. ११९ यान्नष्टा (याद्भ्रष्टा) शेषं राकवत् ।

* ममु. गोरागतम् ।

† भाचव्याख्यानं गोरामविगतम् ।

$ ममु. अवतरणं मेधागतम्, व्याख्यानं गोरागतम् ।

‡ नन्द. गोरागतम् ।

(१) मस्मृ. ७।४१ ; राक. १५७ ; रार. ५ : ९ निर्देशमात्रम् ; राप्र. ११९ सुदाः पैजवनश्चैव (सुदासः पैजवनश्च).

(४) अत्रेतिहासमाह– वेन इति । सुदाः पैजवनः पिजवनस्य पुत्रः सुदानामा । एते षड् (? पञ्च) अविनयान्नष्टाः । मच.

(५) सुदासनामा पैजवनस्य पुत्रः । तथा च ब्राह्मणम् – 'तस्मादु सुदासः पैजवनः' इति ।

राप्र. ११९–१२०

शिक्षया राज्यप्राप्तिः

**'पृथुस्तु विनयाद्राज्यं प्राप्तवान् मनुरेव च ।**
**कुबेरश्च धनैश्वर्यं ब्राह्मण्यं चैव गाधिजः ॥**

(१) ब्राह्मण्यं चैव गाधिजः । ननु च राज्याधिकारे को ब्राह्मण्यप्राप्त्युपन्यासावसरः ? राष्ट्रप्राप्तिरेव यथापूर्वं वर्णयितव्या । उच्यते । धनैश्वर्यादपि जात्युत्कर्षो दुष्प्रापः, सर्वाधिकारहेतुत्वात् । ननु च कथं तस्य विनयो हेतुः ? षाड्गुण्यप्रयोगः, अप्रमादः, अतिव्ययवर्जनम्, अलोभः, व्यसनासेवनम्, एवमादीनि विनयः । तदेतद्ब्राह्मण्यस्यैकमपि न कारणम् । तपो हि तत्र कारणत्वेन श्रुतम् – 'विश्वामित्रस्तपस्तेपे नानृषेः पुत्रः स्याम्' इत्येवमादि । उच्यते । नार्थशास्त्रोक्तैव नीतिर्नयः । किं तर्हि ? शास्त्रीयो विधिर्लोकाचारश्च । शास्त्रे च तपसा जात्युत्कर्षो जन्मान्तरे प्राप्यते इति विहितमेव । विश्वामित्रस्य ब्राह्मण्यं तु तस्मिन्नेव जन्मनि क्षत्रियस्य सत इत्याख्यातमेव । मेधा.

(२) पृथुमनू विनीततया राज्यं प्राप्तवन्तौ । वैश्रवणश्च विनये सति धनैश्वर्यं प्राप्तवान् । गाधिपुत्रश्च विश्वामित्रः क्षत्रियः सन् तेनैव शरीरेणात्यन्तदुष्प्रापं ब्राह्मण्यं विनययोगात् प्राप्तवान् । तस्मात् वृद्धेभ्यो विनयमधिगच्छेत् । * गोरा.

(३) राज्यलाभावसरे ब्राह्मण्यप्राप्तिरप्रस्तुताऽपि विनयोत्कर्षार्थमुक्ता । ईदृशोऽयं शास्त्रानुष्ठाननिषिद्धवर्जनरूपो विनयो, यदनेन क्षत्रियोऽपि दुर्लभं ब्राह्मण्यं लेभे । * ममु.

(४) विनयात् प्राप्तराज्यानाह– पृथुरिति । गाधिजो विश्वामित्रः विनयात् ब्राह्मण्यं प्राप, किमुतान्यत् ? एभिस्त्विति क्वचित्पाठः । तदा इत्यादिभी राज्यं प्राप्तमित्यध्याहार्यम् । मच.

(५) मनुः वैवस्वतः । † नन्द.

विद्याचतुष्टयाध्ययनं राज्ञः कर्तव्यम्

**'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।**
**आन्वीक्षिकीं चाऽऽत्मविद्यां वार्तारम्भांश्च लोकतः ॥**

(१) 'विद्याम्' इति द्वितीयान्तपाठेऽधिगच्छेदित्यनुषञ्जनीयम् । समाप्तब्रह्मचर्यस्य राज्योपदेशात् त्रय्यर्थाधिगमेन तन्निष्पत्तेरभ्यासार्थोऽयमुपदेशः । त्र्यवयवा विद्या त्रिविद्या, तामधीयते त्रैविद्याः, तेभ्यः त्रयीं ऋग्वेदादिवेदत्रयं विद्यात् । संदिग्धेषु पदार्थेषु वेदेभ्यो निर्णयं कुर्यात् । तैः सह वेदार्थं चिन्तयेदिति यावत् । न राजत्वाभिमानात् मदावलेपेन सर्वज्ञोऽहमिति बुद्ध्या संदिह्यमानानर्थानुपेक्षेत । दण्डनीतिं च । दण्डविषया नीतिः । दण्डो दमनमित्याहुः, येन शत्रवः स्वप्रकृतयो विषयवासिनश्चान्यायकारिणो दम्यन्ते, स दण्डोऽमात्यादिसंपत् । नीतिः तस्य प्रयोजनं तत्र विधिः, तं शिक्षेत तद्विद्भ्यश्चाणक्यादिग्रन्थविद्भ्यः । शाश्वतीमिति स्तुतिः । यद्यपि दण्डनीत्याऽप्यस्य सर्वलोकः शक्यते ज्ञातुम् (?), अन्वयव्यतिरेकमूलत्वादस्यार्थस्य, तथाप्यबुधबोधनार्थानि

---

* मवि. गोरागतम् ।

(१) मस्मृ. ७।४२; राक. १५७ पृथुस्तु (पृथुश्च); रार. ५ प्राप्तवा (प्राप्नुया) रश्च (रस्तु); मच. 'पृथुस्तु' इत्यत्र 'एभिस्तु' इत्यपि पाठः; राप्र. १२० राकवत्.

* शेषं गोरागतम् ।

† शेषं मचगतम् ।

(१) मस्मृ. ७।४३; मेधा. विद्यां (विद्याद्) 'विद्यां' इत्यपि पाठः; मिता. १।३११ चाऽऽत्मविद्यां (चाऽऽत्मविद्भ्यो); राक. १५७ लोकतः (सर्वतः); मभा. ११।३ शाश्वतीम् (तद्विदः) रम्भांश्च (रम्भं च); गौमि. ११।३ रम्भांश्च (रम्भं च); रार. ६ विद्यां (विद्याद्) वीमि. १।३११ शाश्वतीम् (तद्विदः) शेषं मितावत्; राप्र. ११८ विद्यां (विद्याद्) शाश्वतीम् (तद्विदः) चाऽऽत्मविद्यां (चाऽऽत्मविद्भ्यो).

तानि शास्त्राणि बुधानां च संवादार्थानीति युक्तो दण्डनीतिशास्त्राधिगमः । एवं आन्वीक्षिक्यपि तर्कविद्यार्थशास्त्रादिका । आत्मविद्या अध्यात्मविद्या । विशेषणविशेष्ये वा पदे । आत्मने या हिताऽऽन्वीक्षिकी सा तर्काश्रया । तां शिक्षेत । सा ह्युपयुज्यते व्यसनाभ्युदयोपरमचित्तसंक्षोभोपशमाय । या तु बौद्धचार्वाकादितर्कविद्या सा नातीव कृत्वा क्वचिदुपयुज्यते, प्रत्युताऽऽस्तिक्यमुपहन्ति यो नातिनिपुणमतिः ( तस्य ) । यदा तु स्वतन्त्रामान्वीक्षिकीं वेद, तदा तस्य दूतसंवादादिषु वाक्यवैशद्यानामुपयोगो नोपहास्यो भवति । वार्तारम्भांश्च । पण्यानामर्थपरिज्ञानं वाणिज्यकौशलं समयेन बार्हस्पत्येन तत्र परिज्ञानं वार्ता, तन्निमित्ता आरम्भाः वार्तारम्भाः । वार्तास्वरूपं ज्ञात्वा तद्विषयकार्याय प्रवृत्तिः आरम्भः । एतत् लोकतो विद्यात् । वणिज्याजीवनोऽत्र लोकोऽभिप्रेतः । ते हि तत्र कुशला भवन्ति । लोकत इति च पूर्वयोरनुषङ्गः कर्तव्यः । तेन सर्वत्र तद्विद्भ्य इति लभ्यते ।

* मेधा.

( २ ) त्रैविद्येभ्य एव दण्डनीतिमभ्यसेत्, आन्वीक्षिकीं चाऽऽत्मविद्यां न्यायसांख्यादिकामपवर्गोपयोगिनीं वार्तारम्भांस्तु कृष्यादीन् धनार्जनोपायान् लोकत एवान्वयव्यतिरेकाभ्याम् । मवि.

( ३ ) त्रिवेदीरूपविद्याविद्भ्यस्त्रिवेदीमर्थतो ग्रन्थतश्चाभ्यसेत् । ब्रह्मचर्यदशायामेव वेदग्रहणात् समावृत्तस्य च राज्याधिकारात् अभ्यासार्थोऽयमुपदेशः । दण्डनीतिं चार्थशास्त्ररूपां अर्थयोगक्षेमोपदेशिनीं पारम्पर्यागतत्वेन नित्यां तद्विद्भ्योऽधिगच्छेत् । तथा आन्वीक्षिकीं तर्कविद्यां भूतप्रवृत्तिप्रयुक्त्युपयोगिनीम्, ब्रह्मविद्यां चाभ्युदयव्यसनयोर्हर्षविषादप्रशमनहेतुं शिक्षेत । कृषिवाणिज्यपशुपालनादि वार्ता, तदारम्भान् धनोपायार्थान् तदभिज्ञकर्षकादिभ्यः शिक्षेत । † ममु.

( ४ ) किंच, यस्य वेदाक्षरकलापग्रहणोत्तरकालमेवाभिषेकस्तदवसरेऽविचारितं वेदार्थं विचारतो जानीयादित्याह– त्रैविद्येभ्य इति । धर्मार्थं त्रयीम्, द्रव्यार्थं दण्डनीतिं अर्थोपायशास्त्रं शाश्वतीं कुलपरम्परागताम्, आन्वीक्षिकीं तर्कविद्यां ऊहापोहार्थम्, आत्मविद्याम् 'आत्मा नित्यः, न जायते' इत्यादिरूपां शोकापनोदार्थम् । वार्तारम्भान्, कृषिपाशुपाल्यवाणिज्यादि वार्ता, तदारम्भान् धनोपायान् । लोकतः कृषीवलेभ्यः कृषीः पराशरादिस्मृतिभ्यो वा । मच.

( ५ ) एवं त्रविद्यवृद्धेभ्यो विनयस्याधिगम उक्तः । इदानीं तेभ्य एव विद्यास्तिस्रोऽधिगन्तव्या इत्याह– त्रैविद्येभ्य इति । वार्ता कृषिगोरक्षवाणिज्यादीनि, तस्या आरम्भान् क्रियाः । नन्द.

* राप्र. मेधागतम् ।

† रार. आच. ममुवत् ।

## याज्ञवल्क्यः

विद्याचतुष्टयाध्ययनं राज्ञः कर्तव्यम्

***'स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।**
**विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥**

( १ ) स्यादिति शेषः । आन्वीक्षिक्यां दण्डनीत्यां विविधवार्तायां त्रय्यां च विनीतः । आन्वीक्षिकी समस्तसान्दृष्टिकनिरूपणक्षमा हेतुविद्या । निजान्यप्रतापोन्नतिहानिहेतुर्निजदण्डोद्योगात्मिका यथार्हं दण्डनीतिः, दण्ड्येषु वा यथार्हं दण्डपातनेन योज्या । अन्ये तु तर्कविशेषं दण्डनीतिमाहुः । त्रयी ऋग्यजुःसामलक्षणा । विश्व.

( २ ) आन्वीक्षिक्यां आत्मविद्यायाम्, दण्डनीत्यां अर्थयोगक्षेमोपयोगिन्याम्, वार्तायां कृषिवाणिज्यपशुपालनरूपायां धनोपचयहेतुभूतायाम्, त्रय्यां ऋग्यजुःसामाख्यायां च विनीतस्तत्तदभिज्ञैः प्रावीण्यं नीतः । यथाऽऽह मनुः– 'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं चाऽऽत्मविद्यां वार्तारम्भांश्च लोकतः ॥'

* 'स्वरन्ध्रगोप्ता' इति पदस्य व्याख्यानं 'प्रकृतयः – स्वामी' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) यास्मृ. १।३११ ; विश्व. १।३०६ ; मिता. ; अप. १।३०९–३१० ; राक. १९ ; रार. ७ तस्त्वथ ( तस्त्वर्थ ); पमा. ४०५ ; वीमि. ; राप्र. ११८ ; नीम. ३५ सारवत् ; राकौ. २४६ (=).

( मस्मृ. ७।४३ ) इति । नराधिपः राज्याभिषिक्तः। स्यादिति सर्वत्र संबन्धः। * मिता.

( ३ ) आन्वीक्षिक्यां दण्डनीत्यां वार्तायां त्रय्यां च विनीतः शिक्षितः। आन्वीक्षिकी वेदाद्यविरुद्धन्यायविद्या। दण्डनीतिः अर्थशास्त्रम्। वार्ता कृष्यादिविद्या। ऋग्यजुःसामानि त्रयी। त्रयीग्रहणात्तत्परिकरभूतानि व्याकरणाद्यङ्गानि मीमांसापुराणधर्मशास्त्राणि गृह्यन्ते। ‡ अप.

## नारदः

विद्यात्रयानुवर्तनम्

[1]वार्तां त्रयीमप्यथ दण्डनीतिं राजाऽनुवर्तेत सदाऽप्रमत्तः॥

## बार्हस्पत्यसूत्रम्

दण्डनीतिशिक्षा राज्ञः श्रेयस्करी

[2]दण्डनीतिरेव विद्या॥

[3]विद्यामार्जयेत्॥

विद्यामूलं जगत्॥

विद्यां पुनः सर्वामित्याह गुरुः॥

## मत्स्यपुराणम्

वेदविद्यावृद्धोपासनया विद्याचतुष्टयाध्ययनं राज्ञः कर्तव्यम्

[4]ब्राह्मणान् पर्युपासीत त्रयीशास्त्रसुनिश्चितान्।
नासच्छास्त्रवतो मूढांस्ते हि लोकस्य कण्टकाः॥

[1]वृद्धान् हि नित्यं सेवेत विप्रान् वेदविदः शुचीन्।
तेभ्यः शिक्षेत विनयं विनीतात्मा च नित्यशः।
समग्रां वशगां कुर्यात्पृथिवीं नात्र संशयः॥

[2]बहवोऽविनयाद्भ्रष्टा राजानः सपरिच्छदाः।
वनस्थाश्चैव राज्यानि विनयात्प्रतिपेदिरे॥

[3]त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं त्वात्मविद्यां वार्तारम्भांश्च लोकतः॥

## विष्णुपुराणम्

औशनसं नीतिशास्त्रमध्येयं राजपुत्रेण

[4]अहन्यहन्यथाऽऽचार्यो नीतिं राज्यफलप्रदाम्।
ग्राहयामास तं बालं राज्ञामुशनसा कृताम्॥
गृहीतनीतिशास्त्रं तं विनीतं स यदा गुरुः।
मेने तदैनं तत्पित्रे कथयामास शिक्षितम्॥

## श्रीमद्भागवतम्

श्रीकृष्णबलरामयोर्विद्याकलाध्ययनम्

[5]अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः।
काश्यं सांदीपनिं नाम ह्यवन्तीपुरवासिनम्॥
यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम्।
ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवाऽऽदृतौ॥
तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः।
प्रोवाच वेदानखिलान्साङ्गोपनिषदो गुरुः॥

---

* वीमि. मितागतं अपगतं च। राकौ. मितानुवादः।

‡ दीक. अपगतम्।

† नामान्याख्यानं 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे द्रष्टव्यम्।

(१) नासं. १९।११९; नास्मृ. २१।६१ त्रयीमप्यथ (तु यां चाप्यथ) वर्तेत सदाऽप्र (वर्तेन्मततापूर्)।

(२) बासू. १।२.

(३) बासू. ६।१३–१५.

(४) मत्स्य. २१५।५१; विध. २।६५।४२–४३ त्रयीशास्त्रसुनिश्चितान् (त्रय्यां राम मुनींश्च तान्) स्त्रवतो (स्तरतान्); राप्र. १२३ विषवत्, मत्स्यपुराणविष्णुधर्मोत्तरयोः : ३०८.

(१) मत्स्य. २१५।५२; विध. २।६५।४३–४४ वृद्धान् हि (वृद्धांश्च) तेभ्यः शिक्षेत (तेभ्यो हि शिक्षेत) च (हि).

(२) मत्स्य. २१५।५३; विध. २।६५।४५ द्भ्रष्टा (न्नष्टा).

(३) मत्स्य. २१५।५४; विध. २।६५।४६ विद्यां (विद्याद्) रम्भांश्च (रम्भं च).

(४) विष्णु. १।१९।२६–२७.

(५) भाग. १०।४५।३१–३६.

सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा ।
तथा चाऽऽन्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥

सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ।
सकृन्निगदमात्रेण तौ संजगृहतुर्नृप ॥

अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः ।
गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ॥

## गरुडपुराणम्

राज्ञः शिक्षा आवश्यकी

[1]अन्धो हि राजा भवति यस्तु शास्त्रविवर्जितः ।
अन्धः पश्यति चारेण शास्त्रहीनो न पश्यति ॥

## अग्निपुराणम्

त्रैविद्येभ्यः विद्याचतुष्टयं राज्ञा अध्येयम्

[2]नश्येदविनयाद्राजा राज्यं च विनयाल्लभेत् ॥

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीं चार्थविद्यां वार्तारम्भांश्च लोकतः ॥

[3]आन्वीक्षिकीं त्रयीं वार्तां दण्डनीतिं च पार्थिवः ।
तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः ॥

आन्वीक्षिक्याऽर्थविज्ञानं धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥

## कालिकापुराणम्

वृद्धोपासना वेदशास्त्रश्रवणं च राज्ञा कर्तव्यम्

[4]ज्ञानविद्यातपोवृद्धान् वयोवृद्धान् सुदक्षिणान् ।
सेवेत प्रथमं विप्रानसूयापरिवर्जितान् ॥

तेभ्यश्च शृणुयान्नित्यं वेदशास्त्रविनिश्चयम् ।
यदूचुस्ते च तत्कार्यं प्राज्ञश्चैव नृपश्चरेत् ॥

(१) गरुड. १११।१९.
(२) अग्नि. २२५।२१।२२.
(३) अग्नि. २३८।८-९.
(४) कालिका. ८७।१६-१७.

## कामन्दकीयनीतिसारः

जितेन्द्रियता विद्यावृद्धोपासना विद्याचतुष्टयाध्ययनं च राज्ञः कर्तव्यम्

[1]वर्धयन्निह धर्मार्थौ सेवितौ सद्भिरादरात् ।
निगृहीतेन्द्रियः साधु कुर्वीत गुरुसेवनम् ॥

(१) विजितेन्द्रियस्य शास्त्राधिगमयोग्यत्वात् तदधिगमाय विद्यावृद्धसंयोग उच्यते । यदाह– वर्धयन्नित्यादि । धर्मार्थौ सेवितौ सद्भिरादरात्, तयोः प्राधान्यात् । कुर्वीत गुरुसेवनं शास्त्राधिगत्यर्थमवग्रहार्थं च । जम.

(२) इन्द्रियजयस्य कारणं विद्यावृद्धसंयोगमभिधातुमाह– वर्धयन्निति । पुरुषेण पुरुषार्थद्वयोपार्जनाय प्रयतितव्यमिति । सदाचारप्राधान्यात् पुरुषार्थद्वयमुच्यते, अन्यथा चतुष्टयं धर्मः, अर्थः, कामः, मोक्ष इति । धर्मपरिणामो मोक्ष इति मोक्षो धर्मः, अर्थसाध्यत्वाच्च कामस्य कामोऽप्यर्थः, अतो धर्मार्थावेव प्रधानभूतौ वर्धयन् अर्थादुपार्जनं कृत्वा वृद्धिं नयन् । नानुपार्जितस्य वृद्धिरस्ति । तौ चोपादेयत्वात् सेवितौ सद्भिरादरात् । अतस्तौ वर्धयन् गुरुसेवनं विद्यावृद्धाराधनं कुर्वीत । कथमिति ? निगृहीतेद्रियः सुतरां दण्डितेन्द्रियः, 'ब्रह्मचर्यमेव तु आ विद्याग्रहणात्' इति वचनात् । साधु यथा भवति प्रत्युत्थानाभिवादनादिप्रश्रयेण, 'विद्यानां तु यथास्वमाचार्यप्रामाण्याद्विनयो नियमश्च' इति वचनादिति । उनि.

[2]शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये ।
विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥

(१) तद्दर्शयति श्लोकद्वयेन– शास्त्रायेत्यादि । शास्त्रं विनयवृद्धये, सम्यक्करणीयवर्जनीयविधानात् । ततश्च विद्याविनीतो नापत्स्ववसीदति, स्थैर्यप्रतिपत्त्यसंमोहादियोगात् । जम.

(२) किमर्थं गुरुसेवनं कुर्वीत ? इत्याह– शास्त्रायेति । शास्त्राय शास्त्रप्राप्त्यर्थं गुरुसंयोगः गुरुसेवनं कार्यम् । शास्त्रमिति । शास्त्रं आन्वीक्षिक्यादिविद्या-

(१) कानी. १।६१ ; नीम. ३३ यः साधु (यद्मामः).
(२) कानी. १।६२ ; नीम. ३३ वृद्धये (वृत्तये).

चतुष्टयं शासनात् त्राणहेतुत्वात् शास्त्रम् । किमर्थम् ? विनयवृद्धये इन्द्रियजयवृद्ध्यर्थं भवति । वृद्धिर्हि सतोऽर्थस्य, नासतः । यदि स्वाभाविकं विनयबीजमस्ति, तदा शास्त्रं तस्य विनयवृद्धये भवति । तच्च जन्मान्तराभ्यासवासनायातमेवोपबृंहितमुपशान्तत्वम् । दृश्यन्ते च स्वभावत एवोपशान्ता मेधाविनश्च । तथा चोक्तं कौटिल्याचार्येण— 'कृतकः स्वाभाविकश्च विनयः । क्रिया हि द्रव्यं विनयति, नाद्रव्यम्' ( कौ. १।५ ) इति । एवं च शास्त्रं स्वाभाविकविनयस्य वृद्ध्यर्थं भवति । स एव शास्त्रेणोपबृंहितः कृतक इति व्यपदिश्यते । विद्याविनीत इति । विद्योपबृंहितेन्द्रियजयः कृतकविनयसंपन्नः नृपतिः राजा न कृच्छ्रेषु आपज्जनितक्लेशेषु अवसीदति विषण्णो भवति । विषादान्न प्राणापाय इति । उनि.

[१]वृद्धोपसेवी नृपतिः सतां भवति संमतः ।
प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्येषु प्रवर्तते ॥

( १ ) संमतः अभिगमनीयः । असद्वृत्तैः अनर्थजननैः । नाकार्येषु प्रवर्तते वृद्धोपसेवी, विद्यावृद्धैस्ततो निवर्त्यमानत्वात् । जम.

( २ ) उपकारं च वृद्धसंयोगे दर्शयन्नाह— वृद्धेति । वृद्धोपसेवी विद्यावृद्धसेवाशीलः नृपतिः सतां सत्पुरुषाणां संमतः सेव्यः भवति । तथा प्रेर्यमाणोऽप्यसद्वृत्तैः दासहस्तिपकादिभिः अकार्येषु परदारदूषणादिषु न प्रवर्तते, सततं वृद्धैरुपासितत्वात् । उनि.

[२]आददानः प्रतिदिनं कलाः सम्यङ्महीपतिः ।
शुक्लपक्षे प्रविचरन् शशाङ्क इव वर्धते ॥

( १ ) शिष्याचार्यसंबन्धलक्षणं विद्यावृद्धसंयोगं दर्शयन्नाह— आददान इत्यादि । गुरुभ्य आददान इत्यर्थः । प्रतिदिनमिति नित्याभियोगं दर्शयति । कलाः ज्योत्स्नाः ज्ञानविद्याः कर्मविद्याश्च । शुक्लपक्षे प्रविचरन् धर्मविजयीत्यर्थः । वर्धते शशाङ्क इव । शशाङ्को वपुषा, राजा लक्ष्म्या कीर्त्या च । जम.

( २ ) विद्याग्रहणोत्तरकालमप्यवशिष्टविद्यांशा ग्राह्या एवेति दर्शयन्नाह— आददान इति । विजिगीषुवृत्तस्थोऽपि प्रतिदिनमाददानः गृह्णन् कलाः चतुःषष्टिरूपाः शस्त्रास्त्रगीतोप ... दयः । सम्यगिति तत्त्वतः महीपतिः राजा शुक्लपक्षे प्रविचरन् शशाङ्क इव वर्धते सकलकलापरिपूर्णो भवतीत्यर्थः । उनि.

[१]जितेन्द्रियस्य नृपतेर्नीतिमार्गानुसारिणः ।
भवन्ति ज्वलिता लक्ष्म्यः कीर्तयश्च नभस्पृशः ॥

( १ ) यदाह— जितेन्द्रियस्येत्यादि । अजितेन्द्रियस्य हि विद्यावृद्धसंयोगेन विद्यानुसरणासंभवात् जितेन्द्रियग्रहणम् । विद्येति वक्तव्ये नीतिग्रहणं राजविद्याप्राधान्यार्थम् । नीतिश्चाप्रयुज्यमाना न फलदेति मार्गग्रहणम् । नीतिप्रयोगानुसारिण इत्यर्थः । ज्वलिताः स्फीताः । नभस्पृशः गगनोदरव्यापिन्यः । जम.

( २ ) कृतकेन्द्रियजयलक्षणविनयस्य च फलं दर्शयन्नाह— जितेन्द्रियस्येति । जितेन्द्रियस्य विनयसंपन्नस्य नृपतेः विजिगीषोः नीतिमार्गानुसारिणः, नीतिः इदमेव शास्त्रम्, तन्मार्गानुसारिणो नयसंपन्नस्य भवन्ति ज्वलिताः भास्वराः लक्ष्म्यः विभूतयः कीर्तयश्च यशांसि च नभस्पृशः दिगन्तव्यापिन्यः । श्रीणां बहुवचनं विभवश्रीः, वीरश्रीः, रूपश्रीः इत्यादिव्यवहारदर्शनात् । कीर्तीनामपि कारणबहुत्वात्, शौर्यत्यागकवित्वादिकारणानामानन्त्यात्, एवं कीर्तयोऽपि बह्व्य इति । उनि.

[२]इति स्म राजा विनयं नयान्वितो
निषेवमाणो नरदेवसेवितम् ।
पदं समाक्रामति भास्वरं श्रियः
शिरो महारत्नगिरेरिवोन्नतम् ॥

( १ ) इदानीं सर्गान्ते प्रकरणद्वयोक्तमेवार्थमुपसंहरति । तत्रेन्द्रियजयमधिकृत्याऽऽह— इतीत्यादि । एवमुक्तेन विधिना विनयं निषेवमाण इति संबन्धः । स्मशब्दो निपातः पादपूरणार्थः । नयान्वितः नीतिमनुस्मरन् । नरदेव-

---

(१) कानी. १।६३ ; नीम. ३३–३४.
(२) कानी. १।६४ ; नीम. ३४ पू.

(१) कानी. १।६५ ; नीम. ३४ मार्ग (शास्त्र) भवन्ति ज्वलिता (भवन्त्युज्ज्वलिता).
(२) कानी. १।६६.

सेवितं पूर्वैः राजभिरध्यासितम् । इतरत् शक्रादिभिः । पदं श्रियः । राज्यमित्यर्थः । भास्वरं भासनशीलम् । रत्नगिरिः सुमेरुः । तच्छिरसा चोपमानं स्वर्गतुल्यं राज्यमिति दर्शनार्थम् । जम.

(२) इन्द्रियजयवृद्धसंयोगावुपसंहरन्नाह– इतीति । इति उक्तप्रकारेण स्म स्फुटं राजा प्रजारञ्जनात् विनयं इन्द्रियजयं नयान्वितः वृद्धसंयोगादवाप्तनीत्यन्वितः निषेवमाणः अनुतिष्ठन् नरदेवसेवितं षोडशमहाराजाध्यासितं श्रियः राज्यलक्ष्म्याः (पदं) महाचक्रवर्तिस्थानं समाक्राममिति अध्यास्ते । भास्वरं दीप्ततरं शिरः महारत्नगिरेः सुमेरोः शिखरमिव । इन्द्रत्वमित्यर्थः । उनि.

[1]इयं हि लोकव्यतिरेकवर्तिनी
स्वभावतः पार्थिवता समुद्धता ।
बलात्तदेनां विनयेन योजये-
न्नयस्य सिद्धौ विनयः पुरःसरः ॥

(१) विनयपूर्वकेण नयेन राजा राज्यमाप्नोतीति कुत एतदिति चेत्, स्वभावतः नृपस्य समुद्धतत्वान्नयासिद्धेः । यदाह– इयं हीत्यादि । लोकव्यतिरेकवर्तिनी लोकबाह्या । सा ह्यसाधारणभोगसंस्पर्शात् स्वभावत एव समुद्धता भवति । तदेनां तस्मात् पार्थिवताम् । विनयः पुरःसरः । विनीतो हि शास्त्रमृच्छति, तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदन्ति । जम.

(२) विनयः राजकुमारे दुराधेय इति दर्शयन्नाह– इयमिति । इयं पार्थिवता राजत्वं हि लोकव्यतिरेकवर्तिनी लोकोऽन्यथा वर्तते अन्यथा पार्थिवः । यतः स्वभावत एव समुद्धता विनयाभावान्नम्रत्वरहिता । बलादित्याक्रम्य तत् तस्मात् गुरुः एनां पार्थिवतां विनयेन योजयेत् । यतो नयस्य शास्त्रानुष्ठानस्य विनयः इन्द्रियजयः पुरःसरः साधक इत्यर्थः । उनि.

(१) कानी. १।६७ ; नीम. ३४ लोक (लोके) विनयेन यो ( विनये नियो ).

[1]परां विनीतः समुपैति सेव्यतां
महीपतीनां विनयो विभूषणम् ।
प्रवृत्तदानो मृदुसंचरत्करः
करीव भद्रो विनयेन शोभते ॥

(१) विनयस्य प्रयोजनान्तरमाह– परामित्यादि । विभूषणं अकृत्रिमम् । कथं तेन भूष्यते इत्यत्राऽऽह– प्रवृत्तदान इति । धान्यपशुहिरण्यैर्यथाकालं प्रजानुग्रहकारणात् प्रवृत्तदानः । यदुचितमादीयते प्रजाभ्यः तदल्पमात्रया प्रजासु संचरतीति मृदुसंचरत्करः । तदुभयं विनयाद्भवतीति । भद्रोऽपि हि हस्ती मृदुसंचरत्करः, स हि न दुष्टहस्तिवत् क्षुद्रोपद्रवाय करं व्यापारयतीति । जम.

(२) बलादपि कस्मात् विनयेन योजयेत् ? तत्र गुणं दर्शयन्नाह– परामिति । विनीतो राजा परां उत्कृष्टां सेव्यतामुपैति, बहुभिः सत्पुरुषैः सेवित एव राजा भवति । अन्यच, महीपतीनां हि निश्चितं विनयो भूषणं दुर्लभत्वाद्विनय एवालंकारः । करीव भद्रो राजा विनयेन शोभते । यथा हस्तिपकाहितविनयेन भद्रः करी शोभते, तथा विद्यावृद्धाहितविनयेन राजा । प्रवृत्तदानः प्रवृत्तत्यागः, इतरः प्रवृत्तमदः । मृदुसंचरत्करः मन्थरत्वान्मन्दसंचरद्धस्तः करी, राजा मृदुसुकुमारोपक्रमेण कोशसंग्रहं प्रति संचरन् करः प्रजादेयोऽर्थो यस्येति । उनि.

[2]गुरुस्तु विद्याधिगमाय सेव्यते
श्रुता च विद्या मतये महात्मनाम् ।
श्रुतानुवर्तीनि मतानि वेधसा-
मसंशयं साधु भवन्ति भूतये ॥

(१) वृद्धसंयोगमधिकृत्याऽऽह– गुरुस्त्विति । श्रुता च विद्या परिज्ञानायेत्यर्थः । अन्यतः श्रुतमविनाशि वर्धते, अर्थावगमस्य तदधीनसिद्धित्वात् । श्रुतानुवर्तीनि शास्त्राहितपरिज्ञानपूर्वकारीणि । वेधसां विदुषां असंशयं भूतये भवन्ति । अनधीतशास्त्राणां तु कार्यसिद्धये

(१) कानी. १।६८.

(२) कानी १।६९ ; नीम. ३४ श्रुतानुवर्तीनि (श्रुतानि पुण्यानि).

यानि मतान्युत्पद्यन्ते तानि घुणाक्षरकल्पत्वान्नावश्यं-भावीनि । जम.

(२) किमर्थं विद्यावृद्धसंयोगः क्रियते इति दर्शयन्नाह– गुरुरिति । गुरुः विद्यावृद्धः विद्याधिगमाय अभिहितविद्या-परिणतये सेव्यते । सा च श्रुता विद्या मतये प्रज्ञायै भवति, 'श्रुताद्धि प्रज्ञा उपजायते' इति वचनात् । महात्मनां महाबुद्धीनां वेधसां शास्त्रकाराणां मतानि दर्शितानि श्रुतानुवर्तीनि श्रुतमनुवर्तन्ते तानि चानुष्ठीय-मानानि भूतये श्रिये साधु सम्यक् असंशयं संशयं विना भवन्तीति । उनि.

[1]सुनिपुणमुपसेव्य सद्गुरुं
शुचिरनुवृत्तिपरो विभूतये ।
भवति हि विनयोपसंहितो
नृपतिपदाय शमाय च क्षमः ॥

(१) कीदृशं कथं च गुरुं सेवेतेत्याह– सुनिपुण-मिति । विद्याप्रवीणम् । सद्गुरुं उपधाशुद्धम् । शुचिः विनीतात्मा । अनुवृत्तिः परिचर्या । विभूतये उपसेव्येति संबन्धः । विनयोपसंहितः गुरुसेवनात् विनयान्वितः नृपतिपदाय प्रकृष्टैहिकराज्यफलाय शमाय च परलोक-हेतवे क्षमो भवति । जम.

(२) भूयोऽपि वृद्धसंयोगजनितविनयस्य प्रयोजनं दर्शयन्नाह– सुनिपुणमिति । शास्त्रोक्तविनयनियमादिना उपसेव्य सम्यगाराध्य । सद्गुरुमिति वक्तृत्वयुक्तम् । शुचिरिति बाह्याभ्यन्तरशौचयुक्तः । अनुवृत्तिपरः शुश्रूषा-तत्परः । विभूतये श्रिये । गुरुमुपगम्य विनयोपबृंहितः स्वाभाविकविनययुक्तः । नृपतिपदाय चक्रवर्तिस्थानाय क्षमः समर्थः । तथा शमाय । शमः उपशमः इन्द्रियाणा-मिति भावः । स च शमो गुरुसेवाजातशास्त्रनिश्चयजनितः इन्द्रियजयः । तत्प्राप्तये च भवति । उनि.

(१) कानी. १।७० ; उनि. संहितो (बृंहितो).

[1]अविनयरतमादराद्दृते
वशमवशं हि नयन्ति विद्विषः ।
श्रुतविनयनिधिं समाश्रित-
स्तनुरपि नैति पराभवं क्वचित् ॥

(१) वृद्धयोगेऽप्यविनयासक्तं, तस्याद्रव्यत्वात् । तथा चोक्तम्– 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' (कौ. १।५) इति । आदराद्दृते विना प्रयासं वशं नयन्ति । श्रुतविनयनिधिं श्रुतविनयावात्मन्याधाय तावेव निधिं समाश्रितः इति द्रव्यत्वं दर्शयति । तनुरपि अल्प-परिवारोऽपीति । जम.

(२) इन्द्रियजयविद्यावृद्धसंयोगयोरननुष्ठाने दोषं अनुष्ठाने च गुणं दर्शयन्नाह– अविनयरतमिति । विनयः इन्द्रियजयः शास्त्रनिश्चयश्च इष्यते, तस्य अन्यथात्वं अविनयः, तद्रतं व्यसनासक्तं नृपमादराद्दृते अवशं असाध्यमपि वशं साध्यत्वं नयन्ति विद्विषः रिपवः । श्रुतविनयनिधिं समाश्रितः विनीतः तनुरपि कृशोऽपि न याति पराभवं क्वचित्, विनययुक्तत्वादिति । उनि.

[2]आन्वीक्षिकीं त्रयीं वार्तां दण्डनीतिं च पार्थिवः ।
तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः ॥

(१) एवं विनीतो राजा स्वपरमण्डलगतकार्याण्य-नुतिष्ठेत् । तत्राप्रतिष्ठितराज्यस्य परराज्यात्मसात्करणासंभ-वात् स्वराज्यप्रतिष्ठापनार्थं षड्भिः सर्गैरुपायः प्रदर्श्यते । तत्र अस्मिन् सर्गे प्रकरणत्रयम्– विद्याविभागः, वर्णाश्रम-व्यवस्था, दण्डमाहात्म्यं च । तत्रायं प्रथम उपायः यत् विद्यावृद्धैः सार्धं विद्याचिन्ता, विद्याप्रतिबद्धत्वा-ल्लोकस्थितेः । तस्माद्विद्यावृद्धसंयोगानन्तरं विद्याविभाग उच्यते इति प्रकरणक्रमः । तमेवाऽऽद्यश्लोकेन दर्शयति– आन्वीक्षिकीमित्यादि । तद्विद्यैः तत्क्रियोपेतैः वक्तृभिः प्रयोक्तृभिश्च चिन्तयेत्, यथैता लोके सम्यक् प्रवर्तन्ते । जम.

(२) विनयनययोरनुष्ठानं चक्रवर्तिपदप्राप्तये भवतीति मन्यमानेन नीतिसारकृतेन्द्रियजयप्रकरणमादावभिहितम् –

(१) कानी. १।७१.
(२) कानी. २।१.

'विनयो हीन्द्रियजयः' इति । नेयः दण्डनीतिः, उपलक्षणपरत्वाद्विद्याचतुष्टयमपि । तत् कुतो भवतीति तदनन्तरं विद्यावृद्धसंयोग उक्तः । इदानीं क्रमायातो विद्यासमुद्देशः प्रतिपाद्यते इति प्रकरणसंबन्धः । उक्तं चानुष्ठानपूर्वकं विद्यानामुद्देशमभिधातुमाह– आन्वीक्षिकीमिति । आन्वीक्षिक्याद्या विद्याश्चतस्रोऽपि वक्ष्यमाणलक्षणाः प्रत्येकं पार्थिवः विजिगीषुः ग्रहणादुत्तरकालं च चिन्तयेत् पर्यालोचयेत् । कैः सहेति ? तद्विद्यैः ता एव विद्या निर्मला येषां तैः । तत्क्रियोपेतैः तदनुष्ठानयुक्तैः । वक्तृत्वप्रयोक्तृत्वयुक्तैरित्यर्थः । विनयान्वितः इति इन्द्रियजययुक्तः । उनि.

विद्यापरिगणनं विद्यानां लक्षणं प्रयोजनं च

**'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।**
**विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः ॥**

( १ ) विभागश्च विद्यानां संख्याफलप्रधानगुणभावस्वरूपनिर्वचनैः । तत्र संख्या विभज्यते– विद्याश्चतस्र एवैता इति । पुनरासामुपादानं क्रमख्यापनार्थम् । तत्र सर्वविद्याविचारहेतुत्वात् प्रधानतमा आन्वीक्षिकी । ततो धर्मस्य प्रधानत्वात् तद्व्यवस्थापनार्थं त्रयी । व्यवस्थापितधर्मस्य लोकस्य जीवनहेतुर्वार्ता । तासु प्रवर्तमानासु तद्विघ्ननिवारणार्थं दण्डनीतिः । सा च शाश्वती नित्यस्थितिका, तस्याः प्रवर्तमानाया विघ्नानुच्छेदात् । इतरा अशाश्वत्य इत्यर्थोक्तम् । लोकसंस्थितये योगक्षेमाय हेतवः स्वेन स्वेन व्यापारेण । तत्र धर्मार्थयोर्द्वयोः कर्मणां प्रवर्तनाय त्रयीवार्ते, प्रवृत्तानां निष्पन्नानां च रक्षणाय दण्डनीतिः । आन्वीक्षिकी पुनः सर्वविद्यातत्त्वप्रकाशेन व्याप्रियमाणाऽत्यन्तोपयोगिनी । यथोक्तम्– 'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥' ( कौ. १।१ ) इति । तस्माच्चतस्रो विद्या यथाक्रमं व्यवस्थिताः । जम.

( २ ) आदरात् विद्याचतुष्टयचिन्तने प्रयोजनमाह– आन्वीक्षिकीति । आन्वीक्षिक्याद्याश्चतस्रो विद्याः प्रत्येकमविनाशिन्यः । एताः स्थित्यर्थं प्रजानां स्रष्टाः सदैवानुच्छेद्याः कृताः । अतः शाश्वत्यो विद्याश्चतस्र एवैताः, नान्याः काश्चन लोकस्थितिहेतवः । तद्यथा आन्वीक्षिकी लोकस्थितिहेतुरित्ययमेव वक्ष्यति– 'ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति' इति । हर्षशोकौ हि नाशहेतू, तदभावाल्लोकस्थितिरिति । तथा त्रय्यपि लोकस्थितिहेतुः, 'उभौ लोकाववाप्नोति त्रय्यां तिष्ठन् यथाविधि' इति वचनात् । तथा वार्ताऽपि लोकस्थितिहेतुः, 'संपन्नो वार्तया साधु नावृत्तेर्भयमृच्छति' इति वचनात् । संपन्नो वार्तया कृषिपाशुपाल्यवाणिज्यस्वरूपया, सर्वधान्यहिरण्यरत्नवस्त्रवाहनादिसंपादनात् । ततश्च लोकसंस्थितिरिति । दण्डनीतिस्तु सुतरामेव लोकस्थितिहेतुः । वक्ष्यति च– 'तयाऽऽत्मानं च शेषाश्च विद्याः पायान्महीपतिः' इति । अतश्चिन्तयेत् विनयान्वित इति । उनि.

**'त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या हि मानवाः ।**
**त्रय्या एव विभागोऽयं येयमान्वीक्षिकी मता ॥**

( १ ) मानवाः मनोः शिष्याः । त्रय्या एव विभागोऽयमिति । यथावस्थितपदार्थतत्त्वान्वीक्षणरूपत्वादान्वीक्षिकी हेतुविद्या । सा च द्विविधा– त्रय्यनुगामिनी त्रय्यन्तर्भूता च । तत्र पूर्वा सांख्यादिशास्त्रम्, द्वितीया मीमांसादिशास्त्रम् । तदुभयमपि पूर्वोत्तरपक्षक्रमेण तत्त्वव्यवस्थापकत्रयीविशेषत्वान्न विद्यान्तरम् । जम.

( २ ) विद्यासंख्याविषये विप्रतिपत्तिं दर्शयन्नाह– त्रयीति । एता एव त्रय्यादयस्तिस्रो विद्याः मानवाः मनुशिष्याः मन्यन्ते । कुत इत्याह– हि यस्मात् त्रय्या एव विशेषोऽयम् । येयमान्वीक्षिकी सा त्रय्या एव विशेषः इति मता । वक्ष्यति च– 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः' इति । न्यायविस्तरः न्यायदर्शनवैशेषिके तत्पूर्वपक्षत्वेन लोकायतं चेति विस्तरोऽयम् । एवंस्वरूपा आन्वीक्षिकी या सा त्रय्या एव विशेषः, या तु त्रयीविरुद्धाऽऽर्हतबुद्धादिप्रतिबद्धा सा आन्वीक्षिकी एव न भवति, आत्मविज्ञानाभावादिति मानवा मन्यन्ते । उनि.

(१) कानी. २।२ ; नीम. ३४ पू.

(१) कानी. २।३.

[1]वार्ता च दण्डनीतिश्च द्वे विद्ये इत्यवस्थिताः ।
लोकस्यार्थप्रधानत्वाच्छिष्याः सुरपुरोधसः ॥

(१) लोकस्यार्थप्रधानत्वादिति । लोको हि धर्मकामलिप्सुरर्थे प्रयतते, तन्मूलत्वात्तयोः । तत्र चार्थे द्वे एव विद्ये व्याप्रियेते । सुरपुरोधसः बृहस्पतेः । जम.

(२) बार्हस्पत्यास्तु विद्याद्वयमेव मन्यन्ते इति दर्शयन्नाह– वार्तेति । 'वार्ता च दण्डनीतिश्च' इति वक्ष्यमाणलक्षणे द्वे एव विद्ये इत्यवस्थिताः कृतनिश्चयाः । कुत इत्याह– लोकस्यार्थप्रधानत्वादिति । चातुर्वर्ण्यस्य लोकस्यार्थो भूम्यादिलक्षणः प्रधानः, वृत्तिहेतुत्वात् । स चार्थो वार्तायां लभ्यते, दण्डनीत्या पाल्यते इति भूम्यादेर्लाभपालनयोरिष्टत्वात् । या आन्वीक्षिकी सा त्रयीविशेषः । साऽपि त्रयी संवरणमात्रप्रयोजना, 'धर्मरुचिरुपांशुदण्डं प्रयुञ्जीत' इति वचनात् । तेषां मते धर्माधर्मौ न स्तः, परलोकाभावात् । तत्र त्रयी निष्प्रयोजना । केवलं यदा उपांशुदण्डं प्रयोक्तुमिच्छेत् तदा त्रयीं संवरणार्थं प्रयुञ्जीत, तदा त्रय्यनुष्ठानसंवृत्तः परेषामशङ्कनीयो भवतीति । एतदेव प्रयोजनम्, नान्यदिति न पृथग्विद्यात्वेन त्रयी गण्यते इति भावः । इत्येवं सुरपुरोधसः शिष्याः अन्तेवासिनः मन्यन्ते । उनि.

[2]एकैव दण्डनीतिस्तु विद्येत्यौशनसाः स्थिताः ।
तस्यां हि सर्वविद्यानामारम्भाः संप्रतिष्ठिताः ॥

(१) औशनसाः शुक्रशिष्याः । तस्यामिति दण्डनीत्याम् । सर्वविद्यानामारम्भाः व्यापाराः रथनाभिवत् प्रतिष्ठिताः । जम.

(२) शुक्रशिष्या एकामेव विद्यां मन्यन्ते इति दर्शयन्नाह– एकेति । एकैव, नान्या विद्या, दण्डनीतिः इदमेव शास्त्रं विद्येति औशनसैः शुक्रशिष्यैः मता, यस्मात् तस्यामेव दण्डनीत्यां सर्वविद्यानामारम्भाः संप्रतिष्ठिताः । दण्डनीतेरभावान्मात्स्यन्याये च सर्वविद्यारम्भा एव न संभवन्ति । अथवा, आरम्भशब्देन समुद्देशाः प्रतिष्ठिताः । तद्यथा– 'आन्वीक्षिक्यात्मविद्या स्यात्' इति, 'ऋग्यजुःसामनामानस्त्रयो वेदास्त्रयी स्मृता' इति, 'पाशुपाल्यं कृषिः पण्यं वार्ता' इति, 'दमो दण्ड इति प्रोक्तस्तात्स्थ्याद्दण्डो महीपतिः । तस्य नीतिर्दण्डनीतिः' इत्येवं च दण्डनीत्यामेव समुद्दिष्टत्वात् दण्डनीत्यवयवरूपेण शेषा विद्या इति भावः । तथा चोक्तम्– 'नीतिसागरनिष्क्रान्ता कुप्रज्ञामारुतेरिताः । पृथक्त्वेनेव दृश्यन्ते नानाशास्त्रमहोर्मयः ॥' इति । उनि.

[1]विद्याश्चतस्र एवैता इति नो गुरुदर्शनम् ।
पृथक्पृथक्प्रसिद्ध्यर्थं यासु लोको व्यवस्थितः ॥

(१) गुरुदर्शनमिति । शास्त्रकारस्य कौटिल्यो गुरुः । पृथक्पृथक् प्रसिद्ध्यर्थमिति । यथोपवर्णितपूर्वाचार्यमतसंभवेऽपि परस्परविसदृशफलसिद्ध्यर्थं चतसृष्वेव लोको व्यवस्थितः । जम.

(२) पूर्वपक्षमभिधाय सिद्धान्तमभिधातुमाह– विद्या इति । नः अस्माकं गुरोः कौटिल्यस्य दर्शनं एता एव चतस्रो विद्याः, न न्यूना नाधिका वा । यतः पृथक् पृथक् प्रकृष्टा सिद्धिस्तत्तदर्थेषु । आन्वीक्षिक्याऽऽत्मविज्ञानस्य या सिद्धिः सा नेतरासु, त्रय्यां धर्माधर्मज्ञानसिद्धिर्नेतरासु, वार्तायामप्यर्थानर्थसिद्धिः, दण्डनीत्यां नयानयसिद्धिः, इत्येवं पृथग् भिन्नार्थानां सिद्ध्यर्थं यासु लोको व्यवस्थित इति, ताः कथं परस्परस्यान्तर्भावं गच्छन्ति ? इति । उनि.

[2]आन्वीक्षिक्याऽऽत्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयेतरौ ॥

(१) तदेव फलवैसादृश्यं दर्शयति– आन्वीक्षिक्याऽऽत्मविज्ञानमित्यादिना । यथावस्थितभावस्वभावावेदनमात्मविज्ञानम् । तदान्वीक्षिक्यां स्थितं फलम् । धर्माधर्मौ त्रयीस्थितौ । तत्रेज्याध्ययनादिर्धर्मः, श्वमांसभक्षणादिरधर्मः । अर्थानर्थौ वार्तायां स्थितौ । काले बीजावापनादिनिष्पन्नोऽर्थः, अकालबीजवापादिनिष्पन्नोऽनर्थः ।

(१) कानी. २१४.
(२) कानी. २१५ ; उनि. त्यौशनसाः स्थिताः (त्यौशनसैर्मता).

(१) कानी. २१६ ; नीम. ३४ पू.
(२) कानी. २१७ ; उनि. नयेतरौ (नयानयौ); नीम. ३४ नीत्यां नयेतरौ (नीतौ नयानयौ).

दण्डनीत्यां नयेतरौ तत्र नयानयौ स्थितौ । ज्यायसा संधियोगक्षेमनिष्पादकत्वान्नयः, विग्रहस्त्वनिष्पादकत्वादितरः अपनय इत्यर्थः । जम.

( २ ) विद्यानां स्वरूपभेदं दर्शयन्नाह– आन्वीक्षिकीति । प्रत्यक्षपरोक्षाभ्यामीक्षितस्यार्थस्य अनु पश्चात् ईक्षणमन्वीक्षा । सा प्रयोजनं यस्याः सा आन्वीक्षिकी अनुमानविद्या न्यायदर्शनवैशेषिकादिका । सा चाऽऽत्मविज्ञानं आत्माऽनया विशेषेण ज्ञायते इति । आत्मविज्ञानाच्चोभयलोकसिद्धिः । धर्माधर्मौ त्रयीस्थितौ इति । ततस्तौ ज्ञायेते । तथाऽर्थानर्थौ तु वार्तायाम्, दण्डनीत्यां नयानयौ वक्ष्यमाणलक्षणौ ज्ञायेते इत्यर्थः । उनि.

[1]आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते ।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे ॥

( १ ) परस्परविसदृशफलत्वेऽप्यासां प्रवृत्तिः प्रधानगुणभावेन । तत्र दण्डनीतेः प्रधानभावेन, शेषाणां गुणभावेन, तदन्वयव्यतिरेकानुविधानात् । तदेव दर्शयति– आन्वीक्षिकीत्यादिना श्लोकत्रयेण । सतीरिति विद्यमानाः, साक्षाल्लोकोपकारित्वात् । सत्योऽपि हि न सत्य इति । सदप्यसदिवाविशेषादिति मन्यते । विप्लवे इति दण्डनीतेरयथावत्प्रवृत्तावप्रवृत्तौ वेत्यर्थः । जम.

( २ ) दण्डनीतेर्माहात्म्यं दर्शयन्नाह– आन्वीक्षिकीति । आन्वीक्षिकीत्रयीवार्तास्तिस्रोऽपि विद्याः सतीः सद्विद्याः धर्मार्थसाधिकाः प्रचक्षते । हि यस्मात् सत्योऽपि न सत्यः अविद्यमाना भवन्ति ताः दण्डनीतेस्तु विभ्रंने नीतिशास्त्रस्य विनाशे सति, मात्स्यन्यायसंभवादिति भावः । उनि.

[2]दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति ।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते ॥

( १ ) सम्यङ्नेतारमिति सम्यक्प्रयोक्तारम् । सम्यगुपासते तासु तद्विहितेषु चार्थेषु सम्यगनुष्ठानात् । जम.

( २ ) एतदेव दर्शयन्नाह–दण्डनीतिरिति । दण्डनीतिर्यदा सम्यङ्नेतारं यथोक्तलक्षणं नायकं विजिगीषुमधितिष्ठति, विजिगीषुणा यदा सम्यग्दण्डनीतिरनुष्ठीयते इत्यर्थः । तदा विद्याविदः शेषाः आन्वीक्षिकीत्रयीवार्ताविदः स्वां स्वां विद्यामुपासते उपद्रवाभावादभ्यस्यन्ति । उनि.

[1]वर्णाश्चैवाऽऽश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः ।
रक्षेत्ता रक्षणात्तासां तद्धर्मस्यांशभाङ्नृपः ॥

( १ ) विद्यास्वासु प्रतिष्ठिता इति तिसृणां सतीत्वं प्रतिपादयति । प्रतिष्ठिताः आस्विति संबन्धः । रक्षेत् ता इति दण्डनीतेर्व्यापारं दर्शयति । अंशभाक् षष्ठांशभाक् । अरक्षणे चाधर्मः स्यादित्यर्थोक्तम् । जम.

( २ ) विद्यारक्षणाल्लाभं दर्शयन्नाह– वर्णा इति । वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्राः सर्वाश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थयतयश्च इति अनेन प्रकारेण आसु विद्यासु आन्वीक्षिकीत्रयीवार्तादण्डनीतिषु प्रतिष्ठिताः यथासंभवं प्रतिष्ठां गताः । तद्यथा– त्रय्यां ब्राह्मणाः, दण्डनीत्यां राजानः, वार्तायां वैश्याः शूद्राश्च, आन्वीक्षिक्यां ब्रह्मचार्यादय इति । एवं च रक्षेत्ता विद्याः । तासां रक्षणात् तद्धर्मस्य वर्णाश्रमोपार्जितस्य अंशभाक् षष्ठांशभाक् नृपो भवति । उनि.

[2]आन्वीक्षिक्यात्मविद्या स्यादीक्षणात्सुखदुःखयोः ।
ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति ॥

( १ ) विद्यानां स्वरूपं भेदं च षड्भिः श्लोकैराह– आन्वीक्षिकीत्यादि । आत्मविद्या पदार्थस्वभावविद्या, हेतुविद्येति यावत् । तया हि 'इदं सुखसाधनम्, इदं दुःखसाधनम्' इति पदार्थतत्त्वान्वीक्षणम् । ततश्च तया तत्त्वमीक्षमाणो हर्षशोकौ व्युदस्यति । तद्यथा– प्राप्ताऽपि क्षणभङ्गुरा वृद्धिरित्यभ्युदये हर्षमपनयति, दृष्टा च जीवतामात्मवतां पुनरावृत्तिर्नलादीनामिवेति व्यसने शोकम् । जम.

(२) विद्याजनितानि उपकारान्तराणि दर्शयन्नाह– आन्वीक्षिकीति । आन्वीक्षिकी उक्तलक्षणा आत्मविद्या

( १ ) कानी. २।८ ; उनि. विप्लवे ( विभ्रमे ).

( २ ) कानी. २।९.

(१) कानी. २।१० ; उनि. वर्णाश्चैवा ( वर्णाः सर्वा ); नीम. ३४ रक्षेत्ता रक्ष ( ईक्षणाद्रक्ष ) शेषं उनिवत्.

(२) कानी. २।११ ; नीम. ३४ णस्तया (णस्तथा).

स्यात् आत्माऽनया ज्ञायत इति, स चाऽऽत्मलिङ्गैः। उक्तं च– 'धर्माधर्मौ सुखं दुःखमित्याद्यात्मलिङ्गमुदाहृतम्' इति। एभिर्लिङ्गैरात्मा ज्ञायते। ईक्षणात् निरीक्षणात् सुखदुःखयोः कार्यकारणभावेन 'सुखस्य दुःखस्य च' किं कारणम्? इति। ईक्षमाणस्तयाऽऽन्वीक्षिक्या तत्त्वं परमार्थम्, हर्षशोकौ व्युदस्यति परित्यजति। तद्यथा– धर्मः कारणम्, सुखं कार्यम्, अधर्मः कारणम्, दुःखं कार्यम्। उभयमप्युपभोगात्क्षयं याति, नान्यथेति। एवमनुमानादिप्रमाणैस्तत्त्वमीक्षमाणो विजिगीषुर्हर्षशोकौ व्युदस्यति, सुखे संपन्ने सत्युपभोगात्क्षीणे धर्मे भूयोऽपि दुःखं भवतीति भावयन् हर्षं त्यजति, तथैव दुःखेऽप्युपभुक्ते सुखं भावीति शोकं परित्यजति। एवं चातिहर्षादतिशोकाच्च प्राणात्ययो रक्षितो भवतीत्यान्वीक्षिकीजनितोऽयमुपकारः। उनि.

**[1]ऋग्यजुःसामनामानस्त्रयो वेदास्त्रयी स्मृता।**
**उभौ लोकाववाप्नोति त्रय्यां तिष्ठन् यथाविधि॥**

(१) त्रयो वेदा इति। धर्माधर्मवेदनाद्वेदाः। ते चैककार्यापेक्षया समुदितास्त्रयीसंज्ञिताः। यथाविधि यथास्वं प्रवर्तितधर्मकर्मा तत्र तिष्ठंस्त्रिवर्गप्राप्त्या लोकद्वयमाप्नोति। जम.

(२) त्रय्याः स्वरूपमुपकारादिकं चाभिधातुमाह– ऋगिति। ऋग्यजुःसामेत्येवंनामानस्त्रयो वेदाः त्रयी स्मृता मता। उभौ लोकौ इहलोकपरलोकौ अवाप्नोति त्रय्यां त्रयीप्रतिपादितधर्मे तिष्ठन् यथाविधि विध्यनतिक्रमेण। उनि.

**[2]अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**धर्मशास्त्रं पुराणं च त्रयीदं सर्वमुच्यते॥**

(१) परिशिष्टव्यापारविधानार्थं साकल्येन त्रयीस्वरूपं दर्शयति– अङ्गानीत्यादिना। तत्राङ्गानि षट्– शिक्षा कल्पो व्याकरणं छन्दोविचितिर्निरुक्तं ज्योतिषं चेति। वेदाश्चत्वारोऽथर्ववेदेन सह। स चाभिचारकर्मज्ञानादिफलः। मीमांसा वेदार्थव्याख्या। न्यायविस्तरः न्यायशास्त्रं सांख्यादि। धर्मशास्त्रं मानवादि। पुराणं अशेषलोकोत्पत्तिसंहारादिज्ञानफलम्। जम.

(२) न केवलं वेदत्रयं त्रयीति, अपरमपि त्रयीस्वरूपं दर्शयन्नाह– अङ्गानीति। अङ्गानि शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दोविचितिः, ज्यौतिषं चेति षडपि वेदाङ्गानि। वेदाः अथर्ववेदेन सह चत्वारः। मीमांसा वेदप्रतिबद्धं प्रमाणशास्त्रम्। न्यायविस्तर इति न्यायदर्शनवैशेषिकादि। धर्मशास्त्रं मन्वाद्यष्टादशविधम्। पुराणमिति तदप्यष्टादशविधमेव। भारतरामायणादीनामपि पुराणेऽन्तर्भावो द्रष्टव्यः, कथास्वरूपत्वात्। इदं एतत्सर्वं चतुर्दशविद्यास्थानरूपं त्रयीत्युच्यते एतत् त्रय्याः स्वरूपमिति। उनि.

**(*शिक्षा व्याकरणं कल्पो ज्योतिषामयनं तथा।**
**छन्दः सह निरुक्तेन वेदाङ्गानि वदन्ति षट्॥)**

**[1]पाशुपाल्यं कृषिः पण्यं वार्ता वार्ता तु जीवनम्।**
**संपन्नो वार्तया साधु नावृत्तेर्भयमृच्छति॥**

(१) पाशुपाल्यं पशुपालनकर्म गवाश्वादीनां पोषणचिकित्सादि। तच्च तन्त्रं गौतमशालिहोत्रादिप्रणीतम्। कृषिः पराशरप्रोक्ता बीजवापपरिकर्मादिविधानार्था। पण्यं व्यवहर्तव्यं क्रयविक्रयस्वरूपम्, वाणिज्यमिति यावत्। तच्च विदेहराजप्रोक्तम्। वार्ता वर्तते जीवति लोकोऽनयेति कृत्वा। यदाह– 'वार्ता तु जीवनम्' इति। साधु संपन्न इति संबन्धः। जम.

(२) वार्तायाः स्वरूपोपकारादिकमभिधातुमाह– पाशुपाल्यमिति। पशवः हस्त्यश्वगोमहिष्यादयः। तान् पालयन्तीति पशुपालाः, हस्तिशिक्षाशालिहोत्रादिविदः। तेषां शास्त्रमनुष्ठानं च पाशुपाल्यम्। कृषिरिति कर्षणं तत्प्रतिपादकं पराशरादिप्रोक्तं शास्त्रमनुष्ठानं च। पण्यमिति। पणं व्यवहारं क्रयविक्रयलक्षणमर्हतीति पण्यम्। पण्यशब्देन वाणिज्यमुच्यते। एतत्त्रयमेव जगद्वृत्ति-

---

(१) कानी. २।१२; नीम. ३४ स्मृता (मता).
(२) कानी. २।१३; नीम. ३४.

* 'श्लोकोऽयमत्र मूलकारिकासु दृष्टोऽपि व्याख्यातृभिर्न व्याख्यातः' इत्युक्तमादर्शपुस्तकटिप्पण्याम्।

(१) कानी. २।१४; नीम. ३४ तु जीवनम् (तु-जीव्यपि) साधु नावृत्ते (साधुर्न वृत्ते).

हेतुत्वादिह जगति वर्तनात् वार्ता इत्यभिधीयते । तया संपन्नो वार्तया विजिगीषुः साधु यथा भवति तथा अवृत्तेः अवर्तनाद्भयं न ऋच्छति न प्राप्नोति । उनि.

'दमो दण्ड इति प्रोक्तस्तात्स्थ्याद्दण्डो महीपतिः ।
तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते ॥

( १ ) दण्डशब्दो दण्डप्रकृतावुपायविशेषे च दण्डे वर्तते । तत्र सर्वप्रकृतिविषयत्वं नयस्येति दण्डप्रकृतिमपास्य निग्रहस्वरूपमुपायमाश्रित्याऽऽह– दमो दण्ड इति । सामदानभेदसंभवेऽपि प्रायोऽनेनैव नीतेर्व्यपदेशः, लोकस्य दोषबाहुल्यात् । यदाहुः– ' सर्वो दण्डजितो लोको दुर्लभो हि शुचिः क्वचित् । दण्डस्य हि भयात् कृत्स्नं जगद्भोगाय कल्पते ॥ ' इति । अथवा दण्डशब्दोऽत्र दमनमात्रवृत्तिः स्वपरपक्षदमनोपायाशेषसामाद्युपग्राही द्रष्टव्यः । स चोभयथाऽपि राजाश्रित इति तात्स्थ्याद्दण्डो महीपतिः, तस्य नयनात् प्रवर्तनात् नीतिः दण्डनीतिः, राजविद्येत्यर्थः । जम.

( २ ) दण्डनीतेः स्वरूपमुपकारं च दर्शयन्नाह– दम इति । दमः वधपरिक्लेशार्थहरणादिना दमनक्रिया दण्ड इति प्रोक्तः अभिधीयते । तात्स्थ्यात् प्रयोक्तरि तिष्ठतीत्युपचारात् महीपतिर्दण्डः । तस्य नीतिः इदमेव शास्त्रं दण्डनीत्यभिधाना विद्या । नयनं दण्डस्य प्रति दण्डस्य प्रणयनं नीतिरिहोच्यते । उनि.

'तयाऽऽत्मानं च शेषाश्च विद्याः पायान्महीपतिः ।
विद्या लोकोपकारिण्यस्तत्पाता हि महीपतिः ॥

( १ ) तस्य व्यापारमाह–तयेत्यादि । आत्मानं पायात्, अन्यथा स्वपरेभ्यो न रक्षितः कथमन्यद्रक्षेत् ? शेषा विद्याः आन्वीक्षिकीत्रयीवार्ताः । लोकोपकारिण्य इति सतीत्वं दर्शयति । तत्पाता हि महीपतिरिति । लोकवती मही, तस्याः कथं पतिः ? यदि तदुपकारिणीर्विद्या न पायात् । जम.

( २ ) दण्डनीतेः फलं दर्शयन्नाह– तयेति । तया दण्डनीत्या महीपतिरात्मानं शेषाश्च आन्वीक्षिक्याद्यास्तिस्रोऽपि विद्याः पायात् रक्षेत् । यतो विद्या लोकोपकारिण्यः, तत्पाता तत्संरक्षको महीपतिरिति । उनि.

'विद्याभिराभिर्निपुणं चतुर्वर्गमुदारधीः ।
विद्यात्तदासां विद्यात्वं ' विद ज्ञाने ' निगद्यते ॥

( १ ) कथमेता विद्या इत्युच्यन्ते इति निर्वचनं दर्शयति– विद्याभिरित्यादिना । आभिश्चतुर्वर्गो वेद्यते इति विद्याः । अयं संक्षेपार्थः । निपुणं यथावत् । चतुर्वर्गो मोक्षेण सह । तस्य चाधिगमाय योगशास्त्रमान्वीक्षिकीविशेषः । तथा चोक्तम्– ' सांख्यं योगो लोकायतं चाऽऽन्वीक्षिकी ' ( कौ. १।१ ) इति । उदारधीरिति निर्मलप्रज्ञः । अचक्षुषो विद्याप्रदीपः किं कुर्यादिति ज्ञापयति । 'विद ज्ञाने' इत्यनेन लाभाद्यर्थधातुव्यवच्छेदादान्वीक्षिक्याद्या ज्ञानविद्ये( ? द्या इ )ति दर्शयति । एवं च ज्ञानविद्याधिकारात् सत्योऽप्यन्याः कर्मविद्या व्यापारव्यायामप्रयोजना नोक्ताः । जम.

( २ ) विद्यानां स्वरूपोपकारादिभिर्भेदं दर्शयित्वा अभिधानतोऽपि दर्शयितुमाह– विद्यादिति । विद्यात् विचारयेत् यत् आभिर्विद्याभिः निपुणं यथासंभवं चतुर्वर्गं धर्मार्थकाममोक्षान् उदारधीः उत्कृष्टबुद्धिः, तदासां विद्यानां मध्ये आन्वीक्षिक्या विद्यात्वम्, यस्मात् ' विद् विचारणे ' धातोरिदं रूपम्, तथा चतुर्वर्गं यज्जानीयात् तत् त्रय्या विद्यात्वम्, ' विद् ज्ञाने ' इति धातोरिदं रूपम्, तथा चतुर्वर्गं यल्लभते तद्वार्ताया विद्यात्वम्, ' विदॢ लाभे ' इति धातोरिदं रूपम्, तथा चतुर्वर्गसत्तापादनाद्दण्डनीतेर्विद्यात्वम्, ' विद् सत्तायाम् ' इति धातोरिदं रूपम्, इत्यभिधानान्यपि यासां पृथग्धातुभ्यो व्युत्पादितानि ताः कथमन्तर्भावं नीयन्त इत्यभिप्रायः । उनि.

---

( १ ) कानी. २।१५ ; नीम. ३४ प्रोक्तस्तात्स्थ्याद्दण्डो म (ख्यातस्तस्माद्दण्डेन्म).

( २ ) कानी. २।१६ ; नीम. ३४.

( १ ) कानी. २।१७ ; उनि. विद्याभिराभि ( विद्याब- दाऽऽभि ).

## * शुक्रनीतिः

विद्यावृद्धोपासना राज्ञा कर्तव्या, जितेन्द्रियता विद्याचतुष्टयाध्ययनं च राज्ञः कर्तव्यम्

†[1]सर्वोपजीवकं लोकस्थितिकृन्नीतिशास्त्रकम् ।
धर्मार्थकाममूलं हि स्मृतं मोक्षप्रदं यतः ॥
अतः सदा नीतिशास्त्रमभ्यसेद्यत्नतो नृपः ।
यद्विज्ञानान्नृपाद्याश्च शत्रुजिल्लोकरञ्जकाः ॥
वर्धयन्निह धर्मार्थौ सेवितौ सद्भिरादरात् ।
निगृहीतेन्द्रियग्रामः कुर्वीत गुरुसेवनम् ॥

इह जगति सद्भिः साधुभिः सेवितौ अनुष्ठितौ धर्मार्थौ आदरात् यत्नात् निगृहीतेन्द्रियग्रामः जितेन्द्रियः सन् वर्धयन् सेवमानः गुरूणां वृद्धानां सेवनं कुर्वीत । शुनीटी.

शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये ।
विद्याविनीतो नृपतिः सतां भवति संमतः ॥

शास्त्राय शास्त्रज्ञानाय गुरुसंयोगः वृद्धसेवनम् । विनयवृद्धये शास्त्रं शास्त्रानुशीलनं, प्रभवतीति शेषः । विद्याविनीतः शास्त्रवित् विनीतश्च नृपतिः सतां साधूनां संमतः प्रियः भवति । शुनीटी.

प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्येषु प्रवर्तते ।
श्रुत्या स्मृत्या लोकतश्च मनसा साधुनिश्चितम् ॥
यत्कर्म धर्मसंज्ञं तद्व्यवस्यति च पण्डितः ।
आददानप्रतिदानकलासम्यङ्महीपतिः ॥

यः महीपतिः असद्वृत्तैः दुर्वृत्तैः पुरुषैः प्रेर्यमाणोऽपि अकार्येषु असत्सु कार्येषु न प्रवर्तते, तथा श्रुत्या वेदेन स्मृत्या धर्मसंहितया लोकतः आचारेण मनसा च साधुनिश्चितं सुनिश्चितं यत् धर्मसंज्ञं कर्म धर्मकार्यं तत् व्यवस्यति सेवते च, यश्च आददानप्रतिदानयोः ग्रहणप्रत्यर्पणयोः, आङ्पूर्वकात् दाधातोः भावे शानच्प्रत्ययः, कलासु विभागेषु कुत्र किं दानं कर्तव्यं कुतो वा किं ग्रहीतव्यमित्येवंरूपासु सम्यक् सुविचक्षणः सः पण्डितः । शुनीटी.

जितेन्द्रियस्य नृपतेर्नीतिशास्त्रानुसारिणः ।
भवन्त्युच्चलिता लक्ष्म्यः कीर्तयश्च नभस्पृशः ॥

जितेन्द्रियस्य नीतिशास्त्रानुसारिणः नृपतेः लक्ष्म्यः श्रियः संपद इत्यर्थः, उच्चलिताः उन्नताः, तथा कीर्तयश्च नभस्पृशः आकाशदर्शिन्यः सुदूरगामिन्य इत्यर्थः ; भवन्ति । शुनीटी.

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैता अभ्यसेन्नृपतिः सदा ॥

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च एषा चतुर्विधा शाश्वती चिरन्तनी, विद्या इति शेषः । राजा सदा एताश्चतस्र एव विद्याः अभ्यसेत् शिक्षेत । शुनीटी.

विद्याचतुष्टयस्य लक्षणं प्रयोजनं च

आन्वीक्षिक्यां तर्कशास्त्रं वेदान्ताद्यं प्रतिष्ठितम् ।
त्रय्यां धर्मो ह्यधर्मश्च कामोऽकामः प्रतिष्ठितः ॥

आन्वीक्षिक्यां विद्यायां वेदान्ताद्यं वेदान्तप्रभृति तर्कशास्त्रं न्यायशास्त्रं प्रतिष्ठितं प्रपञ्चितम्, त्रय्यां ऋग्यजुःसामरूपायां श्रुतौ इत्यर्थः, धर्मः अधर्मश्च कामः अकामश्च प्रतिष्ठितः प्रपञ्चितः । शुनीटी.

अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ।
वर्णाः सर्वाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः ॥

वार्तायां अर्थानर्थौ अर्थश्च अनर्थश्च अर्थोपार्जनानर्थनिवारणोपायावित्यर्थः, दण्डनीत्यां अनयश्च नयश्च नयमार्गेण व्यवहर्तव्यं अनये दण्डनमित्येवंरूपौ इत्यर्थः, प्रतिष्ठिताविति शेषः । वर्णाः ब्राह्मणादयः सर्वाश्रमाः सर्वे आश्रमाः ब्रह्मचारिप्रभृतयश्च आसु उक्तासु विद्यासु प्रतिष्ठिताः नियतं स्थिता इत्यर्थः । शुनीटी.

---

* अस्याः केचित् श्लोकाः कामन्दकीयनीतिसारे समानानुपूर्व्या क्वचित्पाठभेदेन वा समुपलभ्यन्ते ।

† श्लोकद्वयस्य व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ७६०) द्रष्टव्यम् ।

(१) शुनी. १।५–६.

(२) शुनी. १।१४७–१५८.

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।**
**धर्मशास्त्रपुराणानि त्रयीदं सर्वमुच्यते ॥**

अङ्गानि शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषाणि, चत्वारः वेदाः ऋग्यजुःसामाथर्वाख्याः, मीमांसा, न्यायविस्तरः तर्कप्रपञ्चः, धर्मशास्त्राणि मन्वादिप्रणीतानि, पुराणानि ब्राह्मादीनि, इदं सर्वं त्रयी उच्यते त्रयीशब्देन उक्तानि शास्त्राणि बोद्धव्यानीत्यर्थः । शुनीटी.

**कुसीदकृषिवाणिज्यं गोरक्षा वार्तयोच्यते ।**
**संपन्नो वार्तया साधुर्न वृत्तेर्भयमृच्छति ॥**

वार्तया पूर्वोक्तया अर्थानर्थसाधन्या कुसीदं वृद्धिव्यवहारः कृषिः वाणिज्यं तथा गोरक्षा गवां रक्षा, उपलक्षणमेतत्, पशुपालनमित्यर्थः, उच्यते । साधुर्जनः वार्तया विद्यया संपन्नः युक्तः वृत्तेः जीविकायाः भयं न ऋच्छति न प्राप्नोति, सुखेन जीवनं यापयतीति भावः । शुनीटी.

**दमो दण्ड इति ख्यातस्तस्माद्दण्डो महीपतिः ।**
**तस्य नीतिर्दण्डनीतिर्नयनान्नीतिरुच्यते ॥**

दण्डः दमः दुष्टदमनमित्यर्थः, इति ख्यातः प्रसिद्धः । तस्मात् महीपतिः दण्डः दमनकारित्वाद्दण्ड एवेति कार्यकारणयोरभेदेनोपचारः । तस्य महीपतेः नीतिः दण्डनीतिः, नयनात् दुष्टादुष्टनिर्णयात् नीतिः उच्यते कथ्यते । शुनीटी.

**आन्वीक्षिक्यात्मविज्ञानाद्धर्षशोकौ व्युदस्यति ।**
**उभौ लोकाववाप्नोति त्रय्यां तिष्ठन् यथाविधि ॥**

आन्वीक्षिक्या विद्यया आत्मविज्ञानात् आत्मावबोधात् हर्षशोकौ व्युदस्यति त्यजति, जन इति शेषः । आत्मज्ञानेऽसति शुभाशुभहर्षशोकौ भवत इति भावः । तथा त्रय्यां विद्यायां यथाविधि तिष्ठन् यथाविधि त्रयीमनुसरन्नित्यर्थः, उभौ लोकौ ऐहिकमामुत्रिकं च प्राप्नोति । शुनीटी.

विद्यानां कलानां च परिगणनम्

**[1]विद्या ह्यनन्ताश्च कलाः संख्यातुं नैव शक्यते ।**
**विद्या मुख्याश्च द्वात्रिंशच्चतुःषष्टिः कलाः स्मृताः ॥**

विद्याः कलाश्च अनन्ता हि । ताः संख्यातुं इयत्तया परिच्छेत्तुं नैव शक्यते शक्यन्ते । आर्षोऽयं प्रयोगः । तत्र मुख्याः विद्याः द्वात्रिंशत्, तथा कलाश्च चतुःषष्टिः स्मृताः । शुनीटी.

**यद्यत्स्याद्वाचिकं सम्यक् कर्म विद्याभिसंज्ञकम् ।**
**शक्तो मूकोऽपि यत्कर्तुं कलासंज्ञं तु तत्स्मृतम् ॥**

यद्यत् कर्म सम्यक् संपूर्णरूपेण वाचिकं वाचा निष्पाद्यम्, तत्तत् विद्याभिसंज्ञकं विद्येति नाम्ना कथितम् । यत्तु मूकोऽपि वर्णोच्चारणासमर्थोऽपि कर्तुं शक्तः, यथा नृत्यादिकमिति भावः, तत्तु कलासंज्ञं कलेति नाम्ना कथितम् । शुनीटी.

**उक्तं संक्षेपतो लक्ष्म विशिष्टं पृथगुच्यते ।**
**विद्यानां च कलानां च नामानि तु पृथक्पृथक् ॥**

विद्यानां च कलानां च लक्ष्म लक्षणं संक्षेपतः उक्तं, विशिष्टं तु पृथगुच्यते कथ्यते । आसां नामानि तु पृथक्पृथक्, सन्तीति शेषः । शुनीटी.

**ऋग्यजुः साम चाथर्वा वेदा आयुर्धनुः क्रमात् ।**
**गान्धर्वश्चैव तन्त्राणि उपवेदाः प्रकीर्तिताः ॥**

ऋक्, यजुः, साम तथा अथर्वा एते चत्वारः वेदाः । आयुर्वेदः, धनुर्वेदः, गान्धर्वः, तन्त्राणि च एते उपवेदाः प्रकीर्तिताः । शुनीटी.

**शिक्षा व्याकरणं कल्पो निरुक्तं ज्योतिषं तथा ।**
**छन्दः षडङ्गानीमानि वेदानां कीर्तितानि हि ॥**

शिक्षा व्याकरणं कल्पः निरुक्तं ज्योतिषं तथा छन्दः इमानि षट् वेदानां अङ्गानि कीर्तितानि । हिशब्दोऽवधारणार्थः । शुनीटी.

**मीमांसातर्कसांख्यानि वेदान्तो योग एव च ।**
**इतिहासाः पुराणानि स्मृतयो नास्तिकं मतम् ॥**
**अर्थशास्त्रं कामशास्त्रं तथा शिल्पमलंकृतिः ।**
**काव्यानि देशभाषावसरोक्तिर्यावनं मतम् ।**
**देशादिधर्मा द्वात्रिंशदेता विद्याभिसंज्ञिताः ॥**

मीमांसा, तर्कः, सांख्यम्, वेदान्तः, योगः, इतिहासाः, पुराणानि, स्मृतयः, नास्तिकमतम्, अर्थशास्त्रम्, कामशास्त्रम्, शिल्पम्, अलंकृतिः,

(१) शुनी. ४।३।२४–१००.

काव्यानि, देशभाषा, अवसरोक्तिः, यावनं मतम्, तथा देशादिप्रचलितधर्माः, एताः द्वात्रिंशत् विद्याभिसंज्ञिताः विद्यानाम्ना ख्याता इत्यर्थः । शुनीटी.

द्वात्रिंशद्विद्यानां स्वरूपम्

**मन्त्रब्राह्मणयोर्वेदनाम प्रोक्तमृगादिषु ॥**

ऋगादिषु ऋग्यजुःसामाथर्वसु मन्त्रब्राह्मणयोः वेदनाम वेद इति नाम प्रोक्तं कथितम् । तथा च वेदः द्विविधः—मन्त्रात्मकः ब्राह्मणश्चेति भावः । शुनीटी.

**जपहोमार्चनं यस्य देवताप्रीतिदं भवेत् ।**
**उच्चारान्मन्त्रसंज्ञं तद्विनियोगि च ब्राह्मणम् ॥**

यस्य वेदभागस्य उच्चारात् उच्चारणात् जपः होमः अर्चनं देवपूजनं देवतानां प्रीतिदं भवेत् तत् मन्त्रसंज्ञं मन्त्रनाम्ना ख्यातम् । तद्विनियोगि तद्व्यतिरिक्तं वा तत्प्रमाणस्वरूपं ब्राह्मणं स्मृतमिति शेषः । शुनीटी.

**ऋग्रूपा यत्र ये मन्त्राः पादशोऽर्धर्चशोऽपि वा ।**
**येषां हौत्रं स ऋग्भागः समाख्यानं च यत्र वा ॥**

यत्र ऋग्रूपाः ये मन्त्राः पादशः अर्धर्चशः वा, पठिता इति शेषः, येषां मन्त्राणां हौत्रं होमसंपादकत्वम्, यत्र वा समाख्यानं सम्यक् आख्यानं कथनम्, स ऋग्भागः ऋग्वेदः । शुनीटी.

**प्रश्लिष्टपठिता मन्त्रा वृत्तगीतिविवर्जिताः ।**
**आध्वर्यवं यत्र कर्म त्रिगुणं यत्र पाठनम् ।**
**मन्त्रब्राह्मणयोरेव यजुर्वेदः स उच्यते ॥**

यत्र मन्त्राः प्रश्लिष्टं यथा तथा पठिताः, तथा वृत्तेन छन्दसा गीत्या च विवर्जिताः विरहिताः, यत्र च आध्वर्यवं अध्वर्युविहितं कर्म, प्रोक्तमिति शेषः, यत्र च मन्त्रब्राह्मणयोरुभयोरेव त्रिगुणं त्रिरावृत्तं पठितम्, स यजुर्वेदः उच्यते । शुनीटी.

**उद्गीथं यस्य शस्त्रादेर्यज्ञे तत्सामसंज्ञकम् ॥**

शस्त्रादेः यज्ञे यस्य उद्गीथं उच्चैर्गीतम्, विहितमिति शेषः, तत् सामसंज्ञकं सामनाम्ना कथितम् । शुनीटी.

**अथर्वाङ्गिरसो नाम ह्युपास्योपासनात्मकः ।**
**इति वेदचतुष्कं तु ह्युद्दिष्टं च समासतः ॥**

उपास्यानां आराध्यानां देवानां उपासनात्मकः वेदभागः अथर्वाङ्गिरसः नाम । इति उक्तप्रकारं वेदचतुष्कं समासतः संक्षेपेण उद्दिष्टं कथितं हि । हिशब्दोऽवधारणार्थः । शुनीटी.

**विन्दत्यायुर्वेत्ति सम्यगाकृत्यौषधिहेतुतः ।**
**यस्मिन्नृग्वेदोपवेदः स चाऽऽयुर्वेदसंज्ञकः ॥**

यस्मिन् विदिते इति भावः, आयुः विन्दति लभते, जन इति शेषः । तद्विहितस्य अनुष्ठानात् दीर्घायुर्लाभ इति भावः । यस्मिंश्च आकृत्या रोगाणामाकारज्ञानेन ओषधिहेतुतः ओषधिविज्ञानेन च हेतुना इत्यर्थः, आयुः वेत्ति जानाति, रोगिणामिति शेषः, स ऋग्वेदस्य उपवेदः आयुर्वेदसंज्ञकः आयुर्वेद इति नाम्ना प्रसिद्धः । शुनीटी.

**युद्धशस्त्रास्त्रव्यूहादिरचनाकुशलो भवेत् ।**
**यजुर्वेदोपवेदोऽयं धनुर्वेदस्तु येन सः ॥**

येन ज्ञातेन इत्यर्थः, युद्धेषु शस्त्रेषु अस्त्रेषु व्यूहादिरचनासु च कुशलः निपुणः भवेत्, यजुर्वेदस्य उपवेदः स च धनुर्वेद इति ख्यातः । शुनीटी.

**स्वरैरुदात्तादिधर्मैस्तन्त्रीकण्ठोत्थितैः सदा ।**
**सतालैर्गानविज्ञानं गान्धर्वो वेद एव सः ॥**

येन उदात्तादिधर्मैः उदात्तानुदात्तस्वरितैः तथा तन्त्रीकण्ठोत्थितैः निषादादिभिः सप्तभिः स्वरैः सतालैः तालसहितैः गानविज्ञानं भवति स गान्धर्वो वेदः, स तु सामवेदस्य उपवेद इति बोद्धव्यः । शुनीटी.

**विविधोपास्यमन्त्राणां प्रयोगाः सुविभेदतः ।**
**कथिताः सोपसंहारास्तद्धर्मनियमैश्च षट् ।**
**अथर्वणां चोपवेदस्तन्त्ररूपः स एव हि ॥**

यत्र विविधानां उपास्यानां मन्त्राणां सोपसंहाराः उपसंहारसहिताः षट् प्रयोगाः तेषां धर्मनियमैश्च सह सुविभेदतः विशिष्टप्रभेदानुसारेण कथिताः सः अथर्वणां उपवेदः तन्त्ररूपः हि तन्त्रस्वरूप एव । शुनीटी.

**स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः ।**
**सवनाद्यैश्च सा शिक्षा वर्णानां पाठशिक्षणात् ॥**

यच्च स्वरतः उदात्तादिभेदेन कालतः कालक्रमेण स्थानात् कण्ठताल्वादिप्रदेशात् प्रयत्नानुप्रदानतः प्रयत्नसहकारेण सवनाद्यैः उत्पत्त्यादिभिः उच्चारणादिभिरित्यर्थः, पाठस्य शिक्षणं सा शिक्षा, तादृशशिक्षासमन्वितः संदर्भः शिक्षाग्रन्थ इति भावः । शुनीटी.

**प्रयोगो यत्र यज्ञानामुक्तो ब्राह्मणशेषतः ।**
**श्रौतकल्पः स विज्ञेयः स्मार्तकल्पस्तथेतरः ॥**

यत्र ब्राह्मणशेषतः ब्राह्मणस्य मन्त्रेतरवेदभागस्य शेषतः शेषांशात् यज्ञानां प्रयोगः उक्तः सः श्रौतकल्पः विज्ञेयः, तथा इतरः अन्यः स्मार्तकल्पः । शुनीटी.

**व्याकृताः प्रत्ययाद्यैश्च धातुसंधिसमासतः ।**
**शब्दा यत्र व्याकरणमेतद्धि बहुलिङ्गतः ॥**

यत्र शब्दाः प्रत्ययाद्यैः धातुभिः संधिभिः समासैः बहुभिः पुंस्त्रीक्लीबभेदैः लिङ्गैश्च व्याकृताः साधिताः, एतद्धि एतदेव व्याकरणम् । शुनीटी.

**शब्दनिर्वचनं यत्र वाक्यार्थैकार्थसंग्रहः ।**
**निरुक्तं तत्समाख्यानाद्वेदाङ्गं श्रोत्रसंज्ञकम् ॥**

यत्र शब्दानां निर्वचनं निष्कर्षेण कथनं तथा वाक्यार्थानां एकार्थसंग्रहः तत् निरुक्तं नाम वेदाङ्गम्, तच्च समाख्यानात् सम्यक् शब्दार्थकथनात् श्रोत्रसंज्ञकं श्रोत्राख्यया कथितम् । शुनीटी.

**नक्षत्रग्रहगमनैः कालो येन विधीयते ।**
**संहिताभिश्च होराभिर्गणितैर्ज्योतिषं हि तत् ॥**

येन नक्षत्राणां ग्रहाणां च गमनैः संहिताभिः होराभिः गणितैश्च कालः विधीयते पृथक् पृथक् निर्दिश्यते, तद्धि तदेव ज्योतिषम् । शुनीटी.

**म्यरस्तजभ्नगैर्लान्तैः पद्यं यत्र प्रमाणतः ।**
**कल्प्यते छन्दःशास्त्रं तद्वेदानां पादरूपधृक् ॥**

मस्त्रिगुरुः, यः आदिगुरुः, रः लघुमध्यः, सः अन्तगुरुः, तः अन्तलघुः, जः गुरुमध्यः, भः आदिगुरुः, नः त्रिलघुः, गः गुरुः, लः लघुः, एभिः प्रमाणतः परिमाणैः यत्र पद्यं कल्प्यते तत् छन्दःशास्त्रम्, तच्च वेदानां पादरूपधृक् चरणव्यवस्थापकमित्यर्थः । शुनीटी.

**यत्र व्यवस्थिता चार्थकल्पना विधिभेदतः ।**
**मीमांसा वेदवाक्यानां सैव न्यायश्च कीर्तितः ॥**
**भावाभावपदार्थानां प्रत्यक्षादिप्रमाणतः ।**
**सविवेको यत्र तर्कः कणादादिमतं च यत् ॥**

यत्र वेदवाक्यानां विधिभेदतः अनुष्ठानभेदात् अर्थकल्पना व्यवस्थिता सा एव मीमांसा । यत्र च भावानां अभावानां च पदार्थानां प्रत्यक्षादिप्रमाणतः प्रत्यक्षानुमानादिभिः प्रमाणैः सविवेकः सविचारः तर्कः भवति, यच्च कणादादीनां वैशेषिकदार्शनिकानां मतम्, सः न्यायः कीर्तितः । एतेन न्यायदर्शनं वैशेषिकदर्शनं च प्रायशः समरूपत्वात् एकमेवेति अभिहितमिति बोध्यम् । शुनीटी.

**पुरुषोऽष्टौ प्रकृतयो विकाराः षोडशेति च ।**
**तत्त्वादिसंख्यावैशिष्ट्यात्सांख्यमित्यभिधीयते ॥**

पुरुषः एकः, अष्टौ प्रकृतयः, विकाराः षोडश । तथाहि एकः कूटस्थः पुरुषः, प्रकृतिः, महान्, अहंकारः, पञ्च तन्मात्राणि इति नव, ततः महाभूतानि पञ्चीकृतानि पञ्च पञ्च, कर्मेन्द्रियाणि हस्तपदादीनि, पञ्च ज्ञानेन्द्रियाणि चक्षुरादीनि, मनश्च इति षोडश । इत्येवं पञ्चविंशतितत्त्वादीनां संख्यायाः गणनायाः वैशिष्ट्यात् सांख्यं इत्यभिधीयते । शुनीटी.

**ब्रह्मैकमद्वितीयं स्यान्नाना नेहास्ति किंचन ।**
**मायिकं सर्वमज्ञानाद्भाति वेदान्तिनां मतम् ॥**

एकं अद्वितीयं किंचन किमपि वस्तु ब्रह्म स्यात्, इह जगति नाना विविधं ब्रह्म न अस्ति, अन्यत् सर्वं मायिकं मायामयं मिथ्यास्वरूपं अज्ञानात् भाति सत्यवत् विराजते, इति वेदान्तिनां मतम् । शुनीटी.

**चित्तवृत्तिनिरोधस्तु प्राणसंयमनादिभिः ।**
**तद्योगशास्त्रं विज्ञेयं यस्मिन् ध्यानसमाधितः ॥**

यस्मिन् ध्यानसमाधितः एकाग्र्येण चिन्तनेन प्राणानां अन्तश्चराणां मरुतां संयमनादिभिः कुम्भकादिभिरिति भावः, चित्तवृत्तेः मनोवृत्तेः निरोधः विषयान्तरेभ्यः

न्यावृत्तिः, कथित इति शेषः, तत् योगशास्त्रं विज्ञेयम् ।

शुनीटी.

**प्राग्वृत्तकथनं चैकराजकृत्यमिषादितः ।**
**यस्मिन्स इतिहासः स्यात्पुरावृत्तः स एव हि ॥**

यस्मिन् एकराजस्य एकस्य नृपस्य कृत्यस्य चरितस्य मिषादितः वर्णनाच्छलादिभिः यत् प्राग्वृत्तस्य पुरावृत्तस्य कथनम्, सः इतिहासः स्यात् स एव पुरावृत्तः । हिशब्दः पादपूरणार्थः । शुनीटी.

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।**
**वंशानुचरितं यस्मिन् पुराणं तद्विकीर्तितम् ॥**

यस्मिन् सर्गः सृष्टिः प्रतिसर्गः प्रलयः वंशः महापुरुषाणां कुलं मन्वन्तराणि तथा वंशानुचरितम्, कथितमिति शेषः, तत् पुराणं विकीर्तितम् ।

शुनीटी.

**वर्णादिधर्मस्मरणं यत्र वेदाविरोधकम् ।**
**कीर्तनं चार्थशास्त्राणां स्मृतिः सा च प्रकीर्तिता ॥**

यत्र वेदाविरोधकं श्रुत्यविरुद्धं वर्णादीनां ब्राह्मणादीनां आदिपदेन आश्रमादीनां च धर्मस्य स्मरणं तथा अर्थशास्त्राणां कीर्तनं च, सा स्मृतिः प्रकीर्तिता ।

शुनीटी.

**युक्तिर्बलीयसी यत्र सर्वं स्वाभाविकं मतम् ।**
**कस्यापि नेश्वरः कर्ता न वेदो नास्तिकं हि तत् ॥**

यत्र युक्तिः तर्कः बलीयसी अतिप्रबला, सर्वं वस्तु स्वाभाविकं स्वभावसिद्धं मतं कथितम्, कस्यापि कर्ता कारकः ईश्वरः न, अस्तीति शेषः, तथा वेदश्च न अकिंचित्कर इत्यर्थः, इत्येवं व्यवस्था इति शेषः, तद्धि नास्तिकं नास्तिकग्रन्थ इत्यर्थः । शुनीटी.

**श्रुतिस्मृत्यविरोधेन राजवृत्तादिशासनम् ।**
**सुयुक्त्याऽर्थार्जनं यत्र ह्यर्थशास्त्रं तदुच्यते ॥**

यत्र श्रुतीनां स्मृतीनां च अविरोधेन राज्ञः वृत्तादीनां आचरितादीनां शासनं उपदेशः तथा सुयुक्त्या सुकौशलेन अर्थानां धनानां अर्जनं उपार्जनम्, वर्णितमिति शेषः, तत् अर्थशास्त्रं उच्यते । शुनीटी.

**शशादिभेदतः पुंसामनुकूलादिभेदतः ।**
**पद्मिन्यादिप्रभेदन स्त्रीणां स्वीयादिभेदतः ।**
**तत्कामशास्त्रं सत्त्वादेर्लक्ष्म यत्रास्ति चोभयोः ॥**

यत्रेत्यध्याहार्यम् । यत्र पुंसां शशादिभेदतः शशकमृगाश्वहस्तिजातिभेदात् तथा अनुकूलादिभेदतः अनुकूलधृष्टशठादिविशेषात्, किंच स्त्रीणां पद्मिन्यादिभेदेन पद्मिनीशङ्खिनीचित्रिणीहस्तिनीरूपजातिभेदेन तथा स्वीयादिभेदतः स्वीयापरकीयासाधारणीरूपविशेषेण उभयोः स्त्रीपुंसयोः सत्त्वादेः अनुरागादेः लक्ष्म लक्षणं अस्ति, तत् कामशास्त्रम् । शुनीटी.

**प्रासादप्रतिमारामगृहवाप्यादिसत्कृतिः ।**
**कथिता यत्र तच्छिल्पशास्त्रमुक्तं महर्षिभिः ॥**

यत्र प्रासादानां राजभवनानां देवालयानां वा प्रतिमानां आरामगृहाणां उद्यानगृहाणां वाप्यादीनां सरोवरादीनां च सत्कृतिः सुनिर्माणं संस्कारश्च कथिता महर्षिभिः, तत् शिल्पशास्त्रं उक्तम् । शुनीटी.

**समन्यूनाधिकत्वेन सारूप्यादिप्रभेदतः ।**
**अन्योन्यगुणभूषा तु वर्ण्यतेऽलंकृतिश्च सा ॥**

समत्वेन न्यूनत्वेन आधिक्येन वा सारूप्यादिप्रभेदतः सादृश्यादिभेदेन अन्योन्यस्य परस्परस्य गुणानां भूषा वैचित्र्यमित्यर्थः, यत्र वर्ण्यते सा अलंकृतिः, तद्ग्रन्थश्च अलंकार इति व्यपदिश्यते । शुनीटी.

**सरसालंकृतादुष्टशब्दार्थं काव्यमेव तत् ।**
**विलक्षणचमत्कारबीजं पद्यादिभेदतः ॥**

सरसौ रसयुक्तौ अलंकृतौ अलंकारयुक्तौ अदुष्टौ दोषरहितौ शब्दार्थौ यत्र तत् काव्यमेव । तच्च पद्यादीनां भेदतः वैशिष्ट्यात् विलक्षणस्य अलौकिकस्य चमत्कारस्य साश्चर्यानन्दस्य बीजं कारणम् । शुनीटी.

**लोकसंकेततोऽर्थानां सुग्रहा वाक् तु दैशिकी ॥**

लोकानां संकेततः संकेतेन अर्थानां सुग्रहा सुखग्राह्यार्था इत्यर्थः, वाक् तु दैशिकी देशभाषारूपा ।

शुनीटी.

विना कौशिकशास्त्रीयसंकेतैः कार्यसाधिका ।
यथाकालोचिता वाग्वाऽवसरोक्तिश्च सा स्मृता ॥

कौशिकैः वृत्तिभेदैः शास्त्रीयसंकेतैश्च विना कार्यसाधिका अर्थबोधिका यथाकालोचिता कालानुसारिणी या वाक्, सा अवसरोक्तिः स्मृता । शुनीटी.

ईश्वरः कारणं यत्राऽदृश्योऽस्ति जगतः सदा ।
श्रुतिस्मृती विना धर्माधर्मौ स्तस्तच्च यावनम् ।
श्रुत्यादिभिन्नधर्मोऽस्ति यत्र तद्यावनं मतम् ॥

यत्र सदा अदृश्यः ईश्वरः जगतः कारणं अस्ति तथा श्रुतिस्मृती विना धर्माधर्मौ स्तः विद्येते, तत् यावनं यवनग्रन्थ इत्यर्थः , यत्र च श्रुत्यादिभिन्नः वेदादिविरुद्धः धर्मः अस्ति, तत् यावनं मतम् । शुनीटी.

कल्पितश्रुतिमूलो वाऽमूलो लोकैर्धृतः सदा ।
देशादिधर्मः स ज्ञेयो देशेदेशे कुलेकुले ॥

यः देशेदेशे प्रतिदेशं कुलेकुले प्रतिकुलं लोकैः कल्पिता रचिता श्रुतिः मूलं यस्य तथाभूतः वा अमूलः मूलरहितः, आचार इति शेषः, सदा धृतः, सः देशादिधर्मः विज्ञेयः । शुनीटी.

पृथक्पृथक् तु विद्यानां लक्षणं संप्रकाशितम् ।
कलानां न पृथङ्नाम लक्ष्म चास्तीह केवलम् ॥

विद्यानां उक्तानां पृथक्पृथक् लक्षणं संप्रकाशितम्, केवलं कलानां पृथक् नाम लक्ष्म लक्षणं च इह न अस्ति । शुनीटी.

चतुःषष्टिकलानां स्वरूपम्

पृथक्पृथक् क्रियाभिर्हि कलाभेदस्तु जायते ।
यां यां कलां समाश्रित्य तन्नाम्ना जातिरुच्यते ॥

पृथक्पृथक् विभिन्नाभिरित्यर्थः , क्रियाभिः अनुष्ठानैः कलाभेदस्तु जायते, यां यां क्रियां समाश्रित्य तन्नाम्ना तत्तदाख्ययेत्यर्थः , जातिः , कलानामिति शेषः, उच्यते । शुनीटी.

हावभावादिसंयुक्तं नर्तनं तु कला स्मृता ।
अनेकवाद्यविकृतौ ज्ञानं तद्वादने कला ॥

हावभावादिभिः संयुक्तं नर्तनं नृत्यं कला स्मृता । तथा अनेकेषां वाद्यानां विकृतौ वैपरीत्ये, तेषां वाद्यानां वादने च ज्ञानं कला, स्मृतेति शेषः । शुनीटी.

वस्त्रालंकारसंधानं स्त्रीपुंसोश्च कला स्मृता ।
अनेकरूपाविर्भावकृतिज्ञानं कला स्मृता ॥

स्त्रीपुंसोः स्त्रीपुरुषयोः वस्त्राणां अलंकाराणां च संधानं सम्यक् सुचारुतयेत्यर्थः, धानं परिधानं कला स्मृता । तथा अनेकरूपाणां विविधानां आविर्भावाणां प्रकाशानां कृतौ अनुष्ठाने ज्ञानं कला स्मृता । शुनीटी.

शय्यास्तरणसंयोगपुष्पादिग्रथनं कला ।
द्यूताद्यनेकक्रीडाभी रञ्जनं तु कला स्मृता ॥

शय्यानां आस्तरणानां च संयोगः सम्यक् योगः अनुष्ठानं पुष्पादीनां च ग्रथनं कला स्मृता । तथा द्यूतादिभिः अनेकाभिः क्रीडाभिः रञ्जनम्, लोकानामिति शेषः, कला स्मृता । शुनीटी.

अनेकासनसंधानै रतेर्ज्ञानं कला स्मृता ।
कलासप्तकमेतद्धि गान्धर्वे समुदाहृतम् ॥

अनेकैः विविधैः आसनैः संधानैश्च रतेः सुरतस्य ज्ञानं कला स्मृता । एतत् उक्तरूपं कलानां सप्तकं गान्धर्वे गान्धर्ववेदे समुदाहृतं हि । हिशब्दोऽवधारणार्थः । शुनीटी.

मकरन्दासवादीनां मद्यादीनां कृतिः कला ।
शल्यगूढाहृतौ ज्ञानं शिराव्रणव्यधे कला ॥

मकरन्दः पुष्परसः तेन आसवादीनां मादकद्रव्याणां तथा मद्यादीनां सुराप्रभृतीनां कृतिः अनुष्ठानं कला । तथा शल्यस्य पादादिविद्धस्य गूढं मन्दं अक्लेशकरमित्यर्थः, यथा तथा आहृतौ बहिष्करणे शिरासु व्रणानां स्फोटकादीनां व्यधे विद्धकरणे च ज्ञानं कला । शुनीटी.

हीनादिरससंयोगान्नादिसंपाचनं कला ।
वृक्षादिप्रसवारोपपालनादिकृतिः कला ॥

हीनादीनां द्रव्यविशेषाणां रससंयोगेन अन्नादीनां सम्यक्पाचनं पाककरणं कला, तथा वृक्षादीनां प्रसवस्य फलस्य आरोपः रोपणं तत्पालनादिश्च तत्कृतिः तदनुष्ठानं कला । शुनीटी.

**पाषाणधात्वादिदृतिस्तद्भस्मकरणं कला ।**
**यावदिक्षुविकाराणां कृतिज्ञानं कला स्मृता ॥**

पाषाणानां प्रस्तराणां धात्वादीनां स्वर्णादीनां च दृतिः विदारणम्, तेषां भस्मकरणं च कला, तथा यावत् यथायथं इक्षुविकाराणां गुडानां च कृतौ अनुष्ठाने ज्ञानं कला स्मृता । शुनीटी.

**धात्वौषधीनां संयोगक्रियाज्ञानं कला स्मृता ।**
**धातुसांकर्यपार्थक्यकरणं तु कला स्मृता ॥**

धातूनां स्वर्णरजतादीनां औषधीनां च संयोगस्य क्रियायाः अनुष्ठानस्य च ज्ञानं कला स्मृता । तथा धातूनां सांकर्यात् मिश्रणात् पार्थक्यकरणं पृथक्करणं कला स्मृता । शुनीटी.

**संयोगापूर्वविज्ञानं धात्वादीनां कला स्मृता ।**
**क्षारनिष्कासनज्ञानं कलासंज्ञं तु तत्स्मृतम् ।**
**कलादशकमेतद्धि ह्यायुर्वेदागमेषु च ॥**

धात्वादीनां धातुप्रभृतीनां संयोगस्य मिश्रीभावस्य अपूर्वं प्रथमं विज्ञानं कला स्मृता । तथा क्षाराणां लवणादीनां निष्कासने आविष्करणे वा द्रव्यान्तराद्बहिष्करणे यत् ज्ञानं तत् कलासंज्ञं कलेति नाम्ना स्मृतम् । एतत् कलानां दशकं आयुर्वेदागमे आयुर्वेदशास्त्रे, अन्तर्भूतमिति शेषः । हिशब्दोऽवधारणार्थः । शुनीटी.

**शस्त्रसंधानविक्षेपः पदादिन्यासतः कला ।**
**संध्याघाताकृष्टिभेदैर्मल्लयुद्धं कला स्मृता ॥**

पदादीनां न्यासतः विन्यासक्रमेण शस्त्राणां संधानं सम्यक् लक्ष्यीकरणं विक्षेपश्च कला । तथा संधिषु स्थानविशेषेषु ये आघाताः प्रहाराः आकृष्टयः आकर्षणानि च तेषां भेदैः यत् मल्लयुद्धं मल्लयोः वीरयोः युद्धं परस्परसंग्रामः तत् कला स्मृता । शुनीटी.

**बाहुयुद्धं तु मल्लानामशस्त्रं मुष्टिभिः स्मृतम् ।**
**मृतस्य तस्य न स्वर्गो यशो नेहापि विद्यते ॥**

मल्लानां वीराणां अशस्त्रं शस्त्राघातरहितं यत् बाहुयुद्धं तत् मुष्टिभिः मुष्टिप्रहारैः स्मृतं कथितम् । यत्र मृतस्य तस्य वीरस्य स्वर्गः तथा यशश्च इह न विद्यते । शुनीटी.

**बलदर्पविनाशान्तं नियुद्धं यशसे रिपोः ।**
**न कस्याऽऽसीत कुर्याद्वा प्राणान्तं बाहुयुद्धकम् ॥**

रिपोः शत्रोः बलदर्पयोः विनाशान्तं विनाशावधिकं नियुद्धं कस्य यशसे न आसीत ? अपि तु सर्वस्यैव यशसे इत्यर्थः, अतः प्राणान्तं बाहुयुद्धकं कुर्यात् वा कुर्यादेव । वाशब्दोऽवधारणार्थः । शुनीटी.

**कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसंकटैः ।**
**संनिपातावघातैश्च प्रमादोन्मथनैस्तथा ।**
**कृतं निपीडनं ज्ञेयं तन्मुक्तिस्तु प्रतिक्रिया ॥**

**कलाभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनम् ।**
**वाद्यसंकेततो व्यूहरचनादि कला स्मृता ॥**

कृतैः प्रतिकृतैः चित्रैः विविधैः सुसंकटैः अतिभीषणैः बाहुभिः बाहुप्रहारैरित्यर्थः, संनिपातैः सम्यक् पतनैः, शत्रोरुपरीति शेषः, अवघातैः आघातैः तथा प्रमादे अनवधानतायाम्, शत्रोरिति शेषः, उन्मथनैः मर्दनैः यत् कृतं तत् निपीडनं निःशेषेण पीडनं ज्ञेयम्, तस्मात् मुक्तिस्तु अतिक्रमस्तु प्रतिक्रिया प्रतिकारः सा कला । किंच अभिलक्षिते लक्ष्यीकृते देशे यन्त्रादीनां युद्धयन्त्रादीनां अस्त्राणां च निपातनं तथा वाद्यानां रणवाद्यानां संकेततः इङ्गितेन व्यूहरचनादि सैन्यरचनादि कला स्मृता । शुनीटी.

**गजाश्वरथगत्या तु युद्धसंयोजनं कला ।**
**कलापञ्चकमेतद्धि धनुर्वेदागमे स्थितम् ॥**

गजानां अश्वानां रथानां च गत्या गमनवैशिष्ट्येन युद्धसंयोजनं संग्रामायोजनं कला । एतत् कलापञ्चकं धनुर्वेदागमे धनुर्वेदशास्त्रे स्थितं हि । हिशब्दोऽवधारणार्थः । शुनीटी.

**विविधासनमुद्राभिर्देवतातोषणं कला ।**
**सारथ्यं च गजाश्वादेर्गतिशिक्षा कला स्मृता ॥**

विविधेन आसनेन उपवेशनेन मुद्राभिः हस्तादीनां रचनाविशेषैश्च देवतानां संतोषणं प्रीणनं कला । तथा सारथ्यं सूतकार्यं गजानां अश्वानां च गतिशिक्षा च कला स्मृता । शुनीटी.

**मृत्तिकाकाष्ठपाषाणधातुभाण्डादिसत्क्रिया ।**
**पृथक् कलाचतुष्कं तु चित्राद्यालेखनं कला ॥**

मृत्तिकानां काष्ठानां पाषाणानां धातूनां च ये भाण्डादयः तेषां सत्क्रिया सुनिर्माणं कला । तथा चित्रादीनां आलेखनं सम्यक् लेखनं कला । एतत्कलाचतुष्कं पृथक् उक्तमिति शेषः । शुनीटी.

**तडागवापीप्रासादसमभूमिक्रिया कला ।**
**घट्याद्यनेकयन्त्राणां वाद्यानां तु कृतिः कला ॥**

तडागानां सरसां वापीनां दीर्घिकाणां प्रासादानां हर्म्याणां समभूमीनां च क्रिया करणं कला । तथा घट्यादीनां समयनिरूपकादीनां अनेकेषां विविधानां यन्त्राणां वाद्यानां च कृतिः निर्माणं कला । शुनीटी.

**हीनमध्यादिसंयोगवर्णाद्यै रञ्जनं कला ।**
**जलवाय्वग्निसंयोगनिरोधैश्च क्रिया कला ॥**

हीनमध्यादयः अल्पमध्योत्तमाः संयोगाः येषां तैः वर्णाद्यैः रञ्जनम्, वस्त्रादीनामिति शेषः, कला । तथा जलानां वायूनां अग्नीनां च संयोगैः निरोधैश्च यत् रञ्जनम्, लोकानामिति शेषः, तच्च कला । शुनीटी.

**नौकारथादियानानां कृतिज्ञानं कला स्मृता ।**
**सूत्रादिरज्जुकरणविज्ञानं तु कला स्मृता ॥**

नौकानां रथानां यानादीनां शकटादीनां च कृतौ निर्माणे ज्ञानं कला स्मृता । तथा सूत्रादीनां रज्जूनां च करणे विज्ञानं विशेषेण ज्ञानं कला स्मृता । शुनीटी.

**अनेकतन्तुसंयोगैः पटबन्धः कला स्मृता ।**
**वेधादिसदसज्ज्ञानं रत्नानां च कला स्मृता ॥**

अनेकेषां तन्तूनां सूत्राणां संयोगैः पटबन्धः वस्त्रवयनं कला स्मृता । तथा रत्नानां वेधादिषु छिद्रादिषु सदसज्ज्ञानं उत्कर्षापकर्षज्ञानं कला स्मृता । शुनीटी.

**स्वर्णादीनां तु याथात्म्यविज्ञानं च कला स्मृता ।**
**कृत्रिमस्वर्णरत्नादिक्रियाज्ञानं कला स्मृता ॥**

स्वर्णादीनां याथात्म्यस्य यथास्वरूपस्य विज्ञानं विशेषेण ज्ञानं कला स्मृता । तथा कृत्रिमाणां स्वर्णरत्नादीनां क्रियाज्ञानं करणविज्ञानं कला स्मृता । शुनीटी.

**स्वर्णाद्यलंकारकृतिः कला लेपादिसत्कृतिः ।**
**मार्दवादिक्रियाज्ञानं चर्मणां तु कला स्मृता ॥**

स्वर्णादीनां अलंकारकृतिः अलंकारनिर्माणं लेपादिसत्कृतिः प्रलेपाद्यनुष्ठानं च कला, चर्मणां मार्दवादीनां क्रियायां ज्ञानं कला स्मृता । शुनीटी.

**पशुचर्माङ्गनिर्हारक्रियाज्ञानं कला स्मृता ।**
**दुग्धदोहादिविज्ञानं घृतान्तं तु कला स्मृता ॥**

पशुचर्मणां अङ्गेभ्यः, पशूनामिति भावः, निर्हारस्य निष्कासनस्य क्रियायां ज्ञानं कला स्मृता । दुग्धदोहादीनां पशुदोहनादीनां घृतान्तं घृतसंपादनपर्यन्तं विज्ञानं कला स्मृता । शुनीटी.

**सीवने कञ्चुकादीनां विज्ञानं तु कलात्मकम् ।**
**बाह्वादिभिश्च तरणं कलासंज्ञं जले स्मृतम् ॥**

कञ्चुकादीनां गात्राच्छादनीभूतानां सीवने स्यूतीकरणे विज्ञानं कलात्मकं कलेति प्रसिद्धम् । बाह्वादिभिरिति । जले बाहुप्रभृतिभिः तरणं संतरणं कलासंज्ञं स्मृतम् । शुनीटी.

**मार्जने गृहभाण्डादेर्विज्ञानं तु कला स्मृता ।**
**वस्त्रसंमार्जनं चैव क्षुरकर्म कले शुभे ॥**

गृहभाण्डादेः गृहतैजसपात्रादेः मार्जने शोधने विज्ञानं कला स्मृता । वस्त्राणां संमार्जनं सम्यक् शोधनं तथा क्षुरकर्म एते उभे कले । शुनीटी.

**तिलमांसादिस्नेहानां कला निष्कासने कृतिः ।**
**सीराद्याकर्षणे ज्ञानं वृक्षाद्यारोहणे कला ॥**

तिलानां मांसादीनां च ये स्नेहाः तैलानि, तेषां निष्कासने बहिष्करणे कृतिः कला । किंच सीरादीनां लाङ्गलादीनां आकर्षणे तथा वृक्षादीनां आरोहणे ज्ञानं कला । शुनीटी.

**मनोऽनुकूलसेवायाः कृतिज्ञानं कला स्मृता ।**
**वेणुतृणादिपात्राणां कृतिज्ञानं कला स्मृता ॥**

मनोनुकूलायाः चित्तानुसारिण्याः सेवायाः परिचर्यायाः कृतौ अनुष्ठाने ज्ञानं कला स्मृता । तथा वेणूनां वंशानां तृणादीनां च यानि पात्राणि तेषां कृतौ करणे ज्ञानं कला स्मृता । शुनीटी.

**काचपात्रादिकरणविज्ञानं तु कला स्मृता ।**
**संसेचनं संहरणं जलानां तु कला स्मृता ॥**

काचपात्रादीनां करणे विज्ञानं कला स्मृता । तथा जलानां संसेचनं सम्यक् सेचनं संहरणं च कला स्मृता । शुनीटी.

**लोहाभिसारशस्त्रास्त्रकृतिज्ञानं कला स्मृता ।**
**गजाश्ववृषभोष्ट्राणां पल्याणादिक्रिया कला ॥**

लोहाः अभिसाराः उपादानानि येषां तादृशानां शस्त्राणां अस्त्राणां च कृतौ ज्ञानं कला स्मृता । तथा गजानां अश्वानां वृषभानां उष्ट्राणां च पल्याणादीनां पृष्ठास्तरणविशेषाणां क्रिया अनुष्ठानं कला । शुनीटी.

**शिशोः संरक्षणे ज्ञानं धारणे क्रीडने कला ।**
**सुयुक्तताडनज्ञानमपराधिजने कला ॥**

शिशोः बालकस्य संरक्षणे क्रीडने च ज्ञानं कला । तथा अपराधिजने सुयुक्तं यथोपयुक्तं यत् ताडनं दण्डनम्, तस्य ज्ञानं कला । शुनीटी.

**नानादेशीयवर्णानां सुसम्यग्लेखने कला ।**
**ताम्बूलरक्षादिकृतिविज्ञानं तु कला स्मृता ॥**

नानादेशीयानां वर्णानां अक्षराणां सुसम्यग्लेखनं कला । तथा ताम्बूलानां रक्षादौ या कृतिः तस्या विज्ञानं कला स्मृता । शुनीटी.

**आदानमाशुकारित्वं प्रतिदानं चिरक्रिया ।**
**कलासु द्वौ गुणौ ज्ञेयौ द्वे कले परिकीर्तिते ॥**

कलासु आशुकारित्वं आदानम्, चिरक्रिया प्रतिदानम् । कलासु एतौ द्वौ गुणौ ज्ञेयौ । तस्मात् द्वे कले परिकीर्तिते । शुनीटी.

**चतुःषष्टिकला ह्येताः संक्षेपेण निदर्शिताः ।**
**यां यां कलां समाश्रित्य तां तां कुर्यात्स एव हि ॥**

एताः चतुःषष्टिः कलाः संक्षेपेण निदर्शिताः । यः यां यां कलां समाश्रित्य, तिष्ठतीति शेषः, सः तां तां कुर्यात् एव । हिशब्दः पादपूरणार्थः । शुनीटी.

## नीतिवाक्यामृतम्

### राजा राजधर्मः राज्यं च

**[1]योऽनुकूलप्रतिकूलयोरिन्द्रयमस्थानं स राजा ॥**

अथ राजा यादृशो भवति तदाह– योऽनुकूलेति । अनुकूले मित्रस्वरूपः, प्रतिकूले शत्रुस्वरूपः । तयोर्द्वयोः शक्रधर्मराजस्थानं यथासंख्येन भवति । स राजा नान्यः । तथा च भार्गवः– ' वर्तते योऽरिमित्राभ्यां यमेन्द्राभः ( स ) भूपतिः । अभिषेको व्रणस्यापि व्यञ्जनं पट्टमेव वा ॥ ' । नीवाटी.

**राज्ञो हि दुष्टनिग्रहः शिष्टपरिपालनं च धर्मः ॥**

अथ राज्ञो यथा धर्मो भवति तदाह– राज्ञो हीति । राज्ञः भूपतेः योऽसौ दुष्टानां पापानां निग्रहः दण्डः, तथा शिष्टपरिपालनं च साधुजनरक्षणं च स धर्मः, नान्यो दानादिकः । तथा च वर्गः– ' विज्ञेयः पार्थिवो धर्मः शिष्टानां परिपालनम् । दण्डश्च पापवृत्तीनां गौणोऽन्यः परिकीर्तितः ॥ ' । नीवाटी.

**न पुनः शिरोमुण्डनं जटाधारणादिकम् ॥**

अथ व्रतचर्यादिभिरनुष्ठितैर्भूपतीनां न धर्मो यथा भवति तथाऽऽह– न पुनरिति । यत्पुनः शिरोमुण्डनं जटाधारणादिकं धर्मः, अन्यदपि व्रतचर्यादिलक्षणं, तद्भूपतीनामधर्माय भवति । तथा च भागुरिः– ' व्रतचर्यादिको धर्मो न भूपानां सुखावहः । तेषां धर्मः प्रदानेन प्रजासंरक्षणेन च ॥ ' । नीवाटी.

**राज्ञः पृथ्वीपालनोचितं कर्म राज्यम् ॥**

अथ राज्ञो यथा योग्यं कर्म राज्यं भवति तदाह– राज्ञ इति । राज्ञः भूपतेः यत्पृथ्वीपालनोचितं योग्यं कर्म षाड्गुण्यलक्षणं तद्राज्यमुच्यते, न विलासाद्यम् । तस्माद्भूपतिना षाड्गुण्यनिरतेन सदैव भाव्यम्, न केवलं विलासरतेन । तथा च वर्गः– षाड्गुण्यचिन्तनं कर्म राज्यं यत्संप्रकथ्यते । न केवलं विलासाद्यं तेन बाह्यं कथंचन ॥ यो राजा चिन्तयेन्नैव विलासैकमनाः सदा । षाड्गुण्यं तस्य तद्राज्यं स चिरेण प्रणश्यति ॥ ' । नीवाटी.

---

( १ ) नीवा. ५।१–७५.

**वर्णाश्रमवती धान्यहिरण्यपशुकुप्यवृष्टिप्रदानफला च पृथ्वी ॥**

अथ भूयोऽपि भूपतेर्यद्राज्यं तदाह– वर्णाश्रमवतीति । न केवलं भूपतेः प्रजापालनं राज्यमुच्यते, चकाराद्वर्णाश्रमवती धान्यहिरण्यपशुकुप्यवृष्टिप्रदानफला च पृथिवी राज्यमुच्यते । वर्णाः ब्राह्मणादयः, आश्रमाः ब्रह्मचारिप्रभृतयः, ते विद्यन्ते यस्यां सा वर्णाश्रमवती । पुनरपि किंविशिष्टा पृथ्वी ? धान्यहिरण्यपशुकुप्यवृष्टिप्रदानफला । धान्यं सस्यम्, हिरण्यं द्रव्यम्, पशवः चतुष्पदाद्याः, कुप्यं सुवर्णरूप्याभ्यामन्यत् । एतेषां पदार्थानां वर्षणं वृष्टिः, तस्याः प्रदानं या करोति सा पृथिवी उच्यते । एतदुक्तं भवति– एतैः ( एतेषां ) पदार्थैः ( पदार्थानां ) या वर्षणं करोति, एते पदार्था यस्या भूमेः सकाशान्नित्यं यस्य राज्ञः समुत्पद्यन्ते, तद्राज्यमिति । तथा च भृगुः– 'वर्णाश्रमसमोपेता सर्वकामान् प्रयच्छति । या भूमिर्भूपते राज्यं प्रोक्ता साऽन्या विडम्बना ॥' । नीवाटी.

वर्णाः आश्रमाश्च

**ब्राह्मणक्षत्रियवैश्यशूद्राश्च वर्णाः ॥**

**ब्रह्मचारी गृही वानप्रस्थो यतिरित्याश्रमाः ॥**

अथाऽऽश्रमलक्षणमाह– ब्रह्मचारीति । गतार्थमेतत् । नीवाटी.

**स उपकुर्वाणको ब्रह्मचारी यो वेदमधीत्य स्नायात् ॥**

अथोपकुर्वाणकस्य ब्रह्मचारिणो लक्षणमाह– स उपकुर्वाणक इति । स्नानं कुर्यात् । अत्र स्नानशब्देन यज्ञावभृथस्नानमुच्यते । एतदुक्तं भवति– वेदानपि पठित्वा तत्रस्थोऽपि विवाहं न करोति, पश्चात् गुरोः शुश्रूषां करोति, नान्यैर्ब्रह्मचारिभिरिव गृहं याति, यज्ञावभृथमुच्यते । तत्कृत्येनोपकुर्वाणसंज्ञां प्राप्नोति । उपकुर्वाणकशब्देन यज्ञावभृथस्नानम् । तथा च वर्गः– 'वेदानधीत्य यः कुर्याद्विवाहं यज्ञमेव वा । उपकुर्वाणकीं संज्ञां ब्रह्मचारी लभेत सः ॥' । नीवाटी.

**स्नानं विवाहदीक्षाभिषेकः ॥**

अथ ब्रह्मचारिण उपकुर्वाणसंज्ञा यथा भवति तदाह– स्नानमिति । गतार्थमेतत् । नीवाटी.

**स नैष्ठिको ब्रह्मचारी यस्य प्राणान्तिकमदारकर्म ॥**

अथ नैष्ठिकस्य ब्रह्मचारिणो लक्षणमाह– स नैष्ठिक इति । यस्य ब्रह्मचारिणः प्राणान्तिकं मृत्युपर्यन्तं कलत्ररहितं क्रियाकाण्डं भवति, स नैष्ठिकः प्रोच्यते । निष्ठाशब्देन कष्टमभिधीयते, तया दीव्यति नैष्ठिकः । तथा च भारद्वाजः– 'कलत्ररहितस्यात्र यस्य कालोऽतिवर्तते । कष्टेन मृत्युपर्यन्तो ब्रह्मचारी स नैष्ठिकः ॥' । नीवाटी.

**य उत्पन्नः पुनीते वंशं स पुत्रः ॥**

अथ पुत्रस्य लक्षणमाह– य उत्पन्न इति । यः पुत्रः उत्पन्नः जातः कुलं पुनीते पवित्रतां नयति स्नानदानव्रतादिभिः, स पुत्रः प्रोच्यते । तथा च भागुरिः– 'कुलं पाति समुत्थो यः स्वधर्मं प्रतिपालयेत् । पुनीते स्वकुलं पुत्रः पितृमातृपरायणः ॥' । नीवाटी.

**कृतोद्वाहः कृतुप्रदाता कृतुप्रदः ( ? ) ॥**

अथ कृतुपदस्य (?) ब्रह्मचारिणो लक्षणमाह– कृतोद्वाह इति । यो ब्रह्मचारी कृतोद्वाहः सन् ऋतुकालाभिगामी केवलं संतानाय भवति, स कृतुपदसंज्ञो भवति । तथा च वर्गः– 'संतानाय न कामाय यः स्त्रियं कामयेद्दतौ । कृतुपदः स सर्वेषामुत्तमोत्तमसर्ववित् ॥' । नीवाटी.

**अपुत्रो ब्रह्मचारी पितॄणामृणभाजनम् ॥**

अथापुत्रस्य ब्रह्मचारिणो यद्भवति तदाह– अपुत्र इति । यो ब्रह्मचारी पुत्ररहितो भवति स पितॄणामृणभाजनं भवति, ततश्च पुनर्नरकं प्राप्नोति । तथा च ऋषिपुत्रकः– 'पिता पुत्रमुखं दृष्ट्वा मुच्यते पैतृकादृणात् । अपुत्रश्च पुनर्याति पुसंज्ञं नरकं नरः ॥' । नीवाटी.

**अनध्ययनो ब्रह्मणः ॥**

अथाध्ययनरहितस्य ब्रह्मचारिणो यद्भवति तदाह– अनध्ययन इति । अनध्ययनः वेदरहितः । सः ब्रह्मणः

पितामहस्य ऋणभाजनं भवति । तथा च ऋषिपुत्रकः— 'ब्रह्मचारी न वेदं यः पठते मौढ्यमास्थितः । स्वायंभुवमृणं तस्य वृद्धिं याति कुसीदकम् ॥' । नीवाटी.

**अयजनो देवानाम् ॥**

अथायजनब्रह्मचारिणो यद्भवति तदाह— अयजन इति । यो ब्रह्मचारी अयजनो भवति यजनं न करोति स देवानां ऋणभाजनं भवति । तथा च ऋषिपुत्रः— 'नाग्नेः परिग्रहो यस्य विद्यते ब्रह्मचारिणः । ऋणभागी स देवानां जायते नात्र संशयः ॥' । नीवाटी.

**आत्मा वै पुत्रो नैष्ठिकस्य ॥**

अथ नैष्ठिकस्य ब्रह्मचारिणोऽपुत्रस्यापि यद्भवति तदाह— आत्मेति । वैशब्दः समुच्चये । नैष्ठिकस्य पूर्वोक्तलक्षणस्य ब्रह्मचारिणः आत्मा एव पुत्रः । एतदुक्तं भवति— यथाऽपुत्रः पुत्रार्थं चिन्तयति पुत्रं प्राप्नोति, तथा नैष्ठिकोऽपि चाऽऽत्मावलोकनपरोऽपुत्रदोषं न प्राप्नोति, पुनर्नरकं न पश्यतीत्यर्थः । तथाऽनध्ययनायजनदोषमपि न प्राप्नोति । तथा च ऋषिपुत्रकः— 'तेनाधीतं च यष्टं च पुत्रस्यालोकितं मुखम् । नैष्ठिको वीक्ष्यते यस्तु परमात्मानमात्मनि ॥' । नीवाटी.

**अयमात्माऽऽत्मानमात्मनि संदधानः परां पूततां संपद्यते ॥**

अथ नैष्ठिकस्याऽऽत्मावलोकनेन सपुत्र(त्व)वेदाध्ययनयजनानि येन कारणेन तदाह— अयमात्माऽऽत्मानमिति । अयं आत्मा सर्वव्यापी ब्रह्ममयो यस्तस्मिन्नात्मनि आत्मना आत्मानं चित्स्वरूपं संदधानः धारयमाणः संपद्यते गच्छति । काम् ? परां उत्कृष्टां पूतताम् । एतदुक्तं भवति— चतुर्विधब्रह्मचर्यफलमाप्नोति । तथा च नारदः— 'आत्मावलोकनं यस्य जायते नैष्ठिकस्य च । ब्रह्मचर्याणि सर्वाणि यानि तेषां फलं भवेत् ॥' । इति चतुर्विधब्रह्मचारिसमुद्देशः । नीवाटी.

**नित्यनैमित्तिकानुष्ठानस्थो गृहस्थः ॥**

अथ गृहस्थो यादृशो भवति तदाह— नित्येति । यो नित्यनैमित्तिकानुष्ठानं करोति स गृहस्थः, नान्यो नित्यनैमित्तिकवर्जितः । अत्र नित्यानि स्वाध्यायपितृतर्पणवासुदेवपूजनस्नानदानपूर्वाणि, नमित्तिकानि संक्रान्तिवैधृतिव्यतीपातचन्द्रक्षयपूर्वाणि । तथा च भागुरिः— 'नैत्यनैमित्तिकपरः श्रद्धया परया युतः । गृहस्थः प्रोच्यते सद्भिरशृङ्गः पशुरन्यथा ॥' । नीवाटी.

**ब्रह्मदेवपित्रतिथिभूतयज्ञा हि नित्यमनुष्ठानम् ॥**

अथ नित्यानुष्ठानस्य लक्षणमाह— ब्रह्मेति । यस्स्वशक्त्या ब्रह्मणः पूजा क्रियते, तथाऽभीष्टदेवतार्चनम्, तथा पितृतर्पणम्, तथा कालप्राप्तब्राह्मणतर्पणम्, तथा भूतयज्ञः । भूतयज्ञशब्देन वैश्वदेवबलिप्रदानमुच्यते । एतानि कुर्वाणो गृहस्थो नित्यानुष्ठानी भवति । तथा च वर्गः— 'पितृदेवमनुष्याणां पूजनं ब्राह्मणैः सह । बलिप्रदानसंयुक्तं नित्यानुष्ठानमुच्यते ॥' । नीवाटी.

**दर्शपौर्णमास्याद्याश्रयं नैमित्तिकम् ॥**

अथ नैमित्तिकानुष्ठानस्य लक्षणमाह— दर्शेति । दर्शशब्देन अमावास्या प्रोच्यते । पौर्णमासी प्रसिद्धा । एते द्वे अपि आद्ये प्रथमे यासां तिथीनां ता दर्शपौर्णमास्याद्याः, तासु तिथिषु देवतासमुद्देशेन यत् क्रियते धर्मफलं तन्नैमित्तिकम् । तथा च भागुरिः— 'हुतवहकमलजगिरिजागजवदनभुजङ्गगुहदिनेशशिवाः । दुर्गायमविश्वाच्युतमदनेश्वरचण्डिका( ? चन्द्रका )स्तिथिपतयः ॥ पितरोऽमावस्यां यान्ति तिथिपूजाऽत्र या कृता । तेषां तन्नैमित्तिकं प्राह यच्चानित्यं च पर्वभवम् ॥' । नीवाटी.

**वैवाहिकः शालीनो यायावरोऽघोरो गृहस्थाः ॥**

अथान्यदपि चतुर्विधगृहस्थलक्षणमाह— वैवाहिक इति । 'एकाग्निमाहरेद्यस्तु श्रद्धया परया युतः । वैवाहिकः स विज्ञेयो वर्तमानगृहे स्थितः ॥ अग्निहोत्रपरो यस्तु केवलं यजनं विना । शालीनः स च विज्ञेयः पञ्चवैश्वानरार्चनात् ॥ एकवह्निपरो वाऽथ पञ्चवह्निपरोऽपि वा । यः शूद्रार्थं न गृह्णाति शुक्लो यायावरो हि सः ॥ अग्निष्टोमादिभिर्यज्ञैर्यजते यः सदक्षिणैः । अघोरः स च विज्ञेयः सौम्यरूपवपुर्धरः ॥' । इति चतुर्विधगृहस्थसमुद्देशः । नीवाटी.

**यः खलु यथाविधि जानपदमाहारं संसारव्यवहारं च परित्यज्य सकलत्रोऽकलत्रो वा वने प्रतिष्ठते स वानप्रस्थः ॥**

अथ वानप्रस्थलक्षणमाह– यः खल्विति । यः गृहस्थः सन् खलु निश्चयेन विधिं अनुष्ठानं जानपदं लोकसंभवं ग्राम्यभोजनाच्छादनादिकं तथाऽन्यदपि सांसारिकं चतुष्पदादिपुत्रपौत्रादिकं सर्वं परित्यज्य सकलत्रः सपत्नीकः विकलत्रो वा वनं गच्छति, (सः) वानप्रस्थः । तथा च देवलः– 'सकलत्रोऽथवाऽप्येको गृहस्थो यो वनं व्रजेत् । त्यक्तग्राम्यविधिः सर्वो वानप्रस्थः स उच्यते ॥ जटित्वमग्निहोत्रत्वं भूशय्याऽजिनधारणम् । वने वासः पयोमूलनीवारफलवृत्तिता ॥ प्रतिग्रहनिवृत्तिश्च त्रिःस्नानं ब्रह्मचारिता । देवतातिथिपूजा च धर्मोऽयं वनवासिनः ॥ '। नीवाटी.

**वालिखिल्य औदुम्बरो वैश्वानरः सद्यःप्रक्षालकश्चेति वानप्रस्थाः ॥**

अथ चतुर्विधस्य वानप्रस्थस्य लक्षणमाह– वालिखिल्य इति । 'अरणीं केवलां गृह्य विभार्यो यो वनं व्रजेत् । जुहुयान्नूतनं वह्निं वालिखिल्यो वनेचरः ॥ सभार्यो यो वनं गच्छेद् गृहीत्वा वह्निपञ्चकम् । औदुम्बरः स विज्ञेयो वानप्रस्थो मनीषिभिः ॥ कन्दमूलफलाशीयस्त्रिकालं स्नानमाचरेत् । साग्निकस्तिथिपूजाढ्यः स च वैश्वानरः स्मृतः ॥ यावन्मात्रं भवेद्भोज्यं तावन्मात्रमुपार्जयेत् । नीवाराद्यं च साग्नीकः सद्यःप्रक्षालको भवेत् ॥ '। इति चतुर्विधवानप्रस्थसमुद्देशः । नीवाटी.

**यो देहमात्रारामः सम्यग्विद्यानौलाभेन तृष्णासरित्तरणाय योगाय यतते यतिः ॥**

अथ यतिलक्षणमाह– य इति । यो देहमात्रारामः शरीरमात्रेणाऽऽत्मनि रमते, नान्यत्किंचिदानन्दार्थं विलोकयति । सम्यग्विद्याशब्देन ज्ञानमभिधीयते । सा एव नौः यानपात्रम्, तामभ्यस्यन् संसारनदीपारगमनाय यो योगस्तदर्थं यतते यत्नं करोति स यतिः । तथा च हारीतः– 'आत्मारामो भवेद्यस्तु विद्यासेवनतत्परः । संसारतरणार्थाय योगभाग्यतिरुच्यते ॥ '। नीवाटी.

**कुटीरकबहूदकहंसपरमहंसा यतयः ॥**

अथ चतुर्विधयतिलक्षणम्– कुटीरकेति । 'त्रिदण्डी सशिखो यस्तु ब्रह्मसूत्री गृहच्युतः । सकृत् पुत्रगृहे स्नाति यो यतिः स कुटीचरः ॥ कुटीचरस्य रूपेण ब्रह्मभिक्षाकृताशनः । बहूदकः स विज्ञेयो विष्णुजापपरायणः ॥ एकरात्रं वसेद्ग्रामे स्थाने चैव त्रिरात्रकम् । दण्डभिक्षां चरेत्तत्र पुटिकां वा समाचरेत् ॥ विप्राणामावसथेषु विधूमेषु गताग्निषु । हंसस्य जायते ज्ञानं यदा स्यात्परमो हि सः ॥ चतुर्वर्णप्रभोक्ता स्यात्स्वेच्छया दण्डधृत्तदा । सर्वारम्भपरित्यागो भैक्षाद्यं वृक्षमूलतः ॥ निष्परिग्रहिताऽद्रोहः समता सर्वजन्तुषु । प्रियाप्रियापरिष्वङ्गः सुखदुःखाविकारिता ॥ सबाह्याभ्यन्तरं शौचं वाङ्मनोव्रतचारिता । सर्वेन्द्रियसमाहारो धारणा ध्याननित्यता ॥ भावसंशुद्धिरित्येष परिव्राड्धर्म उच्यते ॥ '। इति चतुर्विधयतिसमुद्देशः । नीवाटी.

कुलक्रमेण विक्रमेण वा राज्यलाभः

**राज्यस्य मूलं क्रमो विक्रमश्च ॥**

अथ राज्यस्य मूलं यद्भवति तदाह– राज्यस्येति । क्रमशब्देन पितृपैतामहिकं राज्यमुच्यते । विक्रमः शौर्यम् । एतत् वृक्षस्येव राज्यमूलम् । यथा वृक्षस्य मूलेन सहितस्य सर्वशाखादिपुष्पफलं भवति तथा च राज्यस्य क्रमविक्रमाभ्यां सहितस्य सर्वं हस्त्यश्वधनधान्यादिकं भवति । तथा च शुक्रः– 'क्रमविक्रममूलस्य राज्यस्य तु यथा तरोः । समूलस्य भवेद्वृद्धिस्ताभ्यां हीनस्य संक्षयः ॥ '। नीवाटी.

**आचारसंपत्तिः क्रमसंपत्तिं करोति ॥**

अथ यथा क्रमसंपत्तिर्भवति तथाऽऽह– आचारसंपत्तिरिति । आचारः लोकव्यवहारः, तेन वर्तमानस्य नयवृद्धया राज्यवृद्धिर्भवति । तथा च शुक्रः– 'लौकिकं व्यवहारं यः कुरुते नयवृद्धितः । तद्वृद्धया वृद्धिमायाति राज्यं तत्र क्रमागतम् ॥ '। नीवाटी.

**अनुत्सेकः खलु विक्रमस्यालंकारः ॥**

अथ यथा विक्रमस्यालंकारो भवति तदाह– अनुत्सेक इति । अनुत्सेकशब्देनागर्वोऽभिधीयते । सः विक्रमस्य

शोभां जनयति, न कनकादिभूषणम् । तथा च गुरुः– 'भूषणैरपि संत्यक्तः स विरेजे विगर्वकः । सगर्वो भूषणाढ्योऽपि लोकेऽस्मिन् हास्यतां व्रजेत् ॥ योऽमात्यान्मन्यते गर्वान्न गुरून् न च बान्धवान् । शूरोऽहमिति विज्ञेयो म्रियते रावणो यथा ॥' । नीवाटी.

**क्रमविक्रमयोरन्यतरपरिग्रहेण राज्यस्य दुष्करः परिणामः ॥**

अथ भूपस्य राज्यलाभो यथा भवति तदाह– क्रमेति । क्रमविक्रमयोरन्यतरपरिग्रहेण एकतरस्वीकारेण राज्यस्य दुष्करः न शक्यते परिणामः परिणतिः । एतदुक्तं भवति– पराक्रमरहितं क्रमागतं पितृपैतामहिकमपि राज्यं विनश्यति । यदि बलेन परराज्यं गृहीतं परिणामं न याति भूयोऽपि तथा कार्यम्, क्रमेण यथा गच्छति । तथा च शुक्रः– 'राज्यं हि सलिलं यद्वद्यद्बलेन समाहृतम् । भूयोऽपि तत्ततोऽभ्येति लध्वाकालस्य संक्षयम् (?) ॥' । अथवा पितृपैतामहिकेऽपि राज्ये प्राप्ते पराक्रमं त्यक्त्वा भीरुत्वं प्रतिगृह्णाति, तस्यापि राज्यस्य परिणामः परिणतिः दुष्करा भवति । कोऽर्थः ? राज्यभ्रंशो भवतीति । तथा च नारदः– 'पराक्रमच्युतो यस्तु राजा संग्रामकातरः । अपि क्रमागतं तस्य नाशं राज्यं प्रगच्छति ॥' । नीवाटी.

राजा विद्याविनीतः स्यात्

**क्रमविक्रमयोरधिष्ठानं बुद्धिमानाहार्यबुद्धिर्वा ॥**

अथ क्रमविक्रमयोरधिष्ठानं राजा यथा भवति तथाऽऽह– क्रमविक्रमयोरिति । यो बुद्धिमान् राजा भवति स क्रमविक्रमयोरधिष्ठानं स्थानं भवति । आहार्यबुद्धिर्वा तथा आहार्यबुद्धिर्यो भवति सोऽपि क्रमविक्रमयोरधिष्ठानं भवति । आहार्या बुद्धिर्यस्यासौ आहार्यबुद्धिः, अमात्यदत्तोपदेश इत्यर्थः । तथा च शुक्रः– 'स बुद्धिसहितो राजा नीतिशौर्यगृहं भवेत् । अथवाऽमात्यबुद्धिस्तु बुद्धिहीनो विनश्यति ॥' । नीवाटी.

**यो विद्याविनीतमतिः स बुद्धिमान् ॥**

अथ बुद्धिमान् यथा राजोच्यते तदाह– य इति । यः शास्त्रानुगतबुद्धिर्भवति स बुद्धिमान्, न शिल्पादिभिर्यथा प्राकृतो जनः । तथा गुरुः– 'शास्त्रानुगा भवेद्बुद्धिर्यस्य राज्ञः स बुद्धिमान् । शास्त्रबुद्ध्या विहीनस्तु शौर्ययुक्तो विनश्यति ॥' । नीवाटी.

**सिंहस्येव केवलं पौरुषावलम्बिनो न चिरं कुशलम् ॥**

अथ शास्त्ररहितबुद्धेः शूरस्यापि नृपस्य यद्भवति तदाह– सिंहस्येवेति । शास्त्ररहितस्य केवलं पौरुषयुक्तस्य चिरं प्रभूतकालं कुशलं न भवति, केनापि वध्यते दुष्टोऽयमिति । तथा च शुक्रः– 'पौरुषान्मृगनाथस्तु हरिः स प्रोच्यते जनैः । शास्त्रबुद्धिविहीनस्तु यतो नाशं स गच्छति ॥' । नीवाटी.

**अशस्त्रः शूर इवाशास्त्रः प्रज्ञावानपि भवति विद्विषां वशः ॥**

अथ शास्त्ररहितस्य नृपतेर्यद्भवति तदाह– अशास्त्र इति । यथा शस्त्ररहितः आयुधवर्जितः पुमान् शूरोऽपि चौरादीनां गम्यो भवति, तथा शास्त्ररहितः शूरोऽपि पुमान् प्रज्ञावानपि सर्वेषां चौरादीनां गोचरो गम्यो भवति । तथा च गुरुः– 'नीतिशास्त्रविहीनो यः प्रज्ञावानपि हन्यते । परैः शास्त्रविहीनस्तु चौराद्यैरपि वीर्यवान् ॥' । नीवाटी.

**अलोचनगोचरे ह्यर्थे शास्त्रं तृतीयं लोचनं पुरुषाणाम् ॥**

अथ शास्त्रं पुरुषस्य यथा भवति तदाह– अलोचनेति । अर्थशब्देन प्रयोजनमभिधीयते । यत् प्रयोजनं लोचनाभ्यां न दृश्यते तस्य दर्शनार्थं तृतीयं लोचनं शास्त्रं भवति । एतदुक्तं भवति– तत् प्रयोजनं शास्त्रदृष्ट्या ज्ञेयम्, युक्तमयुक्तं भवति न वेति निश्चयः कार्यः । तथा च गुरुः– 'अदृश्यो( ? श्ये ) निजचक्षुर्भ्यां कार्ये ( ? र्ये ) संदेहमागते । शास्त्रेण निश्चयः कार्यस्तदर्थं च क्रिया ततः ॥' । नीवाटी.

**अनधीतशास्त्रश्चक्षुष्मानपि पुमानन्ध एव ॥**

अथ शास्त्रहीनः पुमान् यथा भवति तदाह– अनधीतेति । येन पुरुषेण शास्त्रं पठितं न भवति स लोचनसहितोऽप्यन्ध एव ज्ञेयः । तथा च भागुरिः–

'शुभाशुभं न पश्येच्च यथाऽन्धः पुरतः स्थितम् । शास्त्रहीनस्तथा मर्त्यो धर्माधर्मौ न विन्दति ॥' । नीवाटी.

**न ह्यज्ञानादपरः पशुरस्ति ॥**

अथ मूर्खः पुमान् यथा भवति तदाह– नेति । अस्मिन् जगति अज्ञानात् मूर्खादन्यः द्वितीयः पशुर्नास्ति । यतः पशुस्तृणानि भक्षयति, ततो मूत्रपुरीषक्रियां करोति, तथा मूर्खोऽपि खानपानाद्यं मूत्रपुरीषे च केवलं करोति, धर्माधर्मौ न जानाति । तथा च वसिष्ठः– 'मर्त्या मूर्खतमा लोकाः पशवः शृङ्गवर्जिताः । धर्माधर्मौ न जानन्ति यतः शास्त्रपराङ्मुखाः ॥' । नीवाटी.

**वरमराजकं भुवनं न तु मूर्खो राजा ॥**

अथ भुवनं यादृशेन राज्ञा वृद्धिं न याति तथाऽऽह– वरमिति । वरं अराजकं भूपतिहीनं भुवनम्, न तु मूर्खभूपालाधिष्ठितम् । तथा च गुरुः– 'अराजकानि राष्ट्राणि रक्षन्तीह परस्परम् । मूर्खो राजा भवेद्येषां तानि गच्छन्ति संक्षयम् ॥' । नीवाटी.

**असंस्कारं रत्नमिव सुजातमपि राजपुत्रं न नायकपदायाऽऽमनन्ति साधवः ॥**

अथ कुमारो यथा पदवीमाप्नोति तदाह– असंस्कारमिति । यस्य राजपुत्रस्य सुजातस्यापि कुलीनस्यापि संस्कारः कौशल्यं न भवति तं नायकत्वे यौवराज्यपदे नाऽऽमनन्ति न वाञ्छन्ति सर्वाः प्रकृतयः यत् 'युवराजोऽयं भवतु' । कथम् ? रत्नमिव परं संस्काररहितं यावच्छाणोल्लीढं ( न ) क्रियते सुजातमपि समुद्रोत्पन्नमपि नायकत्वे न मन्यते । नीवाटी.

**न दुर्विनीताद्राज्ञः प्रजानां विनाशादपरोऽस्त्युत्पातः ॥**

अथ दुर्विनीताद्राज्ञः सकाशात् प्रजानां यद्भवति तदाह – नेति । प्रजानां लोकानां दुर्विनीताद्राज्ञः सकाशात् अन्य उत्पातः विनाशलक्षणः नास्ति न विद्यते । उत्पातैर्भूमिकम्पादिभिः किल प्रजाक्षयो भवति, तेषां सकाशादपि अधिक उत्पातो दुश्चेष्टितस्य भूपतेः सकाशाद्भवति । तथा च हारीतः– 'उत्पातो भूमिकम्पाद्यः शान्तिकैर्याति सौम्यताम् । नृपदुर्वृत्तमुत्पातो न कथंचित्प्रशाम्यति ॥' । नीवाटी.

**यो युक्तायुक्तयोरविवेकी विपर्यस्तमतिर्वा स दुर्विनीतः ॥**

अथ दुर्विनीतस्य नृपतेर्लक्षणमाह– य इति । यः राजा युक्तायुक्तयोः योग्यायोग्ययोः पदार्थयोः विषये अविवेकी विवेकहीनः बुद्ध्या न जानाति, अयोग्यानां प्रसादं करोति, योग्यानामपमानं करोति, स दुर्विनीतः । तथा यो विपर्यस्तमतिः विपरीतबुद्धिर्वा यः शिष्टानामाचारं न मन्यते, पापानां करोति, स विपर्यस्तमतिः । तथा च नारदः– 'युक्तायुक्तविवेकं यो न जानाति महीपतिः । दुर्वृत्तः स परिज्ञेयो यो वा वाममतिर्भवेत् ॥' । नीवाटी.

### शिक्षास्वरूपं शिक्षाप्रयोजनं च

**यत्र सद्भिराधीयमाना गुणाः संक्रामन्ति तद्द्रव्यम् ॥**

अथ द्रव्यस्य लक्षणमाह– यत्रेति । यत्र यस्मिन् पुरुषद्रव्ये सद्भिः शिष्टैः आधीयमानाः नियोज्यमानाः गुणाः संक्रामन्ति स्थिराः स्युः तत् द्रव्यं राजार्हं स्यात् । तथा च भागुरिः– 'योज्यमाना उपाध्यायैर्यत्र पुंसि स्थिराश्च ते । भवन्ति नरि द्रव्यं तत्प्रोच्यते पार्थिवोचितम् ॥' । नीवाटी.

**यतो द्रव्यप्रकृतेरप्यस्ति पुरुषः संकीर्णगजवत् ॥**

अथ द्रव्यप्रकृतेर्यदि तदद्रव्यप्रकृतिर्भवति तस्य राजकुलस्य यादृग्भवति तदाह– यत इति । यतः कारणात् द्रव्यप्रकृतेः उत्तमपुरुषस्य सर्वगुणयुक्तस्य सकाशात् क्वचित् पुरुषः संकीर्णगजसदृशो भवति मिश्रगुणः । यथा भद्रमन्दरमृगजात्यो मिश्रगुणो गजः स राजार्हो न भवति तथा सोऽपि द्रव्यप्रकृतिः पुरुषो द्रव्यप्रकृतिना जातोऽपि । तथा च वल्लभदेवः– 'शिष्टात्मजो विदग्धोऽपि द्रव्याद्द्रव्यस्वभावकः । न स्याद्राज्यपदार्होऽसौ गजो मिश्रगुणो यथा ॥' । तथा च गुरुः– 'यः स्यात् सर्वगुणोपेतो राजद्रव्य तदुच्यते । सर्वकृत्येषु भूपानां तदर्हं कृत्यसाधनम् ॥' । नीवाटी.

**द्रव्यं हि क्रियां विनयति नाद्रव्यम् ॥**

अथ द्रव्यभूतस्य पुरुषस्य यद्भवति तदाह— द्रव्यमिति। हि यस्मात्कारणात् यत् पुरुषद्रव्यं भवति तत् क्रियां राजलक्षणां विनयति भोग्यतां नयति, नाद्रव्यं गुणच्युतम्। तथा च भागुरिः— 'गुणाढ्यैः पुरुषैः कृत्यं भूपतीनां प्रसिध्यति। महत्तरमपि प्रायो निर्गुणैरपि नो लघु ॥'। नीवाटी.

**शुश्रूषाश्रवणग्रहणधारणाविज्ञानोहापोहतत्त्वाभिनिवेशा बुद्धिगुणाः ॥**

अथ बुद्धिगुणानां लक्षणमाह— शुश्रूषेति। एते अष्टावपि बुद्धिगुणाः। नीवाटी.

**श्रोतुमिच्छा शुश्रूषा ॥**

**श्रवणमाकर्णनम् ॥**

**ग्रहणं शास्त्रार्थोपादानम् ॥**

**धारणमविस्मरणम् ॥**

**मोहसंदेहविपर्यासव्युदासेन ज्ञानं विज्ञानम् ॥**

**विज्ञातमर्थमवलम्ब्यान्येषु व्याप्त्या तथाविधवितर्कणमूहः ॥**

**उक्तियुक्तिभ्यां विरुद्धादर्थात् प्रत्यभावसंभावनयां व्यावर्तनमपोहः ॥**

**अथवा ज्ञानसामान्यमूहो ज्ञानविशेषोऽपोहः ॥**

**विज्ञानोहापोहानुगमविशुद्धमिदमित्थमेवेति निश्चयस्तत्त्वाभिनिवेशः ॥**

एतेषां व्याख्यानं स्वयमाचार्येण कृतम्। तद्यथा— श्रोतुमिति। नीवाटी.

विद्यालक्षणम्

**याः समधिगम्याऽऽत्मनो हितमवैत्यहितं चापोहति ता विद्याः ॥**

अथ विद्यानां स्वरूपमाह— याः समधिगम्येति। याः समधिगम्य ज्ञात्वा आत्मनो हितमवैति उपार्जयति, अहितं चापोहति नाशं नयति, ता विद्याः कथ्यन्ते, शेषाश्चाविद्याः। तथा च भागुरिः— 'यस्तु विद्यामधीत्याथ हितमात्मनि संचयेत्। अहितं नाशयेद्विद्यास्ताश्चान्याः क्लेशदा मताः ॥'। नीवाटी.

राज्ञा कर्तव्यं विद्याचतुष्टयाध्ययनम्, विद्याचतुष्टयप्रयोजनम्, विद्यावृद्धोपासना राज्ञा कर्तव्या

**आन्वीक्षिकी त्रयी वार्ता दण्डनीतिरिति चतस्रो राजविद्याः ॥**

अथ राजविद्यानां संज्ञाः संख्याश्चाऽऽह— आन्वीक्षिकीति। नीवाटी.

**अधीयानो ह्यान्वीक्षिकीं कार्याणां बलाबलं हेतुभिर्विचारयति, व्यसनेषु न विषीदति, नाभ्युदयेन विकार्यते, समधिगच्छति प्रज्ञावाक्यवैशारद्यम् ॥**

आन्वीक्षिकीमभ्यस्यतो राज्ञो यद्भवति तदाह— अधीयान इति। गतार्थमेतत्। नीवाटी.

**त्रयीं पठन् वर्णाचारेष्वतीव प्रगल्भते, जानाति च समस्तामपि धर्माधर्मस्थितिम् ॥**

गतार्थमेतत्। नीवाटी.

**युक्तितः प्रवर्तयन् वार्तां सर्वमपि जीवलोकमभिनन्दयति लभते च स्वयं सर्वानपि कामान् ॥**

गतार्थमेतत्। नीवाटी.

**यम इवापराधिषु दण्डप्रणयनेन विद्यमाने राज्ञि न प्रजाः स्वमर्यादामतिक्रामन्ति प्रसीदन्ति च त्रिवर्गफला विभूतयः ॥**

गतार्थमेतत्। नीवाटी.

**आन्वीक्षिक्यध्यात्मविषये, त्रयी वेदयज्ञादिषु, वार्ता कृषिकर्मादिका, दण्डनीतिः साधुपालनदुष्टनिग्रहः ॥**

अथ चतसृणामपि विद्यानां प्रयोजनमाह— आन्वीक्षिकीति। गतार्थमेतत्। तथा च गुरुः— 'आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ। अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥'। नीवाटी.

**चेतयते च विद्यावृद्धसेवायाम् ॥**

अथ राजा यथा विद्यां जानाति तथाऽऽह— चेतयते चेति। वृद्धशब्देन धर्मशास्त्राणि प्रोच्यन्ते, न वलिपलितभाजः। तथा च नारदः— 'न तेन वृद्धो भवति

येनास्य पलितं शिरः । यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥ ' । नीवाटी.

**अजातविद्यावृद्धसंयोगो हि राजा निरङ्कुशो गज इव सद्यो विनश्यति ॥**

अथ राजाऽजातविद्यावृद्धसंयोगो यथा भवति तथाऽऽह — अजातेति । यो राजा अजातवृद्धसेवो भवति स निरङ्कुशः उन्मार्गगामी भवति, ततोऽङ्कुशरहितो गज इव सद्यः शीघ्रं विनश्यति । तस्माद्राज्ञा विद्या ज्ञातव्या वृद्धाश्च सेवनीयाः । तथा च ऋषिपुत्रः— ' यो विद्यां वेत्ति नो राजा वृद्धान्नैवोपसेवते । स शीघ्रं नाशमायाति निरङ्कुश इव द्विपः ॥ ' । नीवाटी.

**अनधीयानोऽपि विशिष्टजनसंसर्गात्परां व्युत्पत्तिमवाप्नोति ॥**

अथ राज्ञो विशिष्टसङ्गेन यद्भवति तदाह— अनधीयानोऽपीति । अनधीयानोऽपि अपठन्नपि विद्याः शिष्टजनसेवनात्परां व्युत्पत्तिमवाप्नोति उत्तमं विवेकं लभते जानातीत्यर्थः । तथा च व्यासः— ' विवेकी साधुसङ्गेन जडोऽपि हि प्रजायते । चन्द्रांशुसेवनान्नूनं यद्वच्च कुमुदाकरः ॥ ' । नीवाटी.

**अन्यैव काचित्खलु छायोपजलतरूणाम् ॥**

अथ भूपस्य साधुसङ्गाद्यद्भवति तदाह— अन्यैवेति । उप समीपे जलस्य स्थितानां तरूणां काचिदपूर्वा छाया कान्तिः भवति । तथा च वल्लभदेवः— ' अन्याऽपि जायते शोभा भूपस्यापि जडात्मनः । साधुसङ्गाद्धि वृक्षस्य सलिलादूरवर्तिनः ॥ ' । नीवाटी.

**वंशवृत्तविद्याभिजनविशुद्धा हि राज्ञामुपाध्यायाः ॥**

अथ राज्ञां यादृशा उपाध्याया भवन्ति तानाह— वंशेति । राज्ञां भूपतीनां उपाध्यायाः गुरवः कीदृशा भवन्ति योग्याः ? वंशवृत्तविद्याभिजनशुद्धाः । वंशोद्भवाः स्ववंशे पूर्वेषां ये पाठकाः, क्रमागता इत्यर्थः । तथा वृत्तशब्देन चारित्रमभिधीयते । तथा विद्याधिकाः । तथा अभिजनशब्देन कुलीनता प्रोच्यते, स्ववंशेऽपि ये जारचौराद्या न भवन्ति ते भूपतीनां विद्याधिगमे योग्याः । तथा नारदः— ' पूर्वेषां पाठका येषां पूर्वजा वृत्तसंयुताः । विद्याकुलीनतायुक्ता नृपाणां गुरवश्च ते ॥ ' । नीवाटी.

**शिष्टानां नीचैराचरन्नरपतिरिहलोके स्वर्गे च महीयते ॥**

अथ शिष्टानां प्रणतस्य नृपतेर्यद्भवति तदाह— शिष्टानामिति । माहात्म्यमवाप्नोति स्वर्गेऽपि देवैः पूज्यते । तथा च हारीतः— ' साधुपूजापरो राजा माहात्म्यं प्राप्य भूतले । स्वर्गगतस्ततो देवैरिन्द्राद्यैरपि पूज्यते ॥ ' । नीवाटी.

**राजा हि परमं दैवतं नासौ कस्मैचित्प्रणमत्यन्यत्र गुरुजनेभ्यः ॥**

अथ राजा यादृशो भवति तदाह— राजेति । योऽसौ राजा स किंविशिष्टः ? परमं दैवतम् ( कर्तारमित्यर्थः ? ) । तेन कस्यचिन्नम्रतां न गच्छति अन्यत्र गुरुजनेभ्यः पूज्यान् मुक्त्वा मातृपितृपूर्वकान् । तथा च भृगुः— 'अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च । तेजसास्य( ? ) नृपस्तेन कस्यचिन्न नतिं व्रजेत् ॥ ' । नीवाटी.

**वरमज्ञानं नाशिष्टजनसेवया विद्या ॥**

अथाशिष्टसकाशाद्विद्याया यद्भवति तदाह— वरमिति । वरं प्रधानं अज्ञानं मूर्खत्वम् , नाशिष्टजनसेवया दुर्जनशुश्रूषया विद्याया आप्तिः । तथा च हारीतः— ' वरं जनस्य मूर्खत्वं नाशिष्टजनसेवया । पाण्डित्यं यस्य संसर्गात् पापात्मा जायते नृपः ॥ ' । नीवाटी.

**अलं तेनामृतेन यत्रास्ति विषसंसर्गः ॥**

अथाशिष्टसङ्गाद्दोषमाह— अलमिति । अलं पर्याप्तं तिष्ठतु तदमृतम् , यत्रास्ति विषसंसर्गः , कालकूटमध्यगतम् । एतदुक्तं भवति— अमृतमपि कालकूटमिश्रं मारयति, विद्या याऽमृतमपि कालकूटलक्षणात्पापजनादाप्तं तत् किंचित् पापं करोति, येन मृत्युमवाप्नोति । तथा च नारदः— ' नास्तिकानां मतं शिष्यः पीयूषमिव मन्यते । दुःखावहं परे लोके नो चेद्विषमिव स्मृता ( ? ) ॥ ' । नीवाटी.

**गुरुजनशीलमनुसरन्ति प्रायेण शिष्याः ॥**

अथ गुरूणां शिष्या यादृशा भवन्ति तानाह– गुरुजनेति । ये शिष्याः छात्राः भवन्ति ते प्रायेण बाहुल्येन गुरूणां शीलमनुसरन्ति तेन व्यवहरन्ति । तस्मात् सुशीला गुरवः कार्याः । तथा च वर्गः– ' यादृशान् सेवते मर्त्यस्तादृक्चेष्टा प्रजायते । यादृशं स्पृशते देशं वायुस्तद्गन्धमावहेत् ॥ ' । नीवाटी.

**नवेषु मृद्भाजनेषु लग्नः संस्कारो ब्रह्मणाऽप्यन्यथा कर्तुं न शक्यते ॥**

अथ सुकुलशीलगुरुसेवनाद्यद्भवति तदाह– नवेष्विति । शुभो वा यदि वा निकृष्टः । तस्मात्सुमतिरुपाध्यायः कार्यः । तथा च वर्गः– ' कुविद्यां वा सुविद्यां वा प्रथमं यः पठेन्नरः । तथा कृत्यानि कुर्वाणो न कथंचिन्निवर्तते ॥ ' । नीवाटी.

**अन्ध इव वरं परप्रणेयो राजा न ज्ञानलवदुर्विदग्धः ॥**

अथ राजा स्वल्पज्ञानो यथा भवति तदाह– अन्ध इवेति । वरं श्रेष्ठं जात्यन्धो राजा अन्येन नीयमानः कुमार्गे न गच्छति, परप्रणेयो यतः । यः पुनः ज्ञानलवः स्तोकं जानाति, न प्रभूतम्, स दुर्विदग्धो भवति विदग्धतां न वेत्ति, नित्यं षाड्गुण्यविषये विपर्यस्तमाचरन्नुन्मार्गेण गच्छति, अन्यायी भवतीत्यर्थः । तथा च गुरुः– ' मन्त्रिभिर्मन्त्रकुशलैरन्धः संचार्यते नृपः । कुमार्गेण न स याति स्वल्पज्ञानस्तु गच्छति ॥ ' । नीवाटी.

**नीलीरक्ते वस्त्र इव को नाम दुर्विदग्धे राज्ञि रागान्तरमाधत्ते ॥**

अथ दुर्विदग्धस्य राज्ञो यद्भवति तदाह– नीलीरक्त इति । अहो ! को नाम जनो दुर्विदग्धे दुश्चेष्टिते भूपाले ज्ञानलवाश्रये रागान्तरं अन्यभावं तस्य कर्तुं समर्थः ? अपि तु न कश्चित् । कस्मिन्निव ? नीलीरक्ते वस्त्रे इव । यथा नीलीरक्ते वस्त्रे नान्यो लभते ( रागः ), न तु उत्सारयितुं शक्यते, तथा भूपस्यापि । तथा च नारदः– ' दुर्विदग्धस्य भूपस्य भावः शक्येत नान्यथा । कर्तुं वर्णोऽत्र यद्वच्च नीलीरक्तस्य वाससः ॥ ' । नीवाटी.

**यथार्थवादो विदुषां श्रेयस्करो यदि न राजा गुणप्रद्वेषी ॥**

अथ यथार्थवादिनां विदुषां यद्भवति तदाह– यथार्थवाद इति । यदि न राजा गुणान् द्वेष्टि निन्दति तदा यथार्थवादः स्फुटवचनानि परुषाण्यपि सुखावहानि तद्विदुषां पण्डितानां श्रेयस्कराणि तस्य राज्ञो भवन्ति । किं यदि न स्यात् ?.यदि राजा गुणहन्ता न भवति गुणशीलो भवति । तथा च हारीतः– ' श्रेयस्कराणि वाक्यानि स्युरुक्तानि यथार्थतः । विद्वद्भिर्यदि भूपालो गुणद्वेषी न चेद्भवेत् ॥ ' । नीवाटी.

**वरमात्मनो मरणं नाहितोपदेशः स्वामिषु ॥**

अथ विद्वद्भिः स्वामिनो यथा भाव्यं तथाऽऽह– वरमिति । साधुजनस्य वरमात्ममृत्युः, ( किंतु ) गुणप्रद्वेषिणोऽपि नृपतेः ( अहितोपदेशो न वरम् ) । तथा च व्यासः– ' अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः । यथाऽऽत्मदोषनाशाय विदुरेणाम्बिकासुतः ॥ ' । नीवाटी.

आन्वीक्षिक्याः स्वरूपं प्रयोजनं च

**[1]आत्ममनोमरुत्तत्त्वसमतायोगलक्षणो ह्यध्यात्मयोगः ॥**

अथाध्यात्मयोगलक्षणमाह– आत्मेति । आत्मा चिद्रूपः, मनः प्रसिद्धम्, मरुतः शरीरस्था वायवः, तत्त्वं पृथिव्यादि, तेषां समं एकहेलया समतालक्षणः स हि स्फुटं अध्यात्मयोगः कथ्यते । तथा च ऋषिपुत्रकः– ' आत्मा मनो मरुत्तत्त्वं सर्वेषां समता यदा । तदा त्वध्यात्मयोगः स्यान्नराणां ज्ञानदः स्मृतः ॥ ' । तथा च व्यासः– ' न पद्मासनतो योगो न च नासाग्रवीक्षणात् । मनसश्चेन्द्रियाणां च संयोगो योग उच्यते ॥ ' । नीवाटी.

---

( १ ) नीवा. ६।१–४५.

**अध्यात्मज्ञो हि राजा सहजशारीरमानसागन्तुभिर्दोषैर्न बाध्यते ॥**

अथ अध्यात्मज्ञस्य राज्ञो यद्भवति तदाह– अध्यात्मज्ञ इति । यो राजा अध्यात्मज्ञो भवति । तस्य किं स्यात् ? एतेन दोषचतुष्टयेन स राजा न बाध्यते नाऽऽश्लिष्यते । केन केन तावत् ? सहजेन सत्त्वं मुक्त्वा रजसा तमसा च । कश्चित् प्रकृत्या राजसो भवति, कश्चित्तामसः, कश्चिदुभाभ्यां सहितः स्यात्, स ताभ्यां न बाध्यते । तथा शारीराश्च ये दोषाः रोगसंभवगलगण्डादयः, तथा मानसाश्च ये दोषाः परकलत्रादयः तैरपि न बाध्यते । तथा आगन्तुकैर्भाविभिरपि न बाध्यते । तथा च नारदः– ' अध्यात्मज्ञो महीपालो न दोषैः परिभूयते । सहजागन्तुकैश्चापि शारीरैर्मानसैस्तथा ॥ ' । नीवाटी.

**इन्द्रियाणि मनो विषया ज्ञानं भोगायतनमित्यात्मारामः ॥**

अथाऽऽत्मनः क्रीडास्थानान्याह– इन्द्रियाणीति । भोगायतनं विलासस्थानम् । एतैः सर्वैरासमन्तात् रमते इत्यारामः, क्रीडां करोतीत्यर्थः । तथा च विभिटीकः– ' इन्द्रियाणि मनो ज्ञानं विषया भोग एव च । विश्वरूपस्य चैतानि क्रीडास्थानानि कृत्स्नशः ॥ ' । नीवाटी.

**यत्राहमित्यनुपचरितप्रत्ययः स आत्मा ॥**

अथाऽऽत्मनः स्वरूपमाह– यत्रेति । यस्य स्वरूपं न निश्चीयते, यद्येवं तर्हि आत्मना स प्रत्ययो न ज्ञायते ' किं वा शुक्लः, किं वा नीलः ? ' इति, स आत्मा । तथा च श्रुतिः– ' यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तम् । सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति ॥ ' । नीवाटी.

**असत्यात्मनः प्रेत्यभावे विदुषां विफलं खलु सर्वमनुष्ठानम् ॥**

अथाऽऽत्मनः प्रतिष्ठार्थमाह– असत्यात्मन इति । अत्र नास्तिका अप्येवं वदन्ति ' आत्मा नास्ति ' इति । तद्यथा आत्मनः प्रेत्यभावो न भवति, प्रेत्यभावशब्देनाहंप्रत्ययोऽभिधीयते, स यदि न भवति तदेतेषां दीक्षितानां खलु निश्चयेन विफलं व्यर्थं सर्वमनुष्ठानं स्नानदानजपहोमादिकम्, तदेवं न भवति, आत्माऽस्त्येव । तथा च याज्ञवल्क्यः– ' आत्मा सर्वस्य लोकस्य सर्वं भुङ्क्ते शुभाशुभम् । मृतस्यान्यत्समासाद्य स्वकर्मार्हं कलेवरम् ॥ ' । नीवाटी.

**यतः स्मृतिः प्रत्यवमर्षणमूहापोहनं शिक्षालापक्रियाग्रहणं च भवति तन्मनः ॥**

अथ मनःस्वरूपमाह– यत इति । यतः यस्मात् स्मृतिर्भवति ' मयैतत्कृत्यं कृतं करिष्यते वा ', तथा प्रत्यवमर्षणं चिन्ता, तथा ऊहापोहनम्, ऊहा संदिग्धस्य पर्यालोचनम्, अपोहः तस्य निश्चयः, शिक्षालापग्रहणं यदि कश्चिच्छिक्षां ददाति अथवा आत्मालापं करोति तस्य यत् ग्रहणं अवधारणं तन्मनो भवति । तथा च गुरुः– 'ऊहापोहौ तथा चिन्ता परालापावधारणम् । यतः संजायते पुंसां तन्मनः परिकीर्तितम् ॥ ' । नीवाटी.

**आत्मनो विषयानुभवनद्वाराणीन्द्रियाणि ॥**

अथेन्द्रियाणां स्वरूपमाह– आत्मन इति । विषयाणामनुभवनं विषयानुभवनं विषयसेवनम्, तदिन्द्रियद्वारेण साहाय्येनाऽऽत्मनो भवति । तथा च रैभ्यः– 'इन्द्रियाणि निजान् ग्राह्यविषयांश्च पृथक्पृथक् । आत्मनः संप्रयच्छन्ति सुभृत्याः सुप्रभोर्यथा ॥ ' । नीवाटी.

**शब्दस्पर्शरसरूपगन्धा हि विषयाः ॥**

अथ विषयाणां संज्ञामाह– शब्देति । गतार्थमेतत् । नीवाटी.

**समाधीन्द्रियद्वारेण विप्रकृष्टसंनिकृष्टावबोधो ज्ञानम् ॥**

अथ ज्ञानस्य स्वरूपमाह– समाधीति । यज्ज्ञानं तत्किंविशिष्टम् ? विप्रकृष्टसंनिकृष्टावबोधः । विप्रकृष्टशब्देन परोक्षमभिधीयते, संनिकृष्टः प्रत्यक्षः, ताभ्यां अवबोधः प्रकाशः, तत् ज्ञानम् । केन तौ द्वावपि ज्ञेयौ ? ध्यानेन्द्रियद्वारेण । योऽसौ परोक्षः स ध्यानद्वारेण समाधिना ज्ञेयः एतत्पृच्छकस्य भवति एतैरहोभिः । यः पुनः प्रत्यक्षः स इन्द्रियद्वारेण । यथा श्रोत्रेण ज्ञायते

एतद्गीतम् । संप्रत्यये तत्तथा विषयी (?) । एतेषां चतुर्णामपि स्वरूपमागामिकसूत्रैर्वदिष्यत्याचार्यः ।

नीवाटी.

** सुखं प्रीतिः ॥**

अथ सुखस्य लक्षणमाह– सुखमिति । यत्र मनसः इन्द्रियाणां प्रीतिः आनन्दः भवति तत्सुखम् । तथा च हारीतः– 'मनसश्चेन्द्रियाणां च यत्राऽऽनन्दः प्रजायते । दृष्टे वा भक्षिते वाऽपि तत्सुखं संप्रकीर्तितम् ॥' ।

नीवाटी.

**तत्सुखमप्यसुखं यत्र नास्ति मनोनिर्वृतिः ॥**

अथासुखस्यापि स्वरूपमाह– तत्सुखमिति । नास्ति सुखं लोकानां पुत्रकलत्रधनधान्यसमुत्थं भवति तत्, यस्मिन् पुत्रे मनसा वैराग्यं भवति कलत्रे वा धने वा धान्ये वा । तत्सुखमपि दुःखं भवति । तथा च वर्गः– 'समृद्धस्यापि मर्त्यस्य मनो यदि विरागकृत् । दुःखी स तु परिज्ञेयो मनस्तुष्ट्या सुखं यतः ॥' ।

नीवाटी.

**अभ्यासाभिमानसंप्रत्ययविषयाः सुखस्य कारणानि ॥**

अथ सुखस्य कारणान्याह– अभ्यासाभिमानेति । एतानि चत्वारि नरस्य सुखकारणानि । एकं तावदभ्यासः यः स्वकर्मणः । तथाऽभिमानं अभि समन्तात् मानं सन्मानं तद्राजादीनां सकाशात् । तथा संप्रत्ययः । संप्रत्ययशब्देनाऽऽत्मनः प्रतिष्ठाकारणमुच्यते अयोग्यमपि । विषयाः प्रसिद्धाः, तेषां सेवनम् । तत्र तावदभ्यासस्य सुखकारणत्वमुच्यते– 'अभ्यासाच्च भवेद्विद्या तथा च निजकर्मणः । तया पूजामवाप्नोति तस्याः स्यात्सर्वदा सुखी ॥' । अथ मानस्य– 'सन्मानपूर्वको लाभः स स्तोकोऽपि सुखावहः । मानहीनः प्रभूतोऽपि साधुभिर्न प्रशस्यते ॥' । अथ विषयस्य– 'सेवनं विषयाणां यत्तन्मितं सुखकारणम् । अमितं च पुनस्तेषां दारिद्र्यकारणं परम् ॥' । (अथ संप्रत्ययस्य ।) तथा च हारीतः– 'अविद्योऽपि गुणान्मर्त्यः स्वशक्त्या यः प्रतिष्ठयेत् । तत्सुखं जायते तस्य स्वप्रतिष्ठासमुद्भवम् ॥' ।

नीवाटी.

**क्रियातिशयो विपाकहेतुरभ्यासः ॥**

अथाभ्यासस्य स्वरूपमाह– क्रियेति । क्रियायाः अतिशयः पुनः पुनरावर्तनम्, येन परिपाकः परिणतिर्भवति । साऽभ्यासेन भवति । अभ्यसनमभ्यासः । एतदुक्तं भवति– विद्यामभ्यस्य यः परिणतिं श्रयति शिल्पं तावत्कदाचित्त्यजति (?), तत्पूज्यो भवति, ततः सुखी स्यात् । एतस्मात् कारणादभ्यासः सुखहेतुः । तथा च हारीतः– 'अभ्यासाद्धार्यते विद्या विद्यया लभ्यते धनम् । धनलाभात्सुखी मर्त्यो जायते नात्र संशयः ॥' ।

नीवाटी.

**प्रश्रयसत्कारादिलाभेनाऽऽत्मनो यदुत्कृष्टत्वसंभावनमभिमानः ॥**

अथाभिमानस्य लक्षणमाह– प्रश्रयेति । प्रश्रयः विनयः, सत्कारः पूजा, इत्यादिभिरन्यैश्च स्पष्टवाक्यप्रसादनस्तुत्यादिभिर्वचनैर्लाभः, तेनाऽऽत्मनो य उत्कर्षः आनन्दः तेन या संभावना साधुमध्ये भवति तदभिमानमुच्यते द्वितीयं सुखकारणम् । तथा च नारदः– 'सत्कारपूर्वो यो लाभः स स्तोकोऽपि सुखावहः । अभिमानं ततो धत्ते साधुलोकस्य मध्यतः ॥' ।

नीवाटी.

**अतद्गुणे वस्तुनि तद्गुणत्वेनाभिनिवेशः संप्रत्ययः ॥**

अथ संप्रत्ययलक्षणमाह– अतद्गुण इति । अतद्गुणे वस्तुनि निर्गुणे पदार्थे तद्गुणत्वेनाभिनिवेशः स्वशक्त्या गुणप्रतिष्ठया संप्रत्यय उच्यते तृतीयं सुखकारणम् । एतदुक्तं भवति– श्रोत्रेण एतद्वाद्यं सुन्दरमेतदसुन्दरम्, तथा त्वचा एतन्मृदुरेतत्कठोरम्, तथा दृष्ट्या एतद्भव्यमेतदभव्यम्, तथा जिह्वयैतन्मधुरमेतत्कटुकम्, तथा घ्राणेनैतत्सुगन्धमेतद्दुर्गन्धमिति । तथा च नारदः–

---

* 'सुखं प्रीतिः' इत्यारभ्य 'अतद्गुणे वस्तुनि' इत्यन्तानां सूत्राणां आदर्शपुस्तकस्थः क्रमो विषयानुरोधेन न सम्यक्, अतोऽस्माभिर्विषयानुरोधेन अन्यलिखितपुस्तकमनुसृत्य परिवर्तनं कृतम् ।

'परोक्षो यो भवेदर्थः स ज्ञेयोऽत्र समाधिना । प्रत्यक्षश्चेन्द्रियैः सर्वैर्निजगोचरमागतः ॥' । नीवाटी.

**इन्द्रियमनस्तर्पणो भावो विषयः ॥**

अथ विषयस्वरूपमाह– इन्द्रियेति । येन भावेन कृतेनेन्द्रियाणां तर्पणं भवति मनसश्च तुष्टिर्भवति स भावो विषय उच्यते । तच्चतुर्थं सुखकारणम् । तथा च शुक्रः– 'मनसश्चेन्द्रियाणां च संतोषो येन जायते । स भावो विषयः प्रोक्तः प्राणिनां सौख्यदायकः ॥' । नीवाटी.

**दुःखमप्रीतिः ॥**

अथ दुःखस्य लक्षणमाह– दुःखमिति । यस्मिन् वस्तुनि दृष्टे आच्छादिते वा अप्रीतिः वैराग्यं भवति तत् दुःखमभिधीयते श्रेष्ठेऽपि च वस्तुनि । तथा च शुक्रः– 'यत्र नो जायते प्रीतिर्दृष्टे वाऽऽच्छादितेऽपि वा । तच्छ्रेष्ठमपि दुःखाय प्राणिनां संप्रजायते ॥' । नीवाटी.

**तद्दुःखमपि न दुःखं यत्र न संक्लिश्यते मनः ॥**

अथ सुखस्य लक्षणमाह– तद्दुःखमिति । यत्र यस्मिन् पदार्थे दृष्टे वा स्मृते वा मनसः क्लेशः न भवति तत् दुःखमपि अदुःखमेव । '............... । कथं कारयेद्व्याधिः स नश्यति विनौषधम् ॥' । नीवाटी.

**दुःखं चतुर्विधं सहजं दोषजमागन्तुकमन्तरङ्गजं चेति ॥**

अथ चतुर्विधस्य दुःखस्य स्वरूपमाह– दुःखमिति । एतस्य चतुर्विधस्य दुःखस्याऽऽचार्येणापि व्याख्या कृता । नीवाटी.

**सहजं क्षुत्तृषामनोभूभवं चेति ॥**

**दोषजं वातपित्तकफवैषम्यसंभूतम् ॥**

**आगन्तुकं वर्षातपादिजनितम् ॥**

गतार्थमेतत् । नीवाटी.

**न्यक्कारावज्ञेच्छाविघातादिसमुत्थमन्तरङ्गजम् ॥**

गतार्थमेतत् । नीवाटी.

**न तस्यैहिकामुष्मिकं च फलमस्ति यः क्लेशायासाभ्यां भवति विप्लवप्रकृतिः ॥**

अथ पुरुषस्य यथा लोकद्वयनाशो भवति तदाह– न तस्येति । क्लेशः कष्टम्, आयासः खेदः, ताभ्यां यः पुरुषः विप्लवप्रकृतिः नष्टमतिर्भवति । तत्र क्वापि नास्ति न विद्यते । किं तत् ? फलम् । किंविशिष्टम् ? ऐहिकं इहजन्मभवं तथा आमुत्रिकं वा पारलौकिकम् । तथा च व्यासः– 'जीयते क्लेशखेदाभ्यां सदा कापुरुषोऽत्र यः । न तस्य मर्त्ये यो लाभः कुतः स्वर्गसमुद्भवः ॥' । नीवाटी.

**स किंपुरुषो यस्य महाभियोगे सुवंशधनुष इव नाधिकं जायते बलम् ॥**

सुवंशस्य पुरुषस्य माहात्म्यमाह– स इति । यस्य पुरुषस्य महाभियोगे आपत्काले अधिकं बलं पौरुषं न जायते स पुरुषः स्त्रीति मन्तव्यः । कस्येव ? सुवंशधनुष इव । एतदुक्तं भवति– यत्सुवंशधनुर्भवति तस्य शराक्षेपकाले दृढता भवति, कुवंशजस्य पुनः शिथिलता । तथा च गुरुः– 'युद्धकाले सुवंश्यानां वीर्योत्कर्षः प्रजायते । येषां च वीर्यहानिः स्यात्तेऽत्र ज्ञेया नपुंसकाः ॥' । नीवाटी.

**आगामिक्रियाहेतुरभिलाषो वेच्छा ॥**

अथाभिलाषस्य स्वरूपमाह– आगामिक्रियेति । आगामिक्रिया भविष्यत्कृत्यम्, तस्य हेतुः कारणं अभिलाषः कथ्यते, वा विकल्पेन इच्छा वेति । तथा च गुरुः– 'भाविकृत्यस्य यो हेतुरभिलाषः स उच्यते । इच्छा वा तस्य संधा या (सा) भवेत्प्राणिनां सदा ॥' । नीवाटी.

**आत्मनः प्रत्यवायेभ्यः प्रत्यावर्तनहेतुर्द्वेषोऽनभिलाषो वा ॥**

अथाऽऽत्मनः प्रत्यवायेषु यत्पुरुषेण कर्तव्यं तदाह– आत्मन इति । आत्मनः सकाशात् ये प्रत्यवायाः दोषाः भवन्ति, तेषां प्रत्यावर्तनं व्याघोटनम्, तस्य हेतुः कारणं द्वेषः जुगुप्सा अनभिलाषो वा अवाञ्छा वा । तथा च गुरुः– 'आत्मनो यदि दोषाः स्युस्ते निन्द्या विबुधै-

ज्ञैनैः । अथवा नैव कर्तव्या वाञ्छा तेषां कदाचन ॥ ' । नीवाटी.

**हिताहितप्राप्तिपरिहारहेतुरुत्साहः ॥**

अथोत्साहस्य स्वरूपमाह– हिताहितेति । यस्मिन् कर्मणि क्रियमाणे हितस्य अभीष्टस्य प्राप्तिर्भवति, तथा अहितस्य अनिष्टस्य परिहारः त्यागः भवति, स उत्साहः हृदयानन्दः कथ्यते । तथा च वर्गः– ' शुभाप्तिर्यत्र कर्तव्या जायते पापवर्जनम् । हृदयस्य परा तुष्टिः स उत्साहः प्रकीर्तितः ॥ ' । नीवाटी.

**प्रयत्नः परनिमित्तको भावः ॥**

अथ प्रयत्नस्य स्वरूपमाह– प्रयत्न इति । परार्थे अन्यकृते यो भावः चित्तं ' मयाऽस्यैतदवश्यं कर्तव्यम् ' इति, स प्रयत्नः । तथा च गर्गः– ' परस्य करणीये यश्चित्तं निश्चित्य धार्यते । प्रयत्नः स च विज्ञेयो गर्गस्य वचनं यथा ॥ ' । नीवाटी.

**सातिशयलाभः संस्कारः ॥**

अथ संस्कारस्य स्वरूपमाह– सातिशयलाभ इति । यः सातिशयः सातिरेकः लाभः भवति जनात् नृपतेर्वा, स संस्कारः प्रतिष्ठासंज्ञः । अत्रापि गर्गः– ' सन्मानाद्भूमिपालस्य यो लाभः संप्रजायते । महाजनाच्च सद्भक्तेः प्रतिष्ठा तस्य सा भवेत् ॥ ' । नीवाटी.

**भोगायतनं शरीरम् ॥**

अथ शरीरस्य स्वरूपमाह– भोगायतनमिति । भुज्यन्ते इति भोगाः शुभाशुभाः, तेषां आयतनं गृहं एतच्छरीरम् । तथा च हारीतः– ' सुखदुःखानि यान्यत्र कीर्त्यन्ते धरणीतले । तेषां गृहं शरीरं तु यतः कर्माणि सेवते ॥ ' । नीवाटी.

**ऐहिकव्यवहारप्रसाधनपरं लोकायतिकम् ॥**

अथ लोकायतिकस्य स्वरूपमाह– ऐहिकेति । यत् लोकायतं नास्तिकदर्शनं तदनुष्ठानं च । तत्किंविशिष्टम् ? ऐहिकव्यवहारप्रसाधनं केवलं मद्यमांसस्त्रीसेवानिमित्तम्, न परत्रार्थम् । तथा च गुरुः– ' अग्निहोत्रं त्रयो वेदाः प्रव्रज्या नग्नमुण्डता । बुद्धिपौरुषहीनानां जीवितेऽदो मतं गुरुः ( ? जीविकेति मतं गुरोः ) ॥ ' । नीवाटी.

**लोकायतज्ञो हि राजा राष्ट्रकण्टकानुच्छेदयति ॥**

अथ भूपतेर्लोकायतिकशास्त्रज्ञस्य यद्भवति तदाह– लोकायतज्ञ इति । किल लोकायतं निषिद्धं साधूनाम्, यतस्तेन ज्ञातेन निर्दयता भवति । तथापि राज्ञा बोद्धव्यम्, यतस्तेन ज्ञातेन जारचौरमर्यादाभेदकानामुपरि निर्दयत्वं करोति राष्ट्रक्षेमाय । तथा च शुक्रः– ' दयां करोति यो राजा राष्ट्रसंतापकारिणाम् । स राज्यभ्रंशमाप्नोति राष्ट्रोच्छेदादसंशयम् ॥ ' । नीवाटी.

**न खल्वेकान्ततो यतीनामप्यनवद्याऽस्ति क्रिया ॥**

अथैकान्तत्वदूषणमाह– न खल्विति । यतीनामपि संन्यस्तानामपि एकान्ततः नैरन्तर्येण क्रियमाणा क्रिया नानवद्या, अपि तु साध्वपवादाय तेषामपि क्रियावसानमस्ति । तथा च वर्गः– ' अनवद्या सदा तावन्न खल्वेकान्ततः क्रिया । यतीनामपि विद्येत तेषामपि यतश्च्युतिः ॥ ' । नीवाटी.

**एकान्तेन कारुण्यपरः करतलगतमप्यर्थं रक्षितुं न क्षमः ॥**

अथैकान्तेन कारुण्यपरस्य यद्भवति तदाह– एकान्तेनेति । एकान्तेन नैरन्तर्येण यो राजा कारुण्यपरः दयापरः भवति स हस्तगतमपि वित्तं रक्षितुं न क्षमः । तथा च शुक्रः– ' दया साधुषु कर्तव्या सीदमानेषु जन्तुषु । असाधुषु दया शुक्रः( ? यायुक्तः) स्वचित्तादपि भ्रश्यति ॥ ' । नीवाटी.

**प्रशमैकचित्तं को नाम न परिभवति ॥**

अथ प्रशमैकचित्तस्य भूपतेर्यद्भवति तदाह– प्रशमैकचित्तमिति । केवलमक्रोधो यस्य चित्ते वसति तं तथाभूतं को नामाहो न परिभवति ? अपि तु सर्वेऽप्यवज्ञया पश्यन्ति । तथा च भृगुः– ' सदा तु शान्तचित्तो यः पुरुषः संप्रजायते । तस्य भार्याऽपि नो पादौ प्रक्षालयति कर्हिचित् ॥ ' । नीवाटी.

**अपराधकारिषु प्रशमो यतीनां भूषणं न महीपतीनाम् ॥**

अथ भूपैर्यादृशैर्भाव्यं तदाह– अपराधकारिष्विति। अपराधकारिषु अनिष्टकारिविषये क्षमा शान्तता भूषणं यतीनां संन्यस्तानाम्, न महीपतीनाम्। तस्मात्पार्थिवेन दुष्टनिग्रहः कार्यः। तथा च– 'यो राजा निग्रहं कुर्यात् दुष्टेषु स विराजते। प्रसादे च यतस्तेषां तस्य तद्दूषणं परम् ॥'। नीवाटी.

**धिक्तं पुरुषं यस्याऽऽत्मशक्त्या न स्तः कोपप्रसादौ ॥**

अथ यथा निन्द्यः पुरुषो भवति तदाह– धिक्तमिति। (यस्य पुरुषस्याऽऽत्मशक्त्या कोपप्रसादौ न) भवतः स धिक् निन्द्यः, स पुरुषो न भवति, षण्ढ एव। तथा च व्यासः– 'प्रसादो निष्फलो यस्य कोपश्चापि निरर्थकः। न तं भर्तारमिच्छन्ति प्रजाः षण्ढमिव स्त्रियः ॥'। नीवाटी.

**स जीवन्नपि मृत एव यो न विक्रामति प्रतिकूलेषु ॥**

अथ विक्रमरहितस्य भूपतेर्यद्भवति तदाह– स इति। एवशब्दो निश्चये। स राजा जीवन्नपि मृत एव। यः किं न कुर्यात्? न विक्रामति न पराक्रमं करोति। केषु? प्रतिकूलेषु अहितेषु। तथा च शुक्रः– 'परिपन्थिषु यो राजा न करोति पराक्रमम्। स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥'। नीवाटी.

**भस्मनीव निस्तेजसि को नाम निःशङ्कः पदं (न) कुर्यात् ॥**

अथ भूयोऽपि पराक्रमरहितस्य भूपस्य यद्भवति तदाह– भस्मनीवेति। निस्तेजसि भूपतौ शौर्यरहिते राज्ञि नाम अहो को न कुर्यात् पदं परिभवं निःशङ्कः सन्? अपि तु सर्वोऽपि हीनोऽपि। कस्मिन्निव? भस्मनीव। तस्माद्भूपेन पराक्रमवता भाव्यम्। तथा च शुक्रः– 'शौर्येण रहितो राजा हीनैरप्यभिभूयते। भस्मराशिर्यथाऽनग्निर्निःशङ्कैः स्पृश्यतेऽरिभिः ॥'। नीवाटी.

**तत्पापमपि न पापं यत्र महान् धर्मानुबन्धः ॥**

अथ धर्मप्रतिष्ठामाह– तत्पापमिति। यत्र यस्मिन् पापे कृते परिणामे महान् धर्मानुबन्धो भवति धर्मप्राप्तिर्भवति तन्न पापम्, पापमपि स धर्मः किल। वधबन्धादिभिः पापं भवति परं तेषां निग्रहे कृते यथोक्ते स एव धर्मः। तथा च बादरायणः– 'त्यजेदेहं कुलस्याथ ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ पापानां निग्रहे राजा परं धर्ममवाप्नुयात्। न तेषां वधबन्धाद्यैस्तस्य पापं प्रजायते ॥'। नीवाटी.

**अन्यथा पुनर्नरकाय राज्यम् ॥**

अथ राज्ञो दुष्टनिग्रहमकुर्वाणस्य यद्भवति तदाह– अन्यथेति। अन्यथा पुनः वर्तमानस्य दुष्टानां निग्रहमकुर्वाणस्य तदेव राज्यद्वारेण नरकम्। तथा च हारीतः– 'चौरादिभिर्जनो यस्य शैथिल्येन प्रपीड्यते। स्वयं तु नरकं याति स राजा नात्र संशयः ॥'। नीवाटी.

**बन्धनान्तो नियोगः ॥**

अथ नियोगिनो यद्भवति तदाह– बन्धनान्त इति। योऽसौ नियोगः राजाधिकारः स बन्धनान्तः बन्धनादात्मी- (? नदायी) भवति। तथा च गुरुः– 'न जन्ममृत्युना बाह्यं नोच्चैस्तु पतनं विना। न नियोगच्युतो योगी नाधिकारोऽस्त्यबन्धनः ॥'। नीवाटी.

**विपदन्ता खलमैत्री ॥**

अथ खलमैत्र्याद्यद्भवति तदाह– विपदन्तेति। याऽसौ खलमैत्री दुर्जनसंगतिः सा विपदन्ता व्यसनदायिनी भवति। तथा च वल्लभदेवः– 'असत्सङ्गात्पराभूतिं याति पूज्योऽपि मानवः। लोहसङ्गाद्यतो वह्निस्ताड्यते सुघनैर्घनैः ॥'। नीवाटी.

**मरणान्तः स्त्रीषु विश्वासः ॥**

अथ स्त्रीषु विश्वासे कृते यद्भवति तदाह– मरणान्त इति। स्त्रीषु विषये योऽसौ विश्वासः स मृत्युपर्यन्तो भवति। तथा च विष्णुशर्मा– 'नीयमानः खगेन्द्रेण नागः पौण्डरिकोऽब्रवीत्। स्त्रीणां (यो) गुह्यमाख्याति तदन्तं तस्य जीवितम् ॥'। नीवाटी.

त्रयीस्वरूपं त्रयीप्रयोजनं च

**'चत्वारो वेदाः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिरिति षडङ्गानीतिहासपुराणमीमांसा-न्यायधर्मशास्त्रमिति चतुर्दशविद्यास्थानानि त्रयी ॥**

अथ त्रय्याः स्वरूपमाह- चत्वार इति । गतार्थमेतत् । नीवाटी.

**त्रयीतः खलु वर्णाश्रमाणां धर्माधर्मव्यवस्था ॥**

अथ त्रयीतो यज्ज्ञायते तदाह- त्रयीत इति । त्रयीतः सकाशात् वर्णाः ब्राह्मणक्षत्रियविट्छूद्राः, आश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थयतयः, तेषां ये आचाराः व्यवहाराः धर्माधर्मलक्षणास्तेषां या व्यवस्थितिः सा ज्ञायते इति । तथा च शुक्रः- ' मन्वाद्याः स्मृतयो याश्च त्रय्यङ्गं ताः प्रकीर्तिताः । वर्णाश्रमाणामाचारस्तासु धर्माश्च केवलम् ॥ ' । नीवाटी.

**स्वपक्षानुरागप्रवृत्त्या सर्वे समवायिनो लोकव्यवहारेष्वधिक्रियन्ते ॥**

अन्यदपि त्रयीतो यद्भवति तदाह- स्वपक्षेति । यस्यास्त्रयीतः सकाशात् सर्वे समवायिनः लिङ्गिनः शैवबौद्धकौलनास्तिकाः स्वपक्षानुरागप्रवृत्त्या निजदर्शनभक्तिसेवनालोकव्यवहारेष्वधिक्रियन्ते संबन्धानामागममनुभवन्ति (१), नान्यं दर्शनधर्मं कुर्वन्ति । तथा च गुरुः- ' परदर्शनलिङ्गं च यत्र लिङ्गी समाश्रयेत् । देशे तत्र हि रोगाः स्युः स च संयाति रौरवम् ॥ ' । नीवाटी.

**धर्मशास्त्राणि स्मृतयो वेदार्थसंग्रहाद्वेदा एव ॥**

अथ स्मृतिवेदानां लक्षणमाह- धर्मशास्त्राणीति । यानि धर्मशास्त्राणि स्मृतयः प्रोच्यन्ते ताभिर्वेदार्थसंग्रहः कार्यः । तस्मात्ता वेदा एव ज्ञातव्याः एवं निश्चयः । तथा च गुरुः- ' दुर्बोधांश्चरणाञ् ज्ञात्वा मन्दबुद्धि(भिः)रेव यत् । तेषामर्थं समादाय मुनिभिः स्मृतयः कृताः ॥ ' । नीवाटी.

(१) नीवा. ७।१-४१.

चातुर्वर्ण्यधर्माः

**अध्ययनं यजनं दानं च विप्रक्षत्रियवैश्यानां समानो धर्मः ॥**

अथ विप्रक्षत्रियवैश्यानां धर्मः प्रोच्यते- अध्ययनमिति । विप्रादीनां त्रयाणां वर्णानां अध्ययनं वेदानाम्, यजनं अग्निष्टोमादिकम्, स्वशक्त्या दानं सामान्यं तुल्यं त्रिभिरपि कर्तव्यम् । तथा च हारीत- ' वेदाभ्यासस्तथा यज्ञाः स्वशक्त्या दानमेव च । विप्रक्षत्रियवैश्यानां धर्मः साधारणः स्मृतः ॥ ' । नीवाटी.

**त्रयो वर्णा द्विजातयः ॥**

अथ क्षत्रियवैश्यानामपि ब्राह्मण्यं यद्भवति तदाह- त्रय इति । यत् क्षत्रियवैश्ययोरपि ब्राह्मण्यमुक्तं तत् पूर्वसूत्रापेक्षया, न तु जात्या । यदि पुनः क्षत्रियो वैश्यो वा ब्राह्मणो भवति तदा श्रुतिस्मृतीनामप्रमाणता भवति, तत्कथमुक्तमाचार्येण ? यतस्तेनैतदुक्तम्- अध्ययनं यजनं दानं ब्राह्मणक्षत्रियविशां समानो धर्मः । एतदर्थमुक्तम् - ' स्वाध्यायो यजनं दानं विप्रवैश्यनराधिपैः । ब्राह्मणेन तु कर्तव्यं याजनाध्यापनार्जनम् ॥ ' । नीवाटी.

**अध्यापनं याजनं प्रतिग्रहो ब्राह्मणानामेव ॥**

अथ ब्राह्मणक्षत्रियवैश्यबाह्यं केवलं ब्राह्मणानां यत् भवति तदाह- अध्यापनमिति । ब्राह्मणानामयं विशेषो यदध्यापनं कुर्वन्ति, तथा याजनं यजमानानाम्, तथा च प्रतिग्रहमपि । एतत् कर्मत्रयं न क्षत्रियवैश्यानाम् । ब्राह्मणस्य षट् कर्माणि । तथा च हारीतः- ' यजनं याजनं चैव पठनं पाठनं तथा । दानं प्रतिग्रहोपेतं षट् कर्माणि द्विजन्मनाम् ॥ ' । नीवाटी.

**भूतसंरक्षणं शस्त्राजीवनं सत्पुरुषोपकारो दीनोद्धरणं रणेऽपलायनं चेति क्षत्रियाणाम् ॥**

अथ क्षत्रियाणां यत्कर्म भवति तदाह- भूतेति । ( भूतानां प्राणिनां संरक्षणम्, शस्त्रेण आजीवनम्, सत्पुरुषाणां सज्जनानां उपकारः, ) दीनाः अन्धपङ्गुरोगिपूर्वकाः, तेषामुद्धरणं निर्वाहणं यथा भवति तथा कार्यमिति क्षत्रियाणां धर्मः । तथा च पाराशरः- ' क्षत्रियेण मृगाः

पाल्याः शस्त्रहस्तेन नित्यशः । अनाथोद्धरणं कार्यं साधूनां च प्रपूजनम् ॥ '। नीवाटी.

**वार्ताजीवनमावेशिकपूजनं सत्रप्रपापुण्यारामदयादानादिनिर्मापणं च विशाम् ॥**

अथ वैश्यधर्ममाह– वार्ताजीवनमिति । वैश्यानां तावद्वार्ताजीवनम् । वार्ताशब्देन कृषिकर्मपशुपालनपूर्वकं कर्म प्रोच्यते । तथा आवेशिकपूजनं अकपटं यज्ञाद्यम् । तथा सत्रप्रपापुण्यारामदयादानादिकर्माणि । सत्रं नित्यान्नदानं स्वशक्त्या, तथा प्रपा जलदानम्, पुण्यं धर्मक्रिया, आरामः पुष्पादिसंजनना, एतेषां धर्माणां करणम् । तथा च शुक्रः– 'कृषिकर्म गवीरक्षा यज्ञाद्यं दम्भवर्जितम् । पुण्यानि सत्रपूर्वाणि वैश्यवृत्तिरुदाहृता ॥ '। नीवाटी.

**त्रिवर्णोपजीवनं कारुकुशीलवकर्म पुण्यपुटवाहनं च शूद्राणाम् ॥**

अथ शूद्रकर्माण्याह– त्रिवर्णेति । त्रिवर्णाः ब्राह्मणक्षत्रियविशः, तेषामुपजीवनं शुश्रूषा । कारुशब्देन नीचतमाः प्रजाः कथ्यन्ते, तेषां कर्म । कुशीलवाः नर्तकादयश्चारणाः, तेषां कर्म कार्यम् । तथा पुण्यपुटवाहनं पुण्यपुटकाः भिक्षुकाः, तेषामुपसेवनं शूद्रैः कार्यम् । तथा च पाराशरः– 'वर्णत्रयस्य शुश्रूषा नीचचारणकर्म च । भिक्षूणां सेवनं पुण्यं शूद्राणां न विरुध्यते ॥ '। नीवाटी.

**सकृत्परिणयनव्यवहाराः सच्छूद्राः ॥**

अथ शूद्रा यादृशा भवन्ति तदाह– सकृदिति । ये सच्छूद्राः शोभनशूद्राः भवन्ति ते सकृत्परिणयनाः एकवारं कृतविवाहाः, द्वितीयं न कुर्वन्तीत्यर्थः । तथा च हारीतः– 'द्विभार्यो योऽत्र शूद्रः स्याद्वृषलः स हि विश्रुतः । महत्त्वं तस्य नो भावि शूद्रजातिसमुद्भवः ॥ '। नीवाटी.

**आचारानवद्यत्वं शुचिरुपस्करः शारीरी च विशुद्धिः करोति शूद्रमपि देवद्विजतपस्विपरिकर्मसु योग्यम् ॥**

अथ शूद्रोऽपि देवद्विजादीनां शुश्रूषाया योग्यो यथा भवति तथाऽऽह– आचारेति । यः शूद्रोऽपि स देवद्विजतपस्विशुश्रूषायोग्यः । यस्य किं शूद्रस्य ? आचारानवद्यत्वं व्यवहारनिर्वाच्यता, तथा उपस्करः गृहपात्रसमुदायः, स शुचिः निर्मलः, तथा शरीरशुद्धिर्यस्य प्रायश्चित्तेन कृता आसीत् । एषाऽपि शूद्रं करोति । किंविशिष्टम् ? देवद्विजतपस्विभक्तियोग्यम् । तथा च चारायणः– 'गृहपात्राणि शुद्धानि व्यवहारः सुनिर्मलः । कायशुद्धिः करोत्येव योग्यं देवादिपूजने ॥ '। नीवाटी.

सर्ववर्णसाधारणा धर्माः

**आनृशंस्यममृषाभाषित्वं परस्वनिवृत्तिरिच्छानियमः प्रतिलोमाविवाहो निषिद्धासु च स्त्रीषु ब्रह्मचर्यमिति सर्वेषां समानो धर्मः ॥**

अथ सर्वेषां वर्णानां यः समानो धर्मस्तमाह– आनृशंस्यमिति । आनृशंस्यं अक्रूरत्वम्, अमृषाभाषित्वं सत्यवादिता, परस्वनिवृत्तिः अन्यायेन परार्थाग्रहणम्, इच्छानियमः स्वेच्छाप्रवृत्तिव्रतम्, प्रतिलोमाविवाहः स्वजातिसंबन्धः, निषिद्धासु च स्त्रीषु असतीषु विषये ब्रह्मचर्यम्, इति समानः तुल्यः धर्मः सर्वेषां वर्णानाम् । तथा च भागुरिः– 'दया सत्यमचौर्यं च नियमः स्वविवाहकम् । असतीवर्जनं कार्यं वर्णैः सर्वैरितीरितम् ॥ '। नीवाटी.

**आदित्यावलोकनवद्धर्मः खलु सर्वसाधारणो विशेषानुष्ठाने तु नियमः ॥**

अथ भूयोऽपि तुल्यधर्मे कृते विशेषमाह– आदित्येति । य एव पूर्वोक्तः सर्वेषां वर्णानां तुल्यो धर्मः (सः) सर्वसाधारणः तुल्यः निश्चयेन । कथम् ? आदित्यावलोकनवत् । यथा आदित्यः सर्वैर्विप्रान्त्यजैरपि दृश्यते तथैव धर्मः सर्वैरपि कार्यः । तथा विशेषानुष्ठाने तु नियमः परं विशेषानुष्ठानं यद्वर्णानां तत्र नियमः । तत्र कार्ये पूर्वैरात्मीयमनुष्ठानं यदुक्तं तत्कार्यमन्यत् । तथा च नारदः– 'यस्य वर्णस्य यत्प्रोक्तमनुष्ठानं महर्षिभिः । तत्कर्तव्यं विशेषोऽयं तुल्यधर्मो न केवलम् ॥ '। नीवाटी.

यतिधर्मः

**निजागमोक्तमनुष्ठानं यतीनां स्वो धर्मः ॥**

अथ यतीनां यः स्वो धर्मस्तमाह– निजागमोक्तमिति । यतीनां लिङ्गिनां निजागमोक्तमनुष्ठानं कृत्यं यत् स धर्मः आत्मीय इति । तथा च चारायणः– 'स्वागमोक्तमनुष्ठानं यत्स धर्मो निजः स्मृतः । लिङ्गिनामेव सर्वेषां योऽन्यः सोऽधर्मलक्षणः ॥'।

नीवाटी.

**स्वधर्मव्यतिक्रमेण यतीनां स्वागमोक्तं प्रायश्चित्तम् ॥**

अथ यतीनां परागमानुष्ठानेन यद्भवति तदाह– स्वधर्मेति । निजदर्शनव्यतिक्रमेण धर्मविलोमतया सर्वेषां लिङ्गिनामात्मीयागमे यदुक्तं प्रायश्चित्तं (तत्) भवति । तथा च वर्गः– 'स्वदर्शनविरोधेन यो धर्माधर्ममाचरेत् । स्वागमोक्तं भवेत्तस्य प्रायश्चित्तं विशुद्धये ॥'।

नीवाटी.

देवप्रतिष्ठा श्रद्धानुरोधेन

**यो यस्य देवस्य भवेच्छ्रद्धावान् स तं देवं प्रतिष्ठापयेत् ॥**

अथाभीष्टदेवप्रतिष्ठापनमाह– यो यस्येति । यः पुरुषः यस्य देवस्य श्रद्धावान् स तं देवं प्रतिष्ठापयेत् । तथा च भागुरिः– 'यस्योपरि भवेद्भक्तिर्विबुधस्य नृणामिह । स देवस्तैः प्रतिष्ठाप्यो नान्यः स्याच्छ्रेयसे यतः ॥'।

नीवाटी.

**अभक्त्या पूजोपचारः सद्यः शापाय ॥**

अथाभक्त्या पूजितो देवो यत्करोति तदाह– अभक्त्येति । भक्तिं विना कृतोपचारः कृतपूजितविधानो देवः सद्यः तत्क्षणात् शापाय अनिष्टप्रदः भवति । तथा च बादरायणः– 'अभक्त्या पूजितो देवस्तत्क्षणे विभ्रमाचरेत् । तस्माच्छ्रद्धासमोपेतैः पूज्यो भक्त्या······॥'।

नीवाटी.

वर्णाश्रमाणां शुद्धिः

**वर्णाश्रमाणां स्वाचारप्रच्यवने त्रयीतो विशुद्धिः ॥**

अथ सर्वाश्रमवर्णानां यद्भक्त्या प्रायश्चित्तविशुद्धिर्भवति तदाह– वर्णाश्रमाणामिति । वर्णाः ब्राह्मणक्षत्रियविट्छूद्राः, आश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थयतयः, तेषामेकतमस्यापि प्रच्यवने जात्यादिकविनाशे जाते त्रयीतः वेदत्रयोक्तवचनात् विशुद्धिर्भवति वेदोक्तप्रायश्चित्ते कृते । तथा च चारायणः– 'वर्णाश्रमाणां नाशे तु जाते जातिपूर्वके (?) । वेदत्रयोक्तवाक्येन तेषां शुद्धिः प्रजायते ॥'।

नीवाटी.

त्रय्यनुसारेण राज्ञो धर्मः

**स्वधर्मासंकरः प्रजानां राजानं त्रिवर्गेणोपसंधत्ते ॥**

अथ प्रजानां भूपतेश्च त्रिवर्गप्राप्तिर्यथा भवति तथाऽऽह– स्वधर्मेति । असंकरः अविप्लवः । केषाम् ? स्वधर्माणाम् । कासाम् ? प्रजानाम् । उपसंधत्ते नियोजयति । कम् ? राजानम् । केन ? त्रिवर्गेण धर्मार्थकामशब्देन । तथा च नारदः– 'न भूयाद्यत्र देशे तु प्रजानां वर्णसंकरः । तत्र धर्मार्थकामं च भूपतेः संप्रजायते ॥'।

नीवाटी.

**स किंराजा यो न रक्षति प्रजाः ॥**

अथ राज्ञो राजत्वं यथा न भवति तदाह– स इति । स किंराजा कुत्सितो राजा । स किंविशिष्टः स्यात् ? यो न रक्षति पालयति । काः ? प्रजाः लोकान् । तथा च व्यासः– 'यो न राजा प्रजाः सम्यग्भोगासक्तः प्ररक्षति । स राजा नैव राजा स्यात् स च कापुरुषः स्मृतः ॥'।

नीवाटी.

**स्वधर्ममतिक्रामतां सर्वेषां पार्थिवो गुरुः ॥**

अथ स्वधर्ममतिक्रामतां पार्थिवो गुरुरित्याह– स्वधर्ममिति । स्वधर्ममतिक्रामतां परित्यजतां सर्वेषां वर्णाश्रमाणां पार्थिवो गुरुः राजा निषेधयिता यथोचितधर्मेण । तथा च भृगुः– 'उन्मत्तं (तु) यथा नाम महामन्तो निवारयेत् । उन्मार्गेण प्रगच्छन्तं तद्वचैव जनं नृपः ॥'।

नीवाटी.

**परिपालको हि राजा सर्वेषां धर्मषष्ठांशमवाप्नोति ॥**

अथ पार्थिवस्य धर्मं परिपालयतो यद्भवति तदाह– परिपालक इति । यो राजा धर्मविप्लवं रक्षति स सर्वेषां वर्णाश्रमाणां धर्मस्य षष्ठांशं प्राप्नोति । तथा च मनुः– 'वर्णाश्रमाणां यो धर्मं नश्यन्तं च प्ररक्षति । षष्ठांशं

तस्य धर्मस्य स प्राप्नोति न संशयः ॥ ' ।

नीवाटी.

**उञ्छषड्भागप्रदानेन तपस्विनोऽपि राजानं संभावयन्ति ॥**

अथ भूयोऽपि राज्ञः परिपालनविषयं प्राह– उञ्छेति । ये तपस्विनः वनवासिनः भवन्ति शिलोञ्छवृत्त्या जीवन्ति, तेऽपि षड्भागं भूपतेः प्रयच्छन्ति । कस्मात् ? यतस्तेऽपि शिलोञ्छवृत्तिं कुर्वाणाः सूक्ष्मजीवानां स्वेदजानां वधं कुर्वन्ति, ततः षड्भागं स्वधर्मस्य भूपतेः प्रयच्छन्ति, तेन च तेषां स दोषो न भवति । एवं तेषां षड्भागप्रदानम् । तेन भूपतेः रक्षा भवति । तथा च पाराशरः– ' षड्भागं योऽत्र गृह्णाति कर्षुकीणां तपस्विनाम् । तान्न पालयते यश्च स तेषां पापभाग्भवेत् ॥ ' ।

नीवाटी.

**तस्यैतद्भूयाद्योऽस्मान् रक्षति ॥**

अथ भूपतेस्तपस्विधर्मषड्भागेन गृहीतेन यद्भवति तदाह– तस्येति । तस्य भूपतेः श्रेयसः षड्भागो भूयात् योऽस्मान् रक्षति । यतस्ते मुनयः क्रियावसाने एवं वदन्ति– तस्य एतत् अस्य मदीयस्य षड्भागः स्यात् धर्मस्य योऽस्मान् रक्षति । एवं तस्मिन् तैः शिलोञ्छवृत्तिषड्भागः प्रदत्तो भवति । तथा च हारीतः– ' मुनीनां वनसंस्थानां फलमूलाशिनामपि । षड्भागं तपसस्तेषां राजा प्राप्नोति रक्षणात् ॥ ' ।

नीवाटी.

**तदमङ्गलमपि नामङ्गलं यत्रास्याऽऽत्मनो भक्तिः ॥**

अथ मङ्गलामङ्गलविषये निश्चयमाह– तदमङ्गलमपीति । तत् अमङ्गलमपि अनिष्टमपि मङ्गलं शुभप्रदमिति । यतः श्रावकाणां क्षपणकदर्शनं श्वेतपटावलोकनं च कार्यारम्भेषु शुभावहं अन्येषाममङ्गलम् । एवं अन्येऽपि पदार्थाः काणखञ्जादयो ज्ञेयाः । तथा यदि प्रियतमा भवन्ति तद्दोषाय न भवन्ति । तथा च भागुरिः– ' यद्यस्य वल्लभं वस्तु तच्चेदग्रे प्रयास्यति । कृत्यारम्भेषु तत्तस्य सुनिन्द्यमपि सिद्धिदम् ॥ ' । नीवाटी.

**संन्यस्ताग्निपरिग्रहानुपासीत ॥**

अथ यत्पुरुषेण कर्तव्यं तदाह– संन्यस्तेति । संन्यस्ताः यतयः, अग्निपरिग्रहाः याज्ञिकाः, तानुपासीत सेवेत । कस्मात् ? यतस्ते परिणतबुद्धयो भवन्ति, पारत्रिकोपदेशं प्रयच्छन्ति । अन्ये तु पुनः सेविताः स्वचेष्टिताभिप्रायान् वदन्ति । तथा च वल्लभदेवः– ' यादृक्षाणां शृणोत्यत्र यादृक्षांश्चावसेवते । तादृक्चेष्टो भवेन्मर्त्यस्तस्मात् साधून् समाश्रयेत् ॥ ' ।

नीवाटी.

**स्नात्वा प्राग्देवोपासनान्न कंचन स्पृशेत् ॥**

अथ स्नातेन यत्कर्तव्यं तदाह– स्नात्वेति । स्नानं कृत्वा गृहस्थेनाभीष्टं मुक्त्वा नान्यत्किंचित्स्प्रष्टव्यम्, यतोऽनिष्टस्पर्शनात् श्रेयो नश्यति । तथा वर्गः– ' स्नात्वा त्वभ्यर्चयेद्देवान् वैश्वानरमतः परम् । ततो दानं यथाशक्त्या दत्त्वा भोजनमाचरेत् ॥ ' ।

नीवाटी.

**देवागारे गतः सर्वान् यतीनात्मसंबन्धिनीर्जरतीः पश्येत् ॥**

अथ देवाश्रयगतेन गृहस्थेन यत्कर्तव्यं तदाह– देवागार इति । देवागारं देवायतनम्, तत्र गतो गृहस्थस्तत्रस्थान् सर्वान् यतीन् तापसान् पश्येत् प्रणमेदित्यर्थः । आत्मसंबन्धिनीर्या जरतीः वृद्धाः स्त्रियस्ताः प्रणमेत् । तथा च हारीतः– ' देवतायतने गत्वा सर्वान् पश्येत् स्वभक्तितः । तत्राऽऽश्रितान् यतीन् पश्चात्ततो वृद्धाः कुलस्त्रियः ॥ ' ।

नीवाटी.

**देवाकारोपेतः पाषाणोऽपि नावमन्येत तत्किं पुनर्मनुष्यः ? राजशासनस्य मृत्तिकायामिव लिङ्गिषु को नाम विचारो यतः स्वयं मलिनो खलः प्रवर्धयत्येव क्षीरं धेनूनाम् । न खलु परेषामाचारः स्वस्य पुण्यमारभते किंतु मनोविशुद्धिः ॥**

गतार्थमेतत् ।

नीवाटी.

**दीना प्रकृतिः प्रायेण ब्राह्मणानाम् ॥**

**बलात्कारस्वभावः क्षत्रियाणाम् ॥**

**निसर्गतः शाठ्यं किरातानाम् ॥**

**ऋजुवक्रशीलता सहजा कृषीवलानाम् ॥**

अथ विप्रादीनां स्वभावमाह– दीनेति । गतार्थमेतत् ।

नीवाटी.

**दानावसानः कोपो ब्राह्मणानाम् ॥**
**प्रणामावसानः कोपो गुरूणाम् ॥**
**प्राणावसानः कोपो क्षत्रियाणाम् ॥**
**प्रियवचनावसानः कोपो वणिग्जनानाम् ॥**
**विश्वस्तैः सह व्यवहारो वणिजां निधिः ॥**

अथ विप्रादीनां यथा कोपोपशमो भवति तथाऽऽह– दानावसान इति । ब्राह्मणानां यः कोपः स दानावसानः । प्रकुपितस्यापि विप्रस्य यदि भोजनाद्यं (कोपार्हे?) किंचित्प्रदीयते तत्सद्यः कोपो विनश्यति । तथा च गर्गः– 'सूर्योदये यथा नाशं तमः सद्यः प्रयात्यलम् । तथा दानेन लब्धस्य कोपो विप्रस्य गच्छति ॥ दुर्जने सुकृतं यद्वत्कृतं याति च संक्षयम् । तद्वत्कोपो गुरूणां स प्रणामेन प्रणश्यति ॥ उदुम्बरफलानां च यद्वद्बीजं प्रणश्यति । फलेन सहितं तद्वत्कोपो भूपस्य तत्समः ॥ यथा प्रियेण दृष्टेन नश्यति व्याधिर्वियोगजः । प्रियालापेन तद्वद्वणिजां नश्यति ध्रुवम् ॥ विश्वस्तैर्मित्रवर्गैश्च व्यवहारस्तु यो भवेत् । वणिजां स निधिः प्रोक्तः शुद्धहेममयो ग्रहः ॥' । तथा च वल्लभदेवः– 'द्वे मानेऽभीष्टवाणिज्यं गान्धिकं पण्यगोष्ठिकम् । निक्षेपः क्रयमिथ्या च वणिजां निधयोऽत्र षट् ॥ पूर्णापूर्णे माने परिचितजनक्रयो मिथ्या । वणिग्जनो विकोटीशः कुरुते नात्र संदेहः ॥ निक्षेपे गृहपतिते श्रेष्ठी स्तौतीष्टदेवतां नित्यम् । निक्षेपोऽसौ म्रियते तुभ्यं दास्यामि चाभीष्टम् ॥ गोष्ठिककर्मणि युक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः । वसुधा वसुसंपूर्णा मयाऽद्य लब्धा किमन्येन ॥ पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चनादिभिः । श्रेष्ठी प्रोवाच पुत्राणां यत्रैकेन शते भवेत् ॥' । नीवाटी.

**वैश्यानां समुद्धारकप्रदानेन कोपोपशमः ॥**

अथ वैश्यानां यथा कोपोपशमो भवति तथाऽऽह– वैश्यानामिति । वैश्यानां कर्षकाणां उद्धारकदानं कोपोपशमाय । तथा च भृगुः– 'अपि चेत्पैत्रिको वैरो विशां कोपं प्रजायते । उद्धारकप्रलाभेन निःशेषो विलयं व्रजेत् ॥' । नीवाटी.

**दण्डभयोपधिभिर्वशीकरणं नीचजात्यानाम् ॥**

अथ नीचजात्यानां यथा कोपोपशमो भवति तदाह– दण्डेति । नीचजात्यानां चातुर्वर्ण्याधःस्थितानां रजकादीनां कोपोपशमाय । किम्? वशीकरणं दण्डभयं रौद्रभयम् । तथा च गर्गः– 'सर्वेषां नीचजात्यानां यावन्नो दर्शयेद्भयम् । तावन्नो वशमायान्ति दर्शनीयं ततो भयम् ॥' । नीवाटी.

वार्तालक्षणम्

**[1]कृषिः पशुपालनं वणिज्या च वार्ता वैश्यानाम् ॥**

अथ वार्तासमुद्देशो लिख्यते । तत्रादावेव वार्तास्वरूपमाह– कृषिरिति । यत् कृषिकर्म तथा पशुपालनं च वणिज्या च वणिक्क्रिया सा वार्ता कथ्यते । नीवाटी.

वार्तासमृद्धौ उचिता राजधर्माः

**वार्तासमृद्धौ सर्वाः समृद्धयो राज्ञः ॥**

अथ वार्तायां वृद्धिं गतायां राज्ञो देशे यद्भवति तदाह– वार्तेति । यत्र राष्ट्रे कृषिकर्म प्रवर्तते शारदग्रैष्मिकम्, तथा पशवः चतुष्पादाद्याः पुष्टिं यान्ति, न चौरादिभिः ह्रियन्ते, तथा वणिजां व्यवहारो विघ्नरहितः प्रवर्तते, तत्र भूपतेर्हस्त्यश्वहिरण्यादिकमसंख्यं भवति । तत्प्रभावात्सर्वाः समृद्धयो धर्मार्थकामलक्षणा भवन्ति । तथा च शुक्रः– 'कृषिद्वयं वणिज्याश्च यस्य राष्ट्रे भवन्त्यमी । धर्मार्थकामा भूपस्य तस्य स्युः संख्यया विना ॥' । नीवाटी.

**तस्य खलु संसारसुखं यस्य कृषिर्धेनवः शाकवाटः सद्मन्युदपानं च ॥**

अथ गृहस्थस्य संसारसुखं यथा भवति तथाऽऽह– तस्येति । तस्य गृहस्थस्य खलु निश्चयेन सुखं भवति । यस्य किम्? यस्य गृहे सदैव कृषिकर्म क्रियते, तथा धेनवः महिष्यः भवन्ति, शाकवाटो व्यञ्जनार्थं भवति, तथा उदपानं कूपिका स्यात् । तथा च शुक्रः– 'कृषिगोशाकवाटाश्च जलाश्रयसमन्विताः । गृहे यस्य भवन्त्येते स्वर्गलोकेन तस्य किम् ॥' । नीवाटी.

(१) नीवा. ८।१-२६.

**विसाध्यराज्ञस्तन्त्रपोषणे नियोगिनामुत्सवो महान् कोशक्षयः ॥**

अथ विसाध्यराज्ञो यद्भवति तदाह– विसाध्येति। यो राजा तन्त्रपोषणे नित्यं विसाधनं करोति, तस्य नियोगिनां कर्माधिष्ठितानां महानुत्सवः वृद्धापनकं (?) भवति, यतः ते वित्तं भक्षयन्ति। तस्य राज्ञः पुनः कोशक्षयो भवति। तथा च नारदः– 'ग्रीष्मे शरदि यो नान्नं संगृह्णाति महीपतिः। नित्यं मूल्येन गृह्णाति तस्य कोशक्षयो भवेत् ॥'। नीवाटी.

**नित्यं हिरण्यव्ययेन मेरुरपि क्षीयते ॥**

अथ तस्य भूपतेर्नित्यं व्ययेनाऽऽगतिं विना यथा कोशक्षयो भवति तदाह– नित्यमिति। यो नित्यं व्ययं करोति, न किंचिदुपार्जयति, तस्य सुमहानपि कोशः शनैः शनैः क्षयं याति। आस्तां तावत्कोशः, मेरुरपि नित्यं हिरण्यव्ययेन स्वल्पेनापि क्षयं याति। तस्मादायानुरूपो व्ययः कार्यः। तथा च शुक्रः– 'आगमे यस्य चत्वारि निर्गमे सार्धपञ्चमः। स दरिद्रत्वमाप्नोति वित्तेशोऽपि स्वयं यदि ॥'। नीवाटी.

**तत्र सदैव दुर्भिक्षं यत्र राजा विसाधयति ॥**

अथ राज्ञो विसाधनव्ययस्य यद्भवति तदाह– तत्रेति। यत्र राजा नित्यमेवान्नं विसाधयति तत्र सदैव दुर्भिक्षम्, यतः प्रभूतेनान्नेन तत्र पोषणं भवति ततो दुर्भिक्षं जायते। तस्माद्भूभुजा प्रभूतो धान्यसंग्रहः कार्यः। तथा च नारदः– 'दुर्भिक्षेऽपि समुत्पन्ने यत्र राजा प्रयच्छति। निजार्घ्येण निजं सस्यं तदा लोको न पीड्यते ॥'। नीवाटी.

**समुद्रस्य पिपासायां कुतो जगति जलानि ॥**

अथ राज्ञोऽर्थतुष्टेर्यद्भवति तदाह– समुद्रस्येति। एतत्किल श्रूयते– समुद्रे नवनदीशतैः सह गङ्गा प्रविशति तथा सिन्धुश्च। एवं सोऽष्टादशभिः शतैर्नदीनां गतपिपासो न भवति। यदा तु तस्याभ्यधिका तृड् भवति, तदा कुतोऽन्यानि जलानि विद्यन्ते तदर्थम्? एवं राज्ञोऽपि यदा तु षड्भागाभ्यधिकस्तुष्टिं करोति तदा कुतो राष्ट्रे वित्तानि? तद्दोषेण राष्ट्रं प्रणश्यति, ततो राज्यं च। तथा च शुक्रः– 'षड्भागाभ्यधिको दण्डो यस्य राज्ञः प्रतुष्टये। तस्य राष्ट्रं क्षयं याति राज्यं च तदनन्तरम् ॥'। नीवाटी.

**स्वयं जीवधनमपश्यतो महती हानिर्मनस्तापश्च क्षुत्पिपासाप्रतीकारात्पापं च ॥**

अथ राज्ञः स्वयं जीवधनमपश्यतो यद्भवति तदाह– स्वयमिति। जीवधनशब्देन गोमहिष्यादिकं कथ्यते। तत्स्वयमपश्यतः स्वामिनो महती हानिर्भवति, तथा मृतैर्मनस्तापो भवति, तेषां बुभुक्षापिपासाप्रतीकारात् तस्य पापं भवति। ततः स्वामिना जीवधनं स्वयं निरीक्षणीयम्। तथा च शुक्रः– 'चतुष्पदादिकं सर्वं स स्वयं यो न पश्यति। तस्य तन्नाशमभ्येति ततः पापमवाप्नुयात् ॥'। नीवाटी.

**वृद्धबालव्याधितक्षीणान् पशून् बान्धवानिव पोषयेत् ॥**

अथ स्वामिना यत्कर्तव्यं तदाह– वृद्धेति। वृद्धान् अनाथान् बालान् मातृपितृविहीनान् व्याधिग्रस्तान् अशरणान् तथा क्षीणान् दुर्बलान् पशून् दृष्ट्वा सुबान्धवानिव पोषयेत् स्वर्गार्थम्। तथा च व्यासः– 'अनाथान् विकलान् दीनान् क्षुत्परीतान् पशूनपि। दयावान् पोषयेद्यस्तु स स्वर्गे मोदते चिरम् ॥'। नीवाटी.

**अतिभारो महान् मार्गश्च पशूनामकाले मरणकारणम् ॥**

अथ पशूनामकालमरणं यथा भवति तदाह– अतिभार इति। पशूनां वृषाश्वगजानां योऽसौ प्रभूतो भारः प्रभूतमार्गगमनं च अकाले अप्रस्तावे अवेलायां तेषां मृत्युकारणं मृत्युसमयः। तथा च हारीतः– 'अतिभारो महान् मार्गः पशूनां मृत्युकारणम्। तस्मादर्हभावेन (? दर्हेण भारेण) मार्गेणापि प्रयोजयेत् ॥'। नीवाटी.

**शुल्कवृद्धिर्बलात्पण्यग्रहणं च देशान्तरभाण्डानामप्रवेशे हेतुः ॥**

अथ देशान्तराद्भाण्डानि यथा नाऽऽगच्छन्ति तदाह– शुल्कवृद्धिरिति। यत्र स्थाने शुल्कवृद्धिः प्रभूतधनग्रहणं

तथा च बलात्कारेणाल्पमूल्यं दत्त्वा भाण्डं गृह्यते, तत्र भाण्डं देशान्तरान्न प्रविशति । तथा च शुक्रः– 'यत्र गृह्णन्ति शुल्कानि पुरुषा भूपयोजिताः । अर्थहानिं च कुर्वन्ति तत्र नायाति विक्रयाम् ( ? क्रयी ) ॥' । नीवाटी.

**काष्ठपात्र्यामेकदैव पदार्थो रध्यते ॥**

भूयोऽपि भाण्डं नाऽऽगच्छति तन्निदर्शनमाह– काष्ठेति । काष्ठपात्री काष्ठदण्डिका या भवति तस्यामेकः पदार्थो रध्यते, न द्वितीयः । एवं यत्र स्थानेऽधिकं शुल्कं गृह्यते, तथा बलात्कारेणार्थहानिः क्रियते राजपुरुषैः, तत्र भाण्डविक्रेता भूयो न स आगच्छति । तथा च शुक्रः– 'शुल्कवृद्धिर्भवेद्यत्र बलान्मूल्यं निपात्यते । स्वप्नेऽपि तत्र न स्थाने प्रविशेद्भाण्डविक्रयी ॥' । नीवाटी.

**तुलामानयोरव्यवस्था व्यवहारं दूषयति ॥**

अथ स्थाने व्यवहारदूषणं यथा भवति तदाह–तुलेति । तुला प्रसिद्धा, मानं कुडवादि, तयोरव्यवस्था अयथोचितकरणम्, गुरुलघुत्वेन यत्र वाणिज्यं करोति, तत्र व्यवहारः साधूनां नश्यति । तथा च वर्गः– 'गुरुत्वं च लघुत्वं च तुलामानसमुद्भवम् । द्विप्रकारं भवेद्यत्र वाणिज्यं तत्र नो भवेत् ॥' । नीवाटी.

**वणिग्जनकृतोऽर्थः स्थितानागन्तुकांश्च पीडयति ॥**

अथ वणिग्जनकृतस्यार्थस्य यद्भवति तदाह– वणिग्जनेति । स्थितान् तत्स्थाननिवासिनः, आगन्तुकान् अन्यतोऽभ्यागतान् सर्वान् पीडयति निर्धनान् करोति । कोऽसौ ? अर्थः । किंविशिष्टः ? वणिग्जनकृतः । यद्येवं तर्हि किं क्रियते ? देशकालभाण्डापेक्षया नृपपञ्चकुलकृतोऽत्रस्थानामागन्तुकानां निरपवादो भवति । तथा च हारीतः– 'वणिग्जनकृतो योऽर्थोऽनुज्ञातश्च नियोगिभिः । भूपस्य पीडयेत्सोऽत्र तत्स्थानागन्तुकानपि ॥' । नीवाटी.

**देशकालभाण्डापेक्षया यो वाऽर्थो भवेत् ॥**

अथ अर्थविषये नियममाह– देशकालेति । देशापेक्षया तत्र देशे तस्य भाण्डस्योत्पत्तिर्जाता न वेति । कालशब्देनात्र समयः कथ्यते, स ज्ञेयः । अत्र समये चास्य भाण्डस्य प्रवेशो देशान्तराज्जातो न वेति । एषा देशकालापेक्षया अनया वाऽर्घ्यसाम्यता । नीवाटी.

**पण्यतुलामानवृद्धौ राजा स्वयं जागृयात् ॥**

अथ पण्यतुलामानविषये वणिग्जनस्य भूभुजा यत् कृत्यं तदाह– पण्यतुलेति । पण्यशब्देन भाण्डविषयेन कथ्यते ( ? ) । तत्र वणिजो विकृतिं कुर्वन्ति, स्वल्पमूल्यं तत्सदृशं भाण्डं मिश्रतां नयन्ति । तथा तुलाद्वयं कुर्वन्ति मानद्वयं च । तत्सर्वं राज्ञा तेषां बोद्धव्यम् । तथा च शुक्रः– 'भाण्डसङ्गात्तुलामानाद्धीनाधिक्याद्वणिग्जनाः । वञ्चयन्ति जनं मुग्धं तद्विज्ञेयं महीभुजा ॥' । नीवाटी.

**न वणिग्भ्यः सन्ति परे पश्यतोहराः ॥**

अथ भूभुजा वणिग्जनस्य यतः सावधानेन भवितव्यं तदर्थमाह– नेति । वणिग्भ्यः किराटेभ्यः परे अन्ये न सन्ति न विद्यन्ते । के ते ? पश्यतोहराः चौराः । ये सत्यचौरा भवन्ति ते परोक्षं हरन्ति, एते पुनः किराटाश्चौराः प्रत्यक्षं प्रेक्षमाणस्य कूटमानतुलामिथ्याक्रियादिभिर्हरन्ति । तथा च वल्लभो देवः– 'मानेन किंचिन्मूल्येन किंचित्तुलयाऽपि किंचित्कलयाऽपि किंचित् । किंचिच्च किंचिच्च ग्रहीतुकामाः प्रत्यक्षचौरा वणिजो नराणाम् ॥' । नीवाटी.

**स्पर्धया मूल्यवृद्धिर्भाण्डेषु राज्ञो यथोचितं मूल्यं विक्रेतुः ॥**

अथ स्पर्धया परस्परं यत्र किराटा मूल्यवृद्धिं कुर्वन्ति तदाह– स्पर्धयेति । यत्र भाण्डे विक्रयार्थमागता वणिग्जनाः स्पर्धयाऽधिकं मूल्यं कुर्वन्ति, तत्र प्रसिद्धमूल्यादप्यधिकं भवति, तत् भूपतेः प्रसिद्धमूल्यं च विक्रेतुः । तथा च हारीतः– स्पर्धया विहितो मूल्यो भाण्डस्याप्यधिकं च यत् । मूल्यं भवति तद्राज्ञो विक्रेतुर्वर्धमानकम् ॥' । नीवाटी.

**अल्पद्रव्येण महाभाण्डं गृह्णतो मूल्याविनाशेन तद्भाण्डं राज्ञः ॥**

अथाल्पमूल्येन भाण्डं गृह्णतो यद्भवति तदाह– अल्पद्रव्येणेति । महाभाण्डं उत्तमं वस्तु चौराद्यैर्मुग्धैर्वा स्वल्पमूल्येन यद्दत्तं तद्भाण्डं भूपस्य भवति । परं यन्मूल्यं केन-

विद्दत्तं तस्याविनाशः । कोऽर्थः ? तत्तस्य देयमित्यर्थः । तथा नारदः– 'भाण्डं चौरादिभिर्दत्तं मुग्धैर्वाऽल्पधनेन यत् । तद्भाण्डं भूपतेः कृत्स्नं ग्रहीतुर्मूल्यमेव च ॥ ' । नीवाटी.

**अन्यायोपेक्षा सर्वं विनाशयति ॥**

अथान्यायमुपेक्षमाणस्य नृपतेर्यद्भवति तदाह– अन्यायोपेक्षेति । यो राजा अन्यायान् वर्तमानान् उपेक्षते अन्यायकारिणां निग्रहं न करोति, तस्य सर्वं राज्यं विनश्यति । तथा च शुक्रः– 'अन्यायान् भूमिपो यत्र न निषेधयति क्षमी । तस्य राज्यं क्षयं याति यद्यपि स्यात् क्रमागतम् ॥ ' । नीवाटी.

**चौरचरटमन्नपधमनराजवल्लभाटविकतलाराक्षशालिकनियोगिग्रामकूटवार्द्धुषिका हि राष्ट्रस्य कण्टकाः ॥**

अथ राष्ट्रस्य ये शत्रवो भवन्ति तानाह– चौरेति । चौराः प्रसिद्धाः, चरटाः ये भूभुजा निःसारिताः, मन्नपाः मापकारकाः, धमनाः ग्राहकभाण्डपतेर्मूल्यनिर्णयकारकाः, राजवल्लभाः प्रसिद्धाः, आटविकाः अरण्यनिवासिनः, तलाराः स्थानरक्षायां नियोजिताः, अक्षशालिकाः कटकशालिकाः, नियोगिकाः राजाधिकारिकाः, ग्रामकूटाः बलाधिकाः, वार्द्धुषिकाः येऽन्नसंग्रहं कृत्वा दुर्भिक्षं वाञ्छन्ति, एते सर्वे राष्ट्रस्य कण्टकाः देशस्य शत्रुभूताः सामादिभिरुपायैः राष्ट्रमुपद्रवन्ति, तस्मात् भूभुजा नोपेक्षितव्याः । तथा च गुरुः– 'चौरादिकेभ्यो दुष्टेभ्यो यो न राष्ट्रं प्ररक्षति । तस्य तन्नाशमायाति यदि स्यात्पितृपैतृकम् ॥ ' । नीवाटी.

**प्रतापवति राज्ञि निष्ठुरे सति न भवन्ति राष्ट्रकण्टकाः ॥**

अथ यादृक्षे राज्ञि राष्ट्रकण्टका न भवन्ति तदाह– प्रतापवतीति । यत्र राष्ट्रे राजा प्रतापी बहुपुण्यो भवति तथा आज्ञया निष्ठुरो नीतिकर्ता च, तत्रैते राष्ट्रकण्टका न भवन्ति । तथा च व्यासः– 'यथोक्तनीतिनिपुणो यत्र देशे भवेन्नृपः । सप्रतापो विशेषेण चौराद्यैर्न स पीड्यते ॥ ' । नीवाटी.

**अन्यायवृद्धितो वार्द्धुषिकास्तन्त्रं देशं च नाशयन्ति ॥**

अथान्यायवृद्ध्या वार्द्धुषिका ( भवन्ति ? ) देशस्य यत्कुर्वन्ति तदाह– अन्यायेति । वार्द्धुषिकाः पूर्वोक्ताश्चानीतिवृद्धितः श्रिताः सन्तः तन्त्रं राज्ञश्चतुष्पदादिकं तथा देशं नाशयन्ति । तेषामन्यायवृद्धिः पार्थिवेन रक्षणीया । तथा च भृगुः– 'यत्र वार्द्धुषिका देशं अनीत्या वृद्धिमाययुः । सर्वलोकक्षयस्तत्र तिरश्चां च विशेषतः ॥ ' । नीवाटी.

**कार्याकार्ययोर्नास्ति दाक्षिण्यं वार्द्धुषिकानाम् ॥**

अथ तेषां दाक्षिण्यरहितानां यद्भवति तदाह– कार्येति । नास्ति न विद्यते । किं तत् ? दाक्षिण्यं लज्जास्पदम् । कयोर्विषये ? कृत्याकृत्ययोः । यदि तदर्थं कृत्यं वस्तु क्रियते उपकारलक्षणं तदपि दाक्षिण्यं न कुर्वन्ति । अथवा तदर्थमकृत्यं क्रियते तदपि दाक्षिण्यं न कुर्वन्ति । तथा च हारीतः– 'वार्द्धुषिकस्य दाक्षिण्यं विद्यते न कथंचन । कृत्याकृत्यं तदर्थं च कृतैः संख्यविवर्जितैः ॥ ' । नीवाटी.

**अप्रियमप्यौषधं पीयते ॥**

अथ पुरुषेण स्वशरीररक्षार्थं यत्कृत्यं तदाह– अप्रियमिति । किल औषधं क्वाथादिकं यद्यप्रियं भवति कटुकं तथापि पीयते येनारोगं शरीरं भवति, तथाऽन्यैरपि पदार्थैर्धर्मार्थकामादिभिर्यथा शरीरस्यारोगता भवति तथा कार्यम् । तथा च वर्गः– 'धर्मार्थकामपूर्वैश्च भेषजैर्विविधैरपि । यथा सौख्यार्द्धिकं पश्येत्तथा कार्यं विपश्चिता ॥ ' । नीवाटी.

**अहिदष्टा स्वाङ्गुलिरपि च्छिद्यते ॥**

अथ तस्यैव पूर्वसूत्रस्य प्रतिष्ठामाह– अहिदष्टेति । यतो निर्मूल्यौषधैर्महार्घैः ( ? ) गृह्णति अर्थक्षयो भवति, जिह्वाया असंतोषो भवति, तथा धर्मार्थकामैरनुगतैरपि वित्तक्षयो भवति, तथा मनसोऽसंतोषो भवति । तत् कस्मादेतत्कृतं तदत्र विषये दृष्टान्तमाह– यथाऽहिदष्टा अङ्गुलिः शरीररक्षार्थं व्यथामप्यधिकां करोति तथापि छिद्यते त्यज्यते, एवं शरीररक्षार्थेऽर्थस्य तृष्णा न

कार्या। शरीरेण विद्यमानेन भूयोऽप्यर्थसंपत्तिर्भवति। तथा अहिदष्टाङ्गुलित्यागाच्छरीरं भवति। उक्तं च— 'शरीरार्थे न तृष्णा च प्रकर्तव्या विचक्षणैः। शरीरेण सता वित्तं लभ्यते न तु तद्धनैः॥'।

नीवाटी.

* [1]'चिकित्सागम इव दोषविशुद्धिहेतुर्दण्डः॥ यथादोषं दण्डप्रणयनं दण्डनीतिः॥

---

* व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे (पृ. ७७८) द्रष्टव्यम्।

(१) नीवा. ९।१-२.

## इन्द्रियजयः

### गौतमः

शुद्धः संयतेन्द्रियश्च राजा

[1]शुचिर्जितेन्द्रियः ...... ॥

जितेन्द्रियः मृगयादिव्यसनरहितः । मभा.

### महाभारतम्

कारणं राज्यस्थैर्यस्य जितेन्द्रियता

[2]न ह्यवश्येन्द्रियो राज्यमश्नीयादीर्घमन्तरम् ।
विजितात्मा तु मेधावी स राज्यमभिपालयेत् ॥

दीर्घमन्तरं चिरकालम् । नीटी.

इन्द्रियजयः महीजयस्य राज्यरक्षणस्य च कारणम्

[3]कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः ।
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् ॥
लोकेश्वरप्रभुत्वं हि महदेतद्दुरात्मभिः ।
राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुम् ॥
इन्द्रियाणि महत्प्रेप्सुर्नियच्छेदर्थधर्मयोः ।
इन्द्रियैर्नियतैर्बुद्धिर्वर्धतेऽग्निरिवेन्धनैः ॥

महत् राज्यम् । 'महद्राज्यविशालयोः' इति विश्वः । नीटी.

अविधेयानि हीमानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥

अविधेयानि अवशीकृतानि । व्यापादयितुं हन्तुम् । नीटी.

[4]अविजित्य य आत्मानममात्यान्विजिगीषते ।
अजितात्माऽजितामात्यः सोऽवशः परिहीयते ॥

[1]आत्मानमेव प्रथमं देशरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥

[2]वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ॥

क्षुद्राक्षेण सूक्ष्मच्छिद्रेण । नीटी.

[3]याभ्यां हि देवाः स्वर्यातुः स्वर्गस्यापिदधुर्मुखम् ।
बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्धितौ ॥

अनुपरागस्य अनासक्तस्यापि कामक्रोधौ स्वर्गनिरोधकावित्यर्थः । नीटी.

[4]कामं क्रोधं च लोभं च दम्भं दर्पं च भूमिपः ।
सम्यग्विजेतुं यो वेद स महीमभिजायते ॥

अभिजायते शास्तीत्यर्थः । नीटी.

सततं निग्रहे युक्त इन्द्रियाणां भवेन्नृपः ।
ईप्सन्नर्थं च धर्मं च द्विषतां च पराभवम् ॥

कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते ।
स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ॥

यः कामेन अभिभूतः क्रोधाद्वा अभिभूतः मिथ्या कपटेन वाऽभिभूतः प्रतिपद्यते ईप्सितार्थादीन्, तस्य सहाया न भवन्तीत्यर्थः । नीटी.

---

(१) गौध. ११।४.

(२) भा. ५।१२७।२२ ; भामु. ५।१२९।२३.

(३) भा. ५।१२७।२३-२६ ; भामु. ५।१२९।२४-२७.

(४) भा. ५।१२७।२७ ; भामु. ५।१२९।२८ अजितात्मा ( अमित्रान् वा ).

(१) भा. ५।१२७।२८ ; भामु. ५।१२९।२९ देशरूपेण यो जयेत् ( द्वेष्यरूपेण योजयेत् ).

(२) भा. ५।१२७।२९-३० ; भामु. ५।१२९।३०-३१.

(३) भा. ५।१२७।३१ ; भामु. ५।१२९।३२ स्यापिदधु ( स्य विदधु ).

(४) भा. ५।१२७।३२-३४ ; भामु. ५।१२९।३३-३५.

आत्मजयः शत्रुजयकारणम्

[1]आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः ।
अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥

आत्मा चित्तम् । नीटी.

[2]एतावानात्मविजयः पञ्चवर्गविनिग्रहः ।
जितेन्द्रियो नरपतिर्बाधितुं शक्नुयादरीन् ॥

पञ्चवर्गः श्रोत्रादिः । नीटी.

[3]आत्मानमसमाधाय समाधित्सति यः परान् ।
विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तम् ॥

राज्ञा स्वचित्तं जित्वैव प्रजाः शास्याः । अन्यथा ता एवैनमुपहसन्तीत्याह– आत्मानमिति । नीटी.

[4]आत्मैवाऽऽदौ नियन्तव्यो दुष्कृतं संनियच्छता ॥

[5]इन्द्रियाणि च सर्वाणि वाजिवत् परिपालय ।
हिताय वै भविष्यन्ति रक्षितं द्रविणं यथा ॥

[6]संनियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ।
स श्रियो भाजनं राजन् यश्चाऽऽपत्सु न मुह्यति ॥

[7]अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते हि सः ॥

(१) भा. १२।६९।४; भामु.

(२) भा. १२।६९।५ ; भामु.

(३) भा. १२।२५९।२७ ; भामु. १२।२६७।२७.

(४) भा. १२।२५९।२९; भामु. १२।२६७।२९.

(५) भा. १५।१।१३ ; भामु. १५।५।१३ हिताय वै ( हितायैव ); रार. ९ च (तु) पालय (पालयेत्) शेषं भामुवत्.

(६) भा. ५।३७।४७ ; भामु. ५।३७।५१ ; राक. १५० क्रोध (काम) यश्चाऽऽपत्सु (पश्चापत्सु ); राप्र. १३३ यो वेगमु ( योगेन उ ) शेषं राकवत्.

(७) भा. ५।३४।६१ ; भामु. ५।३४।६३ ; राक. १५० श्यते हि ( श्यतीह ); राप्र. १३३ राकवत्.

## वाल्मीकिरामायणम्

इन्द्रियजयः श्रेयान्

[1]कामतस्त्वं प्रकृत्यैव विनीतो गुणवानसि ।
गुणवत्यपि तु स्नेहात्पुत्र वक्ष्यामि ते हितम् ॥
भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ॥

## कौटिलीयमर्थशास्त्रम्

विद्याप्राप्तेः कारणं शास्त्रानुष्ठानकार्यं च इन्द्रियजयः राज्ञो रक्षणाय राज्यरक्षणाय च

[2]विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात् कार्यः । कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः शास्त्रार्थानुष्ठानं वा । कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः ॥

विद्याविनयहेतुः विद्यासंस्कारकारणम् । कामेति । परस्त्रीविषयोऽभिलाषः कामः, हिंसाप्रवर्तकश्चित्तविकारः क्रोधः, परद्रव्येच्छा लोभः, बालिश्यादात्मन्यनुपमत्वबुद्धिः मानः, धनविद्यादिप्रभवो गर्वो मदः, इष्टार्थप्राप्त्युपभोगजन्या प्रीतिर्हर्षः । षडेते शत्रव इत्युच्यन्ते । एषां त्यागात् वर्जनात् । अविप्रतिपत्तिः स्वत एवाविरुद्धा प्रवृत्तिः । शास्त्रार्थानुष्ठानं शास्त्रार्थेषु उपादेयत्वेन शास्त्रतोऽवगतेषु शब्दस्पर्शादिषु अनुष्ठानं प्रवृत्तिनियमः । कृत्स्नं हि शास्त्रमिदमिन्द्रियजय इति अनुष्ठेयतया शास्त्रेण प्रतिपाद्यमानः सर्वोऽर्थः इन्द्रियजयस्य कारणमित्यर्थः । कारणे कार्योपचारः । श्रीमूला.

तद्विरुद्धवृत्तिरवश्येन्द्रियश्चातुरन्तोऽपि राजा सद्यो विनश्यति । यथा दाण्डक्यो नाम भोजः कामाद् ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश करालश्च वैदेहः, कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्तस्तालजङ्घश्च भृगुषु, लोभादैल-

(१) वारा. २।५।२७–२८ कामतस्त्वं ( कामं च त्वं ) गुणवत्यपि तु स्नेहात् ( गुणवत्त्वापितृस्नेहात् ); वाराकु. २।३।४१–४२.

(२) कौ. १।६.

**श्चातुर्वर्ण्यमत्याहारयमाणः सौवीरश्चाजबिन्दुः, मानाद्रावणः परदारानप्रयच्छन्दुर्योधनो राज्यादंशं च, मदाड्डम्भोद्भवो भूतावमानी हैहयश्चार्जुनः, हर्षाद्वातापिरगस्त्यमत्यासादयन् वृष्णिसंघश्च द्वैपायनमिति ॥**

तद्विरुद्धवृत्तिः शास्त्रविरुद्धानुष्ठानः । चातुरन्तोऽपि, चतुरन्ता चतुःसमुद्रपर्यन्ता भूमिः, तस्या ईश्वरोऽपि । तत्र कामादिषु एकैकेन विनष्टेषु द्वौ द्वौ निदर्शयति– यथेत्यादिना । भोजवंश्यो दाण्डक्यः कामात् ब्राह्मणकन्यामपहृत्य तत्पित्रा शप्तः बन्धुराष्ट्रसहितो नष्टः, तथा विदेहाधिपः करालो ब्राह्मणीमभिलषन् ब्राह्मणेन शप्तो नष्टः । कोपात् जनमेजयो नाम राजा अश्वमेधे वर्तमाने ब्राह्मणैः सह कलहायितस्तच्छापान्नष्टः, तथा तालजङ्घो भृगुषु विक्रम्य तच्छापान्नष्टः । लोभात् ऐलः पुरूरवा नाम राजा चातुर्वर्ण्यमतिमात्रधनहरणेन पीडयंश्चातुर्वर्ण्यकोपान्नष्टः, तथा सौवीरपतिरजबिन्दुः । लोभात् ऐलो नैमिशीयब्राह्मणयज्ञशालां प्रविश्य ततोऽपरिमितं धनं हर्तुमुद्युक्तो ब्राह्मणशापान्नष्टः इत्यैतिह्यं कैश्चिद्वर्ण्यते । मानात् रावणः सीतां रामायाप्रयच्छन् नष्टः, तथा दुर्योधनो राज्यांशं पाण्डवेभ्योऽप्रयच्छन् नष्टः । मदात् राजा डम्भोद्भवो नाम कृतसर्वप्रजावज्ञानो नरनारायणाभ्यां सह युद्धमासाद्य हतः, तथा हेहयाधिपः कार्तवीर्यो मदात् परशुरामपितरि प्रयुक्तापराधः परशुरामेण युद्धे हतः । हर्षात् वातापिरसुरोऽगस्त्यं महर्षिं वञ्चयन् यादवसंघश्च व्यासमतिसंधित्सुस्ताभ्यां शप्तौ विनेशतुः । इत्यैतिह्यानि । श्रीमूला.

**एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः ।**
**सबन्धुराष्ट्रा राजानो विनेशुरजितेन्द्रियाः ॥**

उक्ता राजानः उपलक्षणम्, अन्येऽपि बहव आसन्नित्याह– एत इत्यादि । श्रीमूला.

**शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः ।**
**अम्बरीषश्च नाभागो बुभुजाते चिरं महीम् ॥**

अरिषड्वर्गस्यान्वयेऽनर्थं निदर्श्य व्यतिरेके निःश्रेयसप्राप्तिं निदर्शयति– शत्रुषड्वर्गमित्यादि । जामदग्न्यः परशुरामः । नाभागः नभागसूनुः । श्रीमूला.

इन्द्रियजयपूर्वकं राजवृत्तम्

**[1]तस्मादरिषड्वर्गत्यागेनेन्द्रियजयं कुर्वीत, वृद्धसंयोगेन प्रज्ञाम्, चारेण चक्षुः, उत्थानेन योगक्षेमसाधनम्, कार्यानुशासनेन स्वधर्मस्थापनम्, विनयं विद्योपदेशेन, लोकप्रियत्वमर्थसंयोगेन, हितेन वृत्तिम् ॥**

तस्मात् अरिषड्वर्गत्यागस्य श्रेयःसाधनत्वात् । वृद्धसंयोगेन प्रज्ञां कुर्वीत उत्पादयेत् विकासयेच्च । चारेण चक्षुः कुर्वीत गूढपुरुषं चक्षुःस्थाने कुर्यात् स्वपरराष्ट्रवृत्तप्रत्यक्षीकरणार्थम् । उत्थानेन उद्योगेन, उत्थानमुद्योगः अनुष्ठानमिति पर्यायाः, योगक्षेमसाधनं योगक्षेमसंपादनम् । कार्यानुशासनेन स्वधर्मस्थापनं इदमीदृशमित्थं कर्तव्यमित्याज्ञापनेन स्वधर्मे लोकस्य नियन्त्रणम् । अर्थसंयोगेन लोकप्रियत्वं अर्थस्य धनस्य स्वीकरणेन समुचितेषु पात्रेष्वर्पणेन च जनप्रियत्वम् । हितेन वृत्तिं तदात्वायत्योर्यत् पथ्यं तेन लोकयात्राम् । कुर्वीतेति सर्वत्रानुषङ्गः । श्रीमूला.

**एवं वश्येन्द्रियः परस्त्रीद्रव्यहिंसाश्च वर्जयेत् स्वप्नं लौल्यमनृतमुद्धतवेषत्वमनर्थसंयोगं च, अधर्मसंयुक्तमनर्थसंयुक्तं च व्यवहारम् ॥**

परस्त्रीद्रव्यहिंसाः परस्त्रियं परद्रव्यं परहिंसां च । स्वप्नं अयथोचितां निद्राम् । लौल्यं चापलम् । अनृतं मिथ्यावादम् । उद्धतवेषत्वं अविनीतवेषताम् । अनर्थसंयोगं उक्तस्यार्थसंयोगस्य प्रत्यनीकम् । श्रीमूला.

*** धर्मार्थाविरोधेन कामं सेवेत न निःसुखः स्यात् । समं वा त्रिवर्गमन्योन्यानुबन्धम् । एको ह्यत्यासेवितो धर्मार्थकामानामात्मानमितरौ च**

---

* व्याख्यानं 'राजनीतेः सामान्यसिद्धान्ताः शास्त्रविषयाश्च' इत्यस्मिन् प्रकरणे ( पृ. ६८० ) द्रष्टव्यम्।

(१) कौ. १।७.

पीडयति । अर्थ एव प्रधान इति कौटिल्यः, अर्थमूलौ हि धर्मकामाविति ॥

## चाणक्यसूत्राणि

राज्यविनयौ इन्द्रियजयस्य कार्यकारणे

[1]राज्यमूलमिन्द्रियजयः ॥
इन्द्रियजयस्य मूलं विनयः ॥

## मनुः

राजा जितेन्द्रिय एव प्रजावशीकारसमर्थः

[2]इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥

( १ ) इन्द्रियजयस्य ब्रह्मचारिधर्मेषु सर्वपुरुषार्थतयोपदिष्टस्य पुनरिहोपदेशो राजधर्मेषु मुख्योऽयं विनय इति ज्ञापयितुम् । तदिदमाह– जितेन्द्रिय इत्यादि । सर्वस्यैतत् प्रसिद्धम्– अजितेन्द्रियस्य न प्रजा वशे तिष्ठन्ति । योगः तात्पर्यम् । दिवानिशं अहोरात्रम् । मेधा.

( २ ) चक्षुरादीनामिन्द्रियाणां विषयशक्तिपरिहारे नित्यकालमभियोगं कुर्यात् । स जितेन्द्रियः प्रजा वशीकर्तुं शक्नोति । गोरा.

( ३ ) इन्द्रियाणां जये आयत्तत्वे । मवि.

(४) चक्षुरादीनामिन्द्रियाणां विषयासक्तिवारणे सर्वकालं यत्नं कुर्यात् । यस्माज्जितेन्द्रियः प्रजा नियन्तुं शक्नोति, न तु विषयोपभोगव्यग्रः । ब्रह्मचारिधर्मेषु सर्वपुरुषोपादेयतयाऽभिहितोऽपीन्द्रियजयो राजधर्मेषु मुख्यत्वज्ञानार्थं अनन्तरवक्ष्यमाणव्यसननिवृत्तिहेतुत्वाच्च पुनरुक्तः । * ममु.

## आश्वलायनः

जितात्मा राजा एव जगज्जयसमर्थः

[3]आभ्यन्तराश्च बाह्याश्च षण्मार्गविदुपायवित् ।
पञ्चेन्द्रियाणि जित्वाऽऽदौ मनःषष्ठान्युपायतः ॥
षड् जित्वाऽऽभ्यन्तरांश्चारीन् बाह्यारींश्च जयेत्ततः ।
जयति भुवनं राजा विजितात्मा जितेन्द्रियः ॥
अजितात्माऽजिताक्षस्तु प्रकृतैरपि जीयते ।
जितेन्द्रियेण जीयन्ते बाह्याश्चाऽऽभ्यन्तरारयः ॥
बाह्यभ्योऽतिबलीयांसो रागाद्याभ्यन्तरारयः ।
अजितो योऽन्तरामित्रैर्जयत्येवाखिलं जगत् ॥
स जितस्तैस्तु शीघ्रेण विद्वानपि विनश्यति ।
राजा वा राजमात्रो वा यो वा को वा विचक्षणः ॥
इन्द्रियाणि जयेत्तस्मादादावेवाभ्युपायवित् ।
आत्मानं रथमारुह्य बुद्धियन्तारमाशुगम् ॥
इन्द्रियाश्वं जयेद्वैरीन् षड्रागादीन् पुरा बुधः ॥

## मार्कण्डेयपुराणम्

जितकामक्रोधादिषट्को राजा एव शत्रुजेता

[1]स्थानवृद्धिक्षयज्ञेन षाड्गुण्यविदितात्मना ।
भवितव्यं नरेन्द्रेण न कामवशवर्तिना ॥
प्रागात्ममन्त्रिणश्चैव ततो भृत्या महीभृता ।
ज्ञेयाश्चानन्तरं पौरा विरुध्येत ततोऽरिभिः ॥
यस्त्वेतानविजित्यैव वैरिणो विजिगीषते ।
सोऽजितात्माऽजितामात्यः शत्रुवर्गेण बाध्यते ॥
तस्मात्कामादयः पूर्वं जेयाः पुत्र महीभृता ।
तज्जये हि जयो राज्ञो राजा नश्यति तैर्जितः ॥
कामः क्रोधश्च लोभश्च मदो मानस्तथैव च ।
हर्षश्च शत्रवो ह्येते नाशाय कुमहीभृताम् ॥
कामप्रसक्तमात्मानं स्मृत्वा पाण्डुं निपातितम् ।
निवर्तयेत्तथा क्रोधादनुह्रादं हतात्मजम् ॥
हतमैलं तथा लोभान्मदाद्वेनं द्विजैर्हतम् ।
मानादनायुषः पुत्रं हतं हर्षात्पुरंजयम् ॥
एभिर्जितैर्जितं सर्वं मरुत्तेन महात्मना ।
स्मृत्वा विवर्जयेदेतान् षड्दोषांश्च महीपतिः ॥

---

* रार., मच., नन्द., भाच. ममुगतम् ।

(१) चासू. ४-५.

(२) मस्मृ. ७।४४ ; राक. १४३ यो हि (यश्च) ; रार. ६ जये योगं (जयेयोगं) ; राप्र. ११८.

(३) आश्वस्मृ. ८।२३-२९.

(१) मार्क. २४।१०-१७.

## मत्स्यपुराणम्

जितेन्द्रियो राजा प्रजावशीकारसमर्थः

[1]इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥

[2]कामः क्रोधो मदो मानो लोभो हर्षस्तथैव च ।
एते वर्ज्याः प्रयत्नेन सादरं पृथिवीक्षिता ॥

कामादीनामाभ्यन्तराणां स्वविषयवासित्वेन आभ्यन्तराणां भृत्यादीनां च जय उक्तः– काम इति । स्वस्वविषये व्यवस्थापनं जयः । राप्र. १२२

## विष्णुधर्मोत्तरपुराणम्

जितेन्द्रियो राजा प्रजावशीकारसमर्थः

[3]इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥

[4]इन्द्रियाणां जये यत्नः सदा स्याद्द्विजपुंगवाः ।
ततो भृत्यजयः कार्यः समस्तविजयस्ततः ॥
कामः क्रोधो मदो लोभो मानो हर्षस्तथैव च ।
आभ्यन्तरा विजेतव्या रिपवः षण्महीभुजा ॥

## अग्निपुराणम्

जितेन्द्रिय एव राजा महीपालनसमर्थः

[5]नयस्य विनयो मूलं विनयः शास्त्रनिश्चयात् ।
विनयो हीन्द्रियजयस्तैर्युक्तः पालयेन्महीम् ॥
प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनम् ।
ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम् ॥
कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः ॥

---

(१) मत्स्य. २१५।५५.

(२) मत्स्य. २२०।१४ ; राक. १४७ उत्तरार्धे (जेतव्यो रिपुषड्वर्ग आन्तरः पृथिवीक्षिता ॥ ) ; राप्र. १२२ राकवत्.

(३) विध. २।६५।४७.

(४) विध. ३।३२३।७–९.

(५) अग्नि. २३८।३, ६–७.

## कालिकापुराणम्

इन्द्रियजयविधिः

[1]पञ्चेन्द्रियाणि पञ्चाश्वाः शरीरं रथ उच्यते ।
आत्मा रथी कशा ज्ञानं सारथिर्मन उच्यते ॥
अश्वान् सुदान्तान् कुर्वीत सारथिं चाऽऽत्मनो वशम् ।
कशा दृढा सदा कार्या शरीरस्थिरता तथा ॥
अदान्तांस्तु समारुह्य सैन्धवान् स्यन्दनी यथा ।
अश्वानामिच्छया गच्छन्नुत्पथं प्रतिपद्यते ॥
तत्रावशः सारथिस्तु स्वेच्छया प्रेरयन् हयान् ।
नयेत्परवशं सम्यग्रथिनं वीरमप्युत ॥
तथेन्द्रियाणि नृपतिर्विषयाणां परिग्रहे ।
स्ववश्यानि प्रकुर्वीत मनो ज्ञानं दृढं तथा ॥
ज्ञाने दृढे कशायां च दृढायां नृपसत्तम ।
सारथिः स्ववशो दान्तानीशः प्रेरयितुं हयान् ॥
अतो नृपः स्वेन्द्रियाणि वशे कृत्वा मनस्तथा ।
ज्ञानमार्गमधिष्ठाय प्रकुर्वीताऽऽत्मनो हितम् ॥
भोक्तव्यं स्वेच्छया भूयो न कुर्याल्लोभमासवे ।
द्रष्टव्यमिति द्रष्टव्यं न द्रष्टव्यं च स्वेच्छया ॥
श्रोतव्यमिति श्रोतव्यं नाधिकं श्रवणे चरेत् ।
शास्त्रतत्त्वमृते धीरः श्रुतिवश्यो भवेन्न हि ॥
एवं घ्राणान् त्वचं चापि वशीकृत्येच्छया नृपः ।
स्वेच्छया नोपभुञ्जीत नोद्दामं विषयं व्रजेत् ॥
एवं यदि भवेद्राजा तदा स स्याज्जितेन्द्रियः ।
जितेन्द्रियत्वे हेतुश्च शास्त्रवृद्धोपसेवनम् ॥
अवृद्धसेव्यशास्त्रज्ञो नृपः शत्रुवशो भवेत् ।
तस्माच्छास्त्रमधिष्ठाय भवेद्राजा जितेन्द्रियः ॥

[2]कामः क्रोधश्च लोभश्च हर्षो मानो मदस्तथा ।
एतानतिशयान् राजा शत्रूनिव विशातयेत् ॥
सेव्याः काले सुयुक्तौ ते लोभगर्वौ विवर्जयेत् ।
तेज एव नृपाणां तु तीव्रं सूर्यस्य वै यथा ॥
तत्र गर्वं रोगयुक्तं कायवांस्तं तु संत्यजेत् ॥

---

(१) कालिका. ८७।१८–२९.

(२) कालिका. ८७।३८–४०.

## कामन्दकीयनीतिसारः

नयस्य विनयः शास्त्रनिश्चयो मूलं तस्य चेन्द्रियजयः, शास्त्राधीना च श्रीः

**[1]नयविक्रमसंपन्नः सूत्थानश्चिन्तयेच्छ्रियम् ।**
**नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः ॥**

(१) एवं लाभपालनोपायं शास्त्रशरीरमुपक्षिप्य विनयमुपदिदिक्षुराह– नयविक्रमसंपन्न इत्यादि । दैवं मानुषं च कर्म लोकं यापयति । तत्र दैवस्याचिन्त्यत्वात् मानुषमेव नयशौर्यादिकमास्थाय स्वमण्डले परमण्डले च श्रियं चिन्तयेत् । तदप्यनुत्थानशीलस्य नोपपद्यते इति सूत्थानः । तत्र विक्रमात् नयः प्रधानम् , तत्पूर्वकस्य विक्रमस्यैकान्ततया फलसाधनत्वात् । नयस्य च विनयो मूलम् , तस्य शास्त्रनिश्चयहेतुकत्वात् । यदाह– विनयः शास्त्रनिश्चय इति । विनीतो हि शास्त्रं निश्चित्य नयं प्रयुङ्क्ते, नयश्च शास्त्रेणोपदिश्यते इति विनयो नयस्य मूलं भवति । जम.

( २ ) चतुर्विधेऽपि राजवृत्ते आद्यमर्थार्जनाख्यं चानुष्ठानमभिधातुमाह– नयेति । नयः नीतिशास्त्रपरिज्ञानम् , विक्रमः शौर्यम् , ताभ्यां संपन्नः । विक्रमे सत्यपि नयहीनोऽतिसंधीयते । तथा च कौटिल्यः– ' हस्तिनमिव लुब्धकः प्राज्ञः शूरमतिसंधत्ते ' । नये सत्यपि विक्रमहीनः परैरभिभूयते । ततश्च नयविक्रमाभ्यां संपन्नेन भवितव्यमिति । सूत्थान इति । शोभनं उत्थानं उद्योगः यस्य स तथोक्तः । शोभनत्वं चोत्थानस्य आरम्भोपायपुरुषद्रव्यसंपदापत्प्रतीकारानुकूलदेशकालकार्यादिनिर्णयं कृत्वोत्थानम् । ( तथा ) कार्यमिति भावः । चिन्तयेच्छ्रियमिति । श्रीर्हि श्रीहेतुत्वात् सप्ताङ्गं राज्यम् । तदुपार्जनार्थं चिन्तां कुर्यादित्यर्थः । नयस्य विनयो मूलमिति । नयस्य नीतिशास्त्रपरिज्ञानस्य विनयः स्वाभाविकेन्द्रियजयः मूलं कारणम् । न हि स्वाभाविकेन्द्रियजयरहितेन शास्त्रं ज्ञातुं शक्यते, विषयाक्षिप्तचित्तत्वात् । विनयः शास्त्रनिश्चय इति । द्वितीयोऽपि विनयः शास्त्रनिर्णयः । तदेवं नयस्य कारणभूत एको विनयः, यो हीन्द्रियजयः । तद्युक्तः शास्त्रमृच्छतीति द्वितीयः ( कार्यभूतः )। तथा च कौटिल्यः– ' कृतकः स्वाभाविकश्च विनयः, क्रिया हि द्रव्यं विनयति नाद्रव्यम् ' ( कौ. १।५ ) इति । स्वाभाविकविनयेन शास्त्रं संपद्यते, शास्त्रनिश्चयश्च कृतको विनयो भवतीति । उनि.

**[1]विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति ।**
**तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदन्ति ततः श्रियः ॥**

(१) तदेव योजयति– विनयो हीत्यादिना । श्रोत्रादीनां स्वेषु स्वेषु विषयेष्वविप्रतिपत्तिः इन्द्रियजयः । स च विनय उच्यते । तद्युक्तः शास्त्रमृच्छति । विनययुक्तस्याध्ययनेन शास्त्रनिश्चय इति । संयोग इति यावत् । तन्निष्ठस्य हि शास्त्रप्रवणस्य शास्त्रार्थाः प्रसीदन्ति चिन्ताभावनाक्रमेण निर्मलीभवन्ति । ततः श्रिय इति । ततः उत्तरकालं निश्चितशास्त्रतत्त्वस्य नयप्रयोगस्य स्वातन्त्र्यात् स्वपरमण्डलाधाराः श्रियः प्रसीदन्ति निष्कण्टका भवन्ति । जम.

(२) विनयशब्दः प्रश्रयप्रावीण्यानौद्धत्येन्द्रियजयेषु वर्तते, तदत्र कस्मिन्नर्थे वर्तते इति संदेहे सति तदपनोदार्थमाह– विनय इति । हि यस्मात् अत्र विनयशब्देन इन्द्रियजय एव गृह्यते, इन्द्रियजयप्रकरणत्वात् , इन्द्रियजयप्रकरणमेव व्याख्यातुं प्रस्तुतमिति । तद्युक्त इति । इन्द्रियजययुक्तः । शास्त्रमिति प्रकृतत्वान्नीतिशास्त्रम् । ऋच्छति अवाप्नोति । तन्निष्ठस्य हीति । इन्द्रियजयतत्परस्य शास्त्रार्थाः दुरवबोधशास्त्रप्रदेशाः प्रसीदन्ति सुगमत्वेन निर्मलीभवन्ति । ततः श्रिय इति । तदनन्तरं संपदोऽपि प्रसन्ना भवन्तीति । उनि.

श्रियः कारणं गुणसंघातः

**[1]शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता ।**
**उत्साहो वाग्मिता दाढर्यमापत्क्लेशसहिष्णुता ॥**

( १ ) यथा शास्त्रं श्रियो हेतुः , तथाऽन्येऽपि गुणा इत्याह– शास्त्रमित्यादि । तत्र शास्त्रज्ञोऽप्यप्रज्ञो दृष्ट इति

---

(१) कानी. १।२१ ; नीम. ३२ उत्त.

(१) कानी. १।२२ ; नीम. ३२ पू.

(२) कानी. १।२३ ; नीम. ३२.

प्रज्ञाग्रहणम् । सा चाष्टाङ्गा । यथा वक्ष्यति— 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इति । धृतिः अनुद्विग्नता, तथा कार्येष्वनवसादः । दाक्ष्यं अनालस्यम् । तच्चोत्साहगुणान्तर्भावाल्लब्धमेव । यथा वक्ष्यति— 'दाक्ष्यं शैघ्र्यं तथाऽमर्षः शौर्यं चोत्साहलक्षणम्' (कानी. ४।२२) इति । तस्य पुनरुपादानं प्राधान्यार्थम् । तथाहि— 'दक्षः श्रियमधिगच्छति' इति वृद्धाः । प्रागल्भ्यं च वचनानुष्ठानयोः परिषद्यसाध्वसत्वम् । धारयिष्णुता अवधारितस्यार्थस्याविस्मरणशीलता । तस्याश्च प्रज्ञागुणान्तर्भावेऽपि पुनर्वचनं प्राधान्यार्थम् । उत्साहः शौर्यादिगुणात्मकः । वाग्मिता संक्षेपविस्तराभ्यां स्पष्टललितपदाभिधायिता । दाढर्यं यत्कार्यं प्रस्तुतं तत्र दृढता । आपत्क्लेशसहिष्णुता आपत्काले शीतोष्णवातवर्षादिक्षमता ।

जम.

(२) सप्ताङ्गस्यास्य लाभाय यतेतेत्युक्तम्, तत्राऽऽद्यमङ्गमात्मसंपत्, यथाऽऽत्मा स्वामिनः संपद्यते । तया विना तु स्वाम्याभासो निरात्मकशरीरसमानः । तेनाऽऽत्मसंपदं श्लोकद्वयेन प्रदर्शयितुमाह— शास्त्रमिति । शास्त्रं इदमेव नीतिप्रतिपादकम् । प्रज्ञेत्यष्टगुणा बुद्धिः । धृतिरिति विषादाभावात् संतुष्टचित्तता, तया कदाचिदपि विषण्णचित्तो न भवति । दाक्ष्यमिति दक्षस्य भावः कुशलता । प्रागल्भ्यमिति । प्रगल्भः अपरिषद्भीरुः, तस्य भावः । धारयिष्णुतेति अवधारितस्यार्थस्याविस्मरणशीलता । उत्साह इति । उत्साहो गुणत्रययुक्तः पठ्यते । तथा च कौटिल्यः— 'शौर्यममर्षो दाक्ष्यं चोत्साहगुणाः' (कौ. ६।१) इति । तत्र दाक्ष्यं यत् पृथगुपात्तं तत्र कौशलमेव गृह्यते, अत्र तूत्साहग्रहणात् शीघ्रकारितेत्यपुनरुक्तम् । वाग्मितेति । प्रशस्ता वाक् यस्य स वाग्मीत्युच्यते । प्राशस्त्यं च वाचां ललितमधुरैरल्पैरेवाक्षरैः बह्वर्थप्रतिपादनम् । दाढर्यमिति प्रतिज्ञातस्यार्थस्यापरित्यागः । आपत्क्लेशसहिष्णुतेति । आपदां दैवात् समुत्पन्नानां क्लेशानां च शीतोष्णक्षुत्तृष्णादीनां च सहनत्वम् । उनि.

**[1]प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता ।**
**कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ॥**

(१) प्रभावः प्रभुशक्तिः । शुचिता उपधापरिशुद्धता । मैत्रीं मित्रावर्जनात्मिका वृत्तिः । त्यागः पात्रेषु दानशीलता । सत्यं प्रतिज्ञातकारिता । कृतज्ञता उपकाराविस्मरणम् । कुलं आभिजात्यम् । शीलं सुस्वभावता । दमः क्लेशक्षमिता । एते गुणाः जनानुरागमादधानाः संपत्तिहेतवः । अत्र स्वामिसंपत् संपत्तिहेतुरिति वक्तव्ये परिसंख्यातगुणादानं प्राधान्यादत्राऽऽदरार्थम् । यथा शास्त्रनिश्चयहेतुत्वात् विनयमूलो नयः, तथा प्रज्ञादिगुणा अपि प्रकृष्यमाणत्वात् तन्मूलाः । यथाऽऽहुः — 'जितेन्द्रियत्वं विनयस्य लक्षणं गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥' इति । यस्मात् विनयमूलमेतत्, तस्मादात्मात्मीययोर्विनये यतेत । जम.

(२) पुण्यपरमाणुघटितशरीरत्वादकोशदण्डोऽपि तद्वानिव दृश्यते, समीहितैश्च घटितैर्द्विषद्भिर्नाभिभूयते येन गुणेनासौ प्रभावः । शुचितेति । परस्त्रीद्रव्यहिंसारहितः शुचिः, तस्य भावः । मैत्रीति सर्वसत्त्वेषु मित्रभावना । त्याग इति अर्थानां सत्पात्रप्रतिपादनम् । सत्यमिति अमृषावादः । कृतज्ञतेति । कृतमुपकारं प्रत्युपकारबुद्ध्या योऽभिजानाति स कृतज्ञः, तस्य भावः । कुलमिति शुद्धोभयपक्षता । शीलं सुस्वभावता । दमश्चेत्युपशमः । चकारोऽनुक्तानामाभिगामिकगुणानां समुच्चयार्थः । गुणाः संपत्तिहेतव इति । एते गुणाः संपत्तेः आत्मसंपदः हेतवः कारणं भवन्तीति । उनि.

राज्ञा आत्मनो विनयः प्रथमं ततः अमात्यानां भृत्यानां पुत्राणां प्रजानां च क्रमेण संपाद्यः

**[2]आत्मानं प्रथमं राजा विनयेनोपपादयेत् ।**
**ततोऽमात्यांस्ततो भृत्यांस्ततः पुत्रांस्ततः प्रजाः ॥**

(१) कानी. १।२४; नीम. ३२.
(२) कानी. १।२५; नीम. ३३.

(१) तत्र स्वयमविनीतो नाऽऽत्मीयान् विनेतुमीश इत्याह– आत्मानं प्रथममित्यादि। ततोऽमात्यान् अनन्तरप्रकृतीः, ततो भृत्यान् दण्डप्रकृतीः, तदुपबृंहितस्ततः पुत्रान् स्वामिप्रकृतिविशेषान् कर्कटकसधर्मणः, ततः प्रजाः बाह्याः। जम,

(२) एभिर्गुणैः संपन्नो राजा आत्मवानुच्यते, स च राज्यस्याऽऽद्यमङ्गं भवति। यद्यपि स्वाभाविकविनयोपयोगाच्छास्त्रनिश्चयस्वरूपविनयं संपाद्य तदुपयोगाद्राज्यं प्राप्तम्, (तथापि) तत्रस्थेनापि विनयेऽभ्यास एव कार्यः, चित्तानित्यत्वान्मनुष्याणाम्, विषयाणां चातिमनोहरत्वात्। तमेवाभ्यासं दर्शयितुमाह– आत्मानमिति। राजा महीपतिः आत्मानं प्रथमं विनयेन इन्द्रियजयेन उपपादयेत्, इन्द्रियजयसंपन्नं कुर्यादित्यर्थः। राज्ञि जितेन्द्रिये प्रकृतयो जितेन्द्रिया भवन्तीति। 'राजा यच्छीलस्तच्छीलाः प्रकृतयो भवन्ति' (कौ. ८।१) इति कौटिल्यः। ततोऽमात्यान् मन्त्र्यादीन् दण्डधारो भूत्वा, ततो भृत्यांस्ततः पुत्रानिति। भृत्यानामादौ विनये प्राप्ते अमात्यभृत्यरक्षिता हि पुत्रा विनयेन युज्यन्ते इति भावः। ततः प्रजाः विनयेन इन्द्रियजयेनोपपादयेत्, जितेन्द्रियाः कुर्यादिति भावः। उनि.

**'सदाऽनुरक्तप्रकृतिः प्रजापालनतत्परः।**
**विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥**

(१) एवं च सर्वपुरुषप्रकृतिविनयेऽस्य प्रभूततरा वृद्धिर्भवति। यदाह– सदानुरक्तप्रकृतिरित्यादि। इदमुक्तं भवति– स्वयं विनीतोऽमात्यदण्डपुत्रप्रकृतीरान्तरीः प्रजाश्च बाह्या विनीयानुरज्य संरक्ष्य चाधिकां श्रियमवाप्नोति। जम.

(२) विनयोपपादनस्य फलं दर्शयितुमाह– सदेति। विनीतात्मा हि नृपतिः सदा भूयसीं श्रियमश्नुते इति संबन्धः। अनुरक्तप्रकृतिरिति। आभिगामिकगुणैरनुरक्ताः प्रकृतयः अमात्यादिकाः यस्य तथोक्तः। प्रजापालनतत्पर इति। प्रजापालने एव तत्परः परमतात्पर्यं यस्य स तथोक्तः। भूयसीं श्रियमिति। भूयस्त्वं श्रियः पृथिवीभूयस्त्वेन। विनीतात्मा नृपतिः सार्वभौमो भवतीत्यर्थः। उनि.

(१) कानी. १।२६; नीम. ३३.

इन्द्रियजयरूपस्य विनयस्य विधिः तत्त्वविवरणसहितः साङ्गः सविस्तरः

**'प्रकीर्णे विषयारण्ये धावन्तं विप्रमाथिनम्।**
**ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम् ॥**

(१) विनय इन्द्रियजय इत्युक्तम्। तत्कथं कुर्यादित्याह– प्रकीर्ण इत्यादि। व्यक्तिभेदेनातिबहुलत्वात् विस्तीर्णे विषयारण्यम्, तत्र धावन्तमिन्द्रियदन्तिनमिति संबन्धः। विप्रमाथिनं निरङ्कुशत्वादुपघातकम्। ज्ञानाङ्कुशेनेति। आत्मा मनश्च द्रव्यपदार्थौ। तथाहि– 'पृथिव्यापस्तेजो वायुराकाशः कालो दिगात्मा मनश्चेति नव द्रव्याणि' इति। तत्राऽऽत्मसमवायिनौ ज्ञानप्रयत्नौ गुणपदार्थौ। तत्र ज्ञानं द्विविधम्– आत्मालम्बनं बाह्यालम्बनं च। तत्राऽऽद्यस्योत्तरत्रोपयोगं वक्ष्यामः। द्वितीयं द्विविधम्– प्रतिबुद्धमप्रतिबुद्धं चेति। तत्र कार्याकार्यविवेकादुत्पद्यमानं मनोनियमनसमर्थं प्रतिबुद्धम्, अन्यदप्रतिबुद्धम्। तदुभयमात्ममनःसंयोगे सति भवति। संयोगश्च प्रयत्नगुणात्। प्रयत्नश्च समारम्भः। इदमुक्तं भवति– आत्मनो यदा प्रयत्नगुण उत्पद्यते, तदाऽऽत्मा मनसा युज्यते। तत्र यदा मन आत्मसंप्रयुक्तमप्रतिबुद्धज्ञानवशात् प्रवर्तते, तदा विषयेषु इन्द्रियविप्रतिपत्तिमापादयदात्मन उपघाताय भवति। तस्मात् प्रतिबुद्धज्ञानेनाङ्कुशस्थानीयेन मनोनियमनपूर्वकमिन्द्रियदन्तिनं अस्वतन्त्रं कुर्यात्, यथा विषयेषु न विप्रतिपद्यते इति। अस्य श्लोकस्य भाष्यमात्मेत्यादिग्रन्थः। जम.

(२) इन्द्रियजयोपदेशं दित्सुरिन्द्रियाणां दुर्जयत्वं दर्शयितुमाह– प्रकीर्णेति। विषयशब्देन शब्दस्पर्शरूपरसगन्धाः, तेषां प्रकीर्णत्वं प्रत्येकं बहुभेदत्वान्मनोरमत्वाच्च। विषया एवारण्यम्, तत्र धावन्तं रिरंसया। विप्रमाथिनमिति। विशेषेण प्रमथ्नातीत्येवंशीलम्। ज्ञानाङ्कुशेन

(१) कानी. १।२७; उनि. प्रकीर्णे वि (प्रकीर्णवि); नीम. ३३.

वक्ष्यमाणेन कुर्वीत विदध्यात् वश्यं विधेयं इन्द्रियमेव दन्तिनं द्विपम् । उनि.

[1]आत्मा प्रयत्नेनार्थेभ्यो मनः समधितिष्ठति ।
संयोगादात्ममनसोः प्रवृत्तिरुपजायते ॥

(१) मनः समधितिष्ठतीति । प्रयत्नेन हेतुना मनसा संयुज्यते इत्यर्थः । अर्थेभ्य इति । विषयार्थम् । प्रवृत्तिरुपजायत इति । आत्ममनःसंयोगे सति इन्द्रियसंयोगार्थं मनसो गतिर्भवतीत्यर्थः । जम.

(२) यदुक्तम् 'ज्ञानाङ्कुशेन इन्द्रियदन्तिनं वश्यं कुर्वीत' इति, तदेव दर्शयितुमाह– आत्मेति । आत्मा यन्त्रग्राहकः प्रयत्नेन आत्मगुणेन प्रेरितः अर्थेभ्यः इन्द्रियार्थेभ्यः शब्दस्पर्शादिभ्यो भोगार्थम् । तादर्थ्ये चतुर्थीयम् । मन इति वक्ष्यमाणलक्षणं समधितिष्ठति समधिरोहति । तदारूढ आत्मा प्रवर्तन–निवर्तने करोतीति वक्ष्यति । संयोगादात्ममनसोरिति । प्रयत्नप्रेरितयोः आत्ममनसोः प्रवृत्तिः गतिः विषयं प्रत्युपजायते इति । उनि.

[2]विषयामिषलोभेन मनः प्रेरयतीन्द्रियम् ।
तन्निरुन्ध्यात्प्रयत्नेन जिते तस्मिञ्जितेन्द्रियः ॥

(१) यं विषयमुपलब्धुमिच्छत्यात्मा, तदिच्छानुविधानेन विषयसंयोगार्थं मनः प्रेरयतीन्द्रियम् । तत आत्मा विषयमुपभुङ्क्ते । तत्रेन्द्रियाविप्रतिपत्त्या विषयोपभोग इष्यत एव । विप्रतिपत्तौ तु तन्मनो निरुन्ध्यात् नियमयेत् प्रतिबुद्धज्ञानेनेत्यर्थः । प्रयत्नेनेति । यत्नमास्थाय निरुन्ध्यादित्यर्थः, तस्यातिचञ्चलत्वात् । तस्मिन्मनसि जिते जितेन्द्रियः, तदधीनत्वादिन्द्रियविप्रतिपत्तेः । जम.

(२) प्रवृत्तेः कारणमभिधातुमाह– विषयेति । विषय एवाऽऽमिषं अभिलषणीयं भक्ष्यम्, तल्लोभेन तदभिलाषेण मनः कर्तृ प्रेरयतीन्द्रियं विषयामिषं प्रति । तन्निरुन्ध्यात् प्रयत्नेन । जिते तस्मिन् जितेन्द्रियः, भवतीति शेषः । यद्यपि प्रयत्नवदात्ममनःसंयोगात् प्रवृत्तिस्तथापि मन एव प्रधानम् । उनि.

(१) कानी. १।२८ यत्नेना ( यत्नाद ).

(२) कानी. १।२९ ; नीम. ३३.

[1]विज्ञानं हृदयं चित्तं मनो बुद्धिश्च तत्समम् ।
अनेनाऽऽत्मा करोतीह प्रवर्तननिवर्तने ॥

(१) ननु चाऽऽत्ममनःसंयोगात् प्रतिबुद्धाप्रतिबुद्धत्वेन मनोबुद्धिरुत्पद्यते । सा च ज्ञानमेव । विज्ञानं तु पुनरिन्द्रियार्थसंनिकर्षजमिति । नैतदस्ति, मनोबुद्धेरपि विज्ञानत्वात् । यदाह– विज्ञानमित्यादि । तत्समं ज्ञानादनर्थान्तरम् । विशेषस्त्वयम्– द्वयसंयोगाच्चतुष्टयसंयोगाद्वा तद्भवति । अनेनेति । मनोबुद्ध्यात्मकेन संकल्परूपेण ज्ञानेन । इहेति विषयेषु । प्रवर्तननिवर्तने मनस इति शेषः । यदाऽऽत्मनोऽप्रतिबुद्धज्ञानमुत्पद्यते तदाऽयं सापायेष्वपि विषयेषु मनः प्रवर्तयति, प्रतिबुद्धं चैतेभ्यो निवर्तयति । जम.

(२) व्यवहारार्थं वृत्त्यर्थास्तत्पर्यायांश्च दर्शयितुमाह– विज्ञानमिति । विविधानि ज्ञानानि उत्पाद्यन्ते इति मनो विज्ञानमित्युपचर्यते । हृदयमिति गोप्यत्वादन्तर्हितत्वाच्च । चेतनाधारत्वाच्चित्तमिति । मन इति पदार्थानां मननात् । बुद्धिरिति बोधाधारत्वात् । तत्सममिति । तदेतत्संज्ञापञ्चकं समं समानार्थं बोद्धव्यम् । अनेनेति मनसा । आत्मेति अधिष्ठाता । करोति विदधाति । इह शरीरे । प्रवर्तननिवर्तने कर्तव्याकर्तव्यकरणाकरणे । ज्ञात्वैवमात्मना शास्त्रविहितानुष्ठानेष्वेव मनसः प्रवृत्तिरनुमन्तव्या, निषिद्धेषु निरोद्धव्येति भावः । उनि.

धर्माधर्मौ सुखं दुःखमिच्छाद्वेषौ तथैव च ।
प्रयत्नज्ञानसंस्कारा आत्मलिङ्गमुदाहृतम् ॥

(१) आत्मनोऽस्तित्वे लिङ्गमाह– धर्माधर्माविंत्यादि । तत्र धर्माधर्मयोः सुखदुःखे लक्षणे । सुखोत्पादनाद्धर्मो लक्ष्यते, दुःखोत्पादनाच्च अधर्मः । सुखदुःखे अनुग्रहोपघातलक्षणे । इच्छा रागः अभिलाषस्तृष्णेत्यनर्थान्तरम् । द्वेषः क्रोधः, यस्मिन्नुत्पन्ने ज्वलितमिवाऽऽत्मानमभिमन्यते । प्रयत्नः समारम्भः । स चेच्छापूर्वको द्वेषपूर्वकश्च । ज्ञानं येनाऽऽत्मा बुध्यते । तत् द्वयसंनिकर्षाच्चतुष्टयसंनिकर्षाच्च भवति ।

(१) कानी. १।३०–३१ ; जम. मनो बुद्धिश्च ( मनोबुद्धिश्च ).

संस्कारः ज्ञानजो ज्ञानहेतुश्च । अनुभवज्ञानेन ह्यात्मनि संस्कार उत्पद्यते, तस्मात् कालान्तरेण स्मार्तं ज्ञानमुत्पद्यते इति ज्ञानजो ज्ञानस्य च हेतुः । एते च धर्मादयो गुणत्वाद्रूपादिवदाश्रिताः । योऽसावाश्रयः स आत्मेत्यात्मनो लिङ्गम् । यथा शेषाणि द्रव्याणि नाश्रयः तथा शास्त्रान्तरे प्रतिपादितम् । ग्रन्थगौरवभयात्तु नोक्तमस्माभिः । जम.

( २ ) आत्मास्तित्वे किं प्रमाणम् ? इत्याशङ्क्य ज्येष्ठप्रमाणमनुमानमेव दर्शयितुमाह– धर्मेति । धर्मः प्रवृत्तिनिवृत्तिलक्षणः स्वर्गापवर्गफलः । अधर्मः तद्विपरीतो निरयहेतुः । सुखमिति । खशब्देन बुद्धीन्द्रियाण्यभिधीयन्ते । शोभनानि येन भवन्ति खानि तत् सुखम् । तद्विपरीतं दुःखम् । इच्छेति कामः । तद्विपरीतो द्वेषः । तथैवेति तेनैव प्रकारेण । प्रयत्न इति येन धृतं शरीरमवतिष्ठते । ज्ञानमिति पदार्थस्वरूपबोधः । संस्कार इति अनेकजन्मकर्माभ्यासवासनावशात् सद्योजातादीनां स्तन्यपिपासादिकं येन क्रियते । आत्मलिङ्गमुदाहृतमिति । एते गुणा आत्मनोऽस्तित्वे लिङ्गं भवन्ति । उदाहृतमिति आचार्यैरुपदिष्टम् । धूमेनाग्निवदेभिर्लिङ्गैरात्मास्तित्वं प्रतीयते इति । उनि.

**[1]ज्ञानस्यायुगपद्भावो मनसो लिङ्गमुच्यते ।**
**नानार्थेषु च संकल्पः कर्म चास्य प्रकीर्त्यते ॥**

( १ ) यद्यात्मव्यतिरिक्तं मनो न स्यात् तदा आत्मेन्द्रियसंनिकर्षे ज्ञानमुत्पद्येत, न चोत्पद्यते । तस्मादस्ति तदन्यत् । अयुगपद्ग्रहणं एकत्वाणुत्वसाधनार्थम् । यद्यनेकमेकस्मिञ्शरीरे मनः स्यात् तदाऽनेकसंनिधानाद्युगपत् सर्वज्ञानानि स्युः, व्यापित्वे च सर्वेन्द्रियैर्युगपन्मनःसंयोगे सर्वाणीन्द्रियज्ञानानि भवेयुः, न च भवन्ति । तस्मात् तदेकमणु च प्रत्येतव्यम् । नानार्थेषु च संकल्प इति । इदमेवं करिष्यामीति नानार्थेष्वात्मनो मनसा संकल्पो मनःकर्मेत्युच्यते । जम.

(२) मनसोऽस्तित्वे लिङ्गमाह– ज्ञानस्येति । जातावेकवचनम् । पञ्चानामपि श्रोत्रादीनां बुद्धीन्द्रियाणां शब्दादिष्विन्द्रियार्थेषु सर्वव्यापित्वादात्मनो युगपत् समकालमेव ज्ञानोत्पत्तौ प्राप्तायां भिन्नकालेषु या ज्ञानोत्पत्तिः सा मनसोऽस्तित्वे लिङ्गं भवति इत्युच्यते । अस्ति मनःसंज्ञकं षष्ठं किंचिद्बुद्धीन्द्रियम्, येनाऽऽत्मनि समवेतेन सकलपदार्थानां ज्ञानानि क्रमादनुभूयन्ते । तदभावे युगपज्ज्ञानोत्पत्तिः प्राप्नोति, न च दृश्यते, तस्मादस्ति मन इति । नानार्थेषु च संकल्प इति । नानाभूताः पृथग्भूताः सुखदुःखोत्पादका ये पदार्थास्तेषु संकल्प इति सम्यग्भूता कल्पना । अयं पदार्थः सुखहेतुः तस्मादुपादेयः, तथाऽयं दुःखोत्पादकस्तस्माद्धेयः, इत्यादिका सर्वदा कल्पना, तदेवास्य कर्म प्रकीर्तितम् । आचार्यैरिति शेषः । प्रयत्नस्य चास्तित्वे संधारकाख्यो गुणो लिङ्गम्, येन धृतं शरीरं तिष्ठति, करे यथा शस्त्रादिकम् । एतच्चानुक्तमपि प्रसङ्गादात्तमिति । उनि.

**[1]श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चेति पञ्चमी ।**
**पायूपस्थं हस्तपादं वाक् चेतीन्द्रियसंग्रहः ॥**

( १ ) कतिविधमिन्द्रियं ज्ञेयमित्याह– श्रोत्रमित्यादि । श्रोत्रादीनि पञ्च बुद्धीन्द्रियाणि । पाय्वादीनि पञ्च कर्मेन्द्रियाणि । जम.

( २ ) आत्ममनसोः स्वरूपमभिधायेन्द्रियाणामिन्द्रियार्थानां चाभिधातुमाह– श्रोत्रमिति । श्रोत्रं श्रवणेन्द्रियम् । त्वगित्याद्यः शरीरधातुः । चक्षुषी दृगिन्द्रियम् । जिह्वा रसनेन्द्रियम् । नासिका घ्राणेन्द्रियम् । उक्तसमुच्चये चशब्दः । इतिशब्दो बुद्धीन्द्रियपरिसमाप्तौ । पञ्चमीति पञ्चैव पृथग्विषयोपभोगीनि बुद्धीन्द्रियाणि । मनस्तु सर्वगामीति तद्व्यतिरिक्तम् । कर्मेन्द्रियाण्यभिधीयन्ते– पायूपस्थमिति । पायुः मलनिर्गमनरन्ध्रम् । उपस्थमिति तस्यैव उप समीपे तिष्ठतीत्यानन्देन्द्रियम् । हस्तपादमिति । हस्तः आदानशक्तिः, पादः गमनशक्तिः । वाक् चेति वागिन्द्रियं यदालापक्रियया अनुमीयते । इन्द्रियसंग्रह इति । एतावन्त्येव सर्वाण्यपीन्द्रियाणि संगृहीतानि भवन्तीति । उनि.

---

(१) कानी. १।३२; उनि. कीर्त्यते ( कीर्तितम् ).

(१) कानी. १।३३–३४.

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः ॥

( १ ) तत्र पूर्वेषां शब्दादयः पञ्च विषयाः । शेषाणामुत्सर्गादयः कर्माणि । उत्सर्गः उपयुक्तस्याऽऽहारस्य । आनन्दनं शुक्रविसृष्टिप्रभावितम् । आदानं ग्रहणम् । गतिः विहरणम् । आलापः भाषणम् । तत्क्रियाः पाय्वादीनां कर्माणीत्यर्थः । जम.

( २ ) शब्द इति वीणावेण्वादिध्वनिः । स्पर्श इति त्वगिन्द्रियस्य त्वगिन्द्रियेण संबन्धः । रूपमिति रमणीयावयवसंनिवेशः । रस इति स्वादुवस्तूनामास्वादः । गन्धः घ्राणेन्द्रियानन्दनः सुरभिः । पञ्चम इति पञ्चानां पूरणः । एते पञ्चापि बुद्धीद्रियाणां यथासंख्यमुपभोग्या विषया इन्द्रियार्थाश्चाभिधीयन्ते । तथैव कर्मेन्द्रियाणां कर्माण्यभिधीयन्ते– उत्सर्गेति । तेषां पाय्वादीनां पञ्चानामपि कर्मेन्द्रियाणामुत्सर्गादिकाः पञ्चैव क्रियाः । तद्यथा पायोः गुदस्य मलप्रेरणं क्रिया, उपस्थस्य उभयरूपस्य मिथुनसंबन्धिन्यानन्दनक्रिया, हस्तयोरादानम्, पादयोर्गतिः, वागिन्द्रियस्याऽऽलाप इति । उनि.

[१]आत्मा मनश्च तद्विद्यैरन्तःकरणमुच्यते ।
ताभ्यां तु सप्रयत्नाभ्यां संकल्प उपजायते ॥

( १ ) सांव्यवहारिकमिन्द्रियजयमुक्त्वा पारमार्थिकं दर्शयितुमाह– आत्मा मनश्चेत्यादि । आत्मा कर्ता । मनः साधकतमम् । तदुभयं कर्तृकरणभावेन विषयोपलब्धिं करोतीति करणमिति, ' कृत्यल्युटो बहुलम् ' (पा. ३।३।११३) इति प्रत्ययविधानात् । तदन्तर्व्याप्रियमाणत्वादन्तःकरणम् । सप्रयत्नाभ्यामिति । यदा आत्मनः प्रयत्नगुण उत्पद्यते तदाऽयं मनसा संप्रयुक्तः संकल्पते । ततस्तदिच्छानुविधानान्मनः प्रेरयतीन्द्रियम् । जम.

( २ ) आत्ममनोबुद्धिकर्मेन्द्रियाणां लक्षणमभिधाय बहिरन्तःपरिकल्पनया करणविभागमभिधातुमाह–आत्मेति । आत्मा मनश्चाभिहितेन लक्षणेन प्रतिपाद्येते यया विद्यया सा आन्वीक्षिकी विद्या येषां ते तद्विद्याः कणादाक्षपादादयः, तैरन्तःकरणमुच्यते । आभ्यामिति । आत्ममनोभ्यां प्रयत्नसहिताभ्यां प्रवृत्तिः इन्द्रियप्रवर्तनं संकल्प उपजायते प्रवृत्तेः प्रयत्नो हेतुरिति । एतद्द्वयमन्तःकरणमिति । उनि.

[१]आत्मा बुद्धीन्द्रियाण्यर्था बहिष्करणमुच्यते ।
संकल्पाध्यवसायाभ्यां सिद्धिरस्य प्रकीर्तिता ॥

( १ ) आत्मा द्विविधः– अन्तरात्मा बहिरात्मा चेति । तत्राऽऽद्यो धर्मादिगुणाश्रयो नित्यः । स च प्राङ्निर्दिष्टः । इतरो देह एव महाभूतात्मको विनाशी । तस्याप्यन्तरात्माश्रयत्वात् कर्तृत्वम् । बुद्धीन्द्रियाणि श्रोत्रादीनि । तेषां साधकतमत्वं तैरात्मनो विषयोपलब्धेः । अर्थाः शब्दादयः । एतत्त्रितयं कर्तृकरणकर्मभावेन विषयोपलब्धिं करोतीति करणं पूर्ववत् । बहिर्व्याप्रियमाणत्वात् बहिष्करणम् । सिद्धिरस्येति । आन्तरस्य बाह्यस्य च करणस्य । तत्राऽऽद्यस्य संकल्पात् सव्यापारत्वमनुमीयते, द्वितीयस्याध्यवसायात् विषयोपलब्धेरित्यर्थः । जम.

( २ ) आत्मा उक्तलक्षणः । बुद्धिः मनः । इन्द्रियाणि उभयरूपाणि । अर्थाः शब्दादयः बुद्धीन्द्रियाणाम्, कर्मेन्द्रियाणां चोत्सर्गादिकाः । तेऽपि कर्मेन्द्रियाणामर्थाः प्रयोजनम् । एतत्सर्वं बहिःकरणमुच्यते । संकल्पाध्यवसायाभ्यामिति । संकल्पः सम्यग्भूतकल्पनम्, अध्यवसायोऽपि प्रयत्न एव, ताभ्यां सिद्धिरस्योपभोक्तुरात्मनः प्रकीर्तिता अभिहिता । तद्यथा– आत्मा प्रयत्नप्रेरितो मनसा संयुज्यते, मनः इन्द्रियेण, इन्द्रियमात्ममनोधिष्ठितं यदाऽभिलषितं न प्राप्नोति तदा मनसि संकल्प एवंविध उपजायते– अभिलषितोऽयं सुखसाधनो विषय एभिरुपायैः संपद्येतेति । संकल्पोत्पत्तेरनन्तरं बहिःकरणे कर्मेन्द्रियवर्गे अध्यवसायः प्रयत्नविशेष उत्पद्यते, तेन गत्यालापादिभिर्विषयप्राप्तिः, ततः सुखानुभवलक्षणा सिद्धिरस्याऽऽत्मनः प्रकीर्तिता । तदेवमन्तःकरणप्रवृत्तिः प्रयत्नात्, बहिःकरणप्रवृत्तिरप्यध्यवसायलक्षणात् प्रयत्नादेव इति दर्शितं भवति । उनि.

(१) कानी. १।३५ ; उनि. ताभ्यां ( आभ्यां ).

(१) कानी. १।३६–३७.

**उभे एते हि करणे यत्नानन्तर्यके स्मृते ।**
**तस्मात्प्रयत्नसंरोधाद्भावयेन्निर्मनस्कताम् ॥**

( १ ) यत्नानन्तर्यके इति यत्नानन्तरभवे । दिगादित्वात् यत् । यदा आत्मनः प्रयत्नगुण उत्पद्यते तदाऽनयोः सव्यापारत्वम् । तथाहि— आत्मा प्रयत्नेन मनसा संयुज्य संकल्पेन मनः प्रेरयति, मनश्चेन्द्रियम् , तच्चार्थेन युज्यते इति । तस्मात्प्रयत्नसंरोधाद्भावयेन्निर्मनस्कताम् । यथा मनसो बाह्याभ्यन्तरप्रवृत्तिर्न भवति । प्रयत्नसंरोधश्चाऽऽत्मालम्बनज्ञानात् । तद्धि योगाभ्यासात् प्रयत्नान् संरुणद्धि । जम.

( २ ) एतदेव समर्थयन्नाह— उभे इति । उभे एते अनन्तरोक्ते । हि स्फुटम् । करणे अन्तःकरणबहिःकरणसंज्ञके । यत्नानन्तर्यके इति । यत्नानन्तरं वर्तेते, प्रयत्नप्रेरणादेवेत्यर्थः । तस्मादिति । यस्मादेवं तस्मात् प्रयत्नसंरोधादुभयात्मकस्य प्रयत्नस्यैवं सरोधं कृत्वा भावयेत् अभ्यस्येत् निर्मनस्कताम् । यावत् प्रयत्न एवं निरुद्धो भवति तावदात्मा मनसा न संयुज्यते, ततश्च विद्यमानमपि मनो नास्त्येव, मनःकार्याकरणादन्तःकरणविश्लेषात्प्रवृत्तिर्नोपपद्यते । एवमन्तःकरणप्रवृत्त्यभावाद्बहिःकरणप्रवृत्तेरप्यभावः, तदभावादिन्द्रियाणां विषयैः सह संबन्ध एव न स्यात् , कुतो वा आदानादिसंभव इति जितेन्द्रियो भवति । कथमपि बहिःकरणं यावत् प्राप्तेऽप्यन्तःकरणे अध्यवसायाख्यप्रयत्ननिरोधात् गत्यालापाद्यभावाद्भूयोऽपीन्द्रियाणां विषयैः संबन्धो न घटते एवेति निर्मनस्कतैवं भवितैवेति । उनि.

[1]**एवं करणसामर्थ्यात्संयम्याऽऽत्मानमात्मना ।**
**नयापनयविद्राजा कुर्वीत हितमात्मनः ॥**

( १ ) सांव्यवहारिकेण तात्त्विकेन चेन्द्रियजयेन संयम्येति संबन्धः । करणसामर्थ्यात् मनस इन्द्रियस्य च सामर्थ्यात् । आत्मानं आन्तरम् । प्रवर्तमानमिति शेषः । आत्मना स्वयम् । नयापनयविद्राजेति विनयफलं दर्शयति । दण्डनीतिविदित्यर्थः , दण्डनीत्यां हि नयापनययोर्मानुषकर्मणोर्विचार्यमाणत्वात् । तत्र योगक्षेमयोर्यत्र निष्पत्तिः स नयः , विपत्तिः अपनयः । हितं यल्लोकद्वयाविरुद्धम् । जम.

( २ ) तदेतन्निगमयति— एवमिति । उक्तन्यायेन करणयोरुभयोरपि संनिरोधात् संयम्य निरुद्धचेष्टमात्मानमात्मनैव च, नान्येन कृत्वा । नयापनयविद्राजेति । नयः नीतिशास्त्रपरिज्ञानम् , अपनयः तद्विपरीतः , तौ जानातीति राजा महीपतिः । कुर्वीत हितमात्मन इति । नयानुष्ठानमेव आत्मनो हितमिति कुर्वीत अनुतिष्ठेदिति । उनि.

[1]**एकस्यापि न यः शक्तो मनसः संनिबर्हणे ।**
**महीं सागरपर्यन्तां कथं नु स विजेष्यते ॥**

( १ ) इन्द्रियजयस्यानुष्ठानार्थं स्वरूपमुक्तम् । इदानीं तदनुष्ठानदार्ढ्यार्थमजये दोषाख्यानमेकस्येत्यादिग्रन्थेन । संनिबर्हणे नियमने । सागरपर्यन्तामिति चक्रवर्तिक्षेत्रं दर्शयति । यथोक्तम्— ' तस्यां हिमवत्समुद्रान्तरमुदीचीनं नवयोजनसहस्रप्रमाणं तिर्यक् चक्रवर्तिक्षेत्रम् ' इति । कथं विजेष्यते ? जम.

( २ ) करणसंरोधः कर्तुं न शक्यते चेदभिमतफलमपि न प्राप्यते इत्येतद्दर्शयितुमाह— एकस्येति । एकस्याप्यसहायस्य शक्तः समर्थः यो न भवति मनसः चित्तस्य संनिबर्हणे निग्रहणे, महीं सागरपर्यन्तां पृथ्वीं समुद्रमेखलां सः राजा कथं केन प्रकारेण हि स्फुटं अवजेष्यति वश्यां करिष्यति ? बहुभिर्जेतव्यैरधिष्ठितत्वादिति । उनि.

[2]**क्रियावसानविरसैर्विषयैरपहारिभिः ।**
**गच्छत्याक्षिप्तहृदयः करीव नृपतिर्ग्रहम् ॥**

( १ ) अनियमिते हि मनसि विषयेष्वासङ्गान्न केवलं न जयति प्रत्युत शत्रूणामेव वशं गच्छति स्वयं

---

(१) कानी. १।३८ ; उनि. सामर्थ्या (संरोधा); नीम. ३३.

(१) कानी. १।३९ ; उनि. कथं नु स विजेष्यते ( स कथं ह्यवजेष्यति ) ; नीम. ३३ स्यापि न यः शक्तो ( स्यैव हि योऽशक्तो ) शेषं उनिवत् .

(२) कानी. १।४० ; नीम. ३३.

वाऽऽपदमात्मनो जनयति । यदाह श्लोकद्वयेन- क्रियेत्यादि । क्रियावसानविरसैः भुक्तविरसैरित्यर्थः । अपहारिभिः आपाते । ग्रहं वशम् । जम.

( २ ) अनिगृहीतमनसः परिणामं दर्शयितुमाह- क्रियेति । क्रिया विषयेऽनुष्ठानलक्षणा, तस्या अवसानं प्राप्तिः, तत्र विरसाः विगतरसाः निःस्वादा इत्यर्थः । तथा चोक्तम्- 'आपातरम्या विषयाः पर्यन्तपरितापिनः' इति । एवंभूतैर्विषयैः स्पर्शादिभिः अपहारिभिः मनोहारिभिः गच्छत्याक्षिप्तहृदयः गृहीतहृदयः करीव करिण्याः स्पर्शेन, कलकूजितशब्देन, भद्रजातिसुरभिगन्धेन, मनोहररूपेण, अर्धजग्धेन च प्रेम्णा समर्पितेन सल्लकीपल्लवकवलेनेति । विषयैरिति बहुवचनमेवं करिणि घटते । नृपतिः राजा ग्रहं बन्धनं करीव गजराज इव प्राप्नोति । उनि.

**[1]सज्जमानो ह्यकार्येषु विषयान्धीकृतेक्षणः ।**
**आवहत्युग्रभयदां स्वयमेवाऽऽपदं नृपः ॥**

( १ ) सज्जमानः सक्तिं गच्छन्, विषयान्धीकृतत्वात् । अकार्येषु अगम्यागमनादिषु । उग्रभयदां उच्छेदकारिणीम् । जम.

( २ ) न केवलं विषयैराक्षिप्तचित्तः पार्थिवो ग्रहं गच्छति, उग्रभयदामापदमपि प्राप्नोति इत्येतद्दर्शयितुमाह- सज्जेति । सज्जमानः आसक्तिं गच्छन् हि स्फुटं अकार्येषु परस्त्रीगमनादिषु विषयान्धीकृतेक्षणः विषयैः स्पर्शादिभिः अन्धीकृते ईक्षणे शास्त्रमये चर्ममये च यस्य स तथोक्तः । आवहत्युग्रभयदामिति । आवहति संपादयति उग्रभयदां भीषणभयदायिनीं स्वयमेव आत्मनैव आपदं विपदं नृपः पार्थिवः । उनि.

**[1]शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।**
**एकैकमेषां भवति विनाशप्रतिपत्तये ॥**

(१) कानी. १।४१

( १ ) यथा विषयाः प्रत्येकमन्धीकुर्वन्तो विनाशाय तथा दृष्टान्तेन प्रतिपादयितुमाह- शब्द इत्यादि । विनाशप्रतिपत्तये विनाशकरणाय । जम.

( २ ) भूयोऽपि विषयाणां वैषम्यं दर्शयितुमाह- शब्द इति । शब्दादयः पञ्चाप्युक्तलक्षणाः । एकैकमिति प्रत्येकम् । द्वन्द्वत्वादेकवद्भावे विभाषापक्षे नपुंसकता । अलं समर्थं एतेषां मध्ये विनाशप्रतिपत्तये ध्वंसप्राप्तये एकैकमिति । उनि.

**[1]शुचिशष्पाङ्कुराहारो विदूरक्रमणक्षमः ।**
**लुब्धकाद्गीतलोभेन मृगो मृगयते वधम् ॥**

( १ ) लुब्धकात् व्याधात् । शष्पं कोमलतृणम् । मृगयते प्रार्थयते । जम.

( २ ) एतदेव दर्शयितुमाह- शुचीति । शष्पाणि बालतृणानि, तेषामङ्कुराः अग्राणि, त एव आहारः यस्य । शौचं चास्याऽऽहारस्यान्यापरिगृहीतत्वम् । परस्वादानं स्तेयं भवेदित्येवं सदोषता परिहृता भवति । विदूरक्रमणक्षम इति । विशेषेण दूरं अतिव्यवधानम्, तत्र क्रमणं लङ्घनम्, तत्र क्षम इति । अनेन वेगबलादसाध्यता प्रतिपादिता भवति । लुब्धकाद्गीतलोभेनेति । व्याधाद्गीतलोलुपतया मृगः हरिणः मृगयते अन्वेषयते वधं मृत्युम् । उनि.

**[2]गिरीन्द्रसदृशाकारो लीलयोन्मूलितद्रुमः ।**
**करिणीस्पर्शसंलोभादालानं याति वारणः ॥**

(१) लीलया अप्रयासेन । आलानं बन्धनम् । जम.

(२) शब्दात् केवलादेव विनाशं दर्शयित्वा स्पर्शे (दोषं) दर्शयन्नाह- गिरीन्द्रेति । गिरीन्द्रः सुरगिरिः, तेन सदृशः तुल्यः आकारः यस्य । अनेन महाकायता प्रतिपादिता । लीलयोन्मूलितद्रुम इति । अनायासेनोत्खात-

(१) कानी. १।४३ शुचि (शुचिः); नीम. ३३ [illegible]

मभिगच्छेत्, नातिवाक्पारुष्यादिभिरुद्वेजयेत्, न विमानितामधिगच्छेत्, न संभोगेन पीडयेत्, न तद्धनं सपत्नीभिः सह भुञ्जीत। शत्रौ च प्रयोजयेत् अतिसंधानार्थम्। जम.

(२) बलादानयनकोपात् वेण्यां शस्त्रमाधाय विदूरथाख्यं नृपं निद्रावशं गतं जघानेति। इत्येवं वृत्तं परिहरेद्विजिगीषुः। शत्रौ चापि प्रयोजयेत्, यथा स्वभार्याभिरेव गृहगतः शत्रुर्विनाश्यते एवम्। उनि.

[1]यस्य दाराः सुगुप्ताः स्युः पुरुषैराप्तकारिभिः।
सर्वभोगान्वितं तस्य हस्ते लोकद्वयं स्थितम्॥

दारगुप्तेः फलं दर्शयितुमाह— यस्येति। यस्य पुंसो राज्ञो वा दाराः स्त्रियः सुगुप्ताः स्युः, पुरुषैराप्तकारिभिः आप्तं हितं ये कुर्वन्ति तैः सर्वभोगान्वितं सर्वकामावाप्तियुक्तं लोकद्वयं तस्य हस्ते स्थितम्। परलोकेऽपि कुलकलङ्काभावात् स्वर्ग इति। उनि.

[2]धर्ममिच्छन्नरपतिः सर्वदाराननुक्रमात्।
गच्छेदनुदिनं नित्यं वाजीकरणबृंहितः॥

धर्मार्थं दाररक्षणार्थं चाभिधातुमाह— धर्ममिति। धर्ममिच्छन् नरपतिः सर्वदारान् अनुक्रमात् शास्त्रोक्तेन मार्गेण गच्छेत् धर्माभिसंधिना प्रतिनिशं नित्यं सम्यग्वाजीकरणैः शास्त्रोक्तैः बृंहितः कृतशुक्रवृद्धिः। उनि.

[3]विचार्य कार्यावयवान् दिनक्षये
विसृज्य लोकं प्रमदाकृतक्रियः।
अशस्त्रबन्धेन हि साधु पाणिना
स्वपेदसक्तं परमाप्तरक्षितः॥

(१) इदानीमहोरात्रापेक्षायामाह— विचार्येत्यादिना। कार्यावयवानिति तद्दिनमष्टधा विभज्य कार्यभेदान् निरूपयेदित्यर्थः। दिनक्षये विसृज्य लोकम्, आपराह्णिकास्थानगतमिति शेषः। प्रमदाकृतक्रिय इति। रात्रौ प्रमदासु रक्षापूर्वकं कृताभिगमनादिक्रियः। अशस्त्रबन्धेन पाणिना, संनिहितनखशिरोरक्षाशस्त्रत्वात्। असक्तमिति क्रियाविशेषणम्, निद्रासक्तिं त्यक्त्वेत्यर्थः। परमाप्तरक्षितः अन्तर्वैशिकसैन्येन परिरक्षितः। जम.

(२) शयनविधिमभिधातुमाह— विचार्येति। विचार्य निर्णीय कार्यावयवान् अहोरात्रं षोडशधा विभज्य तत्र ये कार्यावयवाः तान् निर्वर्त्य दिनक्षये विसृज्य लोकं प्रमदाभिरेव कृताः सकला अपि क्रिया यस्य, पुरुषेणान्तःपुरप्रवेशाभावात्। सशस्त्रबन्धेन हि पाणिना करेण शस्त्रं विधाय। सर्वदा करसंनिहितं शस्त्रं विधेयमिति। स्वपेत् निद्रां गच्छेत्। तत्राप्यसक्तं निद्रायामप्यासक्तिर्न कर्तव्येति। परमाप्ता येऽन्तर्वैशिकपुरुषाः तैः रक्षितः इति। उनि.

[1]नयेन जाग्रत्यनिशं नरेश्वरे
सुखं स्वपन्तीह निराधयः प्रजाः।
प्रमत्तचित्ते स्वपति त्रसद्भयात्
प्रजागरेणास्य जगत्प्रबाध्यते॥

(१) प्रकरणार्थानुष्ठानफलमाह— नयेनेत्यादि। यथोक्तरक्षापूर्वकेण नयचक्षुषा कार्याकार्यं पश्यति सति सुखं स्वपन्ति विस्रब्धं तिष्ठन्ति। प्रमत्तचित्ते स्वपति प्रमत्तचित्तत्वात् कार्याकार्यं न पश्यति, प्रजागरेण चिन्तया बाध्यते कुतोऽस्माकं परित्राणं भवितेति। जम.

(२) निद्रासक्तिनिरासार्थमाह— नयेनेति। नयेन नीत्यनुष्ठानेन अहरष्टधा रात्रिं च विभज्य राज्यनियुक्तानुष्ठानेन जाग्रति अप्रमत्ते सर्वं करणीयं पश्यति नरेश्वरे सुखं स्वपन्तीह निराधयः निर्गतमनःपीडाः प्रजाः, उपद्रवकारिणां निग्रहात्। प्रमत्तचित्ते नरेश्वरे प्रमत्तं विषयासक्तं चित्तं यस्मिन्। प्रमादोऽत्र विषयासक्तिः

---

(१) कानी. ७।५५; नीम. ४७ पुरुषै (पौरुषै) भोगान्वितं (लोकान्वितं).

(२) कानी. ७।५६; उनि. दनुदिनं (प्रतिनिशं); नीम. ४७ सर्वदाराननुक्रमात् (सर्वान् दाराननुक्रमम्) दिनं (निशं).

(३) कानी. ७।५७; उनि. अशस्त्र (सशस्त्र); नीम. ४७ अशस्त्र (सशस्त्र) स्वपेदसक्तं (स्वपित्यसक्तः).

(१) कानी. ७।५८; उनि. बाध्यते (बुध्यते); नीम. ४७ स्वपति त्रसद्भयात् (सति जाग्रति प्रजाः) बाध्यते (बाधते).

कौटिल्योक्ता । तथा च शब्दादिष्विन्द्रियार्थेषु प्रसक्ते प्रमादेन स्वपति स्वामिनि भयादुपद्रवकारिभ्यः प्रजागरेण अस्य राज्ञः संकलं जगत् प्रजारूपं प्रकर्षेण बुध्यते । तस्मात् सततोत्थेन राज्ञा भवितव्यमिति । उनि.

[1]इति स्म पूर्वे मुनयो बभाषिरे
नृपस्य राज्यस्य च साधु रक्षणम् ।
तदेतदेवं परिपालयन्नयात्
नरेश्वरः पालनकल्यतां व्रजेत् ॥

(१) इदानीं स्वमण्डलगतव्यापारमुपसंहरति- इतीत्यादिना । राज्यस्य अमात्यादेः । तदेतदेवमिति । तस्मात् एतत् स्वराज्यं सर्गषट्कोक्तेन नयेन परिपालयन् । पालनकल्यतामिति । पालने निर्दोषतां व्रजेत् । अन्यथा पालयन् गर्हिततामित्यर्थादापन्नम् । जम.

(२) नृपराज्ययोः साधुरक्षणे पूर्वाचार्यसंमतिमाह- इतीति । इति एवं पूर्वे बृहस्पतिशुक्रादयः । नृपस्य राज्यस्य च साधु रक्षणम् । एतत् उक्तप्रकारेण नृपः साधु पालयन् पालनकल्पतां पालनसामर्थ्यं ' स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ' इत्यादिपूर्वोक्तप्रकारं यथास्थितं पर्यालोच्य शासति सति विशिष्टविधानवत्तां व्रजेत् प्राप्नुयादिति । उनि.

## शुक्रनीतिः

### भोज्यपरीक्षा

[2]विषदोषभयादन्नं विमृश्य कपिकुक्कुटैः ।
हंसाः स्खलन्ति कूजन्ति भृङ्गा नृत्यन्ति मायूराः ॥
विरौति कुक्कुटो माद्येत्क्रौञ्चो वै रेचते कपिः ।
हृष्टरोमा भवेद्बभ्रुः शारिका वमते तथा ॥
दृष्ट्वैवं सविषं चान्नं तस्माद्भोज्यं परीक्षयेत् ॥

विषदोषभयात् षड्रसं षट् तिक्तकटुकषायाम्ललवणमधुराः रसाः आस्वादाः यस्य तादृशं अन्नं कपिकुक्कुटैः, बहुवचनात् कपिकुक्कुटप्रभृतिभिरित्यर्थः, विमृश्य परीक्ष्य नित्यं भुञ्जीतेति उत्तरेणान्वयः । यतः सविषं अन्नं दृष्ट्वैव हंसाः स्खलन्ति पतन्ति, भृङ्गाः भ्रमराः कूजन्ति कूजनं अस्पष्टनिनादं कुर्वन्ति, मायूराः मयूरा एव मायूराः, स्वार्थे अण्प्रत्ययः, नृत्यन्ति, कुक्कुटः विरौति चीत्कारं करोति, क्रौञ्चः बकः माद्येत् मत्ततरं गच्छति, कपिः वानरः रेचते पुरीषमुत्सृजति, बभ्रुः भारद्वाजाख्यपक्षिविशेषः हृष्टरोमा रोमाञ्चितदेहः भवेत्, तथा सारिका वमते वमनं करोति । वैशब्दोऽवधारणे । तस्मात् भोज्यं खाद्यं वस्तु परीक्षयेत् एतैरिति भावः । शुनीटी.

### रक्षकनियोजनम्

[1]पृष्ठाग्रगान् क्रूरवेषान्नतिनीतिविशारदान् ।
सिद्धास्त्रनम्रशस्त्रांश्च भटानारान्नियोजयेत् ॥

क्रूरवेशान् भीषणवेशधारिणः नतिनीतिविशारदान् नतौ प्रणतौ नीतौ च विशारदान् विचक्षणान् सिद्धास्त्रान् नम्रशस्त्रान् शस्त्रधारिणः भटान् वीरान् आरात् समीपे पृष्ठाग्रगान् पश्चात् संमुखवर्तिनः नियोजयेत् रक्षेत् । शुनीटी.

### अन्यनृपोऽविश्वसनीयः

[2]विश्वस्तान्यनृपस्यापि न विश्वासं समाप्नुयात् ।
नैकान्ते न गृहे तस्य गच्छेदल्पसहायवान् ॥

विश्वस्तस्यापि अन्यनृपस्य प्रतिकूलनृपतेः विश्वासं न समाप्नुयात्, शत्रौ नृपे नैव विश्वसेदित्यर्थः । तस्य प्रतिनृपस्य गृहे वा एकान्ते निर्जने देशे अल्पसहायवान् न गच्छेत् । शुनीटी.

स्ववेशरूपसदृशान् निकटे रक्षयेत्सदा ।
विशिष्टचिह्नगुप्तः स्यात्समयेऽन्यादृशो भवेत् ॥

सदा निकटे स्वस्य आत्मनः वेशेन परिच्छदेन रूपेण च सदृशान् जनान् रक्षेत्, तथात्वे व्यक्तिग्रहो न स्यादिति भावः । स्वयं विशिष्टं अन्यविलक्षणं चिह्नं राजचिह्नमित्यर्थः, गुप्तं यस्य तथाभूतः स्यात् । तथा समये समयविशेषे इत्यर्थः, अन्यादृशः सामान्यजनसदृशः भवेत् । शुनीटी.

(१) कानी. ७।५९ ; उनि. कल्यतां (कल्पतां).
(२) शुनी. १।३२६-३२८.

(१) शुनी. १।३६९-३७०.
(२) शुनी. ५।१३-१४.

नासावधानः स्यात्

[1]क्षणं नासावधानः स्याद्भृत्यस्त्रीपुत्रशत्रुषु ॥

क्षणमपि भृत्यस्त्रीपुत्रशत्रुषु भृत्येषु स्त्रीषु पुत्रेषु शत्रुषु च असावधानः न स्यात्। शुनीटी.

## नीतिवाक्यामृतम्

वीरपुरुषपरिवारितेन परदूतदर्शनम्

[2]**वीरपुरुषपरिवारितः शूरपुरुषान्तरितान् दूतान् पश्येत् ॥**

अथ राज्ञा यथा परदूता द्रष्टव्यास्तदाह– वीरेति। दूतान् परदेशोपगतान् पश्येत् अवलोकयेत्। किंविशिष्टान् दूतान्? शूरपुरुषान्तरितान् शूरपुरुषानन्तरे धृत्वा। किंविशिष्टः सन्? वीरपुरुषपरिवारितः सन्। तथा च नारदः– 'परदूतान् नृपः पश्येद्वीरैर्बहुभिरावृतः। शूरैरन्तर्गतस्तेषां चिरं जीवितुमिच्छया ॥'। नीवाटी.

**श्रूयते हि किल चाणक्यस्तीक्ष्णदूतप्रयोगेणैकं नन्दं जघान ॥**

एतत् किल श्रूयते योऽसौ चाणक्यः स तीक्ष्णदूतप्रयोगेण तीक्ष्णविषदूता भृत्यास्तेषां प्रयोगेण नन्दमेकमद्वितीयमपि जघान। नीवाटी.

परीक्ष्यं शत्रुप्रहितम्

**शत्रुप्रहितं शासनमुपायनं च स्वैरपरीक्षितं नोपाददीत ॥**

अथान्यदपि भूभुजा यत्कृत्यं तदाह– शत्रुप्रहितमिति। नोपाददीत न गृह्णीयात्। कोऽसौ? राजा। किं तत्? शासनं लिखितम्। किंविशिष्टम्? शत्रुप्रहितं वैरिप्रेषितम्। न केवलं शासनमुपायनं च, ढौकनीयं च। कथं न गृह्णीयात्? यावन्न परीक्षितम्। कैः? स्वैः आत्मीयपुरुषैः। तथा च शुक्रः– 'यावत्परीक्षितं न स्वैर्लिखितं प्राभृतं तथा। शत्रोरभ्यागतं राज्ञा तावद्ग्राह्यं न तद्भवेत् ॥'। नीवाटी.

(१) शुनी. ५।१७.

(२) नीवा. १३।१३–१७.

**श्रूयते हि किल स्पर्शविषवासिताद्भुतवस्त्रोपायनेन करहाटपतिः कैटभो वसुनामानं राजानं जघान ॥**

**आशीविषविषधरोपेतरत्नकरण्डकप्राभृतेन च करपालः करालं जघान ॥**

एतस्मात्कारणाच्छत्रूपायनं स्वैरपरीक्षितं नाऽऽददीत। तथा–आशीविषेति। सूत्रद्वयमपि गतार्थम्। नीवाटी.

स्वेभ्यः परेभ्यश्च राजरक्षा

[1]**राज्ञि रक्षिते सर्वं रक्षितं भवत्यतः स्वेभ्यः परेभ्यश्च नित्यं राजा रक्षितव्यः ॥**

अथ राजरक्षासमुद्देशो व्याख्यायते। तत्राऽऽदावेव राजरक्षाकारणमाह– राज्ञीति। रक्षितव्यः रक्षणीयः। कोऽसौ? राजा। केभ्यः? स्वेभ्यः आत्मीयेभ्यः सकाशात्, तथा परेभ्यः। कथम्? नित्यमेव (तस्मिन् रक्षिते सर्वं रक्षितं भवति यतः)। तथा च रैभ्यः– 'रक्षिते भूमिनाथे तु आत्मीयेभ्यः सदैव हि। परेभ्यश्च यतस्तस्य रक्षा देशस्य जायते ॥'। नीवाटी.

आसन्नकरणीयजनलक्षणानि

**अत एवोक्तं नयविद्भिः– पितृपैतामहं महासंबन्धानुबद्धं शिक्षितमनुरक्तं कृतकर्माणं च जनमासन्नं कुर्वीत ॥**

अथ राज्ञो रक्षा यथा भवति तथाऽऽह– अत इति। अत एवोक्तं अस्माद्भणितम्। कैः? नयविद्भिः नीतिविद्भिः। किं तदुक्तमित्याह– एतद्गुणविशिष्टं जनं लोकं समासन्नं कुर्वीत कुर्यात् रक्षार्थम्। किंविशिष्टं जनम्? महासंबन्धानुबद्धं महान् योऽसौ परिणयलक्षणस्तेनानुबद्धं यन्त्रितम्। तथा शिक्षितं विचक्षणम्। तथाऽनुरक्तं कृतकर्माणं येन राजकर्माणि कृतानि। तथा पितृपैतामहं अन्वयागतम्। समासन्नं कुर्यात्। तथा च गुरुः– 'वंशजं च सुसंबन्धं शिक्षितं राजसंयुतम्। कृतकर्मजनं पार्श्वे रक्षार्थं धारयेन्नृपः ॥'। नीवाटी.

(१) नीवा. २४।१–६८, ८७.

**अन्यदेशीयमकृतार्थमानं स्वदेशीयं चापकृत्योपगृहीतमासन्नं न कुर्वीत ॥**

अथ यादृशं जनं समीपगं न कुर्वीत तादृशमाह— अन्येति । अन्यदेशीयं अकृतार्थमानं स्वदेशीयं चापकृत्योपगृहीतं जनं समीपे न धारयेत् न स्थापयेत् । कम् ? जनम् । कथंभूतम् ? अन्यदेशीयम्, तथा अपकृत्योपगृहीतं अपकृत्य दण्डयित्वा उपगृहीतं स्वस्थाने स्थापितम्, यतस्तस्य वित्तक्षतिः स्यात् । तथा च शुक्रः— 'नियोगिनं समीपस्थं दण्डयित्वा न धारयेत् । दण्डको यो न वित्तस्य बाधा चित्तस्य जायते ॥ अन्यदेशोद्भवं लोकं समीपस्थं न धारयेत् । अपूजितं स्वदेशीयं वा विरुध्य प्रपूजितम् ॥'। नीवाटी.

**चित्तविकृतेर्नास्त्यविषयः किं न भवति माताऽपि राक्षसी ॥**

अथ दण्डयित्वा यः स्थाप्यते तत्स्वरूपमाह— चित्तेति । चित्ते विकृतिः विकारः यस्य स तथा, तस्य चित्तविकृतेः पुरुषस्य नास्ति । कोऽसौ ? अविषयः गोचरम् । पापं कुर्वाणस्य यतः किं न भवति ? काऽसौ ? माता । किंविशिष्टा ? राक्षसी । यदा माता शाकिनीधर्ममनुतिष्ठति तदा पुत्रमपि व्यापादयतीति । तथा च शुक्रः— 'यस्य चित्ते विकारः स्यात्सर्वं पापं करोति सः । जातं हन्ति सुतं माता शाकिनीमार्गमाश्रिता ॥'। नीवाटी.

**अस्वामिकाः प्रकृतयः समृद्धा अपि निस्तरीतुं न शक्नुवन्ति ॥**

अथ स्वामिरहिताः प्रकृतयो यथा भवन्ति तथाऽऽह— अस्वामिका इति । न समर्था भवन्ति । काः ? प्रकृतयः अमात्याद्याः । किं कर्तुम् ? निस्तरीतुं निर्वाहं गन्तुम् । किंविशिष्टाः प्रकृतयः ? अस्वामिकाः न विद्यते स्वामी यासां अस्वामिकाः । पुनरपि कथंभूतास्ताः ? समृद्धा अपि सर्वकामान्विता अपि । तथा च वसिष्ठः— 'राजप्रकृतयो नैव स्वामिना रहिताः सदा । गन्तुं निर्वाहणं यद्वत्स्त्रियः कान्तविवर्जिताः ॥'। नीवाटी.

**देहिनि गतायुषि सकलाङ्गे किं करोति धन्वन्तरिरपि वैद्यः ॥**

अथ गतायुषि पुरुषे यद्भवति तदाह— देहिनीति । किं करोति ? अपि तु न करोति । कोऽसौ ? धन्वन्तरिरपि वैद्यः । यस्य किं विशिष्टस्य देहिनः ? सकलाङ्गस्यापि, सकलाः कला द्विसप्ततिप्रमाणाः यस्य शरीरे अङ्गे तिष्ठन्ति । तथा च व्यासः— 'न मन्त्रा न तपो दानं न वैद्यो न च भेषजम् । शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥'। नीवाटी.

स्त्र्यादिभ्य आसन्नेभ्योऽपि राजा रक्षणीयः

**राज्ञस्तावदासन्नाः स्त्रिय आसन्नतरा दायादा आसन्नतमाश्च पुत्रास्ततो राज्ञः प्रथमं स्त्रीभ्यो रक्षणं ततो दायादेभ्यस्ततः पुत्रेभ्यः ॥**

अथ येषां सकाशाद्राज्ञो रक्षणं कार्यं तानाह— राज्ञ इति । गतार्थमेतत् । नीवाटी.

**आ वण्ठादा चक्रवर्तिनः सर्वोऽपि स्त्रीसुखाय क्लिश्यति ॥**

अथ स्त्रीसुखकृते यद्भवति तदाह— आ वण्ठादिति । वण्ठशब्देन निकृष्टः पुमानुच्यते । चक्रवर्ती समस्तद्वीपाधिपतिः । आङ् मर्यादायाम् । वण्ठचक्रवर्तिनां मध्ये यो जनः स सर्वोऽपि स्त्रीसुखकृते क्लिश्यति स्त्रीसुखार्थे क्लेशं करोति, येन स्त्रीसुखाढ्यो भवति । तथा च गर्गः— 'कृषिं सेवां विदेशं च युद्धं वाणिज्यमेव च । सर्वं स्त्रीणां सुखार्थाय स सर्वः कुरुते जनः ॥'। नीवाटी.

**निवृत्तस्त्रीसङ्गस्य धनपरिग्रहो मृतमण्डनमिव ॥**

अथ स्त्रीसङ्गरहितस्य पुरुषस्य यद्भवति तदाह— निवृत्तेति । स्त्रीसङ्गरहितस्य यः संपल्लक्षणो विभवः स किंविशिष्टः ? मृतमण्डनमिव । यथा मृतमण्डनं वृथा न किंचित्सुखमुत्पादयति तथा प्रभूतोऽप्यर्थो व्यर्थः वनितासङ्गरहितस्य । तथा च वल्लभदेवः— 'प्रभूतमपि चेद्वित्तं पुरुषस्य स्त्रियं विना । मृतस्य मण्डनं यद्वत्तत्तस्य व्यर्थमेव हि ॥'। नीवाटी.

**सर्वाः स्त्रियः क्षीरोदवेला इव विषामृतस्थानम् ॥**

अथ स्त्रीणां स्वरूपमाह– सर्वा इति । या एताः स्त्रियः ताः सर्वा विषामृतस्थानम् । किंविशिष्टा इव ? क्षीरोदवेला इव दुग्धसमुद्रलहर्य इव । तथा च वल्लभदेवः– 'नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् । विरक्ता मारयेद्यस्मात्सुखायत्यनुरागिणी ॥' । नीवाटी.

**मकरदंष्ट्रा इव स्त्रियः स्वभावादेव वक्रशीलाः ॥**

भूयोऽपि स्त्रीस्वरूपमाह– मकरदंष्ट्रा इति । एताः स्त्रियो यास्ताः सर्वा वक्रशीलाः, वक्रं शीलं यासां ताः वक्रशीलाः । कस्मात् ? स्वभावादेव नियमेन । का इव वक्रशीलाः ? मकरदंष्ट्रा इव । तथा च वल्लभदेवः– 'स्त्रियोऽतिवक्रतायुक्ता यथा दंष्ट्रा झषोद्भवाः । ऋजुत्वं नाधिगच्छन्ति तीक्ष्णत्वादतिभीषणाः ॥' । नीवाटी.

**स्त्रीणां वशोपायो देवानामपि दुर्लभः ॥**

अथ भूयोऽपि स्त्रीस्वरूपमाह– स्त्रीणामिति । स्त्रीणां विरुद्धानां योऽसौ वशोपायः वशं कर्तुमुपायः सामभेदोपप्रदानदण्डलक्षणः स देवानामपि दुर्लभः । तमुपायं देवा अपि न जानन्तीत्यर्थः । तथा च वल्लभदेवः– 'चतुरः सृजता पूर्वमुपायांस्तेन वेधसा । न सृष्टः पञ्चमः कोऽपि गृह्यन्ते येन योषितः ॥'। नीवाटी.

**कलत्रं रूपवत् सुभगमनवद्याचारमपत्यवदिति महतः पुण्यस्य फलम् ॥**

अथ सुकलत्रस्य स्वरूपमाह– कलत्रमिति । एतदुक्तं भवति– तस्येदृशं वक्ष्यमाणं स्यात् येनान्यस्मिन् देहान्तरे महत्पुण्यं कृतं तस्य फलम् । एतत्किंविशिष्टं कलत्रम् ? सुरूपं रूपाढ्यं तावत् । तथा सुभगम् । तथाऽनवद्याचारं अनवद्यः अकुत्सितः आचारः व्यवहारः यस्य । तथा अपत्यवत् पुत्रयुतम् । तथा च चारायणः– 'सुरूपं सुभगं यद्वा सुचरित्रं सुतान्वितम् । यस्येदृशं कलत्रं स्यात् पूर्वपुण्यफलं हि तत् ॥' । नीवाटी.

**कामदेवोत्सङ्गस्थाऽपि स्त्री पुरुषान्तरमभिलषति च ॥**

अथ भूयोऽपि स्त्रीस्वरूपमाह– कामेति । अभिलषति वाञ्छति । काऽसौ ? स्त्री । किमभिलषति ? पुरुषान्तरं पुरुषविशेषम् । किंविशिष्टा स्त्री ? कामदेवोत्सङ्गस्थाऽपि । एतदुक्तं भवति– कामादपरो रूपवान् कश्चिन्न भवति तथापि तं परित्यज्य स्त्री अन्यमभिलषति, चापल्यात् । तथा च नारदः– 'कामदेवोपमं त्यक्त्वा मुखप्रेक्षं निजं पतिम् । चापल्याद्वाञ्छते नारी विरूपाङ्गमपीतरम् ॥' । नीवाटी.

**न मोहो लज्जा भयं स्त्रीणां रक्षणं किंतु परपुरुषादर्शनं संभोगः सर्वसाधारणता च ॥**

अथ भूयोऽपि स्त्रीणां स्वरूपमाह– न मोह इति । स्त्रीणां तावत् कुटुम्बमोहो रक्षणं न करोति, भयं न करोति, लज्जा न करोति । तर्हि कथं रक्षणं भवतीत्याह– तासां परपुरुषादर्शनं तावत् अन्यपुरुषदर्शनं यदि न स्यात् । तथा संभोगः कामसेवनम् । तथा सर्वसाधारणत्वं च पत्युः सकाशात्सर्वं वाञ्छितं लभन्ते । सर्वसाधारणत्वं ईर्ष्याधर्मं यदि भर्ता न करोति । एतत्त्रयं स्त्रीणां रक्षणम्, नान्यत् । तथा च जैमिनिः– 'अन्यस्यादर्शनं कोपात्प्रसादः कामसंभवः । सर्वासामेव नारीणामेतद्रक्षत्रयं मतम् ॥' । नीवाटी.

**दानदर्शनाभ्यां समवृत्तौ हि पुंसि नापराध्यन्ते स्त्रियः ॥**

अथ यथा न विरुध्यन्ते भर्तुः स्त्रियः तथाऽऽह– दानेति । नापराध्यन्ते न विरोधं कुर्वन्ति । काः ? स्त्रियः । कस्मिन् ? पुंसि भर्तरि । किंविशिष्टे ? समवृत्तौ समप्रसादे । काभ्याम् ? दानदर्शनाभ्याम् । एतदुक्तं भवति– यस्य पुरुषस्य बह्व्यः स्त्रियो भवन्ति स यदा तुल्यवृत्तः तुल्यचेष्टितः भवति । दानमानाभ्यां विशेषं न करोति तदा ताः सानुरागा भवन्ति । तथा च नारदः– 'दानदर्शनसंभोगं समं स्त्रीषु करोति यः । प्रसादेन विशेषं च न विरुध्यन्ति तस्य ताः ॥' । नीवाटी.

**परिगृहीतासु स्त्रीषु प्रियाप्रियत्वं न मन्येत ॥**

अथ परिगृहीतासु स्त्रीषु पुरुषेण यत्कर्तव्यं तदाह– परिगृहीतास्विति । न मन्येत । किं तत् ? प्रियाप्रियत्वम् । कासु ? स्त्रीषु । किंविशिष्टासु स्त्रीषु ? परिगृहीतासु विवाहितासु । याः स्त्रियो भवन्ति विवाहिताः तासु समत्वेन वर्तितव्यं प्रियाप्रियत्वे विषये । तथा च भागुरिः– 'समत्वेनैव द्रष्टव्या याः स्त्रियोऽत्र

विवाहिताः । विशेषो नैव कर्तव्यो नरेण श्रियमिच्छता ॥ ' । नीवाटी.

**कारणवशान्निम्बोऽप्यनुभूयत एव ॥**

अथ दुर्भगास्वपि स्त्रीषु यथा वर्तितव्यं तदाह— कारणवशादिति । यस्मादेतदुक्तमाचार्येण— स्त्रीषु प्रियाप्रियत्वं न कुर्यात् । यतश्च अनुभूयते सेव्यते । कोऽसौ ? निम्बोऽपि । कस्मात् ? कारणवशात् प्रयोजनवशतः । यथा निम्बोऽपि भक्ष्यते औषधार्थे तथा दुर्भगाऽपि स्त्री विरूपाऽपि सेवनीया, नो चेदपमानिता सती सा वधादिकं चिन्तयति भर्तुः । तथा च भारद्वाजः— ' दुर्भगाऽपि विरूपाऽपि सेव्या कान्तेन कामिनी । यथौषधकृते निम्बः कटुकोऽपि प्रदीयते ॥ ' । नीवाटी.

**चतुर्थदिवसे स्नाता स्त्री तीर्थं तीर्थोपरोधे महानधर्मानुबन्धः ॥**

अथ यस्मिन् काले स्त्री अवश्यमेव सेव्यते तथाऽऽह— चतुर्थेति । ऋतुकाले संजाते त्रीणि दिनानि यावदपवित्रा स्त्री भवति, चतुर्थे दिवसे पुनस्तीर्थं भवति पवित्रा भवति । किंविशिष्टा सती ? स्नाता सती । एतस्मात्कारणात्तीर्थोपरोधे कृते परित्यागे कृते महान् अधर्मानुबन्धः धर्मक्षतिः भवति । तथा यश्चतुर्थदिवसे स्त्रियं न भजते तस्य महती क्षतिर्भवति । तथा च बादरायणः— ' ऋतुस्नातां न यो नारीं भजते पापकृत्तमः । न तस्य हव्यं गृह्णन्ति देवाः कव्यं च पूर्वजाः ॥ ' । नीवाटी.

**ऋतावपि स्त्रियमुपेक्षमाणः पितॄणामृणभाजनम् ॥**

अथ ऋतुस्नातां स्त्रियं न भजति तस्य यद्भवति तदाह— ऋताविति । ऋणभाजनं भवति । केषाम् ? पितॄणां पूर्वजानाम् । कोऽसौ ऋणभाजनं भवति ? उपेक्षमाणः अगच्छन् पुरुषः । काम् ? ऋतुस्नातां स्त्रियम् । तथा च गर्गः— ' ऋतुं यच्छति नो योऽत्र भार्यायाः स्नानजे दिने । तस्य देवा न गृह्णन्ति हव्यं कव्यं च पूर्वजाः ॥ ' । नीवाटी.

**अवरुद्धाः स्त्रियः स्वयं नश्यन्ति स्वामिनं वा नाशयन्ति ॥**

अथ स्त्रीणामृतुमप्रदातुः पुरुषस्य यद्भवति तदाह— अवरुद्धा इति । याः स्त्रियः अवरुद्धाः उद्वाहिताः भवन्ति ऋतुमात्रेणापि न संभाव्यन्ते, ताः द्वाभ्यामेकतमं कुर्वन्ति । किं वा ? स्वयं नश्यन्ति अथवा पतिं नाशयन्ति । तस्मात्पुरुषेणापि अवश्यं स्त्रीणां ऋतुर्देयः । तथा च गर्गः— ' ऋतुकाले च संप्राप्ते न भजेद्यस्तु कामिनीम् । तद्दुःखात्सा प्रणश्येत स्वयं वा नाशयेत्पतिम् ॥ ' । नीवाटी.

**न स्त्रीणामकर्तव्ये मर्यादाऽस्ति वरमविवाहो नोढोपेक्षणम् ॥**

अथर्तुकाले स्त्रियो वर्जिता यत्कुर्वन्ति तदाह— नेति । नास्ति न विद्यते । काऽसौ ? मर्यादा । कासाम् ? स्त्रीणाम् । कस्मिन् ? अकर्तव्ये । तस्माद्वरं वध्वानं(?) अविवाहः, न ऊढानां विवाहितानां उपेक्षणं ऋतोरप्रदानम् । तथा च भार्गवः— ' नाकृत्यं विद्यते स्त्रीणामपमाने कृते सति । अविवाहो वरस्तस्मान्न तूढानां विवर्जनम् ॥ ' । नीवाटी.

**अकृतरक्षस्य किं कलत्रेणाकृषतः किं क्षेत्रेण ॥**

गतार्थमेतत् । नीवाटी.

**सपत्नीविधानं पत्युरसमञ्जसं च विमाननमपत्याभावश्च चिरविरहश्च स्त्रीणां विरक्तिकारणानि ॥**

अथ स्त्रीणां यानि विरक्तिकारणानि तान्याह— सपत्नीति । एतानि पञ्च स्त्रीणां विरक्तिकारणानि । तस्मान्न कार्याणि । एकं सपत्नीविधानं तावत् यदन्या भार्या, न विशेषः कार्यः । पत्युरसमञ्जसं पत्युर्मनोमलिनता । विमाननं अपमानम् (कार्यम् ?) । अपत्याभावः वन्ध्यता । तथा चिरविरहश्च चिरकाले देशान्तरगमनं पत्युः । तथा च जैमिनिः— ' सपत्नी वाऽसमानत्वमपमानोऽनपत्यता । देशान्तरगतिः पत्युः स्त्रीणां रागं हरन्त्यमी ॥ ' । नीवाटी.

**न स्त्रीणां सहजो गुणो दोषो वाऽस्ति किंतु नद्यः समुद्रमिव यादृशं पतिमाप्नुवन्ति तादृश्यो भवन्ति स्त्रियः ॥**

अथ स्त्रीणां भूयोऽपि स्वरूपमाह– नेति । आसां स्त्रीणां सहजो गुणो दोषो वा नास्ति, भर्तुर्गुणेन गुणा भवन्ति, दोषेण दोषाः । केन दृष्टान्तेन ? यादृशं पति-माप्नुवन्ति तादृश्यो भवन्ति । का इव ? नद्य इव । यथा नद्यः समुद्रं पतिं प्राप्य तादृग्रूपा भवन्ति । तथा च शुक्रः– 'गुणो वा यदि वा दोषो न स्त्रीणां सहजो भवेत् । भर्तुः सदृशतां यान्ति समुद्रस्याऽऽपगा यथा ॥' । नीवाटी.

**स्त्रीणां दौत्यं स्त्रिय एव कुर्युस्तैरश्चोऽपि पुंयोगः स्त्रियं दूषयति किं पुनर्मानुष्यः ॥**

अथ भूयोऽपि स्त्रीस्वरूपमाह– स्त्रीणामिति । स्त्रीणां विषये यद्दौत्यं तत्स्त्रीसकाशात् कारणीयम्, न पुनः पुरुषाणां सकाशात् । यतः पुंयोगस्तैरश्चोऽपि तिर्यक्सं-भवोऽपि गर्दभाश्वसमुत्थोऽपि दृष्टोऽपि दूषयति सदोषं करोति स्त्रियम्, किं पुनर्मनुष्यसंभवः संयोगः ? तथा च गुरुः– 'स्त्रीणां दौत्ये नरेन्द्रेण प्रेष्या नार्यो नरो न वा । तिरश्चोऽपि च पुंयोगो दृष्टो दूषयति स्त्रियम् ॥' । अनु च– 'पतिव्रताऽपि या नारी दृष्ट्वाऽश्वखरसंनिभम् । सुतरां कुरुते वाञ्छां तं मैथुनसमुद्भवम् ॥' । नीवाटी.

**वंशविशुद्ध्यर्थमनर्थपरिहारार्थं स्त्रियो रक्ष्यन्ते न भोगार्थम् ॥**

अथ स्त्रियो यदर्थं रक्ष्यन्ते तदाह– वंशेति । एताः स्त्रियः कस्माद्रक्ष्यन्ते ? वंशविशुद्ध्यर्थम्, येन वंशस्य अन्वयस्य विशुद्धिर्भवति । अनर्थपरिहारार्थं च रक्ष्यन्ते, न भोगार्थम् । गलार्थं च । तथा च गुरुः– 'वंशस्य च विशुद्ध्यर्थं तथाऽनर्थक्षयाय च । रक्षितव्याः स्त्रियो विज्ञैर्न भोगाय च केवलम् ॥' । नीवाटी.

**भोजनवत्सर्वसमानाः पण्याङ्गनाः कस्तासु हर्षामर्षयोरवसरः ॥**

अथ पण्याङ्गनानां स्वरूपमाह– भोजनवदिति । पण्या-ङ्गनाः वेश्याः समानाः सर्वसाधारणाः । कथम् ? भोजन-वत् । यथा भोजनकाले कमपि पुरुषं दृष्ट्वा प्रोच्यते भोजनं क्रियतां शोभार्थं तथा वेश्याऽपि सेवनीया शोभार्थं कौतुकार्थं च । कस्तासामर्थे हर्षोऽमर्षो वा ? प्राप्तायामानन्दः क्रियते न, नाप्राप्तायां कोपः कार्य इति । तथा च गुरुः– 'सर्वसाधारणा वेश्या यथा भोजनकर्मणि । न प्राप्त्या कारयेत्तुष्टिं तासां कोपो न बाह्यतः ॥' । नीवाटी.

**यथाकामं कामिनीनां संग्रहः परमनीर्ष्यावान् कल्याणावहः प्रक्रमोऽदौवारिके द्वारे को नाम न प्रविशति ॥**

अथ वेश्यासंग्रहणस्वरूपमाह– यथाकाममिति । यथाकामं यथासौख्यं कामिनीनां वेश्यानां संग्रहः कार्यः । परमनीर्ष्यावान् केवलं ईर्ष्यारहितः संग्रहः कल्याणाय कल्याणप्रदो भवति, ईर्ष्यारहितः स तस्याः प्रक्रमः अनुष्ठानं यतः । तासां गृहे सर्वोऽपि जनः प्रविशति, न कश्चिन्निवार्यते । येन कारणेनादौवारिके द्वारे को न प्रविशति ? यत्र द्वारे द्वारपालो न भवति । तथा च जैमिनिः– 'वेश्याः कामं प्रसेव्याश्च परमीर्ष्याविवर्जितैः । सर्वगम्यं भवेद्द्वारं यतस्तासामहर्निशम् ॥' । नीवाटी.

**मातृव्यञ्जनविशुद्धा राजवसत्युपरिस्थायिन्यः स्त्रियः संभक्तव्याः ॥**

अथ पुरुषेण स्त्रीणां विषये यत्कर्तव्यं तदाह– मातृ-व्यञ्जनेति । याः स्त्रियः मातृव्यञ्जनविशुद्धा भवन्ति मातृचिह्नं यत्नेन या विशुद्धा भवन्ति, राजवसत्युपरि-स्थायिन्यो भवन्ति वेश्याः स्त्रियः ताः संभक्तव्याः सेव-नीया इत्यर्थः । तथा च भागुरिः– 'मातृचिह्नविशुद्धा या राजहर्म्ये वसन्ति च । ता वेश्याः सेवनीयाश्च नान्याः सेव्या विचक्षणैः ॥' । नीवाटी.

**दर्दुरस्य सर्पगृहप्रवेश इव स्त्रीगृहप्रवेशो राज्ञः ॥**

अथ राज्ञः स्त्रीगृहप्रवेशनिरतस्य यद्भवति तदाह– दर्दुरस्येति । राज्ञः योऽसौ स्त्रीगृहप्रवेशः स किंविशिष्टः ? सर्पगृहप्रवेश इव । कस्य ? दर्दुरस्य । यथा मण्डूकः सर्पगृहे प्रविष्टो न जीवति तथा राज्ञोऽपि स्त्रीगृहप्रवेशः स्यात् । तथा च गौतमः– 'प्रविष्टो हि यथा भेको बिलं

सर्पस्य मृत्युभाक् । तथा संजायते राजा प्रविष्टो वेश्मनि स्त्रियः ॥ ' । नीवाटी.

**न हि स्त्रीगृहादायातं किंचित्स्वयमनुभवनीयम् ॥**

अथ राज्ञा स्त्रीणां विषये यत्कर्तव्यं तदाह– नेति । नानुभवनीयं न भक्षणीयमित्यर्थः । किंचिदपि स्वल्पमपि वस्तु । किंविशिष्टं वस्तु ? आयातं प्राप्तम् । कस्मात् ? स्त्रीगृहात् । कथं न भक्षणीयम् ? स्वयं आत्मना अर्थाद्राज्ञा । तथा च बादरायणः– ' स्त्रीणां गृहात्समायातं भक्षणीयं न भूभुजा । किंचित्स्वल्पमपि प्राणात्रक्षितुं योऽभिवाञ्छति ॥ ' । नीवाटी.

**नापि स्वयमनुभवनीयेषु स्त्रियो नियोक्तव्याः ॥**

स्वयमनुभवनीयेषु स्वयं सेव्येषु भोजनाद्येषु स्त्रियो न नियोक्तव्याः न प्रेरणीयाः, यतो विषादिदोषैर्दूषयन्ति । तथा च भृगुः– ' भोजनादिषु सर्वेषु नाऽऽत्मीयेषु नियोजयेत् । स्त्रियो भूमिपतिः क्वापि मारयन्ति यतश्च ताः ॥ ' । नीवाटी.

**संवननं स्वातन्त्र्यं चाभिलषन्त्यः स्त्रियः किं नाम न कुर्वन्ति ॥**

अथ स्त्रियो यत्कुर्वन्ति तदाह– संवननमिति । एताः स्त्रियः किमनिष्टं न कुर्वन्ति ? अपि तु सर्वं कुर्वन्ति । संवननं कार्मणं अभिचारकं तावदभिलषन्ति, तथा स्वातन्त्र्यं स्वेच्छया वर्तनं वाञ्छन्ति । तथा च भारद्वाजः– ' कार्मणं स्वेच्छयाऽऽचारं सदा वाञ्छन्ति योषितः । तस्मात्तासु न विश्वासः प्रकर्तव्यः कथंचन ॥ ' । नीवाटी.

**श्रूयते हि किल– आत्मनः स्वच्छन्दवृत्तिमिच्छन्ती विषविदूषितगण्डूषेण मणिकुण्डला महादेवी यवनेषु निजतनुजराज्यार्थं जघान राजानमङ्गराजम् ॥**

अथ स्त्रियो विरक्ताः स्वातन्त्र्यमिच्छन्त्यो यत्कुर्वन्ति दृष्टान्तेन तदाह– श्रूयत इति । गतार्थमेतत् । एतत्संविधानकं बृहत्कथायाम् । नीवाटी.

**विषालक्तकदिग्धेनाधरेण वसन्तमतिः शूरसेनेषु सुरतविलासम्, विषोपलिप्तेन मणिना वृकोदरी दशार्णेषु मदनार्णवम्, निशितनेमिना मुकुरेण मदिराक्षी मगधेषु मन्मथविनोदम्, कबरीनिगूढेनासिपत्रेण चन्द्ररसा पाण्ड्येषु पुण्डरीकमिति ॥**

अथान्यासामपि दुष्टस्त्रीणां संविधानानि लिख्यन्ते– विषालक्तकेति । एतानि पञ्च संविधानकानि गतार्थानि बृहत्कथायां ज्ञेयानि । नीवाटी.

**अमृतरसवाप्य इव श्रीजसुखोपकरणं स्त्रियः ॥**

अथ स्त्रीणां माहात्म्यमाह– अमृतेति । एताः याः स्त्रियः ताः किंविशिष्टाः ? श्रीजसुखोपकरणं श्रीः लक्ष्मीः तस्याः जातं श्रीजम्, श्रीजं च तत्सुखोपकरणं च श्रीसंभवसुखद्रव्यं च । काः ? स्त्रियः । का इव ? अमृतरसवाप्य इव । आनन्दकारिण्य इत्यर्थः । तथा च शुक्रः– ' लक्ष्मीसंभवसौख्यस्य कथिता वामलोचनाः । यथा पीयूषवाप्यश्च मनआह्लाददाः सदा ॥ ' । नीवाटी.

**कस्तासां कार्याकार्यविलोकनेऽधिकारः ॥**

अथ तासामेव माहात्म्यमाह– क इति । या एता अमृतवाप्युपमाः स्त्रियस्तासां कार्याकार्यविलोकने कोऽधिकारः किं प्रयोजनम् ? अपि तु न किंचित् । किंतु अनुवर्तनीयाः सर्वदैव ताः । तथा च वसिष्ठः– ' स्त्रीणां दुश्चरितं किंचिन्न विचार्यं विचक्षणैः । नाभिबाह्यं न जीवोऽतो यतस्ता अमृतोपमाः ॥ ' । नीवाटी.

**अपत्यपोषणे गृहकर्मणि शरीरसंस्कारे शयनावसरे स्त्रीणां स्वातन्त्र्यं नान्यत्र ॥**

अथ स्त्रीणां येषु येषु कृत्येषु स्वातन्त्र्यं दीयते तान्याह– अपत्यपोषण इति । आसां स्त्रीणां यत्स्वातन्त्र्यं स्वच्छन्दता, एतेषु चतुर्षु स्थानेषु दीयते, नान्यत्र । अपत्यपोषणे तावत् बालपुष्टिकरणे, तथा गृहकर्मणि गृहकृत्ये, तथा शरीरसंस्कारे निजकायमण्डने, तथा शयनावसरे शयनप्रस्तावे । तथा च भागुरिः– ' स्वातन्त्र्यं नास्ति नारीणां मुक्त्वा कर्मचतुष्टयम् । बालानां पोषणं कृत्यं शयनं चाङ्गभूषणम् ॥ ' । नीवाटी.

**अतिप्रसक्तेः स्त्रीषु स्वातन्त्र्यं करपत्रमिव पत्युर्नाविदार्य हृदयं विश्राम्यति ॥**

अथातिसक्तस्य स्त्रीणां पुरुषस्य यद्भवति तदाह— अतिप्रसक्तेरिति । अतिप्रसक्तेर्हि सकाशात् स्त्रीषु यत् स्वातन्त्र्यम्, तत्किं करोति ? न विश्राम्यति न विश्रामं गच्छति । किं कृत्वा ? अविदार्य । किं तत् ? हृदयम् । कस्य ? पत्युः कान्तस्य । किमिव ? करपत्रमिव । तथा च गर्गः— ' स्वातन्त्र्यं यद्भवेत्स्त्रीणां सुरतेषु यथेच्छया । मर्मण्यसक्तृतत्वेन(?) हृदयं पुरुषस्य च ॥ ' ।

नीवाटी.

**स्त्रीवशपुरुषो नदीप्रवाहपतितपादप इव न चिरं नन्दति ॥**

अथ स्त्रीवशगतस्य पुरुषस्य यद्भवति तदाह— स्त्रीवशेति । न दीर्घकालं वृद्धिं याति । कोऽसौ ? पुरुषः । किंविशिष्टः ? स्त्रीवशगः । क इव ? पादप इव । किंविशिष्टः पादपः ? नदीप्रवाहपतितः । यथा नदीप्रवाहे पतितो वृक्षश्चिरं कालं न वृद्धिं याति तथा पुरुषः स्त्रीवशगतः । तथा च शुक्रः— ' न चिरं वृद्धिमाप्नोति यः स्त्रीणां वशगो भवेत् । नदीप्रवाहपतितो यथा भूमिसमुद्भवः ॥ ' ।

नीवाटी.

**पुरुषमुष्टिस्था स्त्री खड्गयष्टिरिव कमुत्सवं न जनयति ॥**

अथ स्त्रीमाहात्म्यमाह— पुरुषेति । कमुत्सवं न जनयति ? अपि सर्वमपि करोति । का सा ? स्त्री । केव ? खड्गयष्टिरिव करवालवल्लीव । या स्त्री पुरुषमुष्टिस्था भवति पतिव्रतत्वसहिता भवति सा भर्तुः कं न कुर्यान्मनोरथमिति । 'या नारी वशगा पत्युः पतिव्रतपरायणा । सा स्वपत्युः करोत्येव मनोराज्यं हृदि स्थितम् ॥ ' ।

नीवाटी.

**नातीव स्त्रियो व्युत्पादनीयाः स्वभावसुभगोऽपि शास्त्रोपदेशः स्त्रीषु शस्त्रीषु पयोलव इव विषमतां प्रतिपद्यते ॥**

अथ स्त्रीणां पुरुषेण यत्कर्तव्यं तदाह— नातीवेति । स्त्रियः पत्या पुरुषेण नातीव व्युत्पादनीयाः नातिशयेन कामशास्त्रपण्डिताः कर्तव्याः, यतः स्वभावसुभगोऽपि कामशास्त्रोपदेशो विषमतां प्रतिपद्यते विरूपतां प्रतिपद्यते करोति । कासु ? स्त्रीषु । कास्विव ? शस्त्रीष्विव छुरिकास्विव । यथा पयोबिन्दुः छुरिकायां निर्मलायां विषमतामुत्पादयति विरूपतां नयति, एवं कुलस्त्रीणां स्वभावसुभगोऽपि कामशास्त्रोपदेशः कुलस्त्रीणां धर्मं दूषयति । तथा च भारद्वाजः— ' न कामशास्त्रतत्त्वज्ञाः स्त्रियः कार्याः कुलोद्भवैः । यतो वैरूप्यमायान्ति यथा शस्त्र्यम्बुसंगमात् ॥ ' ।

नीवाटी.

**अध्रुवेण साधिकेनाप्यर्थेन वेश्यामनुभवति ॥**

अथ वेश्याश्चिरं यथा पुरुषमनुभवन्ति तदाह— अध्रुवेणेति । यः पुरुषः अध्रुवेण चलेन अर्थेन साधिकेनापि वेश्यामनुभवति स चिरं प्रभूतं कालं तां सेवते । यः पुनर्नित्यदानेन स्वल्पेनापि सेवते तस्य त्रुटिर्भवति । तस्माद्वेश्याया नित्यमर्थो न देयः । स्वल्पोऽपि प्रभूतोऽपि कालान्तरेण देयः । येन साऽविद्यमानेऽप्यर्थे कृताशया न त्यजति । तथा च शुक्रः— ' वेश्यानां नित्यदानं यत्तद्धि दानं शुभं न हि । अपि स्तोकं प्रभूतं च चिरदत्तं सुसिद्धये ॥ ' ।

नीवाटी.

**विसर्जनाकारणाभ्यां तदनुभवे महाननर्थः ॥**

अथ वेश्यानां नित्यमेवाकारणविसर्जनाद्यैरनर्थौ भवतः । तावाह— विसर्जनेति । एता वेश्याः सर्वसामान्या भवन्ति तद्गच्छन्त्यो वा गृहादागच्छन्त्यो वा यदि कश्चिद्विद्वांस्तदनुभवं करोति ता अभिलषति । तद्धनलोभेन तं भजते ततश्च तेन सह प्राणान्तिकं युद्धं भवति स महाननर्थः । तस्माद्वेश्यानामकारणविसर्जनं न कार्यं किं वा गृहेषु कर्तव्यम्, अथ कौतुकमात्रं संसेव्य मोचनीयाः । तथा च गुरुः— ' किं वा गृहाः प्रकर्तव्याः किं वा कौतुकमात्रकम् । आनीय ताः प्रमोक्तव्या वेश्याः पुंभिर्विचक्षणैः ॥ ' ।

नीवाटी.

**वेश्यासक्तिः प्राणार्थहानिं कस्य न करोति ॥**

अथ वेश्यानां स्वरूपमाह— वेश्यासक्तिरिति । वेश्यानां विषये याऽसौ पुरुषस्य आसक्तिः अतीव व्यसनं तत्कस्य प्राणहानिं न करोति ? अपि तु सर्वस्य । तस्माद्वेश्या त्याज्या । तथा च नारदः— ' प्राणार्थहानिरेव स्याद्वेश्यायां

भुक्तितो नृणाम् । यस्मात्तस्मात्परित्याज्या वेश्या पुंभिर्धनार्थिभिः ॥ ' । नीवाटी.

**धनमनुभवन्ति वेश्या न पुरुषम् ॥**

अथ भूयोऽपि वेश्यास्वरूपमाह– धनमिति । या एता वेश्या उच्यन्ते ता धनमनुभवन्ति, न पुरुषम् । मूर्खः पुनरेवं जानाति ममैषा सानुरागा । यदि पुनर्धनं न प्रयच्छति तत्तत्संमुखमपि नावलोकयन्ति । तथा च भारद्वाजः– ' न सेवन्ते नरं वेश्याः सेवन्ते केवलं धनम् । धनहीनं यतो मर्त्यं संत्यजन्ति च तत्क्षणात् ॥ ' । नीवाटी.

**धनहीने कामदेवेऽपि न प्रीतिं बध्नन्ति वेश्याः ॥**

अथ भूयोऽपि वेश्यानां स्वरूपमाह– धनहीन इति । न बध्नन्ति कुर्वन्ति । काम् ? प्रीतिं स्नेहम् । काः ? वेश्याः । क्व ? धनहीने । किंविशिष्टे ? कामदेवेऽपि । तथा च भागुरिः– ' न सेव्यते धनैर्हीनः कामदेवोऽपि चेत्स्वयम् । वेश्याभिर्धनलुब्धाभिः कुष्ठी चापि निषेव्यते ॥ ' । नीवाटी.

**स पुमानायतिसुखी यस्य सानुशयं वेश्यासु दानम् ॥**

अथ भूयोऽपि वेश्यास्वरूपमाह– स इति । स पुमान् पुरुषः सुखी स्यात् सुखाढ्यो भवति । कस्याम् ? आयत्यां परिणामे भविष्यत्काले । यस्य किम् ? दानम् । किंविशिष्टम् ? सानुशयं सखेदम् । कासु ? वेश्यासु । यस्य पुरुषस्य वेश्यासु विषये सानुशयं दानं भवति स आयत्यां परिणामे सुखी भवति । तथा च नारदः– ' प्रदानं यस्य वेश्यायां भवेत्सानुशयं सदा । परिणामे सुखाढ्योऽयं जायते नात्र संशयः ॥ ' । नीवाटी.

**स पशोरपि पशुः यः स्वधनेन परेषामर्थवतीं करोति वेश्याम् ॥**

अथ वेश्यादानप्रसक्तस्य पुरुषस्य यद्भवति तदाह– स इति । सः पुरुषः सर्वेषां पशूनां मध्ये प्रधानः पशुः । यः किं करोति ? योऽर्थवतीं महार्थाम् । काम् ? वेश्याम् । केन ? स्वधनेन निजार्थेन । केषाम् ? परेषामन्येषाम् । आत्मनोऽपि तावद्वित्तक्षयं करोति, अन्येषामपि । तथा च वल्लभदेवः– ' आत्मवित्तेन यो वेश्यां महार्थां कुरुते कुधीः । अन्येषां वित्तनाशाय पशूनां पशुः सर्वतः ॥ ' । नीवाटी.

**आचित्तविश्रान्तेः वेश्यापरिग्रहः श्रेयान् ॥**

अथ पुरुषस्य वेश्यासंग्रहो यथा श्रेयःप्रदो भवति तदाह– आचित्तेति । आङ्शब्दो मर्यादायाम् । आचित्तविश्रान्तेः चित्तविश्रान्तिं यावत् पुरुषेण वेश्यासंग्रहः कार्यः, न सदैव । एतदुक्तं भवति– वेश्यां दृष्ट्वा यदि चित्तं चलति तत्सेवनीया ततो मोचनीया । एवं कुर्वतः श्रेयः सौख्यं सदैव भवति । तथा च राजपुत्रः– ' वेश्यादर्शनतश्चित्तं यदि वाञ्छा करोति च । तत्र सेव्याः प्रमोक्तव्या नैव नित्यं कदाचन ॥ ' । नीवाटी.

**सुरक्षिताऽपि वेश्या स्वां प्रकृतिं न मुञ्चति ॥**

अथ पुरुषस्य वेश्यासंग्रहात् यद्भवति तदाह– सुरक्षिताऽपीति । न मुञ्चति । काऽसौ ? वेश्या । काम् ? प्रकृतिम् । किंविशिष्टां स्वाम् ? पुरुषान्तरसेवनलक्षणाम् । लोभोपहता सती पुरुषविशेषान् भजति । तस्मात्तस्याः संग्रहो न कार्यः । अथवा नास्ति तस्या दोषः, सर्वेऽपि प्राणिनः स्वां प्रकृतिं भजन्ते । तथा च गुरुः– ' यद्वेश्या लोभसंयुक्ता स्वीकृताऽपि नरोत्तमैः । सेवयेत्पुरुषानन्यान् स्वभावो दुस्त्यजो यतः ॥ ' । नीवाटी.

**या यस्य प्रकृतिः सा तस्य दैवेनापि नापनेतुं शक्यते ॥**

अथ वेश्यादृष्टान्तेन जन्तूनां प्रकृतेः स्वरूपमाह– येति । न शक्यते । काऽसौ ? प्रकृतिः स्वभावलक्षणा । किं कर्तुम् ? अपनेतुं नाशयितुम् । या यस्य संभवा सहसा । केन ? दैवेनापि विधात्राऽपि । आस्तां तावन्मनुष्येण । तथा च नारदः– ' व्याघ्रः सेवति काननं सुगहनं सिंहो गुहां सेवते, हंसः सेवति पद्मिनीं कुसुमितां गृध्रः स्मशानस्थलीम् । साधुः सेवति साधुमेव सततं नीचोऽपि नीचं जनम्, या यस्य प्रकृतिः स्वभावजनिता दुःखेन सा त्यज्यते ॥ ' । नीवाटी.

**सुभोजितोऽपि श्वा किमशुचीन्यस्थीनि परिहरति ॥**

अथ भूयोऽपि श्वप्रकृतिदृष्टान्तेनाऽऽत्मप्रकृतिस्वरूपमाह— सुभोजितोऽपीति । श्वा सारमेयः सुभोजितोऽपि तृप्तिं नीतोऽपि किमशुचीनि अमेध्यानि अस्थीनि परिहरति ? अपि न परिहरति । तथा च भृगुः— 'स्वभावो नान्यथा कर्तुं शक्यः केनापि कुत्रचित् । श्वेव सर्वरसान् भुक्त्वा विनाऽमेध्यान्न तृप्यति ॥' । नीवाटी.

**न खलु कपिः शिक्षाशतेनापि चापल्यं परिहरति ॥**

भूयोऽपि स्वप्रकृतिस्वरूपमाह— न खल्विति । कपिः वानरः न परिहरति न त्यजति । किं तत् ? चापल्यं चपलत्वम् । केन कृत्वा ? शिक्षाशतेनापि । तथा चात्रिः— 'प्रोक्तः शिक्षाशतेनापि न चापल्यं त्यजेत्कपिः । स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा ॥' ।

नीवाटी.

**इक्षुरसेनापि सिक्तो निम्बः कटुरेव ॥**

अथ भूयोऽपि स्वप्रकृतिस्वरूपमाह— इक्षुरसेनापीति । निम्बः वृक्षविशेषः, स कटुरेव । किंविशिष्टः ? सिक्तः । केन ? इक्षुरसेनापि । तथा च गर्गः— 'पिशुनं दानमाधुर्यं संप्रयायि कथंचन । सिक्तश्चेक्षुरसेनापि दुस्त्यजा प्रकृतिर्निजा ॥' । नीवाटी.

दायादपोषणं न कार्यम्

**सन्मानदिवसादायुः कुल्यानामपरिग्रहहेतुः ॥**

अथ कुल्यानां पोषणे यद्भवति तदाह— सन्मानेति । कुल्यानां सजातीयानां दायादानां सन्मानदिवसादारभ्य यः आयुः तत्प्रदानं तापग्रहः (?) हेतुः विनाशकारणम् । तथा च शुक्रः— 'कुल्यानां पोषणं यच्च क्रियते मूढपार्थिवैः । आत्मनाशाय तज्ज्ञेयं तस्मात्त्याज्यं सुदूरतः ॥' । नीवाटी.

**तन्त्रकोशवर्धिनी वृत्तिर्दायादान् विकारयति ॥**

अथ दायादानां कोशतन्त्रवृद्ध्या यद्भवति तदाह— तन्त्रेति । विकारयति विकारं नयति । काऽसौ ? वृत्तिः वर्तनलक्षणा । कान् ? दायादान् । किंविशिष्टा ? तन्त्रकोशवर्धिनी । तन्त्रं हस्त्यश्वादिबलम् । कोशः भाण्डागारम् । या वृत्तिर्वर्धयति सा कृता सती दायादान् सविकारान् करोति । तथा च गुरुः— 'वृत्तिः कार्या न कुल्यानां यया सैन्यं विवर्धते । सैन्यवृद्ध्या तु ते घ्नन्ति स्वामिनं राज्यलोभतः ॥' । नीवाटी.

दायादपोषणविधिः

**भक्तिविश्रम्भादव्यभिचारिणं कुल्यं पुत्रं वा संवर्धयेत् ॥**

अथ कुल्यानामपि यथा तन्त्रकोशवृद्धिः कार्या तथाऽऽह— भक्तीति । संवर्धयेत् वृद्धिं नयेत् । कम् ? कुल्यं दायादम् । कथंभूतम् ? अव्यभिचारिणम् । कदाचिद्योऽव्यभिचारिणं विकारं न करोति । कस्मात् ? भक्तिविश्रम्भात् भक्तिव्याजात् । तथा च नारदः— 'वर्धनीयोऽपि दायादः पुत्रो वा भक्तिभाग्यदि । न विकारं करोति स्म ज्ञात्वा साधुस्ततः परम् ॥' ।

नीवाटी.

**विनियुञ्जीत उचितेषु कर्मसु ॥**

अथ दायादस्य पुत्रस्य साधुवृत्तस्य यत्कर्तव्यं तदाह— विनियुञ्जीतेति । ततोऽविकारं ज्ञात्वोचितेषु कर्मसु विनियुञ्जीत योजयेत् । केषु ? कर्मसु अधिकारेषु । किंविशिष्टेषु ? उचितेषु योग्येषु । तथा च वल्लभदेवः— 'स्थानेष्वेव नियोज्यन्ते भृत्या आभरणानि च । न हि चूडामणिः पादे प्रभवामीति बध्यते ॥' । नीवाटी.

भर्तुरादेशपालनं भृत्यकर्तव्यम्

**भर्तुरादेशं न विकल्पयेत् ॥**

अथ भृत्येन भर्तुः यत्कर्तव्यं तदाह— भर्तुरिति । भर्तुः स्वामिनः योऽसावादेशस्तं यः सद्भृत्यो भवति स न विकल्पयति । तथा च गुरुः— 'स्वाम्यादिष्टस्तु यो भृत्यो न विकल्पपरो भवेत् । समुद्रतरणार्थाय प्रविशेद्वा हुताशनम् ॥' । नीवाटी.

**अन्यत्र प्राणबाधाबहुजनविरोधपातकेभ्यः ॥**

अथ भृत्येन स्वाम्यादेशो न कार्यस्तदाह— अन्यत्रेति । प्राणबाधा प्राणविनाशः न (?) तमादेशं बहुजनानां विरोधः पातकं च एतान् मुक्त्वा, नान्यादेशं विकल्पयेत् । नीवाटी.

बलवद्दायादवशीकरणम्

**बलवत्पक्षपरिग्रहेषु दायिष्वाप्तपुरुषपुरःसरो विश्वासो वशीकरणं गूढपुरुषनिक्षेपः प्रणिधिर्वा ॥**

अथ बलवान् यस्य दायादस्य पक्षो भवति तस्य वशीकरणं यथा भवति तदाह— बलवत्पक्षेति । आप्ताः निजाः ये पुरुषास्तैरग्रेसरैः प्रजल्पमानैर्यो विश्वासः समुत्पद्यते तद्वशीकरणं तेषु, अन्यच्च गूढचरगुप्तप्रणिधिस्तेषु वशीकरणं यस्तेषां सर्वं चेष्टितं निवेदयतीति । तथा च शुक्रः— 'बलवत्पक्षदायादा आप्तद्वारेण वश्यगाः । भवन्ति चातिगुप्तैश्च चरैः सम्यग्विशोधिताः ॥'। नीवाटी.

**दुर्बोधे सुते दायादे वा सम्यग्युक्तिभिर्दुरभिनिवेशमवतारयेत् ॥**

अथ दुर्बोधे सुते दायादे वा यत्कर्तव्यं तदाह— दुर्बोध इति । अवतारयेत् स्फोटयेत् । किम् ? दुरभिनिवेशं मूर्खाग्रहम् । कस्मिन् सति ? दुर्बोधे सति मूर्खत्वयुक्ते सति । कस्मिन् ? सुते पुत्रे दायादे वा दुरभिनिवेशमवतारयेत् । काभिः कृत्वा ? युक्तिभिः प्रपञ्चैः । एतदुक्तं भवति— यदा तु पुत्रो बान्धवो वा विरुद्धो भवति तदा युक्तिभिः संतोषः कार्यः । तथा च रैभ्यः— 'पुत्रो वा बान्धवो वाऽपि विरुद्धो जायते यदा । तदा संतोषयुक्तस्तु सत्कार्यो भूतिमिच्छता ॥'। नीवाटी.

**साधुषूपचर्यमाणेषु विकृतिभजनं स्वहस्ताङ्गाराकर्षणमिव ॥**

अथ साधूनां सुचाराणां यो विकृतिं करोति तस्य यद्भवति तदाह— साधुष्विति । साधुषु लोकेषु उपचर्यमाणेषु उपकारं क्रियमाणेषु यद्विकृतिभजनं विरुद्धं क्रियते तत् किंविशिष्टमिव ? स्वहस्ताङ्गाराकर्षणमिव स्वहस्तेन तावदङ्गाराणां कर्षणं क्रियते । तथा च भागुरिः— साधूनां विनयाढ्यानां विरुद्धानि करोति यः । स करोति न संदेहः स्वहस्तेनाग्निकर्षणम् ॥'। नीवाटी.

शुद्धाशुद्धापत्यकारणानि

**क्षेत्रबीजयोर्वैकृत्यमपत्यानि विकारयति ॥**

अथ मातृपितृभ्यामशुद्धाभ्यामपत्यानि यादृक्षाणि भवन्ति तदाह— क्षेत्रेति । तथा च— 'यथा पुत्रः समाचष्टे मातुः शीलं स्वकैर्गुणैः । तथा स्वादु जलं लोके तुः (?) ख्याति शुभाशुभम् ॥'। क्षेत्रं माता, बीजं पिता, ताभ्यां यद्वैकृत्यं अकुलीनता स्यात् अपत्यानि तद्विकारयति विकृतिं नयति । अपत्यानां चेष्टितेन मातृपितृभ्यामकुलिनता ज्ञायते । तथा च गर्गः— 'परभूतान्यपत्यानि तानि स्युर्यौवने स्थिते । तानि बुद्धिं वदन्ति स्म पितृमातृसमुद्भवाम् ॥'। नीवाटी.

**कुलविशुद्धिरुभयतः प्रीतिर्मनःप्रसादोऽनुपहतकालसमयश्च श्रीसरस्वत्यावाहनमन्त्रपूतपरमान्नोपयोगश्च पुरुषोत्तममवतारयन्ति ॥**

अथ पुरुषोत्तमस्य यथोत्पत्तिर्भवति तदाह— कुलविशुद्धिरिति । एते ये पदाङ्काः प्रोक्तास्तैर्यथोदितं तेनानुष्ठितेन गर्भाधानेन गर्भग्रहणसमये पुरुषोत्तमं पुरुषप्रधानं अवतारयन्ति जनयन्ति । कथम् ? तावत् कुलविशुद्धिः मातृपितृसमुद्भवा । ततश्च ताभ्यामुभयतः प्रीतिः परस्परं स्नेहः । ततश्च मनःप्रसादः एकचित्तता । ततश्चानुपहतकालसमयश्च निरुपहतवेला धूलिकादिभिर्दोषैः । तथा श्रीसरस्वत्यावाहनमन्त्रपूतपरमान्नोपयोगश्च श्रीः लक्ष्मीः, सरस्वती भारती, द्वाभ्यामपि ये मन्त्रास्तैरभिमन्त्र्य पूतं पवित्रीकृतं परमं उत्कृष्टं अन्नं तस्योपयोगः भक्षणम् । तेन यत् समयसुरसेन (?) यो गर्भो भवति स पुरुषोत्तमो भवतीति । तथा च शुक्रः— 'बीजे योनौ तथाऽऽहारे यस्य नो विकृतिर्भवेत् । तथा मैथुनसंपर्के श्रेष्ठः संजायते पुमान् ॥'। नीवाटी.

**गर्भशर्मजन्मकर्मापत्येषु देहलाभात्मलाभयोः कारणं परमम् ॥**

अथापत्येषु लाभालाभद्वयमाह— गर्भेति । अपत्येषु कर्मरूपेषु एतद्यथासंभाव्येन देहलाभात्मलाभयोः कारणमस्ति । कस्य कस्य किम् ? देहस्य तावद्गर्भशर्म । यदि माताऽपत्येन शर्मवती तदाऽपत्यस्यापि देहं शरीरं पुष्टमारोग्यं भवति । यदि जन्मकर्म जन्मविद्यानन्दशुभं भवति शुभग्रहनिरीक्षितो भवति तदाऽऽत्मलाभः जीवितलाभ इत्यर्थः । तदपत्यमुत्तममुत्कृष्टं कारणमिति । तथा च गुरुः—

"गर्भस्थानामपत्यानां यदि सौख्यं प्रजायते । तद्भवेद्धि शुभो देहो जीवितव्यं च जन्मनि ॥'। नीवाटी.

दुष्कृतलक्षणानि

**शुष्कश्यामसुखता वाक्स्तम्भः स्वेदो विजृम्भणमतिमात्रं वेपथुः प्रस्खलनमास्यप्रेक्षणमावेगः कर्मणि भूमौ वाऽनवस्थानमिति दुष्कृतं कृतवतः करिष्यतो वा लिङ्गानि ॥**

अथ पापाचारस्य सभायां गतस्य लक्षणमाह—शुष्केति । दुष्कृतं पापं कृतवतः पुरुषस्य करिष्यतो वा सभां नीतस्यैतानि पूर्वोक्तानि लिङ्गानि चिह्नानि भवन्ति । तैरवलक्षयेत्पापाचारोऽयम् । कानि कानि लिङ्गानि ? शुष्कस्तावद्भूत्वा कृष्णमुखो भवति । तथा वाक्स्तम्भः वक्तुं न शक्नोति । तथा प्रस्वेदः प्रस्विद्यति । तथा विजृम्भणं मुखप्रसरणं मुहुर्मुहुः करोति । तथाऽतिमात्रं वेपथुः अतिशयेन कम्पनम् । तथा प्रस्खलनं प्रस्खलनयुक्तैः पदैः समागच्छति । तथाऽऽस्यप्रेक्षणं अन्यथा वाऽन्यथा वर्तते । तथा आवेगः कर्मणि कृत्ये यामाह (?) । तथा भूमौ अनवस्थानं एकस्मिन् स्थाने न तिष्ठतीति । तथा च शुक्रः— 'आयाति स्खलितैः पादैः सभायां पापकर्मकृत् । प्रस्वेदनेन संयुक्तो अधोदृष्टिः सुर्म्मनाः (?) ॥'। नीवाटी.

अपरीक्षितानि स्थानवाहनतीर्थमार्गभोग्यादीनि भजनीयानि स्वीकार्याणि वा

**[1]आत्मरक्षायां कदाचिदपि न प्रमाद्येत ॥**

**नाऽऽप्ताशोधितपरस्थानमुपेयात् ॥**

**नाऽऽप्तजनैरनारूढं वाहनमध्यासीत ॥**

**न स्वैरपरीक्षितं तीर्थं सार्थं तपस्विनं वाऽभिगच्छेत् ॥**

**न याष्टिकैरविविक्तं मार्गं भजेत् ॥**

**न विषापहारौषधमणीन् क्षणमप्युपासीत ॥**

**मन्त्रिभिषग्नैमित्तिकरहितः कदाचिदपि न प्रतिष्ठेत् ॥**

**वह्नावन्यचक्षुषि च भोग्यमुपभोग्यं च परीक्षेत ॥**

**अपरीक्षितमशोधितं च राजकुले न किंचित्प्रवेशयेन्निष्कासयेद्वा ॥**

**श्रूयते हि स्त्रीवेषधारी कुन्तलनरेन्द्रप्रयुक्तो गूढपुरुषः कर्णनिहितेनासिपत्रेण पल्लवनरेन्द्रं हयपतिश्च मेषविषाणनिहितेन विषेण कुशस्थलेश्वरं जघानेति ॥**

**सर्वत्राविश्वासे नास्ति काचित् क्रिया ॥**

## अनिर्दिष्टकर्तृकवचनम्

पत्नीतो राजरक्षा

**[1]शस्त्रेण वेणीविनिगूहितेन**
**विदूरथं वै महिषी जघान ।**
**विषप्रदिग्धेन च नुपुरेण**
**देवी विरक्ता किल काशिराजम् ॥**

चारभेदे शस्त्रग्रहणम्

**[2]तत्र शस्त्राणि धार्याणि चाराणां भेदशङ्कया ॥**

तत्र सर्वदा । नीम. ४२

(१) नीवा. २५।७२,८१–८७,१०९–१११.

(१) मनु. ७।१५३.

(२) नीम. ४२.

# राजपुत्ररक्षणम्

## महाभारतम्

रक्षणं राजपुत्रस्य विविधोपायैः

(१)नैव स्वैररिभिर्वाऽपि ग्रस्यते पुत्रवान्नृपः ।
तस्माद्राजा सदा पुत्रं संरक्षेच्छिक्षयेत च ॥

अमात्यैरात्मसदृशै राजपुत्रस्य रक्षणम् ।
चारैश्च विविधोपायैः प्रविधेयं पृथग्विधैः ॥

## कौटिलीयमर्थशास्त्रम्

गर्भप्रभृति पुत्रसंस्काराः

(२)काष्ठमिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत । तस्मादृतुमत्यां महिष्यामृत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः । आपन्नसत्त्वायां कौमारभृत्यो गर्भभर्मणि प्रजने च वियतेत । प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात् । समर्थं तद्विदो विनयेयुः ॥

यथा वह्निचर्वितं दारु स्पृष्टमात्रमकृतभञ्जनयत्नमपि भग्नं भवति, तथा शास्त्रसदाचाराशिक्षितकुमारं राजकुलं परेण जिगीषितमात्रं अप्रयुक्तविक्रममपि परिध्वस्तं भवतीत्याह— काष्ठमिवेत्यादि । .... पुत्रगुणवत्त्वाय दृष्टादृष्टार्थाः प्रयत्ना गर्भाधानप्राक्कालात् प्रभृति आस्थेया इत्याह— तस्मादित्यादि । ऋतुमत्यां ऋतुः आर्तवदर्शनादिषोडशनिशात्मकः कालो गर्भाधानयोग्यः, तद्वत्याम् । ऐन्द्राबार्हस्पत्यं चरुं निर्वपेयुः इन्द्राबृहस्पतिद्वन्द्वदेवताकं हविः साधयेयुः हविर्द्रव्यकमिष्टिविशेषं कुर्युरित्यर्थः । तत्रेन्द्रप्रीणनमैश्वर्यप्रतापाद्यर्थं बृहस्पतिप्रीणनं बुद्धिविद्याद्यर्थं बोद्धव्यम् । आपन्नसत्त्वायां जातगर्भायां कौमारभृत्यः शिशुवैद्यः गर्भभर्मणि गर्भपोषणे प्रजने प्रसवे वियतेत विशिष्य यत्नं कुर्यात् । प्रजातायाः प्रसूतायाः । समर्थं विनयेयुः ग्रहणधारणपटुं विद्यासु शिक्षयेयुः । के ? तद्विदः शिक्षणज्ञाः । श्रीमूला.

पितृद्रोहनिवृत्त्युपायः

सत्त्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत्— पितरि विक्रम्य राज्यं गृहाणेति । तदन्यः सत्त्री प्रतिषेधयेदित्याम्भीयाः ॥

विनीतस्य कुमारस्य पितृद्रोहनिवृत्त्युपायं आम्भाचार्यानुयायिमतेनाऽऽह— सत्त्रिणामित्यादि । मृगयाद्यूतमद्यस्त्रीभिः प्रलोभनसाधनैः प्रलोभयेत् प्रलोभ्योपदिशेत् । अन्यः प्रलोभकादपरः । श्रीमूला.

महादोषमबुद्धबोधनमिति कौटल्यः । नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति, एवमयं नवबुद्धिर्यद्यदुच्येत तत्तच्छास्त्रोपदेशमिवाभिजानाति । तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च ॥

तत् दूषयति— महेति । अबुद्धबोधनं महादोषं अज्ञातस्य पितृद्रोहरूपस्य पापकर्मण उपदेशः परमानर्थः । नवमिति । हिशब्दो दृष्टान्ते । यथा नवं द्रव्यं मृद्भाण्डादिकं येन येन अर्थजातेन जलघृतादिना उपदिह्यते लिप्यते तत्तत् आचूषति आपिबति अन्तर्गृह्णाति, एवं अनेन प्रकारेण नवबुद्धिः सदसद्व्यवहाराप्रविष्टबुद्धिः अयं राजपुत्रः यद्यत् उच्येत तत्तत् तत् सर्वं शास्त्रोपदेशमिव अभिजानाति हृदये निवेशयति । तस्मादिति । तस्मात् यथोक्तात् कारणात् अस्य धर्मं अर्थं च उपदिशेत्, अधर्मं पितृद्रोहादिं अनर्थं मृगयाद्यूतपानादिकं च नोपदिशेत् । श्रीमूला.

सत्त्रिणस्त्वेनं तव स्म इति वदन्तः पालयेयुः । यौवनोत्सेकात् परस्त्रीषु मनः कुर्वाणमार्याव्यञ्जनाभिः स्त्रीभिरमेध्याभिः शून्यागारेषु रात्रावुद्वेजयेयुः । मद्यकामं योगपानेनोद्वेजयेयुः । द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः । मृगयाकामं प्रतिरोधकव्यञ्जनैस्त्रासयेयुः । पितरि विक्रमबुद्धिं तथेत्य-

(१) राक. १०० ; राप्र. ३१६ येत (यीत).
(२) कौ. १।१७.

नुप्रविश्य भेदयेयुः— अप्रार्थनीयो राजा, विपन्ने घातः, संपन्ने नरकपातः, संक्रोशः प्रजाभिरेकलोष्टवधश्चेति ॥

यदि स्वत एव राजपुत्रः परस्त्रीमद्यादिषु कामनां कुर्यात् तदा तन्निवारणार्थं सत्रिणस्तमुपासीरन्नित्याह— सत्रिण इत्यादि । तव स्म इति वदन्तः त्वत्सेवका वयमिति विश्वासयन्तः पालयेयुः परस्त्रीमद्यादिप्रवृत्तेर्वारयेयुरित्यर्थः । पालनप्रकारानाह— यौवनेत्यादि । यौवनोत्सेकात् यौवनमदात् । आर्याव्यञ्जनाभिः अभिजातस्त्रीवेषधारिणीभिः अमेध्याभिः स्वभावादशुचिभिः स्त्रीभिः करणैः उद्वेजयेयुः जुगुप्सयेयुः, परस्त्रीरतादित्यार्थम् । योगपानेन विरसद्रव्ययुक्तेन मद्येन । कापटिकैः छलदेवनदक्षैः । प्रतिरोधकव्यञ्जनैः चौरवेषैः । विक्रमबुद्धिं विक्रमे विक्रम्य हनने बुद्धिर्यस्य तं तथेत्यनुप्रविश्य भेदयेयुः तथा कुर्म इति वाङ्मात्रेण तच्छन्दानुवृत्त्या ततो निवर्तयेयुः । अप्रार्थनीय इत्यादिर्निवर्तनार्थमुपदेशः । राजा अप्रार्थनीयः, अर्थयितुं एषितुं योग्यः अर्थनीयः एष्टव्यः, तद्विपरीतः प्रार्थनीयः अनेष्टव्यः, द्वेष्य इति यावत् । प्रशब्दस्येह प्रसरतीत्यादाविव धात्वर्थविपरीतद्योतकत्वात् प्रार्थनीयो न भवतीत्यप्रार्थनीयः अद्वेष्य इत्यर्थः । विपन्ने घातः पितृवधसमुद्यमे विफलिते सति तव वधो भवेत्, संपन्ने नरकपातः फलिते सति पितृवधपातकिनस्ते नरके पतनम्, संक्रोशः लोकनिन्दा, प्रजाभिः एकलोष्टवधश्च प्रजाभिः समुदिताभिः कर्त्रीभिः एकैकमृत्खण्डप्रक्षेपेण घातश्च तव भवेत् । श्रीमूला.

विरागं प्रियमेकपुत्रं वा बध्नीयात् । बहुपुत्रः प्रत्यन्तमन्यविषयं वा प्रेषयेद्यत्र गर्भः पण्यं डिम्बो वा न भवेत् । आत्मसंपन्नं सैनापत्ये यौवराज्ये वा स्थापयेत् ॥

एवं कृतेऽपि यः पितरि निःस्नेह एव पितुः प्रिय एकश्च पुत्रो भवेत्, तदा तं बध्नीयादित्याह— विरागमित्यादि । बहुपुत्रश्चेत् राजा यथोक्तं पुत्रं कर्शयेदित्यभिप्रायेणाऽऽह— बहुपुत्र इत्यादि । प्रत्यन्तं म्लेच्छदेशम् । अन्यविषयं वा अन्यदेशं वा । यत्र गर्भः पण्यं डिम्बो वा न भवेत् यस्मिन् देशे गर्भः अन्नं राजपुत्रोचितं पण्यं तादृशं वसनादिकमापणलभ्यं भोग्यवस्तु डिम्बः राजपुत्रनिमित्तः प्रकृतीनां विप्लवश्च न स्यात् । गर्भ इत्यस्य स्थाने गर्व इत्यपि पाठः । तदा त्वर्थः स्फुट एव । गुणसंपन्नपुत्रविषये त्वाह— आत्मसंपन्नमित्यादि । श्रीमूला.

पुत्रविशेषाः

बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः । शिष्यमाणो धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान् । उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः । अपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः ॥

पुत्रं विभजते— बुद्धिमानित्यादि । पुत्रविशेषाः पुत्रभेदाः । उपदिश्यमानधर्मार्थज्ञानानुष्ठाननिष्ठो बुद्धिमान्, तज्ज्ञानमात्रवांस्तदनुष्ठानविमुख आहार्यबुद्धिः, नित्यप्रमादी धर्मार्थद्वेषणशीलश्च दुर्बुद्धिरिति त्रयाणां लक्षणमाह— शिष्यमाण इत्यादि । श्रीमूला.

अवरुद्धराजपुत्रवृत्तम्

[1]राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत, अन्यत्र प्राणाबाधकप्रकृतिकोपपातकेभ्यः । पुण्यकर्मणि नियुक्तः पुरुषमधिष्ठातारं याचेत । पुरुषाधिष्ठितश्च सविशेषमादेशमनुतिष्ठेत् । अभिरूपं च कर्मफलमौपायनिकं च लाभं पितुरुपनाययेत् ॥

आत्मसंपन्नः राजपुत्रः सैनापत्यादौ स्थाप्य इत्युक्तं प्राक् । तत्राऽऽत्मसंपन्नेष्वनेकेष्वेकश्चेत् सेनापतिर्युवराजो वा क्रियेत तदाऽन्यो राजपुत्रो विजिगीषुः संपन्न इति तस्य वृत्तमभिधानीयमिति संबन्धः । अवरुद्धो राजपुत्रः क्लेशनिर्वर्त्यदेहयात्रः स्वाननुरूपे कर्मणि पित्रा चोदितो यथापितृनियोगं कर्मानुतिष्ठेत्, तच्चेत् कर्म स्वप्राणसंशयकरं प्रकृतिकोपनं पातकजनकं वा न भवेदित्याह— राजपुत्र इत्यादि । अनुष्ठानप्रकारमाह— पुण्येत्यादि । अधिष्ठातारं पुरुषं याचेत कर्मनेतारं कमपि स्वाधश्चरपुरुषं पितृसकाशात् याचित्वा लभेत । आदेशं पितृनियोगम् । सविशेषमनुतिष्ठेत् विशेषो गुणवत्ता तद्युक्तं यथा भवति

(१) कौ. १।१८.

तथा चरेत् । अभिरूपं हृद्यं प्रशस्तं कर्मफलं स्वकर्मोत्पादितं धान्यादिकं औपायनिकं लाभं च कर्षकादिभ्य उपायनात्मना लब्धं द्रव्यं च पितुरुपनाययेत् पितुः सकाशं प्रापयेत् तत्परितोषार्थम्, न तु स्वयमुपयुञ्जीत ।
श्रीमूला.

**तथाप्यतुष्यन्तमन्यस्मिन् पुत्रे दारेषु वा स्निह्यन्तमरण्यायाऽऽपृच्छेत । बन्धवधभयाद्वा यः सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवागविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानां तमाश्रयेत । तत्रस्थः कोशदण्डसंपन्नः प्रवीरपुरुषकन्यासंबन्धमटवीसंबन्धं कृत्यपक्षोपग्रहं वा कुर्यात् ॥**

तथापि अतुष्यन्तं कर्मफललाभोपनायनेनाप्यात्मनि तुष्टिमकुर्वन्तं पितरम् । दारेषु स्वमातृव्यतिरिक्तायां पत्न्याम् । अरण्याय आपृच्छेत 'तपसे वनं गन्तुं मेऽनुज्ञां देहि' इत्यर्थयेत । यथोक्तापृच्छादैन्यप्रकाशनेऽप्यार्जवमप्रतिपद्यमाने पितरि आत्मबन्धनहननशङ्कायां वा जातायां तं गत्यन्तराभावादभिद्रोग्धुं गुणवत्सामन्तसाहाय्यसंपादने वियतेतेत्याह— बन्धवधभयादित्यादि । अविसंवादकः अविप्रलम्भकः । अभिपन्नानां प्रतिग्रहीता मानयिता च शरणागतानां स्वीकर्ता सत्कर्ता च । तं सामन्तमाश्रित्य तिष्ठन् कोशदण्डाभ्यां स्वार्जिताभ्यां युक्तो भूत्वा प्रकृष्टवीरपुरुषकन्यकायाः परिणयं स्वपितृजनपदाटविकसख्यं स्वपितृकृत्यवर्गस्वीकरणं च सहायोपचयार्थं कुर्यादित्याह— तत्रस्थ इत्यादि । अटवीसंबन्धमित्यटवीशब्दस्तात्स्थ्यादाटविके वर्तते । श्रीमूला.

**एकचरः सुवर्णपाकमणिरागहेमरूप्यपण्याकरकर्मान्तानाजीवेत् । पाषण्डसंघद्रव्यमश्रोत्रियभोग्यं देशद्रव्यमाढ्यविधवाद्रव्यं वा गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगेनातिसंधायावहरेत् । पारग्रामिकं वा योगमातिष्ठेत् । मातुः परिजनोपग्रहेण वा चेष्टेत । कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डच्छद्मभिर्वा नष्टरूपस्तद्व्यञ्जनसखश्छिद्रे प्रविश्य राज्ञः शस्त्ररसाभ्यां प्रहृत्य ब्रूयात्— अहमसौ कुमारः, सहभोग्यमिदं राज्यमेको नार्हति भोक्तुम्, तत्र ये कामयन्ते भर्तुं तानहं द्विगुणेन भक्तवेतनेनोपस्थास्य इति । इत्यवरुद्धवृत्तम् ॥**

असहायविषय आह— एकचर इति । एकचरः एकाकी अलब्धकोशदण्डादिसहायः सुवर्णपाकमणिरागहेमरूप्यपण्याकरकर्मान्तान् सुवर्णपाकं पुटपाकेन लोहादेः सुवर्णत्वापादनकर्म, रसतन्त्रप्रयोगमिति यावत्, मणिरागहेमरूप्यपण्यानि वज्रवैदूर्यमौक्तिकादिर्मणिः लाक्षादिरञ्जनद्रव्यं रागः हेम स्वर्णं रूप्यं रजतं इत्येतद्रूपाणि पण्यानि विक्रेयपदार्थान्, आकरकर्मान्तं रत्नादिखनिव्यापारं च आजीवेत् उपजीवेत् । एष कोशार्जनेऽभ्युपायः । उपायान्तरमाह— पाषण्डेति । पाषण्डसंघद्रव्यं पाषण्डैः स्वसंघार्थं संगृह्य स्थापितं धनम्, अश्रोत्रियभोग्यं देशद्रव्यं छान्दसब्राह्मणभोग्यातिरिक्तं देश्यजनसमुदायद्रव्यम् । देवद्रव्यमित्यपि पाठः । आढ्यविधवाद्रव्यं वा आढ्याः समृद्धधनाः या विधवास्तासां द्रव्यं वा गूढं द्रव्यापजिहीर्षागुप्तिपूर्वं अनुप्रविश्य अनुकूलाचरणेन वशयित्वा, अर्थात् पाषण्डादीन्, अवहरेत् । किंच, सार्थयानपात्राणि सार्थस्य वणिक्संघस्य यानपात्राणि पोतान् पण्ययुक्तान् मदनरसयोगेन मदकररसदानोपायेन अतिसंधाय वञ्चयित्वा, अर्थात् वणिक्संघम्, अवहरेत् । पारग्रामिकमिति । अथवा पारग्रामिकं योगं 'विजिगीषुः परग्राममवाप्तुकामः' इत्यादिना दुर्गलम्भोपायाधिकरणे वक्ष्यमाणं उपायं आतिष्ठेत् आद्रियेत । अथवा मातुः परिजनोपग्रहेण सेवकजनानुकूलनेन चेष्टेत वियतेत स्ववृद्ध्यर्थम् । अथवा कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डच्छद्मभिः कारवः तक्षायस्काराः शिल्पिनः चित्रकारादयः कुशीलवाः गायनाः चिकित्सकाः वैद्याः वाग्जीवनाः पुरावृत्तकथनोपजीविनः पाषण्डाः क्षपणकबौद्धभिक्षुप्रभृतयो वेदबाह्याः तद्वेषैः सह नष्टरूपः छन्नस्वरूपः तद्व्यञ्जनसखः कार्वादिवेषपुरुषतुल्यः राज्ञः पितुः छिद्रे अपकारस्थाने प्रविश्य शस्त्ररसाभ्यां प्रहृत्य राजानं हत्वा ब्रूयात्, अर्थात् सचिवादीन् । अहमित्यादिर्वचनप्रकारः । कुमारः राजपुत्रः । सहभोग्यं ससहायनिर्वेश्यं ससहायशासनीयं वा । भर्तुं अमात्यादिपदेष्वधिकर्तुम् ।

तान् भर्तुकामान् । द्विगुणेन मत्पितृदत्तात् द्विरावृत्तेन । उपस्थास्ये पूजयिष्यामि । इत्यवरुद्धवृत्तं वर्णितमिति शेषः । श्रीमूला.

अवरुद्धं पुत्रादिं प्रति वृत्तिः

**अवरुद्धं तु मुख्यपुत्रापसर्पाः प्रतिपाद्याऽऽनयेयुः, माता वा प्रतिगृहीता । त्यक्तं गूढपुरुषाः शस्त्ररसाभ्यां हन्युः । अत्यक्तं तुल्यशीलाभिः स्त्रीभिः पानेन मृगयया वा प्रसज्ज्य रात्रावुपगृह्याऽऽनयेयुः ॥**

मुख्यपुत्रापसर्पाः मुख्यानाममात्यादीनां ये पुत्राः तद्रूपा अपसर्पाः चाराः प्रतिगृहीता माता वा राजपूजिता स्वमाता वा अवरुद्धं राजपुत्रं प्रतिपाद्य 'पिता ते यौवराज्यं दद्यात् त्वं चेत् तदनुकूलवृत्तिः' इति भाषया पितृहितवृत्तिमभ्युपगमय्य आनयेयुः पितुरन्तिकम् । कथंचिदपि विधेयतानासादनात् पित्रा परित्यक्तं राजपुत्रं आयुधविषप्रयोगाभ्यां गूढपुरुषा हन्युः, अविधेयत्वेऽप्येकपुत्रत्वादपत्यस्नेहात् वा अपरित्यक्तं तं समानस्वभावाभिः स्त्रीभिः मद्येन खेटनेन वा प्रसक्तिं कारयित्वा बद्ध्वा रात्रौ राजान्तिकं प्रापयेयुरित्याह– त्यक्तमित्यादि । श्रीमूला.

**उपस्थितं च राज्येन मदूर्ध्वमिति सान्त्वयेत् ।**
**एकस्थमथ संरुन्ध्यात्पुत्रवान् वा प्रवासयेत् ॥**

उपस्थितं तथा प्राप्तं अवरुद्धं अर्थात् धार्मिकं राज्येन मदूर्ध्वमिति सान्त्वयेत् 'राज्यमिदं मदुत्तरकाले त्वदीयं भविष्यति' इति राज्येन निमित्तेनानुनयेत् । अथ एकस्थं अभ्रातृकं पुत्रं अर्थादधार्मिकं सन्तं संरुन्ध्यात् कारागृहे निवेशयेत् । पुत्रवान् वा प्रवासयेत् बहुपुत्रसद्भावपक्षे अधार्मिकं पुत्रं हन्यादित्यर्थः । श्रीमूला.

## मनुः

राजपुत्ररक्षणचिन्ता कर्तव्या

**[1]कुमाराणां च रक्षणम् ( चिन्तयेत् ) ॥**

(१) मस्मृ. ७।१५२; राक. १०६; रार. ८ (=); यमा. ४१०; राप्र. १५९, ३१७; नीम. ३८.

(१) कुमाराणां राजपुत्राणां रक्षणम् । तव वयमित्येवमादिभिर्धर्ममर्थं च ते ग्राहयितव्याः । नवं हि द्रव्यं येनार्थजातेनोपदिह्यते तत्तदाचूषति । एवमसंस्कृतबुद्धयो यद्यदुच्यते तत्तत्प्रथमं गृह्णन्ति । यद्यसद्भिः संसृज्यन्ते तदा तत्स्वभावस्तेषां प्राप्नोति । ते च दुःसंस्कारोपदिग्धा न शक्यन्ते व्यसनेभ्यो निवर्तयितुम् । उक्तं च– 'नीलीरक्ते वाससि कुङ्कुमाङ्गरागो दुराधेयः'। तस्मात्ते नित्यमनुशासनीयाः । तत्रापि ये गुणवन्तस्तान् वर्धयेत् । इतरानीषत् संविभजेत् । ज्येष्ठं महागुणममत्सरं यौवराज्येऽभिषिञ्चेत् । एवं राजपुत्ररक्षणे नित्यं यत्नवता भवितव्यम् । मेधा.

(२) कुमाराणां च पुत्राणां अविनयनिवर्तनं नीचोपसंग्रहफलं चिन्तयेत् । गोरा.

(३) कुमाराणां च पुत्राणां विनयाधाननीतिशिक्षार्थं रक्षणं चिन्तयेत् । ममु.

(४) रक्षणं यौवराज्ये स्थापयितुं विनयाधानरीतिशिक्षाद्यम् । मच.

## बृहत्पराशरः

कुमाररक्षणे यत्नः कर्तव्यः

[1]**महायत्नः कुमाराणामन्तःपुरस्य रक्षणे ॥**

## मत्स्यपुराणम्

राजपुत्ररक्षणस्य शास्त्रशिक्षा व्यायामः इन्द्रियदमनविनयः अधिकारनियोजनं चाङ्गानि, अविनीतस्य बन्धनम्

[2]**राजन् पुत्रस्य रक्षा च कर्तव्या पृथिवीक्षिता ।**
**आचार्यश्चात्र कर्तव्यो नित्ययुक्तश्च रक्षिभिः ॥**

(१) बृपसं. १२।१३.

(२) मत्स्य. २२०।१; विध. २।६५।२–३ राजन् पु (राजपु) उत्तरार्धे (आचार्यश्चास्य कर्तव्यं नित्यं युक्तैव रक्षणम् ॥); अग्नि. २२५।१ राजन् पु (राजपु) पू.; राक. ९९ राजन् पु (राजपु) श्चात्र (श्चापि) युक्तश्च (युक्तैश्च); राप्र. ३१५ उत्तरार्धं राकवत्.

[1]धर्मकामार्थशास्त्राणि धनुर्वेदं च शिक्षयेत् ।
रथे च कुञ्जरे चैनं व्यायामं कारयेत्सदा ॥
[2]शिल्पानि शिक्षयेच्चैनं नाऽऽप्तैर्मिथ्याप्रियं वदेत् ।
शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत् ॥
[3]न चास्य सङ्गो दातव्यः क्रुद्धलुब्धावमानितैः ।
तथा च विनयेदेनं यथा यौवनगोचरे ॥

यौवनगः यौवनप्राप्तः । मुखे आदौ । राक. १००

[4]इन्द्रियैर्नापकृष्येत सतां मार्गात्सुदुर्गमात् ।
गुणाधानमशक्यं तु यस्य कर्तुं स्वभावतः ॥
[5]बन्धनं तस्य कर्तव्यं गुप्तदेशे सुखान्वितम् ।
अविनीतकुमारं हि कुलमाशु विशीर्यते ॥

गुप्तदेशे इत्यनेन दुष्टप्रवेशनिषेधः । शुभान्वितमित्यनेन शारीरदुःखनिषेधः । अवश्यापेक्षितस्नानभोजनवस्त्रताम्बूलादिदानं बोध्यते । सुखान्वित इति पाठे देशविशेषणं तत् । राप्र. ३१५–३१६

(१) मत्स्य. २२०।२; विध. २।६५।३–४ धर्मकामार्थशास्त्राणि (धर्मार्थकाममोक्षाणां) रथे च (रथेऽश्वे); अग्नि. २२५।१ पू.; राक. ९९ शास्त्राणि (सूत्राणि); राप्र. ३१५.

(२) मत्स्य. २२०।३; विध. २।६५।४–५ चैनं ना (च्चैवमा) वदेत् (वदैः); अग्नि. २२५।२ च्चैनं ना (च्चैनमा) वदेत् (वदैः); राक. ९९ च्चैनं ना (च्चैनमा); राप्र. ३१५.

(३) मत्स्य. २२०।४; विध. २।६५।५–६ लुब्धाव (लुब्धवि) यौवनगोचरे (यौवनगं सुखे); अग्नि. २२५।३ विधवत्, पू.; राक. ९९ क्रुद्ध (क्षुद्र) गोचरे (गो मुखे); राप्र. ३१५ गोचरे (गो मुखे).

(४) मत्स्य. २२०।५; विध. २।६५।६–७ इन्द्रियैर्नाप (विषयैर्नैनं) धानम (धानं न); अग्नि. २२५।३ (अशक्यं तु गुणाधानं कर्तुं तं बन्धयेत्सुखैः ॥) उत्त.; राक. ९९ कर्तुं (कर्तुः); राप्र. ३१५.

(५) मत्स्य. २२०।६; विध. २।६५।७–८; राक. ९९–१००; राप्र. ३१५–३१६ सुखा (शुभा) 'सुखान्विते' इत्यपि पाठः.

[1]अधिकारेषु सर्वेषु विनीतं विनियोजयेत् ।
आदौ स्वल्पे ततः पश्चात्क्रमेणाथ महत्स्वपि ॥

## कालिकापुराणम्

राजपुत्रे गुणाधानं राजपुत्रस्य महिष्याश्च संशोधनं च कर्तव्यम्

[2]यैर्गुणैर्योजितश्चाऽऽत्मा तैः पुत्रानपि योजयेत् ।
नृपस्य च स्वतन्त्रत्वं सततं स्वं विनाशयेत् ॥
[3]स्वतन्त्रो भूपतनयो विकारं याति निश्चितम् ।
निर्विकाराय सततं वृद्धांश्च परियोजयेत् ॥
तस्मात्कुमारं महिषीमुपधाभिर्मनोहरैः ।
शोधयित्वा नियुञ्जीत यौवराज्यावरोधयोः ॥
अन्तःपुरप्रवेशे तु स्वतन्त्रत्वं निषेधयेत् ।
भूपपुत्रस्य भार्याया बहिःसारे तथैव च ॥
अयं विशेषः संक्षेपान्नृपधर्मो मयोदितः ।
पुत्राणां गुणविन्यासे भार्याणामपि भूपते ॥

## कामन्दकीयनीतिसारः

राज्ञः आत्मरक्षणं कर्तव्यम्

[4]प्रजात्मश्रेयसे राजा कुर्वीताऽऽत्मजरक्षणम् ।
लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः ॥

(१) इदानीमाभ्यन्तरराज्योपघातप्रतिविधानमस्मिन् सर्गे प्रकरणद्वयेनोच्यते । तत्र स्वशरीरोपघातः स्वेभ्यः पुत्रदारमन्त्र्यादिभ्यः परेभ्यश्च सामन्ताटविकेभ्यः । तत्र 'कर्कटकसधर्माणो राजपुत्रा जनकभक्षाः' (कौ. १।१७) इति तेषामेव तावत् रक्षणमुच्यतेऽष्टभिः श्लोकैः — प्रजेत्यादि । लोलुभ्यमानाः अत्यर्थं गर्धं(? गृध्य)मानाः ।

(१) मत्स्य. २२०।७; विध. २।६५।८–९; अग्नि. २२५।४ पू.; राक. १०० मेणाथ (मेण च); राप्र. ३१६ राकवत्.

(२) कालिका. ८७।१२३–१२४.

(३) कालिका. ८७।१२७–१२९.

(४) कानी. ७।१; रार. ७६ लोलुभ्य (लोलुप्य) रक्षिताः (लक्षिताः) नीतौ इत्युक्तम्; नीम. ४८ प्रजात्म (प्रजार्थ).

अरक्षिताः इति असंरक्षिताः। दूरक्षिताश्च हन्युरिति सामर्थ्यसिद्धम्। जम.

(२) कण्टकशोधनशेषमेवाऽऽत्मजरक्षणमभिधीयते। अरक्षिताः पुत्राः कण्टकीभवन्ति पितुः प्रजानां चेति दर्शयन्नाह– प्रजेति। प्रजात्मश्रेयसे प्रजानामात्मनश्च श्रेयसे रक्षार्थं राजा विजिगीषुः कुर्वीत आत्मजानां पुत्राणां रक्षणम्। कुतस्तद्रक्षणमिति लोलुभ्यमानाः लोभं गच्छन्तः अर्थेषु तदर्थं हन्युरेनं विजिगीषुं अरक्षिता इति। उनि.

अविनीतराजपुत्रेषु राज्यनाशः

**[१]राजपुत्रा मदोन्मत्ता गजा इव निरङ्कुशाः।**
**भ्रातरं वाऽपि निघ्नन्ति पितरं वाऽभिमानिनः॥**

(१) तदेव दृष्टान्तेन स्फुटयन्नाह– राजपुत्रा इत्यादि। निरङ्कुशाः अनियमिताः। जम.

(२) यौवनादिमदोन्मत्ता गजा इव निरङ्कुशाः भ्रातरं राज्ययोग्यं निघ्नन्ति पितरं वा अहमेव राज्यार्हं इति अभिमानसंभावनया युक्ता इति। उनि.

**[२]राजपुत्रैर्मदोन्मत्तैः प्रार्थ्यमानमितस्ततः।**
**दुःखेन रक्ष्यते राज्यं व्याघ्राघ्रात-**
**मिवाऽऽमिषम्॥**

(१) प्रार्थ्यमानमितस्ततः सर्वोपायैः प्रार्थ्यमानम्। जम.

(२) मदोन्मत्तैः अभितो जातोन्मादैः प्रार्थ्यमानं अभिलष्यमाणं इतस्ततः सर्वतः अभियोगात् दुःखेन क्लेशेन रक्ष्यते राज्यं व्याघ्राघ्रातमामिषमिव। उनि.

**[३]रक्ष्यमाणा यदि च्छिद्रं कथंचित्प्राप्नुवन्ति ते।**
**सिंहशावा इव घ्नन्ति रक्षितारमसंशयम्॥**

(१) नारक्षिताः। राज्ञा सुष्ठु रक्षणीयाः, अन्यथा स्ववधाय कृत्योत्थापनया यतन्ते इति। जम.

(२) सिंहशावा इव घ्नन्ति विनाशयन्ति रक्षितारं पितरं असंशयम्। उनि.

**[१]विनयोपग्रहान् भूत्यै कुर्वीत नृपतिः सुतान्।**
**अविनीतकुमारं हि कुलमाशु विशीर्यते॥**

(१) तद्रक्षणोपायमाह– विनयोपग्रहानित्यादि। विनयेनोपग्रहो येषामिति विग्रहः। आदावेव विनयेनोपगृह्णीयादित्यर्थः। अन्यथा ह्यविनीतकुमारं राजकुलं अस्वामिप्रकृतिसंपन्नं पराभियोगकाले निराश्रयत्वात् विशीर्यते। जम.

(२) रक्षाप्रकारं राजपुत्राणां सुश्लिष्टमभिधातुमाह– विनयेति। विनयो द्विविधः– कृतकः सहजश्च। स्वाभाविकः जन्मान्तरवासनावशायातः। कृतकः विद्यावृद्धसंयोगजनितः। द्विविधविनये उपग्रहः बन्धनं येषां ते, तान् विनयोपग्रहान् भूत्यैः कुर्वीत नृपतिः सुतान्। तथा च कौटिल्यः– 'काष्ठमिव घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्यते। तस्मादृतुमत्यामृत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः। आपन्नसत्त्वायां कौमारभृत्या गर्भभर्मणि प्रसवे च विधीयमाने प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात्। समग्रं तद्विदो विनयेयुः' (कौ. १।१७) इति। एवंविधेन विनयोपग्रहेण रक्षेदिति भावः। अविनीतकुमारं राजकुलं आशु विशीर्यते इति। उनि.

अविनीतराजपुत्रस्य सुखबन्धनं शासनं च

**[२]विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत्।**
**दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखबन्धनम्॥**

(१) विनीतं आत्मसंपन्नम्। औरसं कृतक्रियायां स्वयं जातम्। उद्वृत्तं अविनीतम्। कुर्वीत सुखबन्धनम्, न परित्यजेत्। सुखसंवर्धनेन ह्युपायेन बद्धो नितरां नाभिद्रुह्यति, पित्रा कल्पितवृत्तित्वात्। जम.

(२) विनीतपुत्रविषये आह– विनीतमिति। विनीतमिति द्विविधविनययुक्तं औरसम्, न क्षेत्रजं पुत्रम्,

---

(१) कानी. ७।२; नीम. ४८ मदोन्मत्ता (मदोद्धुता) वाऽपि (चाभि) वाऽभि (चाभि).

(२) कानी. ७।३; नीम. ४८ दोन्मत्तैः (दोद्धुतैः).

(३) कानी. ७।४; नीम. ४८.

(१) कानी. ७।५; उनि. भूत्यै (भृत्यैः); नीम. ४८ भूत्यै (भृत्यैः) विशीर्यते (विनश्यति).

(२) कानी. ७।६; रार. ७६ बन्धनम् (सेवनम्) उत्त.; नीम. ४८.

यौवराज्येऽभिषेचयेत् । उद्वृत्तं तु दुःशीलं दुष्टं गजमिव कुर्वीत सुखबन्धनम् । तथा च कौटिल्यः– 'ग्राम्यसुखोपरुद्धा हि राजपुत्राः पितरं नाभिद्रुह्यन्ति ' ( कौ. १।१७ ) इति । एवंविधं सुखबन्धनं कुर्वीतेति । उनि.

**[1]राजपुत्रः परित्यागं सुदुर्वृत्तोऽपि नार्हति ।**
**क्लिश्यमानः स पितरं परमाश्रित्य हन्ति हि ॥**

( १ ) अन्यथा परित्यक्तः क्लिश्यमानः परान् सामन्ताटविकादीनाश्रित्य पितरमेव हन्यादिति । यदाह– राजपुत्र इत्यादि । जम.

( २ ) दुर्वृत्तस्यापि राजपुत्रस्यापरित्यागमाह– राजपुत्र इति । सुदुर्वृत्तोऽपि परित्यागं राजपुत्रो नार्हति त्याज्यो न भवतीति । उनि.

**[2]व्यसने सज्जमानं हि क्लेशयेद्व्यसनाश्रयैः ।**
**तथा च क्लेशयेदेनं यथा स्यात्पितृगोचरः ॥**

( १ ) व्यसने सज्जमानमिति । अतिसुखोपरुद्धत्वाद्व्यसने यदा सज्जते । व्यसनाश्रयैरिति । मृगयादिप्रतिबद्धैरुपायैरित्यर्थः । तद्यथा– मृगयाकामं प्रतिरोधकव्यञ्जनैः कदर्थयेत्, द्यूतकामं द्यूतकारव्यञ्जनैः संरोधेन वाक्पारुष्यादिखलीकारेण, मद्यकामं मदनीययोगपानेन, परस्त्रीषु मनः कुर्वाणमार्याव्यञ्जनाभिरमेध्याभिः स्त्रीभिः शून्यागारे रात्रौ क्लेशयेत्, यदनुभवान्न पुनः प्रवर्तेत । पितृगोचर इति । पितुर्विधेयश्च स्यादित्यर्थः । जम.

( २ ) उक्तप्रकारस्य राजपुत्रस्यापरित्यक्तस्य शासनप्रकारमभिधातुमाह– व्यसन इति । पितृगोचर इति पितृवश्यः । तथा च कौटिल्यः– 'परस्त्रीषु मनः कुर्वाणमार्याव्यञ्जनाभिः स्त्रीभिरमेध्याभिः शून्यागारेषु रात्रावुद्वेजयेयुः । मद्यकामं योगपानेन, द्यूतकामं कापटिकैः पुरुषैः ' ( कौ. १।१८ ) इति । उनि.

---

(१) **कानी.** ७।७ ; **जम.** परमा ( पराना ) ; **रार.** ७६ स पितरं परमा ( स्वपितरं पराना ) ; **नीम.** ४८ परित्यागं सुदुर्वृत्तोऽपि ( सुदुर्वृत्तः परित्यागं हि ) परमा ( पराना ).

(२) **कानी.** ७।८ ; **नीम.** ४८ पू.

## शुक्रनीतिः

औरसस्य युवराजता प्रशस्ता

**[1]युवराजोऽमात्यगणो भुजावेतौ महीभुजः ।**
**तावेव नयने कर्णौ दक्षसव्यौ क्रमात्स्मृतौ ॥**

युवराजः राजकर्मणि अभिषिक्तः पुत्रादिः अमात्यगणः सचिववर्गश्च एतौ महीभुजः राज्ञः भुजौ बाहुस्वरूपौ । तौ एव क्रमात् दक्षसव्यौ दक्षिणवामौ नयने कर्णौ च स्मृतौ कथितौ, राज्ञ इति शेषः । शुनीटी.

**[2]बाहुकर्णाक्षिहीनः स्याद्विना ताभ्यामतो नृपः ।**
**योजयेच्चिन्तयित्वा तौ महानाशाय चान्यथा ॥**

ताभ्यां युवराजामात्याभ्यां विना नृपः बाहुकर्णाक्षिहीनः भुजश्रोत्रनेत्ररहितः स्यात्, अतः अस्मात्कारणात् चिन्तयित्वा विविच्य तौ युवराजामात्यौ योजयेत्, अन्यथा महानाशाय भवतीति शेषः । शुनीटी.

**[3]मुद्रां विनाऽखिलं राजकृत्यं कर्तुं क्षमं सदा ।**
**कल्पयेद्युवराजार्थमौरसं धर्मपत्निजम् ॥**

मुद्रां आलस्यं विना, परित्यज्य इत्यर्थः, सदा अखिलं समग्रं राजकृत्यं कर्तुं क्षमं धर्मपत्नीजं औरसं पुत्रं युवराजार्थं युवराजशब्दाभिधेयं कल्पयेत् । शुनीटी.

राजपुत्ररक्षणं यौवराज्यार्हता च विनयाधानेन

**[4]स्वधर्मनिरतान् शूरान् भक्तान् नीतिमतः सदा ।**
**संरक्षयेद्राजपुत्रान् बालानपि सुयत्नतः ॥**

स्वधर्मनिरतान् आत्मधर्मस्थितान् शूरान् विक्रान्तान् भक्तान् अनुरक्तान् नीतिमतः नयसंपन्नान् राजपुत्रान् राजवंश्यान् बालान् अप्राप्तवयस्कानपि सुयत्नतः अतियत्नेन सदा संरक्षयेत् । शुनीटी.

**लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः ।**
**रक्ष्यमाणा यदि च्छिद्रं कथंचित्प्राप्नुवन्ति ते ॥**

---

(१) **शुनी.** २।१२ ; **नीम.** ४८ ( अमात्यो युवराजश्च भुजावेतौ महीपतेः । ) पू., नीतिसारे.

(२) **शुनी.** २।१३.

(३) **शुनी.** २।१४.

(४) **शुनी.** २।१७–२०.

ते राजपुत्राः अर्थेषु तदीयेषु धनेषु लोलुभ्यमानाः, राज्ञा इति शेषः। तेषामर्थलोभादिति भावः। अरक्षिताः सन्तः एनं नृपं हन्युः नाशयेयुः। किंच, रक्ष्यमाणा अपि ते यदि कथंचित् छिद्रं दोषं कथंचित् प्राप्नुवन्ति तदाऽपि एनं हन्युरित्यनेनान्वयः। शुनीटी.

**सिंहशावा इव घ्नन्ति रक्षितारं द्विपं द्रुतम्।**
**राजपुत्रा मदोद्धूता गजा इव निरङ्कुशाः॥**

सिंहशावाः द्विपं हस्तिनमिव मदोद्धूताः मदमत्ताः निरङ्कुशाः गजा इव राजपुत्राः रक्षितारम्, अयत्नत इति भावः, नृपं घ्नन्ति नाशयन्ति। शुनीटी.

**पितरं चापि निघ्नन्ति भ्रातरं त्वितरं न किम्।**
**मूर्खो बालोऽपीच्छति स्म स्वाम्यं किं नु पुनर्युवा॥**

ते पितरं भ्रातरं चापि निघ्नन्ति, इतरं अपरं किं नु वक्तव्यमित्यर्थः। नु वितर्के। मूर्खः बालः शिशुरपि स्वस्य आत्मनः स्वाम्यं स्वेच्छाचारित्वं इच्छति, युवा किं पुनः? शुनीटी.

[1]**विकारं याति पुत्रोऽपि राज्यलोभाद्यथा पिता।**
**तल्लोकवृत्तान्नृपतेरन्यद्वृत्तं प्रचक्षते॥**

[2]**स्वात्यन्तसंनिकर्षेण राजपुत्रांस्तु रक्षयेत्।**
**सद्भृत्यैश्चापि तत्स्वान्तं छलैर्ज्ञात्वा सदा स्वयम्॥**

सदा स्वयं सद्भृत्यैश्च तत्स्वान्तं तेषां राजपुत्राणां स्वान्तं मनः छलैः कौशलैः ज्ञात्वा स्वात्यन्तसंनिकर्षेण स्वस्य आत्मनः अत्यन्तः यः संनिकर्षः सङ्गः तेन रक्षयेत् पालयेत्। शुनीटी.

**सुनीतिशास्त्रकुशलान् धनुर्वेदविशारदान्।**
**क्लेशसहांश्च वाग्दण्डपारुष्यानुभवान् सदा॥**
**शौर्ययुद्धरतान् सर्वकलाविद्याविदोऽञ्जसः।**
**सुविनीतान् प्रकुर्वीत ह्यमात्याद्यैर्नृपः सुतान्॥**

नृपः अमात्याद्यैः सुतान् सुनीतिशास्त्रकुशलान् धनुर्वेदविशारदान् संग्रामनिपुणान् सदा क्लेशसहान् वाग्दण्डपारुष्यानुभवान् वाक्पारुष्यदण्डपारुष्याभिज्ञान् शौर्ययुद्धरतान् विक्रमशालिनः सर्वकलाविद्याविदः सर्वासु कलाविद्यासु चतुःषष्टिप्रकारासु विद्यासु विज्ञान् अञ्जसः क्षिप्रकारिणः तथा सुविनीतान् शोभनविनयसंपन्नान् प्रकुर्वीत। शुनीटी.

**सुवस्त्राद्यैर्भूषयित्वा लालयित्वा सुक्रीडनैः।**
**अर्हयित्वाऽऽसनाद्यैश्च पालयित्वा सुभोजनैः॥**
**कृत्वा तु यौवराज्यार्हान् यौवराज्येऽभिषेचयेत्।**
**अविनीतकुमारं हि कुलमाशु विनश्यति॥**

सुवस्त्राद्यैः शोभनवसनादिभिः भूषयित्वा सुक्रीडनैः शोभनक्रीडनद्रव्यैः लालयित्वा आनन्दितान् कृत्वा आसनाद्यैः उपवेशनादिना अर्हयित्वा संमान्य सुभोजनैः पालयित्वा क्रमेण यौवराज्यार्हान् कृत्वा, पुत्रानिति शेषः, यौवराज्ये अभिषेचयेत्। हि यतः अविनीतः अशिक्षितः कुमारो यस्य तादृशं कुलं आशु शीघ्रं विनश्यति विनाशं प्राप्नोति। शुनीटी.

#### दुर्वृत्तराजपुत्रस्य सुखबन्धनम्

**राजपुत्रः सुदुर्वृत्तः परित्यागं हि नार्हति।**
**क्लिश्यमानः स पितरं परानाश्रित्य हन्ति हि॥**

राजपुत्रः सुदुर्वृत्तः अतिदुर्वृत्तः अपि परित्यागं न अर्हति न परित्याज्यो भवतीत्यर्थः। स क्लिश्यमानः परानाश्रित्य पितरं हन्ति हि हन्त्येव। शुनीटी.

**व्यसने सज्जमानं तं क्लेशयेद्व्यसनाश्रयैः।**
**दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखबन्धनम्॥**

व्यसने स्त्रीमद्यादौ सज्जमानं तं पुत्रं व्यसनाश्रयैः तत्सङ्गिभिः क्लेशयेत् तत्सङ्गिनां संमाननेन यथा पुत्रस्तदासक्तो न भवेत् तथा यत्नं कुर्यादित्यर्थः। दुष्टं गजमिव उद्वृत्तं उच्छृङ्खलं पुत्रं सुखबन्धनं सुखेन आयत्तं कुर्वीत। शुनीटी.

#### पितुराज्ञा प्रमाणम्

[1]**किमाश्चर्यमतो लोके न ददाति यजत्यपि।**
**प्राप्यापि युवराजत्वं प्राप्नुयाद्विकृतिं न च॥**

---

(१) रार. ७२.
(२) शुनी. २।२१–२७.

(१) शुनी. २।३५; नीम. ४८ उत्त., नीतिसारे.

लोके जगति दत्तकाय सर्वं रक्षेत् तथापि न ददाति कस्मैचित् किमपीति शेषः, नापि यजति देवान् अर्चयति, किमाश्चर्यम् ? किंच, युवराजत्वं प्राप्यापि विकृतिं न च प्राप्नुयात् न विकारं गच्छेत्। शुनीटी.

[1]स्वसंपत्तिमदान्नैव मातरं पितरं गुरुम्।
भ्रातरं भगिनीं वाऽपि ह्यन्यान्वा राजवल्लभान्॥

मातरं पितरं गुरुं भ्रातरं भगिनीं वा अन्यान् राजवल्लभान् राजानुरक्तान् स्वसंपत्तिं नैव अदात् नैव दद्यादित्यर्थः। संप्रदानेषु कर्मविभक्तिरार्षैवेति बोध्यम्। दाने धनक्षयात् प्रभुत्वहानिः स्यादिति भावः। शुनीटी.

[2]महाजनांस्तथा राष्ट्रे नावमन्येत पीडयेत्।
प्राप्यापि महतीं वृद्धिं वर्तेत पितुराज्ञया॥

राष्ट्रे राज्ये महाजनान् भद्रवंशीयान् न अवमन्येत तथा न पीडयेत्। किंच, महतीं ऋद्धिं ऐश्वर्यं प्राप्यापि पितुराज्ञया वर्तेत तिष्ठेत्। शुनीटी.

[3]पुत्रस्य पितुराज्ञा हि परमं भूषणं स्मृतम्।
भार्गवेण हता माता राघवस्तु वनं गतः॥

पितुराज्ञा हि पुत्रस्य परमं भूषणं स्मृतं कथितम्। तथाहि— भार्गवेण परशुरामेण माता हता नाशिता, राघवस्तु रामश्च वनं गतः, पितुराज्ञयेति शेषः। शुनीटी.

[4]पितुस्तपोबलात्तौ तु मातरं राज्यमापतुः।
शापानुग्रहयोः शक्तो यस्तस्याऽऽज्ञा गरीयसी॥

तौ भार्गवराघवौ तु पितुस्तपोबलात् मातरं राज्यं आपतुः प्रापतुः। भार्गवस्य माता पुनर्जीविता, रामस्य च पुनः राज्यप्राप्तिरासीदित्यर्थः। अतः यः शापानुग्रहयोः अभिसंपातप्रसादयोः शक्तः समर्थः तस्य आज्ञा गरीयसी अतिगुर्वीत्यर्थः। शुनीटी.

[1]सोदरेषु च सर्वेषु स्वस्याऽऽधिक्यं न दर्शयेत्।
भागार्हभ्रातृणां नष्टो ह्यवमानात्सुयोधनः॥

सर्वेषु सोदरेषु भ्रातृषु स्वस्य आधिक्यं आत्मनः ऐश्वर्यं आधिपत्यं वा न दर्शयेत्। हि यतः भागार्हाणां दायादानां भ्रातृणां अवमानात् सुयोधनः नष्टः विनाशं गत इत्यर्थः। शुनीटी.

[2]पितुराज्ञोल्लङ्घनेन प्राप्यापि पदमुत्तमम्।
तस्माद्भ्रष्टा भवन्तीह दासवद्राजपुत्रकाः॥

[3]ययातेश्च यथा पुत्रा विश्वामित्रसुता यथा।
पितृसेवापरस्तिष्ठेत्कायवाङ्मानसैः सदा॥

इह जगति राजपुत्रकाः उत्तमं पदं प्राप्यापि पितुः आज्ञोल्लङ्घनेन तस्मात् उत्तमात् पदात् भ्रष्टाः दासवत् भवन्ति। यथा ययातेः पुत्राः यदुप्रभृतयः, यथा वा विश्वामित्रस्य मुनेः सुताः पुत्राः। तस्मात् कायवाङ्मानसैः सदा पितृसेवापरः पितृशुश्रूषानिरतः तिष्ठेत्। शुनीटी.

[4]तत्कर्म नियतं कुर्याद्येन तुष्टो भवेत्पिता।
तन्न कुर्याद्येन पिता मनागपि विषीदति॥

येन कर्मणा पिता तुष्टो भवेत् नियतं तत् कर्म कुर्यात्, येन कर्मणा पिता मनागपि अल्पमपि विषीदति क्षोभमायाति तत् न कुर्यात्। शुनीटी.

[5]यस्मिन् पितुर्भवेत्प्रीतिः स्वयं तस्मिन् प्रियं चरेत्।
यस्मिन् द्वेषं पिता कुर्यात्स्वस्यापि द्वेष्य एव सः॥

---

(१) शुनी. २।३६; नीम. ४८ गुरुम् (तथा) वाऽपि ह्यन्यान्वा (चापि अन्यान्वा) नीतिसारे.

(२) शुनी. २।३७; नीम. ४८ मन्येत (मन्येन्न) नीतिसारे.

(३) शुनी. २।३८; नीम. ४८ पू., नीतिसारे.

(४) शुनी. २।३९.

(१) शुनी. २।४०; नीम. ४८ स्वस्याऽऽधिक्यं न (नाऽऽधिक्यं संप्र) उत्तरार्धे (भ्रातृणामवमानेन बहवो हि विनाशिताः॥) नीतिसारे.

(२) शुनी. २।४१; नीम. ४८ नीतिसारे.

(३) शुनी. २।४२; नीम. ४८ उत्त., नीतिसारे.

(४) शुनी. २।४३; नीम. ४८ नियतं कुर्याद्ये (कुर्यान्नियतं ये) नीतिसारे.

(५) शुनी. २।४४; नीम. ४८ नीतिसारे.

यस्मिन् जने पितुः प्रीतिः भवेत् तस्मिन् स्वयं प्रियं चरेत् कुर्यात् । पिता यस्मिन् द्वेषं कुर्यात् स स्वस्यापि आत्मनोऽपि द्वेष्य एव । शुनीटी.

[1]असंमतं विरुद्धं वा पितुर्नैव समाचरेत् ।
चारसूचकदोषेण यदि स्यादन्यथा पिता ॥
[2]प्रकृत्यनुमतं कृत्वा तमेकान्ते प्रबोधयेत् ।
अन्यथा सूचकान्नित्यं महद्दण्डेन दण्डयेत् ॥

पितुः असंमतं अनभिमतं विरुद्धं अप्रियं कार्यं वा नैव समाचरेत् । चाराणां गूढपुरुषाणां सूचकानां खलानां धूर्तानामित्यर्थः, दोषेण यदि पिता अन्यथा स्यात् विपरीतमतिः भवेत् तदा प्रकृतीनां प्रधानपुरुषाणां अनुमतं कृत्वा परामर्शेनेत्यर्थः, एकान्ते रहसि तं पितरं प्रबोधयेत्, यथा पिता संतुष्येत् तथा प्रबोधनं कार्यमिति भावः । अन्यथा पितुरसंतोषे इत्यर्थः, सूचकान् धूर्तान् अपराधिन इत्यर्थः, महद्दण्डेन महता दण्डेन नित्यं दण्डयेत् । शुनीटी.

[3]प्रकृतीनां च कपटस्वान्तं विद्यात्सदैव हि ।
प्रातर्नत्वा प्रतिदिनं पितरं मातरं गुरुम् ॥
[4]राजानं स्वकृतं यद्यन्निवेद्यानुदिनं ततः ।
एवं गृहाविरोधेन राजपुत्रो वसेद्गृहे ॥

सदैव प्रकृतीनां राज्यस्थानां प्रधानपुरुषाणां कपटस्वान्तं कपटं मनः विद्यात् । हिशब्दोऽवधारणे । प्रकृतयः कापट्येन व्यवहरन्ति न वेति अवधारयेदित्यर्थः । किंच, राजपुत्रः युवराज इत्यर्थः, प्रतिदिनं प्रातः पितरं मातरं तथा गुरुं आचार्यं नत्वा ततः अनन्तरं यद्यत्कार्यं स्वकृतं आत्मना निष्पन्नं तत्तत् अनुदिनं राजानं निवेद्य ज्ञापयित्वा एवंप्रकारेण गृहस्य अविरोधेन सामञ्जस्येन गृहे वसेत् । शुनीटी.

(१) शुनी. २।४५ ; नीम. ४८ वा ( च ) पू., नीतिसारे.

(२) शुनी. २।४६.

(३) शुनी. २।४७.

(४) शुनी. २।४८ ; नीम. ४८ वसेद्गृ ( वसन् गृ ) नीतिसारे.

राजपुत्रवृत्तम्

[1]विद्यया कर्मणा शीलैः प्रजाः संरञ्जयन्मुदा ।
त्यागी च सत्त्वसंपन्नः सर्वान् कुर्याद्वशे स्वके ॥

त्यागी दानशीलः तथा सत्त्वसंपन्नः उत्साहवान् राजपुत्रः विद्यया कर्मणा शीलैः दयादाक्षिण्यादिभिश्चरितैः प्रजाः संरञ्जयन् मुदा आनन्देन अनायासेनेत्यर्थः सर्वान् जनान् स्वके वशे आत्मनः वशे कुर्यात् । शुनीटी.

[2]शनैः शनैः प्रवर्धेत शुक्लपक्षमृगाङ्कवत् ।
एवंवृत्तो राजपुत्रो राज्यं प्राप्याप्यकण्टकम् ॥
[3]सहायवान् सहामात्यश्चिरं भुङ्क्ते वसुन्धराम् ।
समासतः कार्यमुक्तं युवराजस्य यद्धितम् ॥

किंच, शुक्लपक्षमृगाङ्कवत् वर्धमानचन्द्र इव शनैः शनैः क्रमेण प्रवर्धेत प्रकर्षेण वृद्धिं गच्छेत्, राजपुत्र इति शेषः । अकण्टकं राज्यं प्राप्यापि एवंवृत्तः एवंसदाचारसंपन्नः राजपुत्रः सहायवान् सहायसंपन्नः सहामात्यः अमात्यवर्गसहितः चिरं वसुन्धरां पृथिवीं भुङ्क्ते । युवराजस्य यत् हितं हितजनकं कार्यं तत् समासतः संक्षेपतः उक्तम्, मयेति शेषः । शुनीटी.

राजपदं प्राप्तस्य वृत्तम्

[4]प्राप्योत्तमं पदं पुत्रः सुनीत्या पालयन् प्रजाः ।
पूर्वामात्येषु पितृवद्गौरवं संप्रधारयेत् ॥

पुत्रः उत्तमं पदं राजपदं प्राप्य सुनीत्या प्रजाः पालयन् पूर्वामात्येषु पुरातनेषु अमात्येषु पितृवत् गौरवं गुरुभावं भक्तिमित्यर्थः, संप्रधारयेत् सम्यक् कुर्यादित्यर्थः । शुनीटी.

तस्यापि शासनं तैस्तु प्रधार्यं पूर्वतोऽधिकम् ।
युक्तं चेदन्यथा कार्यं निषेध्यं काललम्बनैः ॥

(१) शुनी. २।४९ ; नीम. ४८ उत्त., नीतिसारे.

(२) शुनी. २।५० ; नीम. ४८ नीतिसारे.

(३) शुनी. २।५१ ; नीम. ४८ सहामात्य ( महामात्य ) पू., नीतिसारे.

(४) शुनी. ५।२०-२३.

तैः पूर्वैः अमात्यैः तस्य राजपुत्रस्यापि शासनं चेत् यदि युक्तं तदा पूर्वतः पूर्वस्मात् अधिकं यथा तथा प्रधार्य प्रतिपालनीयम्। अन्यथा अयुक्तत्वे इत्यर्थः, काललम्बनैः कालाश्रयिभिः सद्भिः समयान्तरे एतत्प्रतिपालनीयमितिवादिभिरित्यर्थः, कार्यं राजशासनीयं कर्म निषेध्यं निवारणीयम्। शुनीटी.

**तदनीत्या न वर्तेयुस्तेन साकं धनाशया।**
**वर्तन्ति यदनीत्या ते तेन साकं पतन्त्यरात् ॥**

धनाशया अर्थलोभेन तेन नवेन राज्ञा साकं सह तस्य अनीत्या दुर्नयेन न वर्तेयुः न तिष्ठेयुः, ते इति शेषः। यत् यदि ते अनीत्या वर्तन्ति तदा तेन राज्ञा साकं सह अरात् शीघ्रं पतन्ति। शुनीटी.

**कुलभक्तांश्च यो द्वेष्टि नवीनं भजते जनम्।**
**स गच्छेच्छत्रुसाद्राजा धनप्राणैर्वियुज्यते ॥**

यः कुलभक्तान् कुलक्रमेण अनुरक्तान् भृत्यान् द्वेष्टि, नवीनं जनं भजते च, स राजा शत्रुसाद्गच्छेत् शत्रोरधीनो भवेत् धनप्राणैः वियुज्यते च। शुनीटी.

## नीतिवाक्यामृतम्

राजपुत्रस्य विनयनम्

**[1]शिक्षालापक्रियाक्षमो राजपुत्रः सर्वासु लिपिषु प्रसंख्याने पदप्रमाणप्रयोगकर्मणि नीत्यागमेषु रत्नपरीक्षायां संभोगप्रहरणोपवाह्यविद्यासु च साधु विनेतव्यः ॥**

अथ कुमारो राज्ञा यथा कार्यस्तथाऽऽह— शिक्षेति। सम्यक् शिक्षापणीयः। शिक्षालापक्रियासु जनसभाकर्मसु क्षमः समर्थः पूर्वं कृत्वा ततो राजपुत्रः पश्चात् सर्वासु लिपिषु शिक्षापणीयः, तथा प्रसंख्याने गणितविषये, तथा पदप्रमाणप्रयोगकर्मणि। पदकर्म साहित्यम्, प्रमाणकर्म तर्कः प्रोच्यते, प्रयोगकर्म शब्दव्युत्पत्तिः कथ्यते। तथा नीत्यागमेषु नीतिशास्त्रेषु, तथा संभोगे वात्स्यायनादिषु, प्रहरणे शस्त्रविद्यायाम्, उपवाह्ये हस्त्यश्ववाहनविद्यासु शिक्षापणीय इति। तथा च राजपुत्रः— 'कुमारो यस्य मूर्खः स्यान्न विद्यासु विचक्षणः। तस्य राज्यं विनश्येत्तदप्राप्त्या नात्र संशयः ॥'। नीवाटी.

(१) नीवा. ११।४.

**[1]साधुसंपादितो हि राजपुत्राणां विनयोऽन्वयमभ्युदयं न च दूषयति ॥**

अथ राजपुत्राणां यथाऽभ्युदयो न दोषवान् भवति तदाह— साध्विति। न दोषयुक्तं करोति। कोऽसौ? विनयः। कम्? अन्वयं वंशं अभ्युदयं च राजवृद्धिं च। केषाम्? राजपुत्राणाम्। किंविशिष्टो विनयः? साधुसंपादितः साधुभिः संपादितः शिष्टनियोजितः। तथा च बादरायणः— 'विनयः साधुभिर्दत्तो राजज्ञानां भवेद्धि यः। न दूषयति वंशं तु न राज्यं न च संपदम् ॥'। नीवाटी.

**घुणजग्धं काष्ठमिवाविनीतं राजपुत्रं राजकुलमभियुक्तमात्रं भज्येत् ॥**

अथाविनीतस्य राजपुत्रस्य चेष्टितं राज्यं यादृग्भवति तदाह— घुणजग्धमिति। भज्येत् विनाशं याति। किं तत्? राज्यं राजवंशः। यदि किम्? यदि अभियुक्तं यदि राज्ये स्थापितम्। कम्? राजपुत्रम्। किंविशिष्टम्? अविनीतं दुराचारम्। किमिव भज्येत्? काष्ठमिव। किंविशिष्टं काष्ठम्? घुणजग्धं कृमिविशेषभक्षितम्। तस्मादविनीतो राजपुत्रो राज्ये न नियोक्तव्यः। तथा च भागुरिः— 'राजपुत्रो दुराचारो यदि राज्येऽभिषेचितः। तद्राज्यं नाशमायाति घुणजग्धं च दारुवत् ॥'। नीवाटी.

**आप्तविद्यावृद्धोपरुद्धाः सुखोपरुद्धाश्च राजपुत्राः पितरं नाभिद्रुह्यन्ति ॥**

अथ यादृक्षा राजपुत्राः पितरं न द्रुह्यन्ति तेषां स्वरूपमाह— आप्तेति। ये राजपुत्राः आप्तविद्यावृद्धोपरुद्धा भवन्ति। आप्ताः निजाः ये विद्यावृद्धाः विद्वांसः विद्यया कृत्वा ये वृद्धाः, न जरसा, तैर्ये उपरुद्धाः वृद्धिं नीताः। तथा सुखोपरुद्धाः सुखेन ये वृद्धिं नीतास्ते कदाचिदेव पितरं न द्रुह्यन्ति न व्यापादयन्ति। तथा च गौतमः— 'आप्तैर्विद्याधिकैर्येऽत्र राजपुत्राः सुरक्षिताः। वृद्धिं गताश्च सौख्येन जनकं न द्रुह्यन्ति ते ॥'। नीवाटी.

(१) नीवा. २४।७१-८५.

**मातृपितरौ राजपुत्राणां परमं दैवम् ॥**

अथ राजपुत्राणां मातापितरौ यादृग्भूतौ तदाह— मात्रिति । माता च पिता च मातृपितरौ राजपुत्राणाम् । किंविशिष्टौ भवतः ? परमं उत्कृष्टं दैवं प्राक्तनं कर्मेत्यर्थः । यदि तैरन्यजन्मनि सुकृतं कृतं भवति तन्मातृपितृभ्यां सकाशात् राज्यप्राप्तिर्भवति । अथवा दुष्कृतं कृतं भवति तत्ताभ्यां पार्श्वाद्विनाशो भवति । तथा च गर्गः— ' जननीजनकावेतौ प्राक्तनं कर्म विश्रुतौ । सर्वेषां

राज्ये भवति तद्राज्यं वृथैव । तथा च शुक्रः— ' जनापवादसहितं यद्राज्यमिह कीर्त्यते । प्रभूतमपि तन्मिथ्या तत्पापायं राजसंस्थिते ॥ ' । नीवाटी.

**क्वचिदपि कर्मणि पितुराज्ञां नो लङ्घयेत् ॥**

अथ राजपुत्रेण यत्कर्तव्यं तदाह— क्वचिदपीति । नो लङ्घयेत् नातिक्रमेत् । कोऽसौ ? राजपुत्रः । काम् ? आज्ञां आदेशम् । कस्य ? पितुः । क्व विषये ? क्वचिदपि कर्मणि । तथा च

(१) प्रासङ्गिकं श्राद्धप्रसङ्गेन ब्राह्मणपूजनम् ।

* राक. १६९

(२) यस्य राज्ञो राज्यं स्वयं प्राप्तं तत्प्रेतकृत्यं राजा कुर्यात । तन्मातापित्रादींश्चावश्यं बिभृयात । तदाह

## विष्णुः

राजधर्माः— प्रजाया बालानाथादीनां च पालनं वर्णाश्रम-धर्मव्यवस्था यजनं ब्राह्मणाय दानं शस्त्रनित्यता च

अथ राजधर्माः ॥

'शान्तिस्वस्त्ययनैर्दैवोपघातान् प्रशमयेत् ॥
प्रत्युत्पन्नारिष्टशमनाय क्रियमाणं कर्म शान्तिः

तस्य छेदः अपहारः। यद्वा दानस्य भूम्यादेः, छेदः अवच्छेदः, पूर्वतोऽमुकनद्याः पश्चिमतोऽमुकस्थानस्येदम् ।

राज्ञः परुषोक्तिनिषेधः प्रत्याक्रोशनिषेधश्च, मधुरभाषणं च

ययातिरुवाच–

'गङ्गायमुनयोर्मध्ये कृत्स्नोऽयं विषयस्तव ।
मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्त्याधिपास्तव ॥

अन्त्याधिपाः प्रान्त्यदेशाधिपाः । नीटी.

'अक्रोधनः क्रोधनेभ्यो विशिष्ट-
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषेभ्यो मानुषाश्च प्रधाना

कोपेन न नृशंसवादीति वाचा परपीडां न कुर्यादित्युक्तम् । न हीनतः परमभ्याददीतेति हीनेन अभिचारादिकर्मणा परं शत्रुं न वशे कर्तुमिच्छेदिति न मनसाऽपि परपीडां कुर्यादित्युक्तम् । अरुः क्षतं तद्वदत्यन्तं तुदति व्यथयतीति कण्टकवन्न स्यादिति पदार्थः । न नृशंसवादी स्यादित्येतत् सार्धेन प्रपञ्चयति– यथाऽस्येति । उषतीं दहन्तीम् । 'रुषतीम्' इति पाठे हिंस्राम् । नीटी.

'अरुंतुदं परुषं रूक्षवाचं

[१]न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
यथा मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

दयादिचतुष्कं संवननं संभजनं परमेश्वरस्याऽऽराधनम् । नीटी.

[२]तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित् ।
पूज्यान् संपूजयेद्दद्यान्न च याचेत्कदाचन ॥

॥ ॥ ।

कार्यविभागेन नियोज्यविवेकः

[१]धार्मिकान् धर्मकार्येषु अर्थकार्येषु पण्डितान् ।
स्त्रीषु क्लीबान्नियुञ्जीत क्रूरान् क्रूरेषु कर्मसु ॥[२]
स्वेभ्यश्चैव परेभ्यश्च कार्याकार्यसमुद्भवा ।
बुद्धिः कर्मसु विज्ञेया रिपूणां च बलाबलम् ॥

स्वेभ्यश्चारेभ्यः परेभ्यः उत्कोचादिना लोभितेभ्यः । नीटी.

[३]तत्र ... [illegible]

[1]निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ ।
न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन ।
ब्राह्मणो रुषितो हन्यादपि लोकान्प्रतिज्ञया ॥

वैशम्पायन उवाच–

[2]मार्कण्डेयवचः [illegible] ।

उत्तङ्क उवाच–

[1]भवता रक्षणं कार्यं तत्तावत्कर्तुमर्हसि ।
निरुद्विग्ना वयं राजंस्त्वत्प्रसादाद्वसेमहि ॥

[2]त्वया हि पृथिवी राजन् रक्ष्यमाणा महात्मना ।
[illegible] ॥

स एष जनको राजा दुर्वृत्तमपि चेत्सुतम् ।
दण्ड्यं दण्डे निक्षिपति तथा न
ग्लाति धार्मिकम् ॥
[illegible]

'एतान् राजा पालयन्नप्रमत्तो
नियोजयन् सर्ववर्णान् स्वधर्मे ।
अकामात्मा समवृत्तिः प्रजासु
नाधार्मिकांस्तत्कथ्येत कामात् ॥

य: काममन्यू प्रजहाति राजा
पात्रे प्रतिष्ठापयते धनं च ।
न संरम्भेणाऽऽरभतेऽर्थवर्ग-
माकारित: शंसति तथ्यमेव ।

[1]न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रतीतः ।
दत्त्वा न पश्चात्कुरुतेऽनुतापं
न कत्थते सत्पुरुषार्यशीलः ॥

[2]देशाचारान् समयान् जातिधर्मान्
बुभूषते यस्तु परावरज्ञः ।

[1]समैर्विवाहं कुरुते न हीनैः
समैः सख्यं व्यवहारं कथाश्च ।
गुणैर्विशिष्टांश्च पुरो दधाति
विपश्चितस्तस्य नयाः सुनीताः ॥

[2]मितं भुङ्क्ते संविभज्याऽऽश्रितेभ्यो
मितं स्वपित्यमितं कर्म कृत्वा ।

विदुरोक्ता सामान्यनीतिः राजनीतिश्च

धृतराष्ट्र उवाच–

[१]जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलः शुचिः ॥

दह्यमानस्य चिन्ताग्निनेति शेषः । धर्मार्थयोः कुशलः । मोक्षेऽस्य वक्तुमनधिकारात् द्वयोरेव ग्रहः । नीटी.

[२]त्वं मां यथावद्विदुर प्रशाधि
प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्त्व
श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥

अजातशत्रोः पथ्यं कुरूणां च श्रेयस्करम् । नीटी.

पापाशङ्की पापमेवानुपश्यन्
पृच्छामि त्वां व्याकुलेनाऽऽत्मनाऽहम् ।
कवे तन्मे ब्रूहि सर्वं यथावत्
मनीषितं सर्वमजातशत्रोः ॥

पापाशङ्की भाविदुःखादुद्विजन् । पापं स्वकृतं पूर्वापराधं पश्यन् । कवे हे सर्वज्ञ । नीटी.

विदुर उवाच–

शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥

[३]तस्माद्वक्ष्यामि ते राजन्भवमिच्छन्कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥

[४]मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत ।
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥

मिथ्योपेतानि कपटद्यूतादीनि । अनुपायैः असदुपायैः प्रयुक्तानि, दुःखफलानीत्यर्थः । नीटी.

(१) भा. ५।३४।१; भामु. ५।३४।१ शुचिः (ह्यसि).

(२) भा. ५।३४।२–४; भामु.

(३) भा. ५।३४।५; भामु. ५।३४।५ भवमिच्छन् (हितं यत्स्यात्).

(४) भा. ५।३४।६; भामु.

[१]तथैव योगविहितं न सिध्येत्कर्म यन्नृप ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥

[२]अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥

अनुबन्धान् प्रयोजनानि । संप्रधार्य निश्चित्य ।
नीटी.

[३]अनुबन्धं च संप्रेक्ष्य विपाकांश्चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥

विपाकः फलसिद्धावपि परिपाकः । उत्थानं उद्यमम् । वा न वेति सिद्धिपक्षे कुर्वीत, नान्यथेत्यर्थः । नीटी.

[४]यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥

प्रमाणं निश्चयद्वारम् । स्थानादीनि सर्वदा विचार्याणीत्यर्थः । स्थाने दुर्गादौ । दण्डे सेनायाम् । नीटी.

यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥

एतानि स्थानादिज्ञापकानि प्रमाणानि लेख्यादीनि ।
नीटी.

[५]न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥

असांप्रतं अयुक्तं यथा स्यात्तथा न वर्तितव्यम् ।
नीटी.

[६]भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
रूपाभिपाती ग्रसते नानुबन्धमवेक्षते ॥

(१) भा. ५।३४।७; भामु. ५।३४।७ न सिध्येत्कर्म यन्नृप (यत्तु कर्म न सिध्यति).

(२) भा. ५।३४।८; भामु. ५।३४।८ नवेक्षेत (नपेक्षेत).

(३) भा. ५।३४।९; भामु. ५।३४।९ विपाकांश्चैव (विपाकं चैव).

(४) भा. ५।३४।१०–११; भामु.

(५) भा. ५।३४।१२; भामु.; राक. १४८; राप्र. १२०.

(६) भा. ५।३४।१३; भामु. ५।३४।१३ रूपा (लोभा).

मुखे मिष्टमन्ते मृत्युदं कर्म न कर्तव्यमित्यर्थः। अनुबन्धं पश्चाद्बन्धनम्। 　　नीटी.

[1]यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्।
हितं च परिणामे यत्तदद्यं भूतिमिच्छता॥

आद्यं भक्षणीयम्। 　　नीटी.

[2]वनस्पतेरपक्वानि फलानि प्रचिनोति यः।
स नाऽऽप्नोति रसं तेभ्यो बीजं चास्य विनश्यति॥
यस्तु पक्वमुपादत्ते काले परिणतं फलम्।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः॥
यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्।
मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः॥

अङ्गारकारको हि मूलत उत्कृत्य काष्ठं दहति। अङ्गारः इङ्गालः। 　　नीटी.

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः।
इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो न वा॥
[3]अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः।
कृतः पुरुषकारोऽपि भवेद्येषु निरर्थकः॥

अनारभ्याः प्रबलैः सह वैरादयः। अगताः कदाचिदप्यप्राप्ताः। 　　नीटी.

[4]प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः॥
[5]कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान्।
क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान्॥

(१) भा. ५।३४।१४; भामु. ५।३४।१४ तदद्यं (तदाद्यं).

(२) भा. ५।३४।१५-१९; भामु.

(३) भा. ५।३४।२०; भामु. ५।३४।२० कारोऽपि (कारो हि).

(४) भामु. ५।३४।२१.

(५) भा. ५।३४।२१-२२; भामु. ५।३४।२२-२३.

लघुमूलान् अल्पोपायान्। 　　नीटी.

ऋजु पश्यति यः सर्वं चक्षुषाऽनुपिबन्निव।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः॥

चक्षुषा प्रीतिमयेन। 　　नीटी.

[1]सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः।
अपक्वः पक्वसंकाशो न तु शीर्येत कर्हिचित्॥

सुपुष्पितः वाचा चक्षुषा चानुग्रहं दर्शयन्नपि अफलः स्यात् भृत्यं न धनेन वर्धयेत्। सफलोऽपि सन् दुरारुहः भृत्यवश्यो न भवेत्। अपक्व इति। अन्तर्बलहीनोऽपि बलवत्तां बहिः प्रकाशयेदेवेत्यर्थः। 　　नीटी.

[2]चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम्।
प्रसादयति लोकं यस्तं लोकोऽनुप्रसीदति॥

(१) तमुद्दिश्य लोको न प्रसीदति नावसन्नो भवति। 　　राप्र. १३३

(२) कर्मणा दानेन। लोकं भृत्यवर्गम्। 　　नीटी.

[3]यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव।
सागरान्तामपि महीं लब्ध्वा स परिहीयते॥
[4]पितृपैतामहं राज्यं प्राप्तवान्स्वेन तेजसा।
वायुरभ्रमिवाऽऽसाद्य भ्रंशयत्यनये स्थितः॥

अनये स्थितः अनीतिमान्। 　　नीटी.

[5]धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धनी॥
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः।
प्रतिसंवेष्टते भूमिरग्नौ चर्माऽऽहितं यथा॥

(१) भामु. ५।३४।२४.

(२) भा. ५।३४।२३; भामु. ५।३४।२५ लोकं यः (यो लोकं); राक. १५० चक्षुषा (कर्मणा) कर्मणा (चक्षुषा) लोकं यः (यो लोकं) ऽनुप्र (न प्र); राप्र. १३३ राकवत्.

(३) भा. ५।३४।२४; भामु. ५।३४।२६.

(४) भा. ५।३४।२५; भामु. ५।३४।२७ तेजसा (कर्मणा).

(५) भा. ५।३४।२६-२७; भामु. ५।३४।२८-२९.

प्रतिसंवेष्टते संकुचति, बहुफलं न प्रयच्छतीत्यर्थः ।
नीटी.

[1]य एव यत्नः क्रियते परराष्ट्रावमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥

[2]धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥

न जहाति श्रियम् । नीटी.

[3]अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥

[4]सुव्याहृतानि सुधियां सुकृतानि ततस्ततः ।
संचिन्वन्धीर आसीत शिलाहारी शिलं यथा ॥

सुव्याहृतानि पाण्डित्यवचनानि । सूक्तानि शोभनतया उक्तानि मातृपितृगुर्वादीनि । सुकृतानि तदुपदिष्टकर्माणि । शिलं कणिशाद्यर्जनम् । ' उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् ' इति यादवः । त्वमपि अस्मदादिवाक्यात् सारं गृह्णीष्वेति भावः । नीटी.

[5]गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥

पाण्डवबलं ज्ञातुं चारान् नियुङ्क्ष्वेति भावः ।
नीटी.

[6]भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां विनयन्त्यपि ॥

(१) भा. ५।३४।२८ ; भामु. ५।३४।३० राष्ट्राव ( राष्ट्रवि ).

(२) भा. ५।३४।२९; भामु. ५।३४।३१.

(३) भा. ५।३४।३०; भामु. ५।३४।३२ सर्पतः ( जल्पतः ); राक. १४९ अप्युन्मत्तात्प्र ( अप्युत्तमान् प्र ) शेषं भामुवत्; राप्र. १३२ भामुवत्.

(४) भा. ५।३४।३१; भामु. ५।३४।३३ सुधियां (सूक्तानि).

(५) भा. ५।३४।३२; भामु. ५।३४।३४.

(६) भा. ५।३४।३३ ; भामु. ५।३४।३५ विनय (वितुद ).

[1]यदतप्तं प्रणमति न तत्संतापयन्त्यपि ।
यच्च स्वयं नतं दारु न तत्संनामयन्त्यपि ॥

[2]एतयोपमया धीरः संनमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥

भूयांसमितिश्लोकत्रयतात्पर्यम्— पाण्डवान् प्रति त्वया नम्रीभवितव्यं तेन बलाधिष्ठात्री देवता इन्द्रश्च त्वामनुग्रहीष्यतीति । नीटी.

[3]पर्जन्यनाथाः पशवो राजानो मित्रबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥

[4]सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥

[5]मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः ।
अभीक्ष्णदर्शनाद्गावः स्त्रियो रक्ष्याः कुचेलतः ॥

एतच्च मन्त्रिभिः सहाऽऽलोचनीयं सत्यं च संरक्ष्यमित्याह— पर्जन्येति त्रिभिः । योगेन अभ्यासेन । मृजया उद्वर्तनेन । अनुक्रमः व्यायामशिक्षादिः । नीटी.

[6]न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥

[7]य ईर्ष्युः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखे सौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥

(१) भा. ५।३४।३४ ; भामु. ५।३४।३६ त्संनाम (त्संताप ).

(२) भा. ५।३४।३५; भामु. ५।३४।३७.

(३) भा. ५।३४।३६, भामु. ५।३४।३८ मित्र (मन्त्रि).

(४) भा. ५।३४।३७; भामु. ५।३४।३९.

(५) भा. ५।३४।३८; भामु. ५।३४।४० नाद्गावः (नं गाश्च )

(६) भा. ५।३४।३९ ; भामु. ५।३४।४१ अन्त्ये (अन्ते ).

(७) भा. ५।३४।४०; भामु. ५।३४।४२ ईर्ष्युः ( ईर्षुः ) सुखे ( सुख ).

प्रमाणं धर्मस्य कारणम् , न कुलमिति द्वयोर्वृत्तमाश्रय, ईर्ष्यां त्यजेति भावः । नीटी.

[1]अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥

अकाले इष्टसिद्धेः प्राक् भीतः स्यात् । येन माद्येत् लोभादिना तन्न पिबेत् नाऽऽश्रयेत् । नीटी.

[2]विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
एते मदावलिप्तानामेत एव सतां दमाः ॥

अभिजनः सहायः । तव तु भयं दमश्च नास्तीत्यर्थः । नीटी.

[3]असन्तोऽभ्यर्थिताः सद्भिः किंचित्कार्यं कदाचन ।
तावन्न तस्य सुकृतं किंचित्कार्यं कदाचन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥

असन्त इति सार्धश्लोकः वाक्यम् । सद्भिरर्थिता असन्तस्तत्कार्यमल्पमप्यकृत्वा असन्तमिति ख्यातमप्यात्मानं सन्तं मन्यन्ते इति तदर्थः । किंचिदपि तस्य कार्यं यावत् सुष्ठु न कृतं तावदेव मन्यन्त इति योजना । नीटी.

[4]गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः ॥

पाण्डवा एव त्वामुपकरिष्यन्ति, न तु त्वं तानिति भावः । नीटी.

[5]जिता सभा वस्त्रवता समाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥

[6]शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥

(१) भा. ५।३४।४१; भामु. ५।३४।४३.

(२) भा. ५।३४।४२; भामु. ५।३४।४४ एते मदा (मदा एते).

(३) भा. ५।३४।४३ द्वितीयार्धं नास्ति; भामु. ५।३४।४५ सद्भिः किंचित्कार्यं (सद्भिः कचित्कार्ये).

(४) भा. ५।३४।४४ ; भामु. ५।३४।४६.

(५) भा. ५।३४।४५; भामु. ५।३४।४७ समाशा (मिष्टाशा).

(६) भा. ५।३४।४६; भामु. ५।३४।४८.

शीलं संरक्ष्यं त्वयेति द्वयोर्भावः । नीटी.

[1]आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
लवणोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥

[2]संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाऽऽढ्येषु सुदुर्लभा ॥

[3]प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
दरिद्राणां तु राजेन्द्र अपि काष्ठं हि जीर्यते ॥

आढ्यानामिति त्रयस्य शीलवतस्ते दारिद्र्यप्राप्तिरपि श्रेय इति भावः । संपन्नं मिष्टम् । नीटी.

[4]अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥

(१) अन्त्यानां अधमानां मर्त्यानां अवृत्तेः जीविकानाशात् भयम् । राप्र. १३३.

(२) शीलाभावे सत्सु अवमानः महान् क्लेश इत्याह— अवृत्तिरिति । नीटी.

[5]ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते ॥

ऐश्वर्यमदः पापिष्ठः निन्दिततमः येभ्यस्ते पानमदादयो मदाः । नीटी.

इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥

इन्द्रियार्थेषु शब्दादिषु । ग्रहैः सूर्यादिभिः । आक्रमोऽत्र तापनम् । नीटी.

(१) भा. ५।३४।४७; भामु. ५।३४।४९ लवणोत्तरं (तैलोत्तरं).

(२) भा. ५।३४।४८; भामु. ५।३४।५०.

(३) भा. ५।३४।४९; भामु. ५।३४।५१ उत्तरार्धे (जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ॥).

(४) भा. ५।३४।५०; भामु. ५।३४।५२; राक. १५० अवृत्ति (अवृत्ते); राप्र. १३३ राकवत्.

(५) भा. ५।३४।५१–५२; भामु. ५।३४।५३–५४.

[1]यो जितः पञ्चवर्गेण सहजेनाऽऽत्मकर्शिना ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥

पञ्चवर्गः श्रोत्रादिगणः । त्वमैश्वर्यमत्तोऽजितेन्द्रियश्चावश्यमापदं प्राप्स्यसीति त्रयस्य भावः । नीटी.

[2]अविजित्य य आत्मानममात्यान् विजिगीषते ।
अमित्रान्वाऽजितामात्यः सोऽवशः परिहीयते ॥

[3]आत्मानमेव प्रथमं देशरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥

[4]वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥

आत्मानं मनः । अमात्यान् पुत्रादीन् । द्वेष्यरूपेण शत्रुवत् । मन एव प्रथमं जेतव्यम्, ततोऽमात्यादीन् विजिगीषते, तत् न मोघं न निष्फलं भवति । त्वं त्वजितमनस्कतया पुत्रादिवशः न लक्ष्मीयोग्यः इति त्रयाणां भावः । नीटी.

[5]रथः शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशलः सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः ॥

एतदेव रथिरथादिरूपककल्पनया आह– रथ इति । नीटी.

[6]एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥

व्यापादयितुं नाशयितुम् । अविधेयाः अवशाः । नीटी.

[1]अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैः प्रसृतो बालः सुदुःखं मन्यते सुखम् ॥

अर्थतः अर्थहेतोः । अनर्थतः अन्यायतः । नीटी.

[2]धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥

इन्द्रियाणां वशः इच्छा, तदनुसारी इन्द्रियवशानुगः । नीटी.

[3]अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥

[4]आत्मनाऽऽत्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥

कृत्स्नस्योपदेशस्य फलमाह– आत्मनेत्यर्धेन । आत्मना बुद्ध्या आत्मानं प्रत्यक्चैतन्यरूपं अन्विच्छेत् । तत्रोपायमाह– मनसः संकल्पात्मकस्य, बुद्धेश्च तन्मूलभूतायाः, इन्द्रियाणां च निग्रहेणेत्यर्थः । अत्र न तव सहायान्तरापेक्षेत्याह– आत्मेति । धीजय एव पुरुषार्थ इत्यर्थः । नीटी.

[5]बन्धुरात्माऽऽत्मनस्तस्य येनैवाऽऽत्मा-
ऽऽत्मना जितः ।
स एव नियतो बन्धुः स एव नियतो रिपुः ॥

सः एव धीः एव जीवस्य बन्धुः रिपुश्च । नीटी.

---

(१) भा. ५।३४।५३ ; भामु. ५।३४।५५ कर्शिना (कर्षिणा).

(२) भा. ५।३४।५४; भामु. ५।३४।५६ य आत्मान (यथाऽऽत्मान).

(३) भा. ५।३४।५५ ; भामु. ५।३४।५७ देश (द्वेष्य) यो जयेत् (योजयेत्).

(४) भा. ५।३४।५६ ; भामु. ५।३४।५८ जितामात्यं (जितात्मानं).

(५) भा. ५।३४।५७ ; भामु. ५।३४।५९ कुशलः (कुशली).

(६) भा. ५।३४।५८ ; भामु. ५।३४।६०.

(१) भा. ५।३४।५९ ; भामु. ५।३४।६१ यैः प्रसृतो बा (यैरजितैर्वा).

(२) भा. ५।३४।६० ; भामु. ५।३४।६२.

(३) भा. ५।३४।६१ ; भामु. ५।३४।६३ ; राक. १५० श्यते हि (श्यतीह) ; राप्र. १३३ राकवत्.

(४) भा. ५।३४।६२ ; भामु. ५।३४।६४ आत्मैव ह्या (आत्मा ह्येवा).

(५) भामु. ५।३४।६५.

[1]क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥

द्वावपि मोहजालपिहितौ झषौ मीनौ उरू महान्तौ । तत्र द्वितीयोऽन्यस्य जातिस्वभावाच्छत्रुरपि जालच्छेदार्थं मित्रत्वमापन्नो बन्धुरपि भवति । एवं धीश्चिदात्मनः संसारप्रदत्वाच्छत्रुरपि मोहच्छेदार्थं तस्य मित्रमपि भवतीति भावः । क्षुद्राक्षेण सूक्ष्मच्छिद्रेण । यद्वा उत्तरान्वय्येवायमर्थः । कामक्रोधयोरावरकं प्रज्ञानं तौ नाशयतः, जालमिव महामीनावित्यर्थः । नीटी.

[2]समवेक्ष्येह धर्मार्थौ संभारान्योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥

समवेक्ष्य अनुरुध्य । संभारान् जयसाधनानि । नीटी.

[3]यः पञ्चाऽऽभ्यन्तराञ्शत्रूनविजित्य मतिक्षयान् ।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥

आभ्यन्तरान् श्रोत्रादीन् । मनोमयान् मनसो विकारभूतान् । तथा च श्रुतिः— ' मनसा ह्येव पश्यति मनसा शृणोति ' इति । नीटी.

[4]दृश्यन्ते हि दुरात्मानो वध्यमानाः स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥

राजानः रावणादयः । राज्यविभ्रमैः ऐश्वर्यविलासैः । स्वकर्मभिः सीताहरणादिभिः । नीटी.

[5]असंत्यागात्पापकृतामपापां-
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणाऽऽर्द्रं दह्यते मिश्रभावा-
त्तस्मात्पापैः सह संधिं न कुर्यात् ॥

निजानुत्पततः शत्रून् पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥

पञ्च इन्द्रियाणि । पञ्च प्रयोजनानि शब्दश्रवणादीनि येषां तान् । उत्पततः उत्पथेन गच्छतः । त्वं तु अजितचित्तत्वाद्दुःसङ्गाच्चाऽऽपद्ग्रस्तोऽसीति भावः । नीटी.

अनसूयाऽऽर्जवं शौचं संतोषः प्रियवादिता ।
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥

अनायासः अचाञ्चल्यम् । नीटी.

आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।
वाक्चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ॥

तितिक्षा द्वन्द्वसहनशीलता । वाक् गुप्ता असंबद्धप्रलापाद्रक्षिता । अन्त्येषु नीचेषु । त्वत्पुत्रेष्वार्जवादिकं गुप्तवाक्त्वं च नास्तीति तेऽन्त्याः । नीटी.

आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥

आक्रोशः रूक्षभाषणम् । परिवादः निन्दा । तयोर्वक्ता त्वत्पुत्रः हिंस्रश्च । अतो नासौ जयभाक् । नीटी.

हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥

वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥

वाक्संयमः नियतं वचनम् । विचित्रं चमत्कारयुक्तम् । नीटी.

[1]अभ्यावहति कल्याणं विविधा वाक्सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥

[2]संरोहति शरैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥

बीभत्सं निन्दितं यतो न संरोहति । नीटी.

---

(१) भा. ५।३४।६३ ; भामु. ५।३४।६६ तावुभौ (तावुरू).

(२) भा. ५।३४।६४ ; भामु. ५।३४।६७.

(३) भा. ५।३४।६५ ; भामु. ५।३४।६८ मतिक्षयान् (मनोमयान्).

(४) भा. ५।३४।६६ ; भामु. ५।३४।६९ दुरात्मानो वध्य (महात्मानो वध्य).

(५) भा. ५।३४।६७–७३ ; भामु. ५।३४।७०–७६.

(१) भा. ५।३४।७४ ; भामु. ५।३४।७७ विविधा (विविधं).

(२) भा. ५।३४।७५ ; भामु. ५।३४।७८ संरोहति शरै (रोहते सायकै) ; मेधा. ७।५२ भामुवत्.

[1]कर्णिनालीकनाराचा निर्हरन्ति शरीरतः।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः॥

कर्णी कर्णाकृतिफलको बाणः। नालीकः नलीकया प्रक्षेप्यो बाणः। निर्हरन्ति निःसारयन्ति। नीटी.

[2]वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु॥

नामर्मसु किंतु मर्मस्वेव। सभायां द्रौपदीं प्रति दुर्वचनं वदतां त्वत्पुत्राणामपराधः क्षन्तुमयोग्योऽस्तीति भावः। नीटी.

[3]यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम्।
बुद्धिं तस्यापकर्षन्ति सोऽपाचीनानि पश्यति॥

अवाचीनानि नीचकर्माणि। नीटी.

[4]बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते।
अनयो नयसंकाशो हृदयान्नापसर्पति॥

[5]सेयं बुद्धिः परीता ते पुत्राणां तव भारत।
पाण्डवानां विरोधेन न चैनामवबुध्यसे॥

[6]राजा लक्षणसंपन्नस्त्रैलोक्यस्यापि यो भवेत्।
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः॥

शिष्यस्ते त्वदाज्ञाकारी। शासिता पृथिव्याः। नीटी.

अतीव सर्वान् पुत्रांस्ते भागधेयपुरस्कृतः।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित्॥

(१) भा. ५।३४।७६; भामु. ५।३४।७९ नाराचा (नाराचान्).

(२) भा. ५।३४।७७; भामु. ५।३४।८० त्परेषु (त्परेभ्यः).

(३) भा. ५।३४।७८; भामु. ५।३४।८१ सोऽपा (सोऽवा).

(४) भा. ५।३४।७९; भामु. ५।३४।८२.

(५) भा. ५।३४।८०; भामु. ५।३४।८३ तव भारत (भरतर्षभ) नामब (नानव).

(६) भा. ५।३४।८१-८२; भामु. ५।३४।८४-८५.

भागधेये राज्यांशे पुरस्कृतः। मूर्धाभिषिक्तस्य पाण्डोः पुत्रास्ते राज्यार्हाः, अतथाभूतस्यान्धस्य तव पुत्रास्ते न राज्यार्हा इत्यर्थः। नीटी.

[1]आनृशंस्यादनुक्रोशाद्योऽसौ धर्मभृतां वरः।
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति॥

अनुक्रोशात् दयालुत्वात्। आनृशंस्यात् अक्रौर्यात्। नीटी.

[2]यस्मिन् यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः।
मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युदेयः॥

साधुषु पाण्डवेषु त्वयाऽपि साधुना भवितव्यमित्याशयः। नीटी.

[3]अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः।
आत्मप्रत्ययकोशस्य वसुधेयं वसुंधरा॥

नवेक्षिण इति पाठे नवमिवाऽऽदरेण ईक्षितुं शीलमस्य। आत्मनैव प्रत्ययः ज्ञानं यस्य स्वयमेव ज्ञातकोशस्य। नीटी.

[4]नाममात्रेण तुष्येत च्छत्रेण च महीपतिः।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत्॥

नाममात्रेणैव राजा भवेत्। भोगांस्तु भृत्यैः समानानेव भुञ्जीत। नीटी.

[5]अधीत्य वेदान् परिसंस्तीर्य चाग्नी-
निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च।
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा
हतः संग्रामे क्षत्रियः स्वर्गमेति॥

(१) भा. ५।३४।८३; भामु. ५।३४।८६ आनृशंस्यादनुक्रोशा (अनुक्रोशादानृशंस्या).

(२) भा. ५।३७।७; भामु. ५।३७।७ प्रत्युदेयः (प्रत्युपेयः).

(३) भा. ५।३८।२३; भामु. ५।३८।२६ कृत्या (कृत्वा) वसुधेयं (वसुदैव).

(४) भा. ५।३८।२४; भामु. ५।३८।२७.

(५) भा. ५।४०।२४; भामु. ५।४०।२६ णार्थे (णार्थं).

परिसंस्तीर्याग्नीन् परिस्तरणैः । एतेनाग्निहोत्रमुपलक्षयतीति नारायणः । परिसंस्तीर्य वितत्य स्वे स्वे स्थाने आधायेत्यर्थः । ततो यज्ञैरिष्ट्वा शस्त्रपूतः अन्तरात्मा चित्तं यस्य, गोब्राह्मणार्थे मृत इत्यर्थः । संग्रामे हतो वा क्षत्रियः । नीटी.

न कश्चिदवमन्तव्यः

[1]नावमान्यास्त्वया राजन्नवरोत्कृष्टमध्यमाः ।
न हि मानप्रदग्धानां कश्चिदस्ति समः क्वचित् ॥

दण्डधारणं क्षत्रधर्मः, न वनगमनं संन्यासो वा

भीम उवाच–

[2]श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः ।
अनुवाहकता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥

श्रोत्रियस्य वेदपाठकस्य । मन्दत्वादेवाविपश्चितः अर्थज्ञानशून्यस्य । अनुवाकेन नित्यपाठेन हता नष्टा । नीटी.

आलस्ये कृतचित्तस्य राजधर्मानसूयतः ।
विनाशे धार्तराष्ट्राणां किं फलं भरतर्षभ ॥

आलस्ये एव, न तु परमार्थे, कृतचित्तस्य तव । नीटी.

क्षमाऽनुकम्पा कारुण्यमानृशंस्यं न विद्यते ।
क्षात्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे ॥

त्वदन्तरे त्वत्तोऽन्यत्र । नीटी.

यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम् ।
शस्त्रं नैव ग्रहीष्यामो न वधिष्याम कंचन ॥
भैक्ष्यमेवाऽऽचरिष्याम शरीरस्या विमोक्षणात् ।
न चेदं दारुणं युद्धमभविष्यन्महीक्षिताम् ॥
प्राणस्यान्नमिदं सर्वमिति वै कवयो विदुः ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥

प्राणस्य प्राणवतो बलिष्ठस्य इदं सर्वमन्नमिवान्नं भोग्यम्, 'वीरभोग्या वसुंधरा' इति स्मृतेः । अत एव तस्यैव भोजनं भुज्यते पाल्यते इति व्युत्पत्त्या पालनीयमिदम् । यद्यप्येतत् प्राणोपासनाप्रकरणे श्रुतं तथापि सर्वस्याऽऽत्मार्थत्वमित्यंशेन साम्यादुदाहृतम् । नीटी.

आददानस्य चेद्राज्यं ये केचित्परिपन्थिनः ।
हन्तव्यास्त इति प्राज्ञाः क्षत्रधर्मविदो विदुः ॥
ते सदोषा हतास्माभी राज्यस्य परिपन्थिनः ।
तान् हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम् ॥

'हतास्माभिः' इति संधिरार्षः । तान् धर्मेण हत्वा निघ्नन् त्वं राज्यं भुङ्क्ष्व । हन्तेः 'अन्येभ्योऽपि दृश्यन्ते' (पा. ३।२।७५) इति क्वनिप्, अनुनासिकलोपः, 'ह्रस्वस्य ०' (पा.६।१।७१) इति तुक् । नीटी.

यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् ।
पङ्कदिग्धो निवर्तेत कर्मेदं नस्तथोपमम् ॥

तथा तेन प्रकारेण उपमीयते इति तथोपमम् । नीटी.

यथाऽऽरुह्य महावृक्षमपहृत्य ततो मधु ।
अप्राश्य निधनं गच्छेत्कर्मेदं नस्तथोपमम् ॥
[1]यथा महान्तमध्वानमाशया पुरुषः पतन् ।
स निराशो निवर्तेत कर्मेदं नस्तथोपमम् ॥

पतन् गच्छन् । नीटी.

[2]यथा शत्रून् घातयित्वा पुरुषः कुरुसत्तम ।
आत्मानं घातयेत्पश्चात्कर्मेदं नस्तथाविधम् ॥
[3]यथाऽन्नं क्षुधितो लब्ध्वा न भुञ्जीत यदृच्छया ।
कामी च कामिनीं लब्ध्वा कर्मेदं नस्तथाविधम् ॥

---

(१) भा. ५।१२१।१६; भामु. ५।१२३।१७ न्नवरो (न्नधमो) समः (शमः); राक. १५० स्त्वया राजन्न (बुद्धिमद्भिर्नो) समः (मदं); राप्र. १३३ स्त्वया राजन्न (बुद्धिमाद्भिर) समः (मदः).

(२) भा. १२।१०।१–१०; भामु.

(१) भा. १२।१०।११; भामु. १२।१०।११ कर्मेदं न (कर्मैतन्न).

(२) भा. १२।१०।१२; भामु. १२।१०।१२ सत्तम (नन्दन) थाविधम् (थोपमम्).

(३) भा. १२।१०।१३; भामु. १२।१०।१३ भुञ्जीत (भुञ्जीयाद्) कामी च (कामीव) थाविधम् (थोपमम्).

[1]वयमेवात्र गर्ह्या हि ये वयं मन्दचेतसः ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत ॥

[2]वयं हि बाहुबलिनः कृतविद्या मनस्विनः ।
क्लीबस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा ॥

अशक्तयः शक्तिहीनाः । नीटी.

[3]अगतीन् कागतीनस्मान्नष्टार्थानर्थसिद्धये ।
कथं वै नानुपश्येयुर्जनाः पश्यन्ति यादृशम् ॥

अगतीकगतीन् अनाथरक्षकान् । दैर्घ्यमार्षम् । ईदृशानपि नष्टार्थान् दृष्ट्वा जना इतरेऽपि अर्थसिद्धये कथं नानुपश्येयुः ? अपि तु आलोचयेयुरेव । एतत् यादृशं मम वचनं तादृशं पश्यत, युक्तमयुक्तं वेति परीक्षया इत्यर्थः । समर्थैः स्वार्थसिद्ध्यर्थं यतितव्यमेवेति भावः । नीटी.

[4]आपत्काले हि संन्यासः कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन च ॥

ननु संन्यास एव नः श्रेयानित्युक्तं तत आह— आपदिति । व्यंसितेन दुर्गतिं प्रापितेन । नीटी.

[5]तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते ।
धर्मव्यतिक्रमं चेदं मन्यन्ते सूक्ष्मदर्शिनः ॥

इह क्षत्रयोनौ त्यागं 'चरन् भैक्ष्यं मुनिर्मुण्डः' इत्युक्तविधं संन्यासं न परिचक्षते न प्रशंसन्ति । तत्र हेतुः— धर्मेति । 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते ॥' इति स्मृतेः क्षत्रियस्य मौण्ड्यादिकं निषिद्धम् । तस्याऽऽचरणे धर्मव्यतिक्रमोऽस्त्येवेति भावः । नीटी.

[1]कथं तस्मात्समुत्पन्नस्तन्निष्ठस्तदुपाश्रयः ।
तदेव निन्दन्नासीत श्रद्धा वाऽन्यत्र गृह्यते ॥

ननु हिंस्रोऽयं क्षात्रधर्मो निन्द्य एवेत्याशङ्क्याऽऽह— कथमिति । हिंसार्थमुत्पन्नाः हिंस्रयोनौ जाताः हिंसैकजीवनाः तदेव तस्यैव हिंस्रधर्मस्य निन्दां कथं भाषेयुः ? कथं वा तत्र धाता तस्य धर्मस्य स्रष्टा न गर्ह्यते न निन्द्यते ? धातृविहितत्वात् सहजत्वाच्च नाऽसौ धर्मो निन्द्य इत्यर्थः । यदाह भगवान्— 'सदोषमपि कौन्तेय सहजं कर्म न त्यजेत्' । नीटी.

[2]श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम् ।
वेदवादस्य विज्ञानं सत्याभासमिवानृतम् ॥

कथं तर्हि जाबालोपनिषदि 'अथ परिव्राट् मुण्डो विवर्णवासाः' इत्युपक्रम्य 'भरतरैवतकप्रभृतयोऽनुन्मत्ता उन्मत्तवदाचरन्ते' इति भरतादीनां क्षत्रियाणां मौण्ड्यमुन्मत्तचर्या च श्रूयते इत्याशङ्क्याऽऽह— श्रियेति । 'ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम्' इति श्रुतेः श्रिया त्रय्या विद्यया विहीनैः अधनैः लक्ष्म्या च हीनैः इदमनृतं संप्रवर्तितम् । वेदयतीति वेदो विधिः, तस्य वादः अर्थवादः, तत्संबन्धि विज्ञानं संन्यासविधिस्तुत्यर्थम् । भरतादिकीर्तनं प्रजापतिवपोत्खननवदर्थवादः, न तु तावता मौण्ड्ये क्षत्रियस्याधिकारः सिध्यतीति भावः । नीटी.

[3]शक्यं तु मौण्ड्यमास्थाय बिभ्रता-
ऽऽत्मानमात्मना ।
धर्मच्छद्म समास्थाय आसितुं न तु जीवितुम् ॥

यत्तु 'ऋजुः प्रणिहितो गच्छन्' इति अत्याश्रम उक्तस्तं दूषयति— शक्यं त्विति । आत्मानं देहं आत्मना स्वेनैव बिभ्रता निश्चलं स्थापयता धर्मच्छद्म

---

(१) भा. १२।१०।१४ ; भामु. १२।१०।१४ ये वयं (यद्वयं) चेतसः (चेतसम्).

(२) भा. १२।१०।१५ ; भामु.

(३) भा. १२।१०।१६ ; भामु. १२।१०।१६ अगतीन् का (अगतीक) पश्यन्ति (पश्यत).

(४) भा. १२।१०।१७ ; भामु. १२।१०।१७ च (वा).

(५) भा. १२।१०।१८ ; भामु. १२।१०।१८ चेदं (चैव).

(१) भा. १२।१०।१९ ; भामु. १२।१०।१९ (कथं तस्मात्समुत्पन्नास्तन्निष्ठास्तदुपाश्रयाः । तदेव निन्दां भाषेयुर्धाता तत्र न गर्ह्यते ॥).

(२) भा. १२।१०।२० ; भामु.

(३) भा. १२।१०।२१ ; भामु. १२।१०।२१ मौण्ड्य (मौन) आसितुं (च्यवितुं).

कपटयोगं आस्थाय च्यवितुं मर्तुमेव शक्यम्, न जीवितुम्। केवलं प्रणिधानेन शरीरनाशो भवेदित्यर्थः। नीटी.

[1]शक्यं पुनररण्येषु सुखमेकेन जीवितुम्।
अबिभ्रता पुत्रपौत्रान् देवर्षीनतिथीन् पितॄन्॥

[2]नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः।
अथतेन प्रकारेण पुण्यमाहुर्न ताञ्जनाः॥

यत्तु 'स्वभावस्तु व्रजत्यग्रे' इति सुप्तबालकस्तनपानवद्देहयात्रासिद्धिरुक्ता, तां दूषयति द्वाभ्याम्– शक्यं पुनरिति। पुत्राद्यभरणेन पशुसाम्येन च तत्रापि दोषोऽस्तीत्यर्थः। 'अथ' इति अतःशब्दार्थे। तं एकचरं अन्येन प्रकारेण एकचर्यां विना न पुण्यं श्रेयांसं आहुः। सा च मृगेऽप्यस्तीति न तयोर्विशेष इति भावः। नीटी.

[3]यदि संन्यासतः सिद्धिं राजन् कश्चिदवाप्नुयात्।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः॥

[4]एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः।
अपरिग्रहवन्तश्च सततं चाऽऽत्मचारिणः॥

संन्यासयुक्तमेकाकित्वमपि निरस्यति द्वाभ्याम्– यदीति। नीटी.

[5]अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः॥

ननु पश्वादयः कर्मयोनयो न भवन्ति, किंतु पूर्वकृतमेव ते भुञ्जते, अहं तु कर्माधिकृतः स्वप्रयत्नेन ध्रुवं पदं प्राप्स्यामि इति चेत् तत्राऽऽह– अथ चेदिति। आत्मभाग्येषु स्वसंपत्सु अन्येषां सिद्धिं परकर्मार्जितं फलं नाऽऽप्नुते, किंतु स्वकर्मार्जितमेवाऽऽप्नुते। तर्हि कर्मैव कुर्वित्यर्थः। सिद्धिः मोक्षः। नीटी.

(१) भा. १२।१०।२२; भामु.

(२) भा. १२।१०।२३; भामु. १२।१०।२३ अथैतेन (अथान्येन) ताञ्ज (तं ज).

(३) भा. १२।१०।२४; भामु. १२।१०।२४ राजन् (राजा).

(४) भा. १२।१०।२५; भामु. १२।१०।२५ चाऽऽत्म (ब्रह्म).

(५) भा. १२।१०।२६; भामु.

[1]औदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः।
येषामात्मैव भर्तव्यो नान्यः कश्चन विद्यते॥

ननु मुमुक्षूणां देहभरणव्यतिरिक्तं कर्म नापेक्षितमित्यत आह– औदका इति। उदके भवाः मीनादयः, सृष्टयः स्थावराः, तेषामपि आत्मैव देह एव भर्तव्यः, नान्यः इति तेऽपि मुच्येरन्। नीटी.

[2]अवेक्षस्व यथा स्वैः स्वैः कर्मभिर्व्यापृतं जगत्।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः॥

लोकदृष्ट्याऽपि कर्मैव कर्तव्यमित्याह– अवेक्षस्वेति। नीटी.

[3]स रत्नानि विचित्राणि संभृतानि ततस्ततः।
मखेष्वनभिसंत्यज्य नास्तिक्यमभिजल्पसि।
कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप॥

[4]राजसूयाश्वमेधेषु सर्वमेधेषु वा पुनः।
ये चान्ये क्रतवस्तात ब्राह्मणैरभिपूजिताः।
तैर्यजस्व महाराज शक्रो देवपतिर्यथा॥

त्रिष्वपि यज्ञेष्वाद्योऽतीतकालः, उपस्थितं मध्यममुल्लङ्घ्यान्त्यस्य वार्तां कुर्वतस्ते नास्तिक्यं स्पष्टमित्याह– स इति। पूर्वं वेदसंन्यासेऽपि तवाधिकारो नास्तीत्युक्तम्। इदानीं वेदसंन्यास एव न संभवतीत्यर्धेनाऽऽह– कुटुम्बमिति। कुत्र तर्हि त्यागं पश्यसीत्यत आह– राजसूयेति। फलितमाह– ये चेति। नीटी.

(१) भा. १२।१०।२७; भामु. १२।१०।२७ येषा (तेषा).

(२) भा. १२।१०।२८; भामु.

(३) भा. १२।१२।२५; भामु. १२।१२।२६–२७ भृतानि (हृतानि).

(४) भा. १२।१२।२६; भामु. १२।१२।२७–२८ महाराज (महीपाल).

[1]राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यताम् ।
अशरण्यः प्रजानां यः स राजा कलिरुच्यते ॥

प्रमादः राज्याकरणम् । परिमुष्यतां लुप्यमानानाम् । नीटी.

अश्वान् गाश्चैव दासीश्च करेणूश्च स्वलंकृताः ।
ग्रामाञ्जनपदांश्चैव क्षेत्राणि च गृहाणि च ॥
[2]अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः ।
वयं ते राजकलयो भविष्यामो विशां पते ॥

मात्सर्यं बन्धुद्रोहः । दानाभावेन कलिस्वरूपा एव वयं जाता इत्यर्थः । नीटी.

[3]अदातारोऽशरण्याश्च राजकिल्बिषभागिनः ।
दुःखानामेव भोक्तारो न सुखानां कदाचन ॥
[4]अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधाम् ।
तीर्थेष्वनभिसंत्यज्य प्रव्रजिष्यसि चेदथ ॥
[5]छिन्नाभ्रमिव गन्ताऽसि विलयं मारुतेरितम् ।
लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थितः ॥

अन्तराले पिशाचयोनौ । नीटी.

[6]अन्तर्बहिश्च यत्किंचिन्मनोव्यासङ्गकारकम् ।
परित्यज्य भवेत्त्यागी न यो हित्वा प्रतिष्ठते ॥

अन्तर्व्यासङ्गः अहं ज्ञाता दाता कर्ता हर्ता इत्यादिरात्मपूजा, बहिर्व्यासङ्गः पुत्रपश्वादिपूजा, तयोः कारकं मूलं अहंकारममकारौ त्यक्त्वैव त्यागी भवेत्, न तु यो गृहं हित्वा प्रतितिष्ठति स इत्यर्थः । नीटी.

(१) भा. १२।१२।२७–२८ ; भामु. १२।१२।२९–३०.

(२) भा. १२।१२।२९ ; भामु. १२।१२।३१ व्यामो (व्याम).

(३) भा. १२।१२।३० भामु. १२।१२।३२ दुःखाना (दोषाणा).

(४) भा. १२।१२।३१ ; भामु. १२।१२।३३ संत्यज्य (संप्लुत्य) चेदथ (चेत्प्रभो).

(५) भा. १२।१२।३२ ; भामु. १२।१२।३४.

(६) भा. १२।१२।३३ ; भामु. १२।१२।३५ यो हित्वा प्रतिष्ठते (हित्वा प्रतितिष्ठति).

[1]एतस्मिन् वर्तमानस्य विधौ विप्रनिषेविते ।
ब्राह्मणस्य महाराज नोच्छित्तिर्विद्यते क्वचित् ॥

[2]निहत्य शत्रूंस्तरसा समृद्धान्
शक्रो यथा दैत्यबलानि संख्ये ।
कः पार्थ शोचेन्निरतः स्वधर्मे
पूर्वैः स्मृते पार्थिव शिष्टजुष्टे ॥

क्षात्रेण धर्मेण पराक्रमेण
जित्वा महीं मन्त्रविद्भ्यः प्रदाय ।
नाकस्य पृष्ठेऽसि नरेन्द्र गन्ता
न शोचितव्यं भवताऽद्य पार्थ ॥

सहदेव उवाच–

[3]न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥

अहंकारममकारौ त्यक्तव्यावित्युक्तम् । तत्राऽऽद्यत्यागे सर्वव्यवहारोच्छेदः स्यादिति ममकार एव त्याज्यः इत्येतदर्थमध्याय आरभ्यते । तत्र द्रव्यं ममकारास्पदं द्विविधम्– बाह्यं व्यावहारिकम्, शारीरं शरीरे भवं मनःकल्पितं च । यथोक्तम्– 'घटौ मृन्मयधीमयौ' इति । तथा च श्रुतिः विदुषो विदेहकैवल्यकाले बाह्यद्रव्यस्य स्वकारणे लयं दर्शयति– 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति । कलाः प्राणमनःप्रभृतयः प्रतिष्ठाः उपादानकारणानि प्रति गताः । तथा 'इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति' इति मनःकल्पितानां कलानां पुरुषे लयं दर्शयति । अतः शारीरमेव द्रव्यं बन्धनमूलम्, न बाह्यमिति बाह्यत्यागो व्यर्थः । शारीरद्रव्यत्यागेऽपि मनश्चाञ्चल्यात् पुनरुपादाने सिद्धिर्न भवतीति न वा इत्यनेनोक्तम् । तेन दृढत्याग एव सिद्धिकृदित्युक्तम् । अक्षरयोजना स्पष्टा । नीटी.

(१) भा. १२।१२।३४ ; भामु. १२।१२।३६ धौ विप्रनिषेविते (धावप्रतिषेधिते).

(२) भा. १२।१२।३५–३६ ; भामु. १२।१२।३७–३८.

(३) भा. १२।१३।१ ; भामु.

[1]बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः ।
यो धर्मो यत्सुखं वा स्याद्द्विषतां तत्तथाऽस्तु नः ॥
[2]शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः ।
यो धर्मो यत्सुखं वा स्यात्सुहृदां तत्तथाऽस्तु नः ॥
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥

ममेति स्वीकारः न ममेति परित्यागश्च एतौ मृत्युशाश्वतौ, संसारमोक्षयोर्मूले इत्यर्थः । नीटी.

[3]ब्रह्ममृत्यू च तौ राजन्नात्मन्येव समाश्रितौ ।
अदृश्यमानौ भूतानि योधयेतामसंशयम् ॥

आत्मनि बुद्धौ । भूतानि शास्त्रकर्तॄन् । तथा च केचित् कर्ताऽऽत्मा नित्यः इति, केचिदनित्य इति । नीटी.

[4]अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत ।
भित्त्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ॥

तत्राऽऽद्ये दोषाभावमाह— अविनाश इति । नीटी.

[5]अथापि च सहोत्पत्तिः सत्त्वस्य प्रलयस्तथा ।
नष्टे शरीरे नष्टं स्याद्वृथा च स्यात्क्रियापथः ॥

सत्त्वस्य कर्तृत्वधर्मवत्या बुद्धेः । नीटी.

[6]तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः ।
पन्था निषेवितः सद्भिः स निषेव्यो विजानता ॥

द्वितीये कृतहानादिदोष इत्याह— तस्मादिति । तस्मात् कर्तुरनाशे मोक्षाभावः, नाशे देहात्मवादप्रसङ्गः । तस्मादेकान्तं अन्यतरं निश्चयं त्यक्त्वा प्राचां पन्थास्तन्मिथ्यात्वपक्ष एवाऽऽदर्तव्यः । तेन कल्पितस्य शारीरद्रव्यस्य स्वाप्नस्येव त्यागो युज्यत इत्याशयवानाह— तस्मादिति । नीटी.

लब्ध्वाऽपि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम् ।
न भुङ्क्ते यो नृपः सम्यङ्निष्फलं तस्य जीवितम् ॥
अथवा वसतो राजन्वने वन्येन जीवतः ।
द्रव्येषु यस्य ममता मृत्योरास्ये स वर्तते ॥

निष्फलं बाह्यद्रव्यत्यागं कृत्वाऽऽन्तरद्रव्यत्यागमकुर्वन् मूढ एवेत्याह द्वाभ्याम्— लब्ध्वाऽपीति । नीटी.

[1]बाह्याभ्यन्तरभूतानां स्वभावं पश्य भारत ।
ये तु पश्यन्ति तद्भावं मुच्यन्ते महतो भयात् ॥

तर्ह्युभयद्रव्यत्यागः श्रेयानित्याशङ्क्याऽऽह— बाह्येति । भूतानां बाह्यमाभ्यन्तरं च यद्द्वयं तत्सर्वं स्वभावं स्वस्य प्रत्यगात्मनः भावं सत्तां पश्य जानीहि । तदात्मव्यतिरिक्तं नास्तीत्यर्थः । तथा च श्रुतिः— 'आत्मैवेदं सर्वम्' इति । ये तु पुमांसस्तदात्मरूपं भूतं नित्यसिद्धं पश्यन्ति । 'वृत्तम्' इति पाठेऽपि स एवार्थः । ते महतो भयात् उभयद्रव्यसङ्गजात् संसारान्मुच्यन्ते । कल्पितस्य मरीचिकोदकस्येव त्यागः कर्तव्यः, न स्वरूपतः, तस्य नित्यनिवृत्तत्वादिति भावः । नीटी.

[2]भवान्पिता भवान्माता भवान्भ्राता भवान्गुरुः ।
दुःखप्रलापानार्तस्य तस्मान्मे क्षन्तुमर्हसि ॥
[3]तथ्यं वा यदि वाऽतथ्यं यन्मयैतत्प्रभाषितम् ।
तद्विद्धि पृथिवीपाल भक्त्या भरतसत्तम ॥

भक्त्यैव भाषितम्, न तु ज्ञानगर्वेण । नीटी.

[4]न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते ।
न क्लीबस्य गृहे पुत्रा मत्स्याः पङ्क इवाऽऽसते ॥

क्लीबः अधीरः । नीटी.

---

(१) भा. १२।१३।२ ; भामु. १२।१३।२ रेषु च (रेष्वनु).

(२) भा. १२।१३।३–४ ; भामु.

(३) भा. १२।१३।५ ; भामु. १२।१३।५ च तौ (ततो).

(४) भा. १२।१३।६ ; भामु. १२।१३।६ भित्त्वा (हत्वा).

(५) भा. १२।१३।७ भामु. १२।१३।७ नष्टं (नष्टः).

(६) भा. १२।१३।८–१०; भामु.

(१) भा. १२।१३।११ भामु. १२।१३।११ भ्यन्तर (न्तरं च) स्वभावं (स्वभूतं) महतो (ते महा).

(२) भा. १२।१३।१२ ; भामु. १२।१३।१२ तस्मान्मे (तन्मे त्वं).

(३) भा. १२।१३।१३ ; भामु.

(४) भा. १२।१४।१३ ; भामु.

[1]नादण्डः क्षत्रियो भाति नादण्डो भूतिमश्नुते ।
नादण्डस्य प्रजा राज्ञः सुखमेधन्ति भारत ॥

[2]मित्रता सर्वभूतेषु दानमध्ययनं तपः ।
ब्राह्मणस्यैष धर्मः स्यान्न राज्ञो राजसत्तम ॥

[3]असतां प्रतिषेधश्च सतां च परिपालनम् ।
एष राज्ञां परो धर्मः समरे चापलायनम् ॥

प्रतिषेधः दण्डः राज्यान्निर्वासनं वा । नीटी.

यस्मिन् क्षमा च क्रोधश्च दानादाने भयाभये ।
निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते ॥

दानमादानं च ते । नीटी.

[4]त्वं तु सर्वां महीं लब्ध्वा कुरुषे स्वयमापदम् ॥

[5]यथाऽऽस्तां संमतौ राज्ञां पृथिव्यां राजसत्तमौ ।
मान्धाता चाम्बरीषश्च तथा राजन् विराजसे ॥

[6]प्रशाधि पृथिवीं देवीं प्रजा धर्मेण पालयन् ।
सपर्वतवनद्वीपां मा राजन् विमना भव ॥

[7]यजस्व विविधैर्यज्ञैर्जुह्वन्नग्नीन् प्रयच्छ च ।
पुराणि भोगान्वासांसि द्विजातिभ्यो नृपोत्तम ॥

[8]अन्ये शमं प्रशंसन्ति व्यायाममपरे तथा ।
नैकं न चापरं केचिदुभयं च तथाऽपरे ॥

साम प्रीतिम् । व्यायामं यत्नम् । अपरे एकं ध्यानं न प्रशंसन्ति इति न, अपि तु प्रशंसन्त्येव । उभयं सामव्यायामौ एकस्यैवावस्थाभेदेन प्रशंसन्ति । अपरे तथैव प्रशंसन्ति, प्रागुपात्तमेकं ज्ञेयम् । नीटी.

[1]यज्ञमेके प्रशंसन्ति संन्यासमपरे जनाः ।
दानमेके प्रशंसन्ति केचिदेव प्रतिग्रहम् ।
केचित्सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते ॥

[2]राज्यमेके प्रशंसन्ति सर्वेषां परिपालनम् ।
हत्वा भित्त्वा च च्छित्त्वा च केचि-
देकान्तशीलिनः ॥

[3]एतत्सर्वं समालोक्य बुधानामेष निश्चयः ।
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः ॥

पश्चाप्येतान् पक्षान् विवृणोति– यज्ञेति त्रिभिः । यज्ञसंन्यासदानैर्देवसर्वभूतविप्राणां प्रीतिर्भवति । प्रतिग्रहं प्रजाभ्यो यजमानेभ्यो वा द्रव्यादानं व्यायामरूपं मन्दाः प्रशंसन्ति । सर्वपरित्यागेन त्वेकं केचित् । राज्यमेके इत्यादिपादत्रयेण सामव्यायामौ एकस्यैवाऽऽह । अन्त्यं पक्षमाह– केचिदेकान्तशीलिन इति । सिद्धान्तमाह– अद्रोहेणेति । नीटी.

[4]अद्रोहः सत्यवचनं संविभागो धृतिः क्षमा ।
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥

[5]धनं धर्मप्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत् ।
तस्मादेवं प्रयत्नेन कौन्तेय परिपालय ॥

प्रजनं पुत्रोत्पादनम् । प्रधानं चासौ इष्टश्चेति समासः, तम् । नीटी.

---

(१) भा. १२।१४।१४; भामु. १२।१४।१४ भूति (भूमि) सुखमेधन्ति (सुखं विन्दन्ति).

(२) भा. १२।१४।१५; भामु. १२।१४।१५ स्यैष (स्यैव).

(३) भा. १२।१४।१६–१७ ; भामु.

(४) भा. १२।१४।३६ ; भामु. १२।१४।३७ लब्ध्वा (त्यक्त्वा).

(५) भा. १२।१४।३७ ; भामु. १२।१४।३७–३८ सत्तमौ (सत्तम).

(६) भा. १२।१४।३८ ; भामु. १२।१४।३८–३९.

(७) भा. १२।१४।३९ ; भामु. १२।१४।३९ जुह्व-न्नग्नीन् (युध्यस्वारीन्) पुराणि (धनानि).

(८) भा. १२।२१।७; भामु. १२।२१।७ शमं (साम) रे तथा (रे जनाः) चापरं (चापरे).

(१) भा. १२।२१।८ ; भामु. १२।२१।८–९ यज्ञमेके (यज्ञमेव) देव (च्चैव).

(२) भा. १२।२१।९ ; भामु. १२।२१।९–१० सर्वेषां (प्रजानां) भित्त्वा च च्छित्त्वा (छित्त्वा च भित्त्वा).

(३) भा. १२।२१।१० ; भामु. १२।२१।१०–११.

(४) भा. १२।२१।११; भामु. १२।२१।११–१२ धृतिः क्षमा (दया दमः) प्रजनः (प्रजनं).

(५) भा. १२।२१।१२; भामु. १२।२१।१२–१३ धनं धर्म ([illegible] धर्मं) देवं (देतत्).

[1]यो हि राज्ये स्थितः शश्वद्वशी तुल्यप्रियाप्रियः।
क्षत्रियो यज्ञशिष्टाशी राजशास्त्रार्थतत्त्ववित् ॥
[2]असाधुनिग्रहरतः साधूनां प्रग्रहे रतः।
धर्मे वर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मवित् ॥
[3]पुत्रसंक्रामितश्रीस्तु वने वन्येन वर्तयन्।
विधिना श्रामणेनैव कुर्यात्कालमतन्द्रितः ॥

प्रग्रहे संग्रहे। श्रावणेन शास्त्रश्रवणाद्विहितेन। नीटी.

[4]य एवं वर्तते राजा राजधर्मविनिश्चितः।
तस्यायं च परश्चैव लोकः स्यात्सफलो नृप।
निर्वाणं तु सुदुष्पारं बहुविघ्नं च मे मतम् ॥
[5]एवं धर्ममनुक्रान्ताः सत्यदानतपःपराः।
आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्जिताः ॥
[6]प्रजानां पालने युक्ता दममुत्तममास्थिताः।
गोब्राह्मणार्थं युद्धेन संप्राप्ता गतिमुत्तमाम् ॥
[7]एवं रुद्राः सवसवस्तथाऽऽदित्याः परंतप।
साध्या राजर्षिसंघाश्च धर्ममेतं समाश्रिताः।
अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्मभिः ॥
[8]क्षत्रियाणां महाराज संग्रामे निधनं स्मृतम्।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर ॥

(१) भा. १२।२१।१३; भामु. १२।२१।१३-१४ राजशा (राजा शा).

(२) भा. १२।२१।१४; भामु. १२।२१।१४-१५ धर्मे व (धर्मंव) धर्मवित् (धर्मतः).

(३) भा. १२।२१।१५; भामु. १२।२१।१५-१६ श्रीस्तु (श्रीश्च) श्रामणे (श्रावणे) त्कालम (त्कर्माण्य).

(४) भा. १२।२१।१६; भामु. १२।२१।१६-१७ राजा राजधर्मवि (राजन् स राजा धर्मं) त्सफलो नृप (त्सफलोदयः) तु सुदुष्पारं (हि सुदुष्प्राप्यं).

(५) भा. १२।२१।१७; भामु. १२।२१।१८.

(६) भा. १२।२१।१८; भामु. १२।२१।१९ दम (धर्म) उत्तरार्धे (गोब्राह्मणार्थे युध्यन्तः प्राप्ता गतिमनुत्तमाम् ॥).

(७) भा. १२।२१।१९; भामु. १२।२१।२०.

(८) भा. १२।२२।३; भामु. १२।२२।३ स्मृतम् (मतम्).

[1]ब्राह्मणानां तपस्त्यागः प्रेत्यधर्मविधिः स्मृतः।
क्षत्रियाणां च विहितं संग्रामे निधनं विभो ॥

त्यागः संन्यासः। नीटी.

[2]क्षत्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः।
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे ॥
[3]ब्राह्मणस्यापि चेद्राजन् क्षत्रधर्मेण तिष्ठतः।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंस्थितम् ॥
[4]न त्यागो न पुनर्याच्ञा न तपो मनुजेश्वर।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ॥

यज्ञः आत्मयज्ञः, समाधिरिति यावत्। नीटी.

[5]स भवान् सर्वधर्मज्ञः सर्वात्मा भरतर्षभ।
राजा मनीषी निपुणो लोके दृष्टपरावरः ॥
[6]त्यक्त्वा संतापजं शोकं दंशितो भव कर्मणि।
क्षत्रियस्य विशेषेण हृदयं वज्रसंहतम् ॥

दंशितः संनद्धः। 'विजयं धर्मसंहितम्' इति पाठे प्रशंसन्ति इत्यध्याहारः। नीटी.

[7]जित्वाऽरीन् क्षत्रधर्मेण प्राप्य राज्यमकण्टकम्।
विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥
[8]इन्द्रो वै ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत्।
ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव ॥

ब्रह्मणः कश्यपस्य। नवतीर्नव दशाधिकं शताष्टकम्। नीटी.

(१) भा. १२।२२।४; भामु. १२।२२।४ उत्तरार्धे (क्षत्रियाणां च निधनं संग्रामे विहितं प्रभो ॥).

(२) भा. १२।२२।५; भामु. १२।२२।५ क्षत्र (क्षात्र).

(३) भा. १२।२२।६; भामु. १२।२२।६ तिष्ठतः (वर्ततः) संस्थितम् (संभवम्).

(४) भा. १२।२२।७; भामु. १२।२२।७ याच्ञा (यज्ञो).

(५) भा. १२।२२।८; भामु. १२।२२।८ सर्वात्मा (धर्मात्मा).

(६) भा. १२।२२।९; भामु. १२।२२।९ संहतम् (संनिभम्).

(७) भा. १२।२२।१०; भामु.

(८) भा. १२।२२।११; भामु. १२।२२।११ कर्मणा क्षत्रियो (क्षत्रियः कर्मणा).

[1]तच्चास्य कर्म पूज्यं हि प्रशस्यं च विशां पते ।
तेन चेन्द्रत्वमापेदे देवानामिति नः श्रुतम् ॥

इन्द्रत्वं ऐश्वर्यम् । नीटी.

[2]स त्वं यज्ञैर्महाराज यजस्व बहुदक्षिणैः ।
यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः ॥

[3]मा त्वमेवंगते किंचित्क्षत्रियर्षभ शोचिथाः ।
गतास्ते क्षत्रधर्मेण शस्त्रपूताः परां गतिम् ॥

[4]क्षत्रियाणां च वक्ष्यामि तवापि विदितं पुनः ॥

[5]यज्ञो विद्यासमुत्थानमसंतोषः श्रियं प्रति ।
दण्डधारणमत्युग्रं प्रजानां परिपालनम् ॥

[6]वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा ।
द्रविणोपार्जनं भूरि पात्रेषु प्रतिपादनम् ॥

[7]एतानि राज्ञां कर्माणि सुकृतानि विशां पते ।
इमं लोकममुं लोकं साधयन्तीति नः श्रुतम् ॥

[8]तेषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते ।
बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः ॥

[9]एताश्चेष्टाः क्षत्रियाणां राजन् संसिद्धिकारिकाः ।
अपि गाथामिमां चापि बृहस्पतिरभाषत ॥

[10]भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥

बिलशयान् मूषिकान् । अप्रवासिनं गृहादिसङ्गिनम् ।
नीटी.

सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात् ।
प्राप्तवान् परमां सिद्धिं दक्षः प्राचेतसो यथा ॥

युधिष्ठिर उवाच –

[1]भगवन् कर्मणा केन सुद्युम्नो वसुधाधिपः ।
संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम् ॥

व्यास उवाच –

[2]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शङ्खश्च लिखितश्चाऽऽस्तां भ्रातरौ संयतव्रतौ ॥

[3]तयोरावसथावास्तां रमणीयौ पृथक् पृथक् ।
नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ॥

बाहुदां नदीं अनु तत्समीपे । नीटी.

[4]ततः कदाचिल्लिखितः शङ्खस्याऽऽश्रममागमत् ।
यदृच्छयाऽपि शङ्खोऽथ निष्क्रान्तो-
ऽभवदाश्रमात् ॥

[5]सोऽभिगम्याऽऽश्रमं भ्रातुः शङ्खस्य
लिखितस्तदा ।
फलानि शातयामास सम्यक् परिणतान्युत ॥

[6]तान्युपादाय विस्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागमत् ॥

विस्रब्धः ममैवैतानीति निश्चयवान् । नीटी.

[7]भक्षयन्तं तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फलान्यवाप्तानि हेतुना केन खादसि ॥

(१) भा. १२।२२।१२; भामु. १२।२२।१२ हि (च) तेन चेन्द्रत्व (तेनेन्द्रत्वं स).

(२) भा. १२।२२।१३; भामु.

(३) भा. १२।२२।१४; भामु. १२।२२।१४ क्षत्रियर्षभ शोचिथाः (च्छोचेथाः क्षत्रियर्षभ).

(४) भा. १२।२३।९; भामु. १२।२३।९ च (तु).

(५) भा. १२।२३।१०; भामु. १२।२३।१० मत्युग्रं (मुग्रत्वं).

(६) भा. १२।२३।११; भामु. १२।२३।११ पात्रेषु (पात्रे च).

(७) भा. १२।२३।१२; भामु. १२।२३।१२ लोकं सा (चैव सा).

(८) भा. १२।२३।१३; भामु. १२।२३।१३ तेषां (एषां).

(९) भा. १२।२३।१४; भामु. १२।२३।१४ ताश्चेष्टाः (ता विद्याः) रभाषत (रगायत).

(१०) भा. १२।२३।१५-१६; भामु.

(१) भा. १२।२४।१; भामु. १२।२३।१७.

(२) भा. १२।२४।२; भामु. १२।२३।१८ संयत (संशित).

(३) भा. १२।२४।३; भामु. १२।२३।१९.

(४) भा. १२।२४।४; भामु. १२।२३।२० मागमत् (मागतः) याऽपि शङ्खोऽथ (याऽथ शङ्खोऽपि).

(५) भा. १२।२४।५; भामु. १२।२३।२१ शात (पात).

(६) भा. १२।२४।६; भामु. १२।२३।२२ मागमत् (मागतः).

(७) भा. १२।२४।७; भामु. १२।२३।२३.

[1]सोऽब्रवीद् भ्रातरं ज्येष्ठमुपस्पृश्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥
[2]तमब्रवीत्तदा शङ्खस्तीव्रकोपसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ।
गच्छ राजानमासाद्य स्वकर्म प्रथयस्व वै ॥
[3]अदत्तादानमेवेदं कृतं पार्थिवसत्तम ।
स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय ।
शीघ्रं धारय चौरस्य मम दण्डं नराधिप ॥

इदं भक्षणं कृतम् । हे पार्थिवसत्तम, मया अदत्तादानं कृतमिति अस्मै राज्ञे कथयस्वेति संबन्धः । नीटी.

[4]इत्युक्तस्तस्य वचनात्सुद्युम्नं वसुधाधिपम् ।
अभ्यगच्छन् महाबाहो लिखितः संशितव्रतः ॥
[5]सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् ।
अभ्यगच्छत्सहामात्यः पद्भ्यामेव नरेश्वरः ॥
[6]तमब्रवीत्समागत्य स राजा ब्रह्मवित्तमम् ।
किमागमनमाचक्ष्व भगवन् कृतमेव तत् ॥
[7]एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् ।
प्रतिश्रौषि करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥

अन्तपालेभ्यः द्वारपालेभ्यः । करिष्येति । संधिरार्षः । नीटी.

(१) भा. १२।२४।८; भामु. १२।२३।२४ स्पृश्या (सृत्या).
(२) भा. १२।२४।९; भामु. १२।२३।२५-२६ तदा (तथा) कोप (रोष) प्रथयस्व (कथयस्व).
(३) भा. १२।२४।१०; भामु. १२।२३।२६-२७ मेवेदं (मेवं हि).
(४) भा. १२।२४।११; भामु. १२।२३।२८ वसुधाधिपम् (स नराधिपम्).
(५) भा. १२।२४।१२; भामु. १२।२३।२९ नरेश्वरः (जनेश्वरः).
(६) भा. १२।२४।१३; भामु. १२।२३।३० मागत्य (मागम्य).
(७) भा. १२।२४।१४; भामु. १२।२३।३१ श्रौषि (श्रुत्य).

[1]अनिसृष्टानि गुरुणा फलानि पुरुषर्षभ ।
भक्षितानि मया राजंस्तत्र मां शाधि माचिरम् ॥

अनिसृष्टानि अदत्तानि । गुरुणा ज्येष्ठभ्रात्रा । नीटी.

सुद्युम्न उवाच-

[2]प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ॥
स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।
ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥

यथा दण्डधारणे राजा प्रमाणं तथाऽनुज्ञायां हेतुः प्रमाणम् । शुचिकर्मा मदनुज्ञयैव शोधितदोषः । 'श्रुतकर्मा' इति पाठे श्रावितकर्मा । कीर्तनेनापि दोषो नश्यतीत्यर्थः । नीटी.

व्यास उवाच-

[3]छन्द्यमानोऽपि ब्रह्मर्षिः पार्थिवेन महात्मना ।
नान्यं वै वरयामास तस्माद्दण्डादृते वरम् ॥
[4]ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥
[5]स गत्वा भ्रातरं शङ्खमार्तरूपोऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भगवन् क्षन्तुमर्हसि ॥

शङ्ख उवाच-

[6]न कुप्ये तव धर्मज्ञ न च दूषयसे मम ।
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥

(१) भा. १२।२४।१५; भामु. १२।२३।३२ पुरुष (मनुज)/मया राजंस्त (महाराज त).
(२) भा. १२।२४।१६-१७; भामु. १२।२३।३३-३४.
(३) भा. १२।२४।१८; भामु. १२।२३।३५ छन्द्यमानोऽपि (संछाद्यमानो) वै (स).
(४) भा. १२।२४।१९; भामु. १२।२३।३६.
(५) भा. १२।२४।२०; भामु. १२।२३।३७ भगवन् (भवाँस्तत्र) मर्हसि (मर्हति).
(६) भा. १२।२४।२१; भामु. १२।२३।३८ न च (न त्वं).

मम मां मया वा न दूषयसे। ते त्वया। निष्कृतिः प्रायश्चित्तम्। नीटी.

[1]स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि।
देवान् पितॄनृषींश्चैव मा चाधर्मे मनः कृथाः॥

व्यास उवाच–

[2]तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा।
अवगाह्याऽऽपगां पुण्यामुदकार्थं प्रचक्रमे॥

उदकस्य अर्थे प्रयोजनं आचमनादि। कर्तुमिति शेषः। नीटी.

प्रादुरास्तां ततस्तस्य करौ जलजसंनिभौ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ॥
[3]ततस्तमब्रवीच्छङ्खस्तपसेदं कृतं मया।
मा च तेऽत्र विशङ्का भूद्दैवमेव विधीयते॥

लिखित उवाच–

[4]किं नु नाहं त्वया पूतः पूर्वमेव महाद्युते।
यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम॥

शङ्ख उवाच–

[5]एवमेतन्मया कार्यं नाहं दण्डधरस्तव।
स च पूतो नरपतिस्त्वं चापि पितृभिः सह॥

व्यास उवाच–

[6]स राजा पाण्डवश्रेष्ठ श्रेष्ठो वै तेन कर्मणा।
प्राप्तवान् परमां सिद्धिं दक्षः प्राचेतसो यथा॥

(१) भा. १२।२४।२२; भामु. १२।२३।३९ स (त्वं) तृतीयचरणे (देवानृषीन्पितॄंश्चैवं).

(२) भा. १२।२४।२३–२४; भामु. १२।२३। ४०–४१ (व्यास उवाच०).

(३) भा. १२।२४।२५; भामु. १२।२३।४२ मेव (मत्र).

(४) भा. १२।२४।२६; भामु. १२।२३।४३ किं नु (किंतु).

(५) भा. १२।२४।२७; भामु. १२।२३।४४.

(६) भा. १२।२४।२८; भामु. १२।२३।४५ श्रेष्ठो (श्रेयान्).

[1]एष धर्मः क्षत्रियाणां प्रजानां परिपालनम्।
उत्पथेऽस्मिन् महाराज मा च शोके मनः कृथाः॥

[2]भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम्॥

आख्यायिकातात्पर्यमाह– दण्ड इति। नीटी.

[3]शृणु मच्च यथा कुर्वन् धर्मान्न च्यवते नृपः॥

[4]आददानस्य च धनं निग्रहं च युधिष्ठिर।
समानं धर्मकुशलाः स्थापयन्ति नरेश्वर॥

आददानस्य परस्वापहर्तुः। समानधर्मः अविषमो धर्मः, तत्र कुशलाः। स्थापयन्ति अवश्यकर्तव्यतया व्यवस्थापयन्ति। हे नरेश्वर। 'नरेश्वरम्' इति पाठान्तरे विजयादिकं कर्तुमिति शेषः। नीटी.

[5]देशकालप्रतीक्षे यो दस्योर्दर्शयते नृपः।
शास्त्रजां बुद्धिमास्थाय नैनसा स हि युज्यते॥

मर्षयते दस्यूनपि न हन्ति। एनसा तज्जेन पापेन। नीटी.

[6]आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति।
प्रतिगृह्णाति तत्पापं चतुर्थांशेन पार्थिवः॥

(१) भा. १२।२४।२९; भामु. १२।२३।४६ उत्पथेऽस्मिन् (उत्पथोऽन्यो) मा च (मा स्म).

(२) भा. १२।२४।३०; भामु. १२।२३।४७.

(३) भा. १२।२५।९; भामु. १२।२४।९ (शृणुचैवं यथा कुर्वन्न धर्माच्च्यवसे नृप॥).

(४) भा. १२।२५।१०; भामु. १२।२४।१० च धनं निग्रहं (विजयं विग्रहं) समानं (समान).

(५) भा. १२।२५।११; भामु. १२।२४।११ प्रतीक्षे (प्रतीक्षी) दस्योर्दर्श (दस्यून् मर्ष) नैनसा स हि युज्यते (युज्यते नैनसा हि सः).

(६) भा. १२।२५।१२; भामु. १२।२४।१२ पार्थिवः (भूमिपः).

[1]निबोध च यथाऽऽतिष्ठन् धर्मान्न च्यवते नृपः।
निग्रहाद्धर्मशास्त्राणामनुरुध्यन्नपेतभीः ।
कामक्रोधावनादृत्य पितेव समदर्शनः ॥

आतिष्ठन्निति छेदः । धर्मशास्त्राणां निग्रहात् अतिलङ्घनात् जातादधर्माद्धेतोश्च्यवते । तानि अनुरुध्यन्नपेतभीश्च भवति । नीटी.

[2]शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः ॥
[3]दैवेनोहते राजा कर्मकाले महाद्युते ।
प्रमादयति तत्कर्म न तत्राऽऽहुरतिक्रमम् ॥
[4]तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ।
पापैः सह न संदध्याद्राष्ट्रं पण्यं न कारयेत् ॥
[5]शूराश्चाऽऽर्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर ।
गोमतो धनिनश्चैव परिपाल्या विशेषतः ॥

गां वाचं मिमते विचारयन्ति ते गोमिनः ब्रह्मकर्मकाण्डार्थविदो ब्राह्मणाः, गोमन्तो वा । धनिनः वैश्याः । नीटी.

[6]व्यवहारेषु धर्म्येषु नियोज्याश्च बहुश्रुताः ।
गुणयुक्तेऽपि नैकस्मिन् विश्वस्याच्च विचक्षणः ।
[7]अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः ।
एनसा युज्यते राजा दुर्दान्त इति चोच्यते ॥

(१) भा. १२।२५।१३ ; भामु. १२।२४।१३–१४.
(२) भामु. १२।२४।१४.
(३) भा. १२।२५।१४ ; भामु. १२।२४।१५ नोपहते ( नाभ्याहतो ) प्रमादयति तत्कर्म ( न साधयति यत्कर्म ).
(४) भा. १२।२५।१५ ; भामु. १२।२४।१६ द्राष्ट्रं पण्यं न ( द्राज्यं पुण्यं च ).
(५) भा. १२।२५।१६ ; भामु. १२।२४।१७ गोमतो ( गोमिनो ).
(६) भा. १२।२५।१७ ; भामु. १२।२४।१८ धर्म्येषु नियोज्याश्च ( धर्मेषु योक्तव्याश्च ) स्याच्च ( सेत ).
(७) भा. १२।२५।१८ ; भामु. १२।२४।१९.

[1]येऽरक्ष्यमाणा हीयन्ते दैवेनोपहते नृपे ।
तस्करैश्चापि हन्यन्ते सर्वं तद्राजकिल्बिषम् ॥

स्तब्धः मान्यानमानयन् । अभ्यसूयकः गुणेषु दोषदृष्टिः । ये जनाः । दैवेन अवर्षणादिना । नीटी.

[2]सुमन्त्रिते सुनीते च विधिवच्चोपपादिते ।
पौरुषे कर्मणि कृते नास्त्यधर्मो युधिष्ठिर ॥

मन्त्रनीतिसहायाद्युपेते पुरुषकारे कृतेऽपि यदि जना हीयन्ते म्रियन्ते वा तर्हि राज्ञोऽधर्मो नास्तीत्यर्थः । नीटी.

[3]विपद्यन्ते समारम्भाः सिध्यन्त्यपि च दैवतः ।
कृते पुरुषकारे तु नैनः स्पृशति पार्थिवम् ॥
[4]अत्र ते राजशार्दूल वर्तयिष्ये कथामिमाम् ।
यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पार्थिव ॥
[5]शत्रून् हत्वा हतस्याऽऽजौ शूरस्याक्लिष्टकर्मणः ।
असहायस्य धीरस्य निर्जितस्य युधिष्ठिर ॥

शत्रून् हत्वा प्राप्य ततः शत्रोः सकाशादाजौ हतस्य वधं प्राप्तस्य । तत्र हेतुः— असहायस्येति । नीटी.

[6]यत्कर्म वै निग्रहे शात्रवाणां
योगश्चाग्र्यः पालने मानवानाम् ।
कृत्वा कर्म प्राप्य कीर्तिं सुयुद्धे
वाजिग्रीवो मोदते देवलोके ॥

(१) भा. १२।२५।१९ ; भामु. १२।२४।२० येऽरक्ष्य (ये रक्ष्य) नोपहते नृपे (नाभ्याहता नृप) हन्यन्ते ( हीयन्ते ).
(२) भा. १२।२५।२० ; भामु. १२।२४।२१ विधिवच्चो ( सर्वतश्चो ).
(३) भा. १२।२५।२१ ; भामु. १२।२४।२२ पूर्वार्धे ( विच्छिद्यन्ते समारब्धाः सिध्यन्ते चापि दैवतः । ).
(४) भा. १२।२५।२२ ; भामु. १२।२४।२३ पार्थिव ( पाण्डव ).
(५) भा. १२।२५।२३ ; भामु. १२।२४।२४ धीरस्य ( संग्रामे ).
(६) भा. १२।२५।२४ ; भामु. १२।२४।२५ सुयुद्धे ( सत्युद्धाद् ) देव ( स्वर्ग )।

यत् कर्म कर्तव्यं तत् कर्म कृत्वेति संबन्धः । नीटी.

[1]संत्यक्तात्मा समरेष्वाततायी
शस्त्रैश्छिन्नो दस्युभिरर्घमानः ।
अश्वग्रीवः कर्मशीलो महात्मा
संसिद्धात्मा मोदते देवलोके ॥

[2]धनुर्यूपो रशना ज्या शरः स्रुक्
स्रुवः खड्गो रुधिरं यत्र चाऽऽज्यम् ।
रथो वेदी कामगो युद्धमग्नि-
श्चातुर्होत्रं चतुरो वाजिमुख्याः ॥

कामजः क्रोधः युद्धमूलभूतः अग्निः । चातुर्होत्रं ब्रह्माद्याः ऋत्विजः । चतुरः चत्वारः । नीटी.

[3]हुत्वा तस्मिन् यज्ञवह्नावथारीन्
पापान्मुक्तो राजसिंहस्तरस्वी ।
प्राणान् हुत्वा चावभृथे रणे स
वाजिग्रीवो मोदते देवलोके ॥
राष्ट्रं रक्षन् बुद्धिपूर्वं नयेन
संत्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वाँल्लोकान् व्याप्य कीर्त्या मनस्वी
वाजिग्रीवो मोदते देवलोके ॥

संत्यक्तात्मा त्यक्ताहंकारः । नीटी.

[4]दैवीं सिद्धिं मानुषीं दण्डनीतिं
योगन्यायैः पालयित्वा महीं च ।
तस्माद्राजा धर्मशीलो महात्मा
हयग्रीवो मोदते स्वर्गलोके ॥

योगः क्रियायामुत्साहः, न्यासाः अभिमानत्यागाः, तैर्युक्तां दैवीं सिद्धिं यज्ञादिक्रियां अन्यदीयां मानुषीं च सिद्धिं दण्डनीतिं महीं च पालयित्वेति योजना । स्वयं च यज्ञशीलः । नीटी.

[1]विद्वांस्त्यागी श्रद्दधानः कृतज्ञ-
स्त्यक्त्वा लोकं मानुषं कर्म कृत्वा ।
मेधाविनां विदुषां संमतानां
तनुत्यजां लोकमाक्रम्य राजा ॥

मानुषं लोकमिति संबन्धः । तनुत्यजां प्रयागादौ । नीटी.

[2]सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य
सम्यग्राष्ट्रं पालयित्वा महात्मा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
वाजिग्रीवो मोदते देवलोके ॥

[3]जित्वा संग्रामान् पालयित्वा प्रजाश्च
सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान् ।
युक्त्या दण्डं धारयित्वा प्रजानां
युद्धे क्षीणो मोदते देवलोके ॥

[4]वृत्तं यस्य श्लाघनीयं मनुष्याः
सन्तो विद्वांसश्चार्हयन्त्यर्हणीयाः ।
स्वर्गं जित्वा वीरलोकांश्च गत्वा
सिद्धिं प्राप्तः पुण्यकीर्तिर्महात्मा ॥

---

(१) भा. १२।२५।२५; भामु. १२।२४।२६ संत्यक्ता (संयुक्ता) भिरर्घ (भिर्वध्य) द्धात्मा (द्धार्थो) देव (स्वर्ग).

(२) भा. १२।२५।२६; भामु. १२।२४।२७ कामगो (कामजो).

(३) भा. १२।२५।२७–२८; भामु. १२।२४। २८–२९.

(४) भा. १२।२५।२९; भामु. १२।२४।३० न्यायैः (न्यासैः) हय (वाजि) स्वर्ग (देव).

(१) भा. १२।२५।३०; भामु. १२।२४।३१.

(२) भा. १२।२५।३१; भामु. १२।२४।३२ ग्राष्ट्रं (ग्राज्यं).

(३) भा. १२।२५।३२; भामु. १२।२४।३३ क्षीणो (क्षीणे).

(४) भा. १२।२५।३३; भामु. १२।२४।३४ सश्चार्हयन्त्यर्हणीयाः (सोऽर्हयन्त्यर्हणीयम्) कांश्च गत्वा (कानवाप्य).

[1]दीक्षां यज्ञे पालनं युद्धमाहु-
योगं राष्ट्रे दण्डनीत्या च सम्यक् ।
वित्तत्यागं दक्षिणानां च यज्ञे
सम्यग् ज्ञानं पावनानीति विद्यात् ॥

राज्ञो यागयोगसंन्यासस्थानीयाः युद्धं पालनं क्रतौ वित्तत्यागश्चेति, तान्येवास्य पावनानीत्यर्थः । नीटी.

[2]रक्षन् राष्ट्रं बुद्धिपूर्वं नयेन
संत्यक्तात्मा यत्नशीलो महात्मा ।
सर्वाँल्लोकान् धर्ममूर्त्या चरंश्चा-
प्यूर्ध्वं देहान्मोदते देवलोके ॥

संत्यक्तात्मा निरहंकारः । नीटी.

[3]जित्वा संग्रामान् पालयित्वा च राष्ट्रं
सोमं पीत्वा वर्धयित्वा प्रजाश्च ।
युक्त्या दण्डं धारयित्वा प्रजानां
युद्धे क्षीणो मोदते देवलोके ॥

[4]सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य
सम्यग्राष्ट्रं पालयित्वा च राजा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
पूतात्मा वै मोदते देवलोके ॥

[5]यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः ।
पौरजानपदामात्याः स राजा राजसत्तमः ॥

(१) भा. १२।२६।३२ ; भामु. १२।२५।३२ यज्ञे पालनं ( राज्ञः संयुगे ) राष्ट्रे दण्डनीत्या ( राज्ये दण्डनीत्यां ) त्यागं ( त्यागो ) ज्ञानं ( दानं ).

(२) भा. १२।२६।३३ ; भामु. १२।२५।३३ राष्ट्रं ( राज्यं ) मूर्त्या ( दृष्ट्या ).

(३) भा. १२।२६।३४ ; भामु. १२।२५।३४.

(४) भा. १२।२६।३५ ; भामु. १२।२५।३५ ग्राष्ट्रं ( ग्राज्यं ).

(५) भा. १२।२६।३६ ; भामु. १२।२५।३६.

[1]सम्यग्घि धर्मं चरतो नृपस्य
द्रव्याणि चाप्याहरतो यथावत् ।
प्रवृत्तचक्रस्य यशोऽभिवर्धते
सर्वेषु लोकेषु चराचरेषु ॥

समं रागद्वेषवर्जं यथा स्यात्तथा धर्मं चरतः । नीटी.

राज्ञः देवद्विजार्चनम्, पौरुषमुत्थानं दैवात् परम्, तीक्ष्णत्वमृदुत्वसमुचितस्वीकारः

भीष्म उवाच—

[2]नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥

शाश्वतान् वेदपरंपरागतान् । नीटी.

[3]शृणु कात्स्न्येन मत्तस्त्वं राजधर्मान्युधिष्ठिर ।
निरुच्यमानान्नियतो यच्चान्यदभिवाञ्छसि ॥

[4]आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनकाम्यया ।
देवतानां द्विजानां च वर्तितव्यं यथाविधि ॥

यः कश्चिदक्षत्रियोऽपि प्रजापालनाधिकृतस्तस्य राज्ञोऽयं धर्मः यत् देवद्विजादिषु यथाविधि अनुग्रहबुद्ध्या वर्तितव्यमिति । नीटी.

[5]दैवतान्यर्चयित्वा हि ब्राह्मणांश्च कुरूद्वह ।
आनृण्यं याति धर्मस्य लोकेन च स मान्यते ॥

यद्धर्मलोपाद्राज्ञः ऋणं भवति तद्देवताद्यर्चनेन नश्यतीत्याह— दैवतानीति । लोके च तत एव पूज्यो भवतीति संयोगान्तरम् । नीटी.

[6]उत्थाने च सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानमृते दैवं राज्ञामर्थं प्रसिद्धये ॥

(१) भा. १२।२८।५६ ; भामु. १२।२८।५७ सम्यग्घि ( समं हि ) चाप्या ( चाभ्या ) चक्रस्य ( धर्मस्य ).

(२) भा. १२।५६।१० ; भामु.

(३) भा. १२।५६।११ ; भामु. १२।५६।११ दभि ( दपि ).

(४) भा. १२।५६।१२ ; भामु.

(५) भा. १२।५६।१३ ; भामु. १२।५६।१३ स मान्यते ( समर्च्यते ).

(६) भा. १२।५६।१४ ; भामु. १२।५६।१४ उत्थाने च ( उत्थानेन ) मर्थप्रसिद्धये ( मर्थं प्रसाधयेत् ).

उत्थानेन पुरुषकारेण प्रयतेथाः जयाद्यर्थे यतस्व । दैवं प्राग्भवीयं कर्म देवताराधनादिकं वा केवलं उत्थानं विना न राज्ञामिष्टमर्थं साधयेत् । नीटी.

[1]साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च ।
पौरुषं हि परं मन्ये दैवं निश्चित्यमुच्यते ॥

साधारणं रथचक्रवत्समानम् । तत्रापि पौरुषं परं श्रेष्ठम्; दृष्टद्वारत्वात् । दैवं तु फलद्वारा निश्चित्य मुच्यते अकरणदोषात्फलासिद्धौ । फलसिद्धौ तु दुःखान्मुच्यते। नीटी.

[2]विपन्ने च समारम्भे संतापं मा स्म वै कृथाः ।
घटते विनयस्तात राज्ञामेष नयः परः ॥

घटस्व घटयस्व । कर्षकवत्सकृद्यत्नवैफल्येऽपि यतस्वैवेत्यर्थः । नीटी.

[3]न हि सत्यादृते किंचिद्राज्ञां वै सिद्धिकारणम् ।
सत्ये हि राजा निरतः प्रेत्य चेह हि नन्दति ॥

सत्यात्सामन्ता अपि वशे भवन्ति । अन्यथा विश्वासाभावात्स्वीया अप्युद्विजन्ते । क्षीणा अपि परे प्राणपणेनापि जिगीषन्ते एव इति श्लोकद्वयार्थः । नीटी.

[4]ऋषीणामपि राजेन्द्र सत्यमेव परं धनम् ।
तथा राज्ञः परं सत्यान्नान्यद्विश्वासकारणम् ॥

[5]गुणवाञ्छीलवान्दान्तो मृदुर्धर्म्यो जितेन्द्रियः ।
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥

गुणाः शौर्यौदार्यगाम्भीर्यादयः, तद्वान् । शीलं सदाचारः, तद्वान् । दान्तः अचपलः । मृदुः दयावान् । धर्म्यः धर्मादनपेतः । जितेन्द्रियः जितचित्तः । सुदर्शः प्रसन्नवक्त्रः । स्थूललक्ष्यः बहुप्रदः । नीटी.

आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन ।
पुनर्नयविचारेण त्रयीसंवरणेन च ॥

आर्जवं अवक्रताम् । नयः नीतिः स्वरन्ध्रगोपनं पररन्ध्रान्वेषणस्य स्वेन क्रियमाणस्य परेभ्यो गोपनं मन्त्रगोपनं चेत्यादि, तद्युक्तेन विचारेण ऊहापोहेन साधकबाधकोपन्यासेन क्रियमाणेन । त्रयीसंवरणे उक्तविधनीतिरूपे आर्जवं यथार्थभाषित्वं च न श्रयेथाः । नीटी.

[1]मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचर ॥

उभयं मृदुत्वं तीक्ष्णत्वं च समुचितमाश्रय । नीटी.

[2]अदण्ड्याश्चैव ते नित्यं विप्राः स्युर्ददतां वर ।
भूतमेतत्परं लोके ब्राह्मणा नाम भारत ॥

तत्रापि तैक्ष्ण्यापवादमाह– अदण्ड्या इति । नीटी.

शमान्वितब्राह्मणा नमस्याः

[3]मनुना चापि राजेन्द्र गीतौ श्लोकौ महात्मना ।
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्तुमर्हसि ॥

[4]अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥

[5]अयो हन्ति यदाऽश्मानमग्निश्चाऽऽपोऽभिपद्यते ।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥

---

(१) भा. १२।५६।१५ ; भामु.

(२) भा. १२।५६।१६ ; भामु. १२।५६।१६ उत्तरार्धे ( घटस्वैव सदाऽऽत्मानं राज्ञामेष परो नयः ॥ ).

(३) भा. १२।५६।१७ ; भामु. १२।५६।१७ कारणम् ( कारकम् ) चेह हि ( चेह च ).

(४) भा. १२।५६।१८ ; भामु. १२।५६।१८ राज्ञः ( राज्ञां ).

(५) भा. १२।५६।१९–२० ; भामु.

(१) भा. १२।५६।२१ ; भामु. १२।५६।२१ माचर ( माश्रय ).

(२) भा. १२।५६।२२ ; भामु. १२।५६।२२ नित्यं विप्राः स्युर्द ( पुत्र विप्राश्च द ) ब्राह्मणा ( ब्राह्मणो ) भारत ( पाण्डव ).

(३) भा. १२।५६।२३ ; भामु. १२।५६।२३ चापि ( चैव ).

(४) भा. १२।५६।२४ ; भामु.

(५) भा. १२।५६।२५ ; भामु. १२।५६।२५ मग्निश्चाऽऽपोऽभिपद्यते ( मग्निना वारि हन्यते ).

[1]एतज्ज्ञात्वा महाराज नमस्या एव ते द्विजाः ।
भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः ॥

भौमं ब्रह्म वेदान् यज्ञांश्च । नीटी.

आततायिब्राह्मणो निग्रहणीयः

[2]एवं चैव नरव्याघ्र लोकतन्त्रविघातकाः ।
निग्राह्या एव सततं बाहुभ्यां ये स्युरीदृशाः ॥

मार्दवापवादमाह- एवमिति । नीटी.

[3]श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा ।
तौ निबोध महाप्राज्ञ त्वमेकाग्रमना नृप ।

[4]उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नरेश्वरः ॥

स्वधर्मेण शस्त्रोद्यमनेन निगृह्णीयादेव, न तु हन्यात् । नीटी.

[5]विनश्यमानं धर्मं हि यो रक्षति स धर्मवित् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ॥

विनश्यमानं आततायिदोषात् । तेन आततायिनिग्रहेण । अनिग्रहे तु धर्महा स्यादेव । जीवतोऽस्य निग्रहो दुःशकश्चेत्तत्राऽऽह- मन्युस्तन्मन्युमृच्छति । यथा सूर्यांशुततः स्फटिकस्तूलपिण्डमुद्दीप्य तदूष्मणा स्वयं नश्यति, एवमाततायिक्रोधोऽन्यमुद्दीप्य तद्द्वारा आततायिनमेवाऽऽश्रयदाहेन दहति । नात्र हन्तुर्दोष इत्यर्थः । नीटी.

[1]एवं चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः ।
स्वपराद्धानपि हि तान्विषयान्ते समुत्सृजेत् ॥

यद्यप्येवं तथापि द्विजातयः ब्राह्मणाः रक्ष्या एव । नीटी.

[2]अभिशस्तमपि ह्येषां कृपायीत विशां पते ।
ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ॥

अभिशस्तं सताऽसता वा दोषेण युक्तं तथा ख्यापितम् । नीटी.

[3]राजद्विष्टे च विप्रस्य विषयान्ते विसर्जनम् ।
विधीयते न शारीरं भयमेषां कदाचन ॥

शारीरं कशाघातादि दण्डम् । क्लीबत्वमार्षम् । नीटी.

[4]दयिताश्च नरास्ते स्युर्नित्यं पुरुषसत्तम ।
न कोशः परमो ह्यन्यो राज्ञां पुरुषसंचयात् ॥

पुरुषसंचयात् ब्राह्मणभक्तादिति पूर्वार्धार्थः(?) । नीटी.

चातुर्वर्ण्ये दया क्षमातीक्ष्णते समुचिते व्यसनत्यागः स्वप्रियत्यागश्च राजधर्माः

[5]दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।
सर्वेषु तेषु मन्यन्ते नरदुर्गं सुदुस्तरम् ॥

षट्सु मरुजलपृथिवीवनपर्वतनरमयेषु । नीटी.

[6]तस्मान्नित्यं दया कार्या चातुर्वर्ण्ये विपश्चिता ।
धर्मात्मा सत्यवाक्चैव राजा रञ्जयति प्रजाः ॥

---

(१) भा. १२।५६।२६; भामु. १२।५६।२६ एतज्ज्ञात्वा ( एवं कृत्वा ) शमान्विताः ( समर्चिताः ).

(२) भा. १२।५६।२७; भामु. १२।५६।२७ तन्त्र ( त्रय ).

(३) भा. १२।५६।२८; भामु. १२।५६।२८ प्राज्ञ ( राज ).

(४) भा. १२।५६।२९; भामु. १२।५६।२९ नरेश्वरः ( नराधिपः ).

(५) भा. १२।५६।३०; भामु. १२।५६।३० यो रक्षति ( योऽभिरक्षेत ) भ्रूणहा ( धर्महा ) स्तं मन्यु ( स्तन्मन्यु ).

(१) भा. १२।५६।३१; भामु. १२।५६।३१ स्वपराद्धा ( सापराधा ).

(२) भा. १२।५६।३२; भामु.

(३) भा. १२।५६।३३; भामु. १२।५६।३३ भय ( दण्ड ).

(४) भा. १२।५६।३४; भामु. १२।५६।३४ नित्यं पुरुषसत्तम ( भक्तिमन्तो द्विजेषु ये ) ह्यन्यो ( ऽन्योऽस्ति ).

(५) भा. १२।५६।३५; भामु. १२।५६।३५ सर्वेषु तेषु ( सर्वदुर्गेषु ).

(६) भा. १२।५६।३६; भामु.

¹न च क्षान्तेन ते भाव्यं नित्यं पुरुषसत्तम ।
अधर्म्यो हि मृदू राजा क्षमावानिव कुञ्जरः ॥

पुनर्दयापवादमाह– न चेति । समन्ततः सर्वजातीयेषु । अधर्मः धर्मविरोधी । नीटी.

²बार्हस्पत्ये च शास्त्रे वै श्लोका विनियताः पुरा ।
अस्मिन्नर्थे महाराज तन्मे निगदतः शृणु ॥

³क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः ।
हस्तियन्ता गजस्येव शिर एवाऽऽरुरुक्षति ॥

गजस्य क्षममाणस्य । नीटी.

⁴तस्मान्नैव मृदुर्नित्यं तीक्ष्णो वाऽपि भवेन्नृपः ॥
वसन्तेऽर्क इव श्रीमान्न शीतो न च घर्मदः ॥

⁵प्रत्यक्षेणानुमानेन तथौपम्योपदेशतः ।
परीक्ष्यास्ते महाराज स्वे परे चैव सर्वदा ॥

प्रत्यक्षेण उपकारापकारादिना, अनुमानेन नेत्रवक्त्रविकारादिना, यथोक्तम्– 'नेत्रवक्त्रविकारेण ज्ञायतेऽन्तर्गतं मनः' इति, औपम्यं उपमानम्, अन्यत्र कार्यदर्शनेन, आगमैः शब्दादिना सामुद्रिकलक्षणेन ते पुरुषाः परीक्ष्याः । नीटी.

⁶व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण ।
न चैव न प्रयुञ्जीत सङ्गं तु परिवर्जयेत् ॥

व्यसनानि अष्टादश । यथाऽऽह मनुः– 'मृगयाऽक्षा दिवास्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाटनं कामजो दशको गणः ॥' (मस्मृ. ७।४७) । तौर्यत्रिकं वाद्यगीतनृत्यानि । 'पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥' (मस्मृ. ७।४८) इति । तत्र च सप्त कष्टतमानि । यथाऽऽह– 'पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥' (मस्मृ. ७।५०–५१) इति । न प्रयुञ्जीतेति न, अपि तु सर्वदा शूरान् जयाय प्रयोजयेदेव । संकीर्णे प्रयुक्त्यप्रयुक्त्योः संकरम्, साम्ना उपगते प्रयोगो नास्ति । अन्यत्र कुर्यादेवेत्यर्थः । नीटी.

¹नित्यं हि व्यसनी लोके परिभूतो भवत्युत ।
उद्वेजयति लोकं चाप्यतिद्वेषी महीपतिः ॥

व्यसनी मृगयाऽक्षाः स्त्रियः पानं च तद्वान् । अतिद्वेषी प्रजाद्रोहपरः । नीटी.

²भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा ।
कारणं च महाराज शृणु येनेदमिष्यते ॥

यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाऽप्यसंशयम् ॥

³वर्तितव्यं कुरुश्रेष्ठ नित्यं धर्मानुवर्तिना ।
स्वं प्रियं समभित्यज्य यद्यल्लोकहितं भवेत् ॥

प्रियं इष्टम् । नीटी.

⁴न संत्याज्यं च ते धैर्यं कदाचिदपि पाण्डव ।
धीरस्य स्पष्टदण्डस्य न ह्याज्ञा प्रतिहन्यते ॥

---

(१) भा. १२।५६।३७ ; भामु. १२।५६।३७ पूर्वार्धे (न च क्षान्तेन ते नित्यं भाव्यं पुत्र समन्ततः ।) अधर्म्यो (अधर्मो).

(२) भा. १२।५६।३८ ; भामु. १२।५६।३८ वै श्लोका विनियताः (च श्लोको निगदितः).

(३) भा. १२।५६।३९ ; भामु.

(४) भा. १२।५६।४० ; भामु. १२।५६।४० वाऽपि (न च) वसन्तेऽर्क (वासन्तार्क).

(५) भा. १२।५६।४१ ; भामु. १२।५६।४१ म्योपदेशतः (म्यागमैरपि) सर्वदा (नित्यशः).

(६) भा. १२।५६।४२ ; भामु. १२।५६।४२ सङ्गं तु (संकीर्णे).

(१) भा. १२।५६।४३ ; भामु. १२।५६।४३ नित्यं हि व्यसनी लोके (लोकस्य व्यसनी नित्यं) चाप्यति (च योऽति).

(२) भा. १२।५६।४४–४५ ; भामु.

(३) भा. १२।५६।४६ ; भामु. १२।५६।४६ नित्यं (सदा) समभि (तु परि).

(४) भा. १२।५६।४७ ; भामु. १२।५६।४७ ह्याज्ञा प्रतिहन्यते (भयं विद्यते कचित्).

ते त्वया स्पष्टः प्रख्यातः दण्डः अश्वरथहस्तिपुरुषादिसमूहः यस्य तस्य स्पष्टदण्डस्य । नीटी.

भृत्या मर्यादायां स्थाप्याः

[1]परिहासश्च भृत्यैस्ते न नित्यं वदतां वर ।
कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ॥
[2]अवमन्यन्ति भर्तारं संहर्षादुपजीविनः ।
स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति हि तद्वचः ॥

संघर्षात् अतिसंश्लेषात् । नीटी.

[3]प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते ।
अयाच्यं चैव याचन्तेऽभोज्यान्याहारयन्ति च ॥

विकल्पन्ते कार्ये संशयं दर्शयन्ति । गुह्यं गोप्यमपि छिद्रं अनुयुञ्जते प्रकटयन्ति । भोज्यानि राज्ञ आहारयन्ति भक्षयन्ति । नीटी.

[4]क्रुध्यन्ति परिदीप्यन्ति भूमिमध्यासतेऽस्य च ।
उत्कोचैर्वञ्चनाभिश्च कार्याण्यनुविहन्ति च ॥

उत्कोचैः लञ्चाभिः । वञ्चना अलीकगुणदोषादिप्रदर्शनम् । अनुविहन्ति विनिघ्नन्ति । नीटी.

[5]जर्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ।
स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ॥

प्रतिरूपकैः कृत्रिमैः शासनपत्रैः । विषयं देशम् । जर्जरं निःसारम् । स्त्रीरक्षिभिः सज्जन्ते प्रीतिं कुर्वन्ति अन्तःपुरे प्रवेशमिच्छन्तः । नीटी.

(१) भा. १२।५६।४८ ; भामु. १२।५६।४८ न नित्यं ( नात्यर्थं ).

(२) भा. १२।५६।४९ ; भामु. १२।५६।४९ संहर्षा ( संघर्षा ) हि ( च ).

(३) भा. १२।५६।५० ; भामु. १२।५६।५० ऽभोज्या ( भोज्या ).

(४) भा. १२।५६।५१ ; भामु. १२।५६।५१ पूर्वार्धे ( क्रुश्यन्ति परिदीप्यन्ति भूमिपायाधितिष्ठते । ).

(५) भा. १२।५६।५२ ; भामु.

[1]वातं च ष्ठीवनं चैव कुर्वते चास्य संनिधौ ।
निर्लज्जा नरशार्दूल व्याहरन्ति च तद्वचः ॥

वान्तं जृम्भादिना । निष्ठीवनं थूत्कारम् । तद्वचः राजवाक्यं गुह्यमपि लोके व्याहरन्ति । नीटी.

[2]हयं वा दन्तिनं वाऽपि रथं नृपतिसंमतम् ।
अधिरोहन्त्यनादृत्य हर्षुले पार्थिवे मृदौ ॥

हर्षुले परिहासशीले । नीटी.

[3]इदं ते दुष्करं राजन्निदं ते दुर्विचेष्टितम् ।
इत्येवं सुहृदो नाम ब्रुवन्ति परिषद्गताः ॥
[4]क्रुद्धे चास्मिन्हसन्त्येव न च हृष्यन्ति पूजिताः ।
संघर्षशीलाश्च सदा भवन्त्यन्योन्यकारणात् ॥
[5]विस्रंसयन्ति मन्त्रं च विवृण्वन्ति च दुष्कृतम् ।
लीलया चैव कुर्वन्ति सावज्ञास्तस्य शासनम् ।
अलंकरणभोज्यं च तथा स्नानानुलेपनम् ॥

विस्रंसयन्ति भेदयन्ति । नीटी.

[6]हेलमाना नरव्याघ्र स्वस्थास्तस्योपशृण्वते ।
निन्दन्ति स्वानधीकारान्संत्यजन्ति च भारत ॥

हेलनानि कुर्वन्तीति शेषः । उपशृण्वतः शृण्वन्तमनादृत्य । स्वस्थाः निर्भयाः । नीटी.

(१) भा. १२।५६।५३ ; भामु. १२।५६।५३ वातं च ष्ठी ( वान्तं निष्ठी ) नर ( राज ).

(२) भा. १२।५६।५४ ; भामु. १२।५६।५४ नृपतिसंमतम् ( वा नृपसत्तम ) अधि ( अभि ).

(३) भा. १२।५६।५५ ; भामु. १२।५६।५५ दुर्वि ( दुष्ट ) नाम ब्रुवन्ति ( वाचं वदन्ते ).

(४) भा. १२।५६।५६ ; भामु. १२।५६।५६ संघर्ष ( संहर्ष ) सदा ( तदा ).

(५) भा. १२।५६।५७ ; भामु. १२।५६।५७–५८ करणभोज्यं ( कारे च भोज्ये ) लेपनम् ( लेपने ).

(६) भा. १२।५६।५८ ; भामु. १२।५६।५८–५९ हेलमाना ( हेलनानि ) शृण्वते ( शृण्वतः ) निन्दन्ति ( निन्दन्ते ) त्यजन्ति ( त्यजन्ते ).

[1]न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च ।
क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा ।
अस्मत्प्रणेयो राजेति लोके चैव वदन्त्युत ।।

राजदेयं राजभागम् । क्रीडितुं राज्ञा सह मृगयादि-क्रीडां कर्तुम् । ससूत्रेण बद्धेन पक्षिणा श्येनेन । राज्ञो निरोधका इत्यर्थः । प्रणेयः शास्यः । नीटी.

[2]एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत ।
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ।।

अपरे दारापहारादयः । नीटी.

राजगुणाः- दुराधर्षत्वं मृदुत्वं संविभागित्वं च

[3]गुप्तात्मा स्याद्दुराधर्षः स्मितपूर्वाभिभाषिता ।
आभाषितश्च मधुरं प्रतिभाषेत मानवान् ।।

[4]कृतज्ञो दृढभक्तिः स्यात्संविभागी जितेन्द्रियः ।
ईक्षितः प्रतिवीक्षेत मृदु चर्जु च वल्गु च ।।

संविभागी विभज्य भोक्ता । वल्गु शोभनम् । नीटी.

राज्ञः स्वर्ग्याणि कर्माणि

[5]नराधिपश्चाप्यनुशिष्य मेदिनीं
दमेन सत्येन च सौहृदेन ।
महद्भिरिष्ट्वा क्रतुभिर्महायशा-
स्त्रिविष्टपे स्थानमुपैति सत्कृतम् ।।

(१) भा. १२।५६।५९ ; भामु. १२।५६।५९-६० लोके चैव ( लोकांश्चैव ).

(२) भा. १२।५६।६० ; भामु. १२।५६।६१.

(३) भा. १२।६७।३७ ; भामु. १२।६७।३८ गुप्तात्मा स्या ( गोप्ता तस्मा ) प्रति ( प्रत्या ).

(४) भा. १२।६७।३८ ; भामु. १२।६७।३९ चर्जु च वल्गु ( वल्गु च सुष्ठु ).

(५) भा. १२।६८।६० ; भामु. १२।६८।६० सत्कृतम् ( शाश्वतम् ).

भीष्ममते इह परत्र राज्ञः श्रेयस्करो गुणगणः

युधिष्ठिर उवाच-

[1]केन वृत्तेन वृत्तज्ञ वर्तमानो महीपतिः ।
सुखेनार्थान् सुखोदर्कानिह च प्रेत्य
चाऽऽप्नुयात् ।।

दण्डनीतिं सम्यक्प्रयोज्य केन वृत्तेन वर्तेत इति प्रश्नः । नीटी.

भीष्म उवाच-

[2]इयं गुणानां षट्त्रिंशत्षट्त्रिंशद्गुणसंयुता ।
यान् गुणांस्तु गुणोपेतः कुर्वन्गुणमवाप्नुयात् ।।

षट्त्रिंशत् एतत्संख्याकः धर्मचर्यादिगुणगणः, स च प्रत्येकं एकैकगुणयोगात्षट्त्रिंशद्गुणैरकटुकतादिभिः संयुतः, अत एव गुणोपेतः यान् गुणान् धर्मादीन् कुर्वन् गुणं कल्याणं अवाप्नुयात्सोऽयं षट्त्रिंशत्को गणस्त्वया श्रोतव्य इत्यर्थः । नीटी.

[3]चरेद्धर्मानकटुको मुञ्चेत्स्नेहं न नास्तिकः ।
अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ।।

अकटुकः रागद्वेषहीनः धर्मान् सर्वाश्चरेत् । आस्तिकः परलोककामुकः सन् स्नेहं कुर्यात्, न तु लोभादिना । अनृशंसः अनिष्ठुरः सन्नर्थमर्जयेत् । अनुद्धतः धर्मार्थावनाशयन् कामं इन्द्रियप्रीतिं चरेत् । नीटी.

[4]प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ।।

अकृपणः अदीनः । अविकत्थनः श्लाघाहीनः । अनिष्ठुरः सदयः । नीटी.

(१) भा. १२।७१।१ ; भामु. १२।७०।१.

(२) भा. १२।७१।२ ; भामु. १२।७०।२ इयं ( अयं ) संयुता ( संयुतः ).

(३) भा. १२।७१।३ ; भामु. १२।७०।३ नास्तिकः ( चाऽऽस्तिकः ) ; राप्र. १२५ मानक ( र्माणि क ) अनृशंस ( आनृशंस ).

(४) भा. १२।७१।४ ; भामु. १२।७०।४ ; राक. १४६ ; राप्र. १२५.

[1]संदधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः ।
नानाप्तैः कारयेच्चारं कुर्यात्कार्यमपीडया ॥

आर्यत्वं जानन् संधिं कुर्यात्, बन्धुत्वं जानन् विग्रहं न कुर्यात्, इति सर्वत्र गुणोपेतः गुणो द्रष्टव्यः। अभक्तं अल्पान्नम्। पुष्कलान्नदश्चारान् कुर्यात्। अपीडयन् भक्तं दद्यात्। नीटी.

[2]अर्थान् ब्रूयान्न चासत्सु गुणान् ब्रूयान्न चाऽऽत्मनः ।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥

साधुत्वेन परीक्ष्य अर्थं प्रयोजनं ब्रूयात्। श्रोतार उपहसिष्यन्तीति ज्ञात्वा आत्मनो गुणान्न ब्रूयात्। नीटी.

[3]नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् ।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥

[4]अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः ।
स्त्रियं सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥

चोक्षः शुद्धः। नीटी.

[5]अस्तब्धः पूजयेन्मान्यान्गुरून्सेवेदमायया ।
अर्चेद्देवान्नदम्भेन श्रियमिच्छेदकुत्सिताम् ॥

(१) भा. १२।७१।५; भामु. १२।७०।५ नानाप्तैः कारये (नाभक्तं चारये); राप्र. १२५ भामुवत्.
(२) भा. १२।७१।६; भामु. १२।७०।६ अर्थान् (अर्थं); राप्र. १२५ भामुवत्.
(३) भा. १२।७१।७; भामु. १२।७०।७; राप्र. १२५.
(४) भा. १२।७१।८; भामु. १२।७०।८ स्त्रियं (स्त्रियः); राप्र. १२६ स्याच्चोक्षः (स्याद्दजुः) स्त्रियं (स्त्रियः).
(५) भा. १२।७१।९; भामु. १२।७०।९ न्नदम्भेन (नदम्भेन); राप्र. १२६ भामुवत्.

[1]सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित् ।
सान्त्वयेन्न च भोगार्थमनुगृह्णन्न चाऽऽक्षिपेत् ॥

प्रणयं नम्रतां हित्वा धारयित्वा। हित्वेति धाञो रूपम्। न च मोक्षाय फलं दित्सन्नेव सान्त्वयेदित्यर्थः। नीटी.

[2]प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शेषयेत् ।
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ॥

अविज्ञाय, शत्रुं दोषं चेति शेषः। न शोचयेत् शत्रुबन्धूनां शोकमपनुदेत्। अकस्मात् कारणं विना। नीटी.

[3]एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि ।
अतोऽन्यथा नरपतिर्भयमृच्छत्यनुत्तमम् ॥

अनुत्तमं महत्तरम्। नीटी.

इति सर्वान्गुणानेतान्यथोक्तान् योऽनुवर्तते ।
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते ॥

गुणवद्द्विजसंग्रहः पुरोहितादिद्वारा धर्मकार्यनिर्वर्तनं च राजकर्तव्यम्

युधिष्ठिर उवाच–

[4]कथं राजा प्रजा रक्षन्नाऽऽधिबन्धेन युज्यते ।
धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह ॥

बह्वीनां प्रजानां परिपालनं कथं स्यादिति चिन्ता आधिः, स एव बन्धः, तेन न युज्यते। नापराध्नोति नान्यथा करोति धर्मे व्यवहारनिर्णयादौ। एतद्द्वयं कथं स्यादिति प्रश्नः। नीटी.

(१) भा. १२।७१।१०; भामु. १२।७०।१० भोगार्थमनु (माक्षाय अनु); राप्र. १२६ न्न च भोगार्थ (त्तन्न मोघाश) चाऽऽक्षिपेत् (च क्षिपेत्).
(२) भा. १२।७१।११; भामु. १२।७०।११ शेष (शोच); राप्र. १२६ भामुवत्.
(३) भा. १२।७१।१२–१३; भामु. १२।७०। १२–१३.
(४) भा. १२।७२।१; भामु. १२।७१।१.

भीष्म उवाच–

[1]समासेनैव ते तात धर्मान्वक्ष्यामि निश्चितान् ।
विस्तरेण हि धर्माणां न जात्वन्तमवाप्नुयात् ॥

उत्तरं वक्तुं प्रतिजानीते– समासेनैवेति । नीटी.

[2]धर्मनिष्ठाञ्श्रुतवतो वेदव्रतसमाहितान् ।
अर्चितान्वासयेथास्त्वं गृहे गुणवतो द्विजान् ॥

रागद्वेषहीनः ब्राह्मणान् पुरस्कृत्य व्यवहारनिर्णयं कुर्वन् धर्मेऽपि नापराध्नोतीति द्वितीयस्योत्तरमाह– धर्मनिष्ठानिति चतुर्भिः । नीटी.

[3]प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च ।
अथ सर्वाणि कुर्वीथाः कार्याणि सपुरोहितः ॥
धर्मकार्याणि निर्वर्त्य मङ्गलानि प्रयुज्य च ।
ब्राह्मणान्वाचयेथास्त्वमर्थसिद्धिजयाशिषः ॥

कामक्रोधौ वर्जयित्वा अर्थपरिग्रहः अलुब्धबुद्धिमतां सर्वकर्मसु योजनं च कर्तव्यं राज्ञः

[4]आर्जवेन च संपन्नो धृत्या बुद्ध्या च भारत ।
अर्थार्थं परिगृह्णीयात्कामक्रोधौ च वर्जयेत् ॥
[5]कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति ।
न स धर्मं न चाप्यर्थं परिगृह्णाति बालिशः ॥

विपक्षे दोषमाह– कामेति । नीटी.

[6]मा स्म लुब्धांश्च मूर्खांश्च कामे चार्थेषु यूयुजः ।
अलुब्धान् बुद्धिसंपन्नान्सर्वकर्मसु योजयेत् ॥

(१) भा. १२।७२।२ ; भामु. १२।७१।२ तात (राजन्) निश्चितान् (शाश्वतान्) रेण हि (रेणैव).

(२) भा. १२।७२।३ ; भामु. १२।७१।३ वेद (देव) अर्चितान्वासयेथा (अर्चयित्वा यजेथा).

(३) भा. १२।७२।४–५ ; भामु. १२।७१।४–५.

(४) भा. १२।७२।६ ; भामु. १२।७१।६ अर्थार्थं (यथार्थं).

(५) भा. १२।७२।७ ; भामु. १२।७१।७ परि (प्रति).

(६) भा. १२।७२।८ ; भामु. १२।७१।८ कामे चार्थेषु (कामार्थे च प्र).

आद्यस्योत्तरमाह– मा स्मेत्यादिना । साधून् सर्वत्र कार्येषु नियोज्य स्वयं न आधिबन्धेन युज्यते इत्यर्थः । नीटी.

[1]मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः ।
प्रजाः क्लिश्नात्ययोगेन कामद्वेषसमन्वितः ॥

अयोगेन, योगः इष्टप्राप्तिः, तदभावेन । नीटी.

ब्राह्मणेभ्यो दानम्, धर्मेण प्रजापालनं राज्ञः आधिबन्धाभावकारणम्, प्रजापालनं राज्ञः स्वर्ग्यम्

[2]मा स्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः ।
अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत ॥
धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः ।
सान्त्वयन् परिरक्षंश्च स्वर्गमाप्स्यसि दुर्जयम् ॥
[3]एवं धर्मेण वृत्तेन प्रजास्त्वं परिपालयन् ।
स्वन्तं पुण्यं यशोवन्तं प्राप्स्यसे कुरुनन्दन ॥
[4]धर्मेण व्यवहारेण प्रजाः पालय पाण्डव ।
युधिष्ठिर तथा युक्तो नाऽऽधिबन्धेन योक्ष्यसे ॥

यथा युक्तः उक्तेन प्रकारेण अवहितः । नीटी.

[5]एष एव परो धर्मो यद्राजा रक्षते प्रजाः ।
भूतानां हि यथा धर्मे रक्षणं च परा दया ॥
[6]तस्मादेवं परं धर्मं मन्यन्ते धर्मकोविदाः ।
यद्राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् ॥

(१) भा. १२।७२।९ ; भामु. १२।७१।९ द्वेष (क्रोध).

(२) भा. १२।७२।२२–२३ ; भामु. १२।७१।२२–२३.

(३) भा. १२।७२।२४ ; भामु. १२।७१।२४ पालयन् (पालय) यशोवन्तं (यशो नित्यं).

(४) भा. १२।७२।२५ ; भामु. १२।७१।२५ तथा (यथा).

(५) भा. १२।७२।२६ ; भामु. १२।७१।२६ रक्षते (रक्षति) यथा धर्मे (यदा धर्मो) च परा (परमा).

(६) भा. १२।७२।२७ ; भामु. १२।७१।२७ यद्राजा (यो राजा).

यो दयां कुरुते तं धर्मं मन्यन्ते इति योजना । नीटी.

[1]यदह्ना कुरुते पापमरक्षन् भयतः प्रजाः ।
राजा वर्षसहस्रेण तस्यान्तमधिगच्छति ॥

अन्तं यातनाभोगनिष्कृतिम् । नीटी.

[2]यदह्ना कुरुते पुण्यं प्रजा धर्मेण पालयन् ।
दश वर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि ॥

[3]स्विष्टिः स्वधीतिः सुतपा लोकाञ्जयति यावतः ।
क्षणेन तानवाप्नोति प्रजा धर्मेण पालयन् ॥

स्विष्टिः स्वधीतिः सुतपाः इति क्रमेण गृहस्थब्रह्मचारि-वानप्रस्थधर्मान् सम्यगनुतिष्ठन् । नीटी.

[4]एवं धर्मं प्रयत्नेन कौन्तेय परिपालयन् ।
इह पुण्यफलं लब्ध्वा नाऽऽधिबन्धेन योक्ष्यसे ॥

[5]स्वर्गलोके च महतीं श्रियं प्राप्स्यसि पाण्डव ।
असंभवश्च धर्माणामीदृशानामराजसु ।
तस्माद्राजैव नान्योऽस्ति यो महत्फल-
माप्नुयात् ॥

[6]स राज्यमृद्धिमत्प्राप्य धर्मेण परिपालयन् ।
इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ॥

चौरहृतप्रत्यर्पणं राज्ञः कर्तव्यं विशेषतः ब्रह्मस्वरक्षणं च

[7]प्रत्याहर्तुमशक्यं स्याद्धनं चोरैर्हृतं यदि ।
स्वकोशात्तत्प्रदेयं स्यादशक्तेनोपजीवता ॥

(१) भा. १२।७२।२८ ; भामु. १२।७१।२८.

(२) भा. १२।७२।२९ ; भामु. १२।७१।२९ पुण्यं (धर्मं).

(३) भा. १२।७२।३० ; भामु. १२।७१।३०.

(४) भा. १२।७२।३१ ; भामु. १२।७१।३१ पालयन् (पालय) इह (ततः).

(५) भा. १२।७२।३२ ; भामु. १२।७१।३२-३३ च म (सुम) महत्फ (धर्मफ).

(६) भा. १२।७२।३३ ; भामु. १२।७१।३३ ज्यमृद्धिमत्प्रा (ज्यं धृतिमान्प्रा) पालयन् (पालय).

(७) भा. १२।७६।१० ; भामु. १२।७५।१० स्वकोशात्त (तत्स्वकोशा) जीवता (जीवतः).

अशक्तेन राज्ञा । उपजीवतः धनोपजीविनो वणिजादेः । नीटी.

[1]सर्ववर्णैः सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणास्तथा ।
न स्थेयं विषये तेषु योऽपकुर्याद्द्विजातिषु ॥

[2]ब्रह्मस्वे रक्ष्यमाणे हि सर्वं भवति रक्षितम् ।
तेषां प्रसादे निर्वृत्ते कृतकृत्यो भवेन्नृपः ॥

[3]पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ।
नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम् ॥

[4]न हि कामात्मना राज्ञा सततं शठबुद्धिना ।
नृशंसेनातिलुब्धेन शक्याः पालयितुं प्रजाः ॥

प्रजापालनं राज्ञः कर्तव्यम्, नारण्याश्रमः

युधिष्ठिर उवाच-

[5]नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम् ।
धर्मार्थं रोचये राज्यं धर्मश्चात्र न विद्यते ॥

अत्र राज्ये पुण्यस्य चतुर्थांशः पापस्य त्वर्धं कृत्स्नं वा लभ्यते इति पापाधिक्याद्धर्मो नास्तीत्यर्थः । नीटी.

तदलं मम राज्येन यत्र धर्मो न विद्यते ।
वनमेव गमिष्यामि तस्माद्धर्मचिकीर्षया ॥

तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः ।
धर्ममाराधयिष्यामि मुनिर्मूलफलाशनः ॥

(१) भा. १२।७६।११ ; भामु. १२।७५।११ णास्तथा (णा यथा) तेषु (तेन).

(२) भा. १२।७६।१२ ; भामु. १२।७५।१२ हि (तु) तेषां प्रसादे निर्वृत्ते (तस्मात्तेषां प्रसादेन).

(३) भा. १२।७६।१३ ; भामु. १२।७५।१३.

(४) भा. १२।७६।१४ भामु. १२।७५।१४ शठ (काम) शक्याः (शक्यं).

(५) भा. १२।७६।१५-१७ ; भामु. १२।७५। १५-१७.

मभिगच्छेत्, नातिवाक्पारुष्यादिभिरुद्वेजयेत्, न विमानितामधिगच्छेत्, न संभोगेन पीडयेत्, न तद्वत् सपत्नीभिः सह भुञ्जीत । शत्रौ च प्रयोजयेत् अतिसंधानार्थम् । जम.

( २ ) बलादानयनकोपात् वेण्यां शस्त्रमाधाय विदूरथाख्यं नृपं निद्रावशं गतं जघानेति । इत्येवं वृत्तं परिहरेद्विजिगीषुः । शत्रौ चापि प्रयोजयेत्, यथा स्वभार्याभिरेव गृहगतः शत्रुर्विनाश्यते एवम् । उनि.

[१]यस्य दाराः सुगुप्ताः स्युः पुरुषैराप्तकारिभिः ।
सर्वभोगान्वितं तस्य हस्ते लोकद्वयं स्थितम् ॥

दारगुप्तेः फलं दर्शयितुमाह– यस्येति । यस्य पुंसो राज्ञो वा दाराः स्त्रियः सुगुप्ताः स्युः, पुरुषैराप्तकारिभिः आप्तं हितं ये कुर्वन्ति तैः सर्वभोगान्वितं सर्वकामावाप्तियुक्तं लोकद्वयं तस्य हस्ते स्थितम् । परलोकेऽपि कुलकलङ्काभावात् स्वर्ग इति । उनि.

[२]धर्ममिच्छन्नरपतिः सर्वदाराननुक्रमात् ।
गच्छेदनुदिनं नित्यं वाजीकरणबृंहितः ॥

धर्मार्थं दाररक्षणार्थं चाभिधातुमाह– धर्ममिति । धर्ममिच्छन् नरपतिः सर्वदारान् अनुक्रमात् शास्त्रोक्तेन मार्गेण गच्छेत् धर्माभिसंधिना प्रतिनिशं नित्यं सम्यग्वाजीकरणैः शास्त्रोक्तैः बृंहितः कृतशुक्रवृद्धिः । उनि.

[३]विचार्य कार्यावयवान् दिनक्षये
विसृज्य लोकं प्रमदाकृतक्रियः ।
अशस्त्रबन्धेन हि साधु पाणिना
स्वपेदसक्तं परमाप्तरक्षितः ॥

( १ ) इदानीमहोरात्रापेक्षायामाह– विचार्येत्यादिना । कार्यावयवानिति तद्दिनमष्टधा विभज्य कार्यभेदान् निरूपयेदित्यर्थः । दिनक्षये विसृज्य लोकम्, आपराह्णिकास्थानगतमिति शेषः । प्रमदाकृतक्रिय इति । रात्रौ प्रमदासु रक्षापूर्वकं कृताभिगमनादिक्रियः । अशस्त्रबन्धेन पाणिना, संनिहितनखशिरोरक्षाशस्त्रत्वात् । असक्तमिति क्रियाविशेषणम्, निद्रासक्तिं त्यक्त्वेत्यर्थः । परमाप्तरक्षितः अन्तर्वेशिकसैन्येन परिरक्षितः । जम.

( २ ) शयनविधिमभिधातुमाह– विचार्येति । विचार्य निर्णीय कार्यावयवान् अहोरात्रं षोडशधा विभज्य तत्र ये कार्यावयवाः तान् निर्वर्त्य दिनक्षये विसृज्य लोकं प्रमदाभिरेव कृताः सकला अपि क्रिया यस्य, पुरुषेणान्तःपुरप्रवेशाभावात् । सशस्त्रबन्धेन हि पाणिना करेण शस्त्रं विधाय । सर्वदा करसंनिहितं शस्त्रं विधेयमिति । स्वपेत् निद्रां गच्छेत् । तत्राप्यसक्तं निद्रायामप्यासक्तिर्न कर्तव्येति । परमाप्ता येऽन्तर्वेशिकपुरुषाः तैः रक्षितः इति । उनि.

[१]नयेन जाग्रत्यनिशं नरेश्वरे
सुखं स्वपन्तीह निराधयः प्रजाः ।
प्रमत्तचित्ते स्वपति त्रसद्भयात्
प्रजागरेणास्य जगत्प्रबाध्यते ॥

(१) प्रकरणार्थानुष्ठानफलमाह– नयेनेत्यादि । यथोक्तरक्षापूर्वकेण नयचक्षुषा कार्याकार्यं पश्यति सति सुखं स्वपन्ति विस्रब्धं तिष्ठन्ति । प्रमत्तचित्ते स्वपति प्रमत्तचित्तत्वात् कार्याकार्यं न पश्यति, प्रजागरेण चिन्तया बाध्यते कुतोऽस्माकं परित्राणं भवितेति । जम.

(२) निद्रासक्तिनिरासार्थमाह– नयेनेति । नयेन नीत्यनुष्ठानेन अहरष्टधा रात्रिं च विभज्य राज्यनियुक्तानुष्ठानेन जाग्रति अप्रमत्ते सर्वं करणीयं पश्यति नरेश्वरे सुखं स्वपन्तीह निराधयः निर्गतमनःपीडाः प्रजाः, उपद्रवकारिणां निग्रहात् । प्रमत्तचित्ते नरेश्वरे प्रमत्तं विषयासक्तं चित्तं यस्मिन् । प्रमादोऽत्र विषयासक्तिः

(१) कानी. ७।५५ ; नीम. ४७ पुरुषै ( पौरुषै ) भोगान्वितं ( लोकान्वितं ).

(२) कानी. ७।५६ ; उनि. दनुदिनं ( त्प्रतिनिशं ) ; नीम. ४७ सर्वदाराननुक्रमात् ( सर्वान् दाराननुक्रमम् ) दिनं ( निशं ).

(३) कानी. ७।५७ ; उनि. अशस्त्र ( सशस्त्र ) ; नीम. ४७ अशस्त्र ( सशस्त्र ) स्वपेदसक्तं ( स्वपित्यसक्तः ).

(१) कानी. ७।५८ ; उनि. बाध्यते ( बुध्यते ) ; नीम. ४७ स्वपति त्रसद्भयात् ( सति जाग्रति प्रजाः ) बाध्यते ( बाधते ).

कौटिल्योक्ता । तथा च शब्दादिष्विन्द्रियार्थेषु प्रसक्ते प्रमादेन स्वपति स्वामिनि भयादुपद्रवकारिभ्यः प्रजागरेण अस्य राज्ञः संकलं जगत् प्रजारूपं प्रकर्षेण बुध्यते । तस्मात् सततोत्थेन राज्ञा भवितव्यमिति । उनि.

[1]इति स्म पूर्वे मुनयो बभाषिरे
नृपस्य राज्यस्य च साधु रक्षणम् ।
तदेतदेवं परिपालयन्नयात्
नरेश्वरः पालनकल्यतां व्रजेत् ॥

(१) इदानीं स्वमण्डलगतव्यापारमुपसंहरति– इतीत्यादिना । राज्यस्य अमात्यादेः । तदेतदेवमिति । तस्मात् एतत् स्वराज्यं सर्गषट्कोक्तेन नयेन परिपालयन् । पालनकल्यतामिति । पालने निर्दोषतां व्रजेत् । अन्यथा पालयन् गर्हिततामित्यर्थादापन्नम् । जम.

(२) नृपराज्ययोः साधुरक्षणे पूर्वाचार्यसंमतिमाह– इतीति । इति एवं पूर्वे बृहस्पतिशुक्रादयः । नृपस्य राज्यस्य च साधु रक्षणम् । एतत् उक्तप्रकारेण नृपः साधु पालयन् पालनकल्पतां पालनसामर्थ्यं 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च' इत्यादिपूर्वोक्तप्रकारं यथास्थितं पर्यालोच्य शासति सति विशिष्टविधानवत्तां व्रजेत् प्राप्नुयादिति । उनि.

## शुक्रनीतिः

### भोज्यपरीक्षा

[2]विषदोषभयादन्नं विमृश्य कपिकुक्कुटैः ।
हंसाः स्खलन्ति कूजन्ति भृङ्गा नृत्यन्ति मायूराः ॥
विरौति कुक्कुटो माद्येत्क्रौञ्चो वै रेचते कपिः ।
हृष्टरोमा भवेद्बभ्रुः शारिका वमते तथा ॥
दृष्ट्वैवं सविषं चान्नं तस्माद्भोज्यं परीक्षयेत् ॥

विषदोषभयात् षड्रसं षट् तिक्तकटुकषायाम्ललवणमधुराः रसाः आस्वादाः यस्य तादृशं अन्नं कपिकुक्कुटैः, बहुवचनात् कपिकुक्कुटप्रभृतिभिरित्यर्थः, विमृश्य परीक्ष्य नित्यं भुञ्जीतेति उत्तरेणान्वयः । यतः सविषं अन्नं दृष्ट्वैव हंसाः स्खलन्ति पतन्ति, भृङ्गाः भ्रमराः कूजन्ति, कूजनं अस्पष्टनिनादं कुर्वन्ति, मायूराः मयूरा एव मायूराः, स्वार्थे अण्प्रत्ययः, नृत्यन्ति, कुक्कुटः विरौति चीत्कारं करोति, क्रौञ्चः बकः माद्येत् मत्ततरं गच्छति, कपिः वानरः रेचते पुरीषमुत्सृजति, बभ्रुः भारद्वाजाख्यपक्षिविशेषः हृष्टरोमा रोमाञ्चितदेहः भवेत्, तथा सारिका वमते वमनं करोति । वैशब्दोऽवधारणे । तस्मात् भोज्यं खाद्यं वस्तु परीक्षयेत् एतैरिति भावः । शुनीटी.

### रक्षकनियोजनम्

[1]पृष्ठाग्रगान् क्रूरवेषान्नतिनीतिविशारदान् ।
सिद्धास्त्रनग्रशस्त्रांश्च भटानारान्नियोजयेत् ॥

क्रूरवेशान् भीषणवेशधारिणः नतिनीतिविशारदान् नतौ प्रणतौ नीतौ च विशारदान् विचक्षणान् सिद्धास्त्रान् नग्नशस्त्रान् शस्त्रधारिणः भटान् वीरान् आरात् समीपे पृष्ठाग्रगान् पश्चात् संमुखवर्तिनः नियोजयेत् रक्षेत् । शुनीटी.

### अन्यनृपोऽविश्वसनीयः

[2]विश्वस्तान्यनृपस्यापि न विश्वासं समाप्नुयात् ।
नैकान्ते न गृहे तस्य गच्छेदल्पसहायवान् ॥

विश्वस्तस्यापि अन्यनृपस्य प्रतिकूलनृपतेः विश्वासं न समाप्नुयात्, शत्रौ नृपे नैव विश्वसेदित्यर्थः । तस्य प्रतिनृपस्य गृहे वा एकान्ते निर्जने देशे अल्पसहायवान् न गच्छेत् । शुनीटी.

स्ववेशरूपसदृशान् निकटे रक्षयेत्सदा ।
विशिष्टचिह्नगुप्तः स्यात्समयेऽन्यादृशो भवेत् ॥

सदा निकटे स्वस्य आत्मनः वेशेन परिच्छदेन रूपेण च सदृशान् जनान् रक्षेत्, तथात्वे व्यक्तिग्रहो न स्यादिति भावः । स्वयं विशिष्टं अन्यविलक्षणं चिह्नं राजचिह्नमित्यर्थः, गुप्तं यस्य तथाभूतः स्यात् । तथा समये समयविशेषे इत्यर्थः, अन्यादृशः सामान्यजनसदृशः भवेत् । शुनीटी.

---

(१) कानी. ७।५९ ; उनि. कल्यतां (कल्पतां).
(२) शुनी. १।३२६–३२८.

(१) शुनी. १।३६९–३७०.
(२) शुनी. ५।१३–१४.

नासावधानः स्यात्

[1]क्षणं नासावधानः स्याद् भृत्यस्त्रीपुत्रशत्रुषु ॥

क्षणमपि भृत्यस्त्रीपुत्रशत्रुषु भृत्येषु स्त्रीषु पुत्रेषु शत्रुषु च असावधानः न स्यात् । शुनीटी.

## नीतिवाक्यामृतम्

वीरपुरुषपरिवारितेन परदूतदर्शनम्

[2]वीरपुरुषपरिवारितः शूरपुरुषान्तरितान् दूतान् पश्येत् ॥

अथ राज्ञा यथा परदूता द्रष्टव्यास्तदाह– वीरेति । दूतान् परदेशोपगतान् पश्येत् अवलोकयेत् । किंविशिष्टान् दूतान् ? शूरपुरुषान्तरितान् शूरपुरुषानन्तरे धृत्वा । किंविशिष्टः सन् ? वीरपुरुषपरिवारितः सन् । तथा च नारदः– ' परदूतान् नृपः पश्येद्वीरैर्बहुभिरावृतः । शूरैरन्तर्गतस्तेषां चिरं जीवितुमिच्छया ॥ ' । नीवाटी.

श्रूयते हि किल चाणक्यस्तीक्ष्णदूतप्रयोगेणैकं नन्दं जघान ॥

एतत् किल श्रूयते योऽसौ चाणक्यः स तीक्ष्णदूतप्रयोगेण तीक्ष्णविषदूता भृत्यास्तेषां प्रयोगेण नन्दमेकमद्वितीयमपि जघान । नीवाटी.

परीक्ष्यं शत्रुप्रहितम्

शत्रुप्रहितं शासनमुपायनं च स्वैरपरीक्षितं नोपाददीत ॥

अथान्यदपि भूभुजा यत्कृत्यं तदाह– शत्रुप्रहितमिति । नोपाददीत न गृह्णीयात् । कोऽसौ ? राजा । किं तत् ? शासनं लिखितम् । किंविशिष्टम् ? शत्रुप्रहितं वैरिप्रेषितम् । न केवलं शासनमुपायनं च, ढौकनीयं च । कथं न गृह्णीयात् ? यावन्न परीक्षितम् । कैः ? स्वैः आत्मीयपुरुषैः । तथा च शुक्रः– ' यावत्परीक्षितं न स्वैर्लिखितं प्राभृतं तथा । शत्रोरभ्यागतं राज्ञा तावद्ग्राह्यं न तद्भवेत् ॥ ' । नीवाटी.

(१) शुनी. ५।१७.

(२) नीवा. १३।१३–१७.

श्रूयते हि किल स्पर्शविषवासिताद्भुतवस्त्रोपायनेन करहाटपतिः कैटभो वसुनामानं राजानं जघान ॥

आशीविषविषधरोपेतरत्नकरण्डकप्राभृतेन च करपालः करालं जघान ॥

एतस्मात्कारणाच्छत्रूपायनं स्वैरपरीक्षितं नाऽऽददीत । तथा–आशीविषेति । सूत्रद्वयमपि गतार्थम् । नीवाटी.

स्वेभ्यः परेभ्यश्च राजरक्षा

[1]राज्ञि रक्षिते सर्वं रक्षितं भवत्यतः स्वेभ्यः परेभ्यश्च नित्यं राजा रक्षितव्यः ॥

अथ राजरक्षासमुद्देशो व्याख्यायते । तत्राऽऽदावेव राजरक्षाकारणमाह– राज्ञीति । रक्षितव्यः रक्षणीयः । कोऽसौ ? राजा । केभ्यः ? स्वेभ्यः आत्मीयेभ्यः सकाशात्, तथा परेभ्यः । कथम् ? नित्यमेव ( तस्मिन् रक्षिते सर्वं रक्षितं भवति यतः ) । तथा च रैभ्यः– ' रक्षिते भूमिनाथे तु आत्मीयेभ्यः सदैव हि । परेभ्यश्च यतस्तस्य रक्षा देशस्य जायते ॥ ' । नीवाटी.

आसन्नकरणीयजनलक्षणानि

अत एवोक्तं नयविद्भिः– पितृपैतामहं महासंबन्धानुबद्धं शिक्षितमनुरक्तं कृतकर्माणं च जनमासन्नं कुर्वीत ॥

अथ राज्ञो रक्षा यथा भवति तथाऽऽह– अत इति । अत एवोक्तं अस्माद्भणितम् । कैः ? नयविद्भिः नीतिविद्भिः । किं तदुक्तमित्याह– एतद्गुणविशिष्टं जनं लोकं समासन्नं कुर्वीत कुर्यात् रक्षार्थम् । किंविशिष्टं जनम् ? महासंबन्धानुबद्धं महान् योऽसौ परिणयलक्षणस्तेनानुबद्धं यन्त्रितम् । तथा शिक्षितं विचक्षणम् । तथाऽनुरक्तं कृतकर्माणं येन राजकर्माणि कृतानि । तथा पितृपैतामहं अन्वयागतम् । समासन्नं कुर्यात् । तथा च गुरुः– ' वंशजं च सुसंबन्धं शिक्षितं राजसंयुतम् । कृतकर्मजनं पार्श्वे रक्षार्थं धारयेन्नृपः ॥ ' । नीवाटी.

(१) नीवा. २४।१–६८, ८७.

**अन्यदेशीयमकृतार्थमानं स्वदेशीयं चापकृत्योपगृहीतमासन्नं न कुर्वीत ॥**

अथ यादृशं जनं समीपगं न कुर्वीत तादृशमाह— अन्येति । अन्यदेशीयं अकृतार्थमानं स्वदेशीयं चापकृत्योपगृहीतं जनं समीपे न धारयेत् न स्थापयेत् । कम् ? जनम् । कथंभूतम् ? अन्यदेशीयम् , तथा अपकृत्योपगृहीतं अपकृत्य दण्डयित्वा उपगृहीतं स्वस्थाने स्थापितम्, यतस्तस्य वित्तक्षतिः स्यात् । तथा च शुक्रः— 'नियोगिनं समीपस्थं दण्डयित्वा न धारयेत् । दण्डको यो न वित्तस्य बाधा चित्तस्य जायते ॥ अन्यदेशोद्भवं लोकं समीपस्थं न धारयेत् । अपूजितं स्वदेशीयं वा विरुध्य प्रपूजितम् ॥ ' । नीवाटी.

**चित्तविकृतेर्नास्त्यविषयः किं न भवति माताऽपि राक्षसी ॥**

अथ दण्डयित्वा यः स्थाप्यते तत्स्वरूपमाह— चित्तेति । चित्ते विकृतिः विकारः यस्य स तथा, तस्य चित्तविकृतेः पुरुषस्य नास्ति । कोऽसौ ? अविषयः गोचरम् । पापं कुर्वाणस्य यतः किं न भवति ? काऽसौ ? माता । किंविशिष्टा ? राक्षसी । यदा माता शाकिनीधर्ममनुतिष्ठति तदा पुत्रमपि व्यापादयतीति । तथा च शुक्रः— 'यस्य चित्ते विकारः स्यात्सर्वं पापं करोति सः । जातं हन्ति सुखं माता शाकिनीमार्गमाश्रिता ॥ ' । नीवाटी.

**अस्वामिकाः प्रकृतयः समृद्धा अपि निस्तरीतुं न शक्नुवन्ति ॥**

अथ स्वामिरहिताः प्रकृतयो यथा भवन्ति तथाऽऽह— अस्वामिका इति । न समर्था भवन्ति । काः ? प्रकृतयः अमात्याद्याः । किं कर्तुम् ? निस्तरीतुं निर्वाहं गन्तुम् । किंविशिष्टाः प्रकृतयः ? अस्वामिकाः न विद्यते स्वामी यासां अस्वामिकाः । पुनरपि कथंभूतास्ताः ? समृद्धा अपि सर्वकामान्विता अपि । तथा च वसिष्ठः— 'राजप्रकृतयो नैव स्वामिना रहिताः सदा । गन्तुं निर्वाहणं यद्वत्स्त्रियः कान्तविवर्जिताः ॥ ' । नीवाटी.

**देहिनि गतायुषि सकलाङ्गे किं करोति धन्वन्तरिरपि वैद्यः ॥**

अथ गतायुषि पुरुषे यद्भवति तदाह— देहिनीति । किं करोति ? अपि तु न करोति । कोऽसौ ? धन्वन्तरिरपि वैद्यः । यस्य किं विशिष्टस्य देहिनः ? सकलाङ्गस्यापि, सकलाः कला द्विसप्ततिप्रमाणाः यस्य शरीरे अङ्गे तिष्ठन्ति । तथा च व्यासः— 'न मन्त्रा न तपो दानं न वैद्यो न च भेषजम् । शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ ' । नीवाटी.

स्त्र्यादिभ्य आसन्नेभ्योऽपि राजा रक्षणीयः

**राज्ञस्तावदासन्नाः स्त्रिय आसन्नतरा दायादा आसन्नतमाश्च पुत्रास्ततो राज्ञः प्रथमं स्त्रीभ्यो रक्षणं ततो दायादेभ्यस्ततः पुत्रेभ्यः ॥**

अथ येषां सकाशाद्राज्ञो रक्षणं कार्यं तानाह— राज्ञ इति । गतार्थमेतत् । नीवाटी.

**आ वण्ठादा चक्रवर्तिनः सर्वोऽपि स्त्रीसुखाय क्लिश्यति ॥**

अथ स्त्रीसुखकृते यद्भवति तदाह— आ वण्ठादिति । वण्ठशब्देन निकृष्टः पुमानुच्यते । चक्रवर्ती समस्तद्वीपाधिपतिः । आङ् मर्यादायाम् । वण्ठचक्रवर्तिनां मध्ये यो जनः स सर्वोऽपि स्त्रीसुखकृते क्लिश्यति स्त्रीसुखार्थं क्लेशं करोति, येन स्त्रीसुखाढ्यो भवति । तथा च गर्गः— 'कृषिं सेवां विदेशं च युद्धं वाणिज्यमेव च । सर्वं स्त्रीणां सुखार्थाय स सर्वः कुरुते जनः ॥ ' । नीवाटी.

**निवृत्तस्त्रीसङ्गस्य धनपरिग्रहो मृतमण्डनमिव ॥**

अथ स्त्रीसङ्गरहितस्य पुरुषस्य यद्भवति तदाह— निवृत्तेति । स्त्रीसङ्गरहितस्य यः संपल्लक्षणो विभवः स किंविशिष्टः ? मृतमण्डनमिव । यथा मृतमण्डनं वृथा न किंचित्सुखमुत्पादयति तथा प्रभूतोऽप्यर्थो व्यर्थः वनितासङ्गरहितस्य । तथा च वल्लभदेवः— 'प्रभूतमपि चेद्वित्तं पुरुषस्य स्त्रियं विना । मृतस्य मण्डनं यद्वत्तत्तस्य व्यर्थमेव हि ॥ ' । नीवाटी.

सर्वाः स्त्रियः क्षीरोदवेला इव विषामृतस्थानम् ॥

अथ स्त्रीणां स्वरूपमाह– सर्वा इति । या एताः स्त्रियः ताः सर्वा विषामृतस्थानम् । किंविशिष्टा इव ? क्षीरोदवेला इव दुग्धसमुद्रलहर्य इव । तथा च वल्लभदेवः– 'नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् । विरक्ता मारयेद्यस्मात्सुखायत्यनुरागिणी ॥'। नीवाटी.

मकरदंष्ट्रा इव स्त्रियः स्वभावादेव वक्रशीलाः ॥

भूयोऽपि स्त्रीस्वरूपमाह– मकरदंष्ट्रा इति । एताः स्त्रियो यास्ताः सर्वा वक्रशीलाः, वक्रं शीलं यासां ताः वक्रशीलाः । कस्मात् ? स्वभावादेव नियमेन । का इव वक्रशीलाः ? मकरदंष्ट्रा इव । तथा च वल्लभदेवः– 'स्त्रियोऽतिवक्रतायुक्ता यथा दंष्ट्रा झषोद्भवाः । ऋजुत्वं नाधिगच्छन्ति तीक्ष्णत्वादतिभीषणाः ॥'। नीवाटी.

स्त्रीणां वशोपायो देवानामपि दुर्लभः ॥

अथ भूयोऽपि स्त्रीस्वरूपमाह– स्त्रीणामिति । स्त्रीणां विरुद्धानां योऽसौ वशोपायः वशं कर्तुमुपायः सामभेदोपप्रदानदण्डलक्षणः स देवानामपि दुर्लभः । तमुपायं देवा अपि न जानन्तीत्यर्थः । तथा च वल्लभदेवः– 'चतुरः सृजता पूर्वमुपायांस्तेन वेधसा । न सृष्टः पञ्चमः कोऽपि गृह्यन्ते येन योषितः ॥'। नीवाटी.

कलत्रं रूपवत् सुभगमनवद्याचारमपत्यवदिति महतः पुण्यस्य फलम् ॥

अथ सुकलत्रस्य स्वरूपमाह– कलत्रमिति । एतदुक्तं भवति– तस्येदृशं वक्ष्यमाणं स्यात् येनान्यस्मिन् देहान्तरे महत्पुण्यं कृतं तस्य फलम् । एतत्किंविशिष्टं कलत्रम् ? सुरूपं रूपाढ्यं तावत् । तथा सुभगम् । तथाऽनवद्याचारं अनवद्यः अकुत्सितः आचारः व्यवहारः यस्य । तथा अपत्यवत् पुत्रयुतम् । तथा च चारायणः– 'सुरूपं सुभगं यद्वा सुचरित्रं सुतान्वितम् । यस्येदृशं कलत्रं स्यात् पूर्वपुण्यफलं हि तत् ॥'। नीवाटी.

कामदेवोत्सङ्गस्थाऽपि स्त्री पुरुषान्तरमभिलषति च ॥

अथ भूयोऽपि स्त्रीस्वरूपमाह– कामेति । अभिलषति वाञ्छति । काऽसौ ? स्त्री । किमभिलषति ? पुरुषान्तरं पुरुषविशेषम् । किंविशिष्टा स्त्री ? कामदेवोत्सङ्गस्थाऽपि । एतदुक्तं भवति– कामादपरो रूपवान् कश्चिन्न भवति तथापि तं परित्यज्य स्त्री अन्यमभिलषति, चापल्यात् । तथा च नारदः– 'कामदेवोपमं त्यक्त्वा मुखप्रेक्षं निजं पतिम् । चापल्याद्वाञ्छते नारी विरूपाङ्गमपीतरम् ॥'। नीवाटी.

न मोहो लज्जा भयं स्त्रीणां रक्षणं किंतु परपुरुषादर्शनं संभोगः सर्वसाधारणता च ॥

अथ भूयोऽपि स्त्रीणां स्वरूपमाह– न मोह इति । स्त्रीणां तावत् कुटुम्बमोहो रक्षणं न करोति, भयं न करोति, लज्जा न करोति । तर्हि कथं रक्षणं भवतीत्याह– तासां परपुरुषादर्शनं तावत् अन्यपुरुषदर्शनं यदि न स्यात् । तथा संभोगः कामसेवनम् । तथा सर्वसाधारणत्वं च पत्युः सकाशात्सर्वं वाञ्छितं लभन्ते । सर्वसाधारणत्वं ईर्ष्याधर्मं यदि भर्ता न करोति । एतत्त्रयं स्त्रीणां रक्षणम्, नान्यत् । तथा च जैमिनिः– 'अन्यस्यादर्शनं कोपात्प्रसादः कामसंभवः । सर्वासामेव नारीणामेतद्रक्षत्रयं मतम् ॥'। नीवाटी.

दानदर्शनाभ्यां समवृत्तौ हि पुंसि नापराध्यन्ते स्त्रियः ॥

अथ यथा न विरुध्यन्ते भर्तुः स्त्रियः तथाऽऽह– दानेति । नापराध्यन्ते न विरोधं कुर्वन्ति । काः ? स्त्रियः । कस्मिन् ? पुंसि भर्तरि । किंविशिष्टे ? समवृत्तौ समप्रसादे । काभ्याम् ? दानदर्शनाभ्याम् । एतदुक्तं भवति– यस्य पुरुषस्य बह्व्यः स्त्रियो भवन्ति स यदा तुल्यवृत्तः तुल्यचेष्टितः भवति । दानमानाभ्यां विशेषं न करोति तदा ताः सानुरागा भवन्ति । तथा च नारदः– 'दानदर्शनसंभोगं समं स्त्रीषु करोति यः । प्रसादेन विशेषं च न विरुध्यन्ति तस्य ताः ॥'। नीवाटी.

परिगृहीतासु स्त्रीषु प्रियाप्रियत्वं न मन्येत ॥

अथ परिगृहीतासु स्त्रीषु पुरुषेण यत्कर्तव्यं तदाह– परिगृहीतास्विति । न मन्येत । किं तत् ? प्रियाप्रियत्वम् । कासु ? स्त्रीषु । किंविशिष्टासु स्त्रीषु ? परिगृहीतासु विवाहितासु । याः स्त्रियो भवन्ति विवाहिताः तासु समत्वेन वर्तितव्यं प्रियाप्रियत्वे विषये । तथा च भागुरिः– 'समत्वेनैव द्रष्टव्या याः स्त्रियोऽत्र

विवाहिताः । विशेषो नैव कर्तव्यो नरेण श्रियमिच्छता ॥ ' । नीवाटी.

**कारणवशान्निम्बोऽप्यनुभूयत एव ॥**

अथ दुर्भगास्वपि स्त्रीषु यथा वर्तितव्यं तदाह– कारणवशादिति । यस्मादेतदुक्तमाचार्येण– स्त्रीषु प्रियाप्रियत्वं न कुर्यात् । यतश्च अनुभूयते सेव्यते । कोऽसौ ? निम्बोऽपि । कस्मात् ? कारणवशात् प्रयोजनवशतः । यथा निम्बोऽपि भक्ष्यते औषधार्थे तथा दुर्भगाऽपि स्त्री विरूपाऽपि सेवनीया, नो चेदपमानिता सती सा वधादिकं चिन्तयति भर्तुः । तथा च भारद्वाजः– ' दुर्भगाऽपि विरूपाऽपि सेव्या कान्तेन कामिनी । यथौषधकृते निम्बः कटुकोऽपि प्रदीयते ॥ ' । नीवाटी.

**चतुर्थदिवसे स्नाता स्त्री तीर्थं तीर्थोपरोधे महानधर्मानुबन्धः ॥**

अथ यस्मिन् काले स्त्री अवश्यमेव सेव्यते तथाऽऽह– चतुर्थेति । ऋतुकाले संजाते त्रीणि दिनानि यावदपवित्रा स्त्री भवति, चतुर्थे दिवसे पुनस्तीर्थं भवति पवित्रा भवति । किंविशिष्टा सती ? स्नाता सती । एतस्मात्कारणात्तीर्थोपरोधे कृते परित्यागे कृते महान् अधर्मानुबन्धः धर्मक्षतिः भवति । तथा यश्चतुर्थदिवसे स्त्रियं न भजते तस्य महती क्षतिर्भवति । तथा च बादरायणः– ' ऋतुस्नातां न यो नारीं भजते पापकृत्तमः । न तस्य हव्यं गृह्णन्ति देवाः कव्यं च पूर्वजाः ॥ ' । नीवाटी.

**ऋतावपि स्त्रियमुपेक्षमाणः पितॄणामृणभाजनम् ॥**

अथ ऋतुस्नातां स्त्रियं न भजति तस्य यद्भवति तदाह– ऋताविति । ऋणभाजनं भवति । केषाम् ? पितॄणां पूर्वजानाम् । कोऽसौ ऋणभाजनं भवति ? उपेक्षमाणः अगच्छन् पुरुषः । काम् ? ऋतुस्नातां स्त्रियम् । तथा च गर्गः– ' ऋतुं यच्छति नो योऽत्र भार्यायाः स्नानजे दिने । तस्य देवा न गृह्णन्ति हव्यं कव्यं च पूर्वजाः ॥ ' । नीवाटी.

**अवरुद्धाः स्त्रियः स्वयं नश्यन्ति स्वामिनं वा नाशयन्ति ॥**

अथ स्त्रीणामृतुमप्रदातुः पुरुषस्य यद्भवति तदाह– अवरुद्धा इति । याः स्त्रियः अवरुद्धाः उद्वाहिताः भवन्ति ऋतुमात्रेणापि न संभाव्यन्ते, ताः द्वाभ्यामेकतमं कुर्वन्ति । किं वा ? स्वयं नश्यन्ति अथवा पतिं नाशयन्ति । तस्मात्पुरुषेणापि अवश्यं स्त्रीणां ऋतुर्देयः । तथा च गर्गः– ' ऋतुकाले च संप्राप्ते न भजेद्यस्तु कामिनीम् । तद्दुःखात्सा प्रणश्येत स्वयं वा नाशयेत्पतिम् ॥ ' । नीवाटी.

**न स्त्रीणामकर्तव्ये मर्यादाऽस्ति वरमविवाहो नोढोपेक्षणम् ॥**

अथर्तुकाले स्त्रियो वर्जिता यत्कुर्वन्ति तदाह– नेति । नास्ति न विद्यते । काऽसौ ? मर्यादा । कासाम् ? स्त्रीणाम् । कस्मिन् ? अकर्तव्ये । तस्माद्वरं वध्वानं(?) अविवाहः, न ऊढानां विवाहितानां उपेक्षणं ऋतोरप्रदानम् । तथा च भार्गवः– ' नाकृत्यं विद्यते स्त्रीणामपमाने कृते सति । अविवाहो वरस्तस्मान्न तूढानां विवर्जनम् ॥ ' । नीवाटी.

**अकृतरक्षस्य किं कलत्रेणाकृषतः किं क्षेत्रेण ॥**

गतार्थमेतत् । नीवाटी.

**सपत्नीविधानं पत्युरसमञ्जसं च विमाननमपत्याभावश्च चिरविरहश्च स्त्रीणां विरक्तिकारणानि ॥**

अथ स्त्रीणां यानि विरक्तिकारणानि तान्याह– सपत्नीति । एतानि पञ्च स्त्रीणां विरक्तिकारणानि । तस्मान्न कार्याणि । एकं सपत्नीविधानं तावत् यदन्या भार्या, न विशेषः कार्यः । पत्युरसमञ्जसं पत्युर्मनोमलिनता । विमाननं अपमानम् (कार्यम् ?) । अपत्याभावः वन्ध्यता । तथा चिरविरहश्च चिरकाले देशान्तरगमनं पत्युः । तथा च जैमिनिः– ' सपत्नी वाऽसमानत्वमपमानोऽनपत्यता । देशान्तरगतिः पत्युः स्त्रीणां रागं हरन्त्यमी ॥ ' । नीवाटी.

**न स्त्रीणां सहजो गुणो दोषो वाऽस्ति किंतु नद्यः समुद्रमिव यादृशं पतिमाप्नुवन्ति तादृश्यो भवन्ति स्त्रियः ॥**

अथ स्त्रीणां भूयोऽपि स्वरूपमाह– नेति । आसां स्त्रीणां सहजो गुणो दोषो वा नास्ति, भर्तुर्गुणेन गुणा भवन्ति, दोषेण दोषाः । केन दृष्टान्तेन ? यादृशं पतिमाप्नुवन्ति तादृश्यो भवन्ति । का इव ? नद्य इव । यथा नद्यः समुद्रं पतिं प्राप्य तादृग्रूपा भवन्ति । तथा च शुक्रः– 'गुणो वा यदि वा दोषो न स्त्रीणां सहजो भवेत् । भर्तुः सदृशतां यान्ति समुद्रस्याऽऽपगा यथा ॥' । नीवाटी.

**स्त्रीणां दौत्यं स्त्रिय एव कुर्युस्तैरश्चोऽपि पुंयोगः स्त्रियं दूषयति किं पुनर्मानुष्यः ॥**

अथ भूयोऽपि स्त्रीस्वरूपमाह– स्त्रीणामिति । स्त्रीणां विषये यद्दौत्यं तत्स्त्रीसकाशात् कारणीयम्, न पुनः पुरुषाणां सकाशात् । यतः पुंयोगस्तैरश्चोऽपि तिर्यक्संभवोऽपि गर्दभाश्वसमुत्थोऽपि दृष्टोऽपि दूषयति सदोषं करोति स्त्रियम्, किं पुनर्मनुष्यसंभवः संयोगः ? तथा च गुरुः– 'स्त्रीणां दौत्ये नरेन्द्रेण प्रेष्या नार्यो नरो न वा । तिरश्चोऽपि च पुंयोगो दृष्टो दूषयति स्त्रियम् ॥' । अनु च– 'पतिव्रताऽपि या नारी दृष्ट्वाऽश्वखरसंनिभम् । सुतरां कुरुते वाञ्छां तं मैथुनसमुद्भवम् ॥' । नीवाटी.

**वंशविशुद्ध्यर्थमनर्थपरिहारार्थं स्त्रियो रक्ष्यन्ते न भोगार्थम् ॥**

अथ स्त्रियो यदर्थं रक्ष्यन्ते तदाह– वंशेति । एताः स्त्रियः कस्माद्रक्ष्यन्ते ? वंशविशुद्ध्यर्थम्, येन वंशस्य अन्वयस्य विशुद्धिर्भवति । अनर्थपरिहारार्थं च रक्ष्यन्ते, न भोगार्थम् । गलार्थं च । तथा च गुरुः– 'वंशस्य च विशुद्ध्यर्थं तथाऽनर्थक्षयाय च । रक्षितव्याः स्त्रियो विज्ञैर्न भोगाय च केवलम् ॥' । नीवाटी.

**भोजनवत्सर्वसमानाः पण्याङ्गनाः कस्तासु हर्षामर्षयोरवसरः ॥**

अथ पण्याङ्गनानां स्वरूपमाह– भोजनवदिति । पण्याङ्गनाः वेश्याः समानाः सर्वसाधारणाः । कथम् ? भोजनवत् । यथा भोजनकाले कमपि पुरुषं दृष्ट्वा प्रोच्यते भोजनं क्रियतां शोभार्थं तथा वेश्याऽपि सेवनीया शोभार्थं कौतुकार्थं च । कस्तासामर्थे हर्षोऽमर्षो वा ? प्राप्तायामानन्दः क्रियते न, नाप्राप्तायां कोपः कार्य इति । तथा च गुरुः– 'सर्वसाधारणा वेश्या यथा भोजनकर्मणि । न प्राप्त्या कारयेत्तुष्टिं तासां कोपो न बाह्यतः ॥' । नीवाटी.

**यथाकामं कामिनीनां संग्रहः परमनीर्ष्यावान् कल्याणावहः प्रक्रमोऽदौवारिके द्वारे को नाम न प्रविशति ॥**

अथ वेश्यासंग्रहणस्वरूपमाह– यथाकाममिति । यथाकामं यथासौख्यं कामिनीनां वेश्यानां संग्रहः कार्यः । परमनीर्ष्यावान् केवलं ईर्ष्यारहितः संग्रहः कल्याणाय कल्याणप्रदो भवति, ईर्ष्यारहितः स तस्याः प्रक्रमः अनुष्ठानं यतः । तासां गृहे सर्वोऽपि जनः प्रविशति, न कश्चिन्निवार्यते । येन कारणेनादौवारिके द्वारे को न प्रविशति ? यत्र द्वारे द्वारपालो न भवति । तथा च जैमिनिः– 'वेश्याः कामं प्रसेव्याश्च परमीर्ष्याविवर्जितैः । सर्वगम्यं भवेद्द्वारं यतस्तासामहर्निशम् ॥' । नीवाटी.

**मातृव्यञ्जनविशुद्धा राजवसत्युपरिस्थायिन्यः स्त्रियः संभक्तव्याः ॥**

अथ पुरुषेण स्त्रीणां विषये यत्कर्तव्यं तदाह– मातृव्यञ्जनेति । याः स्त्रियः मातृव्यञ्जनविशुद्धा भवन्ति मातृचिह्नं यत्नेन या विशुद्धा भवन्ति, राजवसत्युपरिस्थायिन्यो भवन्ति वेश्याः स्त्रियः ताः संभक्तव्याः सेवनीया इत्यर्थः । तथा च भागुरिः– 'मातृचिह्नविशुद्धा या राजहर्म्ये वसन्ति च । ता वेश्याः सेवनीयाश्च नान्याः सेव्या विचक्षणैः ॥' । नीवाटी.

**दर्दुरस्य सर्पगृहप्रवेश इव स्त्रीगृहप्रवेशो राज्ञः ॥**

अथ राज्ञः स्त्रीगृहप्रवेशनिरतस्य यद्भवति तदाह– दर्दुरस्येति । राज्ञः योऽसौ स्त्रीगृहप्रवेशः स किंविशिष्टः ? सर्पगृहप्रवेश इव । कस्य ? दर्दुरस्य । यथा मण्डूकः सर्पगृहे प्रविष्टो न जीवति तथा राज्ञोऽपि स्त्रीगृहप्रवेशः स्यात् । तथा च गौतमः– 'प्रविष्टो हि यथा भेको बिलं

सर्पस्य मृत्युभाक् । तथा संजायते राजा प्रविष्टो वेश्मनि स्त्रियः ॥ '। नीवाटी.

**न हि स्त्रीगृहादायातं किंचित्स्वयमनुभवनीयम् ॥**

अथ राज्ञा स्त्रीणां विषये यत्कर्तव्यं तदाह– नेति । नानुभवनीयं न भक्षणीयमित्यर्थः । किंचिदपि स्वल्पमपि वस्तु । किंविशिष्टं वस्तु ? आयातं प्राप्तम् । कस्मात् ? स्त्रीगृहात् । कथं न भक्षणीयम् ? स्वयं आत्मना अर्थाद्राज्ञा । तथा च बादरायणः– ' स्त्रीणां गृहात्समायातं भक्षणीयं न भूभुजा । किंचित्स्वल्पमपि प्राणात्रक्षितुं योऽभिवाञ्छति ॥ '। नीवाटी.

**नापि स्वयमनुभवनीयेषु स्त्रियो नियोक्तव्याः ॥**

स्वयमनुभवनीयेषु स्वयं सेव्येषु भोजनाद्येषु स्त्रियो न नियोक्तव्याः न प्रेरणीयाः, यतो विषादिदोषैर्दूषयन्ति । तथा च भृगुः– ' भोजनादिषु सर्वेषु नाऽऽत्मीयेषु नियोजयेत् । स्त्रियो भूमिपतिः क्वापि मारयन्ति यतश्च ताः ॥ '। नीवाटी.

**संवननं स्वातन्त्र्यं चाभिलषन्त्यः स्त्रियः किं नाम न कुर्वन्ति ॥**

अथ स्त्रियो यत्कुर्वन्ति तदाह– संवननमिति । एताः स्त्रियः किमनिष्टं न कुर्वन्ति ? अपि तु सर्वं कुर्वन्ति । संवननं कार्मणं अभिचारकं तावदभिलषन्ति, तथा स्वातन्त्र्यं स्वेच्छया वर्तनं वाञ्छन्ति । तथा च भारद्वाजः– ' कार्मणं स्वेच्छयाऽऽचारं सदा वाञ्छन्ति योषितः । तस्मात्तासु न विश्वासः प्रकर्तव्यः कथंचन ॥ '। नीवाटी.

**श्रूयते हि किल– आत्मनः स्वच्छन्दवृत्तिमिच्छन्ती विषविदूषितगण्डूषेण मणिकुण्डला महादेवी यवनेषु निजतनुजराज्यार्थं जघान राजानमङ्गराजम् ॥**

अथ स्त्रियो विरक्ताः स्वातन्त्र्यमिच्छन्त्यो यत्कुर्वन्ति दृष्टान्तेन तदाह– श्रूयत इति । गतार्थमेतत् । एतत्संविधानकं बृहत्कथायाम् । नीवाटी.

**विषालक्तकदिग्धेनाधरेण वसन्तमतिः शूरसेनेषु सुरतविलासम्, विषोपलिप्तेन मणिना वृकोदरी दशार्णेषु मदनार्णवम्, निशितनेमिना मुकुरेण मदिराक्षी मगधेषु मन्मथविनोदम्, कबरीनिगूढेनासिपत्रेण चन्द्ररसा पाण्ड्येषु पुण्डरीकमिति ॥**

अथान्यासामपि दुष्टस्त्रीणां संविधानानि लिख्यन्ते– विषालक्तकेति । एतानि पञ्च संविधानकानि गतार्थानि बृहत्कथायां ज्ञेयानि । नीवाटी.

**अमृतरसवाप्य इव श्रीजसुखोपकरणं स्त्रियः ॥**

अथ स्त्रीणां माहात्म्यमाह– अमृतेति । एताः याः स्त्रियः ताः किंविशिष्टाः ? श्रीजसुखोपकरणं श्रीः लक्ष्मीः तस्याः जातं श्रीजम्, श्रीजं च तत्सुखोपकरणं च श्रीसंभवसुखद्रव्यं च । काः ? स्त्रियः । का इव ? अमृतरसवाप्य इव । आनन्दकारिण्य इत्यर्थः । तथा च शुक्रः– ' लक्ष्मीसंभवसौख्यस्य कथिता वामलोचनाः । यथा पीयूषवाप्यश्च मनआह्लाददाः सदा ॥ '। नीवाटी.

**कस्तासां कार्याकार्यविलोकनेऽधिकारः ॥**

अथ तासामेव माहात्म्यमाह– क इति । या एता अमृतवाप्युपमाः स्त्रियस्तासां कार्याकार्यविलोकने कोऽधिकारः किं प्रयोजनम् ? अपि तु न किंचित् । किंतु अनुवर्तनीयाः सर्वदैव ताः । तथा च वसिष्ठः– ' स्त्रीणां दुश्चरितं किंचिन्न विचार्यं विचक्षणैः । नाभिबाह्यं न जीवोऽतो यतस्ता अमृतोपमाः ॥ '। नीवाटी.

**अपत्यपोषणे गृहकर्मणि शरीरसंस्कारे शयनावसरे स्त्रीणां स्वातन्त्र्यं नान्यत्र ॥**

अथ स्त्रीणां येषु येषु कृत्येषु स्वातन्त्र्यं दीयते तान्याह– अपत्यपोषण इति । आसां स्त्रीणां यत्स्वातन्त्र्यं स्वच्छन्दता, एतेषु चतुर्षु स्थानेषु दीयते, नान्यत्र । अपत्यपोषणे तावत् बालपुष्टिकरणे, तथा गृहकर्मणि गृहकृत्ये, तथा शरीरसंस्कारे निजकायमण्डने, तथा शयनावसरे शयनप्रस्तावे । तथा च भागुरिः– ' स्वातन्त्र्यं नास्ति नारीणां मुक्त्वा कर्मचतुष्टयम् । बालानां पोषणं कृत्यं शयनं चाङ्गभूषणम् ॥ '। नीवाटी.

**अतिप्रसक्तेः स्त्रीषु स्वातन्त्र्यं करपत्रमिव पत्युर्नाविदार्य हृदयं विश्राम्यति ॥**

अथातिसक्तस्य स्त्रीणां पुरुषस्य यद्भवति तदाह– अतिप्रसक्तेरिति । अतिप्रसक्तेर्हि सकाशात् स्त्रीषु यत् स्वातन्त्र्यम्, तत्किं करोति ? न विश्राम्यति न विश्रामं गच्छति । किं कृत्वा ? अविदार्य । किं तत् ? हृदयम् । कस्य ? पत्युः कान्तस्य । किमिव ? करपत्रमिव । तथा च गर्गः– 'स्वातन्त्र्यं यद्भवेत्स्त्रीणां सुरतेषु यथेच्छया । मर्मण्यसक्तृतत्त्वेन(?) हृदयं पुरुषस्य च ॥' ।

नीवाटी.

**स्त्रीवशपुरुषो नदीप्रवाहपतितपादप इव न चिरं नन्दति ॥**

अथ स्त्रीवशगतस्य पुरुषस्य यद्भवति तदाह– स्त्रीवशेति । न दीर्घकालं वृद्धिं याति । कोऽसौ ? पुरुषः । किंविशिष्टः ? स्त्रीवशगः । क इव ? पादप इव । किंविशिष्टः पादपः ? नदीप्रवाहपतितः । यथा नदीप्रवाहे पतितो वृक्षश्चिरं कालं न वृद्धिं याति तथा पुरुषः स्त्रीवशगतः । तथा च शुक्रः– 'न चिरं वृद्धिमाप्नोति यः स्त्रीणां वशगो भवेत् । नदीप्रवाहपतितो यथा भूमिसमुद्भवः ॥' ।

नीवाटी.

**पुरुषमुष्टिस्था स्त्री खड्गयष्टिरिव कमुत्सवं न जनयति ॥**

अथ स्त्रीमाहात्म्यमाह– पुरुषेति । कमुत्सवं न जनयति ? अपि सर्वमपि करोति । का सा ? स्त्री । केव ? खड्गयष्टिरिव करवालवल्लीव । या स्त्री पुरुषमुष्टिस्था भवति पतिव्रतत्वसहिता भवति सा भर्तुः कं न कुर्यान्मनोरथमिति । 'या नारी वशगा पत्युः पतिव्रतपरायणा । सा स्वपत्युः करोत्येव मनोराज्यं हृदि स्थितम् ॥' ।

नीवाटी.

**नातीव स्त्रियो व्युत्पादनीयाः स्वभावसुभगोऽपि शास्त्रोपदेशः स्त्रीषु शस्त्रीषु पयोलव इव विषमतां प्रतिपद्यते ॥**

अथ स्त्रीणां पुरुषेण यत्कर्तव्यं तदाह– नातीवेति । स्त्रियः पत्या पुरुषेण नातीव व्युत्पादनीयाः नातिशयेन कामशास्त्रपण्डिताः कर्तव्याः, यतः स्वभावसुभगोऽपि कामशास्त्रोपदेशो विषमतां प्रतिपद्यते विरूपतां प्रतिपद्यते करोति । कासु ? स्त्रीषु । कास्विव ? शस्त्रीष्विव छुरिकास्विव । यथा पयोबिन्दुः छुरिकायां निर्मलायां विषमतामुत्पादयति विरूपतां नयति, एवं कुलस्त्रीणां स्वभावसुभगोऽपि कामशास्त्रोपदेशः कुलस्त्रीणां धर्मं दूषयति । तथा च भारद्वाजः– 'न कामशास्त्रतत्त्वज्ञाः स्त्रियः कार्याः कुलोद्भवैः । यतो वैरूप्यमायान्ति यथा शस्त्र्यम्बुसंगमात् ॥' ।

नीवाटी.

**अध्रुवेण साधिकेनाप्यर्थेन वेश्यामनुभवति ॥**

अथ वेश्याश्चिरं यथा पुरुषमनुभवन्ति तदाह– अध्रुवेणेति । यः पुरुषः अध्रुवेण चलेन अर्थेन साधिकेनापि वेश्यामनुभवति स चिरं प्रभूतं कालं तां सेवते । यः पुनर्नित्यदानेन स्वल्पेनापि सेवते तस्य त्रुटिर्भवति । तस्माद्वेश्याया नित्यमर्थो न देयः । स्वल्पोऽपि प्रभूतोऽपि कालान्तरेण देयः । येन साऽविद्यमानेऽप्यर्थे कृताशया न त्यजति । तथा च शुक्रः– 'वेश्यानां नित्यदानं यत्तद्धि दानं शुभं न हि । अपि स्तोकं प्रभूतं च चिरदत्तं सुसिद्धये ॥' ।

नीवाटी.

**विसर्जनाकारणाभ्यां तदनुभवे महाननर्थः ॥**

अथ वेश्यानां नित्यमेवाकारणविसर्जनाद्यैरनर्थौ भवतः । तावाह– विसर्जनेति । एता वेश्याः सर्वसामान्या भवन्ति तद्गच्छन्त्यो वा गृहादागच्छन्त्यो वा यदि कश्चिद्विद्वांस्तदनुभवं करोति ता अभिलषति । तद्धनलोभेन तं भजते ततश्च तेन सह प्राणान्तिकं युद्धं भवति स महाननर्थः । तस्माद्वेश्यानामकारणविसर्जनं न कार्यं किं वा गृहेषु कर्तव्यम्, अथ कौतुकमात्रं संसेव्य मोचनीयाः । तथा च गुरुः– 'किं वा गृहाः प्रकर्तव्याः किं वा कौतुकमात्रकम् । आनीय ताः प्रमोक्तव्या वेश्याः पुंभिर्विचक्षणैः ॥' ।

नीवाटी.

**वेश्यासक्तिः प्राणार्थहानिं कस्य न करोति ॥**

अथ वेश्यानां स्वरूपमाह– वेश्यासक्तिरिति । वेश्यानां विषये याऽसौ पुरुषस्य आसक्तिः अतीव व्यसनं तत्कस्य प्राणहानिं न करोति ? अपि तु सर्वस्य । तस्माद्वेश्या त्याज्या । तथा च नारदः– 'प्राणार्थहानिरेव स्याद्वेश्यायां

भुक्तितो नृणाम् । यस्मात्तस्मात्परित्याज्या वेश्या पुंभिर्धनार्थिभिः ॥ ' । नीवाटी.

**धनमनुभवन्ति वेश्या न पुरुषम् ॥**

अथ भूयोऽपि वेश्यास्वरूपमाह– धनमिति । या एता वेश्या उच्यन्ते ता धनमनुभवन्ति, न पुरुषम् । मूर्खः पुनरेवं जानाति ममैषा सानुरागा । यदि पुनर्धनं न प्रयच्छति तत्तत्संमुखमपि नावलोकयन्ति । तथा च भारद्वाजः– ' न सेवन्ते नरं वेश्याः सेवन्ते केवलं धनम् । धनहीनं यतो मर्त्यं संत्यजन्ति च तत्क्षणात् ॥ ' । नीवाटी.

**धनहीने कामदेवेऽपि न प्रीतिं बध्नन्ति वेश्याः ॥**

अथ भूयोऽपि वेश्यानां स्वरूपमाह– धनहीन इति । न बध्नन्ति कुर्वन्ति । काम् ? प्रीतिं स्नेहम् । काः ? वेश्याः । क्व ? धनहीने । किंविशिष्टे ? कामदेवेऽपि । तथा च भागुरिः– ' न सेव्यते धनैर्हीनः कामदेवोऽपि चेत्स्वयम् । वेश्याभिर्धनलुब्धाभिः कुष्ठी चापि निषेव्यते ॥ ' । नीवाटी.

**स पुमानायतिसुखी यस्य सानुशयं वेश्यासु दानम् ॥**

अथ भूयोऽपि वेश्यास्वरूपमाह– स इति । स पुमान् पुरुषः सुखी स्यात् सुखाढ्यो भवति । कस्याम् ? आयत्यां परिणामे भविष्यत्काले । यस्य किम् ? दानम् । किंविशिष्टम् ? सानुशयं सखेदम् । कासु ? वेश्यासु । यस्य पुरुषस्य वेश्यासु विषये सानुशयं दानं भवति स आयत्यां परिणामे सुखी भवति । तथा च नारदः– ' प्रदानं यस्य वेश्यायां भवेत्सानुशयं सदा । परिणामे सुखाढ्योऽयं जायते नात्र संशयः ॥ ' । नीवाटी.

**स पशोरपि पशुः यः स्वधनेन परेषामर्थवतीं करोति वेश्याम् ॥**

अथ वेश्यादानप्रसक्तस्य पुरुषस्य यद्भवति तदाह– स इति । सः पुरुषः सर्वेषां पशूनां मध्ये प्रधानः पशुः । यः किं करोति ? योऽर्थवतीं महार्थाम् । काम् ? वेश्याम् । केन ? स्वधनेन निजार्थेन । केषाम् ? परेषामन्येषाम् । आत्मनोऽपि तावद्वित्तक्षयं करोति, अन्येषामपि । तथा च वल्लभदेवः– ' आत्मवित्तेन यो वेश्यां महार्थां कुरुते कुधीः । अन्येषां वित्तनाशाय पशूनां पशुः सर्वतः ॥ ' । नीवाटी.

**आचित्तविश्रान्तेः वेश्यापरिग्रहः श्रेयान् ॥**

अथ पुरुषस्य वेश्यासंग्रहो यथा श्रेयःप्रदो भवति तदाह– आचित्तेति । आङ्शब्दो मर्यादायाम् । आचित्तविश्रान्तेः चित्तविश्रान्तिं यावत् पुरुषेण वेश्यासंग्रहः कार्यः, न सदैव । एतदुक्तं भवति– वेश्यां दृष्ट्वा यदि चित्तं चलति तत्सेवनीया ततो मोचनीया । एवं कुर्वतः श्रेयः सौख्यं सदैव भवति । तथा च राजपुत्रः– ' वेश्यादर्शनतश्चित्तं यदि वाञ्छा करोति च । तत्र सेव्याः प्रमोक्तव्या नैव नित्यं कदाचन ॥ ' । नीवाटी.

**सुरक्षिताऽपि वेश्या स्वां प्रकृतिं न मुञ्चति ॥**

अथ पुरुषस्य वेश्यासंग्रहात् यद्भवति तदाह– सुरक्षिताऽपीति । न मुञ्चति । काऽसौ ? वेश्या । काम् ? प्रकृतिम् । किंविशिष्टां स्वाम् ? पुरुषान्तरसेवनलक्षणाम् । लोभोपहता सती पुरुषविशेषान् भजति । तस्मात्तस्याः संग्रहो न कार्यः । अथवा नास्ति तस्या दोषः, सर्वेऽपि प्राणिनः स्वां प्रकृतिं भजन्ते । तथा च गुरुः– ' यद्वेश्या लोभसंयुक्ता स्वीकृताऽपि नरोत्तमैः । सेवयेत्पुरुषानन्यान् स्वभावो दुस्त्यजो यतः ॥ ' । नीवाटी.

**या यस्य प्रकृतिः सा तस्य दैवेनापि नापनेतुं शक्यते ॥**

अथ वेश्यादृष्टान्तेन जन्तूनां प्रकृतेः स्वरूपमाह– येति । न शक्यते । काऽसौ ? प्रकृतिः स्वभावलक्षणा । किं कर्तुम् ? अपनेतुं नाशयितुम् । या यस्य संभवा सहसा । केन ? दैवेनापि विधात्राऽपि । आस्तां तावन्मनुष्येण । तथा च नारदः– ' व्याघ्रः सेवति काननं सुगहनं सिंहो गुहां सेवते, हंसः सेवति पद्मिनीं कुसुमितां गृध्रः स्मशानस्थलीम् । साधुः सेवति साधुमेव सततं नीचोऽपि नीचं जनम्, या यस्य प्रकृतिः स्वभावजनिता दुःखेन सा त्यज्यते ॥ ' । नीवाटी.

**सुभोजितोऽपि श्वा किमशुचीन्यस्थीनि परिहरति ॥**

अथ भूयोऽपि श्वप्रकृतिदृष्टान्तेनाऽऽत्मप्रकृतिस्वरूपमाह— सुभोजितोऽपीति । श्वा सारमेयः सुभोजितोऽपि तृप्तिं नीतोऽपि किमशुचीनि अमेध्यानि अस्थीनि परिहरति ? अपि न परिहरति । तथा च भृगुः— 'स्वभावो नान्यथा कर्तुं शक्यः केनापि कुत्रचित् । श्वेव सर्वरसान् भुक्त्वा विनाऽमेध्यान्न तृप्यति ॥' । नीवाटी.

**न खलु कपिः शिक्षाशतेनापि चापल्यं परिहरति ॥**

भूयोऽपि स्वप्रकृतिस्वरूपमाह— न खल्विति । कपिः वानरः न परिहरति न त्यजति । किं तत् ? चापल्यं चपलत्वम् । केन कृत्वा ? शिक्षाशतेनापि । तथा चात्रिः— 'प्रोक्तः शिक्षाशतेनापि न चापल्यं त्यजेत्कपिः । स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा ॥' ।

नीवाटी.

**इक्षुरसेनापि सिक्तो निम्बः कटुरेव ॥**

अथ भूयोऽपि स्वप्रकृतिस्वरूपमाह— इक्षुरसेनापीति । निम्बः वृक्षविशेषः, स कटुरेव । किंविशिष्टः ? सिक्तः । केन ? इक्षुरसेनापि । तथा च गर्गः— 'पिशुनं दानमाधुर्यं संप्रयाति कथंचन । सिक्तश्चेक्षुरसेनापि दुस्त्यजा प्रकृतिर्निजा ॥' । नीवाटी.

दायादपोषणं न कार्यम्

**सन्मानदिवसादायुः कुल्यानामपरिग्रहहेतुः ॥**

अथ कुल्यानां पोषणे यद्भवति तदाह— सन्मानेति । कुल्यानां सजातीयानां दायादानां सन्मानदिवसादारभ्य यः आयुः तत्प्रदानं ताप्रग्रहः ( ? ) हेतुः विनाशकारणम् । तथा च शुक्रः— 'कुल्यानां पोषणं यच्च क्रियते मूढपार्थिवैः । आत्मनाशाय तज्ज्ञेयं तस्मात्त्याज्यं सुदूरतः ॥' । नीवाटी.

**तन्त्रकोशवर्धिनी वृत्तिर्दायादान् विकारयति ॥**

अथ दायादानां कोशतन्त्रवृद्ध्या यद्भवति तदाह— तन्त्रेति । विकारयति विकारं नयति । काऽसौ ? वृत्तिः वर्तनलक्षणा । कान् ? दायादान् । किंविशिष्टा ? तन्त्रकोशवर्धिनी । तन्त्रं हस्त्यश्वादिबलम् । कोशः भाण्डागारम् । या वृत्तिर्वर्धयति सा कृता सती दायादान् सविकारान् करोति । तथा च गुरुः— 'वृत्तिः कार्या न कुल्यानां यया सैन्यं विवर्धते । सैन्यवृद्ध्या तु ते घ्नन्ति स्वामिनं राज्यलोभतः ॥' । नीवाटी.

दायादपोषणविधिः

**भक्तिविश्रम्भादव्यभिचारिणं कुल्यं पुत्रं वा संवर्धयेत् ॥**

अथ कुल्यानामपि यथा तन्त्रकोशवृद्धिः कार्या तथाऽऽह— भक्तीति । संवर्धयेत् वृद्धिं नयेत् । कम् ? कुल्यं दायादम् । कथंभूतम् ? अव्यभिचारिणम् । कदाचिद्योऽव्यभिचारिणं विकारं न करोति । कस्मात् ? भक्तिविश्रम्भात् भक्तिव्याजात् । तथा च नारदः— 'वर्धनीयोऽपि दायादः पुत्रो वा भक्तिभाग्यदि । न विकारं करोति स्म ज्ञात्वा साधुस्ततः परम् ॥' ।

नीवाटी.

**विनियुञ्जीत उचितेषु कर्मसु ॥**

अथ दायादस्य पुत्रस्य साधुवृत्तस्य यत्कर्तव्यं तदाह— विनियुञ्जीतेति । ततोऽविकारं ज्ञात्वोचितेषु कर्मसु विनियुञ्जीत योजयेत् । केषु ? कर्मसु अधिकारेषु । किंविशिष्टेषु ? उचितेषु योग्येषु । तथा च वल्लभदेवः— 'स्थानेष्वेव नियोज्यन्ते भृत्या आभरणानि च । न हि चूडामणिः पादे प्रभवामीति बध्यते ॥' । नीवाटी.

भर्तुरादेशपालनं भृत्यकर्तव्यम्

**भर्तुरादेशं न विकल्पयेत् ॥**

अथ भृत्येन भर्तुः यत्कर्तव्यं तदाह— भर्तुरिति । भर्तुः स्वामिनः योऽसावादेशस्तं यः सद्भृत्यो भवति स न विकल्पयति । तथा च गुरुः— 'स्वाम्यादिष्टस्तु यो भृत्यो न विकल्पपरो भवेत् । समुद्रतरणार्थाय प्रविशेद्वा हुताशनम् ॥' । नीवाटी.

**अन्यत्र प्राणबाधाबहुजनविरोधपातकेभ्यः ॥**

अथ भृत्येन स्वाम्यादेशो न कार्यस्तदाह— अन्यत्रेति । प्राणबाधा प्राणविनाशः न ( ? ) तमादेशं बहुजनानां विरोधः पातकं च एतान् मुक्त्वा, नान्यादेशं विकल्पयेत् ।

नीवाटी.

बलवद्दायादवशीकरणम्

**बलवत्पक्षपरिग्रहेषु दायिष्वाप्तपुरुषपुरःसरो विश्वासो वशीकरणं गूढपुरुषनिक्षेपः प्रणिधिर्वा ॥**

अथ बलवान् यस्य दायादस्य पक्षो भवति तस्य वशीकरणं यथा भवति तदाह– बलवत्पक्षेति । आप्ताः निजाः ये पुरुषास्तैरग्रेसरैः प्रजल्पमानैर्यो विश्वासः समुत्पद्यते तद्वशीकरणं तेषु, अन्यच्च गूढचरगुप्तप्रणिधिस्तेषु वशीकरणं यस्तेषां सर्वं चेष्टितं निवेदयतीति । तथा च शुक्रः– 'बलवत्पक्षदायादा आप्तद्वारेण वश्यगाः । भवन्ति चातिगुप्तैश्च चरैः सम्यग्विशोधिताः ॥'। नीवाटी.

**दुर्बोधे सुते दायादे वा सम्यग्युक्तिभिर्दुरभिनिवेशमवतारयेत् ॥**

अथ दुर्बोधे सुते दायादे वा यत्कर्तव्यं तदाह– दुर्बोध इति । अवतारयेत् स्फोटयेत् । किम् ? दुरभिनिवेशं मूर्खाग्रहम् । कस्मिन् सति ? दुर्बोधे सति मूर्खत्वयुक्ते सति । कस्मिन् ? सुते पुत्रे दायादे वा दुरभिनिवेशमवतारयेत् । काभिः कृत्वा ? युक्तिभिः प्रपञ्चैः । एतदुक्तं भवति– यदा तु पुत्रो बान्धवो वा विरुद्धो भवति तदा युक्तिभिः संतोषः कार्यः । तथा च रैभ्यः– 'पुत्रो वा बान्धवो वाऽपि विरुद्धो जायते यदा । तदा संतोषयुक्तस्तु सत्कार्यो भूतिमिच्छता ॥'। नीवाटी.

**साधुषूपचर्यमाणेषु विकृतिभजनं स्वहस्ताङ्गाराकर्षणमिव ॥**

अथ साधूनां सुचाराणां यो विकृतिं करोति तस्य यद्भवति तदाह– साधुष्विति । साधुषु लोकेषु उपचर्यमाणेषु उपकारं क्रियमाणेषु यद्विकृतिभजनं विरुद्धं क्रियते तत् किंविशिष्टमिव ? स्वहस्ताङ्गाराकर्षणमिव स्वहस्तेन तावदङ्गाराणां कर्षणं क्रियते । तथा च भागुरिः– साधूनां विनयाढ्यानां विरुद्धानि करोति यः । स करोति न संदेहः स्वहस्तेनाग्निकर्षणम् ॥'। नीवाटी.

शुद्धाशुद्धापत्यकारणानि

**क्षेत्रबीजयोर्वैकृत्यमपत्यानि विकारयति ॥**

अथ मातृपितृभ्यामशुद्धाभ्यामपत्यानि यादृक्षाणि भवन्ति तदाह– क्षेत्रेति । तथा च– 'यथा पुत्रः समाचष्टे मातुः शीलं स्वकैर्गुणैः । तथा स्वादु जलं लोके तुः (?) ख्याति शुभाशुभम् ॥'। क्षेत्रं माता, बीजं पिता, ताभ्यां यद्वैकृत्यं अकुलीनता स्यात् अपत्यानि तद्विकारयति विकृतिं नयति । अपत्यानां चेष्टितेन मातृपितृभ्याम-कुलिनता ज्ञायते । तथा च गर्गः– 'परभूतान्यपत्यानि तानि स्युर्यौवने स्थिते । तानि बुद्धिं वदन्ति स्म पितृमातृसमुद्भवाम् ॥'। नीवाटी.

**कुलविशुद्धिरुभयतः प्रीतिर्मनःप्रसादोऽनुपहतकालसमयश्च श्रीसरस्वत्यावाहनमन्त्रपूतपरमान्नोपयोगश्च पुरुषोत्तममवतारयन्ति ॥**

अथ पुरुषोत्तमस्य यथोत्पत्तिर्भवति तदाह– कुलविशुद्धिरिति । एते ये पदाङ्काः प्रोक्तास्तैर्यथोदितं तेनानुष्ठितेन गर्भाधानेन गर्भग्रहणसमये पुरुषोत्तमं पुरुषप्रधानं अवतारयन्ति जनयन्ति । कथम् ? तावत् कुलविशुद्धिः मातृपितृसमुद्भवा । ततश्च ताभ्यामुभयतः प्रीतिः परस्परं स्नेहः । ततश्च मनःप्रसादः एकचित्तता । ततश्चानुपहतकालसमयश्च निरुपहतवेला धूलिकादिभिर्दोषैः । तथा श्रीसरस्वत्यावाहनमन्त्रपूतपरमान्नोपयोगश्च श्रीः लक्ष्मीः, सरस्वती भारती, द्वाभ्यामपि ये मन्त्रास्तैरभिमन्त्र्य पूतं पवित्रीकृतं परमं उत्कृष्टं अन्नं तस्योपयोगः भक्षणम् । तेन यत् समयसुरसेन (?) यो गर्भो भवति स पुरुषोत्तमो भवतीति । तथा च शुक्रः– 'बीजे योनौ तथाऽऽहारे यस्य नो विकृतिर्भवेत् । तथा मैथुनसंपर्के श्रेष्ठः संजायते पुमान् ॥'। नीवाटी.

**गर्भशर्मजन्मकर्मापत्येषु देहलाभात्मलाभयोः कारणं परमम् ॥**

अथापत्येषु लाभालाभद्वयमाह– गर्भेति । अपत्येषु कर्मरूपेषु एतद्यथासंभाव्येन देहलाभात्मलाभयोः कारणमस्ति । कस्य कस्य किम् ? देहस्य तावद्गर्भशर्म । यदि माताऽपत्येन शर्मवती तदाऽपत्यस्यापि देहं शरीरं पुष्टमारोग्यं भवति । यदि जन्मकर्म जन्मविद्यानन्दशुभं भवति शुभग्रहनिरीक्षितो भवति तदाऽऽत्मलाभः जीवितलाभ इत्यर्थः । तदपत्यमुत्तममुत्कृष्टं कारणमिति । तथा च गुरुः–

"गर्भस्थानामपत्यानां यदि सौख्यं प्रजायते। तद्भवेद्धि शुभो देहो जीवितव्यं च जन्मनि ॥'। नीवाटी.

दुष्कृतलक्षणानि

**शुष्कश्यामसुखता वाक्स्तम्भः स्वेदो विजृम्भणमतिमात्रं वेपथुः प्रस्खलनमास्यप्रेक्षणमावेगः कर्मणि भूमौ वाऽनवस्थानमिति दुष्कृतं कृतवतः करिष्यतो वा लिङ्गानि ॥**

अथ पापाचारस्य सभायां गतस्य लक्षणमाह– शुष्केति। दुष्कृतं पापं कृतवतः पुरुषस्य करिष्यतो वा सभां नीतस्यैतानि पूर्वोक्तानि लिङ्गानि चिह्नानि भवन्ति। तैरवलक्षयेत्पापाचारोऽयम्। कानि कानि लिङ्गानि? शुष्कस्तावद्भूत्वा कृष्णमुखो भवति। तथा वाक्स्तम्भः वक्तुं न शक्नोति। तथा प्रस्वेदः प्रस्विद्यति। तथा विजृम्भणं मुखप्रसरणं मुहुर्मुहुः करोति। तथाऽतिमात्रं वेपथुः अतिशयेन कम्पनम्। तथा प्रस्खलनं प्रस्खलनयुक्तैः पदैः समागच्छति। तथाऽऽस्यप्रेक्षणं अन्यथा वाऽन्यथा वर्तते। तथा आवेगः कर्मणि कृत्ये यामाह (?)। तथा भूमौ अनवस्थानं एकस्मिन् स्थाने न तिष्ठतीति। तथा च शुक्रः– 'आयाति स्खलितैः पादैः सभायां पापकर्मकृत्। प्रस्वेदनेन संयुक्तो अधोदृष्टिः सुर्म्मनाः (?) ॥'। नीवाटी.

अपरीक्षितानि स्थानवाहनतीर्थमार्गभोग्यादीनि भजनीयानि स्वीकार्याणि वा

**[1]आत्मरक्षायां कदाचिदपि न प्रमाद्येत ॥**

**नाऽऽप्ताशोधितपरस्थानमुपेयात् ॥**

**नाऽऽप्तजनैरनारूढं वाहनमध्यासीत ॥**

**न स्वैरपरीक्षितं तीर्थं सार्थं तपस्विनं वाऽभिगच्छेत् ॥**

**न याष्टिकैरविविक्तं मार्गं भजेत् ॥**

**न विषापहारौषधमणीन् क्षणमप्युपासीत ॥**

**मन्त्रिभिषग्नैमित्तिकरहितः कदाचिदपि न प्रतिष्ठेत् ॥**

**वह्नावन्यचक्षुषि च भोग्यमुपभोग्यं च परीक्षेत ॥**

**अपरीक्षितमशोधितं च राजकुले न किंचित्प्रवेशयेन्निष्कासयेद्वा ॥**

**श्रूयते हि स्त्रीवेषधारी कुन्तलनरेन्द्रप्रयुक्तो गूढपुरुषः कर्णनिहितेनासिपत्रेण पल्लवनरेन्द्रं हयपतिश्च मेषविषाणनिहितेन विषेण कुशस्थलेश्वरं जघानेति ॥**

**सर्वत्राविश्वासे नास्ति काचित् क्रिया ॥**

## अनिर्दिष्टकर्तृकवचनम्

पत्नीतो राजरक्षा

**[1]शस्त्रेण वेणीविनिगूहितेन**
**विदूरथं वै महिषी जघान।**
**विषप्रदिग्धेन च नुपुरेण**
**देवी विरक्ता किल काशिराजम् ॥**

चारभेदे शस्त्रग्रहणम्

**[2]तत्र शस्त्राणि धार्याणि चाराणां भेदशङ्कया ॥**

तत्र सर्वदा। नीम. ४२

(१) नीवा. २५।७२,८१–८७,१०९–१११.

(१) मनु. ७।१५३.
(२) नीम. ४२.

# राजपुत्ररक्षणम्

## महाभारतम्

रक्षणं राजपुत्रस्य विविधोपायैः

[१]नैव स्वैररिभिर्वाऽपि ग्रस्यते पुत्रवान्नृपः ।
तस्माद्राजा सदा पुत्रं संरक्षेच्छिक्षयेत च ॥

अमात्यैरात्मसदृशै राजपुत्रस्य रक्षणम् ।
चारैश्च विविधोपायैः प्रविधेयं पृथग्विधैः ॥

## कौटिलीयमर्थशास्त्रम्

गर्भप्रभृति पुत्रसंस्काराः

[२]काष्ठमिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत । तस्मादृतुमत्यां महिष्यामृत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः । आपन्नसत्त्वायां कौमारभृत्यो गर्भभर्मणि प्रजने च वियतेत । प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात् । समर्थं तद्विदो विनयेयुः ॥

यथा वह्निचर्वितं दारु स्पृष्टमात्रमकृतभञ्जनयत्नमपि भग्नं भवति, तथा शास्त्रसदाचाराशिक्षितकुमारं राजकुलं परेण जिगीषितमात्रं अप्रयुक्तविक्रममपि परिध्वस्तं भवतीत्याह– काष्ठमिवेत्यादि । .... पुत्रगुणवत्त्वाय दृष्टादृष्टार्थाः प्रयत्ना गर्भाधानप्राक्कालात् प्रभृति आस्थेया इत्याह– तस्मादित्यादि । ऋतुमत्यां ऋतुः आर्तवदर्शनादिषोडशनिशात्मकः कालो गर्भाधानयोग्यः, तद्वत्याम् । ऐन्द्राबार्हस्पत्यं चरुं निर्वपेयुः इन्द्राबृहस्पतिद्वन्द्वदेवताकं हविः साधयेयुः हविर्द्रव्यकमिष्टिविशेषं कुर्युरित्यर्थः । तत्रेन्द्रप्रीणनमैश्वर्यप्रतापाद्यर्थं बृहस्पतिप्रीणनं बुद्धिविद्याद्यर्थं बोद्धव्यम् । आपन्नसत्त्वायां जातगर्भायां कौमारभृत्यः शिशुवैद्यः गर्भभर्मणि गर्भपोषणे प्रजने प्रसवे वियतेत विशिष्य यत्नं कुर्यात् । प्रजातायाः प्रसूतायाः । समर्थं विनयेयुः ग्रहणधारणपटुं विद्यासु शिक्षयेयुः । के ? तद्विदः शिक्षणज्ञाः । श्रीमूला.

पितृद्रोहनिवृत्त्युपायः

सत्त्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत्– पितरि विक्रम्य राज्यं गृहाणेति । तदन्यः सत्री प्रतिषेधयेदित्याम्भीयाः ॥

विनीतस्य कुमारस्य पितृद्रोहनिवृत्त्युपायं आम्भाचार्यानुयायिमतेनाऽऽह– सत्त्रिणामित्यादि । मृगयाद्यूतमद्यस्त्रीभिः प्रलोभनसाधनैः प्रलोभयेत् प्रलोभ्योपदिशेत् । अन्यः प्रलोभकादपरः । श्रीमूला.

महादोषमबुद्धबोधनमिति कौटल्यः । नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति, एवमयं नवबुद्धिर्यद्यदुच्येत तत्तच्छास्त्रोपदेशमिवाभिजानाति । तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च ॥

तत् दूषयति– महेति । अबुद्धबोधनं महादोषं अज्ञातस्य पितृद्रोहरूपस्य पापकर्मण उपदेशः परमानर्थः । नवमिति । हिशब्दो दृष्टान्ते । यथा नवं द्रव्यं मृद्भाण्डादिकं येन येन अर्थजातेन जलघृतादिना उपदिह्यते लिप्यते तत्तत् आचूषति आपिबति अन्तर्गृह्णाति, एवं अनेन प्रकारेण नवबुद्धिः सदसद्व्यवहाराप्रविष्टबुद्धिः अयं राजपुत्रः यद्यत् उच्येत तत्तत् तत् सर्वं शास्त्रोपदेशमिव अभिजानाति हृदये निवेशयति । तस्मादिति । तस्मात् यथोक्तात् कारणात् अस्य धर्मं अर्थं च उपदिशेत्, अधर्मं पितृद्रोहादिं अनर्थं मृगयाद्यूतपानादिकं च नोपदिशेत् । श्रीमूला.

सत्त्रिणस्त्वेनं तव स्म इति वदन्तः पालयेयुः । यौवनोत्सेकात् परस्त्रीषु मनः कुर्वाणमार्याव्यञ्जनाभिः स्त्रीभिरमेध्याभिः शून्यागारेषु रात्रावुद्वेजयेयुः । मद्यकामं योगपानेनोद्वेजयेयुः । द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः । मृगयाकामं प्रतिरोधकव्यञ्जनैस्त्रासयेयुः । पितरि विक्रमबुद्धिं तथेत्य–

(१) राक. १०० ; राप्र. ३१६ येत (यीत).
(२) कौ. १।१७.

**नुप्रविश्य भेदयेयुः— अप्रार्थनीयो राजा, विपन्ने घातः, संपन्ने नरकपातः, संक्रोशः प्रजाभिरेकलोष्टवधश्चेति ॥**

यदि स्वत एव राजपुत्रः परस्त्रीमद्यादिषु कामनां कुर्यात् तदा तन्निवारणार्थं सत्रिणस्तमुपासीरन्नित्याह— सत्रिण इत्यादि । तव स्म इति वदन्तः त्वत्सेवका वयमिति विश्वासयन्तः पालयेयुः परस्त्रीमद्यादिप्रवृत्तेर्वारयेयुरित्यर्थः । पालनप्रकारानाह— यौवनेत्यादि । यौवनोत्सेकात् यौवनमदात् । आर्याव्यञ्जनाभिः अभिजातस्त्रीवेषधारिणीभिः अमेध्याभिः स्वभावादशुचिभिः स्त्रीभिः करणैः उद्वेजयेयुः जुगुप्सयेयुः, परस्त्रीरतादित्यार्थम् । योगपानेन विरसद्रव्ययुक्तेन मद्येन । कापटिकैः छलदेवनदक्षैः । प्रतिरोधकव्यञ्जनैः चौरवेषैः । विक्रमबुद्धिं विक्रमे विक्रम्य हनने बुद्धिर्यस्य तं तथेत्यनुप्रविश्य भेदयेयुः तथा कुर्म इति वाङ्मात्रेण तच्छन्दानुवृत्त्या ततो निवर्तयेयुः । अप्रार्थनीय इत्यादिर्निवर्तनार्थमुपदेशः । राजा अप्रार्थनीयः, अर्थयितुं एषितुं योग्यः अर्थनीयः एष्टव्यः, तद्विपरीतः प्रार्थनीयः अनेष्टव्यः, द्वेष्य इति यावत् । प्रशब्दस्येह प्रसरतीत्यादाविव धात्वर्थविपरीतद्योतकत्वात् प्रार्थनीयो न भवतीत्यप्रार्थनीयः अद्वेष्य इत्यर्थः । विपन्ने घातः पितृवधसमुद्यमे विफलिते सति तव वधो भवेत्, संपन्ने नरकपातः फलिते सति पितृवधपातकिनस्ते नरके पतनम्, संक्रोशः लोकनिन्दा, प्रजाभिः एकलोष्टवधश्च प्रजाभिः समुदिताभिः कर्त्रीभिः एकैकमृत्खण्डप्रक्षेपेण घातश्च तव भवेत् । श्रीमूला.

**विरागं प्रियमेकपुत्रं वा बध्नीयात् । बहुपुत्रः प्रत्यन्तमन्यविषयं वा प्रेषयेद्यत्र गर्भः पण्यं डिम्बो वा न भवेत् । आत्मसंपन्नं सैनापत्ये यौवराज्ये वा स्थापयेत् ॥**

एवं कृतेऽपि यः पितरि निःस्नेह एव पितुः प्रिय एकश्च पुत्रो भवेत्, तदा तं बध्नीयादित्याह— विरागमित्यादि । बहुपुत्रश्चेत् राजा यथोक्तं पुत्रं कर्शयेदित्यभिप्रायेणाऽऽह— बहुपुत्र इत्यादि । प्रत्यन्तं म्लेच्छदेशम् । अन्यविषयं वा अन्यदेशं वा । यत्र गर्भः पण्यं डिम्बो वा न भवेत् यस्मिन् देशे गर्भः अन्नं राजपुत्रोचितं पण्यं तादृशं वसनादिकमापणलभ्यं भोग्यवस्तु डिम्बः राजपुत्रनिमित्तः प्रकृतीनां विप्लवश्च न स्यात् । गर्भ इत्यस्य स्थाने गर्व इत्यपि पाठः । तदा त्वर्थः स्फुट एव । गुणसंपन्नपुत्रविषये त्वाह— आत्मसंपन्नमित्यादि । श्रीमूला.

पुत्रविशेषाः

**बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः ॥ शिष्यमाणो धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान् । उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः ॥ अपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः ॥**

पुत्रं विभजते— बुद्धिमानित्यादि । पुत्रविशेषाः पुत्रभेदाः । उपदिश्यमानधर्मार्थज्ञानानुष्ठाननिष्ठो बुद्धिमान्, तज्ज्ञानमात्रवांस्तदनुष्ठानविमुख आहार्यबुद्धिः, नित्यप्रमादी धर्मार्थद्वेषणशीलश्च दुर्बुद्धिरिति त्रयाणां लक्षणमाह— शिष्यमाण इत्यादि । श्रीमूला.

अवरुद्धराजपुत्रवृत्तम्

**[1]राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत, अन्यत्र प्राणाबाधकप्रकृतिकोपपातकेभ्यः । पुण्यकर्मणि नियुक्तः पुरुषमधिष्ठातारं याचेत । पुरुषाधिष्ठितश्च सविशेषमादेशमनुतिष्ठेत् । अभिरूपं च कर्मफलमौपायनिकं च लाभं पितुरुपनाययेत् ॥**

आत्मसंपन्नः राजपुत्रः सैनापत्यादौ स्थाप्य इत्युक्तं प्राक् । तत्राऽऽत्मसंपन्नेष्वनेकेष्वेकश्चेत् सेनापतिर्युवराजो वा क्रियेत तदाऽन्यो राजपुत्रो विजिगीषुः संपन्न इति तस्य वृत्तमभिधानीयमिति संबन्धः । अवरुद्धो राजपुत्रः क्लेशनिर्वर्त्यदेहयात्रः स्वाननुरूपे कर्मणि पित्रा चोदितो यथापितृनियोगं कर्मानुतिष्ठेत्, तच्चेत् कर्म स्वप्राणसंशयकरं प्रकृतिकोपनं पातकजनकं वा न भवेदित्याह— राजपुत्र इत्यादि । अनुष्ठानप्रकारमाह— पुण्येत्यादि । अधिष्ठातारं पुरुषं याचेत कर्मनेतारं कमपि स्वाधश्चरपुरुषं पितृसकाशात् याचित्वा लभेत । आदेशं पितृनियोगम् । सविशेषमनुतिष्ठेत् विशेषो गुणवत्ता तद्युक्तं यथा भवति

(१) कौ. १।१८.

तथा चरेत् । अभिरूपं हृद्यं प्रशस्तं कर्मफलं स्वकर्मोत्पादितं धान्यादिकं औपायनिकं लाभं च कर्षकादिभ्य उपायनात्मना लब्धं द्रव्यं च पितुरुपनाययेत् पितुः सकाशं प्रापयेत् तत्परितोषार्थम्, न तु स्वयमुपयुञ्जीत । श्रीमूला.

**तथाप्यतुष्यन्तमन्यस्मिन् पुत्रे दारेषु वा स्निह्यन्तमरण्यायाऽऽपृच्छेत । बन्धवधभयाद्वा यः सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवागविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानां तमाश्रयेत । तत्रस्थः कोशदण्डसंपन्नः प्रवीरपुरुषकन्यासंबन्धमटवीसंबन्धं कृत्यपक्षोपग्रहं वा कुर्यात् ॥**

तथापि अतुष्यन्तं कर्मफललाभोपनायनेनाप्यात्मनि तुष्टिमकुर्वन्तं पितरम् । दारेषु स्वमातृव्यतिरिक्तायां पत्न्याम् । अरण्याय आपृच्छेत 'तपसे वनं गन्तुं मेऽनुज्ञां देहि' इत्यर्थयेत । यथोक्तापृच्छादैन्यप्रकाशनेऽप्यार्जवमप्रतिपद्यमाने पितरि आत्मबन्धनहननशङ्कायां वा जातायां तं गत्यन्तराभावादभिद्रोग्धुं गुणवत्सामन्तसाहाय्यसंपादने वियतेतेत्याह– बन्धवधभयादित्यादि । अविसंवादकः अविप्रलम्भकः । अभिपन्नानां प्रतिग्रहीता मानयिता च शरणागतानां स्वीकर्ता सत्कर्ता च । तं सामन्तमाश्रित्य तिष्ठन् कोशदण्डाभ्यां स्वार्जिताभ्यां युक्तो भूत्वा प्रकृष्टवीरपुरुषकन्यकायाः परिणयं स्वपितृजनपदाटविकसख्यं स्वपितृकृत्यवर्गस्वीकरणं च सहायोपचयार्थं कुर्यादित्याह– तत्रस्थ इत्यादि । अटवीसंबन्धमित्यटवीशब्दस्तात्स्थ्यादाटविके वर्तते । श्रीमूला.

**एकचरः सुवर्णपाकमणिरागहेमरूप्यपण्याकरकर्मान्तानाजीवेत् । पाषण्डसंघद्रव्यमश्रोत्रियभोग्यं देशद्रव्यमाढ्यविधवाद्रव्यं वा गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगेनातिसंधायावहरेत् । पारग्रामिकं वा योगमातिष्ठेत् । मातुः परिजनोपग्रहेण वा चेष्टेत । कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डच्छद्मभिर्वा नष्टरूपस्तद्व्यञ्जनसखश्छिद्रे प्रविश्य राज्ञः शस्त्ररसाभ्यां प्रहृत्य ब्रूयात्– अहमसौ कुमारः, सहभोग्यमिदं राज्यमेको नार्हति भोक्तुम्, तत्र ये कामयन्ते भर्तुं तानहं द्विगुणेन भक्तवेतनेनोपस्थास्य इति । इत्यवरुद्धवृत्तम् ॥**

असहायविषय आह– एकचर इति । एकचरः एकाकी अलब्धकोशदण्डादिसहायः सुवर्णपाकमणिरागहेमरूप्यपण्याकरकर्मान्तान् सुवर्णपाकं पुटपाकेन लोहादेः सुवर्णत्वापादनकर्म, रसतन्त्रप्रयोगमिति यावत्, मणिरागहेमरूप्यपण्यानि वज्रवैदूर्यमौक्तिकादिर्मणिः लाक्षादिरञ्जनद्रव्यं रागः हेम स्वर्णं रूप्यं रजतं इत्येतद्रूपाणि पण्यानि विक्रेयपदार्थान्, आकरकर्मान्तं रत्नादिखनिव्यापारं च आजीवेत् उपजीवेत् । एष कोशार्जनेऽभ्युपायः । उपायान्तरमाह– पाषण्डेति । पाषण्डसंघद्रव्यं पाषण्डैः स्वसंघार्थं संगृह्य स्थापितं धनम्, अश्रोत्रियभोग्यं देशद्रव्यं छान्दसब्राह्मणभोग्यातिरिक्तं देश्यजनसमुदायद्रव्यम् । देवद्रव्यमित्यपि पाठः । आढ्यविधवाद्रव्यं वा आढ्याः समृद्धधनाः या विधवास्तासां द्रव्यं वा गूढं द्रव्यापजिहीर्षागुप्तिपूर्वं अनुप्रविश्य अनुकूलाचरणेन वशयित्वा, अर्थात् पाषण्डादीन्, अवहरेत् । किंच, सार्थयानपात्राणि सार्थस्य वणिक्संघस्य यानपात्राणि पोतान् पण्ययुक्तान् मदनरसयोगेन मदकररसदानोपायेन अतिसंधाय वञ्चयित्वा, अर्थात् वणिक्संघम्, अवहरेत् । पारग्रामिकमिति । अथवा पारग्रामिकं योगं 'विजिगीषुः परग्राममवाप्तुकामः' इत्यादिना दुर्गलम्भोपायाधिकरणे वक्ष्यमाणं उपायं आतिष्ठेत् आद्रियेत । अथवा मातुः परिजनोपग्रहेण सेवकजनानुकूलनेन चेष्टेत वियतेत स्ववृद्ध्यर्थम् । अथवा कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डच्छद्मभिः कारवः तक्षायस्काराः शिल्पिनः चित्रकारादयः कुशीलवाः गायनाः चिकित्सकाः वैद्याः वाग्जीवनाः पुरावृत्तकथनोपजीविनः पाषण्डाः क्षपणकबौद्धभिक्षुप्रभृतयो वेदबाह्याः तद्वेषैः सह नष्टरूपः छन्नस्वरूपः तद्व्यञ्जनसखः कार्वादिवेषपुरुषतुल्यः राज्ञः पितुः छिद्रे अपकारस्थाने प्रविश्य शस्त्ररसाभ्यां प्रहृत्य राजानं हत्वा ब्रूयात्, अर्थात् सचिवादीन् । अहमित्यादिर्वचनप्रकारः । कुमारः राजपुत्रः । सहभोग्यं ससहायनिर्वेश्यं ससहायशासनीयं वा । भर्तुं अमात्यादिपदेष्वधिकर्तुम् ।

तान् भर्तुकामान् । द्विगुणेन मत्पितृदत्तात् द्विरावृत्तेन । उपस्थास्ये पूजयिष्यामि । इत्यवरुद्धवृत्तं वर्णितमिति शेषः । श्रीमूला.

अवरुद्धं पुत्रादिं प्रति वृत्तिः

**अवरुद्धं तु मुख्यपुत्रापसर्पाः प्रतिपाद्याऽऽनयेयुः, माता वा प्रतिगृहीता । त्यक्तं गूढपुरुषाः शस्त्ररसाभ्यां हन्युः । अत्यक्तं तुल्यशीलाभिः स्त्रीभिः पानेन मृगयया वा प्रसज्य रात्रावुपगृह्याऽऽनयेयुः ॥**

मुख्यपुत्रापसर्पाः मुख्यानाममात्यादीनां ये पुत्राः तद्रूपा अपसर्पाः चाराः प्रतिगृहीता माता वा राजपूजिता स्वमाता वा अवरुद्धं राजपुत्रं प्रतिपाद्य 'पिता ते यौवराज्यं दद्यात् त्वं चेत् तदनुकूलवृत्तिः' इति भाषया पितृहितवृत्तिमभ्युपगमय्य आनयेयुः पितुरन्तिकम् । कथंचिदपि विधेयतानासादनात् पित्रा परित्यक्तं राजपुत्रं आयुधविषप्रयोगाभ्यां गूढपुरुषा हन्युः, अविधेयत्वेऽप्येकपुत्रत्वादपत्यस्नेहात् वा अपरित्यक्तं तं समानस्वभावाभिः स्त्रीभिः मद्येन खेटनेन वा प्रसक्तिं कारयित्वा बद्ध्वा रात्रौ राजान्तिकं प्रापयेयुरित्याह– त्यक्तमित्यादि । श्रीमूला.

**उपस्थितं च राज्येन मदूर्ध्वमिति सान्त्वयेत् ।**
**एकस्थमथ संरुन्ध्यात्पुत्रवान् वा प्रवासयेत् ॥**

उपस्थितं तथा प्राप्तं अवरुद्धं अर्थात् धार्मिकं राज्येन मदूर्ध्वमिति सान्त्वयेत् 'राज्यमिदं मदुत्तरकाले त्वदीयं भविष्यति' इति राज्येन निमित्तेनानुनयेत् । अथ एकस्थं अभ्रातृकं पुत्रं अर्थादधार्मिकं सन्तं संरुन्ध्यात् कारागृहे निवेशयेत् । पुत्रवान् वा प्रवासयेत् बहुपुत्रसद्भावपक्षे अधार्मिकं पुत्रं हन्यादित्यर्थः । श्रीमूला.

## मनुः

राजपुत्ररक्षणचिन्ता कर्तव्या

**[1]कुमाराणां च रक्षणम् ( चिन्तयेत् ) ॥**

(१) मस्मृ. ७।१५२; राक. १०६ ; रार. ८ (=); यमा. ४१० ; राप्र. १५९, ३१७ ; नीम. ३८.

(१) कुमाराणां राजपुत्राणां रक्षणम् । तव वयमित्येवमादिभिर्धर्ममर्थं च ते ग्राहयितव्याः । नवं हि द्रव्यं येनार्थजातेनोपदिह्यते तत्तदाचूषति । एवमसंस्कृतबुद्धयो यद्यदुच्यते तत्तत्प्रथमं गृह्णन्ति । यद्यसद्भिः संसृज्यन्ते तदा तत्स्वभावस्तेषां प्राप्नोति । ते च दुःसंस्कारोपदिग्धा न शक्यन्ते व्यसनेभ्यो निवर्तयितुम् । उक्तं च– 'नीलीरक्ते वाससि कुङ्कुमाङ्गरागो दुराधेयः'। तस्मात्ते नित्यमनुशासनीयाः । तत्रापि ये गुणवन्तस्तान् वर्धयेत् । इतरानीषत् संविभजेत् । ज्येष्ठं महागुणममत्सरं यौवराज्येऽभिषिञ्चेत् । एवं राजपुत्ररक्षणे नित्यं यत्नवता भवितव्यम् । मेधा.

(२) कुमाराणां च पुत्राणां अविनयनिवर्तनं नीचोपसंग्रहफलं चिन्तयेत् । गोरा.

(३) कुमाराणां च पुत्राणां विनयाधाननीतिशिक्षार्थं रक्षणं चिन्तयेत् । ममु.

(४) रक्षणं यौवराज्ये स्थापयितुं विनयाधानरीतिशिक्षाद्यम् । मच.

## बृहत्पराशरः

कुमाररक्षणे यत्नः कर्तव्यः

**[1]महायत्नः कुमाराणामन्तःपुरस्य रक्षणे ॥**

## मत्स्यपुराणम्

राजपुत्ररक्षणस्य शास्त्रशिक्षा व्यायामः इन्द्रियदमनविनयः अधिकारनियोजनं चाङ्गानि, अविनीतस्य बन्धनम्

**[2]राजन् पुत्रस्य रक्षा च कर्तव्या पृथिवीक्षिता ।**
**आचार्यश्चात्र कर्तव्यो नित्ययुक्तश्च रक्षिभिः ॥**

(१) बृपसं. १२।१३.

(२) मत्स्य. २२०।१ ; विध. २।६५।२–३ राजन् पु (राजपु) उत्तरार्धे (आचार्यश्चास्य कर्तव्यं नित्यं युक्तैव रक्षणम् ॥) ; अग्नि. २२५।१ राजन् पु (राजपु) पू. ; राक. ९९ राजन् पु (राजपु) श्चात्र (श्चापि) युक्तश्च (युक्तैश्च) ; राप्र. ३१५ उत्तरार्धं राकवत्.

[१]धर्मकामार्थशास्त्राणि धनुर्वेदं च शिक्षयेत् ।
रथे च कुञ्जरे चैनं व्यायामं कारयेत्सदा ॥
[२]शिल्पानि शिक्षयेच्चैनं नाऽऽप्तैर्मिथ्याप्रियं वदेत् ।
शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत् ॥
[३]न चास्य सङ्गो दातव्यः क्रुद्धलुब्धावमानितैः ।
तथा च विनयेदेनं यथा यौवनगोचरे ॥

यौवनगः यौवनप्राप्तः । मुखे आदौ । राक. १००

[४]इन्द्रियैर्नापकृष्येत सतां मार्गात्सुदुर्गमात् ।
गुणाधानमशक्यं तु यस्य कर्तुं स्वभावतः ॥
[५]बन्धनं तस्य कर्तव्यं गुप्तदेशे सुखान्वितम् ।
अविनीतकुमारं हि कुलमाशु विशीर्यते ॥

गुप्तदेशे इत्यनेन दुष्टप्रवेशनिषेधः । शुभान्वितमित्यनेन शारीरदुःखनिषेधः । अवश्यापेक्षितस्नानभोजनवस्त्रताम्बूलादिदानं बोध्यते । सुखान्वित इति पाठे देशविशेषणं तत् । राप्र. ३१५–३१६

(१) मत्स्य. २२०।२; विध. २।६५।३–४ धर्मकामार्थशास्त्राणि (धर्मार्थकाममोक्षाणां) रथे च (रथेऽश्वे); अग्नि. २२५।१ पू.; राक. ९९ शास्त्राणि (सूत्राणि); राप्र. ३१५.

(२) मत्स्य. २२०।३; विध. २।६५।४–५ चैनं ना (च्चैवमा) वदेत् (वदैः); अग्नि. २२५।२ च्चैनं ना (च्चैनमा) वदेत् (वदैः); राक. ९९ च्चैनं ना (च्चैनमा); राप्र. ३१५.

(३) मत्स्य. २२०।४; विध. २।६५।५–६ लुब्धाव (लुब्धवि) यौवनगोचरे (यौवनगं सुखे); अग्नि. २२५।३ विधवत्, पू.; राक. ९९ क्रुद्ध (क्षुद्र) गोचरे (गो मुखे); राप्र. ३१५ गोचरे (गो मुखे).

(४) मत्स्य. २२०।५; विध. २।६५।६–७ इन्द्रियैर्नाप (विषयैर्नैनं) धानम (धानं न); अग्नि. २२५।३ (अशक्यं तु गुणाधानं कर्तुं तं बन्धयेत्सुखैः ॥) उत्त.; राक. ९९ कर्तुं (कर्तुः); राप्र. ३१५.

(५) मत्स्य. २२०।६; विध. २।६५।७–८; राक. ९९–१००; राप्र. ३१५–३१६ सुखा (शुभा) 'सुखान्विते' इत्यपि पाठः.

[१]अधिकारेषु सर्वेषु विनीतं विनियोजयेत् ।
आदौ स्वल्पे ततः पश्चात्क्रमेणाथ महत्स्वपि ॥

## कालिकापुराणम्

राजपुत्रे गुणाधानं राजपुत्रस्य महिष्याश्च संशोधनं च कर्तव्यम्

[२]यैर्गुणैर्योजितश्चाऽऽत्मा तैः पुत्रानपि योजयेत् ।
नृपस्य च स्वतन्त्रत्वं सततं स्वं विनाशयेत् ॥
[३]स्वतन्त्रो भूपतनयो विकारं याति निश्चितम् ।
निर्विकाराय सततं वृद्धांश्च परियोजयेत् ॥
तस्मात्कुमारं महिषीमुपधाभिर्मनोहरैः ।
शोधयित्वा नियुञ्जीत यौवराज्यावरोधयोः ॥
अन्तःपुरप्रवेशे तु स्वतन्त्रत्वं निषेधयेत् ।
भूपपुत्रस्य भार्याया बहिःसारे तथैव च ॥
अयं विशेषः संक्षेपान्नृपधर्मो मयोदितः ।
पुत्राणां गुणविन्यासे भार्याणामपि भूपते ॥

## कामन्दकीयनीतिसारः

राज्ञः आत्मरक्षणं कर्तव्यम्

[४]प्रजात्मश्रेयसे राजा कुर्वीताऽऽत्मजरक्षणम् ।
लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः ॥

(१) इदानीमाभ्यन्तरराज्योपघातप्रतिविधानमस्मिन् सर्गे प्रकरणद्वयेनोच्यते । तत्र स्वशरीरोपघातः स्वेभ्यः पुत्रदारमन्त्र्यादिभ्यः परेभ्यश्च सामन्ताटविकेभ्यः । तत्र 'कर्कटकसधर्माणो राजपुत्रा जनकभक्षाः' (कौ. १।१७) इति तेषामेव तावत् रक्षणमुच्यतेऽष्टभिः श्लोकैः — प्रजेत्यादि । लोलुभ्यमानाः अत्यर्थं गर्धं(? गृध्य)मानाः ।

(१) मत्स्य. २२०।७; विध. २।६५।८–९; अग्नि. २२५।४ पू.; राक. १०० मेणाथ (मेण च); राप्र. ३१६ राकवत्.

(२) कालिका. ८७।१२३–१२४.

(३) कालिका. ८७।१२७–१२९.

(४) कानी. ७।१; रार. ७६ लोलुभ्य (लोलुप्य) रक्षिताः (लक्षिताः) नीतौ इत्युक्तम्; नीम. ४८ प्रजात्म (प्रजार्थ).

अरक्षिताः इति असंरक्षिताः । दूरक्षिताश्च हन्युरिति सामर्थ्यसिद्धम् । जम.

( २ ) कण्टकशोधनशेषमेवाऽऽत्मजरक्षणमभिधीयते । अरक्षिताः पुत्राः कण्टकीभवन्ति पितुः प्रजानां चेति दर्शयन्नाह– प्रजेति । प्रजात्मश्रेयसे प्रजानामात्मनश्च श्रेयसे रक्षार्थं राजा विजिगीषुः कुर्वीत आत्मजानां पुत्राणां रक्षणम् । कुतस्तद्रक्षणमिति लोलुभ्यमानाः लोभं गच्छन्तः अर्थेषु तदर्थं हन्युरेनं विजिगीषुं अरक्षिता इति । उनि.

अविनीतराजपुत्रेषु राज्यनाशः

[१]राजपुत्रा मदोन्मत्ता गजा इव निरङ्कुशाः ।
भ्रातरं वाऽपि निघ्नन्ति पितरं वाऽभिमानिनः ॥

( १ ) तदेव दृष्टान्तेन स्फुटयन्नाह– राजपुत्रा इत्यादि । निरङ्कुशाः अनियमिताः । जम.

( २ ) यौवनादिमदोन्मत्ता गजा इव निरङ्कुशाः भ्रातरं राज्ययोग्यं निघ्नन्ति पितरं वा अहमेव राज्यार्हं इति अभिमानसंभावनया युक्ता इति । उनि.

[२]राजपुत्रैर्मदोन्मत्तैः प्राथ्र्यमानमितस्ततः ।
दुःखेन रक्ष्यते राज्यं व्याघ्राघ्रात-
मिवाऽऽमिषम् ॥

( १ ) प्राथ्र्यमानमितस्ततः सर्वोपायैः प्राथ्र्यमानम् । जम.

( २ ) मदोन्मत्तैः अभितो जातोन्मादैः प्राथ्र्यमानं अभिलष्यमाणं इतस्ततः सर्वतः अभियोगात् दुःखेन क्लेशेन रक्ष्यते राज्यं व्याघ्राघ्रातमामिषमिव । उनि.

[३]रक्ष्यमाणा यदि च्छिद्रं कथंचित्प्राप्नुवन्ति ते ।
सिंहशावा इव घ्नन्ति रक्षितारमसंशयम् ॥

( १ ) नारक्षिताः । राज्ञा सुष्ठु रक्षणीयाः, अन्यथा स्ववधाय कृत्योत्थापनया यतन्ते इति । जम.

( २ ) सिंहशावा इव घ्नन्ति विनाशयन्ति रक्षितारं पितरं असंशयम् । उनि.

[१]विनयोपग्रहान् भूत्यै कुर्वीत नृपतिः सुतान् ।
अविनीतकुमारं हि कुलमाशु विशीर्यते ॥

( १ ) तद्रक्षणोपायमाह– विनयोपग्रहानित्यादि । विनयेनोपग्रहो येषामिति विग्रहः । आदावेव विनयेनोपगृह्णीयादित्यर्थः । अन्यथा ह्यविनीतकुमारं राजकुलं अस्वामिप्रकृतिसंपन्नं पराभियोगकाले निराश्रयत्वात् विशीर्यते । जम.

( २ ) रक्षाप्रकारं राजपुत्राणां सुश्लिष्टमभिधातुमाह– विनयेति । विनयो द्विविधः– कृतकः सहजश्च । स्वाभाविकः जन्मान्तरवासनावशायातः । कृतकः विद्यावृद्धसंयोगजनितः । द्विविधविनये उपग्रहः बन्धनं येषां ते, तान् विनयोपग्रहान् भूत्यैः कुर्वीत नृपतिः सुतान् । तथा च कौटिल्यः– 'काष्ठमिव घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्यते । तस्मादृतुमत्यामृत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः । आपन्नसत्त्वायां कौमारभृत्या गर्भभर्मणि प्रसवे च विधीयमाने प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात् । समग्रं तद्विदो विनयेयुः' (कौ. १।१७) इति । एवंविधेन विनयोपग्रहेण रक्षेदिति भावः । अविनीतकुमारं राजकुलं आशु विशीर्यते इति । उनि.

अविनीतराजपुत्रस्य सुखबन्धनं शासनं च

[२]विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् ।
दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखबन्धनम् ॥

( १ ) विनीतं आत्मसंपन्नम् । औरसं कृतक्रियायां स्वयं जातम् । उद्वृत्तं अविनीतम् । कुर्वीत सुखबन्धनम्, न परित्यजेत् । सुखसंवर्धनेन ह्युपायेन बद्धो नितरां नाभिद्रुह्यति, पित्रा कल्पितवृत्तित्वात् । जम.

( २) विनीतपुत्रविषये आह– विनीतमिति । विनीतमिति द्विविधविनययुक्तं औरसम्, न क्षेत्रजं पुत्रम्,

(१) कानी. ७।२ ; नीम. ४८ मदोन्मत्ता (मदोद्धुता) वाऽपि ( चाभि ) वाऽभि ( चाभि ).

(२) कानी. ७।३ ; नीम. ४८ दोन्मत्तैः (दोद्धुतैः ).

(३) कानी. ७।४ ; नीम. ४८.

(१) कानी. ७।५ ; उनि. भूत्यै ( भृत्यैः ) ; नीम. ४८ भूत्यै ( भृत्यैः ) विशीर्यते ( विनश्यति ).

(२) कानी. ७।६ ; रार. ७६ बन्धनम् ( सेवनम् ) उत्त. ; नीम. ४८.

यौवराज्येऽभिषेचयेत् । उद्वृत्तं तु दुःशीलं दुष्टं गजमिव कुर्वीत सुखबन्धनम् । तथा च कौटिल्यः– 'ग्राम्यसुखोपरुद्धा हि राजपुत्राः पितरं नाभिद्रुह्यन्ति' ( कौ. १।१७ ) इति । एवंविधं सुखबन्धनं कुर्वीतेति । उनि.

[1]राजपुत्रः परित्यागं सुदुर्वृत्तोऽपि नार्हति ।
क्लिश्यमानः स पितरं परमाश्रित्य हन्ति हि ॥

( १ ) अन्यथा परित्यक्तः क्लिश्यमानः परान् सामन्ताटविकादीनाश्रित्य पितरमेव हन्यादिति । यदाह– राजपुत्र इत्यादि । जम.

( २ ) दुर्वृत्तस्यापि राजपुत्रस्यापरित्यागमाह– राजपुत्र इति । सुदुर्वृत्तोऽपि परित्यागं राजपुत्रो नार्हति त्याज्यो न भवतीति । उनि.

[2]व्यसने सज्जमानं हि क्लेशयेद्व्यसनाश्रयैः ।
तथा च क्लेशयेदेनं यथा स्यात्पितृगोचरः ॥

( १ ) व्यसने सज्जमानमिति । अतिसुखोपरुद्धत्वाद्व्यसने यदा सज्जते । व्यसनाश्रयैरिति । मृगयादिप्रतिबद्धैरुपायैरित्यर्थः । तद्यथा– मृगयाकामं प्रतिरोधकव्यञ्जनैः कदर्थयेत्, द्यूतकामं द्यूतकारव्यञ्जनैः संरोधेन वाक्पारुष्यादिखलीकारेण, मद्यकामं मदनीययोगपानेन, परस्त्रीषु मनः कुर्वाणमार्याव्यञ्जनाभिरमेध्याभिः स्त्रीभिः शून्यागारे रात्रौ क्लेशयेत्, यदनुभवान्न पुनः प्रवर्तेत । पितृगोचर इति । पितुर्विधेयश्च स्यादित्यर्थः । जम.

( २ ) उक्तप्रकारस्य राजपुत्रस्यापरित्यक्तस्य शासनप्रकारमभिधातुमाह– व्यसन इति । पितृगोचर इति पितृवश्यः । तथा च कौटिल्यः– 'परस्त्रीषु मनः कुर्वाणमार्याव्यञ्जनाभिः स्त्रीभिरमेध्याभिः शून्यागारेषु रात्रावुद्वेजयेयुः । मद्यकामं योगपानेन, द्यूतकामं कापटिकैः पुरुषैः' ( कौ. १।१८ ) इति । उनि.

---

(१) कानी. ७।७ ; जम. परमा ( पराना ) ; रार. ७६ स पितरं परमा ( स्वपितरं पराना ) ; नीम. ४८ परित्यागं सुदुर्वृत्तोऽपि ( सुदुर्वृत्तः परित्यागं हि ) परमा ( पराना ).

(२) कानी. ७।८ ; नीम. ४८ पू.

## शुक्रनीतिः

औरसस्य युवराजता प्रशस्ता

[1]युवराजोऽमात्यगणो भुजावेतौ महीभुजः ।
तावेव नयने कर्णौ दक्षसव्यौ क्रमात्स्मृतौ ॥

युवराजः राजकर्मणि अभिषिक्तः पुत्रादिः अमात्यगणः सचिववर्गश्च एतौ महीभुजः राज्ञः भुजौ बाहुस्वरूपौ । तौ एव क्रमात् दक्षसव्यौ दक्षिणवामौ नयने कर्णौ च स्मृतौ कथितौ, राज्ञ इति शेषः । शुनीटी.

[2]बाहुकर्णाक्षिहीनः स्याद्विना ताभ्यामतो नृपः ।
योजयेच्चिन्तयित्वा तौ महानाशाय चान्यथा ॥

ताभ्यां युवराजामात्याभ्यां विना नृपः बाहुकर्णाक्षिहीनः भुजश्रोत्रनेत्ररहितः स्यात्, अतः अस्मात्कारणात् चिन्तयित्वा विविच्य तौ युवराजामात्यौ योजयेत्, अन्यथा महानाशाय भवतीति शेषः । शुनीटी.

[3]मुद्रां विनाऽखिलं राजकृत्यं कर्तुं क्षमं सदा ।
कल्पयेद्युवराजार्थमौरसं धर्मपत्निजम् ॥

मुद्रां आलस्यं विना, परित्यज्य इत्यर्थः, सदा अखिलं समग्रं राजकृत्यं कर्तुं क्षमं धर्मपत्नीजं औरसं पुत्रं युवराजार्थं युवराजशब्दाभिधेयं कल्पयेत् । शुनीटी.

राजपुत्ररक्षणं यौवराज्यार्हता च विनयाधानेन

[4]स्वधर्मनिरतान् शूरान् भक्तान् नीतिमतः सदा ।
संरक्षयेद्राजपुत्रान् बालानपि सुयत्नतः ॥

स्वधर्मनिरतान् आत्मधर्मस्थितान् शूरान् विक्रान्तान् भक्तान् अनुरक्तान् नीतिमतः नयसंपन्नान् राजपुत्रान् राजवंश्यान् बालान् अप्राप्तवयस्कानपि सुयत्नतः अतियत्नेन सदा संरक्षयेत् । शुनीटी.

लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः ।
रक्ष्यमाणा यदि च्छिद्रं कथंचित्प्राप्नुवन्ति ते ॥

---

(१) शुनी. २।१२ ; नीम. ४८ ( अमात्यो युवराजश्च भुजावेतौ महीपतेः । ) पू., नीतिसारे.

(२) शुनी. २।१३.

(३) शुनी. २।१४.

(४) शुनी. २।१७–२०.

ते राजपुत्राः अर्थेषु तदीयेषु धनेषु लोलुभ्यमानाः, राज्ञा इति शेषः। तेषामर्थलोभादिति भावः। अरक्षिताः सन्तः एनं नृपं हन्युः नाशयेयुः। किंच, रक्ष्यमाणा अपि ते यदि कथंचित् छिद्रं दोषं कथंचित् प्राप्नुवन्ति तदाऽपि एनं हन्युरित्यनेनान्वयः। शुनीटी.

**सिंहशावा इव घ्नन्ति रक्षितारं द्विपं द्रुतम्।**
**राजपुत्रा मदोद्भूता गजा इव निरङ्कुशाः॥**

सिंहशावाः द्विपं हस्तिनमिव मदोद्धूताः मदमत्ताः निरङ्कुशाः गजा इव राजपुत्राः रक्षितारम्, अयत्नत इति भावः, नृपं घ्नन्ति नाशयन्ति। शुनीटी.

**पितरं चापि निघ्नन्ति भ्रातरं त्वितरं न किम्।**
**मूर्खो बालोऽपीच्छति स्म स्वाम्यं किं नु पुनर्युवा॥**

ते पितरं भ्रातरं चापि निघ्नन्ति, इतरं अपरं किं नु वक्तव्यमित्यर्थः। नु वितर्के। मूर्खः बालः शिशुरपि स्वस्य आत्मनः स्वाम्यं स्वेच्छाचारित्वं इच्छति, युवा किं पुनः? शुनीटी.

**[1]विकारं याति पुत्रोऽपि राज्यलोभाद्यथा पिता।**
**तल्लोकवृत्तान्नृपतेरन्यद्वृत्तं प्रचक्षते॥**

**[2]स्वात्यन्तसंनिकर्षेण राजपुत्रांस्तु रक्षयेत्।**
**सद्भृत्यैश्चापि तत्स्वान्तं छलैर्ज्ञात्वा सदा स्वयम्॥**

सदा स्वयं सद्भृत्यैश्च तत्स्वान्तं तेषां राजपुत्राणां स्वान्तं मनः छलैः कौशलैः ज्ञात्वा स्वात्यन्तसंनिकर्षेण स्वस्य आत्मनः अत्यन्तः यः संनिकर्षः सङ्गः तेन रक्षयेत् पालयेत्। शुनीटी.

**सुनीतिशास्त्रकुशलान् धनुर्वेदविशारदान्।**
**क्लेशसहांश्च वाग्दण्डपारुष्यानुभवान् सदा॥**
**शौर्ययुद्धरतान् सर्वकलाविद्याविदोऽञ्जसः।**
**सुविनीतान् प्रकुर्वीत ह्यमात्याद्यैर्नृपः सुतान्॥**

नृपः अमात्याद्यैः सुतान् सुनीतिशास्त्रकुशलान् धनुर्वेदविशारदान् संग्रामनिपुणान् सदा क्लेशसहान् वाग्दण्डपारुष्यानुभवान् वाक्पारुष्यदण्डपारुष्याभिज्ञान् शौर्ययुद्धरतान् विक्रमशालिनः सर्वकलाविद्याविदः सर्वासु कलाविद्यासु चतुःषष्टिप्रकारासु विद्यासु विज्ञान् अञ्जसः क्षिप्रकारिणः तथा सुविनीतान् शोभनविनयसंपन्नान् प्रकुर्वीत। शुनीटी.

**सुवस्त्राद्यैर्भूषयित्वा लालयित्वा सुक्रीडनैः।**
**अर्हयित्वाऽऽसनाद्यैश्च पालयित्वा सुभोजनैः॥**
**कृत्वा तु यौवराज्यार्हान् यौवराज्येऽभिषेचयेत्।**
**अविनीतकुमारं हि कुलमाशु विनश्यति॥**

सुवस्त्राद्यैः शोभनवसनादिभिः भूषयित्वा सुक्रीडनैः शोभनक्रीडनद्रव्यैः लालयित्वा आनन्दितान् कृत्वा आसनाद्यैः उपवेशनादिना अर्हयित्वा संमान्य सुभोजनैः पालयित्वा क्रमेण यौवराज्यार्हान् कृत्वा, पुत्रानिति शेषः, यौवराज्ये अभिषेचयेत्। हि यतः अविनीतः अशिक्षितः कुमारो यस्य तादृशं कुलं आशु शीघ्रं विनश्यति विनाशं प्राप्नोति। शुनीटी.

दुर्वृत्तराजपुत्रस्य सुखबन्धनम्

**राजपुत्रः सुदुर्वृत्तः परित्यागं हि नार्हति।**
**क्लिश्यमानः स पितरं परानाश्रित्य हन्ति हि॥**

राजपुत्रः सुदुर्वृत्तः अतिदुर्वृत्तः अपि परित्यागं न अर्हति न परित्याज्यो भवतीत्यर्थः। स क्लिश्यमानः परानाश्रित्य पितरं हन्ति हि हन्त्येव। शुनीटी.

**व्यसने सज्जमानं तं क्लेशयेद्व्यसनाश्रयैः।**
**दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखबन्धनम्॥**

व्यसने स्त्रीमद्यादौ सज्जमानं तं पुत्रं व्यसनाश्रयैः तत्सङ्गिभिः क्लेशयेत् तत्सङ्गिनां संमाननेन यथा पुत्रस्तदासक्तो न भवेत् तथा यत्नं कुर्यादित्यर्थः। दुष्टं गजमिव उद्वृत्तं उच्छृङ्खलं पुत्रं सुखबन्धनं सुखेन आयत्तं कुर्वीत। शुनीटी.

पितुराज्ञा प्रमाणम्

**[1]किमाश्चर्यमतो लोके न ददाति यजत्यपि।**
**प्राप्यापि युवराजत्वं प्राप्नुयाद्विकृतिं न च॥**

---

(१) रार. ७२.
(२) शुनी. २।२१–२७.

(१) शुनी. २।३५; नीम. ४८ उत्त., नीतिसारे.

लोके जगति दत्तकाय सर्वं रक्षेत् तथापि न ददाति कस्मैचित् किमपीति शेषः, नापि यजति देवान् अर्चयति, किमाश्चर्यम्? किंच, युवराजत्वं प्राप्यापि विकृतिं न च प्राप्नुयात् न विकारं गच्छेत्। शुनीटी.

[1]स्वसंपत्तिमदान्नैव मातरं पितरं गुरुम्।
भ्रातरं भगिनीं वाऽपि ह्यन्यान्वा राजवल्लभान्॥

मातरं पितरं गुरुं भ्रातरं भगिनीं वा अन्यान् राजवल्लभान् राजानुरक्तान् स्वसंपत्तिं नैव अदात् नैव दद्यादित्यर्थः। संप्रदानेषु कर्मविभक्तिरार्षैवेति बोध्यम्। दाने धनक्षयात् प्रभुत्वहानिः स्यादिति भावः। शुनीटी.

[2]महाजनांस्तथा राष्ट्रे नावमन्येत पीडयेत्।
प्राप्यापि महतीं वृद्धिं वर्तेत पितुराज्ञया॥

राष्ट्रे राज्ये महाजनान् भद्रवंशीयान् न अवमन्येत तथा न पीडयेत्। किंच, महतीं ऋद्धिं ऐश्वर्यं प्राप्यापि पितुराज्ञया वर्तेत तिष्ठेत्। शुनीटी.

[3]पुत्रस्य पितुराज्ञा हि परमं भूषणं स्मृतम्।
भार्गवेण हता माता राघवस्तु वनं गतः॥

पितुराज्ञा हि पुत्रस्य परमं भूषणं स्मृतं कथितम्। तथाहि— भार्गवेण परशुरामेण माता हता नाशिता, राघवस्तु रामश्च वनं गतः, पितुराज्ञयेति शेषः। शुनीटी.

[4]पितुस्तपोबलात्तौ तु मातरं राज्यमापतुः।
शापानुग्रहयोः शक्तो यस्तस्याऽऽज्ञा गरीयसी॥

तौ भार्गवराघवौ तु पितुस्तपोबलात् मातरं राज्यं आपतुः प्रापतुः। भार्गवस्य माता पुनर्जीविता, रामस्य च पुनः राज्यप्राप्तिरासीदित्यर्थः। अतः यः शापानुग्रहयोः अभिसंपातप्रसादयोः शक्तः समर्थः तस्य आज्ञा गरीयसी अतिगुर्वीत्यर्थः। शुनीटी.

[1]सोदरेषु च सर्वेषु स्वस्याऽऽधिक्यं न दर्शयेत्।
भागार्हभ्रातृणां नष्टो ह्यवमानात्सुयोधनः॥

सर्वेषु सोदरेषु भ्रातृषु स्वस्य आधिक्यं आत्मनः ऐश्वर्यं आधिपत्यं वा न दर्शयेत्। हि यतः भागार्हाणां दायादानां भ्रातॄणां अवमानात् सुयोधनः नष्टः विनाशं गत इत्यर्थः। शुनीटी.

[2]पितुराज्ञोल्लङ्घनेन प्राप्यापि पदमुत्तमम्।
तस्माद्भ्रष्टा भवन्तीह दासवद्राजपुत्रकाः॥

[3]ययातेश्च यथा पुत्रा विश्वामित्रसुता यथा।
पितृसेवापरस्तिष्ठेत्कायवाङ्मानसैः सदा॥

इह जगति राजपुत्रकाः उत्तमं पदं प्राप्यापि पितुः आज्ञोल्लङ्घनेन तस्मात् उत्तमात् पदात् भ्रष्टाः दासवत् भवन्ति। यथा ययातेः पुत्राः यदुप्रभृतयः, यथा वा विश्वामित्रस्य मुनेः सुताः पुत्राः। तस्मात् कायवाङ्मानसैः सदा पितृसेवापरः पितृशुश्रूषानिरतः तिष्ठेत्। शुनीटी.

[4]तत्कर्म नियतं कुर्याद्येन तुष्टो भवेत्पिता।
तन्न कुर्याद्येन पिता मनागपि विषीदति॥

येन कर्मणा पिता तुष्टो भवेत् नियतं तत् कर्म कुर्यात्, येन कर्मणा पिता मनागपि अल्पमपि विषीदति क्षोभमायाति तत् न कुर्यात्। शुनीटी.

[5]यस्मिन् पितुर्भवेत्प्रीतिः स्वयं तस्मिन् प्रियं चरेत्।
यस्मिन् द्वेषं पिता कुर्यात्स्वस्यापि द्वेष्य एव सः॥

---

(१) शुनी. २।३६; नीम. ४८ गुरुम् (तथा) वाऽपि ह्यन्यान्वा (चापि अन्यान्वा) नीतिसारे.

(२) शुनी. २।३७; नीम. ४८ मन्येत (मन्येन्न) नीतिसारे.

(३) शुनी. २।३८; नीम. ४८ पू., नीतिसारे.

(४) शुनी. २।३९.

(१) शुनी. २।४०; नीम. ४८ स्वस्याऽऽधिक्यं न (नाऽऽधिक्यं संप्र) उत्तरार्धे (भ्रातॄणामवमानेन बहवो हि विनाशिताः॥) नीतिसारे.

(२) शुनी. २।४१; नीम. ४८ नीतिसारे.

(३) शुनी. २।४२; नीम. ४८ उत्त., नीतिसारे.

(४) शुनी. २।४३; नीम. ४८ नियतं कुर्याद्ये (कुर्यान्नियतं ये) नीतिसारे.

(५) शुनी. २।४४; नीम. ४८ नीतिसारे.

यस्मिन् जने पितुः प्रीतिः भवेत् तस्मिन् स्वयं प्रियं चरेत् कुर्यात् । पिता यस्मिन् द्वेषं कुर्यात् स स्वस्यापि आत्मनोऽपि द्वेष्य एव । शुनीटी.

[1]असंमतं विरुद्धं वा पितुर्नैव समाचरेत् ।
चारसूचकदोषेण यदि स्यादन्यथा पिता ॥
[2]प्रकृत्यनुमतं कृत्वा तमेकान्ते प्रबोधयेत् ।
अन्यथा सूचकान्नित्यं महद्दण्डेन दण्डयेत् ॥

पितुः असंमतं अनभिमतं विरुद्धं अप्रियं कार्यं वा नैव समाचरेत् । चाराणां गूढपुरुषाणां सूचकानां खलानां धूर्तानामित्यर्थः, दोषेण यदि पिता अन्यथा स्यात् विपरीतमतिः भवेत् तदा प्रकृतीनां प्रधानपुरुषाणां अनुमतं कृत्वा परामर्शेनेत्यर्थः, एकान्ते रहसि तं पितरं प्रबोधयेत्, यथा पिता संतुष्येत् तथा प्रबोधनं कार्यमिति भावः । अन्यथा पितुरसंतोषे इत्यर्थः, सूचकान् धूर्तान् अपराधिन इत्यर्थः, महद्दण्डेन महता दण्डेन नित्यं दण्डयेत् । शुनीटी.

[3]प्रकृतीनां च कपटस्वान्तं विद्यात्सदैव हि ।
प्रातर्नत्वा प्रतिदिनं पितरं मातरं गुरुम् ॥
[4]राजानं स्वकृतं यद्यन्निवेद्यानुदिनं ततः ।
एवं गृहाविरोधेन राजपुत्रो वसेद्गृहे ॥

सदैव प्रकृतीनां राज्यस्थानां प्रधानपुरुषाणां कपटस्वान्तं कपटं मनः विद्यात् । हिशब्दोऽवधारणे । प्रकृतयः कापट्येन व्यवहरन्ति न वेति अवधारयेदित्यर्थः । किंच, राजपुत्रः युवराज इत्यर्थः, प्रतिदिनं प्रातः पितरं मातरं तथा गुरुं आचार्यं नत्वा ततः अनन्तरं यद्यत्कार्यं स्वकृतं आत्मना निष्पन्नं तत्तत् अनुदिनं राजानं निवेद्य ज्ञापयित्वा एवंप्रकारेण गृहस्य अविरोधेन सामञ्जस्येन गृहे वसेत् । शुनीटी.

(१) शुनी. २।१४५ ; नीम. ४८ वा ( च ) पू., नीतिसारे.

(२) शुनी. २।१४६.

(३) शुनी. २।१४७.

(४) शुनी. २।१४८ ; नीम. ४८ वसेद्गृ ( वसन् गृ ) नीतिसारे.

राजपुत्रवृत्तम्

[1]विद्यया कर्मणा शीलैः प्रजाः संरञ्जयन्मुदा ।
त्यागी च सत्त्वसंपन्नः सर्वान् कुर्याद्वशे स्वके ॥

त्यागी दानशीलः तथा सत्त्वसंपन्नः उत्साहवान् राजपुत्रः विद्यया कर्मणा शीलैः दयादाक्षिण्यादिभिश्चरितैः प्रजाः संरञ्जयन् मुदा आनन्देन अनायासेनेत्यर्थः सर्वान् जनान् स्वके वशे आत्मनः वशे कुर्यात् । शुनीटी.

[2]शनैः शनैः प्रवर्धेत शुक्लपक्षमृगाङ्कवत् ।
एवंवृत्तो राजपुत्रो राज्यं प्राप्याप्यकण्टकम् ॥
[3]सहायवान् सहामात्यश्चिरं भुङ्क्ते वसुन्धराम् ।
समासतः कार्यमुक्तं युवराजस्य यद्धितम् ॥

किंच, शुक्लपक्षमृगाङ्कवत् वर्धमानचन्द्र इव शनैः शनैः क्रमेण प्रवर्धेत प्रकर्षेण वृद्धिं गच्छेत्, राजपुत्र इति शेषः। अकण्टकं राज्यं प्राप्यापि एवंवृत्तः एवंसदाचारसंपन्नः राजपुत्रः सहायवान् सहायसंपन्नः सहामात्यः अमात्यवर्गसहितः चिरं वसुन्धरां पृथिवीं भुङ्क्ते। युवराजस्य यत् हितं हितजनकं कार्यं तत् समासतः संक्षेपतः उक्तम्, मयेति शेषः । शुनीटी.

राजपदं प्राप्तस्य वृत्तम्

[4]प्राप्योत्तमं पदं पुत्रः सुनीत्या पालयन् प्रजाः ।
पूर्वामात्येषु पितृवद्गौरवं संप्रधारयेत् ॥

पुत्रः उत्तमं पदं राजपदं प्राप्य सुनीत्या प्रजाः पालयन् पूर्वामात्येषु पुरातनेषु अमात्येषु पितृवत् गौरवं गुरुभावं भक्तिमित्यर्थः, संप्रधारयेत् सम्यक् कुर्यादित्यर्थः । शुनीटी.

तस्यापि शासनं तैस्तु प्रधार्यं पूर्वतोऽधिकम् ।
युक्तं चेदन्यथा कार्यं निषेध्यं काललम्बनैः ॥

(१) शुनी. २।१४९ ; नीम. ४८ उत्त., नीतिसारे.

(२) शुनी. २।१५० ; नीम. ४८ नीतिसारे.

(३) शुनी. २।१५१ ; नीम. ४८ सहामात्य ( महामात्य ) पू., नीतिसारे.

(४) शुनी. ५।२०-२३.

तैः पूर्वैः अमात्यैः तस्य राजपुत्रस्यापि शासनं चेत् यदि युक्तं तदा पूर्वतः पूर्वस्मात् अधिकं यथा तथा प्रधार्य प्रतिपालनीयम् । अन्यथा अयुक्तत्वे इत्यर्थः, काललम्बनैः कालाश्रयिभिः सद्भिः समयान्तरे एतत्प्रतिपालनीयमितिवादिभिरित्यर्थः, कार्यं राजशासनीयं कर्म निषेध्यं निवारणीयम् । शुनीटी.

**तदनीत्या न वर्तेयुस्तेन साकं धनाशया ।**
**वर्तन्ति यदनीत्या ते तेन साकं पतन्त्यरात् ॥**

धनाशया अर्थलोभेन तेन नवेन राज्ञा साकं सह तस्य अनीत्या दुर्नयेन न वर्तेयुः न तिष्ठेयुः, ते इति शेषः । यत् यदि ते अनीत्या वर्तन्ति तदा तेन राज्ञा साकं सह अरात् शीघ्रं पतन्ति । शुनीटी.

**कुलभक्तांश्च यो द्वेष्टि नवीनं भजते जनम् ।**
**स गच्छेच्छत्रुसाद्राजा धनप्राणैर्वियुज्यते ॥**

यः कुलभक्तान् कुलक्रमेण अनुरक्तान् भृत्यान् द्वेष्टि, नवीनं जनं भजते च, स राजा शत्रुसाद्गच्छेत् शत्रोरधीनो भवेत् धनप्राणैः वियुज्यते च । शुनीटी.

## नीतिवाक्यामृतम्

राजपुत्रस्य विनयनम्

'शिक्षालापक्रियाक्षमो राजपुत्रः सर्वासु लिपिषु प्रसंख्याने पदप्रमाणप्रयोगकर्मणि नीत्यागमेषु रत्नपरीक्षायां संभोगप्रहरणोपवाह्यविद्यासु च साधु विनेतव्यः ॥

अथ कुमारो राज्ञा यथा कार्यस्तथाऽऽह— शिक्षेति । सम्यक् शिक्षापणीयः । शिक्षालापक्रियासु जनसभाकर्मसु क्षमः समर्थः पूर्वं कृत्वा ततो राजपुत्रः पश्चात् सर्वासु लिपिषु शिक्षापणीयः, तथा प्रसंख्याने गणितविषये, तथा पदप्रमाणप्रयोगकर्मणि । पदकर्म साहित्यम्, प्रमाणकर्म तर्कः प्रोच्यते, प्रयोगकर्म शब्दव्युत्पत्तिः कथ्यते । तथा नीत्यागमेषु नीतिशास्त्रेषु, तथा संभोगे वात्स्यायनादिषु, प्रहरणे शस्त्रविद्यायाम्, उपवाह्ये हस्त्यश्ववाहनविद्यासु शिक्षापणीय इति । तथा च राजपुत्रः— 'कुमारो यस्य मूर्खः स्यान्न विद्यासु विचक्षणः । तस्य राज्यं विनश्येत्तदप्राप्त्या नात्र संशयः ॥' । नीवाटी.

'साधुसंपादितो हि राजपुत्राणां विनयोऽन्वयमभ्युदयं न च दूषयति ॥

अथ राजपुत्राणां यथाऽभ्युदयो न दोषवान् भवति तदाह— साध्विति । न दोषयुक्तं करोति । कोऽसौ ? विनयः । कम् ? अन्वयं वंशं अभ्युदयं च राजवृद्धिं च । केषाम् ? राजपुत्राणाम् । किंविशिष्टो विनयः ? साधुसंपादितः साधुभिः संपादितः शिष्टनियोजितः । तथा च बादरायणः— 'विनयः साधुभिर्दत्तो राजज्ञानां भवेद्धि यः । न दूषयति वंशं तु न राज्यं न च संपदम् ॥' । नीवाटी.

घुणजग्धं काष्ठमिवाविनीतं राजपुत्रं राजकुलमभियुक्तमात्रं भज्येत् ॥

अथाविनीतस्य राजपुत्रस्य चेष्टितं राज्यं यादृग्भवति तदाह— घुणजग्धमिति । भज्येत् विनाशं याति । किं तत् ? राज्यं राजवंशः । यदि किम् ? यदि अभियुक्तं यदि राज्ये स्थापितम् । कम् ? राजपुत्रम् । किंविशिष्टम् ? अविनीतं दुराचारम् । किमिव भज्येत् ? काष्ठमिव । किंविशिष्टं काष्ठम् ? घुणजग्धं कृमिविशेषभक्षितम् । तस्मादविनीतो राजपुत्रो राज्ये न नियोक्तव्यः । तथा च भागुरिः— 'राजपुत्रो दुराचारो यदि राज्येऽभिषेचितः । तद्राज्यं नाशमायाति घुणजग्धं च दारुवत् ॥'। नीवाटी.

आप्तविद्यावृद्धोपरुद्धाः सुखोपरुद्धाश्च राजपुत्राः पितरं नाभिद्रुह्यन्ति ॥

अथ यादृक्षा राजपुत्राः पितरं न द्रुह्यन्ति तेषां स्वरूपमाह— आप्तेति । ये राजपुत्राः आप्तविद्यावृद्धोपरुद्धा भवन्ति । आप्ताः निजाः ये विद्यावृद्धाः विद्वांसः विद्यया कृत्वा ये वृद्धाः, न जरसा, तैर्ये उपरुद्धाः वृद्धिं नीताः । तथा सुखोपरुद्धाः सुखेन ये वृद्धिं नीतास्ते कदाचिदेव पितरं न द्रुह्यन्ति न व्यापादयन्ति । तथा च गौतमः— 'आप्तैर्विद्याधिकैर्येऽत्र राजपुत्राः सुरक्षिताः । वृद्धिं गताश्च सौख्येन जनकं न द्रुह्यन्ति ते ॥' । नीवाटी.

(१) नीवा. ११।४.

(१) नीवा. २४।७१-८५.

## मातृपितरौ राजपुत्राणां परमं दैवम् ॥

अथ राजपुत्राणां मातापितरौ यादृग्भूतौ तदाह— मात्रिति । माता च पिता च मातृपितरौ राजपुत्राणाम् । किंविशिष्टौ भवतः ? परमं उत्कृष्टं दैवं प्राक्तनं कर्मेत्यर्थः । यदि तैरन्यजन्मनि सुकृतं कृतं भवति तन्मातृपितृभ्यां सकाशात् राज्यप्राप्तिर्भवति । अथवा दुष्कृतं कृतं भवति तत्ताभ्यां पार्श्वाद्विनाशो भवति । तथा च गर्गः— ' जननीजनकावेतौ प्राक्तनं कर्म विश्रुतौ । सर्वेषां

राज्ये भवति तद्राज्यं वृथैव । तथा च शुक्रः— ' जनापवादसहितं यद्राज्यमिह कीर्त्यते । प्रभूतमपि तन्मिथ्या तत्पापाय राजसंस्थिते ॥ ' । नीवाटी.

## क्वचिदपि कर्मणि पितुराज्ञां नो लङ्घयेत् ॥

अथ राजपुत्रेण यत्कर्तव्यं तदाह— क्वचिदपीति । नो लङ्घयेत् नातिक्रमेत् । कोऽसौ ? राजपुत्रः । काम् ? आज्ञां आदेशम् । कस्य ? पितुः । क्व विषये ? क्वचिदपि कर्मणि । तथा च

[१]ततः स्वर्गगतः पक्षी भार्यया सह संगतः ।
कर्मणा पूजितस्तेन रेमे तत्र स भार्यया ॥

भीष्म उवाच-

[२]विमानस्थौ तु तौ राजन् लुब्धको वै ददर्श ह ।
दृष्ट्वा तौ दंपती दुःखादचिन्तयत सद्गतिम् ॥

[३]कीदृशेनेह तपसा गच्छेयं परमां गतिम् ।
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥

[४]महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवनः ।
निश्चेष्टो मारुताहारो निर्ममः स्वर्गकाङ्क्षया ॥

[५]ततोऽपश्यत्सुविस्तीर्णं हृद्यं पद्मविभूषितम् ।
नानाद्विजगणाकीर्णं सरः शीतजलं शुभम् ।
पिपासार्तोऽपि तद्दृष्ट्वा तृप्तः स्यान्नात्र संशयः ॥

[६]उपवासकृशोऽत्यर्थं स तु पार्थिव लुब्धकः ।
उपसर्पत संहृष्टः श्वापदाध्युषितं वनम् ॥

[७]महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह ।
प्रविशन्नेव च वनं निगृहीतः स कण्टकैः ॥

[१]स कण्टकविभुग्नाङ्गो लोहितार्द्रीकृतच्छविः ।
बभ्राम तस्मिन् विजने नानामृगसमाकुले ॥

[२]ततो द्रुमाणां महतां पवनेन वने तदा ।
उदतिष्ठत संघर्षात्सुमहान् हव्यवाहनः ॥

[३]तद्वनं वृक्षसंकीर्णं लताविटपसंकुलम् ।
ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः ॥

[४]सज्वालैः पवनोद्धूतैर्विस्फुलिङ्गैः समन्वितः ।
ददाह तद्वनं घोरं मृगपक्षिसमाकुलम् ॥

[५]ततः स देहमोक्षार्थं संप्रहृष्टेन चेतसा ।
अभ्यधावत संवृद्धं पावकं लुब्धकस्तदा ॥

[६]ततस्तेनाग्निना दग्धो लुब्धको नष्टकिल्बिषः ।
जगाम परमां सिद्धिं तदा भरतसत्तम ॥

[७]ततः स्वर्गस्थमात्मानं सोऽपश्यद्विगतज्वरः ।
यक्षगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् ॥

[८]एवं खलु कपोतश्च कपोती च पतिव्रता ।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्मणा ॥

---

(१) भा. १२।१४४।१२ ; भामु. १२।१४८।१२ पूर्वार्धे ( ततः स्वर्गं गतः पक्षी विमानवरमास्थितः । ) स्तेन ( स्तत्र ) तत्र स ( स सह ).

(२) भा. १२।१४५।१ ; भामु. १२।१४९।१ को वै (कः खे) उत्तरार्धे (दृष्ट्वा तौ दम्पती राजन् व्यचिन्तयत तां गतिम् ॥ ).

(३) भा. १२।१४५।२ ; भामु. १२।१४९।२ कीदृशेनेह ( ईदृशेनैव ).

(४) भा. १२।१४५।३ ; भामु. १२।१४९।३ जीवनः ( जीवकः ) मारुता ( मरुदा ).

(५) भा. १२।१४५।४ ; भामु. १२।१४९।४-५ पद्मवि ( पद्माभि ) द्विज ( पक्षि ) शुभम् ( शिवम् ).

(६) भा. १२।१४५।५ ; भामु. १२।१४९।५-६ उपसर्पत ( अनवेक्ष्यैव ).

(७) भा. १२।१४५।६ ; भामु. १२।१४९।६-७ च वनं ( स वनं ).

(१) भा. १२।१४५।७ ; भामु. १२।१४९।७-८ कण्टकविभुग्नाङ्गो ( कण्टकैर्विभिन्नाङ्गो ).

(२) भा. १२।१४५।८ ; भामु. १२।१४९।८-९ महतां ( महता ).

(३) भा. १२।१४५।९ ; भामु. १२।१४९।९-१० संकीर्णं ( संपूर्णं ).

(४) भा. १२।१४५।१० ; भामु. १२।१४९। १०-११ पूर्वार्धे ( स ज्वालैः पवनोद्भूतैर्विस्फुलिङ्गैः समन्ततः । ).

(५) भा. १२।१४५।११ ; भामु. १२।१४९। ११-१२ संवृद्धं ( वर्धन्तं ).

(६) भा. १२।१४५।१२ ; भामु. १२।१४९।१२ किल्बिषः ( कल्मषः ) तदा ( ततो ).

(७) भा. १२।१४५।१३ ; भामु. १२।१४९।१३ त्मानं सोऽ ( त्मानम ).

(८) भा. १२।१४५।१४-१६ ; भामु. १२।१४९। १४-१६ रा वृत्तं ( रावृत्तं ).

यास्पि चैवंविधा नारी भर्तारमनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥
एवमेतत्पुरा वृत्तं लुब्धकस्य महात्मनः ।
कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्मणा ॥
[१]यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत् ।
नाशुभं विद्यते तस्य मनसाऽपि प्रमाद्यतः ॥
[२]युधिष्ठिर महानेष धर्मो धर्मभृतां वर ।
गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्मणः ।
निष्कृतिर्न भवेत्तस्मिन् यो हन्याच्छरणागतम् ॥
[३]इतिहासमिमं श्रुत्वा पुण्यं पापप्रणाशनम् ।
न दुर्गतिमवाप्नोति स्वर्गलोकं च गच्छति ॥

राज्ञः षट् पवित्राणि

[४]यज्ञो दानं दया वेदाः सत्यं च पृथिवीपते ।
पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ॥
तदेव राज्ञां परमं पवित्रं जनमेजय ।
तेन सम्यग्गृहीतेन श्रेयांसं धर्ममाप्स्यसि ॥
[५]यत्त्वेव राज्ञो ज्यायो वै कार्याणां तद्वदामि ते ।
बलेन संविभागैश्च जय स्वर्गं पुनीष्व च ॥
[६]यस्यैवं बलमोजश्च स धर्मस्य प्रभुर्नरः ।
ब्राह्मणानां सुखार्थं त्वं पर्येहि पृथिवीमिमाम् ॥

बलेन धैर्येण । संविभागैः दानैः । ओजः इन्द्रियपाटवम् । नीटी.

[१]यथैवैनान् पुराऽक्षेप्सीस्तथैवैनान् प्रसादय ॥

श्रियः सत्यदानव्रततपःपराक्रमधर्मेषु वसतिः

शक्र उवाच–
[२]कथं त्वया बलिस्त्यक्तः किमर्थं वा शिखण्डिनि ।
कथं च मां न जह्यास्त्वं तन्मे ब्रूहि शुचिस्मिते ॥

श्रीरुवाच–
सत्ये स्थिताऽस्मि दाने च व्रते तपसि चैव हि ।
पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥
[३]ब्रह्मण्योऽयं सदा भूत्वा सत्यवादी जितेन्द्रियः ।
अभ्यसूयद्ब्राह्मणान् वै उच्छिष्टश्चास्पृशद्घृतम् ॥
[४]यज्ञशीलः पुरा भूत्वा मामेव यजतेत्ययम् ।
प्रोवाच लोकान् मूढात्मा कालेनोपनिपीडितः ॥
[५]अपाकृता ततः शक्र त्वयि वत्स्यामि वासव ।
अप्रमत्तेन धार्याऽस्मि तपसा विक्रमेण च ॥

ब्राह्मणाः पूज्याः

युधिष्ठिर उवाच–
[६]के पूज्याः के नमस्कार्याः कान्नमस्यसि भारत ।
एतन्मे सर्वमाचक्ष्व येषां स्पृहयसे नृप ॥

'के पूज्याः' इत्यादिना पूर्वोक्तधर्मान् विवृणोति । तत्रापि 'चक्षुर्दद्यात्' (भामु. १३।७।६) इत्यादिना आतिथ्यं कर्तव्यमुक्तं तद्विवृणोत्यध्यायेन । नीटी.

---

(१) भा. १२।१४५।१७; भामु. १२।१४९।१७ प्रमाद्यतः (प्रसादतः).

(२) भा. १२।१४५।१८; भामु. १२।१४९।१८–१९ निष्कृतिर्न भवेत्तस्मिन् (न निष्कृतिर्भवेत्तस्य).

(३) भामु. १२।१४९।१९.

(४) भा. १२।१४८।६–७; भामु. १२।१५२।७–८.

(५) भा. १२।१४८।१६; भामु. १२।१५२।१७–१८ ज्यायो वै (ज्यायिष्ठं) वदामि (ब्रवीमि) पुनीष्व च (जनेश्वर).

(६) भा. १२।१४८।१७; भामु. १२।१५२।१८–१९ यस्यैवं (यस्यैव) उत्तरार्धे (ब्राह्मणार्थं सुखार्थं हि त्वं पाहि वसुधां नृप ॥).

(१) भा. १२।१४८।१८; भामु. १२।१५२।१९ (यथैवैतान् पुराऽक्षेप्सीस्तथैवैतान् प्रसादय ॥).

(२) भा. १२।२१८।११–१२; भामु. १२।२२५।११–१२.

(३) भा. १२।२१८।१३; भामु. १२।२२५।१३ सदा (पुरा) णान् वै उ (णानामु).

(४) भा. १२।२१८।१४; भामु. १२।२२५।१४ पुरा (सदा) तेत्ययम् (ते स्वयम्).

(५) भा. १२।२१८।१५; भामु. १२।२२५।१५.

(६) भा. १३।८।१; भामु. १३।८।१ येषां (येभ्यः).

[1]उत्तमापद्गतस्यापि यत्र ते वर्तते मनः ।
मनुष्यलोके सर्वस्मिन् यदमुत्रेह चाप्युत ॥

यदमुत्रेह च हितं तद्वदेति शेषः । नीटी.

भीष्म उवाच–

[2]स्पृहयामि द्विजातीनां येषां ब्रह्म परं धनम् ।
येषां स्वप्रत्ययः स्वर्गस्तपःस्वाध्यायसाधनः ॥

ब्रह्म आनन्दात्मा । स्वर्गः सत्यसंकल्पत्वादिसिद्धिः । तपःस्वाध्यायौ साधनं यस्य स्वर्गस्य । 'यस्तमात्मानमनुविद्य विजानाति सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' इति श्रुतेः सः स्वप्रत्ययः । नीटी.

[3]येषां वृद्धाश्च बालाश्च पितृपैतामहीं धुरम् ।
उद्वहन्ति न सीदन्ति तेषां वै स्पृहयाम्यहम् ॥

[4]विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम् ।
श्रुतवृत्तोपपन्नानां सदाऽक्षरविदां सताम् ॥

अक्षरं ब्रह्म, तद्विदाम् । नीटी.

[5]संसत्सु वदतां येषां हंसानामिव संघशः ।
मङ्गल्यरूपा रुचिरा दिव्यजीमूतनिःस्वनाः ॥

हंससादृश्यं क्षीरनीरयोरिवाऽऽत्मानात्मनोर्विवेचनात् । नीटी.

[6]सम्यगुच्चारिता वाचः श्रूयन्ते हि युधिष्ठिर ।
शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः ॥

नृपतौ नृपतेः समीपे उच्चरिताः । नीटी.

[7]ये चापि तेषां श्रोतारः सदा सदसि संमताः ।
विज्ञानगुणसंपन्नास्तेषां च स्पृहयाम्यहम् ॥

(१) भा. १३।८।२ ; भामु.

(२) भा. १३।८।३ ; भामु. १३।८।३ जातीनां (जातिभ्यो) साधनः ( साधनम् ).

(३) भा. १३।८।४ ; भामु. १३।८।४ वृद्धाश्च बालाश्च (बालाश्च वृद्धाश्च ) तेषां ( तेभ्यो ).

(४) भा. १३।८।५ ; भामु.

(५) भा. १३।८।६ ; भामु. १३।८।६ येषां ( तात ).

(६) भा. १३।८।७ ; भामु. १३।८।७ चारिता ( चरिता).

(७) भा. १३।८।८ ; भामु. १३।८।८ स्तेषां च (स्तेभ्यश्च).

[1]सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च ।
ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर ।
ये चापि सततं राजंस्तेषां च स्पृहयाम्यहम् ॥

[2]शक्यं ह्येवाऽऽहवे योद्धुं न दातुमनसूयितम् ।
शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर ।
तेषां संख्यायमानानां दानशूरो विशिष्यते ॥

अनसूयितं असूयावर्ज्यं यथा स्यात्तथा । नीटी.

[3]धन्यः स्यां यद्यहं भूयः सौम्य ब्राह्मणकोऽपि वा ।
कुले जातो धर्मगतिस्तपोविद्यापरायणः ॥

ब्राह्मणकः कुत्सितब्राह्मणोऽपि यद्यहं स्यां तर्हि धन्यः, किमुत कुले जातः ? नीटी.

[4]न मे त्वत्तः प्रियतरो लोकेऽस्मिन् पाण्डुनन्दन ।
त्वत्तश्च मे प्रियतरा ब्राह्मणा भरतर्षभ ॥

[5]यथा मम प्रियतरास्त्वत्तो विप्राः कुरूद्वह ।
तेन सत्येन गच्छेयं लोकान् यत्र स शंतनुः ॥

[6]न मे पिता प्रियतरो ब्राह्मणेभ्यस्तथाऽभवत् ।
न मे पितुः पिता वाऽपि ये चान्येऽपि सुहृज्जनाः ॥

[7]न हि मे वृजिनं किंचिद्विद्यते ब्राह्मणेष्विह ।
अणु वा यदि वा स्थूलं विदितं साधुकर्मभिः ॥

वृजिनं संकटम्, फलाशेति यावत् । पूज्यत्वादेव तान् पूजयामि, न तु फलायेत्यर्थः । नीटी.

(१) भा. १३।८।९ ; भामु. १३।८।९–१० स्तेषां च ( स्तेभ्यश्च ).

(२) भा. १३।८।१० ; भामु. १३।८।१०–११ तेषां (येषां).

(३) भा. १३।८।११ ; भामु. १३।८।१२.

(४) भा. १३।८।१२ ; भामु. १३।८।१३ श्च मे ( श्चापि ).

(५) भा. १३।८।१३ ; भामु. १३।८।१४ तरा ( तमा ) कुरूद्वह ( कुरूत्तम ) शंतनुः ( शांतनुः ).

(६) भा. १३।८।१४ ; भामु. १३।८।१५.

(७) भा. १३।८।१५ ; भामु. १३।८।१६ विदितं साधुकर्मभिः ( विद्यते साधु कर्मसु ).

[1]कर्मणा मनसा वाऽपि वाचा वाऽपि परंतप ।
यन्मे कृतं ब्राह्मणेषु तेनाद्य न तपाम्यहम् ॥

तेन ब्राह्मणाराधनेन अद्य शरपञ्जरस्थोऽपि न तपामि न व्यथां प्राप्नोमि इति स्वानुभवं दर्शयति । नीटी.

[2]ब्रह्मण्य इति मामाहुस्तया वाचाऽस्मि तोषितः ।
एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम् ॥

ब्रह्मण्यः ब्रह्मजातौ आसक्तः । नीटी.

पश्यामि लोकानमलाञ्शुचीन् ब्राह्मणयायिनः ।
तेषु मे तात गन्तव्यमह्नाय च चिराय च ॥

यायिनः अनुचरस्य मे । नीटी.

ब्राह्मणा रक्षणीयाः

[3]यथा पत्याश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर ।
स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः ॥

[4]क्षत्रियः शतवर्षी च दशवर्षी च ब्राह्मणः ।
पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणः पिता ॥

[5]नारी तु पत्यभावे वै देवरं कुरुते पतिम् ।
पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम् ॥

[6]पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते ।
अग्निवच्चोपचर्या वै ब्राह्मणाः कुरुसत्तम ॥

[7]ऋजून् सतः सत्यशीलान् सर्वभूतहिते रतान् ।
आशीविषानिव क्रुद्धान् द्विजानुपचरेत्सदा ॥

तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर ।
उभे चैते परित्याज्ये तेजश्चैव तपस्तथा ॥

ब्राह्मणाद्बिभ्येत्, न तु तत्र तेजस्तपसी स्वीये प्रकाशयेदित्यर्थः । तेजः क्रोधबलम् । तपः योगबलम् । नीटी.

व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते ।
हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः ॥

तयोः तपस्तेजसोः ब्राह्मणक्षत्रियस्थयोः व्यवसायः फलं अभिभवरूपं शीघ्रं तीव्रं तथापि तपस्विन एवेतरान् हन्युः, न तेजस्विनः इत्यर्थः । नीटी.

[1]भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात् ।
कुर्यादुभयतःशेषं दत्तशेषं न शेषयेत् ॥

ल्यब्लोपे पञ्चमी । अकोपनं ब्राह्मणं प्राप्य यद् भूयः बहुतरं उभयं तपस्तेजआख्यं स्यात् तद्दत्तं खण्डितं भवतीति शेषः । क्षमावत्सु प्रयुक्तं तत्तेजो बह्वपि तूलराशिवत् सद्यो नश्यतीत्यर्थः । उभयतः उभयं चेत् शेषं कुर्यात्, न तद्दत्तशेषं शेषयेत् इत्यन्वयः । द्वाभ्यामन्योन्यस्मिन् प्रयुक्तं तेजआदिद्वयं न निःशेषं नश्यति, किंतु शेषं क्षमावता खण्डितस्य तस्यावशिष्टं तु न शेषयेत् न शिष्यते, अपि तु निःशेषमेव नश्यतीत्यर्थः । नीटी.

[2]दण्डपाणिर्यथा गोषु पालो नित्यं स्थिरो भवेत् ।
ब्राह्मणान् ब्रह्म च तथा क्षत्रियः परिपालयेत् ॥

[3]पितेव पुत्रान् रक्षेथा ब्राह्मणान् ब्रह्मतेजसः ।
गृहे चैषामवेक्षेथाः कच्चिदस्तीह जीवनम् ॥

अस्तीति । अभावे तद्देयमित्यर्थः । नीटी.

[4]न हर्तव्यं विप्रधनं क्षन्तव्यं तेषु नित्यशः ।
बालाश्च नावमन्तव्या दरिद्राः कृपणा अपि ॥

[5]एवमेव च मां नित्यं ब्राह्मणाः संदिशन्ति वै ।
प्रतिश्रुत्य भवेद्देयं नाऽऽशा कार्या हि ब्राह्मणैः ॥

आशा वन्ध्याशा । नीटी.

---

(१) भा. १३।८।१६; भामु. १३।८।१७ णेषु ते (णेभ्यस्ते).
(२) भा. १३।८।१७-१८; भामु. १३।८।१८-१९.
(३) भा. १३।८।१९; भामु. १३।८।२० पत्या (भर्त्रा).
(४) भा. १३।८।२०; भामु. १३।८।२१ च ब्राह्मणः (द्विजोत्तमः) णः पिता (णो गुरुः ?).
(५) भा. १३।८।२१-२२; भामु. १३।८।२२-२३.
(६) भा. १३।८।२३; भामु. १३।८।२४ जानुप (जान्परि).
(७) भा. १३।८।२४-२५; भामु. १३।८।२५-२६.

(१) भा. १३।८।२६; भामु. १३।८।२७ तःशेषं (तः शेषं).
(२) भा. १३।८।२७; भामु. १३।८।२८ स्थिरो भवेत् (हि रक्षयेत्) ब्राह्मणान् (ब्राह्मणा).
(३) भा. १३।८।२८; भामु. १३।८।२९ ब्रह्मतेजसः (धर्मचेतसः) कच्चिदस्तीह (किंस्विदस्तीति).
(४) भामु. १३।९।१८.
(५) भा. १३।९।१५; भामु. १३।९।१९ हि ब्राह्मणैः (द्विजोत्तमे).

[1]ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते ।
सुसमिद्धो यथा दीप्तः पावकस्तद्विधः स्मृतः ॥
[2]यं निरीक्षेत संक्रुद्ध आशया पूर्वजातया ।
प्रदहेत हि तं राजन् कक्षमक्षय्यभुग्यथा ॥

अक्षय्यं पित्रर्थमुद्दिष्टं दानं भुङ्क्ते इति अक्षय्यभुक् अग्निः । नीटी.

[3]स एव हि यदा तुष्टो वचसा प्रतिनन्दति ।
भवत्यगदसंकाशो विषये तस्य भारत ॥

अगदसंकाशः चिकित्सकतुल्यः । नीटी.

[4]पुत्रान् पौत्रान् पशूंश्चैव बान्धवान् सचिवांस्तथा ।
पुरं जनपदं चैव शान्तिरिष्टेन पुष्यति ॥

शान्तिरिष्टेन शान्त्या हितेन क्षेमेण । 'रिष्टं क्षेमे' इति मेदिनी । नीटी.

[5]एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते ।
सहस्रकिरणस्येव सवितुर्धरणीतले ॥
तस्मादातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर ।
यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम ॥
[6]ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः ।
शक्यं प्राप्तुं विशेषेण दानं हि महती क्रिया ॥
[7]इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता ॥

इतः अस्मिंल्लोके । ब्राह्मण एवं दानपात्रमिति प्रघट्टकार्थः । नीटी.

(१) भा. १३।९।१६; भामु. १३।९।२०.
(२) भा. १३।९।१७; भामु. १३।९।२१ देहेत (दहेच्च).
(३) भा. १३।९।१८; भामु. १३।९।२२.
(४) भा. १३।९।१९; भामु. १३।९।२३ पुष्यति (पोषयेत्).
(५) भा. १३।९।२०–२१; भामु. १३।९।२४–२५.
(६) भा. १३।९।२२; भामु. १३।९।२६ शक्यं (शक्यः).
(७) भा. १३।९।२३–२४; भामु. १३।९।२७–२८.

महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते ।
वेलायां न तु कस्यांचिद्गच्छेद्विप्रो ह्यपूजितः ॥

तीर्थमपि ब्राह्मण एवेत्याह– महदिति । नीटी.

## शरणागतरक्षणम्

युधिष्ठिर उवाच–
[1]पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
त्वत्तोऽहं श्रोतुमिच्छामि धर्मं भरतसत्तम ॥

'पितामह' इत्यादेरध्यायस्य पक्षिमात्रस्यापि स्वशरीरदानेन रक्षणं कार्यम्, किमुत पूर्वोक्तानां पूज्यानामर्थादिना इति तात्पर्यम् । नीटी.

शरणागतं ये रक्षन्ति भूतग्रामं चतुर्विधम् ।
किं तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः ॥
भीष्म उवाच–
इदं शृणु महाप्राज्ञ धर्मपुत्र महायशः ।
इतिहासं पुरावृत्तं शरणार्थं महाफलम् ॥
प्रपात्यमानः श्येनेन कपोतः प्रियदर्शनः ।
वृषदर्भं महाभागं नरेन्द्रं शरणं गतः ॥

प्रपात्यमानः आकाशादिति शेषः । वृषदर्भं औशीनरं शिबिम् । नीटी.

स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतम् ।
आश्वास्याऽऽश्वसिहीत्याह न तेऽस्ति भयमण्डज ॥
भयं ते सुमहत्कस्मात्कुत्र किं वा कृतं त्वया ।
येन त्वमिह संप्राप्तो विसंज्ञो भ्रान्तचेतनः ॥
नवनीलोत्पलापीड चारुवर्ण सुदर्शन ।
दाडिमाशोकपुष्पाक्ष मा त्रसस्वाभयं तव ॥

नवं नीलं च यदुत्पलं तस्य आपीडः इव अलंकारभूतः चारुर्वर्णो यस्य । नीटी.

मत्सकाशमनुप्राप्तं न त्वां कश्चित्समुत्सहेत् ।
मनसा ग्रहणं कर्तुं रक्षाध्यक्षपुरस्कृतम् ॥
काशिराज्यं तदद्यैव त्वदर्थं जीवितं तथा ।
त्यजेयं भव विस्रब्धः कपोत न भयं तव ॥

(१) भामु. १३।३२।१–३९.

श्येन उवाच–

ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि ।
अतिक्रान्तं च प्राप्तं च प्रयत्नाच्चोपपादितम् ॥

अतिक्रान्तं गतप्रायजीवितम् । नीटी.

मांसं च रुधिरं चास्य मज्जा मेदश्च मे हितम् ।
परितोषकरो ह्येष मम माऽस्याग्रतो भव ॥

अस्य मदन्नस्य अग्रतः अन्तरायभूतः मा भव । नीटी.

तृष्णा मे बाधतेऽत्युग्रा क्षुधा निर्दहतीव माम् ।
मुञ्चैनं न हि शक्ष्यामि राजन् मन्दयितुं क्षुधाम् ॥

तृष्णा एतद्रुधिरपिपासा । नीटी.

मया ह्यनुसृतो ह्येष मत्पक्षनखविक्षतः ।
किंचिदुच्छ्वासनिश्वासं न राजन् गोप्तुमर्हसि ॥
यदि स्वविषये राजन् प्रभुस्त्वं रक्षणे नृणाम् ।
खेचरस्य तृषार्तस्य न त्वं प्रभुरथोत्तम ॥
यदि वैरिषु भृत्येषु स्वजनव्यवहारयोः ।
विषयेष्विन्द्रियाणां च आकाशे मा पराक्रम ॥

यदि वैर्यादिषु पराक्रमसे तद्युक्तम्, न तु आकाशे आकाशचारिषु । नीटी.

प्रभुत्वं हि पराक्रम्य सम्यक् पक्षहरेषु ते ।
यदि त्वमिह धर्मार्थी मामपि द्रष्टुमर्हसि ॥

पक्षहरेषु आज्ञाभङ्गिषु शत्रुषु । मामशत्रुमपि जीवनहरणेन बाधमानस्य तव धर्मार्थिनोऽप्यधर्मो भविष्यतीति भावः । नीटी.

भीष्म उवाच–

श्रुत्वा श्येनस्य तद्वाक्यं राजर्षिर्विस्मयं गतः ।
संभाव्य चैनं तद्वाक्यं तदर्थी प्रत्यभाषत ॥

एनं श्येनं तद्वाक्यं च संभाव्य स्तुत्वा । तदर्थी कपोतार्थी । नीटी.

राजोवाच–

गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां क्षुधाप्रशमनाय ते ॥
शरणागतं न त्यजेयमिति मे व्रतमाहितम् ।
न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज ॥

श्येन उवाच–

न वराहं न चोक्षाणं न चान्यान् विविधान्द्विजान् ।
भक्षयामि महाराज किमन्नाद्येन तेन मे ॥
यस्तु मे विहितो भक्ष्यः स्वयं देवैः सनातनः ।
श्येनाः कपोतान्खादन्ति स्थितिरेषा सनातनी ॥
उशीनर कपोते तु यदि स्नेहस्तवानघ ।
ततस्त्वं मे प्रयच्छाद्य स्वमांसं तुलया धृतम् ॥

राजोवाच–

महाननुग्रहो मेऽद्य यस्त्वमेवमिहाऽऽत्थ माम् ।
बाढमेवं करिष्यामीत्युक्त्वाऽसौ राजसत्तमः ॥
उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत् ।
अन्तःपुरे ततस्तस्य स्त्रियो रत्नविभूषिताः ॥
हाहाभूता विनिष्क्रान्ताः श्रुत्वा परमदुःखिताः ।
तासां रुदितशब्देन मन्त्रिभृत्यजनस्य च ॥
बभूव सुमहान्नादो मेघगम्भीरनिःस्वनः ।
निरुद्धं गगनं सर्वं शुभ्रं मेघैः समन्ततः ॥
मही प्रचलिता चाऽऽसीत्तस्य सत्येन कर्मणा ।
स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत् ॥
तानि मांसानि संछिद्य तुलां पूरयतेऽशनैः ।
तथाऽपि न समस्तेन कपोतेन बभूव ह ॥

अशनैः शीघ्रम् । नीटी.

अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः ।
तुलां ततः समारूढः स्वं मांसक्षयमुत्सृजन् ॥

मांसक्षयं मांसालयं शरीरम् । नीटी.

ततः सेन्द्रास्त्रयो लोकास्तं नरेन्द्रमुपस्थिताः ।
भेर्यश्चाऽऽकाशगैस्तत्र वादिता देवदुन्दुभिः ॥
अमृतेनावसिक्तश्च वृषदर्भो नरेश्वरः ।
दिव्यैश्च सुसुखैर्माल्यैरभिवृष्टः पुनः पुनः ॥
देवगन्धर्वसंघातैरप्सरोभिश्च सर्वतः ।
नृत्तश्चैवोपगीतश्च पितामह इव प्रभुः ॥

नृत्तः नृत्येन तोषितः । एवमुपगीतः । नीटी.

हेमप्रासादसंबाधं मणिकाञ्चनतोरणम् ।
स वैदूर्यमणिस्तम्भं विमानं समधिष्ठितः ॥

स राजर्षिर्गतः स्वर्गं कर्मणा तेन शाश्वतम् ।
शरणागतेषु चैवं त्वं कुरु सर्वं युधिष्ठिर ॥
भक्तानामनुरक्तानामाश्रितानां च रक्षिता ।
दयावान् सर्वभूतेषु परत्र सुखमेधते ॥
साधुवृत्तो हि यो राजा सद्वृत्तमनुतिष्ठति ।
किं न प्राप्तं भवेत्तेन स्वव्याजेनेह कर्मणा ॥

साधुवृत्तः सुशीलः । सद्वृत्तं शिष्टाचारम् । स्वव्याजेन सुतरां निष्कपटेन । नीटी.

स राजर्षिर्विशुद्धात्मा धीरः सत्यपराक्रमः ।
काशीनामीश्वरः ख्यातस्त्रिषु लोकेषु कर्मणा ॥
योऽप्यन्यः कारयेदेवं शरणागतरक्षणम् ।
सोऽपि गच्छेत तामेव गतिं भरतसत्तम ॥

अस्यां कथायां विधेयमाह– योऽपीति । नीटी.

इदं वृत्तं हि राजर्षे वृषदर्भस्य कीर्तयन् ।
पूतात्मा वै भवेल्लोके शृणुयाद्यश्च नित्यशः ॥

ब्राह्मणरक्षणं कर्तव्यम्

युधिष्ठिर उवाच–

[1]किं राज्ञः सर्वकृत्यानां गरीयः स्यात्पितामह ।
किं कुर्वन् कर्म नृपतिरुभौ लोकौ समश्नुते ॥

भीष्म उवाच–

[2]एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत ।
ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छता ॥

अनुष्ठानं आराधनम् । नीटी.

[3]कर्तव्यं पार्थिवेन्द्रेण तथैव भरतर्षभ ।
श्रोत्रियान् ब्राह्मणान् वृद्धान्नित्यमेवाभिपूजयेत् ॥

(१) भा. १३।३३।१; भामु. १३।३३।१ किं कुर्वन् ( कुर्वन् किं ).

(२) भा. १३।३३।२; भामु.; राक. १७५ च्छान (ज्ञान) मिच्छता (मिच्छतः); राप्र. १४४ च्छान (ज्ञात).

(३) भा. १२।३३।२ उत्त.; भामु. १३।३३।३; राक. १७५ वेन्द्रेण तथैव (वेनेह तद्विद्धि) ब्राह्मणान् (स्नातकान्); राप्र. १४४ राकवत्.

[1]पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ।
सान्त्वेन भोगदानेन नमस्कारैस्तथाऽर्चयेत् ॥
[2]एतत्कृत्यतमं राज्ञो नित्यमेवेति लक्षयेत् ।
यथाऽऽत्मानं यथा पुत्रांस्तथैतान् परिपालयेत् ॥
[3]ये चाप्येषां पूज्यतमास्तान् दृढं प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥

एषां ब्राह्मणानां मध्ये । नीटी.

[4]ते पूज्यास्ते नमस्कार्यास्ते रक्ष्याः पितरो यथा ।
तेष्वेव यात्रा लोकस्य भूतानामिव वासवे ॥
[5]अभिचारैरुपायैश्च दहेयुरपि तेजसा ।
निःशेषं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः ॥

वासवे पर्जन्ये । अभिचारैः श्येनादिभिः उपायैः कौलिकशास्त्रप्रसिद्धैः । चेतसा संकल्पमात्रेण । नीटी.

[6]नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः ।
कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव ॥

अन्तं नाशकरम् । दिशश्चैषां न अपावृताः सर्वत्राकुण्ठिता गतिरेतेषामित्यर्थः । अग्निशिखा इव दहन्तः । नीटी.

[7]विद्यन्तेषां साहसिका गुणास्तेषामतीव हि ।
कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे ॥

(१) भा. १३।३३।३; भामु. १३।३३।४; राक. १७५–१७६ थाऽर्चयेत (थेज्यया); राप्र. १४४ राकवत्.

(२) भा. १३।३३।४; भामु. १३।३३।५ वेति ल (वोपल) परि (प्रति); राक. १७६ राज्ञो (राज्ञां) वेति ल (वाभिल); राप्र. १४४ राकवत्.

(३) भा. १३।३३।५; भामु. १३।३३।६ प्रतिपू (प्रति पू); राक. १७६ दृढं (नृपः); राप्र. १४४ राकवत्.

(४) भा. १३।३३।६; भामु. १३।३३।७ र्यास्ते रक्ष्याः (र्या मान्यास्ते) लोकस्य (लोकानां).

(५) भा. १३।३३।७; भामु. १३।३३।८ तेजसा (चेतसा).

(६) भा. १३।३३।८; भामु. १३।३३।९.

(७) भा. १३।३३।९; भामु. १३।३३।१० विद्यन्तेषां (विभ्यत्येषां).

एषां एभ्यः साहसिकाः अकार्यकारिणोऽपि बिभ्यति, किमुत विवेकिनः ? छन्नाः केचिज्जडभरतादयः । अपरे वसिष्ठादयः । नीटी.

[1]प्रसह्यकारिणः केचित्कार्पासमृदवोऽपरे ।
सन्ति चैषामतिशठास्तथाऽन्येऽतितपस्विनः ॥

प्रसह्यकारिणः दुर्वासःप्रभृतयः । मृदवः गौतमादयः, ये पादचारेऽपि हिंसाभयात् पादयोरेवाक्षि चक्रुः इत्यक्षपादत्वं गताः । अतिशठाः अगस्त्यादयः वातापिं जरयितुं मांसे लोलुपतां दर्शयन्तः । नीटी.

[2]कृषिगोरक्ष्यमप्यन्ये भैक्षमन्येऽप्यनुष्ठिताः ।
चोराश्चान्येऽनृताश्चान्ये तथाऽन्ये नटनर्तकाः ॥

कृषिं कुर्वन्तः उद्दालकगुर्वादयः । गोरक्ष्यं गुरोरेव, उपमन्युप्रभृतयः । भैक्ष्यं दत्तात्रेयादयः । चौराः वाल्मिकिविश्वामित्रादयः । अनृताः कलहप्रियाः नारदादयः । नटनर्तकाः भरतादयः । नीटी.

[3]सर्वकर्मसु दृश्यन्ते प्रशान्तेष्वितरेषु च ।
विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ ॥

सर्वकर्मसहाः समुद्रशोषणादावपि समर्थाः । नीटी.

[4]नानाकर्मसु युक्तानां बहुकर्मोपजीविनाम् ।
धर्मज्ञानां सतां तेषां नित्यमेवानुकीर्तयेत् ॥

स्वरूपप्रच्छादनार्थं लोकरक्षार्थं वा निषिद्धेनापि कर्मणा वर्तमानाः, वस्तुतस्तु धर्मज्ञाः, तेषां तान् नित्यमेवानुकीर्तयेत् । नीटी.

---

(१) भा. १३।३३।१०; भामु. १३।३३।११ थाऽन्येऽति (थैवान्ये).

(२) भा. १३।३३।११; भामु. १३।३३।१२ प्यन्ये भैक्ष (प्येके भैक्ष्य) चोरा (चौरा).

(३) भा. १३।३३।१२; भामु. १३।३३।१३ सु दृश्यन्ते प्रशान्ते (सहाश्चान्ये पार्थिवे) चार (कार).

(४) भा. १३।३३।१३; भामु. १३।३३।१४ युक्तानां (रक्तानां).

[1]पितॄणां देवतानां च मनुष्योरगरक्षसाम् ।
पुरोहिता महाभागा ब्राह्मणा वै नराधिप ॥

एते पूज्याः इति शेषः । यतो महाभागाः । नीटी.

[2]नैते देवैर्न पितृभिर्न गन्धर्वैर्न राक्षसैः ।
नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ॥

[3]अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
यमिच्छेयुः स राजा स्याद्यं द्विष्युः स पराभवेत् ॥

[4]परिवादं च ये कुर्युर्ब्राह्मणानामचेतसः ।
सत्यं ब्रवीमि ते राजन् विनश्येयुर्न संशयः ॥

[5]निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरावराः ।
परिकुप्यन्ति ते राजन् सततं द्विषतां द्विजाः ॥

परायणाः हेतवः । नीटी.

[6]ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते ।
ब्राह्मणैर्यः पराकुष्टः पराभूयात्क्षणाद्धि सः ॥

[7]शका यवनकाम्बोजास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥

अदर्शनात् अननुग्रहात् । नीटी.

[8]द्रमिळाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कौलाः सर्पा माहिषकास्तास्ताः क्षत्रियजातयः ॥

---

(१) भा. १३।३३।१४; भामु. १३।३३।१५ पुरोहिता (पुराऽप्येते) नरा (जना).

(२) भा. १३।३३।१५; भामु. १३।३३।१६.

(३) भा. १३।३३।१६; भामु. १३।३३।१७ यं द्विष्युः (यो नेष्टः).

(४) भा. १३।३३।१७ पू.; भामु. १३।३३।१८.

(५) भा. १३।३३।१७; भामु. १३।३३।१९ वराः (यणाः).

(६) भा. १३।३३।१८; भामु. १३।३३।२० कुष्टः (क्रुष्टः).

(७) भा. १३।३३।१९; भामु. १३।३३।२१.

(८) भा. १३।३३।२०; भामु. १३।३३।२२ द्रमिळा (द्राविडा) कौलाः सर्पा माहि (कौलिसर्पा महि).

[1]वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ।
श्रेयान् पराजयस्तेभ्यो न जयो जयतां वर ॥
यस्तु सर्वमिदं हन्याद्ब्राह्मणं च न तत्समम् ।
ब्रह्मवध्या महान् दोष इत्याहुः परमर्षयः ॥

[2]परिवादो द्विजातीनां न श्रोतव्यः कथंचन ।
आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा ॥

[3]न स जातोऽजनिष्यो वा पृथिव्यामिह कश्चन ।
यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् ॥

[4]दुर्ग्रहो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि ॥

भीष्म उवाच–

[5]ब्राह्मणानेव सततं भृशं संप्रतिपूजयेत् ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥

'ब्राह्मणान्' इत्याद्यध्यायत्रयेण दानपात्रत्वं ब्राह्मणानामुच्यते । सोमो राजा येषां ते सोमराजानः । नीटी.

[6]एते भोगैरलंकारैरन्यैश्चैव किमिच्छकैः ।
सदा पूज्या नमस्कार्या रक्ष्याश्च पितृवन्नृपैः ।
अतो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् ॥

किमिच्छतीति प्रश्नपूर्वकं यत्तदिष्टं दीयते तत् किमिच्छकम् । नीटी.

[1]जायतां ब्रह्मवर्चस्वी राष्ट्रे वै ब्राह्मणः शुचिः ।
महारथश्च राजन्य एष्टव्यः शत्रुतापनः ॥
ब्राह्मणं जातिसंपन्नं धर्मज्ञं संशितव्रतम् ।
वासयेत गृहे राजन्न तस्मात्परमस्ति वै ॥

[2]न ब्राह्मणविरोधेन शक्या शास्तुं वसुंधरा ।
ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥
तान् पूजयस्व सततं दानेन परिचर्यया ।
यदीच्छसि महीं भोक्तुमिमां सागरमेखलाम् ॥

[3]प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ ।
प्रतिग्रहं ये नेच्छेयुस्तेऽपि रक्ष्यास्त्वयाऽनघ ॥

तेभ्यो रक्ष्यं स्वकुलमिति शेषः । नीटी.

[4]श्रीश्च राज्यं च कोशश्च क्षत्रियाणां युधिष्ठिर ।
विहितं दृश्यते राजन् सागरान्ता च मेदिनी ॥

[5]क्षत्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम् ।
राजा दण्डधरो राजन् रक्षा नान्यत्र क्षत्रियात् ॥

[6]ब्राह्मणा हि महाभागा देवानामपि देवताः ।
तेषु राजा प्रवर्तेत पूजया विधिपूर्वकम् ॥

[7]प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् ।
लुप्यमानाः स्वधर्मेण क्षत्रियो रक्षति प्रजाः ॥

[8]दस्युभिर्ह्रियमाणं च धनं दारांश्च सर्वशः ।
सर्वेषामेव वर्णानां त्राता भवति पार्थिवः ॥

---

(१) भा. १३।३३।२१–२२; भामु. १३।३३।२३–२४.

(२) भा. १३।३३।२३; भामु. १३।३३।२५ व्रजेत (व्रजेच्च).

(३) भा. १३।३३।२४; भामु. १३।३३।२६ निष्यो वा (निष्यद्वा).

(४) भा. १३।३३।२५; भामु. १३।३३।२७ दुर्ग्रहो (दुर्ग्राह्यो) मूर्ध्ना (राजन्).

(५) भा. १३।३४।१; भामु. १३।३४।१ संप्रति (संपरि).

(६) भा. १३।३४।२; भामु. १३।३४।२–३ स्कार्या (स्कारै) अतो (ततो).

(१) भा. १३।३४।३–४; भामु. १३।३४।३–५.

(२) भा. १३।३५।२१–२२; भामु.

(३) भा. १३।३५।२३; भामु. १३।३५।२३ स्तेऽपि रक्ष्यास्त्वयाऽनघ (स्तेभ्यो रक्ष्यं त्वया नृप).

(४) भा. १३।४७।४०; भामु. १३।४७।४०–४१ न्ता च मेदिनी (न्तां च मेदिनीम्).

(५) भा. १३।४७।४१; भामु.

(६) भा. १३।४७।४२; भामु. १३।४७।४२ राजा (राजन्).

(७) भा. १३।४७।४३; भामु. १३।४७।४३ मानाः (मानं) रक्षति प्रजाः (ह्येष रक्षति).

(८) भा. १३।४७।४४; भामु.

(१) प्रासङ्गिकं श्राद्धप्रसङ्गेन ब्राह्मणपूजनम् ।

* राक. १६९

(२) यस्य राज्ञो राज्यं स्वयं प्राप्तं तत्प्रेतकृत्यं राजा कुर्यात् । तन्मातापित्रादींश्चावश्यं बिभृयात् । तदाह

## विष्णुः

राजधर्माः— प्रजाया बालानाथादीनां च पालनं वर्णाश्रमधर्मव्यवस्था यजनं ब्राह्मणाय दानं शस्त्रनित्यता च

'शान्तिस्वस्त्ययनैर्दैवोपघातान् प्रशमयेत् ॥
प्रत्युत्पन्नारिष्टशमनाय क्रियमाणं कर्म शान्तिः

तस्य छेदः अपहारः। यद्वा दानस्य भूम्यादेः, छेदः अवच्छेदः, पूर्वतोऽमुकनद्याः पश्चिमतोऽमुकस्थानस्येदम् ।

राज्ञः परुषोक्तिनिषेधः प्रत्याक्रोशनिषेधश्च, मधुरभाषणं च

ययातिरुवाच–

'गङ्गायमुनयोर्मध्ये कृत्स्नोऽयं विषयस्तव ।
मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्त्याधिपास्तव ।।

अन्त्याधिपाः प्रान्त्यदेशाधिपाः । नीटी.

'अक्रोधनः क्रोधनेभ्यो विशिष्ट-
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषेभ्यो मानुषाश्च प्रधाना

कोपेन न नृशंसवादीति वाचा परपीडां न कुर्यादित्युक्तम् । न हीनतः परमभ्याददीतेति हीनेन अभिचारादिकर्मणा परं शत्रुं न वशे कर्तुमिच्छेदिति न मनसाऽपि परपीडां कुर्यादित्युक्तम् । अरुः क्षतं तद्वदत्यन्तं तुदति व्यथयतीति कण्टकवन्न स्यादिति पदार्थः । न नृशंसवादी स्यादित्येतत् सार्धेन प्रपञ्चयति– यथाऽस्येति । उषतीं दहन्तीम् । 'रुषतीम्' इति पाठे हिंस्राम् । नीटी.

'अरुंतुदं [illegible]

[1]न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
यथा मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

दयादिचतुष्कं संवननं संभजनं परमेश्वरस्याऽऽराधनम् । नीटी.

[2]तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित् ।
पूज्यान् संपूजयेद्दद्यान्न च याचेत्कदाचन ॥

कार्यविभागेन नियोज्यविवेकः

[1]धार्मिकान् धर्मकार्येषु अर्थकार्येषु पण्डितान् ।
क्लीबेषु क्लीबान्नियुञ्जीत क्रूरान् क्रूरेषु कर्मसु ॥
स्वेभ्यश्चैव परेभ्यश्च कार्याकार्यसमुद्भवा ।
बुद्धिः कर्मसु विज्ञेया रिपूणां च बलाबलम् ॥

स्वेभ्यश्चारेभ्यः परेभ्यः उत्कोचादिना लोभितेभ्यः । नीटी.

[1]निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ ।
न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन ।
ब्राह्मणो रुषितो हन्यादपि लोकान्प्रतिज्ञया ॥

वैशम्पायन उवाच–

[2]मार्कण्डेयवचः [illegible] ।

उत्तङ्क उवाच–

[1]भवता रक्षणं कार्यं तत्तावत्कर्तुमर्हसि ।
निरुद्विग्ना वयं राजंस्त्वत्प्रसादाद्वसेमहि ॥

[2]त्वया हि पृथिवी राजन् रक्ष्यमाणा महात्मना ।
[illegible] ॥

स एष जनको राजा दुर्वृत्तमपि चेत्सुतम् ।
दण्ड्यं दण्डे निक्षिपति तथा न
ग्लाति धार्मिकम् ॥

'एतान् राजा पालयन्नप्रमत्तो
नियोजयन् सर्ववर्णान् स्वधर्मे ।
अकामात्मा समवृत्तिः प्रजासु
नाधार्मिकाननुरुध्येत कामात् ॥

यः काममन्यू प्रजहाति राजा
पात्रे प्रतिष्ठापयते धनं च ।

न संरम्भेणाऽऽरभतेऽर्थवर्ग-
माकारितः शंसति तथ्यमेव ।

[1]न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रतीतः ।
दत्त्वा न पश्चात्कुरुतेऽनुतापं
न कत्थते सत्पुरुषार्यशीलः ॥

[2]देशाचारान् समयान् जातिधर्मान्
बुभूषते यस्तु परावरज्ञः ।

[1]समैर्विवाहं कुरुते न हीनैः
समैः सख्यं व्यवहारं कथाश्च ।
गुणैर्विशिष्टांश्च पुरो दधाति
विपश्चितस्तस्य नयाः सुनीताः ॥

[2]मितं भुङ्क्ते संविभज्याऽऽश्रितेभ्यो
मितं स्वपित्यमितं कर्म कृत्वा ।

विदुरोक्ता सामान्यनीतिः राजनीतिश्च

धृतराष्ट्र उवाच–

[1]जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलः शुचिः ॥

दह्यमानस्य चिन्ताग्निनेति शेषः । धर्मार्थयोः कुशलः । मोक्षेऽस्य वक्तुमनधिकारात् द्वयोरेव ग्रहः । नीटी.

[2]त्वं मां यथावद्विदुर प्रशाधि
प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्त्व
श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥

अजातशत्रोः पथ्यं कुरूणां च श्रेयस्करम् । नीटी.

पापाशङ्की पापमेवानुपश्यन्
पृच्छामि त्वां व्याकुलेनाऽऽत्मनाऽहम् ।
कवे तन्मे ब्रूहि सर्वं यथावत्
मनीषितं सर्वमजातशत्रोः ॥

पापाशङ्की भाविदुःखादुद्विजन् । पापं स्वकृतं पूर्वापराधं पश्यन् । कवे हे सर्वज्ञ । नीटी.

विदुर उवाच–

शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥

[3]तस्माद्वक्ष्यामि ते राजन्भवमिच्छन्कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥

[4]मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत ।
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥

मिथ्योपेतानि कपटद्यूतादीनि । अनुपायैः असदुपायैः प्रयुक्तानि, दुःखफलानीत्यर्थः । नीटी.

(१) भा. ५।३४।१; भामु. ५।३४।१ शुचिः (ह्यसि).

(२) भा. ५।३४।२–४; भामु.

(३) भा. ५।३४।५; भामु. ५।३४।५ भवमिच्छन् (हितं यत्स्यात्).

(४) भा. ५।३४।६; भामु.

[1]तथैव योगविहितं न सिध्येत्कर्म यन्नृप ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥

[2]अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥

अनुबन्धान् प्रयोजनानि । संप्रधार्य निश्चित्य । नीटी.

[3]अनुबन्धं च संप्रेक्ष्य विपाकांश्चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥

विपाकः फलसिद्धावपि परिपाकः । उत्थानं उद्यमम् । वा न वेति सिद्धिपक्षे कुर्वीत, नान्यथेत्यर्थः । नीटी.

[4]यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥

प्रमाणं निश्चयद्वारम् । स्थानादीनि सर्वदा विचार्याणीत्यर्थः । स्थाने दुर्गादौ । दण्डे सेनायाम् । नीटी.

यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥

एतानि स्थानादिज्ञापकानि प्रमाणानि लेख्यादीनि । नीटी.

[5]न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥

असांप्रतं अयुक्तं यथा स्यात्तथा न वर्तितव्यम् । नीटी.

[6]भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
रूपाभिपाती ग्रसते नानुबन्धमवेक्षते ॥

(१) भा. ५।३४।७; भामु. ५।३४।७ न सिध्येत्कर्म यन्नृप (यत्तु कर्म न सिध्यति).

(२) भा. ५।३४।८; भामु. ५।३४।८ नवेक्षेत (नपेक्षेत).

(३) भा. ५।३४।९; भामु. ५।३४।९ विपाकांश्चैव (विपाकं चैव).

(४) भा. ५।३४।१०–११; भामु.

(५) भा. ५।३४।१२; भामु.; राक. १४८; राप्र. १२०.

(६) भा. ५।३४।१३; भामु. ५।३४।१३ रूपा (लोभा).

मुखे मिष्टमन्ते मृत्युदं कर्म न कर्तव्यमित्यर्थः । अनुबन्धं पश्चाद्बन्धनम् । नीटी.

[1]यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदद्यं भूतिमिच्छता ॥

आद्यं भक्षणीयम् । नीटी.

[2]वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाऽऽप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥
यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥
यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवाऽऽरामे न यथाऽङ्गारकारकः ॥

अङ्गारकारको हि मूलत उत्कृत्य काष्ठं दहति । अङ्गारः इङ्गालः । नीटी.

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो न वा ॥
[3]अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः ।
कृतः पुरुषकारोऽपि भवेद्येषु निरर्थकः ॥

अनारभ्याः प्रबलैः सह वैरादयः । अगताः कदाचिदप्यप्राप्ताः । नीटी.

[4]प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥
[5]कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान् ॥

लघुमूलान् अल्पोपायान् । नीटी.

ऋजु पश्यति यः सर्वं चक्षुषाऽनुपिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥

चक्षुषा प्रीतिमयेन । नीटी.

[1]सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः ।
अपक्वः पक्वसंकाशो न तु शीर्येत कर्हिचित् ॥

सुपुष्पितः वाचा चक्षुषा चानुग्रहं दर्शयन्नपि अफलः स्यात् भृत्यं न धनेन वर्धयेत् । सफलोऽपि सन् दुरारुहः भृत्यवश्यो न भवेत् । अपक्व इति । अन्तर्बलहीनोऽपि बलवत्तां बहिः प्रकाशयेदेवेत्यर्थः । नीटी.

[2]चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति लोकं यस्तं लोकोऽनुप्रसीदति ॥

( १ ) तमुद्दिश्य लोको न प्रसीदति नावसन्नो भवति । राप्र. १३३

( २ ) कर्मणा दानेन । लोकं भृत्यवर्गम् । नीटी.

[3]यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥
[4]पितृपैतामहं राज्यं प्राप्तवान्स्वेन तेजसा ।
वायुरभ्रमिवाऽऽसाद्य भ्रंशयत्यनये स्थितः ॥

अनये स्थितः अनीतिमान् । नीटी.

[5]धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धनी ॥
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माऽऽहितं यथा ॥

---

(१) भा. ५।३४।१४; भामु. ५।३४।१४ त्तदद्यं (त्तदाद्यं).

(२) भा. ५।३४।१५–१९; भामु.

(३) भा. ५।३४।२०; भामु. ५।३४।२० कारोऽपि (कारो हि).

(४) भामु. ५।३४।२१.

(५) भा. ५।३४।२१–२२ ; भामु. ५।३४।२२–२३.

(१) भामु. ५।३४।२४.

(२) भा. ५।३४।२३; भामु. ५।३४।२५ लोकं यः (यो लोकं); राक. १५० चक्षुषा (कर्मणा) कर्मणा (चक्षुषा) लोकं यः (यो लोकं) ऽनुप्र (न प्र); राप्र. १३३ राकवत्.

(३) भा. ५।३४।२४; भामु. ५।३४।२६.

(४) भा. ५।३४।२५ ; भामु. ५।३४।२७ तेजसा (कर्मणा).

(५) भा. ५।३४।२६–२७; भामु. ५।३४।२८–२९.

प्रतिसंवेष्टते संकुचति, बहुफलं न प्रयच्छतीत्यर्थः ।

नीटी.

[1]य एव यत्नः क्रियते परराष्ट्रावमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥

[2]धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥

न जहाति श्रियम् । नीटी.

[3]अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥

[4]सुव्याहृतानि सुधियां सुकृतानि ततस्ततः ।
संचिन्वन्धीर आसीत शिलाहारी शिलं यथा ॥

सुव्याहृतानि पाण्डित्यवचनानि । सूक्तानि शोभनतया उक्तानि मातृपितृगुर्वादीनि । सुकृतानि तदुपदिष्टकर्माणि । शिलं कणिशाद्यर्जनम् । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः । त्वमपि अस्मदादिवाक्यात् सारं गृह्णीष्वेति भावः । नीटी.

[5]गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥

पाण्डवबलं ज्ञातुं चारान् नियुङ्क्ष्वेति भावः ।

नीटी.

[6]भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां विनयन्त्यपि ॥

[1]यदतप्तं प्रणमति न तत्संतापयन्त्यपि ।
यच्च स्वयं नतं दारु न तत्संनामयन्त्यपि ॥

[2]एतयोपमया धीरः संनमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥

भूयांसमितिश्लोकत्रयतात्पर्यम्— पाण्डवान् प्रति त्वया नम्रीभवितव्यं तेन बलाधिष्ठात्री देवता इन्द्रश्च त्वामनुग्रहीष्यतीति । नीटी.

[3]पर्जन्यनाथाः पशवो राजानो मित्रबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥

[4]सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥

[5]मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः ।
अभीक्ष्णदर्शनाद्गावः स्त्रियो रक्ष्याः कुचेलतः ॥

एतच्च मन्त्रिभिः सहाऽऽलोचनीयं सत्यं च संरक्ष्यमित्याह— पर्जन्येति त्रिभिः । योगेन अभ्यासेन । मृजया उद्वर्तनेन । अनुक्रमः व्यायामशिक्षादिः । नीटी.

[6]न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥

[7]य ईर्ष्युः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखे सौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥

---

(१) भा. ५।३४।२८ ; भामु. ५।३४।३० राष्ट्राव ( राष्ट्रवि ).

(२) भा. ५।३४।२९; भामु. ५।३४।३१.

(३) भा. ५।३४।३०; भामु. ५।३४।३२ सर्पतः ( जल्पतः ); राक. १४९ अप्युन्मत्तात्प्र ( अप्युत्तमान् प्र ) शेषं भामुवत् ; राप्र. १३२ भामुवत्.

(४) भा. ५।३४।३१; भामु. ५।३४।३३ सुधियां ( सूक्तानि ).

(५) भा. ५।३४।३२; भामु. ५।३४।३४.

(६) भा. ५।३४।३३ ; भामु. ५।३४।३५ विनय ( वितुद ).

(१) भा. ५।३४।३४ ; भामु. ५।३४।३६ त्संनाम ( त्संताप ).

(२) भा. ५।३४।३५; भामु. ५।३४।३७.

(३) भा. ५।३४।३६, भामु. ५।३४।३८ मित्र ( मन्त्रि ).

(४) भा. ५।३४।३७; भामु. ५।३४।३९.

(५) भा. ५।३४।३८; भामु. ५।३४।४० नाद्गावः ( नं गाश्च )

(६) भा. ५।३४।३९ ; भामु. ५।३४।४१ अन्त्ये ( अन्ते ).

(७) भा. ५।३४।४०; भामु. ५।३४।४२ ईर्ष्युः ( ईर्षुः ) सुखे ( सुख ).

प्रमाणं धर्मस्य कारणम्, न कुलमिति द्वयोर्वृत्तमाश्रय, ईर्ष्यां त्यजेति भावः। नीटी.

[1]अकार्यकरणाद्भीतः कार्याणां च विवर्जनात्।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत्॥

अकाले इष्टसिद्धेः प्राक् भीतः स्यात्। येन माद्येत् लोभादिना तन्न पिबेत् नाऽऽश्रयेत्। नीटी.

[2]विद्यामदो धनमदस्तृतीयोऽभिजनो मदः।
एते मदावलिप्तानामेत एव सतां दमाः॥

अभिजनः सहायः। तव तु भयं दमश्च नास्तीत्यर्थः। नीटी.

[3]असन्तोऽभ्यर्थिताः सद्भिः किंचित्कार्यं कदाचन।
तावन्न तस्य सुकृतं किंचित्कार्यं कदाचन।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम्॥

असन्त इति सार्धश्लोकः वाक्यम्। सद्भिरर्थिता असन्तस्तत्कार्यमल्पमप्यकृत्वा असन्तमिति ख्यातमप्यात्मानं सन्तं मन्यन्ते इति तदर्थः। किंचिदपि तस्य कार्यं यावत् सुष्ठु न कृतं तावदेव मन्यन्त इति योजना। नीटी.

[4]गतिरात्मवतां सन्तः सन्त एव सतां गतिः।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः॥

पाण्डवा एव त्वामुपकरिष्यन्ति, न तु त्वं तानिति भावः। नीटी.

[5]जिता सभा वस्त्रवता समाशा गोमता जिता।
अध्वा जितो यानवता सर्वं शीलवता जितम्॥

[6]शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः॥

(१) भा. ५।३४।४१; भामु. ५।३४।४३.

(२) भा. ५।३४।४२; भामु. ५।३४।४४ एते मदा (मदा एते).

(३) भा. ५।३४।४३ द्वितीयार्धं नास्ति; भामु. ५।३४।४५ सद्भिः किंचित्कार्यं (सद्भिः कचित्कार्ये).

(४) भा. ५।३४।४४; भामु. ५।३४।४६.

(५) भा. ५।३४।४५; भामु. ५।३४।४७ समाशा (मिष्टाशा).

(६) भा. ५।३४।४६; भामु. ५।३४।४८.

शीलं संरक्ष्यं त्वयेति द्वयोर्भावः। नीटी.

[1]आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम्।
लवणोत्तरं दरिद्राणां भोजनं भरतर्षभ॥

[2]संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा।
क्षुत्स्वादुतां जनयति सा चाऽऽढ्येषु सुदुर्लभा॥

[3]प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते।
दरिद्राणां तु राजेन्द्र अपि काष्ठं हि जीर्यते॥

आढ्यानामिति त्रयस्य शीलवतस्ते दारिद्र्यप्राप्तिरपि श्रेय इति भावः। संपन्नं मिष्टम्। नीटी.

[4]अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम्।
उत्तमानां तु मर्त्यानामवमानात्परं भयम्॥

(१) अन्त्यानां अधमानां मर्त्यानां अवृत्तेः जीविकानाशात् भयम्। राप्र. १३३.

(२) शीलाभावे सत्सु अवमानः महान् क्लेश इत्याह— अवृत्तिरिति। नीटी.

[5]ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः।
ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते॥

ऐश्वर्यमदः पापिष्ठः निन्दिततमः येभ्यस्ते पानमदादयो मदाः। नीटी.

इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव॥

इन्द्रियार्थेषु शब्दादिषु। ग्रहैः सूर्यादिभिः। आक्रमोऽत्र तापनम्। नीटी.

(१) भा. ५।३४।४७; भामु. ५।३४।४९ लवणोत्तरं (तैलोत्तरं).

(२) भा. ५।३४।४८; भामु. ५।३४।५०.

(३) भा. ५।३४।४९; भामु. ५।३४।५१ उत्तरार्धे (जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते॥).

(४) भा. ५।३४।५०; भामु. ५।३४।५२; राक. १५० अवृत्ति (अवृत्ते); राप्र. १३३ राकवत्.

(५) भा. ५।३४।५१–५२; भामु. ५।३४।५३–५४.

[1]यो जितः पञ्चवर्गेण सहजेनाऽऽत्मकर्शिना ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥

पञ्चवर्गः श्रोत्रादिगणः । त्वमैश्वर्यमत्तोऽजितेन्द्रियश्चावश्यमापदं प्राप्स्यसीति त्रयस्य भावः । नीटी.

[2]अविजित्य य आत्मानममात्यान् विजिगीषते ।
अमित्रान्वाऽजितामात्यः सोऽवशः परिहीयते ॥

[3]आत्मानमेव प्रथमं देशरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥

[4]वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥

आत्मानं मनः । अमात्यान् पुत्रादीन् । द्वेष्यरूपेण शत्रुवत् । मन एव प्रथमं जेतव्यम्, ततोऽमात्यादीन् विजिगीषते, तत् न मोघं न निष्फलं भवति । त्वं त्वजितमनस्कतया पुत्रादिवशः न लक्ष्मीयोग्यः इति त्रयाणां भावः । नीटी.

[5]रथः शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशलः सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः ॥

एतदेव रथिरथादिरूपककल्पनया आह– रथ इति । नीटी.

[6]एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥

व्यापादयितुं नाशयितुम् । अविधेयाः अवशाः । नीटी.

[1]अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैः प्रसृतो बालः सुदुःखं मन्यते सुखम् ॥

अर्थतः अर्थहेतोः । अनर्थतः अन्यायतः । नीटी.

[2]धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥

इन्द्रियाणां वशः इच्छा, तदनुसारी इन्द्रियवशानुगः । नीटी.

[3]अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते हि सः ॥

[4]आत्मनाऽऽत्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥

कृत्स्नस्योपदेशस्य फलमाह– आत्मनेत्यर्धेन । आत्मना बुद्ध्या आत्मानं प्रत्यक्चैतन्यरूपं अन्विच्छेत् । तत्रोपायमाह– मनसः संकल्पात्मकस्य, बुद्धेश्च तन्मूलभूतायाः, इन्द्रियाणां च निग्रहेणेत्यर्थः । अत्र न तव सहायान्तरापेक्षेत्याह– आत्मेति । धीजय एव पुरुषार्थ इत्यर्थः । नीटी.

[5]बन्धुरात्माऽऽत्मनस्तस्य येनैवाऽऽत्मा-
ऽऽत्मना जितः ।
स एव नियतो बन्धुः स एव नियतो रिपुः ॥

सः एव धीः एव जीवस्य बन्धुः रिपुश्च । नीटी.

---

(१) भा. ५।३४।५३ ; भामु. ५।३४।५५ कर्शिना ( कर्षिणा ).

(२) भा. ५।३४।५४; भामु. ५।३४।५६ य आत्मान ( यथाऽऽत्मान ).

(३) भा. ५।३४।५५ ; भामु. ५।३४।५७ देश ( द्वेष्य ) यो जयेत् ( योजयेत् ).

(४) भा. ५।३४।५६ ; भामु. ५।३४।५८ जितामात्यं ( जितात्मानं ).

(५) भा. ५।३४।५७ ; भामु. ५।३४।५९ कुशलः ( कुशली ).

(६) भा. ५।३४।५८ ; भामु. ५।३४।६०.

(१) भा. ५।३४।५९ ; भामु. ५।३४।६१ यैः प्रसृतो बा ( यैरजितैर्वा ).

(२) भा. ५।३४।६० ; भामु. ५।३४।६२.

(३) भा. ५।३४।६१ ; भामु. ५।३४।६३ ; राक. १५० श्यते हि ( श्यतीह ) ; राप्र. १३३ राकवत्.

(४) भा. ५।३४।६२ ; भामु. ५।३४।६४ आत्मैव ह्या ( आत्मा ह्येवा ).

(५) भामु. ५।३४।६५.

[1]क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥

द्वावपि मोहजालपिहितौ झषौ मीनौ उरू महान्तौ । तत्र द्वितीयोऽन्यस्य जातिस्वभावाच्छत्रुरपि जालच्छेदार्थं मित्रत्वमापन्नो बन्धुरपि भवति । एवं धीश्चिदात्मनः संसारप्रदत्वाच्छत्रुरपि मोहच्छेदार्थं तस्य मित्रमपि भवतीति भावः । क्षुद्राक्षेण सूक्ष्मच्छिद्रेण । यद्वा उत्तरान्वय्येवायमर्धः । कामक्रोधयोरावरकं प्रज्ञानं तौ नाशयतः, जालमिव महामीनावित्यर्थः । नीटी.

[2]समवेक्ष्येह धर्मार्थौ संभारान्योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥

समवेक्ष्य अनुरुध्य । संभारान् जयसाधनानि । नीटी.

[3]यः पञ्चाऽऽभ्यन्तराञ्शत्रूनविजित्य मतिक्षयान् ।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥

आभ्यन्तरान् श्रोत्रादीन् । मनोमयान् मनसो विकारभूतान् । तथा च श्रुतिः— ' मनसा ह्येव पश्यति मनसा शृणोति ' इति । नीटी.

[4]दृश्यन्ते हि दुरात्मानो वध्यमानाः स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥

राजानः रावणादयः । राज्यविभ्रमैः ऐश्वर्यविलासैः । स्वकर्मभिः सीताहरणादिभिः । नीटी.

[5]असंत्यागात्पापकृतामपापां-
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणाऽऽर्द्रं दह्यते मिश्रभावा-
त्तस्मात्पापैः सह संधिं न कुर्यात् ॥

निजानुत्पततः शत्रून् पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥

पञ्च इन्द्रियाणि । पञ्च प्रयोजनानि शब्दश्रवणादीनि येषां तान् । उत्पततः उत्पथेन गच्छतः । त्वं तु अजितचित्तत्वाद्दुःसङ्गाच्चाऽऽपद्ग्रस्तोऽसीति भावः । नीटी.

अनसूयाऽऽर्जवं शौचं संतोषः प्रियवादिता ।
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥

अनायासः अचाञ्चल्यम् । नीटी.

आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।
वाक्चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ॥

तितिक्षा द्वन्द्वसहनशीलता । वाक् गुप्ता असंबद्धप्रलापाद्रक्षिता । अन्त्येषु नीचेषु । त्वत्पुत्रेष्वार्जवादिकं गुप्तवाक्त्वं च नास्तीति तेऽन्त्याः । नीटी.

आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥

आक्रोशः रूक्षभाषणम् । परिवादः निन्दा । तयोर्वक्ता त्वत्पुत्रः हिंस्रश्च । अतो नासौ जयभाक् । नीटी.

हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥

वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥

वाक्संयमः नियतं वचनम् । विचित्रं चमत्कारयुक्तम् । नीटी.

[6]अभ्यावहति कल्याणं विविधा वाक्सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥

[7]संरोहति शरैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥

बीभत्सं निन्दितं यतो न संरोहति । नीटी.

---

(१) भा. ५।३४।६३ ; भामु. ५।३४।६६ तावुभौ (तावुरू).

(२) भा. ५।३४।६४ ; भामु. ५।३४।६७.

(३) भा. ५।३४।६५ ; भामु. ५।३४।६८ मतिक्षयान् (मनोमयान्).

(४) भा. ५।३४।६६ ; भामु. ५।३४।६९ दुरात्मानो वध्य (महात्मानो वध्य).

(५) भा. ५।३४।६७–७३ ; भामु. ५।३४।७०–७६.

(१) भा. ५।३४।७४ ; भामु. ५।३४।७७ विविधा (विविधं).

(२) भा. ५।३४।७५ ; भामु. ५।३४।७८ संरोहति शरै (रोहते सायकै) ; मेधा. ७।५२ भामुवत्.

[1]कर्णिनालीकनाराचा निर्हरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥

कर्णी कर्णाकृतिफलको बाणः । नालीकः नलीकया प्रक्षेप्यो बाणः । निर्हरन्ति निःसारयन्ति । नीटी.

[2]वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥

नामर्मसु किंतु मर्मस्वेव । सभायां द्रौपदीं प्रति दुर्वचनं वदतां त्वत्पुत्राणामपराधः क्षन्तुमयोग्योऽस्तीति भावः । नीटी.

[3]यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपाचीनानि पश्यति ॥

अवाचीनानि नीचकर्माणि । नीटी.

[4]बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥

[5]सेयं बुद्धिः परीता ते पुत्राणां तव भारत ।
पाण्डवानां विरोधेन न चैनामवबुध्यसे ॥

[6]राजा लक्षणसंपन्नस्त्रैलोक्यस्यापि यो भवेत् ।
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ॥

शिष्यस्ते त्वदाज्ञाकारी । शासिता पृथिव्याः । नीटी.

अतीव सर्वान् पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥

(१) भा. ५।३४।७६ ; भामु. ५।३४।७९ नाराचा (नाराचान्).

(२) भा. ५।३४।७७ ; भामु. ५।३४।८० त्परेषु (त्परेभ्यः).

(३) भा. ५।३४।७८ ; भामु. ५।३४।८१ सोऽपा (सोऽवा).

(४) भा. ५।३४।७९ ; भामु. ५।३४।८२.

(५) भा. ५।३४।८० ; भामु. ५।३४।८३ तव भारत (भरतर्षभ) नामव (नानव).

(६) भा. ५।३४।८१-८२ ; भामु. ५।३४।८४-८५.

भागधेये राज्यांशे पुरस्कृतः । मूर्धाभिषिक्तस्य पाण्डोः पुत्रास्ते राज्यार्हाः, अतथाभूतस्यान्धस्य तव पुत्रास्ते न राज्यार्हा इत्यर्थः । नीटी.

[1]आनृशंस्यादनुक्रोशाद्योऽसौ धर्मभृतां वरः ।
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ॥

अनुक्रोशात् दयालुत्वात् । आनृशंस्यात् अक्रौर्यात् । नीटी.

[2]यस्मिन् यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युदेयः ॥

साधुषु पाण्डवेषु त्वयाऽपि साधुना भवितव्यमित्याशयः । नीटी.

[3]अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुधैयं वसुंधरा ॥

नवेक्षिण इति पाठे नवमिवाऽऽदरेण ईक्षितुं शीलमस्य । आत्मनैव प्रत्ययः ज्ञानं यस्य स्वयमेव ज्ञातकोशस्य । नीटी.

[4]नाममात्रेण तुष्येत च्छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥

नाममात्रेणैव राजा भवेत् । भोगांस्तु भृत्यैः समानानेव भुञ्जीत । नीटी.

[5]अधीत्य वेदान् परिसंस्तीर्य चाग्नी-
निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा
हतः संग्रामे क्षत्रियः स्वर्गमेति ॥

(१) भा. ५।३४।८३ ; भामु. ५।३४।८६ आनृशंस्यादनुक्रोशा (अनुक्रोशादानृशंस्या).

(२) भा. ५।३७।७ ; भामु. ५।३७।७ प्रत्युदेयः (प्रत्युपेयः).

(३) भा. ५।३८।२३ ; भामु. ५।३८।२६ कृत्या (कृत्वा) वसुधैयं (वसुदैव).

(४) भा. ५।३८।२४ ; भामु. ५।३८।२७.

(५) भा. ५।४०।२४ ; भामु. ५।४०।२६ णार्थे (णार्थं).

परिसंस्तीर्याग्नीन् परिस्तरणैः । एतेनाग्निहोत्रमुपलक्षयतीति नारायणः । परिसंस्तीर्य वितत्य स्वे स्वे स्थाने आधायेत्यर्थः । ततो यज्ञैरिष्ट्वा शस्त्रपूतः अन्तरात्मा चित्तं यस्य, गोब्राह्मणार्थे मृत इत्यर्थः । संग्रामे हतो वा क्षत्रियः । नीटी.

न कश्चिदवमन्तव्यः

[1]नावमान्यास्त्वया राजन्नवरोत्कृष्टमध्यमाः ।
न हि मानप्रदग्धानां कश्चिदस्ति समः क्वचित् ॥

दण्डधारणं क्षत्रधर्मः, न वनगमनं संन्यासो वा

भीम उवाच–

[2]श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः ।
अनुवाहकता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥

श्रोत्रियस्य वेदपाठकस्य । मन्दत्वादेवाविपश्चितः अर्थज्ञानशून्यस्य । अनुवाकेन नित्यपाठेन हता नष्टा । नीटी.

आलस्ये कृतचित्तस्य राजधर्मानसूयतः ।
विनाशे धार्तराष्ट्राणां किं फलं भरतर्षभ ॥

आलस्ये एव, न तु परमार्थे, कृतचित्तस्य तव । नीटी.

क्षमाऽनुकम्पा कारुण्यमानृशंस्यं न विद्यते ।
क्षात्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे ॥

त्वदन्तरे त्वत्तोऽन्यत्र । नीटी.

यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम् ।
शस्त्रं नैव ग्रहीष्यामो न वधिष्याम कंचन ॥
भैक्ष्यमेवाऽऽचरिष्याम शरीरस्या विमोक्षणात् ।
न चेदं दारुणं युद्धमभविष्यन्महीक्षिताम् ॥
प्राणस्यान्नमिदं सर्वमिति वै कवयो विदुः ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥

प्राणस्य प्राणवतो बलिष्ठस्य इदं सर्वमन्नमिवान्नं भोग्यम्, 'वीरभोग्या वसुंधरा' इति स्मृतेः । अत एव तस्यैव भोजनं भुज्यते पाल्यते इति व्युत्पत्त्या पालनीयमिदम् । यद्यप्येतत् प्राणोपासनाप्रकरणे श्रुतं तथापि सर्वस्याऽऽत्मार्थत्वमित्यंशेन साम्यादुदाहृतम् । नीटी.

आददानस्य चेद्राज्यं ये केचित्परिपन्थिनः ।
हन्तव्यास्त इति प्राज्ञाः क्षत्रधर्मविदो विदुः ॥
ते सदोषा हतास्माभी राज्यस्य परिपन्थिनः ।
तान् हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम् ॥

'हतास्माभिः' इति संधिरार्षः । तान् धर्मेण हत्वा निघ्नन् त्वं राज्यं भुङ्क्ष्व । हन्तेः 'अन्येभ्योऽपि दृश्यन्ते' (पा. ३।२।७५) इति क्वनिप्, अनुनासिकलोपः, 'ह्रस्वस्य०' (पा.६।१।७१) इति तुक् । नीटी.

यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् ।
पङ्कदिग्धो निवर्तेत कर्मेदं नस्तथोपमम् ॥

तथा तेन प्रकारेण उपमीयते इति तथोपमम् । नीटी.

यथाऽऽरुह्य महावृक्षमपहृत्य ततो मधु ।
अप्राश्य निधनं गच्छेत्कर्मेदं नस्तथोपमम् ॥
[1]यथा महान्तमध्वानमाशया पुरुषः पतन् ।
स निराशो निवर्तेत कर्मेदं नस्तथोपमम् ॥

पतन् गच्छन् । नीटी.

[2]यथा शत्रून् घातयित्वा पुरुषः कुरुसत्तम ।
आत्मानं घातयेत्पश्चात्कर्मेदं नस्तथाविधम् ॥
[3]यथाऽन्नं क्षुधितो लब्ध्वा न भुञ्जीत यदृच्छया ।
कामी च कामिनीं लब्ध्वा कर्मेदं नस्तथाविधम् ॥

---

(१) भा. ५।१२१।१६; भामु. ५।१२३।१७ न्नवरो (न्नधमो) समः (शमः); राक. १५० स्त्वया राजन्न (बुद्धिमद्भिर्नो) समः (मदं); राप्र. १३३ स्त्वया राजन्न (बुद्धिमाद्भिर) समः (मदः).

(२) भा. १२।१०।१–१०; भामु.

(१) भा. १२।१०।११; भामु. १२।१०।११ कर्मेदं न (कर्मैतन्न).

(२) भा. १२।१०।१२; भामु. १२।१०।१२ सत्तम (नन्दन) थाविधम् (थोपमम्).

(३) भा. १२।१०।१३; भामु. १२।१०।१३ भुञ्जीत (भुञ्जीयाद्) कामी च (कामीव) थाविधम् (थोपमम्).

¹वयमेवात्र गर्ह्या हि ये वयं मन्दचेतसः ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत ॥
²वयं हि बाहुबलिनः कृतविद्या मनस्विनः ।
क्लीबस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा ॥

अशक्तयः शक्तिहीनाः । नीटी.

³अगतीन् कागतीनस्मान्नष्टार्थानर्थसिद्धये ।
कथं वै नानुपश्येयुर्जनाः पश्यन्ति यादृशम् ॥

अगतीकगतीन् अनाथरक्षकान् । दैर्घ्यमार्षम् । ईदृशानपि नष्टार्थान् दृष्ट्वा जना इतरेऽपि अर्थसिद्धये कथं नानुपश्येयुः ? अपि तु आलोचयेयुरेव । एतत् यादृशं मम वचनं तादृशं पश्यत, युक्तमयुक्तं वेति परीक्षया इत्यर्थः । समर्थैः स्वार्थसिद्ध्यर्थं यतितव्यमेवेति भावः । नीटी.

⁴आपत्काले हि संन्यासः कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन च ॥

ननु संन्यास एव नः श्रेयानित्युक्तं तत आह– आपदिति । व्यंसितेन दुर्गतिं प्रापितेन । नीटी.

⁵तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते ।
धर्मव्यतिक्रमं चेदं मन्यन्ते सूक्ष्मदर्शिनः ॥

इह क्षत्रयोनौ त्यागं 'चरन् भैक्ष्यं मुनिर्मुण्डः' इत्युक्तविधं संन्यासं न परिचक्षते न प्रशंसन्ति । तत्र हेतुः– धर्मेति । 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते ॥' इति स्मृतेः क्षत्रियस्य मौण्ड्यादिकं निषिद्धम् । तस्याऽऽचरणे धर्मव्यतिक्रमोऽस्त्येवेति भावः । नीटी.

(१) भा. १२।१०।१४ ; भामु. १२।१०।१४ ये वयं (यद्वयं) चेतसः (चेतसम्).

(२) भा. १२।१०।१५ ; भामु.

(३) भा. १२।१०।१६ ; भामु. १२।१०।१६ अगतीन् का (अगतीक) पश्यन्ति (पश्यत).

(४) भा. १२।१०।१७ ; भामु. १२।१०।१७ च (वा).

(५) भा. १२।१०।१८ ; भामु. १२।१०।१८ चेदं (चैव).

¹कथं तस्मात्समुत्पन्नस्तन्निष्ठस्तदुपाश्रयः ।
तदेव निन्दन्नासीत श्रद्धा वाऽन्यत्र गृह्यते ॥

ननु हिंस्रोऽयं क्षात्रधर्मो निन्द्य एवेत्याशङ्क्याऽऽह– कथमिति । हिंसार्थमुत्पन्नाः हिंस्रयोनौ जाताः हिंसैकजीवनाः तदेव तस्यैव हिंस्रधर्मस्य निन्दां कथं भाषेयुः ? कथं वा तत्र धाता तस्य धर्मस्य स्रष्टा न गर्ह्यते न निन्द्यते ? धातृविहितत्वात् सहजत्वाच्च नाऽसौ धर्मो निन्द्य इत्यर्थः । यदाह भगवान्– 'सदोषमपि कौन्तेय सहजं कर्म न त्यजेत्' । नीटी.

²श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम् ।
वेदवादस्य विज्ञानं सत्याभासमिवानृतम् ॥

कथं तर्हि जाबालोपनिषदि 'अथ परिव्राट् मुण्डो विवर्णवासाः' इत्युपक्रम्य 'भरतरैवतकप्रभृतयोऽनुन्मत्ता उन्मत्तवदाचरन्ते' इति भरतादीनां क्षत्रियाणां मौण्ड्यमुन्मत्तचर्या च श्रूयते इत्याशङ्क्याऽऽह– श्रियेति । 'ऋचः सामानि यजूꣳषि । सा हि श्रीरमृता सताम्' इति श्रुतेः श्रिया त्रय्या विद्यया विहीनैः अधनैः लक्ष्म्या च हीनैः इदमनृतं संप्रवर्तितम् । वेदयतीति वेदो विधिः, तस्य वादः अर्थवादः, तत्संबन्धि विज्ञानं संन्यासविधिस्तुत्यर्थम् । भरतादिकीर्तनं प्रजापतिवपोत्खननवदर्थवादः, न तु तावता मौण्ड्ये क्षत्रियस्याधिकारः सिध्यतीति भावः । नीटी.

³शक्यं तु मौण्ड्यमास्थाय बिभ्रता-
ऽऽत्मानमात्मना ।
धर्मच्छद्म समास्थाय आसितुं न तु जीवितुम् ॥

यत्तु 'ऋजुः प्रणिहितो गच्छन्' इति अत्याश्रम उक्तस्तं दूषयति– शक्यं त्विति । आत्मानं देहं आत्मना स्वेनैव बिभ्रता निश्चलं स्थापयता धर्मच्छद्म

(१) भा. १२।१०।१९ ; भामु. १२।१०।१९ (कथं तस्मात्समुत्पन्नास्तन्निष्ठास्तदुपाश्रयाः । तदेव निन्दां भाषेयुर्धाता तत्र न गर्ह्यते ॥).

(२) भा. १२।१०।२० ; भामु.

(३) भा. १२।१०।२१ ; भामु. १२।१०।२१ मौण्ड्य (मौन) आसितुं (च्यवितुं).

कपटयोगं आस्थाय च्यवितुं मर्तुमेव शक्यम्, न जीवितुम् । केवलं प्रणिधानेन शरीरनाशो भवेदित्यर्थः । नीटी.

[1]शक्यं पुनररण्येषु सुखमेकेन जीवितुम् ।
अबिभ्रता पुत्रपौत्रान् देवर्षीनतिथीन् पितॄन् ॥

[2]नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः ।
अथतेन प्रकारेण पुण्यमाहुर्न ताञ्जनाः ॥

यत्तु 'स्वभावस्तु व्रजत्यग्रे' इति सुप्तबालकस्तनपानवद्देहयात्रासिद्धिरुक्ता, तां दूषयति द्वाभ्याम्— शक्यं पुनरिति । पुत्राद्यभरणेन पशुसाम्येन च तत्रापि दोषोऽस्तीत्यर्थः । 'अथ' इति अतःशब्दार्थे । तं एकचरं अन्येन प्रकारेण एकचर्या विना न पुण्यं श्रेयांसं आहुः । सा च मृगेऽप्यस्तीति न तयोर्विशेष इति भावः । नीटी.

[3]यदि संन्यासतः सिद्धिं राजन् कश्चिदवाप्नुयात् ।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥

[4]एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः ।
अपरिग्रहवन्तश्च सततं चाऽऽत्मचारिणः ॥

संन्यासयुक्तमेकाकित्वमपि निरस्यति द्वाभ्याम्— यदीति । नीटी.

[5]अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते ।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥

ननु पश्वादयः कर्मयोनयो न भवन्ति, किंतु पूर्वकृतमेव ते भुञ्जते, अहं तु कर्माधिकृतः स्वप्रयत्नेन ध्रुवं पदं प्राप्स्यामि इति चेत् तत्राऽऽह— अथ चेदिति । आत्मभाग्येषु स्वसंपत्सु अन्येषां सिद्धिं परकर्मार्जितं फलं नाऽऽप्नुते, किंतु स्वकर्मार्जितमेवाऽऽप्नुते । तर्हि कर्मैव कुर्वीतेत्यर्थः । सिद्धिः मोक्षः । नीटी.

(१) भा. १२।१०।२२; भामु.
(२) भा. १२।१०।२३; भामु. १२।१०।२३ अथैतेन (अथान्येन) ताञ्ज (तं ज).
(३) भा. १२।१०।२४; भामु. १२।१०।२४ राजन् (राजा).
(४) भा. १२।१०।२५; भामु. १२।१०।२५ चाऽऽत्म (ब्रह्म).
(५) भा. १२।१०।२६; भामु.

[1]औदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः ।
येषामात्मैव भर्तव्यो नान्यः कश्चन विद्यते ॥

ननु मुमुक्षूणां देहभरणव्यतिरिक्तं कर्म नापेक्षितमित्यत आह— औदका इति । उदके भवाः मीनादयः, सृष्टयः स्थावराः, तेषामपि आत्मैव देह एव भर्तव्यः, नान्यः इति तेऽपि मुच्येरन् । नीटी.

[2]अवेक्षस्व यथा स्वैः स्वैः कर्मभिर्व्यापृतं जगत् ।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥

लोकदृष्ट्याऽपि कर्मैव कर्तव्यमित्याह— अवेक्षस्वेति । नीटी.

[3]स रत्नानि विचित्राणि संभृतानि ततस्ततः ।
मखेष्वनभिसंत्यज्य नास्तिक्यमभिजल्पसि ।
कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप ॥

[4]राजसूयाश्वमेधेषु सर्वमेधेषु वा पुनः ।
ये चान्ये क्रतवस्तात ब्राह्मणैरभिपूजिताः ।
तैर्यजस्व महाराज शक्रो देवपतिर्यथा ॥

त्रिष्वपि यज्ञेष्वाद्योऽतीतकालः, उपस्थितं मध्यममुल्लङ्घ्यान्त्यस्य वार्तां कुर्वतस्ते नास्तिक्यं स्पष्टमित्याह— स इति । पूर्वं वेदसंन्यासेऽपि तवाधिकारो नास्तीत्युक्तम् । इदानीं वेदसंन्यास एव न संभवतीत्यर्थेनाऽऽह— कुटुम्बमिति । कुत्र तर्हि त्यागं पश्यसीत्यत आह— राजसूयेति । फलितमाह— ये चेति । नीटी.

(१) भा. १२।१०।२७; भामु. १२।१०।२७ येषा (तेषा).
(२) भा. १२।१०।२८; भामु.
(३) भा. १२।१२।२५; भामु. १२।१२।२६–२७ भृतानि (हृतानि).
(४) भा. १२।१२।२६; भामु. १२।१२।२७–२८ महाराज (महीपाल).

[1]राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यताम् ।
अशरण्यः प्रजानां यः स राजा कलिरुच्यते ॥

प्रमादः राज्याकरणम् । परिमुष्यतां लुप्यमानानाम् । नीटी.

अश्वान् गाश्चैव दासीश्च करेणूश्च स्वलंकृताः ।
ग्रामाञ्जनपदांश्चैव क्षेत्राणि च गृहाणि च ॥
[2]अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः ।
वयं ते राजकलयो भविष्यामो विशां पते ॥

मात्सर्यं बन्धुद्रोहः । दानाभावेन कलिस्वरूपा एव वयं जाता इत्यर्थः । नीटी.

[3]अदातारोऽशरण्याश्च राजकिल्बिषभागिनः ।
दुःखानामेव भोक्तारो न सुखानां कदाचन ॥
[4]अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधाम् ।
तीर्थेष्वनभिसंत्यज्य प्रव्रजिष्यसि चेदथ ॥
[5]छिन्नाभ्रमिव गन्ताऽसि विलयं मारुतेरितम् ।
लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थितः ॥

अन्तराले पिशाचयोनौ । नीटी.

[6]अन्तर्बहिश्च यत्किंचिन्मनोव्यासङ्गकारकम् ।
परित्यज्य भवेत्त्यागी न यो हित्वा प्रतिष्ठते ॥

अन्तर्व्यासङ्गः अहं ज्ञाता दाता कर्ता हर्ता इत्यादिरात्मपूजा, बहिर्व्यासङ्गः पुत्रपश्वादिपूजा, तयोः कारकं मूलं अहंकारममकारौ त्यक्त्वैव त्यागी भवेत्, न तु यो गृहं हित्वा प्रतितिष्ठति स इत्यर्थः । नीटी.

---

(१) भा. १२।१२।२७–२८ ; भामु. १२।१२।२९–३०.

(२) भा. १२।१२।२९ ; भामु. १२।१२।३१ भ्यामो (भ्याम).

(३) भा. १२।१२।३० भामु. १२।१२।३२ दुःखाना (दोषाणा).

(४) भा. १२।१२।३१ ; भामु. १२।१२।३३ संत्यज्य (संप्लुत्य) चेदथ (चेत्प्रभो).

(५) भा. १२।१२।३२ ; भामु. १२।१२।३४.

(६) भा. १२।१२।३३ ; भामु. १२।१२।३५ यो हित्वा प्रतिष्ठते (हित्वा प्रतितिष्ठति).

[1]एतस्मिन् वर्तमानस्य विधौ विप्रनिषेविते ।
ब्राह्मणस्य महाराज नोच्छित्तिर्विद्यते क्वचित् ॥

[2]निहत्य शत्रूंस्तरसा समृद्धान्
शक्रो यथा दैत्यबलानि संख्ये ।
कः पार्थ शोचेन्निरतः स्वधर्मे
पूर्वैः स्मृते पार्थिव शिष्टजुष्टे ॥
क्षात्रेण धर्मेण पराक्रमेण
जित्वा महीं मन्त्रविद्भ्यः प्रदाय ।
नाकस्य पृष्ठेऽसि नरेन्द्र गन्ता
न शोचितव्यं भवताऽद्य पार्थ ॥

सहदेव उवाच–

[3]न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥

अहंकारममकारौ त्यक्तव्यावित्युक्तम् । तत्राऽऽद्यत्यागे सर्वव्यवहारोच्छेदः स्यादिति ममकार एव त्याज्यः इत्येतदर्थमध्याय आरभ्यते । तत्र द्रव्यं ममकारास्पदं द्विविधम्– बाह्यं व्यावहारिकम्, शारीरं शरीरे भवं मनःकल्पितं च । यथोक्तम्– 'घटौ मृन्मयधीमयौ' इति । तथा च श्रुतिः विदुषो विदेहकैवल्यकाले बाह्यद्रव्यस्य स्वकारणे लयं दर्शयति– 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति । कलाः प्राणमनःप्रभृतयः प्रतिष्ठाः उपादानकारणानि प्रति गताः । तथा 'इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति' इति मनःकल्पितानां कलानां पुरुषे लयं दर्शयति । अतः शारीरमेव द्रव्यं बन्धनमूलम्, न बाह्यमिति बाह्यत्यागो व्यर्थः । शारीरद्रव्यत्यागेऽपि मनश्चाञ्चल्यात् पुनरुपादाने सिद्धिर्न भवतीति न वा इत्यनेनोक्तम् । तेन दृढत्याग एव सिद्धिकृदित्युक्तम् । अक्षरयोजना स्पष्टा । नीटी.

---

(१) भा. १२।१२।३४ ; भामु. १२।१२।३६ धौ विप्रनिषेविते (धावप्रतिषेधिते).

(२) भा. १२।१२।३५–३६ ; भामु. १२।१२।३७–३८.

(३) भा. १२।१३।१ ; भामु.

[1]बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः ।
यो धर्मो यत्सुखं वा स्याद्द्विषतां तत्तथाऽस्तु नः ॥
[2]शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः ।
यो धर्मो यत्सुखं वा स्यात्सुहृदां तत्तथाऽस्तु नः ॥
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥

ममेति स्वीकारः न ममेति परित्यागश्च एतौ मृत्यु-शाश्वतौ, संसारमोक्षयोर्मूले इत्यर्थः । नीटी.

[3]ब्रह्ममृत्यू च तौ राजन्नात्मन्येव समाश्रितौ ।
अदृश्यमानौ भूतानि योधयेतामसंशयम् ॥

आत्मनि बुद्धौ । भूतानि शास्त्रकर्तॄन् । तथा च केचित् कर्ताऽऽत्मा नित्यः इति, केचिदनित्य इति । नीटी.

[4]अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत ।
भित्त्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ॥

तत्राऽऽद्ये दोषाभावमाह– अविनाश इति । नीटी.

[5]अथापि च सहोत्पत्तिः सत्त्वस्य प्रलयस्तथा ।
नष्टे शरीरे नष्टं स्याद्वृथा च स्यात्क्रियापथः ॥

सत्त्वस्य कर्तृत्वधर्मवत्या बुद्धेः । नीटी.

[6]तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः ।
पन्था निषेवितः सद्भिः स निषेव्यो विजानता ॥

द्वितीये कृतहानादिदोष इत्याह– तस्मादिति । तस्मात् कर्तुरनाशे मोक्षाभावः, नाशे देहात्मवादप्रसङ्गः । तस्मादेकान्तं अन्यतरं निश्चयं त्यक्त्वा प्राचां पन्थास्तन्मिथ्यात्वपक्ष एवाऽऽदर्तव्यः । तेन कल्पितस्य शारीरद्रव्यस्य स्वाप्नस्येव त्यागो युज्यत इत्याशयवानाह– तस्मादिति । नीटी.

लब्ध्वाऽपि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम् ।
न भुङ्क्ते यो नृपः सम्यङ्निष्फलं तस्य जीवितम् ॥
अथवा वसतो राजन्वने वन्येन जीवतः ।
द्रव्येषु यस्य ममता मृत्योरास्ये स वर्तते ॥

निष्फलं बाह्यद्रव्यत्यागं कृत्वाऽऽन्तरद्रव्यत्यागमकुर्वन् मूढ एवेत्याह द्वाभ्याम्– लब्ध्वाऽपीति । नीटी.

[1]बाह्याभ्यन्तरभूतानां स्वभावं पश्य भारत ।
ये तु पश्यन्ति तद्भावं मुच्यन्ते महतो भयात् ॥

तर्ह्युभयद्रव्यत्यागः श्रेयानित्याशङ्क्याऽऽह– बाह्येति । भूतानां बाह्यमाभ्यन्तरं च यद्द्वयं तत्सर्वं स्वभावं स्वस्य प्रत्यगात्मनः भावं सत्तां पश्य जानीहि । तदात्मव्यतिरिक्तं नास्तीत्यर्थः । तथा च श्रुतिः– 'आत्मैवेदं सर्वम्' इति । ये तु पुमांसस्तदात्मरूपं भूतं नित्यसिद्धं पश्यन्ति । 'वृत्तम्' इति पाठेऽपि स एवार्थः । ते महतो भयात् उभयद्रव्यसङ्गजात् संसारान्मुच्यन्ते । कल्पितस्य मरीचिकोदकस्येव त्यागः कर्तव्यः, न स्वरूपतः, तस्य नित्यनिवृत्तत्वादिति भावः । नीटी.

[2]भवान्पिता भवान्माता भवान्भ्राता भवान्गुरुः ।
दुःखप्रलापानार्तस्य तस्मान्मे क्षन्तुमर्हसि ॥
[3]तथ्यं वा यदि वाऽतथ्यं यन्मयैतत्प्रभाषितम् ।
तद्विद्धि पृथिवीपाल भक्त्या भरतसत्तम ॥

भक्त्यैव भाषितम्, न तु ज्ञानगर्वेण । नीटी.

[4]न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते ।
न क्लीबस्य गृहे पुत्रा मत्स्याः पङ्क इवाऽऽसते ॥

क्लीबः अधीरः । नीटी.

---

(१) भा. १२।१३।२ ; भामु. १२।१३।२ रेषु च (रेष्वनु).

(२) भा. १२।१३।३–४ ; भामु.

(३) भा. १२।१३।५ ; भामु. १२।१३।५ च तौ (ततो).

(४) भा. १२।१३।६ ; भामु. १२।१३।६ भित्त्वा (हत्वा).

(५) भा. १२।१३।७ भामु. १२।१३।७ नष्टं (नष्टः).

(६) भा. १२।१३।८–१० ; भामु.

(१) भा. १२।१३।११ भामु. १२।१३।११ भ्यन्तर (न्तरं च) स्वभावं (स्वभूतं) महतो (ते महा).

(२) भा. १२।१३।१२ ; भामु. १२।१३।१२ तस्मान्मे (तन्मे त्वं).

(३) भा. १२।१३।१३ ; भामु.

(४) भा. १२।१४।१३ ; भामु.

[1]नादण्डः क्षत्रियो भाति नादण्डो भूतिमश्नुते ।
नादण्डस्य प्रजा राज्ञः सुखमेधन्ति भारत ॥
[2]मित्रता सर्वभूतेषु दानमध्ययनं तपः ।
ब्राह्मणस्यैष धर्मः स्यान्न राज्ञो राजसत्तम ॥
[3]असतां प्रतिषेधश्च सतां च परिपालनम् ।
एष राज्ञां परो धर्मः समरे चापलायनम् ॥

प्रतिषेधः दण्डः राज्यान्निर्वासनं वा । नीटी.

यस्मिन् क्षमा च क्रोधश्च दानादाने भयाभये ।
निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते ॥

दानमादानं च ते । नीटी.

[4]त्वं तु सर्वां महीं लब्ध्वा कुरुषे स्वयमापदम् ॥
[5]यथाऽऽस्तां संमतौ राज्ञां पृथिव्यां राजसत्तमौ ।
मान्धाता चाम्बरीषश्च तथा राजन् विराजसे ॥
[6]प्रशाधि पृथिवीं देवीं प्रजा धर्मेण पालयन् ।
सपर्वतवनद्वीपां मा राजन् विमना भव ॥
[7]यजस्व विविधैर्यज्ञैर्जुह्वन्नग्नीन् प्रयच्छ च ।
पुराणि भोगान्वासांसि द्विजातिभ्यो नृपोत्तम ॥
[8]अन्ये शमं प्रशंसन्ति व्यायाममपरे तथा ।
नैकं न चापरं केचिदुभयं च तथाऽपरे ॥

साम प्रीतिम् । व्यायामं यत्नम् । अपरे एकं ध्यानं न प्रशंसन्ति इति न, अपि तु प्रशंसन्त्येव । उभयं सामव्यायामौ एकस्यैवावस्थाभेदेन प्रशंसन्ति । अपरे तथैव प्रशंसन्ति, प्रागुपात्तमेकं ज्ञेयम् । नीटी.

[1]यज्ञमेके प्रशंसन्ति संन्यासमपरे जनाः ।
दानमेके प्रशंसन्ति केचिदेव प्रतिग्रहम् ।
केचित्सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते ॥
[2]राज्यमेके प्रशंसन्ति सर्वेषां परिपालनम् ।
हत्वा भित्त्वा च च्छित्त्वा च केचिदेकान्तशीलिनः ॥
[3]एतत्सर्वं समालोक्य बुधानामेष निश्चयः ।
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः ॥

पश्चाप्येतान् पक्षान् विवृणोति– यज्ञेति त्रिभिः । यज्ञसंन्यासदानैर्देवसर्वभूतविप्राणां प्रीतिर्भवति । प्रतिग्रहं प्रजाभ्यो यजमानेभ्यो वा द्रव्यादानं व्यायामरूपं मन्दाः प्रशंसन्ति । सर्वपरित्यागेन त्वेकं केचित् । राज्यमेके इत्यादिपादत्रयेण सामव्यायामौ एकस्यैवाऽऽह । अन्त्यं पक्षमाह– केचिदेकान्तशीलिन इति । सिद्धान्तमाह– अद्रोहेणेति । नीटी.

[4]अद्रोहः सत्यवचनं संविभागो धृतिः क्षमा ।
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥
[5]धनं धर्मप्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत् ।
तस्मादेवं प्रयत्नेन कौन्तेय परिपालय ॥

प्रजनं पुत्रोत्पादनम् । प्रधानं चासौ इष्टश्चेति समासः, तम् । नीटी.

---

(१) भा. १२।१४।१४ ; भामु. १२।१४।१४ भूति (भूमि) सुखमेधन्ति ( सुखं विन्दन्ति ).

(२) भा. १२।१४।१५ ; भामु. १२।१४।१५ स्यैष (स्यैव).

(३) भा. १२।१४।१६–१७ ; भामु.

(४) भा. १२।१४।३६ ; भामु. १२।१४।३७ लब्ध्वा ( त्यक्त्वा ).

(५) भा. १२।१४।३७ ; भामु. १२।१४।३७–३८ सत्तमौ (सत्तम).

(६) भा. १२।१४।३८ ; भामु. १२।१४।३८–३९.

(७) भा. १२।१४।३९ ; भामु. १२।१४।३९ जुह्वन्नग्नीन् (युध्यस्वारीन् ) पुराणि (धनानि).

(८) भा. १२।२१।७ ; भामु. १२।२१।७ शमं (साम) रे तथा (रे जनाः) चापरं ( चापरे ).

(१) भा. १२।२१।८ ; भामु. १२।२१।८–९ यज्ञमेके (यज्ञमेव) देव ( च्चैव ).

(२) भा. १२।२१।९ ; भामु. १२।२१।९–१० सर्वेषां (प्रजानां ) भित्त्वा च च्छित्त्वा ( छित्त्वा च भित्त्वा ).

(३) भा. १२।२१।१० ; भामु. १२।२१।१०–११.

(४) भा. १२।२१।११ ; भामु. १२।२१।११–१२ धृतिः क्षमा ( दया दमः ) प्रजनः ( प्रजनं ).

(५) भा. १२।२१।१२ ; भामु. १२।२१।१२–१३ धनं धर्म (धर्मं धर्मे) देवं (देतद्).

[1]यो हि राज्ये स्थितः शश्वद्वशी तुल्यप्रियाप्रियः ।
क्षत्रियो यज्ञशिष्टाशी राजशास्त्रार्थतत्त्ववित् ॥
[2]असाधुनिग्रहरतः साधूनां प्रग्रहे रतः ।
धर्मे वर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मवित् ॥
[3]पुत्रसंक्रामितश्रीस्तु वने वन्येन वर्तयन् ।
विधिना श्रामणेनैव कुर्यात्कालमतन्द्रितः ॥
प्रग्रहे संग्रहे । श्रावणेन शास्त्रश्रवणाद्विहितेन ।
नीटी.

[4]य एवं वर्तते राजा राजधर्मविनिश्चितः ।
तस्यायं च परश्चैव लोकः स्यात्सफलो नृप ।
निर्वाणं तु सुदुष्पारं बहुविघ्नं च मे मतम् ॥
[5]एवं धर्ममनुक्रान्ताः सत्यदानतपःपराः ।
आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्जिताः ॥
[6]प्रजानां पालने युक्ता दममुत्तममास्थिताः ।
गोब्राह्मणार्थं युद्धेन संप्राप्ता गतिमुत्तमाम् ॥
[7]एवं रुद्राः सवसवस्तथाऽऽदित्याः परंतप ।
साध्या राजर्षिसंघाश्च धर्ममेतं समाश्रिताः ।
अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्मभिः ॥
[8]क्षत्रियाणां महाराज संग्रामे निधनं स्मृतम् ।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर ॥

(१) भा. १२।२१।१३; भामु. १२।२१।१३-१४ राजशा (राजा शा).

(२) भा. १२।२१।१४; भामु. १२।२१।१४-१५ धर्मे व (धर्मेव) धर्मवित् (धर्मतः).

(३) भा. १२।२१।१५; भामु. १२।२१।१५-१६ श्रीस्तु (श्रीश्च) श्रामणे (श्रावणे) त्कालम (त्कर्माण्य).

(४) भा. १२।२१।१६; भामु. १२।२१।१६-१७ राजा राजधर्मवि (राजन् स राजा धर्मं) त्सफलो नृप (त्सफलोदयः) तु सुदुष्पारं (हि सुदुष्प्राप्यं).

(५) भा. १२।२१।१७; भामु. १२।२१।१८.

(६) भा. १२।२१।१८; भामु. १२।२१।१९ दम (धर्म) उत्तरार्धे (गोब्राह्मणार्थे युध्यन्तः प्राप्ता गतिमनुत्तमाम् ॥).

(७) भा. १२।२१।१९; भामु. १२।२१।२०.

(८) भा. १२।२२।३; भामु. १२।२२।३ स्मृतम् (मतम्).

[1]ब्राह्मणानां तपस्त्यागः प्रेत्यधर्मविधिः स्मृतः ।
क्षत्रियाणां च विहितं संग्रामे निधनं विभो ॥
त्यागः संन्यासः । नीटी.

[2]क्षत्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः ।
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे ॥
[3]ब्राह्मणस्यापि चेद्राजन् क्षत्रधर्मेण तिष्ठतः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंस्थितम् ॥
[4]न त्यागो न पुनर्याच्ञा न तपो मनुजेश्वर ।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ॥
यज्ञः आत्मयज्ञः, समाधिरिति यावत् । नीटी.

[5]स भवान् सर्वधर्मज्ञः सर्वात्मा भरतर्षभ ।
राजा मनीषी निपुणो लोके दृष्टपरावरः ॥
[6]त्यक्त्वा संतापजं शोकं दंशितो भव कर्मणि ।
क्षत्रियस्य विशेषेण हृदयं वज्रसंहतम् ॥
दंशितः संनद्धः । 'विजयं धर्मसंहितम्' इति पाठे प्रशंसन्ति इत्यध्याहारः । नीटी.

[7]जित्वाऽरीन् क्षत्रधर्मेण प्राप्य राज्यमकण्टकम् ।
विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥
[8]इन्द्रो वै ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत् ।
ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव ॥
ब्रह्मणः कश्यपस्य । नवतीर्नव दशाधिकं शताष्टकम् ।
नीटी.

(१) भा. १२।२२।४; भामु. १२।२२।४ उत्तरार्धे (क्षत्रियाणां च निधनं संग्रामे विहितं प्रभो ॥).

(२) भा. १२।२२।५; भामु. १२।२२।५ क्षत्र (क्षात्र).

(३) भा. १२।२२।६; भामु. १२।२२।६ तिष्ठतः (वर्ततः) संस्थितम् (संभवम्).

(४) भा. १२।२२।७; भामु. १२।२२।७ याच्ञा (यज्ञो).

(५) भा. १२।२२।८; भामु. १२।२२।८ सर्वात्मा (धर्मात्मा).

(६) भा. १२।२२।९; भामु. १२।२२।९ संहतम् (संनिभम्).

(७) भा. १२।२२।१०; भामु.

(८) भा. १२।२२।११; भामु. १२।२२।११ कर्मणा क्षत्रियो (क्षत्रियः कर्मणा).

[१]तच्चास्य कर्म पूज्यं हि प्रशस्यं च विशां पते ।
तेन चेन्द्रत्वमापेदे देवानामिति नः श्रुतम् ॥

इन्द्रत्वं ऐश्वर्यम् । नीटी.

[२]स त्वं यज्ञैर्महाराज यजस्व बहुदक्षिणैः ।
यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः ॥

[३]मा त्वमेवंगते किंचित्क्षत्रियर्षभ शोचिथाः ।
गतास्ते क्षत्रधर्मेण शस्त्रपूताः परां गतिम् ॥

[४]क्षत्रियाणां च वक्ष्यामि तवापि विदितं पुनः ॥

[५]यज्ञो विद्यासमुत्थानमसंतोषः श्रियं प्रति ।
दण्डधारणमत्युग्रं प्रजानां परिपालनम् ॥

[६]वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा ।
द्रविणोपार्जनं भूरि पात्रेषु प्रतिपादनम् ॥

[७]एतानि राज्ञां कर्माणि सुकृतानि विशां पते ।
इमं लोकममुं लोकं साधयन्तीति नः श्रुतम् ॥

[८]तेषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते ।
बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः ॥

[९]एताश्चेष्टाः क्षत्रियाणां राजन् संसिद्धिकारिकाः ।
अपि गाथामिमां चापि बृहस्पतिरभाषत ॥

[१०]भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥

बिलशयान् मूषिकान् । अप्रवासिनं गृहादिसङ्गिनम् । नीटी.

सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात् ।
प्राप्तवान् परमां सिद्धिं दक्षः प्राचेतसो यथा ॥

युधिष्ठिर उवाच-

[११]भगवन् कर्मणा केन सुद्युम्नो वसुधाधिपः ।
संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम् ॥

व्यास उवाच -

[१]अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
[२]शङ्खश्च लिखितश्चाऽऽस्तां भ्रातरौ संयतव्रतौ ॥

[३]तयोरावसथावास्तां रमणीयौ पृथक् पृथक् ।
नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ॥

बाहुदां नदीं अनु तत्समीपे । नीटी.

[४]ततः कदाचिल्लिखितः शङ्खस्याऽऽश्रममागमत् ।
यदृच्छयाऽपि शङ्खोऽथ निष्क्रान्तो-
ऽभवदाश्रमात् ॥

[५]सोऽभिगम्याऽऽश्रमं भ्रातुः शङ्खस्य
लिखितस्तदा ।
फलानि शातयामास सम्यक् परिणतान्युत ॥

[६]तान्युपादाय विस्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागमत् ॥

विस्रब्धः ममैवैतानीति निश्चयवान् । नीटी.

[७]भक्षयन्तं तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फलान्यवाप्तानि हेतुना केन खादसि ॥

---

(१) भा. १२।२२।१२; भामु. १२।२२।१२ हि (च) तेन चेन्द्रत्व (तेनेन्द्रत्वं स).

(२) भा. १२।२२।१३; भामु.

(३) भा. १२।२२।१४; भामु. १२।२२।१४ क्षत्रियर्षभ शोचिथाः (च्छोचेथाः क्षत्रियर्षभ).

(४) भा. १२।२३।९; भामु. १२।२३।९ च (तु).

(५) भा. १२।२३।१०; भामु. १२।२३।१० मत्युग्रं (मुग्रत्वं).

(६) भा. १२।२३।११; भामु. १२।२३।११ पात्रेषु (पात्रे च).

(७) भा. १२।२३।१२; भामु. १२।२३।१२ लोकं सा (चैव सा).

(८) भा. १२।२३।१३; भामु. १२।२३।१३ तेषां (एषां).

(९) भा. १२।२३।१४; भामु. १२।२३।१४ ताश्चेष्टाः (ता विद्याः) रभाषत (रगायत).

(१०) भा. १२।२३।१५-१६; भामु.

---

(१) भा. १२।२४।१; भामु. १२।२३।१७.

(२) भा. १२।२४।२; भामु. १२।२३।१८ संयत (संशित).

(३) भा. १२।२४।३; भामु. १२।२३।१९.

(४) भा. १२।२४।४; भामु. १२।२३।२० मागमत् (मागतः) याऽपि शङ्खोऽथ (याऽथ शङ्खोऽपि).

(५) भा. १२।२४।५; भामु. १२।२३।२१ शात (पात).

(६) भा. १२।२४।६; भामु. १२।२३।२२ मागमत् (मागतः).

(७) भा. १२।२४।७; भामु. १२।२३।२३.

[1]सोऽब्रवीद्भ्रातरं ज्येष्ठमुपस्पृश्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥
[2]तमब्रवीत्तदा शङ्खस्तीव्रकोपसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ।
गच्छ राजानमासाद्य स्वकर्म प्रथयस्व वै ॥
[3]अदत्तादानमेवेदं कृतं पार्थिवसत्तम ।
स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय ।
शीघ्रं धारय चौरस्य मम दण्डं नराधिप ॥

इदं भक्षणं कृतम् । हे पार्थिवसत्तम, मया अदत्तादानं कृतमिति अस्मै राज्ञे कथयस्वेति संबन्धः । नीटी.

[4]इत्युक्तस्तस्य वचनात्सुद्युम्नं वसुधाधिपम् ।
अभ्यगच्छन् महाबाहो लिखितः संशितव्रतः ॥
[5]सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् ।
अभ्यगच्छत्सहामात्यः पद्भ्यामेव नरेश्वरः ॥
[6]तमब्रवीत्समागत्य स राजा ब्रह्मवित्तमम् ।
किमागमनमाचक्ष्व भगवन् कृतमेव तत् ॥
[7]एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् ।
प्रतिश्रौषि करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥

अन्तपालेभ्यः द्वारपालेभ्यः । करिष्येति । संधिरार्षः । नीटी.

(१) भा. १२।२४।८; भामु. १२।२३।२४ स्पृश्या (सृत्या).
(२) भा. १२।२४।९; भामु. १२।२३।२५-२६ तदा (तथा) कोप (रोष) प्रथयस्व (कथयस्व).
(३) भा. १२।२४।१०; भामु. १२।२३।२६-२७ मेवेदं (मेवं हि).
(४) भा. १२।२४।११; भामु. १२।२३।२८ वसुधाधिपम् (स नराधिपम्).
(५) भा. १२।२४।१२; भामु. १२।२३।२९ नरेश्वरः (जनेश्वरः).
(६) भा. १२।२४।१३; भामु. १२।२३।३० मागत्य (मागम्य).
(७) भा. १२।२४।१४; भामु. १२।२३।३१ श्रौषि (श्रुत्य).

[1]अनिसृष्टानि गुरुणा फलानि पुरुषर्षभ ।
भक्षितानि मया राजंस्तत्र मां शाधि माचिरम् ॥

अनिसृष्टानि अदत्तानि । गुरुणा ज्येष्ठभ्रात्रा । नीटी.

सुद्युम्न उवाच—

[2]प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ॥
स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।
ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥

यथा दण्डधारणे राजा प्रमाणं तथाऽनुज्ञायां हेतुः प्रमाणम् । शुचिकर्मा मदनुज्ञयैव शोधितदोषः । 'श्रुतकर्मा' इति पाठे श्रावितकर्मा । कीर्तनेनापि दोषो नश्यतीत्यर्थः । नीटी.

व्यास उवाच—

[3]छन्द्यमानोऽपि ब्रह्मर्षिः पार्थिवेन महात्मना ।
नान्यं वै वरयामास तस्माद्दण्डादृते वरम् ॥
[4]ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥
[5]स गत्वा भ्रातरं शङ्खमार्तरूपोऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भगवन् क्षन्तुमर्हसि ॥

शङ्ख उवाच—

[6]न कुप्ये तव धर्मज्ञ न च दूषयसे मम ।
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥

(१) भा. १२।२४।१५; भामु. १२।२३।३२ पुरुष (मनुज)/मया राजंस्त (महाराज त).
(२) भा. १२।२४।१६-१७; भामु. १२।२३।३३-३४.
(३) भा. १२।२४।१८; भामु. १२।२३।३५ छन्द्यमानोऽपि (संछाद्यमानो) वै (स).
(४) भा. १२।२४।१९; भामु. १२।२३।३६.
(५) भा. १२।२४।२०; भामु. १२।२३।३७ भगवन् (भवाँस्तत्र) मर्हसि (मर्हति).
(६) भा. १२।२४।२१; भामु. १२।२३।३८ न च (न त्वं).

मम मां मया वा न दूषयसे। ते त्वया। निष्कृतिः प्रायश्चित्तम्। नीटी.

[1]स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि।
देवान् पितॄनृषींश्चैव मा चाधर्मे मनः कृथाः॥

व्यास उवाच–

[2]तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा।
अवगाह्याऽऽपगां पुण्यामुदकार्थं प्रचक्रमे॥

उदकस्य अर्थे प्रयोजनं आचमनादि। कर्तुमिति शेषः। नीटी.

प्रादुरास्तां ततस्तस्य करौ जलजसंनिभौ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ॥

[3]ततस्तमब्रवीच्छङ्खस्तपसेदं कृतं मया।
मा च तेऽत्र विशङ्का भूद्दैवमेव विधीयते॥

लिखित उवाच–

[4]किं नु नाहं त्वया पूतः पूर्वमेव महाद्युते।
यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम॥

शङ्ख उवाच–

[5]एवमेतन्मया कार्यं नाहं दण्डधरस्तव।
स च पूतो नरपतिस्त्वं चापि पितृभिः सह॥

व्यास उवाच–

[6]स राजा पाण्डवश्रेष्ठ श्रेष्ठो वै तेन कर्मणा।
प्राप्तवान् परमां सिद्धिं दक्षः प्राचेतसो यथा॥

(१) भा. १२।२४।२२; भामु. १२।२३।३९ स (त्वं) तृतीयचरणे (देवानृषीन्पितॄंश्चैवं).

(२) भा. १२।२४।२३–२४; भामु. १२।२३।४०–४१ (व्यास उवाच०).

(३) भा. १२।२४।२५; भामु. १२।२३।४२ मेव (मत्र).

(४) भा. १२।२४।२६; भामु. १२।२३।४३ किं नु (किंतु).

(५) भा. १२।२४।२७; भामु. १२।२३।४४.

(६) भा. १२।२४।२८; भामु. १२।२३।४५ श्रेष्ठो (श्रेयान्).

[1]एष धर्मः क्षत्रियाणां प्रजानां परिपालनम्।
उत्पथेऽस्मिन् महाराज मा च शोके मनः कृथाः॥

[2]भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम्॥

आख्यायिकातात्पर्यमाह– दण्ड इति। नीटी.

[3]शृणु मच्च यथा कुर्वन् धर्मान्न च्यवते नृपः॥

[4]आददानस्य च धनं निग्रहं च युधिष्ठिर।
समानं धर्मकुशलाः स्थापयन्ति नरेश्वर॥

आददानस्य परस्वापहर्तुः। समानधर्मः अविषमो धर्मः, तत्र कुशलाः। स्थापयन्ति अवश्यकर्तव्यतया व्यवस्थापयन्ति। हे नरेश्वर। 'नरेश्वरम्' इति पाठान्तरे विजयादिकं कर्तुमिति शेषः। नीटी.

[5]देशकालप्रतीक्षे यो दस्योर्दर्शयते नृपः।
शास्त्रजां बुद्धिमास्थाय नैनसा स हि युज्यते॥

मर्षयते दस्यूनपि न हन्ति। एनसा तज्जेन पापेन। नीटी.

[6]आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति।
प्रतिगृह्णाति तत्पापं चतुर्थांशेन पार्थिवः॥

(१) भा. १२।२४।२९; भामु. १२।२३।४६ उत्पथेऽस्मिन् (उत्पथोऽन्यो) मा च (मा स्म).

(२) भा. १२।२४।३०; भामु. १२।२३।४७.

(३) भा. १२।२५।९; भामु. १२।२४।९ (शृणुचैवं यथा कुर्वन्न धर्माच्च्यवसे नृप॥).

(४) भा. १२।२५।१०; भामु. १२।२४।१० च धनं निग्रहं (विजयं विग्रहं) समानं (समान).

(५) भा. १२।२५।११; भामु. १२।२४।११ प्रतीक्षे (प्रतीक्षी) दस्योर्दर्शं (दस्यून् मर्षं) नैनसा स हि युज्यते (युज्यते नैनसा हि सः).

(६) भा. १२।२५।१२; भामु. १२।२४।१२ पार्थिवः (भूमिपः).

¹निबोध च यथाऽऽतिष्ठन् धर्मान्न च्यवते नृपः ।
निग्रहाद्धर्मशास्त्राणामनुरुध्यन्नपेतभीः ।
कामक्रोधावनादृत्य पितेव समदर्शनः ॥

आतिष्ठन्निति छेदः । धर्मशास्त्राणां निग्रहात् अतिलङ्घनात् जातादधर्माद्धेतोश्च्यवते । तानि अनुरुध्यन्नपेतभीश्च भवति । नीटी.

²शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः ॥
³दैवेनोहते राजा कर्मकाले महाद्युते ।
प्रमादयति तत्कर्म न तत्राऽऽहुरतिक्रमम् ॥
⁴तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ।
पापैः सह न संदध्याद्राष्ट्रं पण्यं न कारयेत् ॥
⁵शूराश्चाऽऽर्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर ।
गोमतो धनिनश्चैव परिपाल्या विशेषतः ॥

गां वाचं मिमते विचारयन्ति ते गोमिनः ब्रह्मकर्मकाण्डार्थविदो ब्राह्मणाः, गोमन्तो वा । धनिनः वैश्याः । नीटी.

⁶व्यवहारेषु धर्म्येषु नियोज्याश्च बहुश्रुताः ।
गुणयुक्तेऽपि नैकस्मिन् विश्वस्याच्च विचक्षणः ।
⁷अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः ।
एनसा युज्यते राजा दुर्दान्त इति चोच्यते ॥

(१) भा. १२।२५।१३; भामु. १२।२४।१३-१४.
(२) भामु. १२।२४।१४.
(३) भा. १२।२५।१४; भामु. १२।२४।१५ नोपहते (नाभ्याहतो) प्रमादयति तत्कर्म (न साधयति यत्कर्म).
(४) भा. १२।२५।१५; भामु. १२।२४।१६ द्राष्ट्रं पण्यं न (द्राज्यं पुण्यं च).
(५) भा. १२।२५।१६; भामु. १२।२४।१७ गोमतो (गोमिनो).
(६) भा. १२।२५।१७; भामु. १२।२४।१८ धर्म्येषु नियोज्याश्च (धर्मेषु योक्तव्याश्च) स्याच्च (सेत).
(७) भा. १२।२५।१८; भामु. १२।२४।१९.

¹येऽरक्ष्यमाणा हीयन्ते दैवेनोपहते नृपे ।
तस्करैश्चापि हन्यन्ते सर्वं तद्राजकिल्बिषम् ॥

स्तब्धः मान्यानमानयन् । अभ्यसूयकः गुणेषु दोषदृष्टिः । ये जनाः । दैवेन अवर्षणादिना । नीटी.

²सुमन्त्रिते सुनीते च विधिवच्चोपपादिते ।
पौरुषे कर्मणि कृते नास्त्यधर्मो युधिष्ठिर ॥

मन्त्रनीतिसहायाद्युपेते पुरुषकारे कृतेऽपि यदि जना हीयन्ते म्रियन्ते वा तर्हि राज्ञोऽधर्मो नास्तीत्यर्थः । नीटी.

³विपद्यन्ते समारम्भाः सिध्यन्त्यपि च दैवतः ।
कृते पुरुषकारे तु नैनः स्पृशति पार्थिवम् ॥
⁴अत्र ते राजशार्दूल वर्तयिष्ये कथामिमाम् ।
यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पार्थिव ॥
⁵शत्रून् हत्वा हतस्याऽऽजौ शूरस्याक्लिष्टकर्मणः ।
असहायस्य धीरस्य निर्जितस्य युधिष्ठिर ॥

शत्रून् हत्वा प्राप्य ततः शत्रोः सकाशादाजौ हतस्य वधं प्राप्तस्य । तत्र हेतुः— असहायस्येति । नीटी.

⁶यत्कर्म वै निग्रहे शात्रवाणां
योगश्चाग्र्यः पालने मानवानाम् ।
कृत्वा कर्म प्राप्य कीर्तिं सुयुद्धे
वाजिग्रीवो मोदते देवलोके ॥

(१) भा. १२।२५।१९; भामु. १२।२४।२० येऽरक्ष्य (ये रक्ष्य) नोपहते नृपे (नाभ्याहता नृप) हन्यन्ते (हीयन्ते).
(२) भा. १२।२५।२०; भामु. १२।२४।२१ विधिवच्चो (सर्वतश्चो).
(३) भा. १२।२५।२१; भामु. १२।२४।२२ पूर्वार्धे (विच्छिद्यन्ते समारब्धाः सिध्यन्ते चापि दैवतः ।).
(४) भा. १२।२५।२२; भामु. १२।२४।२३ पार्थिव (पाण्डव).
(५) भा. १२।२५।२३; भामु. १२।२४।२४ धीरस्य (संग्रामे).
(६) भा. १२।२५।२४; भामु. १२।२४।२५ सुयुद्धे (सच्युद्धात्) देव (स्वर्ग).

यत् कर्म कर्तव्यं तत् कर्म कृत्वेति संबन्धः। नीटी.

[1]संत्यक्तात्मा समरेष्वाततायी
शस्त्रैश्छिन्नो दस्युभिरर्द्यमानः।
अश्वग्रीवः कर्मशीलो महात्मा
संसिद्धात्मा मोदते देवलोके॥

[2]धनुर्यूपो रशना ज्या शरः स्रुक्
स्रुवः खड्गो रुधिरं यत्र चाऽऽज्यम्।
रथो वेदी कामगो युद्धमग्नि-
श्चातुर्होत्रं चतुरो वाजिमुख्याः॥

कामजः क्रोधः युद्धमूलभूतः अग्निः। चातुर्होत्रं ब्रह्माद्याः ऋत्विजः। चतुरः चत्वारः। नीटी.

[3]हुत्वा तस्मिन् यज्ञवह्नावथारीन्
पापान्मुक्तो राजसिंहस्तरस्वी।
प्राणान् हुत्वा चावभृथे रणे स
वाजिग्रीवो मोदते देवलोके॥
राष्ट्रं रक्षन् बुद्धिपूर्वं नयेन
संत्यक्तात्मा यज्ञशीलो महात्मा।
सर्वाँल्लोकान् व्याप्य कीर्त्या मनस्वी
वाजिग्रीवो मोदते देवलोके॥

संत्यक्तात्मा त्यक्ताहंकारः। नीटी.

[4]दैवीं सिद्धिं मानुषीं दण्डनीतिं
योगन्यायैः पालयित्वा महीं च।
तस्माद्राजा धर्मशीलो महात्मा
हयग्रीवो मोदते स्वर्गलोके॥

योगः क्रियायामुत्साहः, न्यासाः अभिमानत्यागाः, तैर्युक्तां दैवीं सिद्धिं यज्ञादिक्रियां अन्यदीयां मानुषीं च सिद्धिं दण्डनीतिं महीं च पालयित्वेति योजना। स्वयं च यज्ञशीलः। नीटी.

[1]विद्वांस्त्यागी श्रद्दधानः कृतज्ञ-
स्त्यक्त्वा लोकं मानुषं कर्म कृत्वा।
मेधाविनां विदुषां संमतानां
तनुत्यजां लोकमाक्रम्य राजा॥

मानुषं लोकमिति संबन्धः। तनुत्यजां प्रयागादौ। नीटी.

[2]सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य
सम्यग्राष्ट्रं पालयित्वा महात्मा।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
वाजिग्रीवो मोदते देवलोके॥

[3]जित्वा संग्रामान् पालयित्वा प्रजाश्च
सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान्।
युक्त्या दण्डं धारयित्वा प्रजानां
युद्धे क्षीणो मोदते देवलोके॥

[4]वृत्तं यस्य श्लाघनीयं मनुष्याः
सन्तो विद्वांसश्चार्हयन्त्यर्हणीयाः।
स्वर्गं जित्वा वीरलोकांश्च गत्वा
सिद्धिं प्राप्तः पुण्यकीर्तिर्महात्मा॥

---

(१) भा. १२।२५।२५; भामु. १२।२४।२६ संत्यक्ता (संयुक्ता) भिरर्द्य (भिर्वध्य) द्धात्मा (द्धार्थो) देव (स्वर्ग).

(२) भा. १२।२५।२६; भामु. १२।२४।२७ कामगो (कामजो).

(३) भा. १२।२५।२७–२८; भामु. १२।२४।२८–२९.

(४) भा. १२।२५।२९; भामु. १२।२४।३० न्यायैः (न्यासैः) हय (वाजि) स्वर्ग (देव).

(१) भा. १२।२५।३०; भामु. १२।२४।३१.

(२) भा. १२।२५।३१; भामु. १२।२४।३२ ग्राष्ट्रं (ग्राज्यं).

(३) भा. १२।२५।३२; भामु. १२।२४।३३ क्षीणो (क्षीणे).

(४) भा. १२।२५।३३; भामु. १२।२४।३४ सश्चार्हयन्त्यर्हणीयाः (सोऽर्हयन्त्यर्हणीयम्) कांश्च गत्वा (कानवाप्य).

[1]दीक्षां यज्ञे पालनं युद्धमाहु-
योगं राष्ट्रे दण्डनीत्या च सम्यक् ।
वित्तत्यागं दक्षिणानां च यज्ञे
सम्यग् ज्ञानं पावनानीति विद्यात् ॥

राज्ञो यागयोगसंन्यासस्थानीयाः युद्धं पालनं क्रतौ वित्तत्यागश्चेति, तान्येवास्य पावनानीत्यर्थः । नीटी.

[2]रक्षन् राष्ट्रं बुद्धिपूर्वं नयेन
संत्यक्तात्मा यत्नशीलो महात्मा ।
सर्वांल्लोकान् धर्ममूर्त्या चरंश्चा-
प्यूर्ध्वं देहान्मोदते देवलोके ॥

संत्यक्तात्मा निरहंकारः । नीटी.

[3]जित्वा संग्रामान् पालयित्वा च राष्ट्रं
सोमं पीत्वा वर्धयित्वा प्रजाश्च ।
युक्त्या दण्डं धारयित्वा प्रजानां
युद्धे क्षीणो मोदते देवलोके ॥

[4]सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य
सम्यग्राष्ट्रं पालयित्वा च राजा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
पूतात्मा वै मोदते देवलोके ॥

[5]यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः ।
पौरजानपदामात्याः स राजा राजसत्तमः ॥

(१) भा. १२।२६।३२ ; भामु. १२।२५।३२ यज्ञे पालनं ( राज्ञः संयुगे ) राष्ट्रे दण्डनीत्या ( राज्ये दण्डनीत्यां ) त्यागं ( त्यागो ) ज्ञानं ( दानं ).

(२) भा. १२।२६।३३ ; भामु. १२।२५।३३ राष्ट्रं ( राज्यं ) मूर्त्या ( दृष्ट्या ).

(३) भा. १२।२६।३४ ; भामु. १२।२५।३४.

(४) भा. १२।२६।३५ ; भामु. १२।२५।३५ ग्राष्ट्रं ( ग्राज्यं ).

(५) भा. १२।२६।३६ ; भामु. १२।२५।३६.

[1]सम्यग्घि धर्मं चरतो नृपस्य
द्रव्याणि चाप्याहरतो यथावत् ।
प्रवृत्तचक्रस्य यशोऽभिवर्धते
सर्वेषु लोकेषु चराचरेषु ॥

समं रागद्वेषवर्जं यथा स्यात्तथा धर्मं चरतः । नीटी.

राज्ञः देवद्विजार्चनम्, पौरुषमुत्थानं दैवात् परम्, तीक्ष्णत्वमृदुत्वसमुचितस्वीकारः

भीष्म उवाच–

[2]नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥

शाश्वतान् वेदपरंपरागतान् । नीटी.

[3]शृणु कार्त्स्न्येन मत्तस्त्वं राजधर्मान्युधिष्ठिर ।
निरुच्यमानान्नियतो यच्चान्यदभिवाञ्छसि ॥

[4]आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनकाम्यया ।
देवतानां द्विजानां च वर्तितव्यं यथाविधि ॥

यः कश्चिदक्षत्रियोऽपि प्रजापालनाधिकृतस्तस्य राज्ञोऽयं धर्मः यत् देवद्विजादिषु यथाविधि अनुग्रहबुद्ध्या वर्तितव्यमिति । नीटी.

[5]दैवतान्यर्चयित्वा हि ब्राह्मणांश्च कुरूद्वह ।
आनृण्यं याति धर्मस्य लोकेन च स मान्यते ॥

यद्धर्मलोपाद्राज्ञः ऋणं भवति तद्देवताद्यर्चनेन नश्यतीत्याह– दैवतानीति । लोके च तत एव पूज्यो भवतीति संयोगान्तरम् । नीटी.

[6]उत्थाने च सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानमृते दैवं राज्ञामर्थप्रसिद्धये ॥

(१) भा. १२।२८।५६ ; भामु. १२।२८।५७ सम्यग्घि ( समं हि ) चाप्या ( चाभ्या ) चक्रस्य (धर्मस्य).

(२) भा. १२।५६।१० ; भामु.

(३) भा. १२।५६।११ ; भामु. १२।५६।११ दभि ( दपि ).

(४) भा. १२।५६।१२ ; भामु.

(५) भा. १२।५६।१३ ; भामु. १२।५६।१३ स मान्यते ( समर्च्यते ).

(६) भा. १२।५६।१४ ; भामु. १२।५६।१४ उत्थाने च ( उत्थानेन ) मर्थप्रसिद्धये ( मर्थं प्रसाधयेत् ).

उत्थानेन पुरुषकारेण प्रयतेथाः जयाद्यर्थे यतस्व । दैवं प्राग्भवीयं कर्म देवताराधनादिकं वा केवलं उत्थानं विना न राज्ञामिष्टमर्थं साधयेत् । नीटी.

[1]साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च ।
पौरुषं हि परं मन्ये दैवं निश्चित्यमुच्यते ॥

साधारणं रथचक्रवत्समानम् । तत्रापि पौरुषं परं श्रेष्ठम्; दृष्टद्वारत्वात् । दैवं तु फलद्वारा निश्चित्य मुच्यते अकरणदोषात्फलासिद्धौ । फलसिद्धौ तु दुःखान्मुच्यते। नीटी.

[2]विपन्ने च समारम्भे संतापं मा स्म वै कृथाः ।
घटते विनयस्तात राज्ञामेष नयः परः ॥

घटस्व घटयस्व । कर्षकवत्सकृद्यत्नवैफल्येऽपि यतस्वैवेत्यर्थः । नीटी.

[3]न हि सत्यादृते किंचिद्राज्ञां वै सिद्धिकारणम् ।
सत्ये हि राजा निरतः प्रेत्य चेह हि नन्दति ॥

सत्यात्सामन्ता अपि वशे भवन्ति । अन्यथा विश्वासाभावात्स्वीया अप्युद्विजन्ते । क्षीणा अपि परे प्राणपणेनापि जिगीषन्ते एव इति श्लोकद्वयार्थः । नीटी.

[4]ऋषीणामपि राजेन्द्र सत्यमेव परं धनम् ।
तथा राज्ञः परं सत्यान्नान्यद्विश्वासकारणम् ॥

[5]गुणवाञ्छीलवान्दान्तो मृदुर्धर्म्यो जितेन्द्रियः ।
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥

गुणाः शौर्यौदार्यगाम्भीर्यादयः, तद्वान् । शीलं सदाचारः, तद्वान् । दान्तः अचपलः । मृदुः दयावान् । धर्म्यः धर्मादनपेतः । जितेन्द्रियः जितचित्तः । सुदर्शः प्रसन्नवक्त्रः । स्थूललक्ष्यः बहुप्रदः । नीटी.

आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन ।
पुनर्नयविचारेण त्रयीसंवरणेन च ॥

आर्जवं अवक्रताम् । नयः नीतिः स्वरन्ध्रगोपनं पररन्ध्रान्वेषणस्य स्वेन क्रियमाणस्य परेभ्यो गोपनं मन्त्रगोपनं चेत्यादि, तद्युक्तेन विचारेण ऊहापोहेन साधकबाधकोपन्यासेन क्रियमाणेन । त्रयीसंवरणे उक्तविधनीतिरूपे आर्जवं यथार्थभाषित्वं च न श्रयेथाः । नीटी.

[1]मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचर ॥

उभयं मृदुत्वं तीक्ष्णत्वं च समुचितमाश्रय । नीटी.

[2]अदण्ड्याश्चैव ते नित्यं विप्राः स्युर्ददतां वर ।
भूतमेतत्परं लोके ब्राह्मणा नाम भारत ॥

तत्रापि तैक्ष्ण्यापवादमाह– अदण्ड्या इति । नीटी.

क्षमान्वितब्राह्मणा नमस्याः

[3]मनुना चापि राजेन्द्र गीतौ श्लोकौ महात्मना ।
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्तुमर्हसि ॥

[4]अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥

[5]अयो हन्ति यदाऽश्मानमग्निश्चाऽऽपोऽभिपद्यते ।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥

---

(१) भा. १२।५६।१५ ; भामु.

(२) भा. १२।५६।१६ ; भामु. १२।५६।१६ उत्तरार्धे ( घटस्वैव सदाऽऽत्मानं राज्ञामेष परो नयः ॥ ).

(३) भा. १२।५६।१७ ; भामु. १२।५६।१७ कारणम् ( कारकम् ) चेह हि ( चेह च ).

(४) भा. १२।५६।१८ ; भामु. १२।५६।१८ राज्ञः ( राज्ञां ).

(५) भा. १२।५६।१९–२० ; भामु.

(१) भा. १२।५६।२१ ; भामु. १२।५६।२१ माचर ( माश्रय ).

(२) भा. १२।५६।२२ ; भामु. १२।५६।२२ नित्यं विप्राः स्युर्द ( पुत्र विप्राश्च द ) ब्राह्मणा ( ब्राह्मणो ) भारत ( पाण्डव ).

(३) भा. १२।५६।२३ ; भामु. १२।५६।२३ चापि ( चैव ).

(४) भा. १२।५६।२४ ; भामु.

(५) भा. १२।५६।२५ ; भामु. १२।५६।२५ मग्निश्चाऽऽपोऽभिपद्यते ( मग्निना वारि हन्यते ).

¹एतज्ज्ञात्वा महाराज नमस्या एव ते द्विजाः ।
भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः ॥

भौमं ब्रह्म वेदान् यज्ञांश्च । नीटी.

आततायिब्राह्मणो निग्रहणीयः

²एवं चैव नरव्याघ्र लोकतन्त्रविघातकाः ।
निग्राह्या एव सततं बाहुभ्यां ये स्युरीदृशाः ॥

मार्दवापवादमाह– एवमिति । नीटी.

³श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा ।
तौ निबोध महाप्राज्ञ त्वमेकाग्रमना नृप ।

⁴उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नरेश्वरः ॥

स्वधर्मेण शस्त्रोद्यमनेन निगृह्णीयादेव, न तु हन्यात् । नीटी.

⁵विनश्यमानं धर्मं हि यो रक्षति स धर्मवित् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ॥

विनश्यमानं आततायिदोषात् । तेन आततायिनिग्रहेण । अनिग्रहे तु धर्महा स्यादेव । जीवतोऽस्य निग्रहो दुःशकश्चेत्तत्राऽऽह– मन्युस्तन्मन्युमृच्छति । यथा सूर्योंशुततः स्फटिकस्तूलपिण्डमुद्दीप्य तदूष्मणा स्वयं नश्यति, एवमाततायिक्रोधोऽन्यमुद्दीप्य तद्द्वारा आततायिनमेवाऽऽश्रयदाहेन दहति । नात्र हन्तुर्दोष इत्यर्थः । नीटी.

¹एवं चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः ।
स्वपराद्धानपि हि तान्विषयान्ते समुत्सृजेत् ॥

यद्यप्येवं तथापि द्विजातयः ब्राह्मणाः रक्ष्या एव । नीटी.

²अभिशस्तमपि ह्येषां कृपायीत विशां पते ।
ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ॥

अभिशस्तं सताऽसता वा दोषेण युक्तं तथा ख्यापितम् । नीटी.

³राजद्विष्टे च विप्रस्य विषयान्ते विसर्जनम् ।
विधीयते न शारीरं भयमेषां कदाचन ॥

शारीरं कशाघातादि दण्डम् । क्लीबत्वमार्षम् । नीटी.

⁴दयिताश्च नरास्ते स्युर्नित्यं पुरुषसत्तम ।
न कोशः परमो ह्यन्यो राज्ञां पुरुषसंचयात् ॥

पुरुषसंचयात् ब्राह्मणभक्तादिति पूर्वार्धार्थः(?) । नीटी.

चातुर्वर्ण्ये दया क्षमातीक्ष्णते समुचिते व्यसनत्यागः स्वप्रियत्यागश्च राजधर्माः

⁵दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।
सर्वेषु तेषु मन्यन्ते नरदुर्गं सुदुस्तरम् ॥

षट्सु मरुजलपृथिवीवनपर्वतनरमयेषु । नीटी.

⁶तस्मान्नित्यं दया कार्या चातुर्वर्ण्ये विपश्चिता ।
धर्मात्मा सत्यवाक्चैव राजा रञ्जयति प्रजाः ॥

---

(१) भा. १२।५६।२६; भामु. १२।५६।२६ एतज्ज्ञात्वा ( एवं कृत्वा ) शमान्विताः ( समर्चिताः ).

(२) भा. १२।५६।२७; भामु. १२।५६।२७ तन्त्र ( त्रय ).

(३) भा. १२।५६।२८; भामु. १२।५६।२८ प्राज्ञ ( राज ).

(४) भा. १२।५६।२९; भामु. १२।५६।२९ नरेश्वरः ( नराधिपः ).

(५) भा. १२।५६।३०; भामु. १२।५६।३० यो रक्षति ( योऽभिरक्षेत ) भ्रूणहा ( धर्महा ) स्तं मन्यु ( स्तन्मन्यु ).

(१) भा. १२।५६।३१; भामु. १२।५६।३१ स्वपराद्धा ( सापराधा ).

(२) भा. १२।५६।३२; भामु.

(३) भा. १२।५६।३३; भामु. १२।५६।३३ भय ( दण्ड ).

(४) भा. १२।५६।३४; भामु. १२।५६।३४ नित्यं पुरुषसत्तम ( भक्तिमन्तो द्विजेषु ये ) ह्यन्यो ( ऽन्योऽस्ति ).

(५) भा. १२।५६।३५; भामु. १२।५६।३५ सर्वेषु तेषु ( सर्वदुर्गेषु ).

(६) भा. १२।५६।३६; भामु.

[1]न च क्षान्तेन ते भाव्यं नित्यं पुरुषसत्तम ।
अधर्म्यो हि मृदू राजा क्षमावानिव कुञ्जरः ॥

पुनर्दयापवादमाह– न चेति । समन्ततः सर्वजातीयेषु । अधर्मः धर्मविरोधी । नीटी.

[2]बार्हस्पत्ये च शास्त्रे वै श्लोका विनियताः पुरा ।
अस्मिन्नर्थे महाराज तन्मे निगदतः शृणु ॥

[3]क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः ।
हस्तियन्ता गजस्येव शिर एवाऽऽरुरुक्षति ॥

गजस्य क्षममाणस्य । नीटी.

[4]तस्मान्नैव मृदुर्नित्यं तीक्ष्णो वाऽपि भवेन्नृपः ॥
वसन्तेऽर्क इव श्रीमान्न शीतो न च घर्मदः ॥

[5]प्रत्यक्षेणानुमानेन तथौपम्योपदेशतः ।
परीक्ष्यास्ते महाराज स्वे परे चैव सर्वदा ॥

प्रत्यक्षेण उपकारापकारादिना, अनुमानेन नेत्रवक्त्रविकारादिना, यथोक्तम्– 'नेत्रवक्त्रविकारेण ज्ञायतेऽन्तर्गतं मनः' इति, औपम्यं उपमानम्, अन्यत्र कार्यदर्शनेन, आगमैः शब्दादिना सामुद्रिकलक्षणेन ते पुरुषाः परीक्ष्याः । नीटी.

[6]व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण ।
न चैव न प्रयुञ्जीत सङ्गं तु परिवर्जयेत् ॥

व्यसनानि अष्टादश । यथाऽऽह मनुः– 'मृगयाऽक्षा दिवास्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाटनं कामजो दशको गणः ॥' (मस्मृ. ७।४७) । तौर्यत्रिकं वाद्यगीतनृत्यानि । 'पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥' (मस्मृ. ७।४८) इति । तत्र च सप्त कष्टतमानि । यथाऽऽह– 'पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥' (मस्मृ. ७।५०–५१) इति । न प्रयुञ्जीतेति न, अपि तु सर्वदा शूरान् जयाय प्रयोजयेदेव । संकीर्णे प्रयुक्त्यप्रयुक्त्योः संकरम्, साम्ना उपगते प्रयोगो नास्ति । अन्यत्र कुर्यादेवेत्यर्थः । नीटी.

[1]नित्यं हि व्यसनी लोके परिभूतो भवत्युत ।
उद्वेजयति लोकं चाप्यतिद्वेषी महीपतिः ॥

व्यसनी मृगयाऽक्षाः स्त्रियः पानं च तद्वान् । अतिद्वेषी प्रजाद्रोहपरः । नीटी.

[2]भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा ।
कारणं च महाराज शृणु येनेदमिष्यते ॥
यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाऽप्यसंशयम् ॥

[3]वर्तितव्यं कुरुश्रेष्ठ नित्यं धर्मानुवर्तिना ।
स्वं प्रियं समभित्यज्य यद्यल्लोकहितं भवेत् ॥

प्रियं इष्टम् । नीटी.

[4]न संत्याज्यं च ते धैर्यं कदाचिदपि पाण्डव ।
धीरस्य स्पष्टदण्डस्य न ह्याज्ञा प्रतिहन्यते ॥

---

(१) भा. १२।५६।३७ ; भामु. १२।५६।३७ पूर्वार्धे (न च क्षान्तेन ते नित्यं भाव्यं पुत्र समन्ततः ।) अधर्म्यो (अधर्मो).

(२) भा. १२।५६।३८ ; भामु. १२।५६।३८ वै श्लोका विनियताः (च श्लोको निगदितः).

(३) भा. १२।५६।३९ ; भामु.

(४) भा. १२।५६।४० ; भामु. १२।५६।४० वाऽपि (न च) वसन्तेऽर्क (वासन्तार्क).

(५) भा. १२।५६।४१ ; भामु. १२।५६।४१ म्योपदेशतः (म्यागमैरपि) सर्वदा (नित्यशः).

(६) भा. १२।५६।४२ ; भामु. १२।५६।४२ सङ्गं तु (संकीर्णे).

(१) भा. १२।५६।४३ ; भामु. १२।५६।४३ नित्यं हि व्यसनी लोके (लोकस्य व्यसनी नित्यं) चाप्यति (च योऽति).

(२) भा. १२।५६।४४–४५ ; भामु.

(३) भा. १२।५६।४६ ; भामु. १२।५६।४६ नित्यं (सदा) समभि (तु परि).

(४) भा. १२।५६।४७ ; भामु. १२।५६।४७ ह्याज्ञा प्रतिहन्यते (भयं विद्यते कचित्).

ते त्वया स्पष्टः प्रख्यातः दण्डः अश्वरथहस्तिपुरुषादिसमूहः यस्य तस्य स्पष्टदण्डस्य । नीटी.

भृत्या मर्यादायां स्थाप्याः

[1]परिहासश्च भृत्यैस्ते न नित्यं वदतां वर ।
कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ॥
[2]अवमन्यन्ति भर्तारं संहर्षादुपजीविनः ।
स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति हि तद्वचः ॥

संघर्षात् अतिसंश्लेषात् । नीटी.

[3]प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते ।
अयाच्यं चैव याचन्तेऽभोज्यान्याहारयन्ति च ॥

विकल्पन्ते कार्ये संशयं दर्शयन्ति । गुह्यं गोप्यमपि छिद्रं अनुयुञ्जते प्रकटयन्ति । भोज्यानि राज्ञ आहारयन्ति भक्षयन्ति । नीटी.

[4]क्रुध्यन्ति परिदीप्यन्ति भूमिमध्यासतेऽस्य च ।
उत्कोचैर्वञ्चनाभिश्च कार्याण्यनुविहन्ति च ॥

उत्कोचैः लञ्चाभिः । वञ्चना अलीकगुणदोषादिप्रदर्शनम् । अनुविहन्ति विनिघ्नन्ति । नीटी.

[5]जर्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ।
स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ॥

प्रतिरूपकैः कृत्रिमैः शासनपत्रैः । विषयं देशम् । जर्जरं निःसारम् । स्त्रीरक्षिभिः सज्जन्ते प्रीतिं कुर्वन्ति अन्तःपुरे प्रवेशमिच्छन्तः । नीटी.

[1]वातं च ष्ठीवनं चैव कुर्वते चास्य संनिधौ ।
निर्लज्जा नरशार्दूल व्याहरन्ति च तद्वचः ॥

वान्तं जृम्भादिना । निष्ठीवनं थूत्कारम् । तद्वचः राजवाक्यं गुह्यमपि लोके व्याहरन्ति । नीटी.

[2]हयं वा दन्तिनं वाऽपि रथं नृपतिसंमतम् ।
अधिरोहन्त्यनादृत्य हर्षुले पार्थिवे मृदौ ॥

हर्षुले परिहासशीले । नीटी.

[3]इदं ते दुष्करं राजन्निदं ते दुर्विचेष्टितम् ।
इत्येवं सुहृदो नाम ब्रुवन्ति परिषद्गताः ॥
[4]क्रुद्धे चास्मिन्हसन्त्येव न च हृष्यन्ति पूजिताः ।
संघर्षशीलाश्च सदा भवन्त्यन्योन्यकारणात् ॥
[5]विस्रंसयन्ति मन्त्रं च विवृण्वन्ति च दुष्कृतम् ।
लीलया चैव कुर्वन्ति सावज्ञास्तस्य शासनम् ।
अलंकरणभोज्यं च तथा स्नानानुलेपनम् ॥

विस्रंसयन्ति भेदयन्ति । नीटी.

[6]हेलमाना नरव्याघ्र स्वस्थास्तस्योपशृण्वते ।
निन्दन्ति स्वानधीकारान्संत्यजन्ति च भारत ॥

हेलनानि कुर्वन्तीति शेषः । उपशृण्वतः शृण्वन्तमनादृत्य । स्वस्थाः निर्भयाः । नीटी.

---

(१) भा. १२।५६।४८ ; भामु. १२।५६।४८ न नित्यं ( नात्यर्थं ).

(२) भा. १२।५६।४९ ; भामु. १२।५६।४९ संहर्षा ( संघर्षा ) हि ( च ).

(३) भा. १२।५६।५० ; भामु. १२।५६।५० ऽभोज्या ( भोज्या ).

(४) भा. १२।५६।५१ ; भामु. १२।५६।५१ पूर्वार्धे ( क्रुद्ध्यन्ति परिदीप्यन्ति भूमिपायाधितिष्ठते । ).

(५) भा. १२।५६।५२ ; भामु.

(१) भा. १२।५६।५३ ; भामु. १२।५६।५३ वातं च ष्ठी ( वान्तं निष्ठी ) नर ( राज ).

(२) भा. १२।५६।५४ ; भामु. १२।५६।५४ नृपतिसंमतम् ( वा नृपसत्तम ) अधि ( अभि ).

(३) भा. १२।५६।५५ ; भामु. १२।५६।५५ दुर्वि ( दुष्ट ) नाम ब्रुवन्ति ( वाचं वदन्ते ).

(४) भा. १२।५६।५६ ; भामु. १२।५६।५६ संघर्ष ( संहर्ष ) सदा ( तदा ).

(५) भा. १२।५६।५७ ; भामु. १२।५६।५७–५८ करणभोज्यं ( कारे च भोज्ये ) लेपनम् ( लेपने ).

(६) भा. १२।५६।५८ ; भामु. १२।५६।५८–५९ हेलमाना ( हेलनानि ) शृण्वते ( शृण्वतः ) निन्दन्ति ( निन्दन्ते ) त्यजन्ति ( त्यजन्ते ).

[1]न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च ।
क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा ।
अस्मत्प्रणेयो राजेति लोके चैव वदन्त्युत ॥

राजदेयं राजभागम् । क्रीडितुं राज्ञा सह मृगयादि-क्रीडां कर्तुम् । ससूत्रेण बद्धेन पक्षिणा श्येनेन । राज्ञो निरोधका इत्यर्थः । प्रणेयः शास्यः । नीटी.

[2]एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत ।
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ॥

अपरे दारापहारादयः । नीटी.

राजगुणाः– दुराधर्षत्वं मृदुत्वं संविभागित्वं च

[3]गुप्तात्मा स्याद्दुराधर्षः स्मितपूर्वाभिभाषिता ।
आभाषितश्च मधुरं प्रतिभाषेत मानवान् ॥

[4]कृतज्ञो दृढभक्तिः स्यात्संविभागी जितेन्द्रियः ।
ईक्षितः प्रतिवीक्षेत मृदु चर्जु च वल्गु च ॥

संविभागी विभज्य भोक्ता । वल्गु शोभनम् । नीटी.

राज्ञः स्वर्ग्याणि कर्माणि

[5]नराधिपश्चाप्यनुशिष्य मेदिनीं
दमेन सत्येन च सौहृदेन ।
महद्भिरिष्ट्वा क्रतुभिर्महायशा-
स्त्रिविष्टपे स्थानमुपैति सत्कृतम् ॥

(१) भा. १२।५६।५९ ; भामु. १२।५६।५९–६० लोके चैव ( लोकांश्चैव ).

(२) भा. १२।५६।६० ; भामु. १२।५६।६१.

(३) भा. १२।६७।३७ ; भामु. १२।६७।३८ गुप्तात्मा स्या ( गोप्ता तस्मा ) प्रति ( प्रत्या ).

(४) भा. १२।६७।३८ ; भामु. १२।६७।३९ चर्जु च वल्गु ( वल्गु च सुष्ठु ).

(५) भा. १२।६८।६० ; भामु. १२।६८।६० सत्कृतम् ( शाश्वतम् ).

भीष्ममते इह परत्र राज्ञः श्रेयस्करो गुणगणः

युधिष्ठिर उवाच–

[1]केन वृत्तेन वृत्तज्ञ वर्तमानो महीपतिः ।
सुखेनार्थान् सुखोदर्कानिह च प्रेत्य चाऽऽप्नुयात् ॥

दण्डनीतिं सम्यक्प्रयोज्य केन वृत्तेन वर्तेत इति प्रश्नः । नीटी.

भीष्म उवाच–

[2]इयं गुणानां षट्त्रिंशत्षट्त्रिंशद्गुणसंयुता ।
यान् गुणांस्तु गुणोपेतः कुर्वन्गुणमवाप्नुयात् ॥

षट्त्रिंशत् एतत्संख्याकः धर्मचर्यादिगुणगणः, स च प्रत्येकं एकैकगुणयोगात्षट्त्रिंशद्गुणैरकटुकतादिभिः संयुतः, अत एव गुणोपेतः यान् गुणान् धर्मादीन् कुर्वन् गुणं कल्याणं अवाप्नुयात्सोऽयं षट्त्रिंशत्को गणस्त्वया श्रोतव्य इत्यर्थः । नीटी.

[3]चरेद्धर्मानकटुको मुञ्चेत्स्नेहं न नास्तिकः ।
अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ॥

अकटुकः रागद्वेषहीनः धर्मान् सर्वांश्चरेत् । आस्तिकः परलोककामुकः सन् स्नेहं कुर्यात्, न तु लोभादिना । अनृशंसः अनिष्ठुरः सन्नर्थमर्जयेत् । अनुद्धतः धर्मार्थावनाशयन् कामं इन्द्रियप्रीतिं चरेत् । नीटी.

[4]प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥

अकृपणः अदीनः । अविकत्थनः श्लाघाहीनः । अनिष्ठुरः सदयः । नीटी.

(१) भा. १२।७१।१ ; भामु. १२।७०।१.

(२) भा. १२।७१।२ ; भामु. १२।७०।२ इयं ( अयं ) संयुता ( संयुतः ).

(३) भा. १२।७१।३ ; भामु. १२।७०।३ नास्तिकः ( चाऽऽस्तिकः ) ; राप्र. १२५ मानक ( माणि क ) अनृशंस ( आनृशंस ).

(४) भा. १२।७१।४ ; भामु. १२।७०।४ ; राक. १४६ ; राप्र. १२५.

¹संदधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः ।
नानाप्तैः कारयेच्चारं कुर्यात्कार्यमपीडया ॥

आर्यत्वं जानन् संधिं कुर्यात्, बन्धुत्वं जानन् विग्रहं न कुर्यात्, इति सर्वत्र गुणोपेतः गुणो द्रष्टव्यः। अभक्तं अल्पान्नम्। पुष्कलान्नदश्चारान् कुर्यात्। अपीडयन् भक्तं दद्यात्। नीटी.

²अर्थान् ब्रूयान्न चासत्सु गुणान् ब्रूयान्न चाऽऽत्मनः ।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥

साधुत्वेन परीक्ष्य अर्थं प्रयोजनं ब्रूयात्। श्रोतार उपहसिष्यन्तीति ज्ञात्वा आत्मनो गुणान्न ब्रूयात्। नीटी.

³नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् ।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥

⁴अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः ।
स्त्रियं सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥

चोक्षः शुद्धः। नीटी.

⁵अस्तब्धः पूजयेन्मान्यान्गुरून्सेवेदमायया ।
अर्चेद्देवान्नदम्भेन श्रियमिच्छेदकुत्सिताम् ॥

¹सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित् ।
सान्त्वयेन्न च भोगार्थमनुगृह्णन्न चाऽऽक्षिपेत् ॥

प्रणयं नम्रतां हित्वा धारयित्वा। हित्वेति धाञो रूपम्। न च मोक्षाय फलं दित्सन्नेव सान्त्वयेदित्यर्थः। नीटी.

²प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शेषयेत् ।
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ॥

अविज्ञाय, शत्रुं दोषं चेति शेषः। न शोचयेत् शत्रुबन्धूनां शोकमपनुदेत्। अकस्मात् कारणं विना। नीटी.

³एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि ।
अतोऽन्यथा नरपतिर्भयमृच्छत्यनुत्तमम् ॥

अनुत्तमं महत्तरम्। नीटी.

इति सर्वान्गुणानेतान्यथोक्तान् योऽनुवर्तते ।
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते ॥

गुणवद्द्विजसंग्रहः पुरोहितादिद्वारा धर्मकार्यनिर्वर्तनं च राजकर्तव्यम्

युधिष्ठिर उवाच—

⁴कथं राजा प्रजा रक्षन्नाऽऽधिबन्धेन युज्यते ।
धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह ॥

बह्वीनां प्रजानां परिपालनं कथं स्यादिति चिन्ता आधिः, स एव बन्धः, तेन न युज्यते। नापराध्नोति नान्यथा करोति धर्मे व्यवहारनिर्णयादौ। एतद्द्वयं कथं स्यादिति प्रश्नः। नीटी.

(१) भा. १२।७१।५; भामु. १२।७०।५ नानाप्तैः कारये (नाभक्तं चारये); राप्र. १२५ भामुवत्.

(२) भा. १२।७१।६; भामु. १२।७०।६ अर्थान् (अर्थं); राप्र. १२५ भामुवत्.

(३) भा. १२।७१।७; भामु. १२।७०।७; राप्र. १२५.

(४) भा. १२।७१।८; भामु. १२।७०।८ स्त्रियं (स्त्रियः); राप्र. १२६ स्याच्चोक्षः (स्यादृजुः) स्त्रियं (स्त्रियः).

(५) भा. १२।७१।९; भामु. १२।७०।९ न्नदम्भेन (नदम्भेन); राप्र. १२६ भामुवत्.

(१) भा. १२।७१।१०; भामु. १२।७०।१० भोगार्थमनु (मोक्षाय अनु); राप्र. १२६ न्न च भोगार्थ (त्तत्र मोघाश) चाऽऽक्षिपेत् (च क्षिपेत्).

(२) भा. १२।७१।११; भामु. १२।७०।११ शेष (शोच); राप्र. १२६ भामुवत्.

(३) भा. १२।७१।१२–१३; भामु. १२।७०।१२–१३.

(४) भा. १२।७२।१; भामु. १२।७१।१.

भीष्म उवाच–

[1]समासेनैव ते तात धर्मान्वक्ष्यामि निश्चितान् ।
विस्तरेण हि धर्माणां न जात्वन्तमवाप्नुयात् ॥

उत्तरं वक्तुं प्रतिजानीते– समासेनैवेति । नीटी.

[2]धर्मनिष्ठाञ्श्रुतवतो वेदव्रतसमाहितान् ।
अर्चितान्वासयेथास्त्वं गृहे गुणवतो द्विजान् ॥

रागद्वेषहीनः ब्राह्मणान् पुरस्कृत्य व्यवहारनिर्णयं कुर्वन् धर्मेऽपि नापराध्नोतीति द्वितीयस्योत्तरमाह– धर्मनिष्ठानिति चतुर्भिः । नीटी.

[3]प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च ।
अथ सर्वाणि कुर्वीथाः कार्याणि सपुरोहितः ॥
धर्मकार्याणि निर्वर्त्य मङ्गलानि प्रयुज्य च ।
ब्राह्मणान्वाचयेथास्त्वमर्थसिद्धिजयाशिषः ॥

कामक्रोधौ वर्जयित्वा अर्थपरिग्रहः अलुब्धबुद्धिमतां सर्वकर्मसु योजनं च कर्तव्यं राज्ञः

[4]आर्जवेन च संपन्नो धृत्या बुद्ध्या च भारत ।
अर्थार्थं परिगृह्णीयात्कामक्रोधौ च वर्जयेत् ॥
[5]कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति ।
न स धर्मं न चाप्यर्थं परिगृह्णाति बालिशः ॥

विपक्षे दोषमाह– कामेति । नीटी.

[6]मा स्म लुब्धांश्च मूर्खांश्च कामे चार्थेषु यूयुजः ।
अलुब्धान् बुद्धिसंपन्नान्सर्वकर्मसु योजयेत् ॥

(१) भा. १२।७२।२ ; भामु. १२।७१।२ तात (राजन्) निश्चितान् (शाश्वतान्) रेण हि (रेणैव).

(२) भा. १२।७२।३ ; भामु. १२।७१।३ वेद (देव) अर्चितान्वासयेथा (अर्चयित्वा यजेथा).

(३) भा. १२।७२।४–५ ; भामु. १२।७१।४–५.

(४) भा. १२।७२।६ ; भामु. १२।७१।६ अर्थार्थं (यथार्थं).

(५) भा. १२।७२।७ ; भामु. १२।७१।७ परि (प्रति).

(६) भा. १२।७२।८ ; भामु. १२।७१।८ कामे चार्थेषु (कामार्थे च प्र).

आद्यस्योत्तरमाह– मा स्मेत्यादिना । साधून् सर्वत्र कार्येषु नियोज्य स्वयं न आधिबन्धेन युज्यते इत्यर्थः । नीटी.

[1]मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः ।
प्रजाः क्लिश्नात्ययोगेन कामद्वेषसमन्वितः ॥

अयोगेन, योगः इष्टप्राप्तिः, तदभावेन । नीटी.

ब्राह्मणेभ्यो दानम्, धर्मेण प्रजापालनं राज्ञः आधिबन्धाभावकारणम्, प्रजापालनं राज्ञः स्वर्ग्यम्

[2]मा स्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः ।
अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत ॥
धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः ।
सान्त्वयन् परिरक्षंश्च स्वर्गमाप्स्यसि दुर्जयम् ॥
[3]एवं धर्मेण वृत्तेन प्रजास्त्वं परिपालयन् ।
स्वन्तं पुण्यं यशोवन्तं प्राप्स्यसे कुरुनन्दन ॥
[4]धर्मेण व्यवहारेण प्रजाः पालय पाण्डव ।
युधिष्ठिर तथा युक्तो नाऽऽधिबन्धेन योक्ष्यसे ॥

यथा युक्तः उक्तेन प्रकारेण अवहितः । नीटी.

[5]एष एव परो धर्मो यद्राजा रक्षते प्रजाः ।
भूतानां हि यथा धर्मे रक्षणं च परा दया ॥
[6]तस्मादेवं परं धर्मं मन्यन्ते धर्मकोविदाः ।
यद्राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् ॥

(१) भा. १२।७२।९ ; भामु. १२।७१।९ द्वेष (क्रोध).

(२) भा. १२।७२।२२–२३ ; भामु. १२।७१।२२–२३.

(३) भा. १२।७२।२४ ; भामु. १२।७१।२४ पालयन् (पालय) यशोवन्तं (यशो नित्यं).

(४) भा. १२।७२।२५ ; भामु. १२।७१।२५ तथा (यथा).

(५) भा. १२।७२।२६ ; भामु. १२।७१।२६ रक्षते (रक्षति) यथा धर्मे (यदा धर्मो) च परा (परमा).

(६) भा. १२।७२।२७ ; भामु. १२।७१।२७ यद्राजा (यो राजा).

यो दयां कुरुते तं धर्मं मन्यन्ते इति योजना । नीटी.

[1]यदह्ना कुरुते पापमरक्षन् भयतः प्रजाः ।
राजा वर्षसहस्रेण तस्यान्तमधिगच्छति ॥

अन्तं यातनाभोगनिष्कृतिम् । नीटी.

[2]यदह्ना कुरुते पुण्यं प्रजा धर्मेण पालयन् ।
दश वर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि ॥

[3]स्विष्टिः स्वधीतिः सुतपा लोकाञ्जयति यावतः ।
क्षणेन तानवाप्नोति प्रजा धर्मेण पालयन् ॥

स्विष्टिः स्वधीतिः सुतपाः इति क्रमेण गृहस्थब्रह्मचारिवानप्रस्थधर्मान् सम्यगनुतिष्ठन् । नीटी.

[4]एवं धर्मं प्रयत्नेन कौन्तेय परिपालयन् ।
इह पुण्यफलं लब्ध्वा नाऽऽधिबन्धेन योक्ष्यसे ॥

[5]स्वर्गलोके च महतीं श्रियं प्राप्स्यसि पाण्डव ।
असंभवश्च धर्माणामीदृशानामराजसु ।
तस्माद्राजैव नान्योऽस्ति यो महत्फल-
माप्नुयात् ॥

[6]स राज्यमृद्धिमत्प्राप्य धर्मेण परिपालयन् ।
इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ॥

चौरहृतप्रत्यर्पणं राज्ञः कर्तव्यं विशेषतः ब्रह्मस्वरक्षणं च

[7]प्रत्याहर्तुमशक्यं स्याद्धनं चोरैर्हृतं यदि ।
स्वकोशात्तत्प्रदेयं स्यादशक्तेनोपजीवता ॥

अशक्तेन राज्ञा । उपजीवतः धनोपजीविनो वणिजादेः । नीटी.

[1]सर्ववर्णैः सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणास्तथा ।
न स्थेयं विषये तेषु योऽपकुर्याद्द्विजातिषु ॥

[2]ब्रह्मस्वे रक्ष्यमाणे हि सर्वं भवति रक्षितम् ।
तेषां प्रसादे निर्वृत्ते कृतकृत्यो भवेन्नृपः ॥

[3]पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ।
नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम् ॥

[4]न हि कामात्मना राज्ञा सततं शठबुद्धिना ।
नृशंसेनातिलुब्धेन शक्याः पालयितुं प्रजाः ॥

प्रजापालनं राज्ञः कर्तव्यम्, नारण्याश्रमः

युधिष्ठिर उवाच-

[5]नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम् ।
धर्मार्थं रोचये राज्यं धर्मश्चात्र न विद्यते ॥

अत्र राज्ये पुण्यस्य चतुर्थांशः पापस्य त्वर्धं कृत्स्नं वा लभ्यते इति पापाधिक्याद्धर्मो नास्तीत्यर्थः । नीटी.

तदलं मम राज्येन यत्र धर्मो न विद्यते ।
वनमेव गमिष्यामि तस्माद्धर्मचिकीर्षया ॥

तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः ।
धर्ममाराधयिष्यामि मुनिर्मूलफलाशनः ॥

---

(१) भा. १२।७२।२८ ; भामु. १२।७१।२८.

(२) भा. १२।७२।२९ ; भामु. १२।७१।२९ पुण्यं (धर्मं).

(३) भा. १२।७२।३० ; भामु. १२।७१।३०.

(४) भा. १२।७२।३१ ; भामु. १२।७१।३१ पालयन् (पालय) इह (ततः).

(५) भा. १२।७२।३२ ; भामु. १२।७१।३२-३३ च म (सुम) महत्फ (धर्मफ).

(६) भा. १२।७२।३३ ; भामु. १२।७१।३३ ज्यमृद्धिमत्प्रा (ज्यं धृतिमान्प्रा) पालयन् (पालय).

(७) भा. १२।७६।१० ; भामु. १२।७५।१० स्वकोशात्त (तत्स्वकोशा) जीवता (जीवतः).

(१) भा. १२।७६।११ ; भामु. १२।७५।११ णास्तथा (णा यथा) तेषु (तेन).

(२) भा. १२।७६।१२ ; भामु. १२।७५।१२ हि (तु) तेषां प्रसादे निर्वृत्ते (तस्मात्तेषां प्रसादेन).

(३) भा. १२।७६।१३ ; भामु. १२।७५।१३.

(४) भा. १२।७६।१४ भामु. १२।७५।१४ शठ (काम) शक्याः (शक्यं).

(५) भा. १२।७६।१५-१७ ; भामु. १२।७५। १५-१७.

भीष्म उवाच–

[1]वेदाहं तव या बुद्धिरानृशंस्यगुणैव सा ।
न च शुद्धानृशंस्येन शक्यं महदुपासितुम् ॥

आनृशंस्या परदुःखापहा, सा चात्र राजधर्मेषु दस्युवधप्रधानेषु अगुणैव । नीटी.

[2]अपि तु त्वा मृदुं दान्तमत्यार्यमतिधार्मिकम् ।
क्लीबं धर्मघृणायुक्तं न लोको बहु मन्यते ॥

घृणा कृपा । नीटी.

[3]राजधर्मानवेक्षस्व पितृपैतामहोचितान् ।
नैतद्राज्ञामथो वृत्तं यथा त्वं स्थातुमिच्छसि ॥

[4]न हि वैक्लव्यसंसृष्टमानृशंस्यमिहाऽऽस्थितः ।
प्रजापालनसंभूतं प्राप्ता धर्मफलं ह्यसि ॥

आप्तासि प्राप्स्यसि । नीटी.

[5]न ह्येतामाशिषं पाण्डुर्न च कुन्त्यन्वयाचत ।
न चैतां प्राज्ञतां तात यया चरसि मेधया ॥

[6]शौर्यं बलं च सत्त्वं च पिता तव सदाऽब्रवीत् ।
माहात्म्यं बलमौदार्यं तव कुन्त्यन्वयाचत ॥

(१) भा. १२।७६।१८ ; भामु. १२।७५।१८ शंस्यगु ( शंस्याऽगु ) महदु ( राज्यमु ).

(२) भा. १२।७६।१९ ; भामु. १२।७५।१९ त्वा मृदुं दान्त ( त्वां मृदुप्रज्ञ ).

(३) भा. १२।७६।२० ; भामु. १२।७५।२० पूर्वार्धे ( वृत्तं तु स्वमपेक्षस्व पितृपैतामहोचितम् । ) नैतद्राज्ञामथो ( नैव राज्ञां तथा ).

(४) भा. १२।७६।२१ ; भामु. १२।७५।२१ तं प्राप्ता ( तमाप्ता ).

(५) भा. १२।७६।२२ ; भामु. १२।७५।२२ कुन्त्यन्वया ( कुन्ती त्वया ) न चैतां प्राज्ञतां ( तथैतत्प्रज्ञया ) यया ( यथा ).

(६) भा. १२।७६।२३ ; भामु. १२।७५।२३ सत्त्वं ( सत्यं ) उत्तरार्धे ( माहात्म्यं च महौदार्यं भवतः कुन्त्ययाचत ॥ ).



[1]नित्यं स्वाहा स्वधा नित्यमुभे मानुषदैवते ।
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ॥

[2]दानमध्ययनं यज्ञः प्रजानां परिपालनम् ।
धर्ममेतमधर्मं वा जन्मनैवाभ्यजायिथाः ॥

एतद्दानादिकं धर्मं अधर्मं वा धर्म्यमधर्म्यं वाऽस्तु, तथापि तत्कर्तुं जन्मनैव त्वं जातोऽसि । तथा च 'श्रेयान् स्वधर्मो विगुणः' इति न्यायेन तव तं विना गतिर्नास्तीत्यर्थः । नीटी.

[3]काले धुरि नियुक्तानां वहतां भार आहिते ।
सीदतामपि कौन्तेय न कीर्तिरवसीदति ॥

[4]समन्ततो विनियतो वहत्यस्खलितो हि यः ।
निर्दोषकर्मवचनात्सिद्धिः कर्मण एव सा ॥

शिक्षितोऽश्वोऽपि सम्यग्वहति, किमुत त्वं मानुष इत्यर्थः । नीटी.

[5]नैकान्तविनिपातेन विचचारेह कश्चन ।
धर्मी गृही वा राजा वा ब्रह्मचार्यथ वा पुनः ॥

धर्मी धर्मवान् । एकान्तविनिपातेन अत्यन्ताभिनिवेशेन धर्मे कश्चिदपि न विचचार । सूक्ष्मस्याधर्मस्यापरिहार्यत्वात् इति भावः । नीटी.

[6]अल्पं तु साधुभूयिष्ठं यत्कर्मोदारमेव तत् ।
कृतमेवाकृताच्छ्रेयो न पापीयोऽस्त्यकर्मणः ॥

(१) भा. १२।७६।२४ ; भामु. १२।७५।२४ त्यमुभे ( त्यं चोभे ).

(२) भा. १२।७६।२५ ; भामु. १२।७५।२५ यज्ञः ( यज्ञं ) मेतम ( मेतद् ) जायिथाः ( जायथाः ).

(३) भा. १२।७६।२६ ; भामु. १२।७५।२६ नियु ( च यु ) भार आहिते ( भारमाहितम् ).

(४) भा. १२।७६।२७ ; भामु. १२।७५।२७ हि यः ( ह्यः ) निर्दोष ( निर्दोषः ).

(५) भा. १२।७६।२८ ; भामु. १२।७५।२८ र्यथ वा ( री यथा ).

(६) भा. १२।७६।२९ ; भामु. १२।७५।२९ तु साधु ( हि सार ).

अल्पं दुष्टं हिंसामयत्वात्तुच्छमपि बहुजनसुखहेतुत्वात्सारभूयिष्ठम् । नीटी.

[1]यदा कुलीनो धर्मज्ञः प्राप्नोत्यैश्वर्यमुत्तमम् ।
योगक्षेमस्तदा राजन् कुशलायैव कल्पते ॥

ऐश्वर्यं साचिव्याद्यधिकारम् । नीटी.

[2]दानेनान्यं बलेनान्यमन्यं सूनृतया गिरा ।
सर्वतः परिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥

प्रतिगृह्णीयात् वशीकुर्यात् । नीटी.

[3]यं हि वैद्याः कुले जाता अवृत्तिभयपीडिताः ।
प्राप्य तृप्ताः प्रतिष्ठन्ति धर्मः कोऽभ्यधिकस्ततः ॥

युधिष्ठिर उवाच–

[4]किं न्वतः परमं स्वर्ग्यं का न्वतः प्रीतिरुत्तमा ।
किं न्वतः परमैश्वर्यं ब्रूहि मे यदि मन्यसे ॥

भीष्म उवाच–

[5]यस्मिन्प्रतिष्ठिताः सम्यक्क्षेमं विन्दन्ति तत्क्षणम् ।
स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते ॥

दरिद्रवैद्यतर्पणात् भयार्दितत्राणं महान् धर्म इत्याह–यस्मिन्निति । नीटी.

[6]त्वमेव प्रीतिमांस्तस्मात्कुरूणां कुरुसत्तम ।
भव राजा जय स्वर्गं सतो रक्षासतो जहि ॥

(१) भा. १२।७६।३०; भामु. १२।७५।३० राजन् ( राज्ञः ) कल्पते ( कल्प्यते ).

(२) भा. १२।७६।३१; भामु. १२।७५।३१ परि ( प्रति ).

(३) भा. १२।७६।३२; भामु. १२।७५।३२ अवृत्ति ( ह्यवृत्ति ).

(४) भा. १२।७६।३३; भामु. १२।७५।३३ ( किं तात परमं स्वर्ग्यं का ततः प्रीतिरुत्तमा । किं ततः परमैश्वर्यं ब्रूहि मे यदि पश्यसि ॥ ).

(५) भा. १२।७६।३४; भामु. १२।७५।३४ प्रतिष्ठिताः ( भयार्दितः ) विन्दन्ति तत् ( विन्दत्यपि ).

(६) भा. १२।७६।३५; भामु. १२।७५।३५.

[1]अनु त्वा तात जीवन्तु सुहृदः साधुभिः सह ।
पर्जन्यमिव भूतानि स्वादुद्रुममिवाण्डजाः ॥

[2]धृष्टं शूरं प्रहर्तारमनृशंसं जितेन्द्रियम् ।
वत्सलं संविभक्तारमनु जीवन्तु त्वां जनाः ॥

स्तेनो द्विजः निर्वासनीयो राष्ट्रात्

[3]यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते तद्विदो जनाः ॥

[4]अवृत्त्या यो भवेत्स्तेनो वेदवित्स्नातकस्तथा ।
राजन् स राज्ञा भर्तव्य इति धर्मविदो विदुः ॥

[5]स चेन्नो परिवर्तेत कृतवृत्तिः परंतप ।
ततो निर्वासनीयः स्यात्तस्माद्देशात्सबान्धवः ॥

राज्ञा ज्ञातिभिः सह कथं वर्तितव्यम्

[6]ज्ञातिभ्यश्चैव बिभ्येथा मृत्योरिव यतः सदा ।
उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ॥

उपराजा समीपवर्ती सामन्तः । नीटी.

[7]ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ।
नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति ॥

[8]अज्ञातिता नातिसुखा नावज्ञेयास्त्वतः परम् ।
अज्ञातिमन्तं पुरुषं परे परिभवन्त्युत ॥

(१) भा. १२।७६।३६; भामु. १२।७५।३६ त्वा ( त्वां ) वाण्डजाः ( व द्विजाः ).

(२) भा. १२।७६।३७; भामु. १२।७५।३७ मनु जीवन्तु त्वां जनाः ( मुपजीवन्ति तं नराः ).

(३) भा. १२।७७।१२; भामु. १२।७६।१२ राज्ञः ( राजन् ).

(४) भा. १२।७७।१३; भामु. १२।७६।१३ धर्म ( वेद ).

(५) भा. १२।७७।१४; भामु. १२।७६।१४.

(६) भा. १२।८१।३२; भामु. १२।८०।३२ बिभ्येथा ( बुध्येथा ) यतः ( भयं ).

(७) भा. १२।८१।३३; भामु. १२।८०।३३.

(८) भा. १२।८१।३४; भामु. १२।८०।३४ पूर्वार्धे ( अज्ञातिनोऽपि न सुखा नावज्ञेयास्ततः परम् । ) परि ( चाभि ).

[1]निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणम् ।
नान्यैर्निकारं सहते ज्ञातेर्ज्ञातिः कदाचन ॥

निकृतस्य लङ्घितस्य नान्यः परायणम् । कथं च कथमपि न सहते इत्यन्वयः । नीटी.

[2]आत्मानमेव जानाति निकृतं बान्धवैरपि ।
तेषु सन्ति गुणाश्चैव नैर्गुण्यं तेषु लक्ष्यते ॥

बान्धवैः संबन्धिभिः निकृते कस्मिंश्चित् पुरुषे तज्ज्ञातिः कृत्स्ना आत्मानमेव निकृतं जानाति । तेषु ज्ञातिषु । यथोक्तम्— 'परस्परविरोधे हि वयं पञ्च च ते शतम् । अन्यैः सह विरोधे तु वयं पञ्चोत्तरं शतम् ॥' इति । नीटी.

[3]नाज्ञातिरनुगृह्णाति नाज्ञातिर्दिग्धमस्यति ।
उभयं ज्ञातिलोकेषु दृश्यते साध्वसाधु च ॥

[4]तान् मानयेत्पूजयेच्च नित्यं वाचा च कर्मणा ।
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किंचिदाचरेत् ॥

[5]विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा ।
न हि दोषो गुणो वेति निस्पृक्तस्तेषु दृश्यते ॥

[6]तस्यैवं वर्तमानस्य पुरुषस्याप्रमादिनः ।
अमित्राः संप्रसीदन्ति तथा मित्रीभवन्त्यपि ॥

(१) भा. १२।८१।३५ ; भामु. १२।८०।३५ नान्यैर्नि (नान्यो नि) ज्ञातेर्ज्ञातिः कदा (ज्ञातिर्ज्ञातेः कथं).

(२) भा. १२।८१।३६ ; भामु. १२।८०।३६ तेषु ल (चैव ल).

(३) भा. १२।८१।३७ ; भामु. १२।८०।३७ नाज्ञातिर्दिग्धमस्यति (न चाज्ञातिर्नमस्यति) लोकेषु (वर्गेषु).

(४) भा. १२।८१।३८ ; भामु. १२।८०।३८ तान् (सं) नित्यं वाचा (वाचा नित्यं).

(५) भा. १२।८१।३९ ; भामु. १२।८०।३९ निस्पृक्त (निरूप्य).

(६) भा. १२।८१।४० ; भामु. १२।८०।४० तस्यैवं (अस्यैवं).

[1]य एवं वर्तते नित्यं ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रेष्वैश्वर्ये चिरं यशसि तिष्ठति ॥

परविश्वासोत्पादनं सर्वत्र पुत्रादिष्वप्यविश्वासश्च प्रशस्तो राज्ञः

[2]विश्वासयेत्परांश्चैव विश्वसेन्न तु कस्यचित् ।
पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ॥

[3]एतच्छास्त्रार्थतत्त्वं तु तवाऽऽख्यातं मयाऽनघ ।
अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते ॥

आचार्यस्थपतिशूरधामामकादयो राज्ञा सत्कार्याः अधार्मिका निग्राह्याः वर्णाः स्वकर्मसु योज्याश्च

[4]सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः ।
महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः ॥

प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः ।
कुलीनाः सत्त्वसंपन्ना युक्ताः सर्वेषु कर्मसु ॥

प्रज्ञा ग्रन्थार्थग्रहणसामर्थ्यम् । मेधा ऊहापोहकौशलम् । नीटी.

पूजयेद्धार्मिकान् राजा निगृह्णीयादधार्मिकान् ।
नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान् स्वकर्मसु ॥

चारनियोजनम्

[5]बाह्यमाभ्यन्तरं चैव पौरजानपदं जनम् ।
चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत् ॥

(१) भा. १२।८१।४१ ; भामु. १२।८०।४१ ष्वैश्वर्ये (मध्यस्थे).

(२) भा. १२।८६।३२ ; भामु. १२।८५।३३ न्न तु (च्च न).

(३) भा. १२।८६।३३ ; भामु. १२।८५।३४ तवाऽऽख्यातं मयाऽ (मयाऽऽख्यातं तवा).

(४) भा. १२।८७।१६–१८ ; भामु. १२।८६।१६–१८.

(५) भा. १२।८७।१९ ; भामु. १२।८६।१९ जनम् (तथा).

[1]चारान् मन्त्रं च कोशं च मन्त्रं चैव विशेषतः ।
अनुतिष्ठेत्स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् ॥

अनुतिष्ठेत् आलोचयेत् ।　　नीटी.

[2]उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् ।
पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ॥

[3]ततस्तथा विधातव्यं सर्वमेवाप्रमादतः ।
भक्तान् पूजयता नित्यं द्विषतश्च निगृह्णता ॥

विधातव्यं प्रतिकर्तव्यम् ।　　नीटी.

राजकर्तव्यानि— यज्ञदानानि प्रजारक्षणं कृपार्हानाथवृद्धविधवानां त्यागिनां आश्रमिणां च योगक्षेमवृत्तिप्रकल्पनं आत्मनः राज्यस्य च तापसाय निवेदनं तापसात् प्रज्ञादानं च

[4]यष्टव्यं क्रतुभिर्नित्यं दातव्यं चाप्यपीडया ।
प्रजानां रक्षणं कार्यं न कार्यं कर्म गर्हितम् ॥

[5]कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत् ॥

[6]आश्रमेषु यथाकालं चेलभाजनभोजनम् ।
सदैवोपहरेद्राजा सत्कृत्यानवमन्य च ॥

[7]आत्मानं सर्वकार्याणि तापसे राज्यमेव च ।
निवेदयेत्प्रयत्नेन तिष्ठेत्प्रह्वश्च सर्वदा ॥

तापसे तपस्विजने ।　　नीटी.

[8]सर्वार्थत्यागिनं राजा कुले जातं बहुश्रुतम् ।
पूजयेत्तादृशं दृष्ट्वा शयनासनभोजनैः ॥

[9]तस्मिन् कुर्वीत विश्वासं राजा कस्यांचिदापदि ।
तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः ॥

तस्मिन्निधीनादधीत प्रज्ञां पर्याददीत च ।
न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् ॥

निधीन् धनभाण्डानि अभीक्ष्णं न सेवेत, दस्यूनां तत्सूचने तपस्विनाशापत्तेः । न प्रतिपूजयेच्च ।　　नीटी.

स्वराष्ट्रपरराष्ट्रेषु तापसनियोजनम्

[10]अन्यः कार्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः ।
अटवीष्वपरः कार्यः सामन्तनगरेषु च ॥

[11]तेषु सत्कारसंस्कारान् संविभागांश्च कारयेत् ।
परराष्ट्राटवीस्थेषु यथा स्वविषये तथा ॥

अन्यस्तापसः कार्यः सखित्वेन संपादनीयः । तेषु तत्तत्स्थानस्थेषु तापसेषु ।　　नीटी.

[12]ते कस्यांचिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्यथाकामं तापसाः संशितव्रताः ॥

स्वराज्यस्वामिकानि वनस्पतिफलपुष्पाणि ब्राह्मणानाम्, ब्राह्मणाय वृत्तिप्रकल्पनं राजकर्तव्यम्

भीष्म उवाच–

[13]वनस्पतीन् भक्ष्यफलान्न च्छिन्द्युर्विषये तव ।
ब्राह्मणानां मूलफलं धर्म्यमाहुर्मनीषिणः ॥

---

(१) भा. १२।८७।२० ; भामु. १२।८६।२० चारान् (चरान्) मन्त्रं चैव (दण्डं चैव).

(२) भा. १२।८७।२१ ; भामु. १२।८६।२१.

(३) भा. १२।८७।२२ ; भामु. १२।८६।२२ स्तथा (स्तेषां).

(४) भा. १२।८७।२३ ; भामु. १२।८६।२३ कर्म गर्हितम् (धर्मबाधकम्) ; पमा. ४०९.

(५) भा. १२।८७।२४ ; भामु. १२।८६।२४.

(६) भा. १२।८७।२५ ; भामु. १२।८६।२५ चेल (चैल) नवमन्य (भ्यर्च्य मान्य) ; पमा. ४०९ चेलभाजनभोजनम् (चैलं भोजनभाजनम्) उत्तरार्धे (स्वयं तूपहरेद्राजा सत्कृत्य विधिपूर्वकम् ॥).

(७) भा. १२।८७।२६ ; भामु. १२।८६।२६ राज्य (राष्ट्र) ; पमा. ४०९ सर्वदा (नित्यशः).

(१) भा. १२।८७।२७ ; भामु. १२।८६।२७ नासन (नाशन).

(२) भा. १२।८७।२८–२९ ; भामु. १२।८६।२८–२९.

(३) भा. १२।८७।३० ; भामु. १२।८६।३० ष्वपरः (षु परः) रेषु च (रेष्वपि).

(४) भा. १२।८७।३१ ; भामु. १२।८६।३१ संस्कारान् (मानाभ्यां).

(५) भा. १२।८७।३२. भामु. १२।८६।३२.

(६) भा. १२।९०।१ ; भामु. १२।८९।१ धर्म्यं (धर्मं).

मूलफलं ब्राह्मणानां स्वं इति धर्ममाहुः। अतोऽप्येतन्न छिन्द्युः। नीटी.

[1]ब्राह्मणेभ्योऽतिरिक्तं च भुञ्जीरन्नितरे जनाः।
न ब्राह्मणोपरोधेन हरेदन्यः कथंचन ॥

[2]विप्रश्चेत्त्यागमातिष्ठेदाख्यायावृत्तिकर्शितः।
परिकल्प्याऽस्य वृत्तिः स्यात्सदारस्य नराधिप ॥

ब्राह्मणपरावेन तैरपालनेन। त्यागं राष्ट्रस्य। नीटी.

[3]स चेन्नोपनिवर्तेत वाच्यो ब्राह्मणसंसदि।
कस्मिन्निदानीं मर्यादामयं लोकः करिष्यति ॥

अवृत्त्या राष्ट्रं त्यजतो राज्ञा वृत्तिः कल्प्येति मर्यादा, न तु राजरथाद्यलाभात् त्यजतस्तदपि देयमित्यस्तीति कस्मिन्निति काका सूचयति। नीटी.

[4]असंशयं निवर्तेत न चेद्वक्ष्यत्यतः परम्।
पूर्वं परोक्षं कर्तव्यमेतत्कौन्तेय शासनम् ॥

अतः परं त्वं वृत्तिं कल्पयसि, न तु पूर्वमित्युपालम्भे पूर्वं परोक्षं विस्मर्तव्यं कर्तव्यं क्षन्तव्यमिति तं प्रार्थयेदित्यर्थः। नीटी.

[5]आहुरेतज्जना ब्रह्मन्न चैतच्छ्रद्दधाम्यहम्।
निमन्त्र्यश्च भवेद्भोगैरवृत्त्या चेत्तदाचरेत् ॥

वृत्तिमात्रं कल्पयेदिति परमतम्। भोगार्थी चेद्राष्ट्रं त्यजति तदा भोगैरपि निमन्त्र्यः, अवृत्त्या चेत्तदा वृत्त्याऽपि निमन्त्र्यः इत्याह– आहुरिति। नीटी.

(१) भा. १२।९०।२; भामु. १२।८९।२ णोपरो (णापरा).

(२) भा. १२।९०।३; भामु. १२।८९।३ दाख्याया (दात्मार्थे).

(३) भा. १२।९०।४; भामु. १२।८९।४.

(४) भा. १२।९०।५; भामु. १२।८९।५ शासनम् (शाश्वतम्).

(५) भा. १२।९०।६; भामु. १२।८९।६ चेत्तदा (च तदा).

त्रयीवैश्यकर्मविरोधिनां दस्यूनां वधाय ब्रह्मणा क्षत्रं सृष्टम्, अतः युद्धं राज्ञः कर्तव्यं प्रजारक्षणाय

[1]कृषिगोरक्ष्यवाणिज्यं लोकानामिह जीवनम्।
ऊर्ध्वं चैव त्रयी विद्या सा भूतान् भावयत्युत ॥

ऊर्ध्वं स्वर्गम्। नीटी.

[2]तस्यां प्रयतमानायां ये स्युस्तत्परिपन्थिनः।
दस्यवस्तद्वधायेह ब्रह्मा क्षत्रमथासृजत् ॥

[3]शत्रूञ्जहि प्रजा रक्ष यजस्व क्रतुभिर्नृप।
युध्यस्व समरे वीरो भूत्वा कौरवनन्दन ॥

[4]संरक्ष्यान् पालयेद्राजा यः स राजाऽऽर्यकृत्तमः।
ये केचित्तान्न रक्षन्ति तैरर्थो नास्ति कश्चन ॥

[5]सदैव राज्ञा बोद्धव्यं सर्वलोकाद्युधिष्ठिर।
तस्माद्धेतोर्हि भुञ्जीत मनुष्यानेव मानवः ॥

लोकात् लोकहितार्थं योद्धव्यम्। 'बोद्धव्यम्' इति पाठे स्वपरचरित्रमिति शेषः। उत्तरार्धे तु भुञ्जीतेत्यत्र 'युञ्जीत' इति पाठः। मनुष्यांश्चारानिति चार्थः। नीटी.

[6]अन्तरेभ्यः परान् रक्षन् परेभ्यः पुनरन्तरान्।
परान्परेभ्यः स्वान्स्वेभ्यः सर्वान्पालय नित्यदा ॥

स्वीयाः आन्तरा बाह्याश्च परस्माद्रक्ष्याः। स्वीया बाह्यास्तु शत्रुभ्यो रक्ष्या इत्यर्थः। नीटी.

(१) भा. १२।९०।७; भामु. १२।८९।७.

(२) भा. १२।९०।८; भामु. १२।८९।८ प्रयत (प्रपत).

(३) भा. १२।९०।९; भामु. १२।८९।९ जहि (जय).

(४) भा. १२।९०।१०; भामु. १२।८९।१० यः स राजाऽऽर्यकृत्तमः (स राजा राजसत्तमः).

(५) भा. १२।९०।११; भामु. १२।८९।११ बोद्धव्यं (योद्धव्यं).

(६) भा. १२।९०।१२; भामु. १२।८९।१२ अन्तरे (आन्तरे) रन्तरान् (रान्तरान्).

आत्मरक्षणं प्रजारक्षणाय

[1]आत्मानं सर्वतो रक्षन् राजा रक्षेत मेदिनीम् ।
आत्ममूलमिदं सर्वमाहुर्हि विदुषो जनाः ॥

विदुषः विद्वांसः । नीटी.

[2]किं छिद्रं कोऽनुषङ्गो मे किं वाऽस्त्यविनिपातितम् ।
कुतो मामास्रवेद्दोष इति नित्यं विचिन्तयेत् ॥

सङ्गः व्यसनस्येति शेषः । नीटी.

गुप्तचारप्रचारः शत्रुमित्रमध्यानां सर्वेषां सत्कारश्च कर्तव्यः

[3]अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुनः ॥
[4]गुप्तैश्चारैरनुमतैः पृथिवीमनुचारयेत् ।
सुनीतं यदि मे वृत्तं प्रशंसन्ति न वा पुनः ।
कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे यशः ॥

[5]धर्मज्ञानां धृतिमतां संग्रामेष्वपलायिनाम् ।
राष्ट्रं च येऽनुजीवन्ति ये च राज्ञोऽनुजीविनः ॥
[6]अमात्यानां च सर्वेषां मध्यस्थानां च सर्वशः ।
ये च त्वाऽभिप्रशंसेयुर्निन्देयुरथ वा पुनः ।
सर्वान् सुपरिणीतांस्तान् कारयेत युधिष्ठिर ॥

सुपरिणीतान् सत्कृतान् । नीटी.

[7]एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम् ।
मित्रामित्रमथो मध्यं सर्वभूतेषु भारत ॥

इतरमानवसदृशोऽपि राष्ट्ररक्षणात् राजा विशिष्टः इतरेभ्यः

[1]तुल्यबाहुबलानां च गुणैरपि निषेविनाम् ।
कथं स्यादधिकः कश्चित्स तु भुञ्जीत मानवान् ॥

[2]ये चरा ह्यचरानद्युरदंष्ट्रान् दंष्ट्रिणस्तथा ।
आशीविषा इव क्रुद्धा भुजगा भुजगानिव ॥

[3]एतेभ्यश्चाप्रमत्तः स्यात्सदा यत्तो युधिष्ठिर ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥

तुल्येषु कथमितर इतरं भुञ्जीतेति प्रश्नः, बलवानेव दुर्बलं भुञ्जीत, तुल्यात्तु आत्मानं रक्षेत् छलेन च तं भुञ्जीत इत्युत्तरमाह– तुल्येति त्रिभिः । भारुण्डः गृध्रः । नीटी.

[4]कच्चित्ते वणिजो राष्ट्रे नोद्विजन्ते करार्दिताः ।
क्रीणन्तो बहु वाऽल्पेन कान्तारकृतनिश्रमाः ॥

[5]कच्चित्कृषिकरा राष्ट्रं न जहत्यतिपीडिताः ।
ये वहन्ति धुरं राज्ञां संभरन्तीतरानपि ॥

[6]इतो दत्तेन जीवन्ति देवाः पितृगणास्तथा ।
मनुष्योरगरक्षांसि वयांसि पशवस्तथा ॥

---

(१) भा. १२।९०।१३ ; भामु. १२।८९।१३ राजा रक्षेत ( राजन् रक्षस्व ) माहुर्हि ( माहुर्वै ).

(२) भा. १२।९०।१४; भामु. १२।८९।१४ कोऽनुषङ्गो ( को नु सङ्गो ) मास्रवे ( माश्रये ).

(३) भामु. १२।८९।१५.

(४) भा. १२।९०।१५ ; भामु. १२।८९।१५–१६ चार ( सार ) सुनीतं य ( जानीयुर्य ).

(५) भा. १२।९०।१६ ; भामु. १२।८९।१७ राष्ट्रं च ( राष्ट्रे तु ) ये च ( ये तु ).

(६) भा. १२।९०।१७ ; भामु. १२।८९।१८–१९ कारयेत ( कारयेथा ).

(७) भा. १२।९०।१८ ; भामु. १२।८९।१९.

(१) भा. १२।९०।१९ ; भामु. १२।८९।२० 'युधिष्ठिर उवाच' इत्यधिकम्, गुणैरपि निषेविनाम् ( तुल्यानां च गुणैरपि ) तु ( च ).

(२) भा. १२।९०।२० ; भामु. १२।८९।२१ 'भीष्म उवाच' इत्यधिकम्, ये चरा ( यच्चरा ) भुजगा भुजगानिव ( भुजङ्गान् भुजगा इव ).

(३) भा. १२।९०।२१ ; भामु. १२।८९।२२ यत्तो यु ( शत्रोर्यु ) माद्यतः ( मादतः ).

(४) भा. १२।९०।२२ ; भामु. १२।८९।२३ जन्ते ( जन्ति ) बहु वा ( बहुना ) निश्रमाः ( विश्रमाः ).

(५) भा. १२।९०।२३ ; भामु. १२।८९।२४ संभर ( ते भर ).

(६) भा. १२।९०।२४; भामु. १२।८९।२५ मनुष्यो ( मानुषो ).

[1]एषा ते राष्ट्रवृत्तिश्च राष्ट्रगुप्तिश्च भारत ।
एतमेवार्थमाश्रित्य भूयो वक्ष्यामि पाण्डव ॥

मत्तादिभ्यः परावृत्तिः इष्टा

[2]मत्तात्प्रमत्तात्पोगण्डादुन्मत्ताच्च विशेषतः ।
तदभ्यासादुपावर्तादहितानां च सेवनात् ॥

पौगण्डात् बालकात्, अज्ञादित्यर्थः । पाषण्डादिति मुख्यः पाठः । मत्तादिभ्य उपावर्तं परावृत्तिं भज, तदभ्यासात् तैः सह परिचयात् संहितानां मिलितानां च तेषां सेवनाच्च सुतरामुपावर्तेत्यर्थः । नीटी.

[3]निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः ।
पर्वताद्विषमाद् दुर्गाद्धस्तिनोऽश्वात्सरीसृपात् ॥

[4]एतेभ्यो नित्ययत्तः स्यान्नक्तंचर्यां च वर्जयेत् ।
अत्यायं चातिमानं च दम्भं क्रोधं च वर्जयेत् ॥

अत्यागं बद्धमुष्टिताम् । नीटी.

राज्ञा अभोग्याः स्त्रियः

[5]अविज्ञातासु च स्त्रीषु क्लीबासु स्वैरिणीषु च ।
परभार्यासु कन्यासु नाऽऽचरेन्मैथुनं नृपः ॥
कुलेषु पापरक्षांसि जायन्ते वर्णसंकरात् ।
अपुमांसोऽङ्गहीनाश्च स्थूलजिह्वा विचेतसः ॥

अपुमांसः क्लीबाः । स्थूलजिह्वाः मूकाः । नीटी.

एते चान्ये च जायन्ते यदा राजा प्रमाद्यति ।
तस्माद्राज्ञा विशेषेण वर्तितव्यं प्रजाहिते ॥

(१) भा. १२।९०।२५; भामु. १२।८९।२६ राष्ट्रगुप्ति ( राज्ञां गुप्ति ).

(२) भा. १२।९१।२७; भामु. १२।९०।२९ त्पोगण्डा ( त्पौगण्डा ) वर्तादहि ( वर्तं संहि ).

(३) भा. १२।९१।२८; भामु. १२।९०।३०, १२।९३।३१.

(४) भा. १२।९१।२९ ; भामु. १२।९०।३१ यत्तः ( युक्तः ) अत्यायं चाति ( अत्यागं चाभि ) : १२।९३।३१ ( एतेभ्यो नित्ययुक्तः सन् रक्षेदात्मानमेव तु । ) पू.

(५) भा. १२।९१।३०-३२ ; भामु. १२।९०। ३२-३४.

प्रमादो वर्ज्यः आत्मा च रक्षणीयः

[1]क्षत्रियस्य प्रमत्तस्य दोषः संजायते महान् ।
अधर्माः संप्रवर्तन्ते प्रजासंकरकारकाः ॥
[2]अशीते विद्यते शीतं शीते शीतं न विद्यते ।
अवृष्टिरतिवृष्टिश्च व्याधिश्चाऽऽविशति प्रजाः ॥
[3]नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथाऽपरे ।
उत्पाताश्चात्र दृश्यन्ते बहवो राजनाशनाः ॥

नक्षत्राणि धूमकेत्वादयः । नीटी.

[4]अरक्षितात्मा यो राजा प्रजाश्चापि न रक्षति ।
प्रजाश्च तस्य क्षीयन्ते ताश्च सोऽनु विनश्यति ॥
[5]द्वावाददाते ह्येकस्य द्वयोश्च बहवोऽपरे ।
कुमार्यः संप्रलुप्यन्ते तदाहुर्नृपदूषणम् ॥

एकस्य धनं द्वौ आददाते आच्छिद्य गृह्णीतः । नीटी.

[6]ममैतदिति नैकस्य मनुष्येष्ववतिष्ठते ।
त्यक्त्वा धर्मं यदा राजा प्रमादमनुतिष्ठति ॥

प्रियाप्रिययोर्वर्तनविवेकः

[7]द्विषन्तं कृतकर्माणं गृहीत्वा नृपती रणे ।
यो न मानयते द्वेषात्क्षत्रधर्मादपैति सः ॥

(१) भा. १२।९१।३३ ; भामु. १२।९०।३५ वर्तन्ते ( वर्धन्ते ).

(२) भा. १२।९१।३४ ; भामु. १२।९०।३६ श्चाऽऽविशति ( श्चाप्याविशेत् ).

(३) भा. १२।९१।३५ ; भामु. १२।९०।३७ थाऽपरे ( थागते ).

(४) भा. १२।९१।३६ ; भामु. १२।९०।३८ ताश्च ( ततः ).

(५) भा. १२।९१।३७ ; भामु. १२।९०।३९ द्वयोश्च ( द्वयोः तु ).

(६) भा. १२।९१।३८ ; भामु. १२।९०।४० ममैतदिति ( ममेदमिति ) तिष्ठते ( तिष्ठति ).

(७) भा. १२।९४।६ ; भामु. १२।९३।६ कर्माणं ( कल्याणं ) नृपती ( नृपतिं ).

कृतकल्याणं प्रागुपकारं कृतवन्तम् । नीटी.

[1]शक्तः स्यात्सुमुखो राजा कुर्यात्कारुण्यमापदि ।
प्रियो भवति भूतानां न च विभ्रश्यते श्रियः ॥

शक्तौ सुखमनुभवेत् । आपदि तु करणं आपन्निवारणं कर्म कुर्यात् । 'करणं हेतुकर्मणोः' इति मेदिनी । नीटी.

[2]अप्रियं यस्य कुर्वीत भूयस्तस्य प्रियं चरेत् ।
नचिरेण प्रियः स स्याद्योऽप्रियः प्रियमाचरेत् ॥

उपकृतः शत्रुरग्रेऽप्युपकरिष्यत्येवेत्यर्थः । नीटी.

[3]मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ।
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ॥

[4]नापत्रपेत प्रश्नेषु नाभिभव्यां गिरं सृजेत् ।
न त्वरेत न चासूयेत्तथा संगृह्यते परः ॥

नापत्रपेत न्यायनिष्ठुरं उत्तरं दद्यात् । अविभाव्यां अगम्भीराम् । 'अभि' इति पाठे दूषणार्हाम् । नीटी.

[5]प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् ।
न मुह्येदर्थकृच्छ्रेषु प्रजाहितमनुस्मरन् ॥

कर्मणि नियोज्या अनियोज्याश्च

[6]यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः ।
तस्य कर्माणि सिध्यन्ति न च संत्यज्यते श्रिया ॥

प्रियं भृत्यादीनाम् । नीटी.

[1]निवृत्तं प्रतिकूलेभ्यो वर्तमानमनुप्रिये ।
भक्तं भजेत नृपतिस्तद्वै वृत्तं सतामिह ॥

[2]अप्रकीर्णेन्द्रियं प्राज्ञमत्यन्तानुगतं शुचिम् ।
शक्तं चैवानुरक्तं च युञ्ज्यान्महति कर्मणि ॥

[3]एवमेव गुणैर्युक्तो यो न रज्यति भूमिपम् ।
भर्तुरर्थेष्वसूयन्तं न तं युञ्जीत कर्मणि ॥

एतैः निवृत्तमिति श्लोकद्वयोक्तैः योऽनुरज्यति अनुरञ्जयति तं नियुञ्ज्यात् भूमिपः । नीटी.

[4]मूढमैन्द्रियकं लुब्धमनार्यचरितं शठम् ।
अनतीतोपधं हिंस्रं दुर्बुद्धिमबहुश्रुतम् ॥

[5]त्यक्तोपात्तं मद्यरतं द्यूतस्त्रीमृगयापरम् ।
कार्ये महति यो युञ्ज्याद्धीयते स नृपः श्रियः ॥

त्यक्तोदात्तं उदारकर्मत्यागिनम् । नीटी.

आत्मरक्षणं प्रजारक्षणं च कर्तव्यम्

[6]रक्षितात्मा तु यो राजा रक्ष्यान् यश्चानुरक्षति ।
प्रजाश्च तस्य वर्धन्ते ध्रुवं च महदश्नुते ॥

महत् पदम् । नीटी.

---

(१) भा. १२।९४।७ ; भामु. १२।९३।७ त्सुमुखो (त्सुसुखो) त्कारुण्य (त्करण).

(२) भा. १२।९४।८ ; भामु. १२।९३।८.

(३) भा. १२।९४।९ ; भामु. १२।९३।९ च कामान्न (कामान्न च).

(४) भा. १२।९४।१० ; भामु. १२।९३।१० नाभिभव्यां (नाविभाव्यां).

(५) भा. १२।९४।११ ; भामु. १२।९३।११ मुह्ये (तप्ये).

(६) भा. १२।९४।१२ ; भामु. १२।९३।१२.

(१) भा. १२।९४।१३ ; भामु. १२।९३।१३ कूलेभ्यो (कूलेषु) तद्वै वृत्तं सतामिह (सदैव सुसमाहितः).

(२) भा. १२।९४।१४ ; भामु. १२।९३।१४ न्द्रियं प्राज्ञ (न्द्रियग्राम).

(३) भा. १२।९४।१५ ; भामु. १२।९३।१५ मेव गु (मेतैर्गु) यो न (योऽनु) उत्तरार्धे (भर्तुरर्थेष्वप्रमत्तं नियुञ्ज्यादर्थकर्मणि ॥).

(४) भा. १२।९४।१६ ; भामु. १२।९३।१६.

(५) भा. १२।९४।१७ ; भामु. १२।९३।१७ पात्तं (दात्तं) यो युञ्ज्याद्धी (युञ्जानो ही) स नृपः श्रियः (नृपतिः श्रिया).

(६) भा. १२।९४।१८ भामु. १२।९३।१८ तु यो (च यो).

चारप्रचारः

[1]ये केचिद् भूमिपतयस्तान् सर्वानन्ववेक्षयेत् ।
सुहृद्भिरनभिख्यातैस्तेन राजा न रिष्यते ॥

सुहृद्भिः चारैः । अनभिख्यातैः स्वेषां परेषां चाविदितैः । नीटी.

युद्धं राज्ञः कर्तव्यम्

[2]अपकृत्य बलस्थस्य दूरस्थोऽस्मीति नाऽऽश्वसेत् ।
श्येनानुचरितैर्ह्येते निपतन्ति प्रमाद्यतः ॥

[3]दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः ।
अबलानभियुञ्जीत न तु ये बलवत्तराः ॥

[4]विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयन् ।
आहवे निधनं कुर्याद्राजा धर्मपरायणः ॥

[5]मरणान्तमिदं सर्वं नेह किंचिदनामयम् ।
तस्माद्धर्मे स्थितो राजा प्रजा धर्मेण पालयेत् ॥

मरणान्तमपि इदं पालनं अनामयं कुशलमेव, स्वर्गहेतुत्वात् इत्यर्थः । नीटी.

दुर्गमन्त्रादीनि पञ्च आप्तैर्गोपनीयानि

[6]रक्षाधिकरणं युद्धं तथा धर्मानुशासनम् ।
मन्त्रचिन्त्यं सुखं काले पञ्चभिर्वर्धते मही ॥

रक्षाधिकरणं दुर्गादि । सुखं सुखप्रदानम् । नीटी.

---

(१) भा. १२।९४।१९; भामु. १२।९३।१९ यस्तान् सर्वा (यः सर्वास्ता) न रिष्यते (ऽतिरिच्यते).

(२) भा. १२।९४।२०; भामु. १२।९३।२० नुचरितैर्ह्येते (भिपतनैरेते).

(३) भा. १२।९४।२१; भामु. १२।९३।२१.

(४) भा. १२।९४।२२; भामु. १२।९३।२२ पालयन् (पालयेत्); पमा. ४०९.

(५) भा. १२।९४।२३; भामु. १२।९३।२३.

(६) भा. १२।९४।२४; भामु. १२।९३।२४ चिन्त्यं (चिन्ता).



[1]एतानि यस्य गुप्तानि स राजा राजसत्तम ।
सततं वर्तमानोऽत्र राजा भुङ्क्ते महीमिमाम् ॥

गुप्तानि सुरक्षितानि । नीटी.

[2]नैतान्येकेन शक्यानि सातत्येनान्ववेक्षितुम् ।
एतेष्वाप्तान्प्रतिष्ठाप्य राजा भुङ्क्ते महीं चिरम् ॥

एकेन राज्ञा । तेषु दुर्गाद्यधिष्ठातृषु पञ्चसु । नीटी.

[3]दातारं संविभक्तारं मार्दवोपगतं शुचिम् ।
असंत्यक्तमनुष्यं च तं जनाः कुर्वते प्रियम् ॥

स्वमतमुपेक्ष्य श्रेयस्करं ज्ञानं स्वीकार्यम्

[4]यस्तु निःश्रेयसं ज्ञात्वा ज्ञानं तत्प्रतिपद्यते ।
आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते ॥

ज्ञानं इदं मम निःश्रेयसमिति यज्ज्ञानं तत् । नीटी.

[5]योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि विमना नचिरादिव ॥

अर्थकामस्य सख्युः । प्रातिकूल्यात् द्वेषात् । शृणोति तच्छत्रुभ्यः सकाशात् । नीटी.

[6]अग्राम्यचरितां बुद्धिमत्यन्तं यो न बुध्यते ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥

---

(१) भा. १२।९४।२५; भामु. १२।९३।२५ भुङ्क्ते (धत्ते).

(२) भा. १२।९४।२६; भामु. १२।९३।२६ न्ववेक्षि (नुवीक्षि) एतेष्वाप्तान् (तेषु सर्वे) महीं चिरम् (चिरं महीम्).

(३) भा. १२।९४।२७; भामु. १२।९३।२७ प्रियम् (नृपम्).

(४) भा. १२।९४।२८; भामु. १२।९३।२८ ज्ञात्वा (श्रुत्वा).

(५) भा. १२।९४।२९; भामु. १२।९३।२९ विमना नचिरादिव (सर्वदा विमना इव).

(६) भा. १२।९४।३०; भामु. १२।९३।३० पूर्वार्धे (अग्राम्यचरितां वृत्तिं यो न सेवेत नित्यदा।), एतच्छ्लोकानन्तरम् 'निगृहीतात्' इत्यादिसार्धश्लोकः अधिकः ।

अग्राम्यैः बुद्धिमद्भिः । वृत्तिं लाभोपायम् । नीटी.

प्रियाप्रियादिविवेकः

[1]मुख्यानमात्यान्यो हित्वा निहीनान्कुरुते प्रियान् ।
स वै व्यसनमासाद्य गाधमार्तो न विन्दति ॥

गाधं कार्यस्यान्तम् । नीटी.

[2]यः कल्याणगुणाञ्ज्ञातीन्द्वेषान्नैवाभिमन्यते ।
अदृढात्मा दृढक्रोधो नास्यार्थो रमतेऽन्तिके ॥

[3]अथ यो गुणसंपन्नान् हृदयस्याप्रियानपि ।
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥

[4]नाकाले प्रणयेदर्थान्नाप्रिये जातु संज्वरेत् ।
प्रिये नातिभृशं हृष्येद्युज्येताऽऽरोग्यकर्मणि ॥

[5]के माऽनुरक्ता राजानः के भयात्समुपाश्रिताः ।
मध्यस्थदोषाः के चैषामिति नित्यं विचिन्तयेत् ॥

[6]न जातु बलवान्भूत्वा दुर्बले विश्वसेत्कचित् ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमादतः ॥

[7]अपि सर्वैर्गुणैर्युक्तं भर्तारं प्रियवादिनम् ।
अभिद्रुह्यति पापात्मा तस्माद्धि विभिषेज्जनात् ॥

---

स च पूर्वं भा. १२।९१।२८–२९ इत्यत्र गतः । अतः पाठभेदादि तत्रैव द्रष्टव्यम् ।

(१) भा. १२।९४।३१ ; भामु. १२।९३।३२.

(२) भा. १२।९४।३२ ; भामु. १२।९३।३३ द्वेषान्नैवाभिमन्यते (प्रद्वेषान्नो बुभूषति) नास्यार्थो रमते (स मृत्योर्वसते).

(३) भा. १२।९४।३३ ; भामु. १२।९३।३४ स्याप्रिया (स्य प्रिया).

(४) भा. १२।९४।३४ ; भामु. १२।९३।३५ हृष्येद्युज्येता (तुष्येद्युञ्जीता).

(५) भा. १२।९४।३५ ; भामु. १२।९३।३६ के मा (के वा).

(६) भा. १२।९४।३६ ; भामु. १२।९३।३७.

(७) भा. १२।९४।३७ ; भामु. १२।९३।३८ सर्वैर्गु (सर्वगु) तस्माद्धि विभिषे (न तस्माद्विश्वसे).

[1]एतां राजोपनिषदं ययातिः स्माऽऽह नाहुषः ।
मनुष्यविजये युक्तो हन्ति शत्रूननुत्तमान् ॥

राजोपनिषदं राज्ञां रहस्यविद्याम् । नीटी.

[2]भोगेष्वदयमानस्य भूतेषु च दयावतः ।
वर्धते त्वरमाणस्य विषयो रक्षितात्मनः ॥

[3]तक्षत्यात्मानमेवैष वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु स्वेषु मिथ्या प्रवर्तते ॥

[4]न वै द्विषन्तः क्षीयन्ते राज्ञो नित्यमपि घ्नतः ।
क्रोधं नियन्तुं यो वेद तस्य द्वेष्टा न विद्यते ॥

[5]यदार्यजनविद्विष्टं कर्म तन्नाऽऽचरेद्बुधः ।
यत्कल्याणमभिध्यायेत्तत्राऽऽत्मानं नियोजयेत् ॥

[6]नैनमन्येऽवजानन्ति नाऽऽत्मना परितप्यते ।
कृत्यशेषेण यो राजा सुखान्यनुबुभूषति ॥

कृत्यशेषेण परकृत्यं कार्त्स्न्येन न समापयेत् । समापिते तु परोऽवमन्यते स्वस्य च तापो भवतीत्यर्थः । नीटी.

[7]इदं वृत्तं मनुष्येषु वर्तते यो महीपतिः ।
उभौ लोकौ विनिर्जित्य विजये संप्रतिष्ठते ॥

---

(१) भा. १२।९४।३८ ; भामु. १२।९३।३९ एतां (एवं) विजये (विषये).

(२) भा. १२।९५।७ ; भामु. १२।९४।७ ष्वदय (ष्वदय).

(३) भा. १२।९५।८ ; भामु. १२।९४।८ तक्षत्या (तक्षेदा) मेवैष (मेवं स).

(४) भा. १२।९५।९ ; भामु. १२।९४।९ न वै (नैव) क्षीयन्ते (हीयन्ते) मपि घ्नतः (मनिघ्नतः) नियन्तुं (निहन्तुं).

(५) भा. १२।९५।१० ; भामु. १२।९४।१०.

(६) भा. १२।९५।११ ; भामु. १२।९४।११ नैन (नैव).

(७) भा. १२।९५।१२–१३ ; भामु. १२।९४।१२–१३.

भीष्म उवाच–

इत्युक्तो वामदेवेन सर्वं तत्कृतवान्नृपः।
तथा कुर्वंस्त्वमप्येतौ लोकौ जेता न संशयः॥

नृपः वसुमनाः। नीटी.

[1]यः कश्चिद्धर्मसमयात्प्रच्युतोऽधर्ममास्थितः॥

[2]दण्डेनैव स हन्तव्यस्तं पन्थानं समाश्रितः।
च्युतः सदैव धर्मेभ्योऽमानवं धर्ममास्थितः॥

अमानवं आसुरम्। नीटी.

[3]शठः स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम्।
सर्वोपायैर्निहन्तव्यः पापो निकृतिजीवनः॥

शठः वञ्चकः। तं अमानवम्। नीटी.

[4]यस्मिन् यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः।
मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युदेयः॥

[5]ये न लोभान्नयन्त्यर्थान् राजानो रजसाऽऽवृताः।
विषयान् परिरक्षन्तो दुर्गाण्यतितरन्ति ते॥

रजसाऽन्विताः सन्तोऽर्थान् न नयन्ति न हरन्ति। नीटी.

त्याज्यः आलस्यदोषः

युधिष्ठिर उवाच–

[6]किं पार्थिवेन कर्तव्यं किं च कृत्वा सुखी भवेत्।
तन्ममाऽऽचक्ष्व तत्त्वेन सर्वं धर्मभृतां वर॥

(१) भा. १२।११०।१९; भामु. १२।१०९।२१ मास्थितः (साधनः).
(२) भामु. १२।१०९।२२.
(३) भा. १२।११०।२०; भामु. १२।१०९।२३.
(४) भा. १२।११०।२६; भामु. १२।१०९।३० वर्तितव्यः (बाधितव्यः) प्रत्युदेयः (प्रत्युपेयः).
(५) भा. १२।१११।७; भामु. १२।११०।८ साऽऽवृताः (साऽन्विताः) रक्षन्तो (रक्षन्ति).
(६) भा. १२।११३।१; भामु. १२।११२।१ तन्ममाऽऽ (एतदा) सर्वं ध (सर्वध).

किं पार्थिवेनेत्यध्यायः नीचो महत्पदं प्राप्यापि मौर्ख्यादालस्याच्च नश्यतीति दर्शयति। नीटी.

भीष्म उवाच–

[1]हन्त तेऽहं प्रवक्ष्यामि शृणु कार्यैकनिश्चयम्।
यथा राज्ञेह कर्तव्यं यच्च कृत्वा सुखी भवेत्॥

[2]न त्वेवं वर्तितव्यं स्म यथेदमनुशुश्रुमः।
उष्ट्रस्य सुमहद्वृत्तं तन्निबोध युधिष्ठिर॥

[3]जातिस्मरो महानुष्ट्रः प्राजापत्ययुगोद्भवः।
तपः सुमहदातिष्ठदरण्ये संशितव्रतः॥

[4]तपसस्तस्य चान्ते वै प्रीतिमानभवत्प्रभुः।
वरेण च्छन्दयामास ततश्चैनं पितामहः॥

उष्ट्र उवाच–

[5]भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम्।
योजनानां शतं साग्रं या गच्छेच्चरितुं विभो॥

भीष्म उवाच–

[6]एवमस्त्विति चोक्तः स वरदेन महात्मना।
प्रतिलभ्य वरं श्रेष्ठं ययावुष्ट्रः स्वकं वनम्॥

[7]स चकार तदाऽऽलस्यं वरदानात्स दुर्मतिः।
न चैच्छच्चरितुं गन्तुं दुरात्मा कालमोहितः॥

(१) भा. १२।११३।२; भामु. १२।११२।२.
(२) भा. १२।११३।३; भामु. १२।११२।३ त्वेवं (चैवं) शुश्रुमः (शुश्रुम) सुमह (तु मह).
(३) भा. १२।११३।४; भामु. १२।११२।४ पत्ययुगोद्भवः (पत्ये युगेऽभवत्).
(४) भा. १२।११३।५; भामु. १२।११२।५ चान्ते वै (चान्तेऽथ) त्प्रभुः (द्विभुः).
(५) भा. १२।११३।६; भामु. १२।११२।६ या गच्छेच्च (गच्छामि च).
(६) भा. १२।११३।७; भामु. १२।११२।७ (भीष्म उवाच०).
(७) भा. १२।११३।८; भामु. १२।११२।८ स्स द्ध (स्सुद्ध).

[1]स कदाचित्प्रसार्यैवं तां ग्रीवां शतयोजनाम् ।
चचाराश्रान्तहृदयो वातश्चाऽऽगात्ततो महान् ॥
[2]स गुहायां शिरोग्रीवं निधाय पशुरात्मनः ।
आस्ताथ वर्षमभ्यागात्सुमहत्प्लावयज्जगत् ॥
[3]अथ शीतपरीताङ्गो जम्बुकः क्षुच्छ्रमान्वितः ।
सदारस्तां गुहामाशु प्रविवेश जलार्दितः ॥
स दृष्ट्वा मांसजीवी तु सुभृशं क्षुच्छ्रमान्वितः ।
अभक्षयत्ततो ग्रीवामुष्ट्रस्य भरतर्षभ ॥
यदा त्वबुध्यताऽऽत्मानं भक्ष्यमाणं स वै पशुः ।
तदा संकोचने यत्नमकरोद्भृशदुःखितः ॥
यावदूर्ध्वमधश्चैव ग्रीवां संक्षिपते पशुः ।
तावत्तेन सदारेण जम्बुकेन स भक्षितः ॥
[4]स हत्वा भक्षयित्वा च जम्बुकोष्ट्रं ततस्तदा ।
विगते वातवर्षे च निश्चक्राम गुहामुखात् ॥
[5]एवं दुर्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा ।
आलस्यस्य क्रमात्पश्य महद्दोषमुपागतम् ॥
[6]त्वमप्येतं विधिं त्यक्त्वा योगेन नियतेन्द्रियः ।
वर्तस्व बुद्धिमूलं हि विजयं मनुरब्रवीत् ॥

योगेन उपायेन । एवंविधं आलस्यम् । नीटी.

(१) भा. १२।११३।९; भामु. १२।११२।९ यैवं (यैव) राश्रान्त (र श्रान्त).

(२) भा. १२।११३।१०; भामु. १२।११२।१० ग्रीवं (ग्रीवां) आस्ताथ (आस्ते तु).

(३) भा. १२।११३।११–१४; भामु. १२।११२।११–१४.

(४) भा. १२।११३।१५; भामु. १२।११२।१५ जम्बुकोष्ट्रं तत (तमुष्ट्रं जम्बुक) वर्षे च (वर्षे तु).

(५) भा. १२।११३।१६; भामु. १२।११२।१६ महद्दोषमुपा (महान्तं दोषमा).

(६) भा. १२।११३।१७; भामु. १२।११२।१७ तं विधिं त्यक्त्वा (वंविधं हित्वा) हि (तु).

[1]बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥

बाहिति बाहूपलक्षितं शौर्यम् । जङ्घोपलक्षितं पादविहरणम् । भारः भारवहनम् । नीटी.

[2]राज्यं तिष्ठति दक्षस्य संगृहीतेन्द्रियस्य च ।
आर्तस्य बुद्धिमूलं हि विजयं मनुरब्रवीत् ।
गुप्तमन्त्रश्रुतवतः सुसहायस्य चानघ ॥

आर्तस्य अतिलिप्सावतः । नीटी.

[3]परिक्ष्यकारिणोऽर्थाश्च तिष्ठन्तीह युधिष्ठिर ।
सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुम् ॥
[4]इदं हि सद्भिः कथितं विधिज्ञैः
पुरा महेन्द्रप्रतिमप्रभाव ।
मयाऽपि चोक्तं तव शास्त्रदृष्ट्या
त्वमत्र युक्तः प्रचरस्व राजन् ॥

राजा मयूरसदृशाचरणशीलः स्यात्

युधिष्ठिर उवाच–

[5]राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत ।
पूर्वैः पूर्वनियुक्तानि राजधर्मार्थवेदिभिः ॥

राजवृत्तानीत्यध्यायः पूर्वोक्तानां राजधर्माणां सर्वेषामुपसंहारार्थः । नीटी.

[6]तदेव विस्तरेणोक्तं पूर्वैर्दृष्टं सतां मतम् ।
प्रणयं राजधर्माणां प्रब्रूहि भरतर्षभ ॥

(१) भा. १२।११३।१८; भामु. १२।११२।१८.

(२) भा. १२।११३।१९; भामु. १२।११२।१९ गुप्तमन्त्र (गुह्यं मन्त्रं).

(३) भा. १२।११३।२०; भामु. १२।११२।२० ऽर्थाश्च ति (ह्यर्थास्ति).

(४) भा. १२।११३।२१; भामु. १२।११२।२१ त्वमत्र युक्तः (यथैव बुद्ध्वा).

(५) भा. १२।१२०।१; भामु.

(६) भा. १२।१२०।२; भामु. १२।१२०।२ पूर्वैर्दृष्टं (पूर्वदृष्टं) प्रणयं (प्रणेयं).

राजधर्माणां राजधर्मविदां मतं यत् विस्तरेणोक्तं तदेव प्रणेयं प्रकर्षेण नेतुं वोढुं शक्यम्, संक्षिप्तमित्यर्थः, प्रब्रूहि । नीटी.

भीष्म उवाच–

**[1]रक्षणं सर्वभूतानामिति क्षत्रे परं मतम् ।**
**तद्यथा रक्षणं कुर्यात्तथा शृणु महीपते ॥**

सर्वभूतरक्षणे कृत्स्नो राजधर्मः परिसमाप्त इत्याह– रक्षणमिति । नीटी.

**[2]यथा बर्हाणि चित्राणि बिभर्ति भुजगाशनः ।**
**तथा बहुविधं राजा रूपं कुर्वीत धर्मवित् ॥**

एतदेव मयूरदृष्टान्तेनोपपादयति– यथेति । बर्हाणि पक्षान् । भुजगाशनः मयूरः । नीटी.

**[3]तैक्ष्ण्यं जिह्मत्वमादान्त्यं सत्यमार्जवमेव च ।**
**मध्यस्थः सत्त्वमातिष्ठंस्तथा वै सुखमृच्छति ॥**

तैक्ष्ण्यं क्रूरत्वम् । जिह्मत्वं कौटिल्यम् । आदाल्भ्यं दल्भः भयं तदभावः अदल्भः अभयं तस्य भावः आदाल्भ्यम् । अभयप्रदत्वमित्यर्थः । रलयोः सावर्ण्यात् 'दृभी भये' इत्यस्य रूपम् । आदानमिति पाठान्तरे स्पष्टोऽर्थः । नीटी.

**[4]यस्मिन्नर्थे हितं यत्स्यात्तद्वर्णं रूपमाविशेत् ।**
**बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ॥**

यस्मिन्नर्थे दण्डेऽनुग्रहे वा हितं क्रूरं शान्तं वा रूपमादिशेत् दर्शयेत् । नीटी.

**[5]नित्यं रक्षितमन्त्रः स्याद्यथा मूकः शरच्छिखी ।**
**श्लक्ष्णाक्षरतनुः श्रीमान्भवेच्छास्त्रविशारदः ॥**

( १ ) भा. १२।१२०।३ ; भामु. १२।१२०।३ क्षत्रे ( क्षात्रे ).

( २ ) भा. १२।१२०।४ ; भामु.

( ३ ) भा. १२।१२०।५ ; भामु. १२।१२०।५ दान्त्यं ( दाल्भ्यं ).

( ४ ) भा. १२।१२०।६ ; भामु. १२।१२०।६ विशेत् ( दिशेत् ).

( ५ ) भा. १२।१२०।७ ; भामु.

**[1]आपद्द्वारेषु यत्तः स्याज्जलप्रस्रवणेष्विव ।**
**शैलवर्षोदकानीव द्विजान्सिद्धान्समाश्रयेत् ॥**

आपदां द्वारेषु मन्त्रभेदादिषु युक्तः अवहितः स्यात् । शैलवर्षोदकानि पर्वतप्रदेशे वृष्ट्या जनितानि महानदीजलानि । नीटी.

**[2]अर्थकामः शिखां राजा कुर्याद्धर्मध्वजोपमाम् ।**
**नित्यमुद्यतदण्डः स्यादाचरेच्चाप्रमादतः ।**
**लोके चाऽऽयव्ययौ दृष्ट्वा वृक्षाद्वृक्ष-**
**मिवाऽऽप्लवन् ॥**

शिखां योग्यलिङ्गं क्रूरत्वादिकं कुर्यात् प्रकाशयेत् । आचरेत् यथायोग्यं दण्डम् । तत्र दृष्टान्तः – बृहदिति । बृहन्तो वृक्षा यत्र तत् बृहद्वृक्षं तालवनम् । आस्रवत् रसं प्रस्रवत् । यथा रसग्राही प्रदेशविशेषे एव प्रहृत्य रसं गृह्णाति, न तु कृत्स्नवृक्षच्छेदेन इक्षुकाण्डादिवत्ततो रसं जिघृक्षति, एवं प्रजानामायव्ययौ ज्ञात्वा ता जीवयंस्ताभ्यो धनरसमादद्यादित्यर्थः । नीटी.

**[3]मृजावान् स्यात्स्वयूथ्येषु भावानि चरणैः क्षिपेत् ।**
**जातपक्षः परिस्पन्देद्वृक्षेद्वैकल्यमात्मनः ॥**

मृजा शुद्धिः, तद्वान् । भौमानि परेषां सस्यानि चरणैः अश्वादिगमनैः क्षिपेत् नाशयेत् । नीटी.

**[4]दोषान् विवृणुयाच्छत्रोः परपक्षान् विधूनयेत् ।**
**काननेष्विव पुष्पाणि बर्हीवार्थान् समाचरेत् ॥**

अर्थात् मृगयादिव्याजात् परराष्ट्रं समाचरन् परपक्षान् विधूनयेत् । नीटी.

( १ ) भा. १२।१२०।८ ; भामु. १२।१२०।८ यत्तः ( युक्तः ).

( २ ) भा. १२।१२०।९ ; भामु. १२।१२०।८–९ चरेच्चा ( चरेद ) वृक्षाद्वृक्षमिवाऽऽप्लवन् ( बृहद्वृक्षमिवाऽऽस्रवद् ).

( ३ ) भा. १२।१२०।१० ; भामु. १२।१२०।१० भावानि ( भौमानि ) द्वक्षे ( त्वप्रेक्षे ).

( ४ ) भा. १२।१२०।११ ; भामु. १२।१२०।११ बर्हीवार्थान् समाचरेव ( बहिरर्थान्समाचरन् ).

[1]उच्छ्रितानाश्रयेत्स्फीतान्नरेन्द्रानचलोपमान् ।
श्रयेच्छायामविज्ञातां गुप्तं शरणमाश्रयेत् ॥

छायां परदुर्गाधिपतिना संधिं कृत्वा देवतादर्शनादि-व्याजेनाकस्मात्परदुर्गं गत्वा प्रविश्य तन्नाशयेदित्याह— उच्छ्रितानिति । नीटी.

[2]प्रावृषीवासितग्रीवो मज्जेत निशि निर्जने ।
मायूरेण गुणेनैव स्त्रीभिश्चालक्षितश्चरेत् ।
न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना ॥

[3]चारभूमिष्वभिगमान् पाशांश्च परिवर्जयेत् ।
पीडयेच्चापि तां भूमिं प्रणश्येद्गहने पुनः ॥

असितग्रीवः मयूरः निशीव प्रावृषि मज्जेत अदृश्यः अन्तःपुरचर एव स्यात् । तत्रापि चारैर्दर्शितासु भूमिषु धात्रीसौविदल्लसूपकारादिषु परैर्भेदितेषु अभिगतान् विषादीन् पाशान् परिवर्जयेदात्मानं रक्षेच्चेत्याह— नेति । ननु कुतस्तत्रापि पाशप्रसक्तिरत आह— प्रणयेदिति । गहने दुर्बोधे पाशज्ञाने सति तां कपटभूमिं प्रतिपद्याऽऽत्मानं प्रणयेत् प्रापयेत् तदा नश्येदेव । वाशब्द एवार्थे । नीटी.

[4]हन्यात्क्रुद्धानतिविषान्ये जिह्मगतयोऽहितान् ।
नाऽऽश्रयेद्बालबर्हाणि संनिवासानि वासयेत् ॥

[5]सदा बर्हिनिभः कामं प्रसक्तिकृतमाचरेत् ।
सर्वतश्चाऽऽददेत्प्रज्ञां पतङ्गान् गहनेष्विव ।
एवं मयूरवद्राजा स्वराष्ट्रं परिपालयेत् ॥

प्रयोजयन्ति हि राजानः ‘ विषमयीं कन्यां कृत्वा द्वीपान्तरप्राप्तेयं पद्मिनीजातीया कन्या, अस्याः स्पर्शमात्रादशीतिवार्षिकोऽपि षोडशवर्षो भवतीति सेयमतिश्रेष्ठरत्नतया श्रीमतामर्थे कल्पिताऽनुग्राह्या चेयं वयं च ’ इति ब्रुवाणाः । तत्र चारमुखात्कपटं श्रुत्वा तां न प्रणयेत् । ऊहितान् केनचिन्निमित्तेन तर्कितान् तान् अतिविषान् कन्यादीन् स्पर्शमात्रेणोच्छ्वासमात्रेण वा संगतमक्षिकामशकादिमरणलिङ्गेन ज्ञातान् हन्यादेव । नाशयेदिति सार्धः । बलबर्हाणि स्थूलान् पक्षान् सैन्यस्य पक्षस्थानीयान् महाशिबिरवारवनितानटनर्तकादींश्च नाशयेत् मयूर इव दूरीकुर्यात् । ‘ बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः ’ इति मेदिनी । संनिवासान् दृढमूलान् पक्षानमात्यादीन् शूरांश्च वासयेत् स्थापयेत् । बर्हिनिभः मयूरतुल्यः कामं यथेष्टं प्रशस्तं कृतं प्रशस्तां क्रियां पक्षाणां विस्फारणमाचरेत् । अनेनैव क्रमेण सर्वतश्च जातिमात्राप्रज्ञामाददीत । यथोक्तम्— ‘ बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ’ ( मस्मृ. ७।१०६ ) इत्यादि । पतङ्गं शलभसमूहः यथा गहनेषु पतति, गहनं च निष्पत्रं करोति, एवं संभूय शत्रुराष्ट्रे पतितव्यमित्यर्थः । ‘ पन्नगं गहनेष्विव’ इति पाठे पन्नगग्राही पन्नगमिव अकस्माच्छत्रुं गृह्णीयादित्यर्थः । नीटी.

[1]आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः ।
आत्मसंयमनं बुद्ध्या परबुद्ध्याऽवतारणम् ।
बुद्ध्या चाऽऽत्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनम् ॥

बुद्ध्या आत्मनः संयमनं इत्थमेव कर्तुं युक्तं ( इति ) नियमं कुर्यात् । परबुद्ध्या च तत्रैवार्थे संवादितया तस्यार्थस्यावधारणं दृढतरो निश्चयः कार्यः । बुद्ध्या शास्त्रोत्थधिया आत्मगुणस्य पूर्वोक्तनिश्चयहेतोः प्राप्तिर्भवति । एतदेव शास्त्रस्य निदर्शनं प्रयोजनं यत्कार्यक्षोदक्षमता बुद्धेरित्यर्थः । नीटी.

---

( १ ) भा. १२।१२०।१२ ; भामु. १२।१२०।१२ नाश्रये ( न्नाशये ) शरणमा ( रणमुपा ).

( २ ) भा. १२।१२०।१३ ; भामु. १२।१२०।१३–१४ लक्षित ( वेक्षित ).

( ३ ) भा. १२।१२०।१४ ; भामु. १२।१२०।१४–१५ गमान् ( गतान् ) पीडयेच्चा ( प्रणयेद्वा ).

( ४ ) भा. १२।१२०।१५ ; भामु. १२।१२०।१५–१६ षान्ये ( षांस्तान् ) उत्तरार्धे ( नाशयेद्बलबर्हाणि सन्निवासान्निवासयेत् ॥ ).

( ५ ) भा. १२।१२०।१६ ; भामु. १२।१२०।१६–१७ प्रसक्ति ( प्रशस्तं ) पतङ्गान् ( पतङ्गं ) राष्ट्रं (राज्यं).

( १ ) भा. १२।१२०।१७ ; भामु. १२।१२०।१७–१८ वृद्धि ( बुद्धि ) तारणम् ( धारणम् ).

[1]परं चाऽऽश्वासयेत्साम्ना स्वशक्तिं चोपलक्षयेत् ।
आत्मनः परिमर्शेन बुद्धिं बुद्ध्या विचारयेत् ।
सान्त्वयोगमतिः प्राज्ञः कार्याकार्यविचारकः ॥
[2]निगूढबुद्धिर्धीरः स्याद्वक्तव्ये वक्ष्यते तथा ।
संनिकृष्टां कथां प्राज्ञो यदि बुद्ध्या बृहस्पतिः ।
स्वभावमेष्यते तप्तं कृष्णायसमिवोदके ॥

आत्मनः स्वस्य परिमर्शेन सर्वतोऽतीतानागतविचारेण बुद्धिं कार्यनिश्चयं बुद्ध्या ऊहापोहकौशलरूपया मेधया विचारयेत् साधकबाधकभूमौ संचारयेत् । तमेवाऽऽह– सान्त्वेति । उपदेशे कर्तव्ये कृतं अलम् । तस्योपदेशापेक्षा नास्तीत्यर्थः । सः अनन्तरश्लोकोक्तः प्राज्ञः बुद्ध्या बृहस्पतिसमोऽपि सन् यदि निकृष्टां कथां निर्बुद्धित्ववादं प्राप्नुयात्तर्हि सद्य एव युक्त्या स्वभावं स्वास्थ्यं एष्यते उदके प्रक्षिप्तं तप्तायसं शैत्यमिव । नीटी.

स्वस्य परस्य च अनुरूपकृत्यानुयोगः कर्तव्यः

[3]अनुयुञ्जीत कृत्यानि सर्वाण्येव महीपतिः ।
आगमैरुपदिष्टानि स्वस्य चैव परस्य च ॥
[4]क्षुद्रं क्रूरं तथा प्राज्ञं शूरं चार्थविशारदम् ।
स्वकर्मणि नियुञ्जीत ये चान्ये वचनाधिकाः ॥
[5]अप्यदृष्ट्वा नियुक्तानि अनुरूपेषु कर्मसु ।
सर्वांस्ताननुवर्तेत स्वरांस्तन्त्रीरिवाऽऽयता ॥
[6]धर्माणामविरोधेन सर्वेषां प्रियमाचरेत् ।
ममायमिति राजा यः स पर्वत इवाचलः ॥

[1]व्यवसायं समाधाय सूर्यो रश्मिमिवाऽऽयताम् ।
धर्ममेवाभिरक्षेत कृत्वा तुल्ये प्रियाप्रिये ॥
[2]कुलप्रकृतिदेशानां धर्मज्ञान् मृदुभाषिणः ।
मध्ये वयसि निर्दोषान् हिते युक्ताञ्जितेन्द्रियान् ॥
[3]अलुब्धाञ्शिक्षितान्दान्तान्धर्मेषु परिनिष्ठितान् ।
स्थापयेत्सर्वकार्येषु राजा धर्मार्थरक्षिणः ॥
[4]एतेनैव प्रकारेण कृत्यानामागतिं गतिम् ।
युक्तः समनुतिष्ठेत तुष्टश्चारैरुपस्कृतः ॥
[5]अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुधैव वसुंधरा ॥
[6]व्यक्तश्चानुग्रहो यस्य यथार्थश्चापि निग्रहः ।
गुप्तात्मा गुप्तराष्ट्रश्च स राजा राजधर्मवित् ॥
[7]नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य इवोत्पतन् ।
चारांश्च नचरान्विद्यात्तथा बुद्ध्या न संज्वरेत् ॥

गोभिः रश्मिभिः । चरान् चारान् । स्वनुचरान् समाचारान् । नीटी.

बुद्ध्यनुसरणम्, व्यवसायकर्तव्यता, लुब्धस्यासंग्रहः

[8]बुद्धिर्दीप्ता बलवन्तं हिनस्ति
बलं बुद्ध्या वर्धते पाल्यमानम् ।
शत्रुर्बुद्ध्या सीदते वर्धमानो
बुद्धेः पश्चात्कर्म यत्तत्प्रशस्तम् ॥

---

(१) भा. १२।१२०।१८ ; भामु. १२।१२०।१९–२० चाऽऽश्वा ( विश्वा ) विचारकः ( प्रयोजकः ).

(२) भा. १२।१२०।१९ ; भामु. १२।१२०।२०–२१ बुद्धिर्धीरः स्याद्व ( बुद्धेर्धीरस्य व ) वक्ष्यते ( वा कृतं ) संनिकृष्टां ( स निकृष्टां ).

(३) भा. १२।१२०।२० ; भामु. १२।१२०।२२.

(४) भा. १२।१२०।२१ ; भामु. १२।१२०।२३ क्षुद्रं क्रूरं ( मृदुशीलं ) विशारदम् ( विधानवित् ) वचना ( च बला ).

(५) भा. १२।१२०।२२ ; भामु. १२।१२०।२४ अप्यदृष्ट्वा ( अथ दृष्ट्वा ) अनुरूपेषु ( स्वानुरूपेषु ).

(६) भा. १२।१२०।२३ ; भामु. १२।१२०।२५.

(१) भा. १२।१२०।२४ ; भामु. १२।१२०।२६ रश्मिमिवाऽऽयताम् ( रश्मीनिवाऽऽयतान् ).

(२) भा. १२।१२०।२५ ; भामु. १२।१२०।२७ जितेन्द्रियान् ( नविक्लवान् ).

(३) भा. १२।१२०।२६ ; भामु. १२।१२०।२८.

(४) भा. १२।१२०।२७ ; भामु. १२।१२०।२९ नैव ( न च ).

(५) भा. १२।१२०।२८ ; भामु. १२।१२०।३० वेक्षिणः ( वेक्षितुः ) वसुधैव ( वसुदैव ).

(६) भा. १२।१२०।२९ ; भामु. १२।१२०।३१.

(७) भा. १२।१२०।३० ; भामु. १२।१२०।३२ इवोत्पतन् ( इवोदितः ) चारांश्च न ( चरान् स्वनु ) न संज्वरेत् ( स्वयं चरेत् ).

(८) भा. १२।१२०।४० ; भामु. १२।१२०।४२ वर्धते पाल्यमानम् ( पाल्यते वर्धमानम् ).

वर्धमानं क्षीयमाणम् । बुद्धेः पश्चात् बुद्ध्यनुसारि । नीटी.

[1]सर्वान् कामान्कामयानो हि धीरः
सत्त्वेनाल्पेनाऽऽप्लुते हीनदेहः ।
यथाऽऽत्मानं प्रार्थयतेऽर्थमानैः
श्रेयःपात्रं पूरयते ह्यनल्पम् ॥

अल्पेनापि सत्त्वेन बलेन अर्थ्यमानैर्युक्तं आत्मानं प्रार्थयते । लुब्धः दृप्तश्च भवतीत्यर्थः । श्रेयः पात्रं न पूरयते । ततः श्रेयोऽपसर्पतीत्यर्थः । नीटी.

[2]तस्माद्राजा प्रगृहीतः परेषु
मूलं लक्ष्म्याः सर्वतोऽभ्याददीत ।
दीर्घं कालमपि संपीड्यमानो
विद्युत्संपातमिव मानोर्जितः स्यात् ॥

प्रगृहीतः स्निग्धः । लक्ष्म्याः मूलं अर्थम् । सर्वशः सर्वाभ्यः । संपीड्यमानः संपीडयन् प्रजासु विद्युद्वत्संपातं सम्यक्पतित्वाऽपि ऊर्जितः स्यात् । अत्र बृहद्वृक्षदृष्टान्तः प्रागेवोक्तः । नीटी.

[3]विद्या तपो वा विपुलं धनं वा
सर्वमेतद्व्यवसायेन शक्यम् ।
ब्रह्म यत्तं निवसति देहवत्सु
तस्माद्विद्याद्व्यवसायं प्रभूतम् ॥

व्यवसायेन उद्योगेन विद्यात् लभेत । नीटी.

[4]यत्राऽऽसते मतिमन्तो मनस्विनः
शक्रो विष्णुर्यत्र सरस्वती च ।
वसन्ति भूतानि च यत्र नित्यं
तस्माद्विद्वान्नावमन्येत देहम् ॥

(१) भा. १२।१२०।४१ ; भामु. १२।१२०।४३ नाऽऽप्लुते ( नाऽऽप्नुते ) देहः ( दोषः ) यथा ( यश्चा ) र्थमानैः ( र्थ्यमानैः ) ह्यनल्पम् ( च नाल्पम् ).

(२) भा. १२।१२०।४२ ; भामु. १२।१२०।४४ परेषु ( प्रजासु ) सर्वतोऽभ्या ( सर्वशो ह्या ) कालमपि ( कालं ह्यपि ) मिव मानो ( मपि वा नो ).

(३) भा. १२।१२०।४३ ; भामु. १२।१२०।४५ सर्वमे ( सर्वं ह्ये ) ब्रह्म यत्तं निवसति ( बुद्ध्यायत्तं तन्निवसेद् ).

(४) भा. १२।१२०।४४-४५ ; भामु. १२।१२०।४६-४७.

अनुद्योगेन जन्म न नाशयेदित्याह— यत्रेति । नीटी.

लुब्धं हन्यात्संप्रदानेन नित्यं
लुब्धस्तृप्तिं परवित्तस्य नैति ।
सर्वो लुब्धः कर्मगुणोपभोगे
योऽर्थैर्हीनो धर्मकामौ जहाति ॥

कर्म यज्ञादि गुणः अङ्गं यस्य तत् फलं सुखम्, तदुपभोगे सर्वोऽपि लुब्धः । स चेदर्थैर्हीनस्तर्हि सुखलोभाद्धर्मं कामं द्रव्यादिविषयं च जहाति । नीटी.

[1]धनं भोज्यं पुत्रदारं समृद्धिं
सर्वो लुब्धः प्रार्थयते परेषाम् ।
लुब्धे दोषाः संभवन्तीह सर्वे
तस्माद्राजा न प्रगृह्णीत लुब्धान् ॥

समृद्धिं च प्राप्यापीति शेषः । धनं उत्कोचरूपम् । न प्रगृह्णीत न संगृह्णीत । नीटी.

[2]संदर्शने सत्पुरुषं जघन्यमपि चोदयेत् ।
आरम्भान् द्विषतां प्राज्ञः सर्वानर्थांस्तु सूदयेत् ॥

[3]धर्मान्वितेषु विज्ञातो मन्त्री गुप्तश्च पाण्डव ।
आप्तो राजन् कुलीनश्च पर्याप्तो राज्यसंग्रहे ॥

धर्मान्वितेषु ब्राह्मणमण्डलेषु विज्ञाता ज्ञाततत्त्वः । राजसंग्रहे सामन्तवशीकरणे । नीटी.

[4]विधिप्रवृत्तान्नरदेवधर्मा-
नुक्तान्समासेन निबोध बुद्ध्या ।
इमान् विदध्याद्व्यनुसृत्य यो वै
राजा महीं पालयितुं स शक्तः ॥

(१) भा. १२।१२०।४६ ; भामु. १२।१२०।४८ भोज्यं ( भोगं ) सर्वो ( सर्वं ) लुब्धान् ( लुब्धम् ).

(२) भा. १२।१२०।४७ ; भामु. १२।१२०।४९ ने सत्पु ( नेन पु ) नर्थांस्तु ( र्थांश्च प्र ).

(३) भा. १२।१२०।४८ ; भामु. १२।१२०।५० विज्ञातो ( विज्ञाता ) राजन् ( राजा ) राज्य ( राज ).

(४) भा. १२।१२०।४९ ; भामु. १२।१२०।५१ प्रवृत्ता ( प्रयुक्ता ) व्यनु ( व्यति ).

निबोध बुद्धयस्व । व्यतिसृत्य गुरुमनुसृत्य विदध्यात् हृदि कुर्यात् । नीटी.

[1]अनीतिजं यद्यविधानजं सुखं
हठप्रणीतं विविधं प्रदृश्यते ।
न विद्यते तस्य गतिर्महीपते-
र्न विद्यते राष्ट्रजमुत्तमं सुखम् ॥

विधानजं दैवप्राप्तम् । राजधर्माज्ञाने प्राप्तोऽप्यर्थः सद्यो नश्यतीत्यर्थः । नीटी.

[2]धनैर्विशिष्टान्मतिशीलपूजितान्
गुणोपपन्नान्युधि दृष्टविक्रमान् ।
गुणेषु दृष्टानचिरादिहात्मवान्
सतोऽभिसंधाय निहन्ति शात्रवान् ॥

गुणोपपन्नान् शौर्यादियुक्तान् । गुणेषु संधिविग्रहादिषु । आत्मवान् अप्रमत्तः । यतः उत्थानं कुर्वाणान् शात्रवान् अभिसंधाय लक्षीकृत्य निहन्ति । नीटी.

[3]पश्येदुपायान् विविधैः क्रियापथै-
र्न चानुपायेन मतिं निवेशयेत् ।
श्रियं विशिष्टां विपुलं यशो धनं
न दोषदर्शी पुरुषः समश्नुते ॥

दोषदर्शी निर्दोषेष्वपीति शेषः । नीटी.

[4]प्रीतिप्रवृत्तौ विनिवर्तने तथा
सुहृत्सु विज्ञाय निवृत्य चोभयोः ।
यदेव मित्रं गुरुभारमावहेत्
तदेव सुस्निग्धमुदाहरेद्बुधः ॥

सुहृत्सु विज्ञाय ज्ञानपूर्वकं प्रीतेः प्रवृत्तौ सत्यां यौ सुहृदौ निवृत्य नितरां वृत्वा एकस्मिन्कार्ये विनिवर्तितौ अभिमुखीकृतौ, तयोरुभयोर्मध्ये यदेव गुरुभारमावहेत्तदेव उदाहरेत् प्रशंसेत् । नीटी.

[5]एतान्मयोक्तांस्तव राजधर्मान्
नृणां च गुप्तौ मतिमादधत्स्व ।
अवाप्स्यसे पुण्यफलं सुखेन
सर्वो हि लोकोत्तमधर्ममूलः ॥

चर अनुतिष्ठ । आदधत्स्व आधत्स्व । 'दध धारणे' इत्यस्य रूपम् । नीटी.

(१) भा. १२।१२०।५०; भामु. १२।१२०।५२ यद्यविधा (यस्य विधा) विविधं (विधिवत्) राष्ट्रजमुत्तमं सुखम् (राज्यसुखं ह्यनुत्तमम्).

(२) भा. १२।१२०।५१; भामु. १२।१२०।५३ दृष्टानचिरादिहा (दृष्ट्वा न चिरादिवा) सतो (यतो).

(३) भा. १२।१२०।५२; भामु. १२।१२०।५४.

(४) भा. १२।१२०।५३; भामु. १२।१२०।५५ वर्तने तथा (वर्तितौ यथा).

(५) भा. १२।१२०।५४; भामु. १२।१२०।५६ क्तांस्तव (क्तांश्चर) लोकोत्तमध (लोको नृप ध).

### ब्राह्मणस्य आपद्वृत्तिः

युधिष्ठिर उवाच-

[1]हीने परमके धर्मे सर्वलोकातिलङ्घिनि ।
सर्वस्मिन् दस्युसाद्भूते पृथिव्यामुपजीवने ॥

हीने धर्मे, राज्ञामिति शेषः । परमके सर्वोपायेन ब्राह्मणा रक्ष्याः इत्यस्मिन् । नीटी.

[2]केनास्मिन्ब्राह्मणो जीवेज्जघन्ये काल आगते ।
असंत्यजन्पुत्रपौत्राननुक्रोशात्पितामह ॥

जघन्ये आपद्बहुले ब्राह्मणः केन जीवेदित्यस्य ब्राह्मणं कथं रक्षेदित्यर्थः । नीटी.

भीष्म उवाच-

[3]विज्ञानबलमास्थाय जीवितव्यं तथाऽऽगते ।
सर्वं साध्वर्थमेवेदमसाध्वर्थं न किंचन ॥

सर्वं धनादिकं साध्वर्थं सतामर्थे । नीटी.

[4]असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं संक्रमं कृत्वा कृत्स्नधर्मविदेव सः ॥

एवं हेतुमुक्त्वा विधेयमाह- असाधुभ्य इति । संक्रमं आगमनमार्गम् । नीटी.

(१) भा. १२।१३०।१; भामु. १२।१३२।१ तिलङ्घिनि (भिसंहिते).

(२) भा. १२।१३०।२; भामु. १२।१३२।२ केनास्मिन्ब्रा (केन स्विद्ब्रा).

(३) भा. १२।१३०।३; भामु. १२।१३२।३.

(४) भा. १२।१३०।४; भामु. १२।१३२।४ निरादाय (ऽर्थमादाय) कृत्स्न (कृच्छ्र).

[1]सुरोषेणाऽऽत्मनो राजन्राज्ये स्थितिमकोपयन् ।
अदत्तमप्याददीत दातुर्वित्तं ममेति वा ॥

स्थितिं पालनधर्मम् । दातुः पालयितुः । 'देङ् पालने' इत्यस्य रूपम् । स्थानभ्रष्टस्य राज्ञो ब्राह्मणपालनार्थे सर्वस्वहरणेऽपि दोषो नास्तीत्यर्थः । नीटी.

[2]विज्ञानबलपूतो यो वर्तते निन्दितेष्वपि ।
वृत्तविज्ञानवान् धीरः कस्तं किं वक्तुमर्हति ॥

वक्तुं निन्दितुम् । नीटी.

[3]येषां बलकृता वृत्तिर्नैषामन्याऽभिरोचते ।
तेजसाऽभिप्रवर्धन्ते बलवन्तो युधिष्ठिर ॥

[4]यदेव प्रकृतं शास्त्रमविशेषेण विन्दति ।
तदेव मध्याः सेवन्ते मेधावी चाप्यथोत्तरम् ॥

प्राकृतं प्राकृतापद्धर्मोपयोगि शास्त्रम् । 'स्वराष्ट्रात्परराष्ट्राच्च कोशं संजनयेन्नृपः' ( भा. १२।१३१।१ ) इति सामान्यशास्त्रमेवाऽऽपन्नो राजा उपजीवेत् । मेधावी तु तत्रापि ये राष्ट्रद्वयस्था धनिकाः कदर्यत्वेन दण्डार्हाः तादृशेभ्य एवाऽऽददीत इति उत्तरं शास्त्रमभ्यसेत् । नीटी.

ब्राह्मणाः पूजनीयाः

[5]ऋत्विक्पुरोहिताचार्यान् सत्कृतैरभिपूजितान् ।
न ब्राह्मणान्यातयेत दोषान्प्राप्नोति यातयन् ॥

अत्यन्तापद्यपि ऋत्विगादीन् धनवतोऽपि न घातयीत । धनहरणेन न हिंस्यादित्यर्थः । नीटी.

[1]एतत्प्रमाणं लोकस्य चक्षुरेतत्सनातनम् ।
तत्प्रमाणोऽवगाहेत तेन तत्साध्वसाधु वा ॥

[2]बहूनि ग्रामवास्तव्या रोषाद्ब्रूयुः परस्परम् ।
न तेषां वचनाद्राजा सत्कुर्याद्घातयेत वा ॥

ग्रामवास्तव्याः ग्रामवासिनः । नीटी.

[3]न वाच्यः परिवादो वै न श्रोतव्यः कथंचन ।
कर्णावेव पिधातव्यौ प्रस्थेयं वा ततोऽन्यतः ॥

ऋत्विगादीनां निन्दाऽपि न श्रोतव्येत्याह– न वाच्य इति । नीटी.

[4]न वै सतां वृत्तमेतत्परिवादो न पैशुनम् ।
गुणानामेव वक्तारः सन्तः सत्सु युधिष्ठिर ॥

[5]यथा समधुरौ दम्यौ सुदान्तौ साधुवाहिनौ ।
धुरमुद्यम्य वहतस्तथा वर्तेत वै नृपः ।
यथा यथाऽस्य वहतः सहायाः स्युस्तथाऽपरे ॥

[6]आचारमेव मन्यन्ते गरीयो धर्मलक्षणम् ।
अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः ।
मार्दवादथ लोभाद्वा ते ब्रूयुर्वाक्यमीदृशम् ॥

एवं ऋत्विगादीनामदण्डनम् । शङ्खेन लिखितस्य भ्रातुरपि हस्तच्छेदः कृतः तादृशधर्मपराः । इदमपि वाक्यं मात्सर्यादिना न ब्रूयात्, धर्मेण तु ब्रूयादेवेत्यपरे इच्छन्ति । नीटी.

---

(१) भा. १२।१३०।५ ; भामु. १२।१३२।५ सुरोषेणाऽऽ (आकाङ्क्षन्ना) राजन् (राज्यं) मप्याद (मेवाऽऽद) वा (च).

(२) भा. १२।१३०।६ ; भामु. १२।१३२।६ वृत्त (वृत्ति) किं (वा).

(३) भा. १२।१३०।७ ; भामु. १२।१३२।७ नैषामन्याऽभि (स्तेषामन्या न) वर्धन्ते (वर्तन्ते).

(४) भा. १२।१३०।८ ; भामु. १२।१३२।८ यदेव प्रकृतं (यदैव प्राकृतं) विन्दति (वर्तते) तदेव मध्याः सेवन्ते (तदैवमभ्यसेदेवं) चाप्य (वाऽप्य).

(५) भा. १२।१३०।९ ; भामु. १२।१३२।९ सत्कृतैरभिपूजितान् (सत्कृतानभिसत्कृतान्) यातयेत (घातयीत) यातयन् (घातयन्).

(१) भा. १२।१३०।१० ; भामु. १२।१३२।१०.

(२) भा. १२।१३०।११ ; भामु. १२।१३२।११ बहूनि (बहवो) घातयत (द्घातयीत).

(३) भा. १२।१३०।१२ ; भामु. १२।१३२।१२ वै (ऽयं) वेव पि (वथापि) वा ततोऽन्यतः (चान्यतो भवेत्).

(४) भा. १२।१३०।१३ ; भामु. १२।१३२।१३ न वै सतां वृत्तमेतद् (असतां शीलमेतद्वै) द्धो न (दोऽथ) युधिष्ठिर (नराधिप).

(५) भा. १२।१३०।१४ ; भामु. १२।१३२।१४–१५ वहतः स (बहवः स).

(६) भा. १२।१३०।१५ ; भामु. १२।१३२।१५–१६ मार्दवादथ लोभाद्वा ते (मात्सर्यादथवा लोभान्न).

[1]आर्षमप्यत्र पश्यन्ति विकर्मस्थस्य यापनम् ।
न चाऽऽर्षात्सदृशं किंचित्प्रमाणं विद्यते क्वचित् ॥

आर्षं 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥' इति । तादृक् 'विकर्मस्थं न पातयेत्' इत्येवंरूपम् । नीटी.

[2]देवा अपि विकर्मस्थं यातयन्ति नराधमम् ।
व्याजेन विन्दन् वित्तं हि धर्मात्तु परिहीयते ॥

स्वमतमाह– देवता इति । दैवमेव पापिष्ठं ऋत्विगादि दण्डयति, राजा तु तत्रोदासीतैव इति भावः । नीटी.

शरणागतपालनं राजधर्मः

युधिष्ठिर उवाच–

[3]पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शरणं पालयानस्य यो धर्मस्तं वदस्व मे ॥

भीष्म उवाच–

[4]महान् धर्मो महाराज शरणागतपालने ।
अर्हः प्रष्टुं भवांश्चैव प्रश्नं भरतसत्तम ॥

[5]नृगप्रभृतयो राजन् राजानः शरणागतान् ।
परिपाल्य महाराज संसिद्धिं परमां गताः ॥

[6]श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥

(१) भा. १२।१३०।१६ ; भामु. १२।१३२।१७ यापनम् (पातनम्) चाऽऽर्षात् (तादृक्) विद्यते (दृश्यते).

(२) भा. १२।१३०।१७ ; भामु. १२।१३२।१८ देवा अपि (देवताश्च) यात (पात) धर्मात्तु (धर्मात्स).

(३) भा. १२।१४१।१ ; भामु. १२।१४३।१ पालयानस्य (पाल्यमानस्य) वदस्व (ब्रवीहि).

(४) भा. १२।१४१।२ ; भामु. १२।१४३।२.

(५) भा. १२।१४१।३ ; भामु. १२।१४३।३ नृग (शिवि) महाराज (महात्मानः).

(६) भा. १२।१४१।४ ; भामु. १२।१४३।४ हि (च).

युधिष्ठिर उवाच–

[1]कथं कपोतेन पुरा शत्रुः शरणमागतः ।
स्वमांसैर्भोजितः कां च गतिं लेभे स भारत ॥

भीष्म उवाच–

[2]शृणु राजन् कथां दिव्यां सर्वपापप्रणाशिनीम् ।
नृपतेर्मुचुकुन्दस्य कथितां भार्गवेण ह ॥

[3]इममर्थं पुरा पार्थ मुचुकुन्दो नराधिपः ।
भार्गवं परिपप्रच्छ प्रणतो भरतर्षभ ॥

[4]तस्मै शुश्रूषमाणाय भार्गवोऽकथयत्कथाम् ।
इयं यथा कपोतेन सिद्धिः प्राप्ता नराधिप ॥

[5]धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम् ।
शृणुष्वावहितो राजन् गदतो मे महाभुज ॥

[6]कश्चित्क्षुद्रसमाचारः पृथिव्यां कालसंमतः ।
चचार पृथिवीं पापो घोरः शकुनिलुब्धकः ॥

[7]काकोल इव कृष्णाङ्गो रूक्षः पापसमाहितः ।
यवमध्यः कृशग्रीवो ह्रस्वपादो महाहनुः ॥

काकोलः काकविशेषः । नीटी.

(१) भा. १२।१४१।५ ; भामु. १२।१४३।५ मांसैर्भो (मांसं भो).

(२) भा. १२।१४१।६ ; भामु. १२।१४३।६ ह (वै).

(३) भा. १२।१४१।७ ; भामु. १२।१४३।७ भरत (पुरुष).

(४) भा. १२।१४१।८ ; भामु. १२।१४३।८ इयं (इमां).

(५) भा. १२।१४१।९ ; भामु. १२।१४३।९ 'मुनिरुवाच' इत्यधिकम्.

(६) भा. १२।१४१।१० ; भामु. १२।१४३।१० संमतः (संमितः) चचार पृथिवीं पापो (विचचार महारण्ये).

(७) भा. १२।१४१।११ ; भामु. १२।१४३।११ रूक्षः पापसमाहितः (रक्ताक्षः कालसंमितः) उत्तरार्धे (दीर्घजङ्घो ह्रस्वपादो महावक्त्रो महाहनुः ॥).

[1]नैव तस्य सुहृत्कश्चिन्न संबन्धी न बान्धवः ।
स हि तैः संपरित्यक्तस्तेन घोरेण कर्मणा ॥

[2]नरः पापसमाचारस्त्यक्तव्यो दूरतो बुधैः ।
आत्मानं योऽभिसंधत्ते सोऽन्यस्य स्यात्कथं हितः ॥

अभिसंधत्ते विषोद्बन्धनादिना हन्तुमिति शेषः । नीटी.

ये नृशंसा दुरात्मानः प्राणिप्राणहरा नराः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥

[3]स वै क्षारकमादाय द्विजान् हत्वा वने सदा ।
चकार विक्रयं तेषां पतङ्गानां नराधिप ॥

क्षारकं जालम् । नीटी.

[4]एवं तु वर्तमानस्य तस्य वृत्तिं दुरात्मनः ।
अगमत्सुमहान् कालो न चाधर्ममबुध्यत ॥

तस्य भार्यासहायस्य रममाणस्य शाश्वतम् ।
दैवयोगविमूढस्य नान्या वृत्तिररोचत ॥

[5]ततः कदाचित्तस्याथ वनस्थस्य समुद्गतः ।
पातयन्निव वृक्षांस्तान् सुमहान् वातसंभ्रमः ॥

[6]मेघसंकुलमाकाशं विद्युन्मण्डलमण्डितम् ।
संछन्नं सुमुहूर्तेन नौस्थानेनेव सागरः ॥

[1]वारिधारासमूहैश्च संप्रहृष्टः शतक्रतुः ।
क्षणेन पूरयामास सलिलेन वसुंधराम् ॥

[2]ततो धाराकुले लोके संभ्रमन्नष्टचेतनः ।
शीतार्तस्तद्वनं सर्वमाकुलेनान्तरात्मना ॥

[3]नैव निम्नं स्थलं वाऽपि सोऽविन्दत विहंगहा ।
पूरितो हि जलौघेन मार्गस्तस्य वनस्य वै ॥

[4]पक्षिणो वातवेगेन हता लीनास्तदाऽभवन् ।
मृगाः सिंहा वराहाश्च स्थलान्याश्रित्य तस्थिरे ॥

[5]महता वातवर्षेण त्रासितास्ते वनौकसः ।
भयार्ताश्च क्षुधार्ताश्च बभ्रमुः सहिता वने ॥

[6]स तु शीतहतैर्गात्रैर्जगामैव न तस्थिवान् ।
ददर्श पतितां भूमौ कपोतीं शीतविह्वलाम् ॥

दृष्ट्वाऽऽर्तोऽपि हि पापात्मा स तां पञ्जरकेऽक्षिपत् ।
स्वयं दुःखाभिभूतोऽपि दुःखमेवाकरोत्परे ॥

पापात्मा पापकारित्वात्पापमेव चकार सः ।
सोऽपश्यद्वनषण्डेषु मेघनीलं वनस्पतिम् ॥

[7]सेव्यमानं विहंगौघैश्छायावासफलार्थिभिः ।
धात्रा परोपकाराय स साधुरिव निर्मितः ॥

---

(१) भा. १२।१४१।१२ ; भामु. १२।१४३।१२ बान्धवः ( बान्धवाः ) घोरेण ( रौद्रेण ).

(२) भामु. १२।१४३।१३–१४.

(३) भा. १२।१४१।१३ ; भामु. १२।१४३।१५ नराधिप ( जनाधिप ).

(४) भा. १२।१४१।१४–१५ ; भामु. १२।१४३।१६–१७.

(५) भा. १२।१४१।१६ ; भामु. १२।१४३।१८ समुद्गतः ( समन्ततः ).

(६) भा. १२।१४१।१७ ; भामु. १२।१४३।१९ छन्नं सु ( छन्नस्तु ) स्थानेनेव ( सार्थैरिव ).

(१) भा. १२।१४१।१८ ; भामु. १२।१४३।२० हैश्च ( हेन ) हृष्टः ( विष्टः ).

(२) भा. १२।१४१।१९ ; भामु. १२।१४३।२१ लोके ( काले ).

(३) भा. १२।१४१।२० ; भामु. १२।१४३।२२ मार्गस्तस्य वनस्य वै ( तस्य मार्गो वनस्य तु ).

(४) भा. १२।१४१।२१ ; भामु. १२।१४३।२३ वात ( वर्ष ) उत्तरार्धे ( मृगसिंहवराहाश्च स्थलमाश्रित्य शेरते ॥ ).

(५) भा. १२।१४१।२२ ; भामु. १२।१४३।२४.

(६) भा. १२।१४१।२३ ( ददर्श पतितां ...... चकार सः० ) ; भामु. १२।१४३।२५–२७ त्रैर्जगामैव ( त्रैर्न जगाम ) द्वन ( त्तरु ) नीलं व ( नीलव ).

(७) भामु. १२।१४३।२८–२९.

अथाभवत्क्षणेनैव वियद्विमलतारकम् ।
महत्सर इवोत्फुल्लं कुमुदच्छुरितोदकम् ॥

[१]ताराढ्यं कुमुदाकारमाकाशं निर्मलं च ह ।
मेघैर्मुक्तं नभो दृष्ट्वा लुब्धकः शीतविह्वलः ॥

[२]दिशोऽवलोकयामास वेलां चैव दुरात्मवान् ।
दूरे ग्रामनिवेशश्च तस्माद्देशादिति प्रभो ।
कृतबुद्धिर्वने तस्मिन् वस्तुं तां रजनीं तदा ॥

[३]सोऽञ्जलिं प्रयतः कृत्वा वाक्यमाह वनस्पतिम् ।
शरणं यामि यान्यस्मिन्दैवतानीह भारत ॥

[४]स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य भूतले ।
दुःखेन महताऽऽविष्टस्ततः सुष्वाप पक्षिहा ॥

भीष्म उवाच–

[५]अथ वृक्षस्य शाखायां विहंगः ससुहृज्जनः ।
दीर्घकालोषितो राजंस्तत्र चित्रतनूरुहः ॥

[६]तस्य काल्यं गता भार्या चरितुं नाभ्यवर्तत ।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥

(१) भा. १२।१४१।२४; भामु. १२।१४३।३० च ह (बहु) मेघै (घनै).

(२) भा. १२।१४१।२५; भामु. १२।१४३। ३१–३२ शोऽव (शो वि) वेलां चैव दुरात्मवान् (विगाढां प्रेक्ष्य शर्वरीम्) दूरे ग्राम (दूरतो मे) तस्मा (अस्मा) वने (द्रुमे) तदा (ततः).

(३) भा. १२।१४१।२६; भामु. १२।१४३। ३२–३३ सोऽञ्जलिं प्रयतः (साञ्जलिः प्रणतिं) नीह भारत (नि वनस्पतौ).

(४) भा. १२।१४१।२७; भामु. १२।१४३। ३३–३४.

(५) भा. १२।१४२।१; भामु. १२।१४४।१.

(६) भा. १२।१४२।२; भामु. १२।१४४।२ काल्यं गता (कल्यगता).

[१]वातवर्षं महच्चासीन्न चाऽऽगच्छति मे प्रिया ।
किं नु तत्कारणं येन साऽद्यापि न निवर्तते ॥
अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने ।
तया विरहितं हीदं शून्यमद्य गृहं मम ॥

[२]पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्वतः ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥

[३]यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा ।
अद्य नाभ्येति मे कान्ता न कार्यं जीवितेन मे ॥

[४]न भुङ्क्ते मय्यभुक्ते या नास्नाते स्नाति सुव्रता ।
नातिष्ठत्युपतिष्ठेत शेते च शयिते मयि ॥
हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता ।
प्रोषिते दीनवदना क्रुद्धे च प्रियवादिनी ॥

[५]पतिधर्मरता साध्वी प्राणेभ्योऽपि गरीयसी ।
सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ॥

[६]अनुरक्ता हिता चैव स्निग्धा चैव पतिव्रता ।
यस्य वै तादृशी भार्या धन्यः स मनुजो भुवि ॥

[७]वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहम् ।
प्रासादोऽपि तया हीनः कान्तार इति निश्चितम् ॥

(१) भा. १२।१४२।३–४; भामु. १२।१४४। ३–४.

(२) भामु. १२।१४४।५–६.

(३) भा. १२।१४२।५; भामु. १२।१४४।७ सा रक्त (साऽऽरक्त) नाभ्येति (नाऽऽयाति).

(४) भामु. १२।१४४।८–९.

(५) भा. १२।१४२।६; भामु. १२।१४४।१०,११ पूर्वार्धे (पतिव्रता पतिगतिः पतिप्रियहिते रता ।) अस्य अग्रिमस्य च श्लोकस्य उत्तरार्धयोर्व्यत्यासः ।

(६) भा. १२।१४२।७; भामु. १२।१४४।११,१० पूर्वार्धे (अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ।) वै (स्यात्) मनुजो (पुरुषो).

(७) भामु. १२।१४४।१२–१३.

धर्मार्थकामकालेषु भार्या पुंसः सहायिनी ।
विदेशगमने चास्य सैव विश्वासकारिका ॥
[1]भार्या हि परमो नाथः पुरुषस्येह पठ्यते ।
असहायस्य लोकेऽस्मिँल्लोकयात्रासहायिनी ॥
[2]तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ।
नास्ति भार्यासमं किंचिन्नरस्याऽऽर्तस्य भेषजम् ॥
[3]नास्ति भर्यासमो बन्धुर्नास्ति भार्यासमा गतिः ।
नास्ति भार्यासमो लोके सहायो धर्मसाधनः ॥
[4]यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ॥
[5]एवं विलपतस्तस्य द्विजस्याऽऽर्तस्य तत्र वै ।
गृहीता शकुनघ्नेन भार्या शुश्राव भारतीम् ॥

कपोत्युवाच—

[6]अहोऽतीव सुभाग्याऽहं यस्या मे दयितः पतिः ।
असतो वा सतो वाऽपि गुणानेवं प्रभाषते ॥
[7]न सा स्त्रीत्यभिभाषा स्याद्यस्या भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ।
अग्निसाक्षिकमप्येतद्भर्ता हि शरणं स्त्रियः ॥
[8]दावाग्निनेव निर्दग्धा सपुष्पस्तबका लता ।
भस्मीभवति सा नारी यस्या भर्ता न तुष्यति ॥

---

(१) भा. १२।१४२।८; भामु. १२।१४४।१४ नाथः (ह्यर्थः).

(२) भा. १२।१४२।९; भामु. १२।१४४।१५.

(३) भा. १२।१४२।१०; भामु. १२।१४४।१६ साधनः (संग्रहे).

(४) भामु. १२।१४४।१७.

(५) भा. १२।१४२।११; भामु. १२।१४५।१ 'भीष्म उवाच' इत्यधिकम्, (एवं विलपतस्तस्य श्रुत्वा तु करुणं वचः । गृहीता शकुनिघ्नेन कपोती वाक्यमब्रवीत् ॥).

(६) भामु. १२।१४५।२.

(७) भा. १२।१४२।१२ द्वितीयार्धं नास्ति; भामु. १२।१४५।३ त्यभिभाषा स्याद्यस्या (ह्यभिमन्तव्या यस्यां) मप्येतद् (मित्येत्र) हि शरणं स्त्रियः (वै दैवतं परम्).

(८) भामु. १२।१४५।४.

[1]इति संचिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ।
कपोती लुब्धकेनाथ यत्ता वचनमब्रवीत् ॥
[2]हन्त वक्ष्यामि ते श्रेयः श्रुत्वा च कुरु तत्तथा ।
शरणागतसंत्राता भव कान्त विशेषतः ॥
[3]एष शाकुनिकः शेते तव वासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै प्रयोजय ॥
[4]यो हि कश्चिद्द्विजं हन्याद्गां वा लोकस्य मातरम् ।
शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ॥
[5]याऽस्माकं विहिता वृत्तिः कापोती जातिधर्मतः ।
सा न्याय्याऽऽत्मवता नित्यं त्वद्विधेनाभि-
वर्तितुम् ॥
[6]यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ।
स प्रेत्य लभते लोकानक्षयानिति शुश्रुम ॥
[7]स त्वं संतानवानद्य पुत्रवानपि च द्विज ।
तत्स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य वै ।
पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा ॥
[8]शरीरे मा च संतापं कुर्वीथास्त्वं विहंगम ।
शरीरयात्राकृत्यर्थमन्यान् दारानुपैष्यसि ॥
[9]इति सा शकुनी वाक्यं क्षारकस्था तपस्विनी ।
अतिदुःखान्विता प्रोच्य भर्तारं समुदैक्षत ॥

---

(१) भा. १२।१४२।१३; भामु. १२।१४५।५ नाथ यत्ता वचन (नापि गृहीता वाक्य).

(२) भा. १२।१४२।१४; भामु. १२।१४५।६ च (तु).

(३) भा. १२।१४२।१५; भामु. १२।१४५।७ प्रयोजय (समाचर).

(४) भा. १२।१४२।१६; भामु. १२।१४५।८ गां वा (गां च).

(५) भा. १२।१४२।१७; भामु. १२।१४५।९ याऽस्माकं (अस्माकं) जाति (ज्ञाति) नाभि (नानु).

(६) भा. १२।१४२।१८; भामु. १२।१४५।१०.

(७) भा. १२।१४२।१९; भामु. १२।१४५।११ नपि (नसि) गृह्य वै (गृह्य च).

(८) भामु. १२।१४५।१२.

(९) भा. १२।१४२।२०; भामु. १२।१४५।१३ क्षारक (पञ्जर) प्रोच्य (प्रोक्त्वा).

[1]स पत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
हर्षेण महता युक्तो बाष्पव्याकुललोचनः ॥

[2]तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा ।
पूजयामास यत्नेन स पक्षी पक्षिजीविनम् ॥

[3]उवाच च स्वागतं ते ब्रूहि किं करवाण्यहम् ।
संतापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥

[4]तद्ब्रवीतु भवान् क्षिप्रं किं करोमि किमिच्छसि ।
प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः ॥

[5]अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥

[6]शरणागतस्य कर्तव्यमातिथ्यमिह यत्नतः ।
पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः ॥

[7]पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥

[8]तद्ब्रूहि त्वं सुविस्रब्धो यत्त्वं वाचा वदिष्यसि ।
तत्करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः ॥

[9]तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत् ।
बाधते खलु मा शीतं हिमत्राणं विधीयताम् ॥

(१) भा. १२।१४२।२१ ; भामु. १२।१४६।१ 'भीष्म उवाच' इत्यधिकम्, बाष्प (वाक्यं).

(२) भा. १२।१४२।२२ ; भामु. १२।१४६।२ उत्तरार्धे (स पक्षी पूजयामास यत्नात्तं पक्षिजीविनम् ॥ ).

(३) भा. १२।१४२।२३ ; भामु. १२।१४६।३ च स्वागतं ते (स्वागतं तेऽच) वाण्यहम् (वाणि ते).

(४) भा. १२।१४२।२४ ; भामु. १२।१४६।४.

(५) भामु. १२।१४६।५.

(६) भा. १२।१४२।२५ ; भामु. १२।१४६।६ ध्यमिह (ध्यं हि प्र).

(७) भा. १२।१४२।२६ ; भामु. १२।१४६।७ श्रमी (श्रमे).

(८) भा. १२।१४२।२७ ; भामु. १२।१४६।८ त्वं सुविस्रब्धो (मां सुविश्रब्धो).

(९) भा. १२।१४२।२८ ; भामु. १२।१४६।९ मा (मे) हिमत्राणं (संत्राणं हि).

[1]एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य भूतले ।
यथाशुष्काणि यत्नेन ज्वलनार्थं द्रुतं ययौ ॥

[2]स गत्वाऽङ्गारकर्मान्तं गृहीत्वाऽग्निमथागमत् ।
ततः शुष्केषु पर्णेषु पावकं सोऽभ्यदीदिपत् ॥

अङ्गारकर्मान्तं कर्मारगृहसमीपम् । नीटी.

[3]सुसंदीप्तं महत्कृत्वा तमाह शरणागतम् ।
प्रतापय सुविस्रब्धं स्वगात्राण्यकुतोभयः ॥

[4]स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत् ।
अग्निप्रत्यागतप्राणस्ततः प्राह विहंगमम् ॥

[5]हर्षेण महताऽऽविष्टो वाक्यं व्याकुललोचनः ।
तथेमं शकुनिं दृष्ट्वा विधिदृष्टेन कर्मणा ॥

[6]दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम् ।
तद्वचः स प्रतिश्रुत्य वाक्यमाह विहंगमः ॥

[7]न मेऽस्ति विभवो येन नाशयामि तव क्षुधाम् ।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥

[8]संचयो नास्ति चास्माकं मुनीनामिव कानने ।
इत्युक्त्वा स तदा तत्र विवर्णवदनोऽभवत् ॥

[9]कथं नु खलु कर्तव्यमिति चिन्तापरः सदा ।
बभूव भरतश्रेष्ठ गर्हयन् वृत्तिमात्मनः ॥

(१) भा. १२।१४२।२९ ; भामु. १२।१४६।१० शुष्काणि यत्नेन (शक्त्या हि पर्णैन).

(२) भा. १२।१४२।३० ; भामु. १२।१४६।११ सोऽभ्यदीदिपत् (सोऽप्यदीपयत्).

(३) भा. १२।१४२।३१ ; भामु. १२।१४६।१२ सुसं (स सं) विस्रब्धं (विश्रब्धः).

(४) भा. १२।१४२।३२ ; भामु. १२।१४६।१३ अग्नि (अग्निं).

(५) भामु. १२।१४६।१४.

(६) भा. १२।१४२।३३ ; भामु. १२।१४६।१५ तद्वचः स (स तद्वचः).

(७) भा. १२।१४२।३४ ; भामु. १२।१४६।१६ नाशयामि तव क्षुधाम् (नाशयेयं क्षुधां तव).

(८) भा. १२।१४२।३५ ; भामु. १२।१४६।१७ कानने (भोजने) स तदा (तं तदा).

(९) भा. १२।१४२।३६ ; भामु. १२।१४६।१८ ः सदा (रस्तदा).

[1]मुहूर्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातकम् ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥

[2]इत्युक्त्वा शुष्कपर्णैः स संप्रज्वाल्य हुताशनम् ।
हर्षेण महता युक्तः कपोतः पुनरब्रवीत् ॥

[3]देवानां च मुनीनां च पितॄणां च महात्मनाम् ।
श्रुतपूर्वो मया धर्मो महानतिथिपूजने ॥

[4]कुरुष्वानुग्रहं मेऽद्य सत्यमेतद्ब्रवीमि ते ।
निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने ॥

[5]ततः सत्यप्रतिज्ञो वै स पक्षी प्रहसन्निव ।
तमग्निं त्रिः परिक्रम्य प्रविवेश महीपते ॥

[6]अग्निमध्यं प्रविष्टं तं लुब्धो दृष्ट्वाऽथ पक्षिणम् ।
चिन्तयामास मनसा किमिदं नु कृतं मया ॥

[7]अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा ।
अधर्मः सुमहान् घोरो भविष्यति न संशयः ॥

एव बहुविधं भूरि विललाप स लुब्धकः ।
गर्हयन् स्वानि कर्माणि द्विजं दृष्ट्वा तथागतम् ॥

(१) भा. १२।१४२।३७ ; भामु. १२।१४६।१९ घातकम् (घातिनम्).

(२) भा. १२।१४२।३८ ; भामु. १२।१४६।२० र्णैः स संप्र (र्णैस्तु समु) युक्तः कपोतः पुनर (ऽऽविष्टः स पक्षी वाक्यम).

(३) भा. १२।१४२।३९ ; भामु. १२।१४६।२१ देवानां च मुनीनां (ऋषीणां देवतानां) श्रुतपूर्वो (श्रुतः पूर्वं).

(४) भा. १२।१४२।४० ; भामु. १२।१४६।२२ मेऽद्य (सौम्य).

(५) भा. १२।१४२।४१ ; भामु. १२।१४६।२३ सत्य (कृत) महीपते (महामतिः).

(६) भा. १२।१४२।४२ ; भामु. १२।१४६।२४ मध्यं (मध्ये) तं (तु) ऽथ (तु) नु कृतं मया (वै मया कृतम्).

(७) भा. १२।१४२।४३-४४ ; भामु. १२।१४६। २५-२६.

भीष्म उवाच–

[1]ततस्तं लुब्धकः पश्यन् कृपयाऽभिपरिप्लुतः ।
कपोतमग्नौ पतितं वाक्यं पुनरुवाच ह ॥

[2]किमीदृशं नृशंसेन मया कृतमबुद्धिना ।
भविष्यति हि मे नित्यं पातकं हृदि जीवतः ॥

[3]स विनिन्दन्नथाऽऽत्मानं पुनः पुनरुवाच ह ।
धिङ्मामस्तु सुदुर्बुद्धिं सदा निकृतिनिश्चयम् ।
शुभं कर्म परित्यज्य योऽहं शकुनिलुब्धकः ॥

[4]नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः ।
दत्तः स्वमांसं ददता कपोतेन महात्मना ॥

प्रत्यादेशः धिक्कारपूर्वक उपदेशः । नीटी.

[5]सोऽहं त्यक्ष्ये प्रियान्प्राणान्पुत्रदारं विसृज्य च ।
उपदिष्टो हि मे धर्मः कपोतेनातिधर्मिणा ॥

[6]अद्य प्रभृति देहं स्वं सर्वभोगैर्विवर्जितम् ।
यथा स्वल्पं जलं ग्रीष्मे शोषयिष्याम्यहं तथा ॥

[7]क्षुत्पिपासातपसहः कृशो धमनिसंततः ।
उपवासैर्बहुविधैश्चरिष्ये पारलौकिकम् ॥

(१) भा. १२।१४३।१ ; भामु. १२।१४७।१ ततस्तं (ततः स) कृपयाऽभि (क्षुधयाऽपि) मग्नौ (मग्नि).

(२) भा. १२।१४३।२ ; भामु. १२।१४७।२ हृदि जीवतः (कृतजीविनः).

(३) भा. १२।१४३।३ ; भामु. १२।१४७।२-३ न्दन्नथा (न्दंस्तथा) द्वितीयार्धे (आविश्वास्यः सुदुर्बुद्धिः सदा निकृतिनिश्चयः ।) योऽहं (सोऽहं).

(४) भा. १२।१४३।४ ; भामु. १२।१४७।४ ददता (दहता).

(५) भा. १२।१४३।५ ; भामु. १२।१४७।५ पुत्रदारं विसृज्य (पुत्रान् दारांस्तथैव) नातिधर्मिणा (न महात्मना).

(६) भा. १२।१४३।६ ; भामु. १२।१४७।६ जलं (सरो!).

(७) भा. १२।१४३।७ ; भामु. १२।१४७।७.

[1]अहो देहप्रदानेन दर्शिताऽतिथिपूजना ।
तस्माद्धर्मं चरिष्यामि धर्मो हि परमा गतिः ।
दृष्टो हि धर्मो धर्मिष्ठैर्यादृशो विहगोत्तमे ॥

[2]एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः ।
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः ॥

[3]ततो यष्टिं शलाकाश्च क्षारकं पञ्जरं तथा ।
तांश्च बद्धान्कपोतान्स संप्रमुच्योत्ससर्ज ह ॥

यष्टिं दण्डम् । 'यष्टिशलाकम्' इति पाठे पक्षिसंश्लेषार्थे चिक्कणद्रव्योपेतं दीर्घदण्डं यथेष्टं वर्धयितुं शक्यं षष्टया शलाकाभिः संधितम् । पञ्जरं स्पष्टम् । नीटी.

भीष्म उवाच–

[4]ततो गते शाकुनिके कपोती प्राह दुःखिता ।
संस्मृत्य भर्तारमथो रुदती शोकमूर्छिता ॥

[5]नाहं ते विप्रियं कान्त कदाचिदपि संस्मरे ।
सर्वा वै विधवा नारी बहुपुत्राऽपि खेचर ।
शोच्या भवति बन्धूनां पतिहीना मनस्विनी ॥

[6]लालिताऽहं त्वया नित्यं बहुमानाच्च सान्त्विता ।
वचनैर्मधुरैः स्निग्धैरसक्लृत्सुमनोहरैः ॥

[1]कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।
द्रुमाग्रेषु च रम्येषु रमिताऽहं त्वया प्रिय ॥

[2]आकाशगमने चैव सुखिताऽहं त्वया सुखम् ।
विहृताऽस्मि त्वया कान्त तन्मे नाद्यास्ति किंचन ॥

[3]मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य तु दातारं भर्तारं का न पूजयेत् ॥

[4]नास्ति भर्तृसमो नाथो न च भर्तृसमं सुखम् ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥

[5]न कार्यमिह मे नाथ जीवितेन त्वया विना ।
पतिहीनाऽपि का नारी सती जीवितुमुत्सहेत् ॥

[6]एवं विलप्य बहुधा करुणं सा सुदुःखिता ।
पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ॥

[7]ततश्चित्राम्बरधरं भर्तारं साऽन्वपश्यत ।
विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः ॥

[8]चित्रमाल्याम्बरधरं सर्वाभरणभूषितम् ।
विमानशतकोटीभिरावृतं पुण्यकीर्तिभिः ॥

---

(१) भा. १२।१४३।८; भामु. १२।१४७।८–९ हि धर्मो धर्मिष्ठैर्या (धर्मो हि धर्मिष्ठे या).

(२) भा. १२।१४३।९; भामु. १२।१४७।९–१०.

(३) भा. १२।१४३।१०; भामु. १२।१४७।११ कांश्च (कां च) उत्तरार्धे (तां च बद्धां कपोतीं स प्रमुच्य विससर्ज ह ॥).

(४) भा. १२।१४४।१; भामु. १२।१४८।१ भर्तारमथो (सा च भर्तारं) मूर्छिता (कर्शिता).

(५) भा. १२।१४४।२; भामु. १२।१४८।२–३ सर्वा वै (सर्वाऽपि) खेचर (शोचते) मनस्विनी (तपस्विनी).

(६) भा. १२।१४४।३; भामु. १२।१४८।३–४ सान्त्विता (पूजिता) रसक्लृत्सु (रसंक्लिष्ट).

(१) भा. १२।१४४।४; भामु. १२।१४८।४–५ प्रिय (सह).

(२) भा. १२।१४४।५; भामु. १२।१४८।५–६ सुखिता (विहृता) विहृताऽस्मि त्वया (रमामि स्म पुरा) नाद्यास्ति (नास्त्यद्य).

(३) भा. १२।१४४।६; भामु. १२।१४८।६–७ माता (भ्राता) तु (हि).

(४) भा. १२।१४४।७; भामु. १२।१४८।७–८ न च (नास्ति).

(५) भा. १२।१४४।८; भामु. १२।१४८।८–९ ऽपि (तु).

(६) भा. १२।१४४।९; भामु. १२।१४८।९–१०.

(७) भा. १२।१४४।१०; भामु. १२।१४८।१०–११ त्राम्बर (त्राङ्गद).

(८) भा. १२।१४४।११; भामु. १२।१४८।११–१२ कीर्तिभिः (कर्मभिः).

[१]ततः स्वर्गगतः पक्षी भार्यया सह संगतः ।
कर्मणा पूजितस्तेन रेमे तत्र स भार्यया ॥

भीष्म उवाच-

[२]विमानस्थौ तु तौ राजन् लुब्धको वै ददर्श ह ।
दृष्ट्वा तौ दंपती दुःखादचिन्तयत सद्गतिम् ॥

[३]कीदृशेनेह तपसा गच्छेयं परमां गतिम् ।
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥

[४]महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवनः ।
निश्चेष्टो मारुताहारो निर्ममः स्वर्गकाङ्क्षया ॥

[५]ततोऽपश्यत्सुविस्तीर्णं हृद्यं पद्मविभूषितम् ।
नानाद्विजगणाकीर्णं सरः शीतजलं शुभम् ।
पिपासार्तोऽपि तद् दृष्ट्वा तृप्तः स्यान्नात्र संशयः ॥

[६]उपवासकृशोऽत्यर्थं स तु पार्थिव लुब्धकः ।
उपसर्पत संहृष्टः श्वापदाध्युषितं वनम् ॥

[७]महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह ।
प्रविशन्नेव च वनं निगृहीतः स कण्टकैः ॥

(१) भा. १२।१४४।१२; भामु. १२।१४८।१२ पूर्वार्धे (ततः स्वर्ग गतः पक्षी विमानवरमास्थितः।) स्तेन (स्तत्र) तत्र स (स सह)।

(२) भा. १२।१४५।१; भामु. १२।१४९।१ को वै (कः खे) उत्तरार्धे (दृष्ट्वा तौ दम्पती राजन् व्यचिन्तयत तां गतिम् ॥)।

(३) भा. १२।१४५।२; भामु. १२।१४९।२ कीदृशेनेह (ईदृशेनैव)।

(४) भा. १२।१४५।३; भामु. १२।१४९।३ जीवनः (जीवकः) मारुता (मरुदा)।

(५) भा. १२।१४५।४; भामु. १२।१४९।४-५ पद्मवि (पद्माभि) द्विज (पक्षि) शुभम् (शिवम्)।

(६) भा. १२।१४५।५; भामु. १२।१४९।५-६ उपसर्पत (अनवेक्ष्यैव)।

(७) भा. १२।१४५।६; भामु. १२।१४९।६-७ च वनं (स वनं)।

[१]स कण्टकविभुग्नाङ्गो लोहितार्द्रीकृतच्छविः ।
बभ्राम तस्मिन् विजने नानामृगसमाकुले ॥

[२]ततो द्रुमाणां महतां पवनेन वने तदा ।
उदतिष्ठत संघर्षात्सुमहान् हव्यवाहनः ॥

[३]तद्वनं वृक्षसंकीर्णं लताविटपसंकुलम् ।
ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः ॥

[४]सज्वालैः पवनोद्धूतैर्विस्फुलिङ्गैः समन्वितः ।
ददाह तद्वनं घोरं मृगपक्षिसमाकुलम् ॥

[५]ततः स देहमोक्षार्थं संप्रहृष्टेन चेतसा ।
अभ्यधावत संवृद्धं पावकं लुब्धकस्तदा ॥

[६]ततस्तेनाग्निना दग्धो लुब्धको नष्टकिल्बिषः ।
जगाम परमां सिद्धिं तदा भरतसत्तम ॥

[७]ततः स्वर्गस्थमात्मानं सोऽपश्यद्विगतज्वरः ।
यक्षगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् ॥

[८]एवं खलु कपोतश्च कपोती च पतिव्रता ।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्मणा ॥

(१) भा. १२।१४५।७; भामु. १२।१४९।७-८ कण्टकविभुग्नाङ्गो (कण्टकैर्विभिन्नाङ्गो)।

(२) भा. १२।१४५।८; भामु. १२।१४९।८-९ महतां (महता)।

(३) भा. १२।१४५।९; भामु. १२।१४९।९-१० संकीर्णं (संपूर्णं)।

(४) भा. १२।१४५।१०; भामु. १२।१४९। १०-११ पूर्वार्धे (स ज्वालैः पवनोद्भूतैर्विस्फुलिङ्गैः समन्ततः।)।

(५) भा. १२।१४५।११; भामु. १२।१४९। ११-१२ संवृद्धं (वर्धन्तं)।

(६) भा. १२।१४५।१२; भामु. १२।१४९।१२ किल्बिषः (कल्मषः) तदा (ततो)।

(७) भा. १२।१४५।१३; भामु. १२।१४९।१३ त्मानं सोऽ (त्मानम)।

(८) भा. १२।१४५।१४-१६; भामु. १२।१४९। १४-१६ रा वृत्तं (रावृत्तं)।

याऽपि चैवंविधा नारी भर्तारमनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥
एवमेतत्पुरा वृत्तं लुब्धकस्य महात्मनः ।
कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्मणा ॥
[1]यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत् ।
नाशुभं विद्यते तस्य मनसाऽपि प्रमाद्यतः ॥
[2]युधिष्ठिर महानेष धर्मो धर्मभृतां वर ।
गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्मणः ।
निष्कृतिर्न भवेत्तस्मिन् यो हन्याच्छरणागतम् ॥
[3]इतिहासमिमं श्रुत्वा पुण्यं पापप्रणाशनम् ।
न दुर्गतिमवाप्नोति स्वर्गलोकं च गच्छति ॥

राज्ञः षट् पवित्राणि

[4]यज्ञो दानं दया वेदाः सत्यं च पृथिवीपते ।
पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ॥
तदेव राज्ञां परमं पवित्रं जनमेजय ।
तेन सम्यग्गृहीतेन श्रेयांसं धर्ममाप्स्यसि ॥
[5]यत्त्वेव राज्ञो ज्यायो वै कार्याणां तद्वदामि ते ।
बलेन संविभागैश्च जय स्वर्गं पुनीष्व च ॥
[6]यस्यैवं बलमोजश्च स धर्मस्य प्रभुर्नरः ।
ब्राह्मणानां सुखार्थं त्वं पर्येहि पृथिवीमिमाम् ॥

(१) भा. १२।१४५।१७ ; भामु. १२।१४९।१७ प्रमाद्यतः (प्रसादतः).

(२) भा. १२।१४५।१८ ; भामु. १२।१४९। १८-१९ निष्कृतिर्न भवेत्तस्मिन् ( न निष्कृतिर्भवेत्तस्य ).

(३) भामु. १२।१४९।१९.

(४) भा. १२।१४८।६-७ ; भामु. १२।१५२। ७-८.

(५) भा. १२।१४८।१६ ; भामु. १२।१५२। १७-१८ ज्यायो वै ( ज्यायिष्ठं ) वदामि ( ब्रवीमि ) पुनीष्व च ( जनेश्वर ).

(६) भा. १२।१४८।१७ ; भामु. १२।१५२। १८-१९ यस्यैवं ( यस्यैव ) उत्तरार्धे ( ब्राह्मणार्थे सुखार्थं हि त्वं पाहि वसुधां नृप ॥ ).

बलेन धैर्येण । संविभागैः दानैः । ओजः इन्द्रियपाटवम् । नीटी.

[1]यथैवैनान् पुराऽक्षैप्सीस्तथैवैनान् प्रसादय ॥

श्रियः सत्यदानव्रततपःपराक्रमधर्मेषु वसतिः

शक्र उवाच–

[2]कथं त्वया बलिस्त्यक्तः किमर्थं वा शिखण्डिनि ।
कथं च मां न जह्यास्त्वं तन्मे ब्रूहि शुचिस्मिते ॥

श्रीरुवाच–

सत्ये स्थिताऽस्मि दाने च व्रते तपसि चैव हि ।
पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥
[3]ब्रह्मण्योऽयं सदा भूत्वा सत्यवादी जितेन्द्रियः ।
अभ्यसूयद्ब्राह्मणान् वै उच्छिष्टश्चास्पृशद्घृतम् ॥
[4]यज्ञशीलः पुरा भूत्वा मामेव यजतेत्ययम् ।
प्रोवाच लोकान् मूढात्मा कालेनोपनिपीडितः ॥
[5]अपाकृता ततः शक्र त्वयि वत्स्यामि वासव ।
अप्रमत्तेन धार्याऽस्मि तपसा विक्रमेण च ॥

ब्राह्मणाः पूज्याः

युधिष्ठिर उवाच–

[6]के पूज्याः के नमस्कार्याः कान्नमस्यसि भारत ।
एतन्मे सर्वमाचक्ष्व येषां स्पृहयसे नृप ॥

'के पूज्याः' इत्यादिना पूर्वोक्तधर्मान् विवृणोति । तत्रापि 'चक्षुर्दद्यात्' (भामु. १३।७।६) इत्यादिना आतिथ्यं कर्तव्यमुक्तं तद्विवृणोत्यध्यायेन । नीटी.

(१) भा. १२।१४८।१८ ; भामु. १२।१५२।१९ ( यथैवैतान् पुराऽक्षेप्सीस्तथैवैतान् प्रसादय ॥ ).

(२) भा. १२।२१८।११-१२ ; भामु. १२।२२५। ११-१२.

(३) भा. १२।२१८।१३ ; भामु. १२।२२५।१३ सदा ( पुरा ) णान् वै उ ( णानामु ).

(४) भा. १२।२१८।१४ ; भामु. १२।२२५।१४ पुरा ( सदा ) तेत्ययम् ( ते स्वयम् ).

(५) भा. १२।२१८।१५ ; भामु. १२।२२५।१५.

(६) भा. १३।८।१ ; भामु. १३।८।१ येषां ( येभ्यः ).

[1]उत्तमापद्गतस्यापि यत्र ते वर्तते मनः ।
मनुष्यलोके सर्वस्मिन् यदमुत्रेह चाप्युत ॥

यदमुत्रेह च हितं तद्वदेति शेषः । नीटी.

भीष्म उवाच–

[2]स्पृहयामि द्विजातीनां येषां ब्रह्म परं धनम् ।
येषां स्वप्रत्ययः स्वर्गस्तपःस्वाध्यायसाधनः ॥

ब्रह्म आनन्दात्मा । स्वर्गः सत्यसंकल्पत्वादिसिद्धिः । तपःस्वाध्यायौ साधनं यस्य स्वर्गस्य । 'यस्तमात्मानमनुविद्य विजानाति सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' इति श्रुतेः सः स्वप्रत्ययः । नीटी.

[3]येषां वृद्धाश्च बालाश्च पितृपैतामहीं धुरम् ।
उद्वहन्ति न सीदन्ति तेषां वै स्पृहयाम्यहम् ॥

[4]विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम् ।
श्रुतवृत्तोपपन्नानां सदाऽक्षरविदां सताम् ॥

अक्षरं ब्रह्म, तद्विदाम् । नीटी.

[5]संसत्सु वदतां येषां हंसानामिव संघशः ।
मङ्गल्यरूपा रुचिरा दिव्यजीमूतनिःस्वनाः ॥

हंससादृश्यं क्षीरनीरयोरिवाऽऽत्मानात्मनोर्विवेचनात् । नीटी.

[6]सम्यगुच्चारिता वाचः श्रूयन्ते हि युधिष्ठिर ।
शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः ॥

नृपतौ नृपतेः समीपे उच्चरिताः । नीटी.

[7]ये चापि तेषां श्रोतारः सदा सदसि संमताः ।
विज्ञानगुणसंपन्नास्तेषां च स्पृहयाम्यहम् ॥

[1]सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च ।
ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठिर ।
ये चापि सततं राजंस्तेषां च स्पृहयाम्यहम् ॥

[2]शक्यं ह्येवाऽऽहवे योद्धुं न दातुमनसूयितम् ।
शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर ।
तेषां संख्यायमानानां दानशूरो विशिष्यते ॥

अनसूयितं असूयावर्ज्यं यथा स्यात्तथा । नीटी.

[3]धन्यः स्यां यद्यहं भूयः सौम्य ब्राह्मणकोऽपि वा ।
कुले जातो धर्मगतिस्तपोविद्यापरायणः ॥

ब्राह्मणकः कुत्सितब्राह्मणोऽपि यद्यहं स्यां तर्हि धन्यः, किमुत कुले जातः ? नीटी.

[4]न मे त्वत्तः प्रियतरो लोकेऽस्मिन् पाण्डुनन्दन ।
त्वत्तश्च मे प्रियतरा ब्राह्मणा भरतर्षभ ॥

[5]यथा मम प्रियतरास्त्वत्तो विप्राः कुरूद्वह ।
तेन सत्येन गच्छेयं लोकान् यत्र स शंतनुः ॥

[6]न मे पिता प्रियतरो ब्राह्मणेभ्यस्तथाऽभवत् ।
न मे पितुः पिता वाऽपि ये चान्येऽपि सुहृज्जनाः ॥

[7]न हि मे वृजिनं किंचिद्विद्यते ब्राह्मणेष्विह ।
अणु वा यदि वा स्थूलं विदितं साधुकर्मभिः ॥

वृजिनं संकटम्, फलाशेति यावत् । पूज्यत्वादेव तान् पूजयामि, न तु फलायेत्यर्थः । नीटी.

---

(१) भा. १३।८।२ ; भामु.

(२) भा. १३।८।३ ; भामु. १३।८।३ जातीनां (जातिभ्यो) साधनः ( साधनम् ).

(३) भा. १३।८।४ ; भामु. १३।८।४ वृद्धाश्च बालाश्च ( बालाश्च वृद्धाश्च ) तेषां ( तेभ्यो ).

(४) भा. १३।८।५ ; भामु.

(५) भा. १३।८।६ ; भामु. १३।८।६ येषां ( तात ).

(६) भा. १३।८।७ ; भामु. १३।८।७ चारिता ( चरिता).

(७) भा. १३।८।८ ; भामु. १३।८।८ स्तेषां च (स्तेभ्यश्च).

(१) भा. १३।८।९ ; भामु. १३।८।९–१० स्तेषां च ( स्तेभ्यश्च ).

(२) भा. १३।८।१० ; भामु. १३।८।१०–११ तेषां (येषां).

(३) भा. १३।८।११ ; भामु. १३।८।१२.

(४) भा. १३।८।१२ ; भामु. १३।८।१३ श्च मे ( श्चापि ).

(५) भा. १३।८।१३ ; भामु. १३।८।१४ तरा ( तमा ) कुरूद्वह ( कुरूत्तम ) शंतनुः ( शांतनुः ).

(६) भा. १३।८।१४ ; भामु. १३।८।१५.

(७) भा. १३।८।१५ ; भामु. १३।८।१६ विदितं साधुकर्मभिः ( विद्यते साधु कर्मसु ).

[1]कर्मणा मनसा वाऽपि वाचा वाऽपि परंतप ।
यन्मे कृतं ब्राह्मणेषु तेनाद्य न तपाम्यहम् ॥
तेन ब्राह्मणाराधनेन अद्य शरपञ्जरस्थोऽपि न तपामि न व्यथां प्राप्नोमि इति स्वानुभवं दर्शयति । नीटी.

[2]ब्रह्मण्य इति मामाहुस्तया वाचाऽस्मि तोषितः ।
एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम् ॥
ब्रह्मण्यः ब्रह्मजातौ आसक्तः । नीटी.

पश्यामि लोकानमलाञ्शुचीन् ब्राह्मणयायिनः ।
तेषु मे तात गन्तव्यमह्नाय च चिराय च ॥
यायिनः अनुचरस्य मे । नीटी.

ब्राह्मणा रक्षणीयाः

[3]यथा पत्याश्रयो धर्मः स्त्रीणां लोके युधिष्ठिर ।
स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः ॥
[4]क्षत्रियः शतवर्षी च दशवर्षी च ब्राह्मणः ।
पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणः पिता ॥
[5]नारी तु पत्यभावे वै देवरं कुरुते पतिम् ।
पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम् ॥
पुत्रवच्च ततो रक्ष्या उपास्या गुरुवच्च ते ।
अग्निवच्चोपचर्या वै ब्राह्मणाः कुरुसत्तम ॥
[6]ऋजून् सतः सत्यशीलान् सर्वभूतहिते रतान् ।
आशीविषानिव क्रुद्धान् द्विजानुपचरेत्सदा ॥
[7]तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर ।
उभे चैते परित्याज्ये तेजश्चैव तपस्तथा ॥
ब्राह्मणाद्बिभ्येत्, न तु तत्र तेजस्तपसी स्वीये प्रकाशयेदित्यर्थः । तेजः क्रोधबलम् । तपः योगबलम् । नीटी.

(१) भा. १३।८।१६; भामु. १३।८।१७ णेषु ते (णेभ्यस्ते).
(२) भा. १३।८।१७-१८; भामु. १३।८।१८-१९.
(३) भा. १३।८।१९; भामु. १३।८।२० पत्या (भर्त्रा).
(४) भा. १३।८।२०; भामु. १३।८।२१ च ब्राह्मणः (द्विजोत्तमः) णः पिता (णो गुरुः?).
(५) भा. १३।८।२१-२२; भामु. १३।८।२२-२३.
(६) भा. १३।८।२३; भामु. १३।८।२४ जानुप (जान्परि).
(७) भा. १३।८।२४-२५; भामु. १३।८।२५-२६.

व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते ।
हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः ॥
तयोः तपस्तेजसोः ब्राह्मणक्षत्रियस्थयोः व्यवसायः फलं अभिभवरूपं शीघ्रं तीव्रं तथापि तपस्विन एवेतरान् हन्युः, न तेजस्विनः इत्यर्थः । नीटी.

[1]भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात् ।
कुर्यादुभयतःशेषं दत्तशेषं न शेषयेत् ॥
ल्यब्लोपे पञ्चमी । अकोपनं ब्राह्मणं प्राप्य यद् भूयः बहुतरं उभयं तपस्तेजआख्यं स्यात् तद्दत्तं खण्डितं भवतीति शेषः । क्षमावत्सु प्रयुक्तं तत्तेजो बह्वपि तूलराशिवत् सद्यो नश्यतीत्यर्थः । उभयतः उभयं चेत् शेषं कुर्यात्, न तद्दत्तशेषं शेषयेत् इत्यन्वयः । द्वाभ्यामन्योन्यस्मिन् प्रयुक्तं तेजआदिद्वयं न निःशेषं नश्यति, किंतु शेषं क्षमावता खण्डितस्य तस्यावशिष्टं तु न शेषयेत् न शिष्यते, अपि तु निःशेषमेव नश्यतीत्यर्थः । नीटी.

[2]दण्डपाणिर्यथा गोषु पालो नित्यं स्थिरो भवेत् ।
ब्राह्मणान् ब्रह्म च तथा क्षत्रियः परिपालयेत् ॥
[3]पितेव पुत्रान् रक्षेथा ब्राह्मणान् ब्रह्मतेजसः ।
गृहे चैषामवेक्षेथाः कच्चिदस्तीह जीवनम् ॥
अस्तीति । अभावे तद्देयमित्यर्थः । नीटी.
[4]न हर्तव्यं विप्रधनं क्षन्तव्यं तेषु नित्यशः ।
बालाश्च नावमन्तव्या दरिद्राः कृपणा अपि ॥
[5]एवमेव च मां नित्यं ब्राह्मणाः संदिशन्ति वै ।
प्रतिश्रुत्य भवेद्देयं नाऽऽशा कार्या हि ब्राह्मणैः ॥
आशा वन्ध्याशा । नीटी.

(१) भा. १३।८।२६; भामु. १३।८।२७ तःशेषं (तः शेषं).
(२) भा. १३।८।२७; भामु. १३।८।२८ स्थिरो भवेत् (हि रक्षयेत्) ब्राह्मणान् (ब्राह्मणा).
(३) भा. १३।८।२८; भामु. १३।८।२९ ब्रह्मतेजसः (धर्मचेतसः) कच्चिदस्तीह (किंस्विदस्तीति).
(४) भामु. १३।९।१८.
(५) भा. १३।९।१५; भामु. १३।९।१९ हि ब्राह्मणैः (द्विजोत्तमे).

[1]ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते ।
सुसमिद्धो यथा दीप्तः पावकस्तद्विधः स्मृतः ॥
[2]यं निरीक्षेत संक्रुद्ध आशया पूर्वजातया ।
प्रदहेत हि तं राजन् कक्षमक्षय्यभुग्यथा ॥

अक्षय्यं पित्रर्थमुद्दिष्टं दानं भुङ्क्ते इति अक्षय्यभुक् अग्निः । नीटी.

[3]स एव हि यदा तुष्टो वचसा प्रतिनन्दति ।
भवत्यगदसंकाशो विषये तस्य भारत ॥

अगदसंकाशः चिकित्सकतुल्यः । नीटी.

[4]पुत्रान् पौत्रान् पशूंश्चैव बान्धवान् सचिवांस्तथा ।
पुरं जनपदं चैव शान्तिरिष्टेन पुष्यति ॥

शान्तिरिष्टेन शान्त्या हितेन क्षेमेण । 'रिष्टं क्षेमे' इति मेदिनी । नीटी.

[5]एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते ।
सहस्रकिरणस्येव सवितुर्धरणीतले ॥
तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर ।
यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम ॥
[6]ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः ।
शक्यं प्राप्तुं विशेषेण दानं हि महती क्रिया ॥
[7]इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता ॥

इतः अस्मिंल्लोके । ब्राह्मण एवं दानपात्रमिति प्रघट्टकार्थः । नीटी.

(१) भा. १३।९।१६; भामु. १३।९।२०.

(२) भा. १३।९।१७; भामु. १३।९।२१ दहेत (दहेच्च).

(३) भा. १३।९।१८; भामु. १३।९।२२.

(४) भा. १३।९।१९; भामु. १३।९।२३ पुष्यति (पोषयेत्).

(५) भा. १३।९।२०–२१; भामु. १३।९।२४–२५.

(६) भा. १३।९।२२; भामु. १३।९।२६ शक्यं (शक्यः).

(७) भा. १३।९।२३–२४; भामु. १३।९।२७–२८.

महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते ।
वेलायां न तु कस्यांचिद्गच्छेद्विप्रो ह्यपूजितः ॥

तीर्थमपि ब्राह्मण एवेत्याह– महदिति । नीटी.

### शरणागतरक्षणम्

युधिष्ठिर उवाच–

[1]पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
त्वत्तोऽहं श्रोतुमिच्छामि धर्मं भरतसत्तम ॥

'पितामह' इत्यादेरध्यायस्य पक्षिमात्रस्यापि स्वशरीरदानेन रक्षणं कार्यम्, किमुत पूर्वोक्तानां पूज्यानामर्थादिना इति तात्पर्यम् । नीटी.

शरणागतं ये रक्षन्ति भूतग्रामं चतुर्विधम् ।
किं तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः ॥

भीष्म उवाच–

इदं शृणु महाप्राज्ञ धर्मपुत्र महायशः ।
इतिहासं पुरावृत्तं शरणार्थं महाफलम् ॥
प्रपात्यमानः श्येनेन कपोतः प्रियदर्शनः ।
वृषदर्भं महाभागं नरेन्द्रं शरणं गतः ॥

प्रपात्यमानः आकाशादिति शेषः । वृषदर्भं औशीनरं शिबिम् । नीटी.

स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतम् ।
आश्वास्याऽऽश्वसिहीत्याह न तेऽस्ति भयमण्डज ॥
भयं ते सुमहत्कस्मात्कुत्र किं वा कृतं त्वया ।
येन त्वमिह संप्राप्तो विसंज्ञो भ्रान्तचेतनः ॥
नवनीलोत्पलापीड चारुवर्ण सुदर्शन ।
दाडिमाशोकपुष्पाक्ष मा त्रसस्वाभयं तव ॥

नवं नीलं च यदुत्पलं तस्य आपीडः इव अलंकारभूतः चारुर्वर्णो यस्य । नीटी.

मत्सकाशमनुप्राप्तं न त्वां कश्चित्समुत्सहेत् ।
मनसा ग्रहणं कर्तुं रक्षाध्यक्षपुरस्कृतम् ॥
काशिराज्यं तदद्यैव त्वदर्थं जीवितं तथा ।
त्यजेयं भव विस्रब्धः कपोत न भयं तव ॥

(१) भामु. १३।३२।१–३९.

श्येन उवाच–

ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि ।
अतिक्रान्तं च प्राप्तं च प्रयत्नाच्चोपपादितम् ॥

अतिक्रान्तं गतप्रायजीवितम् । नीटी.

मांसं च रुधिरं चास्य मज्जा मेदश्च मे हितम् ।
परितोषकरो ह्येष मम माऽस्याग्रतो भव ॥

अस्य मदन्नस्य अग्रतः अन्तरायभूतः मा भव । नीटी.

तृष्णा मे बाधतेऽत्युग्रा क्षुधा निर्दहतीव माम् ।
मुञ्चैनं न हि शक्ष्यामि राजन् मन्दयितुं क्षुधाम् ॥

तृष्णा एतद्रुधिरपिपासा । नीटी.

मया ह्यनुसृतो ह्येष मत्पक्षनखविक्षतः ।
किंचिदुच्छ्वासनिश्वासं न राजन् गोप्तुमर्हसि ॥
यदि स्वविषये राजन् प्रभुस्त्वं रक्षणे नृणाम् ।
खेचरस्य तृषार्तस्य न त्वं प्रभुरथोत्तम ॥
यदि वैरिषु भृत्येषु स्वजनव्यवहारयोः ।
विषयेष्विन्द्रियाणां च आकाशे मा पराक्रम ॥

यदि वैर्यादिषु पराक्रमसे तद्युक्तम्, न तु आकाशे आकाशचारिषु । नीटी.

प्रभुत्वं हि पराक्रम्य सम्यक् पक्षहरेषु ते ।
यदि त्वमिह धर्मार्थी मामपि द्रष्टुमर्हसि ॥

पक्षहरेषु आज्ञाभङ्गिषु शत्रुषु । मामशत्रुमपि जीवनहरणेन बाधमानस्य तव धर्मार्थिनोऽप्यधर्मो भविष्यतीति भावः । नीटी.

भीष्म उवाच–

श्रुत्वा श्येनस्य तद्वाक्यं राजर्षिर्विस्मयं गतः ।
संभाव्य चैनं तद्वाक्यं तदर्थी प्रत्यभाषत ॥

एनं श्येनं तद्वाक्यं च संभाव्य स्तुत्वा । तदर्थी कपोतार्थी । नीटी.

राजोवाच–

गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां क्षुधाप्रशमनाय ते ॥
शरणागतं न त्यजेयमिति मे व्रतमाहितम् ।
न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज ॥

श्येन उवाच–

न वराहं न चोक्षाणं न चान्यान् विविधान्द्विजान् ।
भक्षयामि महाराज किमन्नाद्येन तेन मे ॥
यस्तु मे विहितो भक्ष्यः स्वयं देवैः सनातनः ।
श्येनाः कपोतान्खादन्ति स्थितिरेषा सनातनी ॥
उशीनर कपोते तु यदि स्नेहस्तवानघ ।
ततस्त्वं मे प्रयच्छाद्य स्वमांसं तुलया धृतम् ॥

राजोवाच–

महाननुग्रहो मेऽद्य यस्त्वमेवमिहाऽऽत्थ माम् ।
बाढमेवं करिष्यामीत्युक्त्वाऽसौ राजसत्तमः ॥
उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत् ।
अन्तःपुरे ततस्तस्य स्त्रियो रत्नविभूषिताः ॥
हाहाभूता विनिष्क्रान्ताः श्रुत्वा परमदुःखिताः ।
तासां रुदितशब्देन मन्त्रिभृत्यजनस्य च ॥
बभूव सुमहान्नादो मेघगम्भीरनिःस्वनः ।
निरुद्धं गगनं सर्वं शुभ्रं मेघैः समन्ततः ॥
मही प्रचलिता चाऽऽसीत्तस्य सत्येन कर्मणा ।
स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत् ॥
तानि मांसानि संछिद्य तुलां पूरयतेऽशनैः ।
तथाऽपि न समस्तेन कपोतेन बभूव ह ॥

अशनैः शीघ्रम् । नीटी.

अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः ।
तुलां ततः समारूढः स्वं मांसक्षयमुत्सृजन् ॥

मांसक्षयं मांसालयं शरीरम् । नीटी.

ततः सेन्द्रास्त्रयो लोकास्तं नरेन्द्रमुपस्थिताः ।
भेर्यश्चाऽऽकाशगैस्तत्र वादिता देवदुन्दुभिः ॥
अमृतेनावसिक्तश्च वृषदर्भो नरेश्वरः ।
दिव्यैश्च सुसुखैर्माल्यैरभिवृष्टः पुनः पुनः ॥
देवगन्धर्वसंघातैरप्सरोभिश्च सर्वतः ।
नृत्तश्चैवोपगीतश्च पितामह इव प्रभुः ॥

नृत्तः नृत्येन तोषितः । एवमुपगीतः । नीटी.

हेमप्रासादसंबाधं मणिकाञ्चनतोरणम् ।
स वैदूर्यमणिस्तम्भं विमानं समधिष्ठितः ॥

स राजर्षिर्गतः स्वर्गं कर्मणा तेन शाश्वतम् ।
शरणागतेषु चैवं त्वं कुरु सर्वं युधिष्ठिर ॥
भक्तानामनुरक्तानामाश्रितानां च रक्षिता ।
दयावान् सर्वभूतेषु परत्र सुखमेधते ॥
साधुवृत्तो हि यो राजा सद्वृत्तमनुतिष्ठति ।
किं न प्राप्तं भवेत्तेन स्वव्याजेनेह कर्मणा ॥

साधुवृत्तः सुशीलः । सद्वृत्तं शिष्टाचारम् । स्वव्याजेन सुतरां निष्कपटेन । नीटी.

स राजर्षिर्विशुद्धात्मा धीरः सत्यपराक्रमः ।
काशीनामीश्वरः ख्यातस्त्रिषु लोकेषु कर्मणा ॥
योऽप्यन्यः कारयेदेवं शरणागतरक्षणम् ।
सोऽपि गच्छेत तामेव गतिं भरतसत्तम ॥

अस्यां कथायां विधेयमाह– योऽपीति । नीटी.

इदं वृत्तं हि राजर्षे वृषदर्भस्य कीर्तयन् ।
पूतात्मा वै भवेल्लोके शृणुयाद्यश्च नित्यशः ॥

ब्राह्मणरक्षणं कर्तव्यम्

युधिष्ठिर उवाच–

[1]किं राज्ञः सर्वकृत्यानां गरीयः स्यात्पितामह ।
किं कुर्वन् कर्म नृपतिरुभौ लोकौ समश्नुते ॥

भीष्म उवाच–

[2]एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत ।
ब्राह्मणानामनुष्ठानमत्यन्तं सुखमिच्छता ॥

अनुष्ठानं आराधनम् । नीटी.

[3]कर्तव्यं पार्थिवेन्द्रेण तथैव भरतर्षभ ।
श्रोत्रियान् ब्राह्मणान् वृद्धान्नित्यमेवाभिपूजयेत् ॥

[1]पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ।
सान्त्वेन भोगदानेन नमस्कारैस्तथाऽर्चयेत् ॥
[2]एतत्कृत्यतमं राज्ञो नित्यमेवेति लक्षयेत् ।
यथाऽऽत्मानं यथा पुत्रांस्तथैतान् परिपालयेत् ॥
[3]ये चाप्येषां पूज्यतमास्तान् दृढं प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥

एषां ब्राह्मणानां मध्ये । नीटी.

[4]ते पूज्यास्ते नमस्कार्यास्ते रक्ष्याः पितरो यथा ।
तेष्वेव यात्रा लोकस्य भूतानामिव वासवे ॥
[5]अभिचारैरुपायैश्च दहेयुरपि तेजसा ।
निःशेषं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः ॥

वासवे पर्जन्ये । अभिचारैः श्येनादिभिः उपायैः कौलिकशास्त्रप्रसिद्धैः । चेतसा संकल्पमात्रेण । नीटी.

[6]नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः ।
कुपिताः समुदीक्षन्ते दावेष्वग्निशिखा इव ॥

अन्तं नाशकरम् । दिशश्चैषां न अपावृताः सर्वत्राकुण्ठिता गतिरेतेषामित्यर्थः । अग्निशिखा इव दहन्तः । नीटी.

[7]विद्यन्तेषां साहसिका गुणास्तेषामतीव हि ।
कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे ॥

---

(१) भा. १३।३३।१ ; भामु. १३।३३।१ किं कुर्वन् ( कुर्वन् किं ).

(२) भा. १३।३३।२ ; भामु. ; राक. १७५ छान (ज्ञान) मिच्छता (मिच्छतः) ; राप्र. १४४ छान (ज्ञात).

(३) भा. १२।३३।२ उत्त. ; भामु. १३।३३।३ ; राक. १७५ वेन्द्रेण तथैव (वेनेह तद्विद्धि) ब्राह्मणान् (स्नातकान्) ; राप्र. १४४ राकवत्.

(१) भा. १३।३३।३ ; भामु. १३।३३।४ ; राक. १७५–१७६ थाऽर्चयेत (थेज्यया) ; राप्र. १४४ राकवत्.

(२) भा. १३।३३।४ ; भामु. १३।३३।५ वेति ल (वोपल) परि (प्रति) ; राक. १७६ राज्ञो (राज्ञां) वेति ल (वाभिल) ; राप्र. १४४ राकवत्.

(३) भा. १३।३३।५ ; भामु. १३।३३।६ प्रतिपू (प्रति पू) ; राक. १७६ दृढं (नृपः) ; राप्र. १४४ राकवत्.

(४) भा. १३।३३।६ ; भामु. १३।३३।७ र्यास्ते रक्ष्याः (र्या मान्यास्ते) लोकस्य (लोकानां).

(५) भा. १३।३३।७ ; भामु. १३।३३।८ तेजसा (चेतसा).

(६) भा. १३।३३।८ ; भामु. १३।३३।९.

(७) भा. १३।३३।९ ; भामु. १३।३३।१० विद्यन्तेषां (विभ्यत्येषां).

एषां एभ्यः साहसिकाः अकार्यकारिणोऽपि बिभ्यति, किमुत विवेकिनः ? छन्नाः केचिज्जडभरतादयः । अपरे वसिष्ठादयः । नीटी.

[१]प्रसह्यकारिणः केचित्कार्पासमृदवोऽपरे ।
सन्ति चैषामतिशठास्तथाऽन्येऽतितपस्विनः ॥

प्रसह्यकारिणः दुर्वासःप्रभृतयः । मृदवः गौतमादयः, ये पादचारेऽपि हिंसाभयात् पादयोरेवाक्षि चक्रुः इत्यक्षपादत्वं गताः । अतिशठाः अगस्त्यादयः वातापिं जरयितुं मांसे लोलुपतां दर्शयन्तः । नीटी.

[२]कृषिगोरक्ष्यमप्यन्ये भैक्ष्मन्येऽप्यनुष्ठिताः ।
चोराश्चान्येऽनृताश्चान्ये तथाऽन्ये नटनर्तकाः ॥

कृषिं कुर्वन्तः उद्दालकगुर्वादयः । गोरक्ष्यं गुरोरेव, उपमन्युप्रभृतयः । भैक्ष्यं दत्तात्रेयादयः । चौराः वाल्मिकिविश्वामित्रादयः । अनृताः कलहप्रियाः नारदादयः । नटनर्तकाः भरतादयः । नीटी.

[३]सर्वकर्मसु दृश्यन्ते प्रशान्तेष्वितरेषु च ।
विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ ॥

सर्वकर्मसहाः समुद्रशोषणादावपि समर्थाः । नीटी.

[४]नानाकर्मसु युक्तानां बहुकर्मोपजीविनाम् ।
धर्मज्ञानां सतां तेषां नित्यमेवानुकीर्तयेत् ॥

स्वरूपप्रच्छादनार्थं लोकरक्षार्थं वा निषिद्धेनापि कर्मणा वर्तमानाः, वस्तुतस्तु धर्मज्ञाः, तेषां तान् नित्यमेवानुकीर्तयेत् । नीटी.

(१) भा. १३।३३।१०; भामु. १३।३३।११ थाऽन्येऽति ( थैवान्ये ).

(२) भा. १३।३३।११; भामु. १३।३३।१२ प्यन्ये भैक्ष ( प्येके भैक्ष्य ) चोरा ( चौरा ).

(३) भा. १३।३३।१२; भामु. १३।३३।१३ सु दृश्यन्ते प्रशान्ते ( सहाश्चान्ये पार्थिवे ) चार ( कार ).

(४) भा. १३।३३।१३; भामु. १३।३३।१४ युक्तानां ( रक्तानां ).



[१]पितॄणां देवतानां च मनुष्योरगरक्षसाम् ।
पुरोहिता महाभागा ब्राह्मणा वै नराधिप ॥

एते पूज्याः इति शेषः । यतो महाभागाः । नीटी.

[२]नैते देवैर्न पितृभिर्न गन्धर्वैर्न राक्षसैः ।
नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ॥

[३]अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
यमिच्छेयुः स राजा स्याद्यं द्विष्युः स पराभवेत् ॥

[४]परिवादं च ये कुर्युर्ब्राह्मणानामचेतसः ।
सत्यं ब्रवीमि ते राजन् विनश्येयुर्न संशयः ॥

[५]निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरावराः ।
परिकुप्यन्ति ते राजन् सततं द्विषतां द्विजाः ॥

परायणाः हेतवः । नीटी.

[६]ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते ।
ब्राह्मणैर्यः पराकृष्टः पराभूयात्क्षणाद्धि सः ॥

[७]शका यवनकाम्बोजास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥

अदर्शनात् अननुग्रहात् । नीटी.

[८]द्रमिळाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कौलाः सर्पा माहिषकास्तास्ताः क्षत्रियजातयः ॥

(१) भा. १३।३३।१४; भामु. १३।३३।१५ पुरोहिता ( पुराऽप्येते ) नरा ( जना ).

(२) भा. १३।३३।१५; भामु. १३।३३।१६.

(३) भा. १३।३३।१६; भामु. १३।३३।१७ यं द्विष्युः ( यो नेष्टः ).

(४) भा. १३।३३।१७ पू.; भामु. १३।३३।१८.

(५) भा. १३।३३।१७; भामु. १३।३३।१९ वराः ( यणाः ).

(६) भा. १३।३३।१८; भामु. १३।३३।२० कृष्टः ( क्रुष्टः ).

(७) भा. १३।३३।१९; भामु. १३।३३।२१.

(८) भा. १३।३३।२०; भामु. १३।३३।२२ द्रमिळा ( द्राविडा ) कौलाः सर्पा माहि ( कौलिसर्पा महि ).

[1]वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ।
श्रेयान् पराजयस्तेभ्यो न जयो जयतां वर ॥
यस्तु सर्वमिदं हन्याद्ब्राह्मणं च न तत्समम् ।
ब्रह्मवध्या महान् दोष इत्याहुः परमर्षयः ॥

[2]परिवादो द्विजातीनां न श्रोतव्यः कथंचन ।
आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा ॥

[3]न स जातोऽजनिष्यो वा पृथिव्यामिह कश्चन ।
यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् ॥

[4]दुर्ग्रहो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि ॥

भीष्म उवाच—

[5]ब्राह्मणानेव सततं भृशं संप्रतिपूजयेत् ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥

'ब्राह्मणान्' इत्याद्यध्यायत्रयेण दानपात्रत्वं ब्राह्मणानामुच्यते । सोमो राजा येषां ते सोमराजानः । नीटी.

[6]एते भोगैरलंकारैरन्यैश्चैव किमिच्छकैः ।
सदा पूज्या नमस्कार्या रक्ष्याश्च पितृवन्नृपैः ।
अतो राष्ट्रस्य शान्तिर्हि भूतानामिव वासवात् ॥

किमिच्छतीति प्रश्नपूर्वकं यत्तदिष्टं दीयते तत् किमिच्छकम् । नीटी.

[1]जायतां ब्रह्मवर्चस्वी राष्ट्रे वै ब्राह्मणः शुचिः ।
महारथश्च राजन्य एष्टव्यः शत्रुतापनः ॥
ब्राह्मणं जातिसंपन्नं धर्मज्ञं संशितव्रतम् ।
वासयेत गृहे राजन्न तस्मात्परमस्ति वै ॥

[2]न ब्राह्मणविरोधेन शक्या शास्तुं वसुंधरा ।
ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥
तान् पूजयस्व सततं दानेन परिचर्यया ।
यदीच्छसि महीं भोक्तुमिमां सागरमेखलाम् ॥

[3]प्रतिग्रहेण तेजो हि विप्राणां शाम्यतेऽनघ ।
प्रतिग्रहं ये नेच्छेयुस्तेऽपि रक्ष्यास्त्वयाऽनघ ॥

तेभ्यो रक्ष्यं स्वकुलमिति शेषः । नीटी.

[4]श्रीश्च राज्यं च कोशश्च क्षत्रियाणां युधिष्ठिर ।
विहितं दृश्यते राजन् सागरान्ता च मेदिनी ॥

[5]क्षत्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम् ।
राजा दण्डधरो राजन् रक्षा नान्यत्र क्षत्रियात् ॥

[6]ब्राह्मणा हि महाभागा देवानामपि देवताः ।
तेषु राजा प्रवर्तेत पूजया विधिपूर्वकम् ॥

[7]प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् ।
लुप्यमानाः स्वधर्मेण क्षत्रियो रक्षति प्रजाः ॥

[8]दस्युभिर्ह्रियमाणं च धनं दारांश्च सर्वशः ।
सर्वेषामेव वर्णानां त्राता भवति पार्थिवः ॥

---

(१) भा. १३।३३।२१–२२; भामु. १३।३३।२३–२४.

(२) भा. १३।३३।२३; भामु. १३।३३।२५ व्रजेत (व्रजेच्च).

(३) भा. १३।३३।२४; भामु. १३।३३।२६ निष्यो वा (निष्यद्वा).

(४) भा. १३।३३।२५; भामु. १३।३३।२७ दुर्ग्रहो (दुर्ग्राह्यो) मूर्ध्ना (राजन्).

(५) भा. १३।३४।१; भामु. १३।३४।१ संप्रति (संपरि).

(६) भा. १३।३४।२; भामु. १३।३४।२–३ स्कार्या (स्कारै) अतो (ततो).

(१) भा. १३।३४।३–४; भामु. १३।३४।३–५.

(२) भा. १३।३५।२१–२२; भामु.

(३) भा. १३।३५।२३; भामु. १३।३५।२३ स्तेऽपि रक्ष्यास्त्वयाऽनघ (स्तेभ्यो रक्ष्यं त्वया नृप).

(४) भा. १३।४७।४०; भामु. १३।४७।४०–४१ न्ता च मेदिनी (न्तां च मेदिनीम्).

(५) भा. १३।४७।४१; भामु.

(६) भा. १३।४७।४२; भामु. १३।४७।४२ राजा (राजन्).

(७) भा. १३।४७।४३; भामु. १३।४७।४३ मानाः (मानं) रक्षति प्रजाः (ह्येष रक्षति).

(८) भा. १३।४७।४४; भामु.

भीष्म उवाच–

[1]रौद्रं कर्म क्षत्रियस्य सततं तात वर्तते ।
तस्य वैतानिकं कर्म दानं चैवेह पावनम् ।।
न तु पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
एतस्मात्कारणाद्यज्ञैर्यजेद्राजाऽऽप्तदक्षिणैः ।।
अथ चेत्प्रतिगृह्णीयुर्दद्यादहरहर्नृपः ।
श्रद्धामास्थाय परमां पावनं ह्येतदुत्तमम् ।।

यज्ञाद्दानस्याऽऽधिक्यं वर्णयति– न त्विति द्वाभ्याम् । एतत् दानम् । नीटी.

[2]ब्राह्मणांस्तर्पयेद्द्रव्यैस्ततो यज्ञे यतव्रतः ।
मैत्रान् साधून् वेदविदः शीलवृत्ततपोन्वितान् ।।

तपोर्जितान्, संधिरार्षः । नीटी.

[3]यत्ते तेन करिष्यन्ति कृतं तेन भविष्यति ।
यज्ञान् साधय साधुभ्यः स्वाद्वन्नान्दक्षिणावतः ।।

यत् यदि ते ब्राह्मणाः ते तव न करिष्यन्ति, प्रतिग्रहमिति शेषः । तर्हि कृतं सुकृतं ते तव न भविष्यति । तदा सुकृतोत्पत्त्यर्थं यज्ञान् साधय । नीटी.

[4]इष्टं दत्तं च मन्येथा आत्मानं दानकर्मणा ।
पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा ।।

दाने यज्ञादिकमन्तर्भवति । याज्ञिकेभ्यो दत्तं चेत् तत्कृतस्य यज्ञस्य श्रेयोंऽशस्तवापि भविष्यतीति न यज्ञार्थमत्युत्सुको भूरित्यर्थः । नीटी.

[5]प्रजावतो भरेथाश्च ब्राह्मणाम् बहुभारिणः ।
प्रजावांस्तेन भवति यथा जनयिता तथा ।।

जनयिता प्रजापतिः । नीटी.

[1]यावतो वै साधुधर्मान् सन्तः संवर्तयन्त्युत ।
सर्वे ते चापि भर्तव्या नरा ये बहुभारिणः ।।

धर्मान् पञ्चातिथिभिः समेत एव भोक्ष्ये इत्यादीन् ये सन्तः संवर्धयन्ति ते सर्वस्वैर्भर्तव्या राज्ञा । तस्य राज्ञस्ते सन्तो बहुकारिणः अत्यन्तमुपकर्तारः भवन्ति । नीटी.

[2]समृद्धः संप्रयच्छस्व ब्राह्मणेभ्यो युधिष्ठिर ।
धेनूरनडुहोऽन्नानि च्छत्रं वासांस्युपानहौ ।।

[3]आज्यानि यजमानेभ्यस्तथाऽन्नाद्यानि भारत ।
अश्ववन्ति च यानानि वेश्मानि शयनानि च ।।

[4]एते देया व्युष्टिमन्तो लघूपायाश्च भारत ।
अजुगुप्सांश्च विज्ञाय ब्राह्मणान् वृत्तिकर्शितान् ।।

देयाः दानानि । व्युष्टिः समृद्धिः । नीटी.

[5]उपच्छन्नं प्रकाशं वा वृत्त्या तान् प्रतिपादय ।
राजसूयाश्वमेधाभ्यां श्रेयस्तत्क्षत्रियान् प्रति ।।

[6]एवं पापैर्विमुक्तस्त्वं पूतः स्वर्गमवाप्स्यसि ।
स्रंसयित्वा पुनः कोशं यद्राष्ट्रं पालयिष्यसि ।।

[7]ततश्च ब्रह्मभूयस्त्वमवाप्स्यसि धनानि च ।
आत्मनश्च परेषां च वृत्तिं संरक्ष भारत ।।

---

(१) भा. १३।६०।४–६ ; भामु. १३।६१।४–६.

(२) भा. १३।६०।७ ; भामु. १३।६१।७ येद्द्रव्यै (यन्द्रव्यै) न्वितान् (र्जितान्).

(३) भा. १३।६०।८; भामु. १३।६१।८.

(४) भा. १३।६०।९ ; भामु. १३।६१।९.

(५) भा. १३।६०।१० ; भामु. १३।६१।१० भारिणः (कारिणः).

(१) भा. १३।६०।११ ; भामु. १३।६१।११ तो वै साधुधर्मान् (तः साधुधर्मान् वै) वर्त (वर्ध) सर्वे ते चापि (सर्वस्वैश्चापि) भारिणः (कारिणः).

(२) भा. १३।६०।१२ ; भामु. १३।६१।१२ यच्छस्व (यच्छ त्वं).

(३) भा. १३।६०।१३ ; भामु. १३।६१।१३ न्नाद्यानि (न्नानि च).

(४) भा. १३।६०।१४ ; भामु. १३।६१।१४.

(५) भा. १३।६०।१५ ; भामु. १३।६१।१५ पादय (पालयेत्).

(६) भा. १३।६०।१६ ; भामु. १३।६१।१६ र्विमुक्त (र्विनिर्मुक्त) मवाप्स्यसि (माप्स्यसि) स्रंस (संच).

(७) भा. १३।६०।१७ ; भामु. १३।६१।१७ ततश्च ब्रह्मभूयस्त्व (तेन त्वं ब्रह्मभूयत्व).

* ब्रह्मणो भूयं भावः अस्यास्ति स ब्राह्मणः ब्रह्मभूयः, तस्य भावो ब्रह्मभूयत्वं ब्राह्मणत्वम् । नीटी.

[1]पुत्रवच्चापि भृत्यान् स्वान् प्रजाश्च परिपालय ।
योगक्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत ॥
[2]तदर्थं जीवितं तेऽस्तु मा तेभ्योऽप्रतिपालनम् ।
अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान् ॥
श्रिया ह्यभीक्ष्णं संवासो दर्पयेत्संप्रमोहयेत् ।
ब्राह्मणेषु प्रमूढेषु धर्मो विप्रणशेद् ध्रुवम् ।
धर्मप्रणाशे भूतानामभावः स्यान्न संशयः ॥
यो रक्षिभ्यः संप्रदाय राजा राष्ट्रं विलुम्पति ।
यज्ञे राष्ट्राद्धनं तस्मादानयध्वमिति ब्रुवन् ॥
यच्चाऽऽदाय तदाज्ञप्तं भीतं दत्तं सुदारुणम् ।
यजेद्राजा न तं यज्ञं प्रशंसन्त्यस्य साधवः ॥

युग्मम् । यो राजा रक्षिभ्यः संग्रहपरेभ्यः धनं दत्त्वा यज्ञे यज्ञार्थं धनमानयध्वमिति ब्रुवन् राष्ट्रं विलुम्पति, यच्चासौ तत् धनिभिः भीतं भययुक्तं यथा स्यात्तथा दत्तं प्रजाभ्य आदाय सुदारुणं यथा स्यात्तथा यजेत्, तं यज्ञं न प्रशंसन्ति । नीटी.

अपीडिताः सुसंवृद्धा ये ददत्यनुकूलतः ।
तादृशेनाप्युपायेन यष्टव्यं नोद्यमाहृतैः ॥

उद्यमः प्रजापीडनात्मकोऽतियत्नः । नीटी.

यदा परिनिषिच्येत निहितो वै यथाविधि ।
तदा राजा महायज्ञैर्यजेत बहुदक्षिणैः ॥

निहितः प्रजानां नितरां हितः यदा राजा प्रजाभिः पूर्णोद्रिक्ताभिर्निषिच्येत धनैरभिषिच्येत । नीटी.

वृद्धबालधनं रक्ष्यमन्धस्य कृपणस्य च ।
न खातपूर्वं कुर्वीत न रुदन्तीधनं हरेत् ॥

खातपूर्वं धनं न कुर्वीत । अनावृष्टौ कूपोदकनिष्पादितैः धान्यैर्जीवतां धनं स्वाधीनं न कुर्वीतेत्यर्थः । नीटी.

हृतं कृपणवित्तं हि राष्ट्रं हन्ति नृपश्रियम् ।
दद्याच्च महतो भोगान्क्षुद्भयं प्रणुदेत्सताम् ॥
येषां स्वादूनि भोज्यानि समवेक्ष्यन्ति बालकाः ।
नाश्नन्ति विधिवत्तानि किं नु पापतरं ततः ॥

समवेक्ष्यन्त्येव, न तु लभन्ते । नीटी.

यदि ते तादृशो राष्ट्रे विद्वान्सीदेत्क्षुधा द्विजः ।
भ्रूणहत्यां च गच्छेथाः कृत्वा पापमिवोत्तमम् ॥
धिक् तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति ।
द्विजोऽन्यो वा मनुष्योऽपि शिबिराह वचो यथा ॥
यस्य स्म विषये राज्ञः स्नातकः सीदति क्षुधा ।
अवृद्धिमेति तद्राष्ट्रं विन्दते सह राजकम् ॥

सह युगपत् राजकं राजसमूहं प्रतिपक्षभूतं विन्दते । नीटी.

राज्ञो धर्माः प्रजापालनादयः

[1]क्षत्रियस्य स्मृतो धर्मः प्रजापालनमादितः ।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥

निर्दिष्टः षड्भागः । नीटी.

प्रजाः पालयते यो हि धर्मेण मनुजाधिपः ।
तस्य धर्मार्जिता लोकाः प्रजापालनसंचिताः ॥
[2]तत्र राज्ञः परो धर्मो दमः स्वाध्याय एव च ।
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ॥
[3]यज्ञोपवीतधरणं यज्ञो धर्मक्रियास्तथा ।
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता ॥
सम्यग्दण्डे स्थितिर्धर्मो धर्मो वेदक्रतुक्रिया: ।
व्यवहारस्थितिर्धर्मः सत्यवाक्यरतिस्तथा ॥

---

* अत्र भूयेतिस्वपदेन विग्रहो न पाणिनीयः, 'भुवो भावे' इति सूत्रेण सोपपदस्यैव भूयशब्दस्य व्युत्पादितत्वात् । अतो भावशब्देनैव विग्रहः साधुः । 'अस्यास्ति' इत्यनेन मत्वर्थीयोऽर्शआद्यच् व्याख्यात इति ज्ञेयम् ।

(१) भा. १३।६०।१८ ; भामु. १३।६१।१८ योगक्षे (योगः क्षे).

(२) भामु. १३।६१।१९-३०.

(१) भा. १३।१२८।४७-४८ ; भामु. १३।१४१। ४७-४८.

(२) भा. १३।१२८।४९ ; भामु. १३।१४१।४९ तत्र (तस्य).

(३) भा. १३।१२८।५०-५१ ; भामु. १३।१४१। ५०-५१.

[2]आर्तहस्तप्रदो राजा प्रेत्य चेह महीयते ।
गोब्राह्मणार्थे विक्रान्तः संग्रामे निधनं गतः ।
अश्वमेधजिताँल्लोकान्प्राप्नोति त्रिदिवालये ॥

आर्तहस्तेति आर्तप्रिय इत्यर्थः । आर्द्रेति पाठे सजलेन हस्तेन ददाति । नीटी.

[3]उत्साहः शस्त्रपाणित्वं तस्य धर्मः सनातनः ॥

शस्त्रपाणित्वेन च युद्धोपकरणानि सर्वाण्युपलक्ष्यन्ते । पमा. ३९८

[4]शालाप्रपातडागानि देवतायतनानि च ।
ब्राह्मणावसथश्चैव कर्तव्यं नृपसत्तमैः ॥
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ।
कुलमुत्पाटयेयुस्ते क्रोधाविष्टा द्विजातयः ॥
दुष्टानां शासनं धर्मः शिष्टानां परिपालनम् ।
कर्तव्यं भूमिपालेन नित्यं कार्येषु चाऽऽर्जवम् ॥

समरमरणं वनाश्रमो वा राजधर्मः

[4]एष एव परो धर्मो राजर्षीणां युधिष्ठिर ।
समरे वा भवेन्मृत्युर्वने वा विधिपूर्वकम् ॥

व्यवहारिपौरजानपदद्वारा धार्मिकं अष्टाङ्गं राज्यं राज्ञा पालनीयम्

[5]ततोऽब्रवीन्महाराज कुन्तीपुत्रमुपह्वरे ।
निषण्णं पाणिना पृष्ठे संस्पृशन्नम्बिकासुतः ॥
अप्रमादस्त्वया कार्यः सर्वथा कुरुनन्दन ।
अष्टाङ्गे राजशार्दूल राज्ये धर्मपुरस्कृते ॥

अष्टाङ्गे स्वाम्यमात्यादियुते । नीटी.

[6]तत्तु शक्यं यथा तात रक्षितुं पाण्डुनन्दन ।
राज्यं धर्मं च कौन्तेय विद्वानसि निबोध तत् ॥

[1]सर्वे जानपदाश्चैव तव कर्माणि पाण्डव ।
पौरोगवाश्च सभ्याश्च कुर्युर्ये व्यवहारिणः ॥

गवादिवत् आहारमात्रवेतनाः । विष्टिगृहीतानामप्याहारमात्रं देयमित्यर्थः । व्यवहारिणः कारुशिल्पिप्रभृतयः । नीटी.

[2]स्वरन्ध्रं पररन्ध्रं च स्वेषु चैव परेषु च ।
उपलक्षयितव्यं ते नित्यमेव युधिष्ठिर ॥

[3]देशान्तरस्थाश्च नरा विक्रान्ताः सर्वकर्मसु ।
मात्राभिरनुरूपाभिरनुग्राह्या हितास्त्वया ॥

[4]गुणार्थिनां गुणः कार्यो विदुषां ते जनाधिप ।
अविचाल्याश्च ते ते स्युर्यथा मेरुर्महागिरिः ॥

[5]सर्वथैव महाराज शरीरं धारयेदिह ।
प्रेत्येह चैव कर्तव्यमात्मनिःश्रेयसं परम् ॥

[6]एवं कुर्वञ्शुभा वाचो लोकेऽस्मिञ्शृणुते नृपः ।
प्रेत्य स्वर्गं तथाऽऽप्नोति प्रजा धर्मेण पालयन् ॥

[7]एवं त्वया कुरुश्रेष्ठ वर्तितव्यं प्रजाहितम् ।
उभयोर्लोकयोस्तात प्राप्तये नित्यमेव च ॥

---

(१) भा. १३।१२८।५२; भामु. १३।१४१।५२–५३ कान्प्रा (काना).

(२) पमा. ३९७ ' आनुशासनिके ' इत्युक्तम्.

(३) पमा. ४०८ ' आनुशासनिके ' इत्युक्तम्.

(४) भा. १५।८।१२; भामु. १५।४।१२.

(५) भा. १५।९।७–८; भामु. १५।५।७–८.

(६) भा. १५।९।९; भामु. १५।५।९ यथा तात (महाराज) धर्मं च (धर्मेण).

(१) भा. १५।१०।१३; भामु. १५।५।४०–४१ जान. (जन) पौरोगवाश्च सभ्याश्च (गोवद्रासभवच्चैव).

(२) भा. १५।१०।१४; भामु. १५।५।४१–४२.

(३) भा. १५।१०।१५; भामु. १५।५।४२–४३ पूर्वार्धे (देशजाश्चैव पुरुषा विक्रान्ताः स्वेषु कर्मसु ।) मात्राभि (यात्राभि).

(४) भा. १५।१०।१६; भामु. १५।५।४३ षां ते (षां वै) उत्तरार्धे (अविचार्याश्च ते ते स्युरचला इव नित्यशः ॥).

(५) भा. १५।१२।१८; भामु. १५।७।१८ प्रेत्येह चैव (प्रेत्य चेह च).

(६) भा. १५।१२।१९; भामु. १५।७।१९ पूर्वार्धे (एवमेतन्महाराज राजा सम्यक् समाचरन् ।) स्वर्गं तथा (स्वर्गमवा).

(७) भा. १५।१२।२०; भामु. १५।७।२० च (हि).

[1]भीष्मेण पूर्वमुक्तोऽसि कृष्णेन विदुरेण च ।
मयाऽप्यवश्यं वक्तव्यं प्रीत्या ते नृपसत्तम ॥
[2]एतत्सर्वं यथान्यायं कुर्वीथा भूरिदक्षिण ।
प्रियस्तथा प्रजानां त्वं स्वर्गे सुखमवाप्स्यसि ॥
अश्वमेधसहस्रेण यो यजेत्पृथिवीपतिः ।
पालयेद्वाऽपि धर्मेण प्रजास्तुल्यं फलं लभेत् ॥

## वाल्मीकिरामायणम्

राज्ञा प्रजातीक्ष्णता त्याज्या

[3]राज्यं पालयितुं शक्यं न तीक्ष्णेन निशाचर ।
न चापि प्रतिकूलेन नाविनीतेन राक्षस ॥
[4]स्वामिना प्रतिकूलेन प्रजातीक्ष्णेन रावण ।
रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥

परदाररक्षणं राज्ञः कर्तव्यम्

[5]कथं राजा स्थितो धर्मे परदारान् परामृशेत् ।
रक्षणीया विशेषेण परदारा महायशः ॥

राज्ञः सामान्यकर्तव्यानि प्रजापालनसंबन्धीनि

[6]रक्षितव्या प्रजा राज्ञा रक्षितव्या द्विजातयः ।
दस्यवश्च निहन्तव्याः परिपाल्याश्च साधवः ॥
अन्यायेन न हर्तव्यं परस्वं राक्षसर्षभ ।
एवं यो वर्तते राजा चिरं पाति वसुंधराम् ॥

न्याय्यान्याय्यत्वं पौर्वापर्यं च राजकार्याणाम्

[7]न्यायेन राजकार्याणि यः करोति दशानन ।
न स संतप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥

(१) भा. १५।१२।२१; भामु. १५।७।२१ पूर्वं (सर्वं).
(२) भा. १५।१२।२२-२३; भामु. १५।७। २२-२३.
(३) वारा. ३।४४।११ राक्षस (रावण), श्लोकार्धयोः क्रमः विपरीतः; वाराकु. ३।४१।११.
(४) वारा. ३।४४।१२ उत्त.; वाराकु. ३।४१।१४.
(५) वारा. ३।५५।५; वाराकु. ३।५०।६ परदारा महायशः (राजदारा महाबल).
(६) वारा. ५।१००।३३-३४.
(७) वाराकु. ६।१२।३१-३३.

अनुपायेन कर्माणि विपरीतानि यानि च ।
क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥
यः पश्चात्पूर्वकार्याणि कर्माण्यभिचिकीर्षति ।
पूर्वं चापरकार्याणि न स वेद नयानयौ ॥

## कौटिलीयमर्थशास्त्रम्

राजा उत्थानशीलः स्यात्

[1]राजानमुत्तिष्ठमानमनूत्तिष्ठन्ते भृत्याः । प्रमाद्यन्तमनुप्रमाद्यन्ति । कर्माणि चास्य भक्षयन्ति । द्विषद्भिश्चातिसंधीयन्ते । तस्मादुत्थानमात्मनः कुर्वीत ॥

राजा स्वकर्मणि व्याप्रियते चेत् अमात्यसमाहर्तृसंनिधातृप्रभृतयो भृत्याः स्वस्वकर्मसु व्याप्रियन्ते, स चेदालस्यान्न व्याप्रियते तेऽपि न व्याप्रियन्ते, राज्ञः कार्याणि च नाशयन्ति, तथाभूतोऽसौ राजा शत्रुभिर्वञ्च्यते च, तस्मादात्मनो व्यापारं राजाऽनुतिष्ठेदित्याह— राजानमित्यादि । श्रीमूला.

[2]राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम् ।
दक्षिणा वृत्तिसाम्यं च दीक्षितस्याभिषेचनम् ॥

उत्थानं उद्योगः यज्ञः क्रत्वनुष्ठानं कार्यानुशासनं व्यवहारनिर्णयः दक्षिणा दानं वृत्तिसाम्यं शत्रौ मित्रे च गुणदोषापेक्षया तुल्यं व्यवहरणं दीक्षितस्य अभिषेचनं अवभृथनिर्वर्तनं च राज्ञो व्रतम् । श्रीमूला.

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नाऽऽत्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम् ॥

प्रजासुखे सति राज्ञः सुखमस्ति । प्रजानां हिते च सति राज्ञो हितमस्ति । राज्ञः आत्मप्रियं हितं न भवति, किं तर्हि ? प्रजानां प्रियं तु हितं प्रजानां प्रियमेव हितं भवति । श्रीमूला.

तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम् ।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः ॥

तस्मात् उक्तात् कारणात् राजा नित्योत्थितः नित्योद्योगी सन् अर्थानुशासनं अर्थव्यवहारं कुर्यात् । उत्थानं

(१) कौ. १।१९.
(२) कौ. १।१९.

उद्यमः अर्थस्य मूलं सिद्ध्युपायः, विपर्ययः अनुत्थानं अनर्थस्य मूलम्। श्रीमूला.

**अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च।**
**प्राप्यते फलमुत्थानाल्लभते चार्थसंपदम् ॥**

अनुत्थाने आलस्यादुद्योगाकरणे प्राप्तस्य पूर्वसिद्धस्य अनागतस्य सेत्स्यतश्च अर्थस्य नाशः ध्रुवः निश्चितः। उत्थानात् फलं प्राप्यते अर्थात् सद्यः, अर्थसंपदं लभते च अर्थस्य प्राप्तस्य रक्षणसिद्ध्या अप्राप्तस्य प्राप्तिसिद्ध्या च समृद्धिं प्राप्नोति च। उत्थानस्यैवं त्रैकाल्यहितत्वं समर्थितम्। श्रीमूला.

बालवृद्धानाथादीनां भरणं राजकर्तव्यम्

**[1]बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात्, स्त्रियमप्रजाताम्, प्रजातायाश्च पुत्रान् ॥**

बालवृद्धव्याधितव्यसन्यनाथांश्च अनाथा ये बालादयः तांश्च बिभृयात् पोषयेत्। अप्रजातां वन्ध्यां स्त्रियं प्रजातायाः पुत्रांश्च बिभृयात्। सा च ते च यद्यनाथा इत्यार्थम्। श्रीमूला.

## चाणक्यसूत्राणि।

जितात्मा राजा भवेत्

**[2]सुखस्य मूलं धर्मः ॥**
**धर्मस्य मूलमर्थः ॥**
**अर्थस्य मूलं राज्यम् ॥**
**राज्यमूलमिन्द्रियजयः ॥**
**इन्द्रियजयस्य मूलं विनयः ॥**
**विनयस्य मूलं वृद्धोपसेवा ॥**
**वृद्धसेवाया विज्ञानम् ॥**
**विज्ञानेनाऽऽत्मानं संपादयेत् ॥**
**संपादितात्मा जितात्मा भवति ॥**
**जितात्मा सर्वार्थैः संयुज्येत ॥**
**अर्थसंपत्प्रकृतिसंपदं करोति ॥**

(१) कौ. २।१.
(२) चासू. १-१३.

**प्रकृतिसंपदा ह्यनायकमपि राज्यं नीयते ॥**
**प्रकृतिकोपः सर्वकोपेभ्यो गरीयान् ॥**

निरलसत्वं देशकालानुसंधानं विज्ञानेन दण्डधारणं इत्यादीनि राजकर्तव्यानि

**[1]अलब्धलाभो नालसस्य ॥**
**अलसस्य लब्धमपि रक्षितुं न शक्यते ॥**
**न चालसस्य रक्षितं विवर्धते ॥**
**न भृत्यान् प्रेषयति ॥**
**[2]अर्थतोषिणं श्रीः परित्यजति ॥**
**[3]दण्डो हि विज्ञाने प्रणीयते ॥**
**[4]दण्डे प्रतीयते वृत्तिः ॥**
**वृत्तिमूलमर्थलाभः ॥**
**[5]असमाहितस्य वृत्तिर्न विद्यते ॥**
**पूर्वं निश्चित्य पश्चात्कार्यमारभेत् ॥**
**कार्यान्तरे दीर्घसूत्रता न कर्तव्या ॥**
**न चलचित्तस्य कार्यावाप्तिः ॥**
**हस्तगतावमाननात्कार्यव्यतिक्रमो भवति ॥**
**दोषवर्जितानि कार्याणि दुर्लभानि ॥**
**दुरनुबन्धं कार्यं नाऽऽरभेत ॥**
**कालवित्कार्यं साधयेत् ॥**
**कालातिक्रमात्काल एव फलं पिबति ॥**
**क्षणं प्रति कालविक्षेपं न कुर्यात्सर्वकृत्येषु ॥**
**देशफलविभागौ ज्ञात्वा कार्यमारभेत ॥**
**[6]नीतिज्ञो देशकालौ परीक्षेत ॥**
**परीक्ष्यकारिणि श्रीश्चिरं तिष्ठति ॥**
**सर्वाश्च संपदः सर्वोपायेन परिग्रहेत् ॥**
**भाग्यवन्तमपरीक्ष्यकारिणं श्रीः परित्यजति ॥**
**ज्ञानानुमानैश्च परीक्षा कर्तव्या ॥**

(१) चासू. ३८-४१.
(२) चासू. ७७.
(३) चासू. ८६.
(४) चासू. ८९-९०.
(५) चासू. १००-११०.
(६) चासू. ११२-११६.

[1]दुःसाधमपि सुसाधं करोत्युपायज्ञः ॥
अज्ञानिना कृतमपि न बहु मन्तव्यम् ॥
यादृच्छिकत्वात्कृमिरपि रूपान्तराणि करोति ॥
सिद्धस्यैव कार्यस्य प्रकाशनं कर्तव्यम् ॥
ज्ञानवतामपि दैवमानुषदोषात्कार्याणि दुष्यन्ति ॥
दैवं शान्तिकर्मणा प्रतिषेद्धव्यम् ॥
मानुषीं कार्यविपत्तिं कौशलेन विनिवारयेत् ॥
कार्यविपत्तौ दोषान् वर्णयन्ति बालिशाः ॥
कार्यार्थिना दाक्षिण्यं न कर्तव्यम् ॥
क्षीरार्थी वत्सो मातुरूधः प्रतिहन्ति ॥
अप्रयत्नात्कार्यविपत्तिर्भवेत् ॥
न दैवप्रमाणानां कार्यसिद्धिः ॥
कार्यबाह्यो न पोषयत्याश्रितान् ॥
यः कार्यं न पश्यति सोऽन्धः ॥
प्रत्यक्षपरोक्षानुमानैः कार्याणि परीक्षेत ॥
अपरीक्ष्यकारिणं श्रीः परित्यजति ॥
परीक्ष्य तार्या विपत्तिः ॥
स्वशक्तिं ज्ञात्वा कार्यमारभेत ॥
स्वजनं तर्पयित्वा यः शेषभोजी सोऽमृतभोजी ॥
सर्वानुष्ठानादायमुखानि वर्धन्ते ॥
नास्ति भीरोः कार्यचिन्ता ॥
[2]क्षुद्रे गुह्यप्रकाशनमात्मवान्न कुर्यात् ॥
आश्रितैरप्यवमन्यते मृदुस्वभावः ॥
तीक्ष्णदण्डः सर्वैरुद्वेजनीयो भवति ॥
यथार्हदण्डकारी स्यात् ॥
अल्पसारं श्रुतवन्तमपि न बहु मन्यते लोकः ॥
[3]उत्साहवतां शत्रवोऽपि वशीभवन्ति ॥
विक्रमधना राजानः ॥
नास्त्यलसस्यैहिकामुष्मिकम् ॥
निरुत्साहाद्दैवं पतति ॥

(१) चासू. ११८–१३८.
(२) चासू. १४१–१४५.
(३) चासू. १८२–१९२.

मत्स्यार्थीव जलमुपयुज्यार्थं गृह्णीयात् ॥
अविश्वस्तेषु विश्वासो न कर्तव्यः ॥
विषं विषमेव सार्वकालम् ॥
अर्थसमादाने वैरिणां सङ्ग एव न कर्तव्यः ॥
अर्थसिद्धौ वैरिणं न विश्वसेत् ॥
अर्थाधीन एव नियतसंबन्धः ॥
शत्रोरपि सुतः सखा रक्षितव्यः ॥
[1]स्वजनस्य दुर्वृत्तं निवारयेत् ॥
[2]शत्रुं जयति सुवृत्तता ॥
[3]कार्यबहुत्वे बहुफलमायतिकं कुर्यात् ॥
स्वयमेवावस्कन्नं कार्यं निरीक्षेत ॥
[4]दुर्दर्शना हि राजानः प्रजा नाशयन्ति ॥
सुदर्शना हि राजानः प्रजा रञ्जयन्ति ॥
न्याययुक्तं राजानं मातरं मन्यन्ते प्रजाः ॥
तादृशः स राजा इह सुखं ततः स्वर्गमाप्नोति ॥

## वृद्धचाणक्यः

शक्तिदेशकालाद्यनुसंधानेन धर्मार्थकामसाधनम्

[5]धर्ममर्थं च कामं च यथाशक्ति न हारयेत् ।
ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ॥
[6]कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥

## लघुचाणक्यः

राज्ञा ब्रह्मस्वं न हरणीयम्

[7]ब्रह्मस्वेन च पुष्टाङ्गा हस्त्यश्वरथपत्तयः ।
सङ्ग्रामकाले सीदन्ति राज्ञो ब्रह्मस्वभक्षणात् ॥

(१) चासू. १९८.
(२) चासू. २०१.
(३) चासू. २२७–२२८.
(४) चासू. ५५७–५६०.
(५) वृचा. ४।१.
(६) वृचा. ४।२ ; चाद. ४।१८ ; चासा. २।२० ; चाशा. १।१३ कश्चाहं (को वाऽहं).
(७) लचा. ६।२.

## मनुः

राजकर्तव्यानि भार्यावरणं पुरोहितवरणं यजनं दानं च

**'तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम् ।**
**कुले महति संभूतां हृद्यां रूपगुणान्विताम् ॥**

( १ ) तत् गृहं आश्रित्य भार्या तत्र सहायार्थं महतः कुलादुद्वोढव्या । एतत्संबन्धेन संरक्षणार्थम् । सवर्णामित्यादावुच्यते, तत् प्राक् प्रदर्शितम् । हृद्यां मनोरमां कान्तिलावण्ययुक्ताम् । रूपं संस्थानम्, गुणाः वचनाचरणादयः, तैरन्वितां युक्ताम् । मेधा.

( २ ) तत् गृहं अधिष्ठाय समानवर्णां प्रशस्तलेखातिलकादिलक्षणोपेतां महाकुलीनां मनोरमां स्वाकृतिमाचारादिसंपन्नां भार्यामुपयच्छेत् । * गोरा.

( ३ ) हृद्यां मनस्यदुष्टाम् । मवि.

( ४ ) सवर्णां सज्जातीयां लक्षणान्वितां धर्मशास्त्रोक्तलक्षणान्वितां रूपगुणान्वितां सामुद्रिकलक्षणलक्षितां कन्यामुद्वहेत् । रार. ८

( ५ ) 'अधिशीङ्स्थासां कर्म ' ( पा. १।४।४६ ) इति कर्मत्वमधिकरणस्य । तत् पुरं अध्यास्य अधिष्ठाय भार्यामुद्वहेत् । तां विशिनष्टि– लक्षणान्वितां भ्रातृमत्त्वश्रीसौख्यसूचकत्वश्यामाङ्गित्वादिदेहगुणयुक्ताम् । तदुक्तम्– ' कूपोदकं तरुच्छाया श्यामाङ्गी इष्टकागृहम् । शीतकाले भवेदुष्णं ग्रीष्मकाले च शीतलम् ॥ ' इति । हृद्यां कामकलादिनिपुणतया हृदे मनसे अर्हति या ताम् । रूपगुणान्वितां रूपं चम्पकगौरादि, गुणाः अङ्गसौष्ठवपातिव्रत्यादयः, तैः युक्तां च । मच.

**'पुरोहितं च कुर्वीत वृणुयादेव चार्त्विजः ।**
**तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च ॥**

* ममु., भाच. गोरागतम् ।

( १ ) **मस्मृ.** ७।७७; **रार.** ८ तदध्यास्योद्वहे ( अध्यास्योद्वाहये ) ; **पमा.** ४०७ गुणान्वि ( समन्वि ).

( २ ) **मस्मृ.** ७।७८ ; **गौमि.** ११।१८ कुर्वीत ( वृणुयाद ) ; **रार.** १४ तेऽस्य ( तस्य ) वैतानिकानि च ( वैं तानि कानिचित् ) ; **पमा.** ४०७ चर्त्विजः ( चर्त्विजम् ).

( १ ) सत्यपि द्वितीयानिर्देशेन प्राधान्यावगमे विवक्षितमेवैकत्वम्, अन्यत्राप्युपादानात्, 'यूपं छिनत्ति', ' भार्यां विन्देत ' इतिवत् । ऋत्विजो वृणुयात् । तेषां च संख्या श्रुतित एवावगन्तव्या । गुणाश्च– ' नातिस्थूलः नातिकृशः नातिदीर्घः नातिह्रस्वः नातिवृद्धः नातिबालः । -सप्तपुरुषान् विद्यातपोभ्यां पुण्यैश्च कर्मभिः समनुष्ठितोभयभावान् । तान् प्रति नाब्राह्मण्यमाशङ्क्यते– विद्वान् याजयति ' इत्यादि । गृह्याणि कर्माणि शान्तिस्वस्त्ययनादीनि । वैतानिकानि वैहारिकाणि त्रेताग्निविषयाणि । मेधा.

( २ ) पुरोहितं चाऽऽथर्वणविधिज्ञं कुर्वीत । ऋत्विजश्च सूत्रकारोक्तप्रक्रियया वृणुयात् । ते च अस्य राज्ञो गृह्योक्तानि श्रौतानि कर्माणि कुर्युः । * गोरा.

( ३ ) गृह्याणि स्मृत्याचारतो ग्राह्याणि । वैतानिकानि श्रौतानि । मवि.

( ४ ) गृहस्थस्य राज्ञः श्रौतस्मार्तकर्मस्वधिकृतानाह– पुरोहितमिति । गृह्याणि औपासनादीनि । वैतानिकानि अग्निहोत्रादीनि । नन्द.

**'यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः ।**
**धर्मार्थं चैव विप्रेभ्यो दद्याद्भोगान्धनानि च ॥**

( १ ) आप्तदक्षिणैः भूरिदक्षिणैः पौण्डरीकादिभिः । भोगान् धनानि च । वस्त्रगन्धविलेपनादयो भोजनविशेषाश्च भोगाः । धनानि सुवर्णादीनि । नित्यमेव तद्दानमिच्छन्ति । धर्मार्थं तस्योत्पत्त्यर्थमेव । मेधा.

( २ ) राजा अश्वमेधपुण्डरीकादीन् नानाप्रकारान् पर्याप्तदक्षिणान् यज्ञान् कुर्यात् । ब्राह्मणेभ्यः स्त्रीयान् गृहशय्यादीन् भोगान् धनानि च सुवर्णादीनि धर्मार्थं दद्यात् । इतीदमधिकं राज्ञो यागदानमवश्यकर्तव्यमुच्यते । ‡ गोरा.

* ममु., मच., भाच. गोरागतम् ।

‡ मवि., ममु. गोरागतम् ।

( १ ) **मस्मृ.** ७।७९ ; **मभा.** १०।१ प्रथमः पादः ; **रार.** १४ ; **पमा.** ४०७ धर्मार्थं ( यज्ञार्थं ).

(३) आप्तदक्षिणैः 'एतेन सहस्रदक्षिणेन यजेत' इत्यादिविधिना प्राक्प्रोक्ता या दक्षिणा तद्दक्षिणैः। भोगान् भोग्यान् स्त्रीगृहशय्यादीन् धनानि सुवर्णरजतादीनि च दद्यादित्यन्वयः। मच.

(४) याजकवरणप्रसङ्गात् यजमानमप्याह– यजेतेति। आप्तदक्षिणैः पर्याप्तदक्षिणैः। भोगान् भोग्यान् गोमहिषादीन्। नन्द.

प्रजासु पितृवद्वृत्तिः

'सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्।
स्याच्चाऽऽम्नायपरो लोके वर्तेत पितृवन्नृषु॥

(१) बलिं करं धान्यादीनां षष्ठाष्टमादिभागम्। आप्तैः अर्थाद्युपधा(? युपधा)शुद्धैः। यथोक्तमाम्नायपरश्च स्यात् आगमप्रधानतर्कशास्त्राण्याश्रयेत्। अथवा पारंपर्यागतमेव भागं गृह्णीयात्, नाधिकम्। वर्तेत पितृवन्नृषु करदेष्वन्येषु च स्नेहबुद्ध्या वर्तेत। मेधा.

(२) आप्तैः हितकारिभिः उक्तगुणैः अमात्यैः वार्षिकं वक्ष्यमाणं धान्यादिकं राष्ट्रादानाययेत्। शास्त्रप्रधानश्च लोके करशुल्कादिषु स्यात्। राष्ट्रीयेषु पितृवत् स्नेहादिना वर्तेत। * गोरा.

(३) सांवत्सरिकं वत्सरलभ्यं बलिं करं भूमिजलशुष्का(?)दिनिमित्तम्। आम्नायपरः अभ्यासपरः। सर्वस्याकरादेः स्मरणे यत्नं कुर्यादित्यर्थः। मवि.

(४) आप्तैः युक्तकारिभिः। संवत्सरोत्तीर्णे बलिं करं धान्यादीन् धनं च गृह्णीयादिति तात्पर्यम्। आम्नायपरः करादिग्रहणशास्त्रनिविष्टः। पिता यथा पुत्रपालनान्वेषी तद्वन्नृपः स्यात्। नृषु स्वप्रजासु। मच.

(५) लोके लोकमध्ये दीनानाथादीनां आश्रयपरो वृत्तिकर्ता स्यात्। ‡ राप्र. १८७

(६) कुतश्च राज्ञो धनागमः? 'धनेन यजेत, दद्याच्च' इत्यपेक्षायामाह– सांवत्सरिकमिति। संवत्सरे भवं सांवत्सरिकम्, संवत्सरस्य संवत्सरस्य सकृदिति यावत्। बलिं करम्। पूर्वमर्यादानुरूपेण करादानमाम्नायः। नृषु हीनादिषु अनुकम्पया वर्तनं पितृवद्वर्तनम्। नन्द.

(७) सांवत्सरिकं बलिं उपहारान्। च पुनः आम्नायपरः अभ्यासपरः स्यात्, सर्वस्य करादेः स्मरणे यत्नं कुर्यादित्यर्थः। भाच.

अमायया वर्तेत परमायां च विद्यात्

'अमाययैव वर्तेत न कथंचन मायया।
बुध्येतारिप्रयुक्तां च मायां नित्यं सुसंवृतः॥

(१) माया छद्म, तेन न वर्तेत। अविश्वसनीयस्तथा स्यात्। न च परप्रकृतीः अज्ञातरूपा उपजपेत्। अरिणा प्रयुक्तां च मायां यथावत् बुध्येत। बुद्ध्या ज्ञात्वोपजापं कुर्यात्। तत्र कृत्यपक्षश्चतुर्विधः– क्रुद्धलुब्धभीतावमानितैः। तत्र येन कृतं शिल्पं किंचिदुपकारो वा दर्शितः, तौ विप्रलभ्येते प्रसादेन नियोज्येते अवमन्येते वा। तदर्थोऽपि तत्समानः शिल्पोपकारी क्रुध्यति, 'नास्यास्मदीयं शिल्पमुपकारो वोपयुज्यते' तादृशा उपजापसहा भवन्ति। तथा वाल्लभ्येनोपगृहीतः पश्चान्मानाधिकाराभ्यां भ्रष्टः प्रवासितबन्धुतद्वल्लभः प्रसभमभिपूज्य स्वीकृतः सकुल्यैरन्तर्हितः सर्वस्वमाहारितः तत्समानकर्मविघ्नः अन्यः पूज्यते सोऽवधीर्यते इत्येवमादिः क्रुद्धः। केनचित् कृतं पैशुन्यं तत्समानदोषेभ्यो दण्डितं अन्तर्भ्रमदण्डपाताः सर्वाधिकारस्थाः सहसोपचितार्था इत्यादिः लुब्धवर्गः। परिक्षीणः कदर्यो व्यसनी बहुऋण इत्यादिर्भीतवर्गः। आत्मसंभावितः शत्रुपूजामर्थितः नीचैरुपहतः तीक्ष्णः साहसिको भोगेनासंतुष्टः इत्येवमादिः अवमानितवर्गः। एतत्परस्योपजपेत् आत्मनः च रक्षेत्। मेधा.

(२) यावच्छत्रुणा प्रकृत्युपजापादि छद्म न कृतं तावदच्छद्मनैव व्यवहरेत्, न तु कदाचित् पूर्वं छद्म

* राक., ममु. गोरागतम्।

‡ शेषं गोरागतम्।

(१) मस्मृ. ७।८०; राक. ३२ स्याच्चाऽऽम्नाय (स्यादाश्रय); पमा. ४०७; राप्र. १८७ राकवत्.

(१) मस्मृ. ७।१०४; गोरा. मायां नित्यं (नित्यं मायां); राक. १५१–१५२; ममु. सुसं (स्वसं); पमा. ४१३ च (तु); राप्र. १३४.

समाचरेत् । सुव्यक्तपक्षरक्षश्च भूत्वा शत्रुकृतं प्रकृतिभेदादि छद्म सर्वदा चारादिभिरवेक्षेत । गोरा.

( ३ ) माया वञ्चनेच्छा। सुसंवृतः रक्षितस्वच्छिद्रः । मवि.

( ४ ) मायया छद्मतया अमात्यादिषु न वर्तेत । तथा सति सर्वेषामविश्वसनीयः स्यात् । धर्मरक्षार्थं यथातत्त्वेनैव व्यवहरेत् । यत्नकृतात्मपक्षरक्षश्च शत्रुकृतां प्रकृतिभेदरूपां मायां चारद्वारेण जानीयात् । ममु.

( ५ ) किंच, स्वप्रजासु अमायां विधत्ते– अमाययैवेति । अरिप्रयुक्तां तत्कृतप्रकृतिभेदादिकाम् । सुसंवृतः अप्रकटदूतद्वारेणेत्यर्थः । मच.

( ६ ) अहितेषु तु क्वचित् छद्मापि विहितमेव ।
* राप्र. १३४

( ७ ) कथंचन आपद्यपीत्यर्थः । सुसंवृतः प्रच्छन्नो भूत्वा । ‡ नन्द.

स्वच्छिद्रगोपनं परच्छिद्रबोधनं च

[1]नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥

( १ ) एष एवार्थः पुनरुच्यते । तथा यत्नातिशयं कुर्यात् यथा परस्य छिद्रमन्विच्छेदात्मनश्च रक्षेत् । य एवं क्रुद्धादिः कापटिकादिचारपुरुषैः ज्ञायते स एवाऽऽत्मीयोऽनुनीयत इति । कूर्मवदङ्गं गूहेत्, रक्षेद्विवरमात्मनः । परोपजापात् स्वच्छिद्ररक्षणं महाप्रयोजनमित्येतदनेन आह । मेधा.

( २ ) तथा यतेत यथाऽस्य छिद्रं प्रकृतिभेदादि शत्रुर्न जानीते, शत्रोः पुनरसौ प्रकृतिभेदादि यत्नतो जानीयात् । तथा कूर्म इवावयवानुप्रवेशेन प्रकृत्यादीनि राज्याङ्गानि संग्रामादिना रक्षेत् । कथंचिच्च प्रकृतिभेदादि यदात्मनः छिद्रमुपजातं तत्र यत्नतः समाधानं कुर्यात् । † गोरा.

( ३ ) कूर्मो यथाऽङ्गानि शिरआदीन्यन्तर्निवेश्य रक्षति तथाऽङ्गानि सप्त स्वाम्यादीनि गुप्तस्थापनेन रक्षेत् । विवरं प्रहारावकाशम् । मवि.

( ४ ) राज्याङ्गानि अमात्यादीनि दानसंमानादिनाऽऽत्मसात् कुर्यात् । § ममु.

( ५ ) परस्य अरेः । कूर्म इवेति । अयमर्थः– यथा कूर्मः करचरणादि परेभ्यो रक्षंस्तद्विवरमपि गोपायति, एवं राजा अमात्यादीन् दानमानाभ्यां रक्षन् परेभ्यः स्वच्छिद्रं रक्षेत् । अमात्यादयो हि विक्रियमाणाः स्वच्छिद्रं प्रकटयेयुः परच्छिद्रं च गोपयेयुरिति । मच.

( ६ ) अङ्गानि– कर्मारम्भोपायः पुरुषद्रव्यसंपत् विनिपातप्रतीकारः देशकालविभागः कार्यसिद्धिश्चेति । रक्षेत् गूहेत् । नन्द.

( ७ ) आत्मनः छिद्रं ह्रानिवृद्धिं परः शत्रुः न विद्यात् । * भाच.

विश्वासाविश्वासविवेकः, बकसिंहवृकशशवद्वर्तनम्

[1]न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥
[2]विश्वासयेच्चापि परं तत्त्वभूतेन हेतुना ॥
[3]बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥

( १ ) यथा अप्सु दुर्गाश्रयमपि मत्स्यबलं स्वभावतः तद्ग्रहणार्थं बकः पर्युदासनपरतया तद्ग्रहणोपायं ध्यानादियोगादासादयति, एवमर्थचिन्ताभियोगातिशयेन सुदुष्प्रापा अप्यर्था आसाद्यन्त इति मत्वा न निर्वेदं गच्छेत् । यथा

* शेषं ममुगतम् ।

‡ भाच. नन्दगतम् ।

† राप्र. गोरागतं ममुगतं च ।

( १ ) मस्मृ. ७।१०५ तु ( च ); राक. १५२ विद्याद्विद्या ( विद्याच्छिन्द्या ); राप्र. ११७.

§ शेषं गोरागतम् ।

* शेषं मविगतम् ।

( १ ) मस्मृ. ७।१०५ इत्यस्यानन्तरं प्रक्षिप्तोऽयं श्लोकः ; राप्र. १२४.

( २ ) राप्र. १२५.

( ३ ) मस्मृ. ७।१०६ ; मेधा. द्वितीयचतुर्थचरणयोर्व्यत्यासः ; गोरा. मेधावत् ; राक. १५२ च्चावलुम्पेत ( च्चानुलिम्पेत ) ; रार. ५९ च्चाव ( च्चानु ); राप्र. १२५.

च शशोऽल्पकायत्वाच्छक्नोति निष्पतितुमुपरि संघादपि, तथा एकोऽप्यसहायः सर्वतः समुत्थितसामन्तप्रकोपोऽशक्तोऽवस्थातुं दुर्गेऽरिसंपातं कृत्वा तस्मात् विनिष्पतेत् गुणवति संश्रयार्थम्। यथा च वृकः पशुग्रहणाभियोगात् बाल( ? पाल )प्रमादमासाद्यावलुम्पते, एवं स्वरक्षापर इति मत्वा तद्ग्रहणाभियोगो न मोक्तव्यः, भविष्यति स कालो यत्रायं वृकवदवलुम्पिष्यते। यथा सिंहो महाकायानपि हस्त्यादीन् हन्ति पराक्रमोत्साहशक्तियोगात्, एवं महदरिबलमिति न भेतव्यम्, अल्पप्राणेनापि कदाचिदुत्साहवता महाप्राणो निहन्यत इति। मेधा.

( २ ) यथा बको दुर्गाश्रयमतिचञ्चलस्वभावमपि मत्स्यं मांसग्रहणादनिर्विण्णैकाग्रान्तःकरणतया चिन्तयति, एवमतिगुप्ते च रिपौ तद्राष्ट्रसंबन्धादीनर्थान् चिन्तयेत्। यथा शबरगोचरतामुपगतोऽपि शशोऽतिचलकुटिलगतितया देशान्तरमुपसरति, एवं सकलसामन्तप्रकोपोऽतिचलरिपुमध्यवर्ती वा कथंचिदरिसंमोहमाधाय ततः प्रदेशात् गुणवद्राजान्तरसंश्रयार्थमुपसर्पेत्। यथा च वृकः कृतरक्षानपि पशून् तद्ग्रहणाभियोगेन कथंचित् अनवधाने प्राप्ते हिनस्ति, एवं दुर्गाद्यवस्थितमपि परं कथंचिदपि तत्प्रमादमासाद्यावलुम्पेत। यथा च गिरिवरशिखराकारमपि करिणमुत्साहशक्तियोगात् सिंहो निहन्तुमाक्रामति, एवमल्पबलोऽपि बलवत्तराभिभूतः संश्रयाद्युपायान्तराभावे सकलबलावष्टम्भेन परिहन्तुमाक्रमेत्। † गोरा.

( ३ ) बकवत् गुप्तप्रचारः कर्तव्यं चिन्तयेत्। यथा संत्यक्तचेष्टो दुर्गस्थानामपि मत्स्यानामन्तरं पश्यति। सिंहवच्छौर्यमात्रेण, न मायया। तदसंभवे वृकवत् परस्यान्तरं दृष्ट्वा अवलुम्पेत गृह्णीयात्। व्याधवेष्टितो यथा शशः शैघ्र्यादलक्षितगत्या बहिर्याति तथा शत्रुवेष्टितोऽप्यशक्तौ निःसरेत्। ‡ मवि.

( ४ ) राज्ञो वृत्त्यन्तरमाह– बकवच्चेति। बकवदेकान्तवासित्वम्। तेन स यथा जलान्तर्गतमतिचपलमपि मत्स्यं गृह्णाति तद्वद्विविक्तः परराष्ट्रग्रहणं चिन्तयेत्। सिंहवत् शूरत्वप्रकटनम्। स यथाऽल्पदेहोऽपि करिणमादत्ते तद्वदल्पसैन्योऽपि सामदानभेदेषूपायेषु क्षीणेषु विजयाय पराक्रमेत्। वृकवन्नित्यपशुग्रहणाभियोगात् परग्रहणोपायत्वं परतोऽप्रमादित्वं च। शशवत् व्याधमध्यतः कुटिलगतितयाऽरिमध्यतः पलायनं च, शिक्षेदित्यनुषज्यते। मच.

( ५ ) एकाग्रत्वे बकेन सादृश्यम्। निर्भयत्वे सिंहेन। क्रूरत्वे वृकेण। क्षिप्रकारित्वे शशेन। नन्द.

द्यूतसमाह्वयनिवारणम्

[1]द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत्।
राजान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम्॥

( १ ) अत्र च तुल्यविषयत्वात् समाह्वयमप्येकीकृत्य दर्शयति– द्यूतमिति। मवि.

( २ ) द्यूतसमाह्वयौ वक्ष्यमाणलक्षणौ राजा स्वराष्ट्रान्निवर्तयेत्। यस्मादेतौ द्वौ दोषौ राज्ञां राज्यविनाशकारिणौ। ममु.

( ३ ) द्यूतमेव सप्रतियोगि सदोषमाह– द्यूतमिति द्वाभ्याम्। * मच.

( ४ ) अत्र तावद्राज्ञः कर्तव्यमाह– द्यूतमिति। समाह्वयः कुक्कुटमेषादिप्राणिद्यूतम्। § नन्द.

[2]प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत्॥

( १ ) प्रत्यक्षं अनिह्नुतम्। मवि.

( २ ) प्रकटमेतच्चौर्यं यत् द्यूतसमाह्वयौ, तस्मात्तन्निवारणे राजा नित्यं यत्नयुक्तः स्यात्। † ममु.

---

† ममु., रार., राप्र. गोरागतम्।
‡ भाच. मविगतम्।

* शेषं ममुगतम्।
§ भाच. नन्दगतम्।
† भाच. ममुगतम्।

( १ ) मस्मृ. ९।२२१ ; मच. राजान्त ( राज्यान्त ) ; राप्र. १५२ मचवत्.

( २ ) मस्मृ. ९।२२२ ; मवि. प्रकाश ( प्रत्यक्ष ) ; राप्र. १५२.

(३) राज्ञाऽत्र प्रयत्नवता भाव्यमिति विवक्षन् दृष्टार्थवादमाह– प्रकाशमिति। प्रकाशं द्यूतसमाह्वयद्रष्टृ-सर्वजनसमक्षम्। तास्कर्यं चौर्यम्। अतः तयोः तत्कर्त्रोः प्रतीघाते नाशे। मच.

(४) देवनसमाह्वयावित्यत्र देवनं द्यूतं च पर्यायौ। राप्र. १५३

[1]अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः॥

(१) द्यूतं अप्राणिभिः अक्षशलाकादिभिः यत्क्रियते पणेन क्रीडनम्। प्राणिभिः मेषादिभिः युद्धकरणेन यत्नेन नियम्य क्रीडनं तत् समाह्वयः। मवि.

(२) अक्षशलाकादिभिरप्राणैर्यत्क्रियते तल्लोके द्यूतं कथ्यते। यः पुनः प्राणिभिः मेषकुक्कुटादिभिः पणपूर्वकं क्रियते स समाह्वयो ज्ञेयः। लोकप्रसिद्धयोरप्यनयोर्लक्षण-कथनं परिहारार्थम्। * ममु.

(३) पणपूर्वं यत्क्रियते तदेव द्यूतं समाह्वयश्च। अपणपूर्वके तु न द्यूतसमाह्वयशब्दौ प्रवर्तेते, तयोर्लोके क्रीडाशब्देनैव व्यवहारात्। अत एव तयोर्लोके विगाना-भावः। $ राप्र. १५३

(४) द्यूतसमाह्वययोः करणत एव भेदः, न स्वरूपत इत्यभिप्रायेणाऽऽह– अप्राणिभिर्यदिति। अप्राणिभिः दान्त-शार्ङ्गदारवमार्त्तिकैः अक्षैः। प्राणिभिः कृकवाकुमेषमहिष-वर्त्यादिभिः। नन्द.

[2]द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा।
तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः॥

(१) घातयेत्ताडनादिना। द्विजलिङ्गिनः द्विजलिङ्गोप-वीतादिधरान्। मवि.

(२) द्यूतसमाह्वयौ यः कुर्यात् यो वा सभिकः कारयेत् तेषामपराधापेक्षया राजा हस्तच्छेदादिवधं कुर्यात्। यज्ञोपवीतादिद्विजचिह्नधारिणः शूद्रान् हन्यात्। * ममु.

(३) निमित्तमनुवदन्नैमित्तिकमाह– द्यूतमिति। ब्राह्मणत्वेन प्रतीयमाना अपि ये शूद्रास्तान् प्रत्याह– द्विजलिङ्गिन इति। एतेऽवश्यमनपेक्ष्यतया देशान्निःसार-णीया इति भावः। ‡ मच.

[1]कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्च मानवान्।
विकर्मस्थाञ्छौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात्॥

(१) कितवान् द्यूतसमाह्वयकर्तॄन्, कुशीलवान् नटान्, केरान् अतिवक्रचेष्टितान्, पाषण्डान् बौद्धा-दीन्, विकर्मस्थान् अधर्महेतुकर्मकर्तॄन् पतितान् अन्त्यजादीन्, शौण्डिकान् मद्यविक्रेतॄन् न (? निर्) वासयेत् बहिरेव वासयेत्। मवि.

(२) द्यूतादिसेविनः नर्तकगायकान् वेदविद्विषः श्रुतिस्मृतिबाह्यव्रतधारिणः अनापदि परकर्मजीविनः शौण्डिकान् मद्यकरान् मनुष्यान् क्षिप्रं राजा राष्ट्रान्निर्वास-येदिति। कितवप्रसङ्गेनान्येषामप्यभिधानम्। ममु.

(३) कितवान् दृष्टान्तीकृत्य प्रसङ्गेनान्यानपि संकल-यति– कितवानिति। कुशीलवान् नृत्यजीविनः। केरान् गायकान्। पाषण्डान् पाषण्डं लिङ्गं तद्भूतान् वेद-विद्विषः। विकर्मस्थान् अनापद्यपि परधर्मरतान्। शौण्डिकान्, ते हि मद्यस्त्रीप्रदानेन धर्मप्रणाशात् सर्वानर्थ-कारिणः। मानवानिति तादृशानन्यानपि। यद्वा कुशील-वादिदोषो मनुष्येष्वेव, न गन्धर्वादिषु इति द्योतितम्। मच.

---

* मच., भाच. ममुगम्।

$ शेषं मविगतम्।

(१) मस्मृ. ९।२२३ ; राप्र. १५२.

(२) मस्मृ. ९।२२४ ; राप्र. १५२ 'कारयेत' इत्यत्र 'कारयीत' इति व्याख्याने पाठः, तस्य साधुत्वं चिन्तनीयम्.

* राप्र., भाच. ममुगतम्।

‡ शेषं ममुगतम्।

(१) मस्मृ. ९।२२५ ; मवि. क्रूरान् (केरान्); मच. क्रूरान् (केरान्); राप्र. १५२ क्रूरान् पाषण्ड (चौरान् पाखण्ड) ; नन्द. क्रूरान् (कैलान्) ; भाच. क्रूरान् (चौरान्?) अत्र विवरणतः 'केरान्' इति पाठः प्रतीयते.

(४) कितवान् द्यूतवृत्तीन् । कुशीलवान् गायनवृत्तीन् । कैलान् केलिशीलान् । शौण्डिकान् मद्यपान् । पुरशब्दो राष्ट्रस्याप्युपलक्षणार्थः । कितवसधर्मत्वात् कुशीलवादीनामुपन्यासः प्रासङ्गिकः । नन्द.

(५) कुशीलवान् विषयशीलान् । चौरान् (? केरान्) वक्रचेष्टान् । * भाच.

[1]एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः ।
विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः ॥

(१) एते कितवादयः तथा प्रच्छन्नतस्कराः वेषान्तरधराः चौराः विकर्मक्रियया सज्जनेष्वपि द्यूतादिक्रियाप्रवर्तनेन बाधन्ते बाधां कुर्वन्ति । भद्रिकाः सद्वृत्ताः । अत्र कितवप्रसङ्गादप्युक्तम् । मवि.

(२) अत्र हेतुमाह– एत इति । एते कितवादयो गूढचौरा राष्ट्रे वसन्तो नित्यं वञ्चनात्मकक्रियया सज्जनान् पीडयन्ति । † ममु.

(३) अतः एषां निरासे यत्नाधिक्यं सूचयति– एत इति । वर्तमानाः स्वस्वकर्मणा, विकर्मक्रियया विकर्मणा चौर्यादिना या क्रिया देहधारणादि तया बाधन्ते । साधुभिः संगमय्य स्वदोषैस्तान् दूषयन्तीति भावः । भद्रिकाः भद्रेण साधुना धनपुत्रादिसूचककर्मणा जीवतीः । मच.

(४) भद्रिकाः सुशीलाः । बाधन्ते दुःशीलाः कुर्वन्ति । नन्द.

[2]द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत् ।
तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥

(१) पुराकल्पे पुराणकथासु । मवि.

(२) नेदानीमेव परं किंतु पूर्वस्मिन्नपि कल्पे द्यूतमेतदतिशयेन वैरकरं दृष्टम् । अतः प्राज्ञः परिहासार्थमपि तन्न सेवेत । ममु.

(३) द्यूतस्यानर्थावहत्वमैतिह्येनाऽऽह– द्यूतमिति । पुराकल्पे संसारानादितया बलभद्रदन्तवक्त्रयुधिष्ठिरदुर्योधनादिकाले । हास्यार्थं कुतूहलार्थमपि । द्यूतपदं समाह्वयोपलक्षकम् , धनकारित्ववैरकरत्वहेतोरुभयसाधारण्यात् । मच.

(४) द्यूतस्य दोषमाह, स्वयमपि राज्ञा द्यूतं न कार्यमिति चाऽऽह– द्यूतमिति । पुराकल्पे पूर्वस्मिन् काले वैरकरं दृष्टं नलयुधिष्ठिरादिषु । नन्द.

[1]प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ।
तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ॥

(१) विविधः कल्पः विकल्पः । सम एव राज्ञोच्यते । 'द्यूतधर्मं निबोधत' (९।२२०) इति तत आरभ्य द्वित्राः श्लोका विधायकाः । (शेषः) सर्वोऽप्यर्थवादः । मेधा.

(२) प्रकाशं कर्तव्यवृत्त्युत्पादनेन । यथेष्टं यस्य यथेच्छति नृपस्तस्य तथा कार्यो दण्डभेदः । न त्वत्र शास्त्रे दण्डो नियम्यत इत्यर्थः । मवि.

(३) यो मनुष्यः तत् द्यूतं गूढं प्रकटं वा कृत्वा सेवेत तस्य यथा नृपतेरिच्छा भवति तथाविधो दण्डो भवति । ममु.

(४) तस्मात्तत्कारी दण्डार्ह इत्याह– प्रच्छन्नमिति । तत् द्यूतसमाह्वयम् । प्रच्छन्नं यथा स्यात् , प्रकाशं यथा स्यात् इति । नृपतेरिच्छया दण्डो वधो वेत्यन्वयः । यद्वा 'पणे सहस्रं नृपतेः' इत्युक्तम् । मच.

(५) यथेष्टं अपराधमपेक्ष्य राज्ञो यथा इच्छा भवति शारीरे दण्डे द्रव्यग्रहणरूपे वा दण्डे तथा स्यात् ; स धर्म इत्यर्थः । * राप्र. १५३

(६) तत् द्यूतं यः निषेवेत तस्य दण्डविकल्पः शतदण्डः स्यात् यथेष्टं नृपतेः तथा वा दण्डः । भाच.

---

* शेषं मविगतं मचगतं च ।

† भाच. ममुगतम् ।

(१) मस्मृ. ९।२२६ ; राप्र. १५२–१५३ भद्रिकाः (भाद्रिकाः).

(२) मस्मृ. ९।२२७ ; राप्र. १५३.

* नन्द. राप्रगतम् ।

(१) मस्मृ. ९।२२८ ; राप्र. १५३.

## याज्ञवल्क्यः

ग्रहाणां पूजनम्

[1]ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥

(१) नरेन्द्राणां अभिषिक्तक्षत्रियाणां ग्रहाः पूज्यतमाः । अनेनान्येषामपि पूज्या इति गम्यते । उभयत्र कारणमाह– प्राणिनामभ्युदयविनिपाता ग्रहाधीनाः यस्मात्तस्मादधिकारिभिः पूज्याः । किंच, जगतः स्थावरजङ्गमात्मकस्य भावाभावौ उत्पत्तिनिरोधौ ग्रहाधीनौ । तत्र यद्येते पूजितास्तदा स्वकाल एवोत्पत्तिनिरोधौ भवतः । अन्यथा उत्पत्तिसमये नोत्पादः अकाले निरोधश्च । जगदीश्वरत्वाच्च नरेन्द्राणां तद्योगक्षेमकारिणां पूज्यतमा ग्रहा इति तेषां विशेषेण शान्तिकादिष्वधिकारः । तथा च गौतमेन 'राजा सर्वस्येष्टे ब्राह्मणवर्ज्यम्' (गौध. ११।१) इति राजानमधिकृत्य 'वर्णानाश्रमांश्च न्यायतोऽभिरक्षेत्, चलतश्चैतान्स्वधर्मे स्थापयेत्' (गौध. ११।९–१०) इत्यादीन् कांश्चिद्धर्मानुक्त्वा 'यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत । तदधीनमपि ह्येके योगक्षेमं प्रतिजानते' (गौध. ११।१७–१८) इति शान्तिकपौष्टिकाद्यनुष्ठानहेतुमभिधाय 'शान्तिकपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषणसंवननस्तम्भनाभिचारद्विषद्व्यृद्धियुक्तानि च शालाग्नौ कुर्यात्' (गौध. ११।१९) इति शान्तिकादीनि दर्शितानि । मिता.

(२) अनेकजन्मार्जितपुण्योपचयवतामपि नरेन्द्राणां यतो ग्रहाधीना उच्छ्रायाः संपदतिशयाः पतनानि च विपदतिशयरूपाणि, तथा जगतो भावाभावौ उदयप्रलयौ ग्रहाधीनावेव, तस्मादन्येभ्यः पूज्यतरेभ्योऽतिशयेन ग्रहा उक्तप्रकारेण पूज्याः । यद्यपि धर्माधर्मौ सुखदुःखानुभवहेतू तथापि कालविशेषमनपेक्ष्य न तद्धेतू भवतः । न च ग्रहाणां गतिविशेषमन्तरेण कालविशेषः शक्यो निरूपयितुमिति भवति ग्रहाधीनत्वं नरेन्द्रोच्छ्रायादेः । अतो विरुद्धं ग्रहस्थानं दृष्ट्वा तत्सूचितागामिदुःखसंघातविघाताय ग्रहयज्ञः कार्यः । स हि शान्तिकामस्य विहितः इति तात्पर्यार्थः । * अप.

(३) ग्रहपूजने शान्त्याद्यर्थे सर्वेषामधिकाराविशेषेऽपि राज्ञा राज्याभ्युदयार्थे विशेषतस्ते पूज्या इत्याह– ग्रहाधीना इति । नरेन्द्राणां अभिषिक्तक्षत्रियाणां उच्छ्रायाः ऐश्वर्यादयः पतनानि तद्भ्रंशादयश्च ग्रहाधीनाः । जगतः तत्परिपालनीयस्य लोकसमूहस्य भावाभावौ जन्ममरणे ग्रहाधीनौ । तस्माद्राज्ञा स्वीयसाधारणयोगक्षेमार्थं परिपालनीयलोकहितार्थं च ग्रहाः पूज्यतमाः । यथाऽन्येषां पूज्याः ततोऽप्यतिशयेन पूज्या इत्यर्थः । वीमि.

यज्ञाः कर्तव्याः

†[2]यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥

दानादिविषयकः राजशासनलेख्यविधिः

[2]दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥

(१) एवं तावद्धिरण्यादिषु प्रदानान्तैव । भूमिनिबन्धदानयोस्त्वयं विशेषः– दत्त्वेति । कस्मात् ? – आगामीति । निबन्धः अक्षयनिधिः । स्पष्टमन्यत् । विश्व.

(२) पात्रे निक्षिप्य किं कुर्यादित्याह– दत्त्वेति । यथोक्तविधिना भूमिं दत्त्वा स्वत्वनिवृत्तिं कृत्वा निबन्धं वा एकस्य भाण्डभरस्येयन्तो रूपकाः, एकस्य

---

(१) यास्मृ. १।३०८ ; विश्व. १।३०३ मुच्छ्रायाः (मुच्छ्रयाः) : १।३४५ पूर्ववत्, पू. ; मिता. ; अप. १।३०६ ; दीक. ; वीमि.

* दीक. अपगतम् ।

† व्याख्यानानि 'ऋत्विजः' इत्यस्मिन् प्रकरणे द्रष्टव्यानि ।

(१) यास्मृ. १।३१४. शेषः स्थलादिनिर्देशः 'ऋत्विजः' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(२) यास्मृ. १।३१८ ; विश्व. १।३१४ भद्र (क्षुद्र) ; मिता. ; अप. १।३१६–३१७ ; रार. ७६ भूमिं निबन्धं वा (निबन्धं भूमिं च) तु (च) नृपति (नृपतेः) ; दीक. ; राप्र. १२९ ; नीम. ३७ तु (च),

पर्णभरकस्येयन्ति पर्णानीति वा निबन्धं कृत्वा लेख्यं कारयेत् । किमर्थम् ? आगामिनः एष्यन्तः ये भद्राः साधवः नृपतयः भूपाः तेषां 'अनेन दत्तम्, अनेन प्रतिगृहीतम्' इति परिज्ञानाय । पार्थिवः भूपतिः । अनेन भूपतेरेव भूमिदाने निबन्धदाने वाऽधिकारः, न भोगपतेरिति दर्शितम् । * मिता.

(३) भूमिं क्षेत्रारामग्रामादिकां विप्राय दत्त्वा निबन्धनं वा कृत्वा भद्राणां शास्त्रार्थकारिणां आगामिनां नृपतीनां परिज्ञानाय परिनिश्चयाय पार्थिवः पृथिवीपतिः लिखितं लेख्यं वक्ष्यमाणप्रकारं कारयेत् । 'अस्मिन् ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिनैतद्धनमस्मै प्रत्यब्दं प्रतिमासं वा देयम्' इत्येवमादिनियमो निबन्धः । अप.

(४) तत्र भूमिदाने तत्प्रसङ्गान्निबन्धप्रकरणे च विशेषमाह— दत्त्वेति । भूमिं ब्राह्मणादिभ्यो दत्त्वा, निबन्धं अस्यां भूमावियान् करो ग्राह्य इत्यादिव्यवस्थां च कृत्वा, आगामिनां भविष्यतां भद्राणां समीचीनानां नृपतीनां परिज्ञानाय लेख्यं दानादिप्रतिपादकलिपिरूपं कारयेत् । वीमि.

(५) निबन्धः वृत्तिः । भद्रः धार्मिकः । नीम. ३७

'पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्याऽऽत्मनो वंश्यानात्मानं च महीपतिः ॥
'प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।
स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥

(१) किं पुनर्वक्ष्यमाणलेख्यलक्षणवत् कार्यम् ? नेत्युच्यते । किं तर्हि ? — पट इति । पटवचनं भूर्जनिवृत्त्यर्थम् । परिशब्दात् प्रज्ञादूतकस्वहस्तमुद्रास्कन्धावारसमावासनामदेशादिचिह्नितम् । आदावेवाभिलेखनीयाः पूर्वपुरुषास्त्रयः । वंश्यत्ववचनाच्च त्रियोऽपि । अनन्तरमात्मानम् । ततः प्रतिग्रहपरीमाणम् । अस्मिन् देशे, अमुकनामा, इयान् ग्रामः इत्यादि । ततो दानाच्छेदमुपवर्ण्य एतद्दानफलम्, एतदाच्छेदनफलम्, 'षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः । आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥' इत्यादि । लेखकनामाङ्कितं स्वहस्तसंयुक्तमागामिक्षुद्रनृपत्यशोचनं स्थिरं भूमेश्छिद्रन्यासेनाऽऽचन्द्रात् स्थितिसंस्थानं कारयेत् । सर्वथा यथाऽऽगामिनोऽप्यस्मादेव शासनान्न विकुर्युः तथा कार्यमिति । विश्व.

(२) लेख्यं कारयेदित्युक्तम्, कथं कारयेदित्याह— पट इति । कार्पासिके पटे ताम्रपट्टे फलके वा आत्मनो वंश्यान् प्रपितामहपितामहपितॄन् बहुवचनस्यार्थवत्त्वाय, वंशवीर्यश्रुतादिगुणोपवर्णनपूर्वकमभिलेख्य, आत्मानं चशब्दात् प्रतिग्रहीतारं प्रतिग्रहपरिमाणं दानच्छेदोपवर्णनं चाभिलेख्य । प्रतिगृह्यते इति प्रतिग्रहः निबन्धः, तस्य रूपकादिपरिमाणम् । दीयते इति दानं क्षेत्रादि, तस्य छेदः छिद्यतेऽनेनेति छेदः नद्याघाटौ निवर्तनं तत्परिमाणं च, तस्योपवर्णनं अमुकनद्याः दक्षिणतः अयं ग्रामः क्षेत्रं वा, पूर्वतोऽमुकग्रामस्यैतावन्निवर्तनमित्यादिनिवर्तनपरिमाणं च लेख्यम् । एवमाघाटस्य नदीनगरवर्त्मादेः संचारित्वेन भूमेर्न्यूनाधिकभावसंभवात्तन्निवृत्त्यर्थम् । स्वहस्तेन स्वहस्तलिखितेन 'मतं मे अमुकनाम्नः अमुकपुत्रस्य यदत्रोपरि लेखितम्' इत्यनेन संपन्नं युक्तम्, कालेन च द्विविधेन शकनृपातीतरूपेण संवत्सररूपेण च कालेन चन्द्रसूर्योपरागादिना संपन्नम्, स्वमुद्रया गरुडवाराहादिरूपया उपरि बहिः चिह्नितं अङ्कितम्, स्थिरं दृढं शासनं शिष्यन्ते भविष्यन्तो नृपतयोऽनेन 'दानाच्छ्रेयोऽनुपालनम्' इति शासनं कारयेत् महीपतिः, न भोगपतिः । संधिविग्रहादिकारिणा, न येन केनचित्, 'संधिविग्रहकारी तु भवेद्यस्तस्य लेखकः । स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥' इति स्मरणात् । दानमात्रेणैव दानफले सिद्धे

* रार., दीक. मितागतम् ।

(१) यास्मृ. १।३१९ ; विश्व. १।३१५ मुद्रो (मुद्रा) ; मिता. ; अप. १।३१७–३१८ ; रार. ७ वा ताम्रपट्टे वा (ताम्रपदे वाऽपि) ; दीक. ; वीमि. ; राप्र. १२९ ; नीम. ३८.

(२) यास्मृ. १।३२० ; विश्व. १।३१६ दानच्छेदो (दानाच्छेदो) ; मिता. ; अप. १।३१८–३१९ ; दीक. ; राप्र. १२९ परी (परि) ; वीमि. ; नीम. ३८.

शासनकरणं भोगाभिवृद्ध्या फलातिशयार्थम् ।
* मिता.

( ३ ) स्वनामाङ्कितमुद्रया स्वपत्रमात्रमङ्कयेत् ।
रार. ७

( ४ ) पटस्यास्थिरत्वात्ताम्रमये पट्टे । † दीक.

( ५ ) स्वहस्तचिह्नेन दानकाललिखनेन च संपन्नमत एव स्थिरं अप्रामाण्यशङ्कानास्कन्दनीयं महिपतिः कारयेत् । तुशब्देनान्यत्र दाने लेख्यावश्यकत्वं व्यवच्छिद्यते । आत्मानं चेति चकारेण प्रतिग्रहीतृसमुच्चयः ।
§ वीमि.

[1]नातः परतरो धर्मो नृपाणां यद्रणार्जितम् ।
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥

( १ ) एवं तावत् स्वराष्ट्र एवार्जननियम उक्तः । इदानीं परस्वानपहरणप्रसक्तावपवादमाह— नात इति । रणार्जितादित्यभिप्रायः । विश्व.

( २ ) ' भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ' इति सामान्येन स्वस्वदानमुक्तम्, इदानीं नृपाणां विक्रमार्जितस्य दाने फलातिशयमाह— नात इति । अस्मादुत्कृष्टतमो धर्मो नृपाणां न विद्यते यद्रणार्जितं द्रव्यं विप्रेभ्यो दीयते, यच्च प्रजाभ्योऽभयदानम् ।
$ मिता.

( ३ ) यद्रणाप्तधनप्रदानं विप्रेभ्यः, प्रजाभ्यश्च यदभयप्रदानम्, नास्मादधिकोऽन्यो नृपाणां धर्मोऽस्ति । एतदुपायश्च शत्रुविजयः इति, तत्सिद्ध्ये च रणं कुर्यादिति तात्पर्यार्थः । अप.

( ४ ) दानान्तराद्रणार्जितधनदानस्य प्रजाभ्योऽभयदानस्य चातिशयमाह— नात इति । चकारेण रणार्जितशरणागतादिसमुच्चयः । $ वीमि.

## बृहस्पतिः

दानादिविषयकः राजशासनलेख्यविधिः

[2]दत्त्वा भूम्यादिकं राजा ताम्रपट्टेऽथवा पटे ।
शासनं कारयेद्धर्म्यं स्थानवंश्यादिसंयुतम् ॥
अनाच्छेद्यमनाहार्यं सर्वभाव्यविवर्जितम् ।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयागतम् ॥
दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षष्टिं वर्षसहस्राणि दानच्छेदकफलं लिखेत् ॥
स्वमुद्रावर्षमासार्धदिनाध्यक्षाक्षरान्वितम् ।
एवंविधं राजकृतं शासनं समुदाहृतम् ॥

जातिदेशकुलधर्माः पालनीयाः

[3]जातिदेशकुलानां च ये धर्माः प्राक् प्रवर्तिताः ।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ॥

## * बार्हस्पत्यसूत्रम्

विविधानि राज्ञः कर्तव्यानि

[3]आत्मवान् राजा ॥
आत्मवन्तं मन्त्रिणमापादयेत् ॥
दण्डनीतिरेव विद्या ॥
धर्ममपि लोकविक्रुष्टं न कुर्यात् ॥
करोति चेदाशास्यैनं बुद्धिमद्भिः ॥
समानैः सेव्यः ॥
स्त्रीबालवृद्धैः सह न वदेद्धर्मनीतिकृत्यानि ॥
ऐन्द्रजालिकं न कुर्यात् ॥
मन्त्रवादोत्सवौ च ॥
आमयविषध्वंसनानि च ॥

---

* अप., नीम. मितागतम् ।
† शेषं विश्वगतं मितागतं च ।
§ शेषं मितागतम् ।
$ दीक. मितागतम् ।
( १ ) यास्मृ. १।३२३ ; विश्व. १।३१९ ; मिता.; अप. १।३२१–३२२ ; ममु. ७।२०१ ; दीक. ; वीमि. ; राप्र. ४१०.

$ शेषं मितागतम् ।
* अशुद्धिबहुलो ग्रन्थोऽयम् । विविधानि राजकर्तव्यानि विषयव्यवस्थां विना कथितानि अत्रैव संगृहीतानि ।
( १ ) अप. १।३१८–३१९.
( २ ) रार. ७५.
( ३ ) बासू. १।१–५८.

न भस्मधारणम् ॥
नाग्निहोत्रवेदपाठादीनि च ॥
न तीर्थयात्रा ॥
न राजसेवा च ॥
न स्त्रीसेवा च ॥
न मद्यं पिबेत् ॥
ब्राह्मणं न हन्यात् ॥
स्तेयं न कुर्यात् ॥
बहु न च स्रगनुलेपौ ॥
न विषीदेत् ॥
न चातिकुप्येत् ॥
अविषये लोभमदानसंज्ञम् ॥
केदारे बीजानि वापयेत् ॥
दानं कर्तव्यम् ॥
तदसहिष्णुता लोभः ॥
स्तेयं लोभश्च ॥
स्वद्रव्यव्ययहेतुः कामः ॥
गुरुदेवप्राज्ञनृपादिहिंसाबुद्धिः क्रोधः ॥
स्वशिरस्ताडनं च ॥
बलादिषु च समं शत्रुं युद्धेन हन्यात् ॥
अन्याभियोधी सामदानभेदमायोपेक्षादिभिः ॥
मलवेषं न कुर्यात् ॥
मृगयातिसङ्गं च नाऽऽचरेत् ॥
स्त्रीष्वतिसङ्गादयशो वर्धते ॥
आयुश्च क्षीयते ॥
द्यूतपरतापपरापवादपातकिसमागमे समन्त्रपदानि परच्छिद्राणि विद्याव्यसनपरिहास्येन ॥
औषधोपयोगविण्मूत्रविसर्जनकस्नानदन्तधावनमैथुनोपभोगदैवतपूजाऽपि रहस्येन ॥
वृथा धर्मध्वजिनं न विश्वसेत् ॥
निन्देन्न च ॥
उन्मत्तजडादीन् दृष्ट्वा न हसेच्च ॥
तुल्यशीलवयोभिः क्रीडितव्यं रहस्ये ॥
गजाश्वक्रीडे व्यक्ते न द्विमूर्तम् ॥
दूषयेन्न च स्वजातिजीवत्सु ॥
अर्थेनानुरागेणाभिजन्मनौदार्येण पूर्वैर्भविष्यैरधिकत्व इच्छा कर्तव्या ॥
पूर्वाचरितं धर्ममनुजीविसख्यममात्यज्ञातिसुहृद्बान्धवान् समं पश्येत् ॥
बहिरन्तर्दण्डदानावनुजीविषु ॥
सामभेददानानि मन्त्रिषु ॥
सामभेददानार्थमायपिण्डानि ज्ञातिषु ॥
अप्रियमपि वचनं शृणुयात् ॥
दुर्दिनग्रहवैषम्यत्रिजन्मनक्षत्रे गुरुकार्यप्राप्तौ न च मङ्गलानि सेवेत ॥
एकदेशैकरूपिणीमभिजातां स्त्रियं गमयेत् ॥
अतिभेदयेन्नातिसामं नातिदानं न च स्त्रीषु दण्डो न च मायोपेक्षा कर्तव्या ॥
तासु न बहु वदेत् ॥
ग्रामयाचकस्तुतमागधवन्दिनटनर्तक्युपाध्यायासत्यवादबटुविटवणिजगोपालवेश्याकुनृपेष्वनृताडम्बरं वक्तव्यः ॥
संन्यासं नृपवेश्यामन्त्रवादोपजीविनं चिरं न सेवेत ॥
आत्मप्रभुं सेवेत ॥
आयत्यादीनति न ॥
स्त्रीद्यूतपानसक्तान्न सेवयेत् ॥
[1]स्वनियमं कुर्यादप्रमादेन ॥
अश्वनियामक इव ॥
शिरःकम्पनास्थानेन स्वागतेन शिष्टताम्बूलदानेन ब्राह्मणोत्तमान् ॥
दुर्ब्राह्मणं शिरःकम्पेन न सोपायनमपि ॥
समानप्रभुं विश्वेश्वरं वा स्वागतेनाऽऽसनेन शिरःकम्पेन ताम्बूलदानेन हास्यकथया च ॥
स्मितेन स्वागतेनास्यास्त्रैवर्णिकान् ॥
ईक्षणस्मितेन स्वागतेन शूद्रान्न ॥
अभीष्टद्रव्यदानेन बालवृद्धादीन् ॥

---

(१) बासू. ११६७–११२.

अन्त्यपाषण्डादीन् वाङ्मात्रेणापि न ॥
कार्यंगुरुतयाऽनुगच्छेत् ॥
अल्पं वदेच्च योगं दद्यात् ॥
वर्णिकापरिग्रहं न कुर्याद्रहस्ये ॥
कर्मकारान्प्रति योगीनपि कार्यमविचारयेत् ॥
स्निग्धैः सह समानं वरयेन्मन्त्रित्वे ॥
अन्त्यजं त्वनन्त्यजातिनम् ॥
अन्त्यजानां स्वार्थानिवेदकत्वमाज्ञाकरत्वं च ॥
तन्नातिलालयेत् ॥
न विश्वसेच्च ॥
सर्वं ज्ञात्वा न कुर्यात् ॥
धर्मगुप्तिः गृहयात्रागुप्तिः कार्यगुप्तिः वैरगुप्तिः यशोभङ्गे सत्यमपि नेति वदेत् ॥
चिकित्सकज्योतिषमन्त्रवादिनः संग्रहेद्वृत्तशील-संपन्नान् ॥
सत्यमपि दुःखानर्थसाधनमपि न वदेत् ॥
पञ्चविंशतिवर्षं यावत्क्रीडाविद्यां व्यसनात्कुर्यात् ॥
अत उत्तरमर्थार्जनम् ॥
आत्मानमनृणी कुर्यात् ॥
ऋणवाञ्जायते त्रिभिः कामक्रोधलोभैः ॥
शरीरं सर्वदा रक्षेच्च ॥
नित्यकर्म न त्यजेत् ॥
जनघोषे सति क्षुद्रकर्म न कुर्यात् ॥
नष्टे न स्थातव्यम् ॥
दूरपरिहरणीयं गुरुतरमपि तद्राज्यकार्यम् ॥
कुसुमान्तान् दण्डनायकान्नवान्न सेवेत ॥
अल्पहानिः सोढव्या ॥
यथा मातङ्गचोरव्यालसर्पव्याघ्रकुलं विपिने श्मशाने वसति तस्मात्परमनागसां ज्ञातिवैरं न कर्तव्यम् ॥
एकामिषश्वानवत् राज्योपप्लवे तद्राज्यक्षेत्रम् ॥
नीतिः किल नदीतीरतरुवत् ॥
तन्नेहितव्यम् ॥
भूतद्रोहिणः कुसुमान्तादयः ॥

यशोवीर्यायुःश्रीरतिकसामन्तसेवा ॥
कामक्रोधमदमात्सर्यपैशुन्यादीन्न कारयेत् ॥
अरिः शुभशीलो मित्रम् ॥
सुहृत्सु शुभशीलः शत्रुः ॥
चन्द्रादित्ययोरेकरुचित्वाच्छत्रुत्वम् ॥
यदि चेन्न स्थितिस्तयोः ॥
ज्ञातिषु यत्र वैरं तत्कुलद्वयमामूलं नश्यति ॥
यः शास्त्रं दण्डनीतिं परित्यजत्यनर्थकः शलभा इव वह्निं प्रविशत्यज्ञानादित्याह भगवानाचार्यः सुरेन्द्रगुरुः ॥
[1]गुणवतो राज्यम् ॥
विद्यागुणोऽर्थगुणः सहायगुणाश्च ॥
स्वकुलरञ्जनं च चारित्ररक्षणम् ॥
कृषिगोरक्षवाणिज्यानि ॥
सर्वथा लौकायतिकमेव शास्त्रमर्थसाधनकाले ॥
कापालिकमेव कामसाधने ॥
आर्हतं धर्मे ॥
लौकायतिकमसेनार्थं क्षिप्रं नश्यति तत् ॥
कापालिकार्हतबौद्धाश्च ॥
एतेषु तिष्ठन् शलभवह्निवत् ॥
फलानि श्रोत्रसलिलकल्पानि ॥
अविद्यायुक्तः पुरुषार्थं साधयितुं धर्मयुक्ते यदिच्छति तदा लौकायतिकाभिधानपाषण्डी ॥
यदा चण्डाल उदारसुरामांसादिकामेच्छुस्तदा कापालिकाभिधानपाषण्डी ॥
यदा संध्योपासनाद्यग्निहोत्रादि परित्यज्याहिंसाधर्मेच्छुस्तदा क्षपणकपाषण्डी ॥
यदा वेदोक्तकर्म ज्ञानं च सर्वेश्वरं शिवं विष्णुं श्रियमपि परित्यज्य सर्वं शून्यमिति वदति तदा बौद्धाभिधानपाषण्डी ॥
वृथा धर्मं वदत्यर्थसाधनं लौकायतिकः पिण्डादयश्चोर इति च ॥
सर्वमर्थार्थं करोत्यग्निहोत्रसंध्याजपादीन् ॥

---

(१) बासू. २११–७५.

स्वदोषं गूहितुं कामार्तं वेदं पठति ॥

अग्निहोत्रादीन् करोति ॥

सुरापानार्थमहिलामेहनार्थं करोति ॥

विष्ण्वादयः सुरापानिन इति कापालिकाः ॥

धर्मार्थं मलपिण्डधारणाद्धर्मं वदति क्षपणकः ॥

शिवादय इति वदति क्षपणकः ॥

परापवादार्थं वेदशास्त्रधर्मादीन् पठति ॥

सर्वान्निन्दति ॥

महेश्वरविष्ण्वादीनपि ॥

सोऽप्यशनार्थं धर्मं वदति ॥

वदनार्थं परान् स्तौति स बौद्धः ॥

लौकायतिको मृतो भवत्यर्थकामधर्ममोक्षविहीनो नारकी च ॥

कुले च तत्कुलं तत्पुत्रपौत्रान्तरे विनश्यति ॥

कापाली स्वग्रामगृहस्वजनैः परित्यक्तः सर्वलोकनिन्दितो नारकी भवति ॥

तस्मिन् काल एव कुलं विनश्यति ॥

क्षपणकः स्वकुलग्रामवासिभिर्निन्दितो भवति त्रिकुलं विनश्यति ॥

बौद्धसंचितं कुलं पुत्रपौत्रकाले वा विनश्यति सुदुष्टो नारकी ॥

एवं पाषण्डिसंपर्कं मनसाऽपि न कुर्यात् ॥

सुव्यवस्थितमन्त्रेण परच्छिद्रज्ञानिना धार्मिकेण राज्यं परिपालयितुं न( ? ) शक्यते ॥

ऐश्वर्यमदमत्तेन सलोभमानिना संचितं विनश्यति ॥

कार्यं निश्चित्य विषयाननुभवति यः स उत्तममर्थं साधयति ॥

चेष्टया कार्यज्ञान्यर्थपर इति धर्मवानिति लोकैर्यथा न ज्ञायते तथा कर्तव्यम् ॥

ईश्वर इव चन्द्रादित्याविव ॥

नीतेः फलं धर्मार्थकामावाप्तिः ॥

धर्मेण कामार्थौ परीक्ष्यौ ॥

धर्मं धर्मेण ॥

अर्थमर्थेन ॥

कामं कामेन ॥

मोक्षं मोक्षेण ॥

गुरुशासनं कार्यमेव विरुद्धं धर्मेणापि पाण्डवविवाह इव, अर्जुनस्य संन्यास इव, व्यासविधवागमनमिव, कर्णोत्पादनमिव, राममातृवधमिवेत्यादि ॥

नीतिवियुक्तः पुत्र इव शत्रुः ॥

बालं दुष्टं साहसिकमज्ञातशास्त्रं मन्त्रे न प्रवेशयेत् ॥

मूढा दुराचारास्तीक्ष्णा आत्मबुद्धयः क्षिप्रक्रुद्धा बाला मन्त्रयोग्या न ॥

सर्वरत्नान्यपि दीयन्तां स्वकार्यजीवयशोरक्षणे ॥

मन्त्रकाले न कोपयेत् ॥

धर्मप्रधानं पुरुषार्थो न ॥

अधर्मेण भुज्यमानं सुखमसुहृत् ॥

स्थितिर्वर्धनम् ॥

अपथ्यभोजनो मृत्युप्रीतिकर इव सत्यव्रतः शास्त्रेषु निष्ठितः पुरुषः सागरमपि शोषयेत् ॥

क्रुद्धो यदि हतपौरुषास्त्रस्ता भवन्ति ॥

एक एव बहून् दुर्जनो नाशयति ॥

पौरुषे निष्ठितो दैवः ॥

यस्य स्वदाररतिः यस्याऽऽत्मदमने शक्तिस्तेन सदृशो न ॥

सज्जनो न भयाद् व्यतिवर्तते ॥

तस्मिन् काले हितमवक्तव्यमवाक्यज्ञैः सुहृद्भिः ॥

उत्सिक्तहृदयं धर्मे चलितगौरवमजितात्मानं शासितुं नोत्सहेत ॥

दारुणकर्मभिः श्रान्तमज्ञाननिद्रया सुप्तं धर्मवाक्यानिलैः शीतैर्बालिशं प्रबोधयेत ॥

दुर्जनमध्ये सूर्यवत् प्रकाशते सुजनः ॥

अधर्मव्यवस्थितान् न्यायवृत्तेन वारयेत् ॥

अधर्मं नार्जयेत् ॥

अकीर्तिं नार्जयेत् ॥
न मारयेत् ॥
बालो निवार्यतां धर्मपाठाङ्कुशेन गज इव ॥
गुरुवचनमलङ्घनीयं नयानुगतं चेत् ॥
गुरुमपि नीतिवियुक्तं निरासयेत् ॥
गुरुराहेति ॥
[1]जितक्लेशस्य पौरुषम् ॥
देशान्तरवासेन जितक्लेशो भवति ॥
सर्वबलकालदेशसामप्रकृतिसहायामवयसां ज्ञानं कार्यम् ॥
उपवासादिसहिष्णुत्वं च ॥
सुगन्धवासान् कोशान् कुर्यात् ॥
बहुवादं मधुरमेव कुर्यात् ॥
शमबुद्धीन् मणीन् सर्वान् सदाऽऽराधयेत् ॥
नवानि मन्त्राणि विद्यात् ॥
त्रिविधानि शाक्ता वैष्णवा शैवानि तत् प्रभिन्नानि ॥
मोक्षपुर्यां द्वारं त्रयम् ॥
शाक्ता वैष्णवाः शैवाः ॥
पोतयानमार्गवच्छाक्तम् ॥
महापथवद्वैष्णवम् ॥
केवलप्रधानिकमश्वरथयानवत् ॥
लौकायतिकक्षपणकबौद्धादि बहुशार्दूलदुष्टमृगाकीर्णशून्याटवीगुहामार्गवत् ॥
एतन्निरूप्यैकमाश्रयेत् ॥
ज्योतिर्नाथस्थितं सदा निरूपयेत् ॥
चातुर्वर्ण्यं रक्षेच्च ॥
औषधानि सेवेत च ॥
बलवर्णतेजोमदबुद्धिशौर्यदयावर्धनानि दोषधातुशमानि ॥
दानमानालंकारविद्याभिः सिद्धिं लभेत ॥
अष्टादश तीर्थानि निरूपयेत् ॥
षट् प्रकृतयस्तीर्थं शत्रुमित्रोदासीनाश्च ॥
अन्तःशत्रुरन्तर्मित्रोऽन्तरुदासीन इति तेऽप्यनुजीविसखिसुहृदश्च ॥
भार्यापुत्रबान्धवाश्च ॥
अन्येऽपि देवालयनृत्तयागभूमिसंध्यावापीचतुष्पथपाषण्डालयापणबालविद्यापाठदेशखलूरीशालीचन्द्रदर्शनाद्युत्सववेश्यागृहसमुद्रतीरयतिसंनिधिराज्यसंधिसुराविक्रयस्थानपान्थनिवासाश्च ॥
शृङ्गारवेषं कुर्यात् ॥
पुरद्वारे सर्वनिरोधनं कार्यम् ॥
सर्वान्न निषेधयेच्च ॥
इतिहासपुराणानि मानयेत् ॥
तत्पाकांश्च ॥
शाक्तागमांश्च ॥
वैखानसागमांश्च ॥
सांख्यांश्च ॥
शैवांश्च ॥
सर्वानपि स्वाध्यायं कुर्यात् कारयेच्च ॥
ब्राह्मणं न हन्याद्दोषदुष्टमपि ॥
निर्दयस्य दया कर्तव्या ॥
ग्रामणीन् संभावयेत् ॥
नगरेन्द्रांश्च ॥
दुर्बलमपि साम कुर्यात् ॥
दानेन बहु ॥
न स्वल्पं च ॥
नोत्तमेषु गुणबाहुल्यक्रमेण ॥
अक्षैर्दीव्यात् ॥
नैव दीव्याच्च ॥
सर्पादीन् हन्यात् ॥
उत्तमान् नानामन्त्रसिद्धान् विद्याबहुलान् द्विजान् मानयेत् ॥
अन्यराष्ट्रजान् द्विजान् क्षत्रबन्धून् कुमारसामन्तादीनात्मवत् संभावयेद् भोजनाच्छादनादिभिः ॥

(१) बासू. ३।१-६३.

शरणागतं सर्वपातकयुक्तमपि रक्षेत् ॥
दुष्टनिग्रहं कुर्यात् ॥
शिष्टपरिपालनं च ॥
ग्रामं न बाधेत ॥
नगरं च ॥
देवालयानि च ॥
आसवानि सेवयेत् ॥
अति न ॥
मांसानि च ॥
घृणा कार्या ॥
बौद्धादयो न ॥
अग्राह्या न ॥
मत्तकाशिन्यः सेव्याः ॥
[1]ज्ञातीनां ज्ञातयो व्यसने हृष्यन्ति ॥
ज्ञातिं ज्ञातयः प्रच्छन्नहृदयाः क्रूरा उपद्रवन्ति ॥
सर्वभयेषु ज्ञातिभयं घोरम् ॥
गोषु पयः ब्राह्मणे कोपश्च ॥
स्त्रीषु चापलं दूरत्वं ज्ञातिषु सौहृदं पत्रजलबिन्दुवत् ॥
हितं गुरुजनवाक्यं शास्त्रचोदितं च ये न शृण्वन्ति कालचोदितास्तस्मात् तान् सुपरिहृत्यान्यत्र वसेत् ॥
लोकविरुद्धं नाऽऽचरेत् ॥
मन्त्रविद्यागुह्यपदमेषु ग्रहान् बान्धवान् कुशलादन्यत्र न कार्यं व्यसनानि च ॥
दुर्जनं परिहृत्य वक्तव्यं विद्यायुक्तोऽपि गृहाहिरिव ॥
शत्रुपक्षादागतं न विश्वसेत् ॥
गुणतः संगृह्णीयात् ॥
भावैः परीक्षयेत् ॥
वीरणसारैः सह साम ज्ञायते बुद्धिमविज्ञाते सहसा परीक्षयेत् ॥
इङ्गितैर्ज्ञातुं शक्यते ॥
प्रसन्नो न ॥
अशङ्कितमतिः स्वस्थः ॥
अकोपनश्च बालादयोऽपि विवृण्वन्ति हि तम् ॥
स्वकुलस्य विनाशं ज्ञात्वा बुद्धिमांस्तत्र शत्रुपक्षमपि न युक्तमाश्रयेत् ॥
हृदये यथावच्छुभाशुभं पूर्वमुदेति न दुष्टाचारः सर्वत्र कारयेत् ॥
चपला न बहुमान्याः ॥
इत्याहाऽऽचार्यो बृहस्पतिः ॥
[2]देशकालयोग्यं कर्म नयानयौ च वेदयेत् ॥
विपरीतं न वेदवीर्यदर्पेण ॥
हितानि निरूपयेत् ॥

## व्यासः

दानादिविषयकः राजशासनलेख्यविधिः

[3]राज्ञा तु स्वयमादिष्टः संधिविग्रहलेखकः ।
ताम्रपट्टे पटे वाऽपि प्रलिखेद्राजशासनम् ॥
[4]स्थानं वंशानुपूर्वीं च देशं ग्राममुपागतान् ।
ब्राह्मणांस्तु तथा चान्यान् याज्यानधिकृतानपि ॥

स्थानं राजधानी । उपागतान् आगन्तुकान् ।

राप्र. १२९.

[5]कुटुम्बिनोऽथ कायस्थान् दूतवैद्यमहत्तरान् ।
मेदचण्डालपर्यन्तान् सर्वान् संबोधयन्निति ॥

महत्तरः ग्रामदाता । राप्र. १२९–१३०.

[6]मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयाऽमुकायाद्य दानं सब्रह्मचारिणे ॥

---

(१) बासू. ५।१०–३०.

(१) बासू. ६।१–३.

(२) अप. १।३१९.

(३) अप. १।३१९ गतान् (गतम्) उत्तरार्धे (ब्राह्मणांस्तु तथैवान्यान्मान्यानधिकृतांल्लिखेत् ॥); राप्र. १२९.

(४) अप. १।३१९ स्थान् दूत (स्थदूत); राप्र. १२९.

(५) अप. १।३१९; राप्र. १२९.

[1]अनाच्छेद्यमनाहार्यं सर्वभोगविवर्जितम् ।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयागतम् ॥
[2]दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षष्टिवर्षसहस्राणि दानच्छेदे फलं लिखेत् ॥
[3]स्वमुद्रावर्षमासार्धदिनाध्यक्षाक्षरान्वितम् ।
एवंविधं राजकृतं शासनं समुदाहृतम् ॥

अर्धं पक्षः । दिनाध्यक्षः वारः । राप्र. १३०

[4]ज्ञातं मयेति लिखितं दात्रध्यक्षाक्षरैर्युतम् ।
अब्दमासतदर्धाहराजमुद्राङ्कितं तथा ।
अनेन विधिना लेख्यं राजशासनकं लिखेत् ॥

## बृहत्पराशरः

स्त्रीणां विवाहः

[5]उद्वाहमुदितं स्त्रीणां यौनसंबन्धकारणात् ॥

## हरिवंशः

अधार्मिकस्य वेनराजस्य निग्रहः धार्मिकवैन्यराजस्य जननं च ऋषिकृतम्

वैशम्पायन उवाच—

[6]आसीद्धर्मस्य गोप्ता वै पूर्वमत्रिसमः प्रभुः ।
अत्रिवंशसमुत्पन्नस्त्वङ्गो नाम प्रजापतिः ॥
तस्य पुत्रोऽभवद्वेनो नात्यर्थं धर्मकोविदः ।
जातो मृतसुतायां वै सुनीथायां प्रजापतिः ॥
स मातामहदोषेण वेनः कालात्मजात्मजः ।
स्वधर्मं पृष्ठतः कृत्वा कामाल्लोभेष्ववर्तत ॥

कालात्मजायाः आत्मजः । नीटी.

मर्यादां स्थापयामास धर्मापेतां स पार्थिवः ।
वेदधर्मानतिक्रम्य सोऽधर्मनिरतोऽभवत् ॥
निःस्वाध्यायवषट्कारास्तस्मिन् राजनि शासति ।
प्रवृत्तं न पपुः सोमं हुतं यज्ञेषु देवताः ॥

प्रवृत्तं देवतोद्देशेन त्यक्तं हुतं अग्नौ प्रक्षिप्तमपि सोमं न पपुः, यतो निःस्वाध्यायवषट्काराः । नीटी.

न यष्टव्यं न होतव्यमिति तस्य प्रजापतेः ।
आसीत्प्रतिज्ञा क्रूरेयं विनाशे प्रत्युपस्थिते ॥

तत्र हेतुमाह— नेति । धर्मद्वेष्टरि राज्ञि दत्तमपि हविर्देवा न भजन्त इति भावः । नीटी.

अहमिज्यश्च यष्टा च यज्ञश्चेति कुरूद्वह ।
मयि यज्ञो विधातव्यो मयि होतव्यमित्यपि ॥

मयि देवतारूपे मन्निमित्तम्, न त्वन्यदेवतार्थम् । मयि अग्निरूपे । नीटी.

तमतिक्रान्तमर्यादमाददानमसांप्रतम् ।
ऊचुर्महर्षयः सर्वे मरीचिप्रमुखास्तदा ॥
वयं दीक्षां प्रवेक्ष्यामः संवत्सरगणान् बहून् ।
अधर्मं कुरु मा वेन नैष धर्मः सनातनः ॥
निधनेऽत्र प्रसूतस्त्वं प्रजापतिरसंशयम् ।
प्रजाश्च पालयिष्येऽहमिति ते समयः कृतः ॥

निधने वंशे । 'निधनं कुलनाशयोः' इति विश्वः । नीटी.

तांस्तदा ब्रुवतः सर्वान् महर्षीनब्रवीत्तदा ।
वेनः प्रहस्य दुर्बुद्धिरिममर्थमनर्थवित् ॥

वेन उवाच—

स्रष्टा धर्मस्य कश्चान्यः श्रोतव्यं कस्य वै मया ।
श्रुतवीर्यतपःसत्यैर्मया वा कः समो भुवि ॥
प्रभवं सर्वभूतानां धर्माणां च विशेषतः ।
संमूढा न विदुर्नूनं भवन्तो मामचेतसः ॥
इच्छन् दहेयं पृथिवीं प्लावयेयं तथा जलैः ।
स्वं भुवं चैव रुन्धेयं नात्र कार्या विचारणा ॥
यदा न शक्यते मोहादवलेपाच्च पार्थिवः ।
अनुनेतुं तदा वेनस्ततः क्रुद्धा महर्षयः ॥

पाठान्तरे अपनेतुं अधर्मादपक्रष्टुम् । नीटी.

---

(१) अप. १।३१९ यागतम् (यानुगम्) भोग (भाव्य) श्लोकार्धौ व्यत्यासेन पठितौ ; राप्र. १२९.

(२) अप. १।३१९ षष्टिवर्ष (षष्टिं वर्ष) च्छेदे फलं (च्छेदफलं) ; राप्र. १२९.

(३) राप्र. १२९.

(४) अप. १।३१९.

(५) बृपसं. १२।१४.

(६) हरि. १।५।१–५५.

निगृह्य तं महात्मानो विस्फुरन्तं महाबलम् ।
ततोऽस्य सव्यमूरुं ते ममन्थुर्जातमन्यवः ॥

निगृह्य जीवन्तमपि पातयित्वा । नीटी.

तस्मिंस्तु मथ्यमाने वै राज्ञ ऊरौ प्रजज्ञिवान् ।
ह्रस्वोऽतिमात्रः पुरुषः कृष्णश्चातिबभूव ह ॥
स भीतः प्राञ्जलिर्भूत्वा स्थितवाञ्जनमेजय ।
तमत्रिर्विह्वलं दृष्ट्वा निषीदेत्यब्रवीत्तदा ॥
निषादवंशकर्ताऽसौ बभूव वदतां वर ।
धीवरानसृजच्चाथ वेनकल्मषसंभवान् ॥

धीवरान् नाविकान् । नीटी.

ये चान्ये विन्ध्यनिलयास्तुषारास्तुम्बरास्तथा ।
अधर्मरुचयो ये च विद्धि तान् वेनसंभवान् ॥

तुषारास्तुम्बराश्च प्रान्तदेशीयाः म्लेच्छविशेषाः । विन्ध्यनिलयाः 'गोण्ड' इति 'कोल' इति च प्रसिद्धाः मध्यदेशीयाः । नीटी.

ततः पुनर्महात्मानः पाणिं वेनस्य दक्षिणम् ।
अरणीमिव संरब्धा ममन्थुस्ते महर्षयः ॥
पृथुस्तस्मात्समुत्तस्थौ कराज्ज्वलनसंनिभः ।
दीप्यमानः स्ववपुषा साक्षादग्निरिव ज्वलन् ॥
स धन्वी कवची जातः पृथुरेव महायशाः ।
आद्यमाजगवं नाम धनुर्गृह्य महारवम् ।
शरांश्च दिव्यान् रक्षार्थं कवचं च महाप्रभम् ॥

गृह्य गृहीत्वा । रक्षार्थं प्रजानां स्थित इति शेषः । नीटी.

तस्मिञ्जातेऽथ भूतानि संप्रहृष्टानि सर्वशः ।
समापेतुर्महाराज वेनश्च त्रिदिवं गतः ॥
समुत्पन्नेन कौरव्य सत्पुत्रेण महात्मना ।
त्रातः स पुरुषव्याघ्र पुन्नाम्नो नरकात्तदा ॥
तं समुद्राश्च नद्यश्च रत्नान्यादाय सर्वशः ।
तोयानि चाभिषेकार्थं सर्व एवोपतस्थिरे ॥
पितामहश्च भगवान् देवैराङ्गिरसैः सह ।
स्थावराणि च भूतानि जङ्गमानि तथैव च ॥
समागम्य तदा वैन्यमभ्यषिञ्चन्नराधिपम् ।
महता राजराज्येन प्रजापालं महाद्युतिम् ॥

सोऽभिषिक्तो महातेजाः विधिवद्धर्मकोविदैः ।
आदिराज्ये तदा राज्ञां पृथुर्वैन्यः प्रतापवान् ॥
पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः ।
अनुरागात्ततस्तस्य नाम राजेत्यजायत ॥

अपरञ्जिताः पीडिताः । अनुरागादिति । अनुरज्यन्ते अस्मिन् प्रजा इति राजपदनिर्वचनं दर्शितम् । नीटी.

आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥

तस्तम्भिरे स्थलवत् कठिना बभूवुः । अभि उपरि यास्यतः गन्तुमिच्छतः ध्वजभङ्गो वृक्षाणां शाखादिभिः गोपुरादिभिर्वा । नीटी.

अकृष्टपच्या पृथिवी सिध्यत्यन्नानि चिन्तया ।
सर्वकामदुघा गावः पुटके पुटके मधु ॥

पुटके पुटके पत्रे पत्रे । नीटी.

एतस्मिन्नेव काले तु यज्ञे पैतामहे शुभे ।
सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामतिः ॥

सूत्यां सोमाभिषवकाले । अभिषवः सोमवल्ल्याः कण्डनं रसनिष्कासनार्थम् । नीटी.

तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ।
पृथोः स्तवार्थे तौ तत्र समाहूतौ सुरर्षिभिः ॥

अन्यत्र तु वैन्यस्यैव यज्ञेऽग्निकुण्डात् सूतमागधौ जातौ इत्युक्तम् । तत् कल्पभेदात् समाधेयम् । नीटी.

तावूचुर्ऋषयः सर्वे स्तूयतामेष पार्थिवः ।
कर्मैस्तदनुरूपं वां पात्रं चायं नराधिपः ॥
तावूचतुस्तदा सर्वांस्तानृषीन् सूतमागधौ ।
आवां देवानृषींश्चैव प्रीणयावः स्वकर्मभिः ॥
न चास्य विद्वो वै कर्म न तथा लक्षणं यशः ।
स्तोत्रं येनास्य कुर्याव राज्ञस्तेजस्विनो द्विजाः ॥

विद्वः जानीवः इत्युत्तमस्य द्विवचनम् । नीटी.

ऋषिभिस्तौ नियुक्तौ च भविष्यैः स्तूयतामिति ।
यानि कर्माणि कृतवान् पृथुः पश्चान्महाबलः ॥

पश्चात् पूर्वस्मिन् कल्पे यानि कृतवान् तैरेव अस्मिन् कल्पे भविष्यैः कर्मभिः स्तूयतामिति योजना । प्रतिकल्पं

समाननामरूपायाः एव सृष्टेः 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति श्रवणात्। नीटी.

सत्यवाग् दानशीलोऽयं सत्यसंधो नरेश्वरः।
श्रीमाञ्जैत्रः क्षमाशीलो विक्रान्तो दुष्टशासनः॥
धर्मज्ञश्च कृतज्ञश्च दयावान् प्रियभाषणः।
मान्यो मानयिता यज्वा ब्रह्मण्यः सत्यसंगरः॥
शमः शान्तश्च निरतो व्यवहारस्थितो नृपः।
ततः प्रभृति लोकेषु स्तवेषु जनमेजय।
आशीर्वादाः प्रयुज्यन्ते सूतमागधबन्दिभिः॥
तयोः स्तवैस्तैः सुप्रीतः पृथुः प्रादात्प्रजेश्वरः।
अनूपदेशं सूताय मगधान् मागधाय च॥
तं दृष्ट्वा परमप्रीताः प्रजाः प्राहुर्महर्षयः।
वृत्तीनामेष वो दाता भविष्यति जनेश्वरः॥
ततो वैन्यं महाराज प्रजाः समभिदुद्रुवुः।
त्वं नो वृत्तिं विधत्स्वेति महर्षिवचनात्तदा॥
सोऽभिद्रुतः प्रजाभिस्तु प्रजाहितचिकीर्षया।
धनुर्गृह्य पृषत्कांश्च पृथिवीमार्दयद्बली॥
ततो वैन्यभयत्रस्ता गौर्भूत्वा प्राद्रवन्मही।
तां पृथुर्धनुरादाय द्रवन्तीमन्वधावत॥
सा लोकान् ब्रह्मलोकादीन् गत्वा वैन्यभयात्तदा।
प्रददर्शाग्रतो वैन्यं प्रगृहीतशरासनम्॥
ज्वलद्भिर्निशितैर्बाणैर्दीप्ततेजसमच्युतम्।
महायोगं महात्मानं दुर्धर्षममरैरपि॥
अलभन्ती तु सा त्राणं वैन्यमेवान्वपद्यत।
कृताञ्जलिपुटा भूत्वा पूज्या लोकैस्त्रिभिः सदा॥
उवाच वैन्यं नाधर्म्यं स्त्रीवधं कर्तुमर्हसि।
कथं धारयिता चासि प्रजा राजन् विना मया॥
मयि लोकाः स्थिता राजन् मयेदं धार्यते जगत्।
मद्विनाशे विनश्येयुः प्रजाः पार्थिव विद्धि तत्॥
न त्वमर्हसि मां हन्तुं श्रेयश्चेत्त्वं चिकीर्षसि।
प्रजानां पृथिवीपाल शृणु चेदं वचो मम॥
उपायतः समारब्धाः सर्वे सिध्यन्त्युपक्रमाः।
उपायं पश्य येन त्वं धारयेथाः प्रजा नृप॥
हत्वाऽपि मां न शक्तस्त्वं प्रजा धारयितुं नृप।
अनुभूता भविष्यामि यच्छ कोपं महाद्युते॥
अवध्याश्च स्त्रियः प्राहुस्तिर्यग्योनिगतेष्वपि।
सत्त्वेषु पृथिवीपाल न धर्मं त्यक्तुमर्हसि॥

उत्तङ्क उवाच-

'भवता रक्षणं कार्यं तत्तावत्कर्तुमर्हसि।
निरुद्विग्नस्तपश्चर्तुं न हि शक्नोषि पार्थिव॥

रक्षणम्, अस्माकमिति शेषः। नीटी.

त्वया हि पृथिवी राजन् रक्ष्यमाणा महात्मना।
भविष्यति निरुद्विग्ना नारण्यं गन्तुमर्हसि॥
पालने हि महान् धर्मः प्रजानामिह दृश्यते।
न तथा दृश्यतेऽरण्ये मा ते भूद् बुद्धिरीदृशी॥
ईदृशो न हि राजेन्द्र धर्मः क्वचन दृश्यते।
प्रजानां पालने यो वै पुरा राजर्षिभिः कृतः॥
रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि॥

## देवीभागवतम्

### राज्ञो नित्यकृत्यानि

राजोवाच-

'पुत्र धर्मे मतिः कार्या माननीया मुखोद्भवाः॥
न्यायागतं धनं ग्राह्यं रक्षणीयाः सदा प्रजाः।
नासत्यं क्वापि वक्तव्यं नामार्गे गमनं क्वचित्॥
शिष्टप्रोक्तं प्रकर्तव्यं पूजनीयास्तपस्विनः।
हन्तव्या दस्यवः क्रूरा इन्द्रियाणां तथा जयः॥
कर्तव्यः कार्यसिद्ध्यर्थं राज्ञा पुत्र सदैव हि।
मन्त्रस्तु सर्वथा गोप्यः कर्तव्यः सचिवैः सह॥
नोपेक्ष्योऽल्पोऽपि कृतिना रिपुः सर्वात्मना सुत।
न विश्वसेत्परासक्तं सचिवं च तथा नतम्॥
चाराः सर्वत्र योक्तव्याः शत्रुमित्रेषु सर्वथा।
धर्मे मतिः सदा कार्या दानं दद्याच्च नित्यशः॥
शुष्कवादो न कर्तव्यो दुष्टसङ्गं च वर्जयेत्।
यष्टव्या विविधा यज्ञाः पूजनीया महर्षयः॥

---

(१) हरि. १।११।२८-३१.
(२) देवीभाग. ७।११।३३-५३.

न विश्वसेत्स्त्रियं क्वापि स्त्रैणं द्यूतरतं नरम् ।
अत्यादरो न कर्तव्यो मृगयायां कदाचन ॥
द्यूते मद्ये तथा गेये नूनं वारवधूषु च ।
स्वयं तद्विमुखो भूयात्प्रजास्तेभ्यश्च रक्षयेत् ॥
ब्राह्मे मुहूर्ते कर्तव्यमुत्थानं सर्वथा सदा ।
स्नानादिकं सर्वविधिं विधाय विधिवद्यथा ॥
पराशक्तेः परां पूजां भक्त्या कुर्यात्सुदीक्षितः ।
पुत्रैतज्जन्मसाफल्यं पराशक्तेः पदार्चनम् ॥
सकृत्कृत्वा महापूजां देवीपादजलं पिबन् ।
न जातु जननीगर्भे गच्छेदिति विनिश्चयः ॥
सर्वं दृश्यं महादेवी द्रष्टा साक्षी च सैव हि ।
इति तद्भावभरितस्तिष्ठेन्निर्भयचेतसा ॥
कृत्वा नित्यविधिं सम्यग्गन्तव्यं सदसि द्विजान् ।
समाहूय च प्रष्टव्यो धर्मशास्त्रविनिर्णयः ॥
संपूज्य ब्राह्मणान् पूज्यान् वेदवेदान्तपारगान् ।
गोभूहिरण्यादिकं च देयं पात्रेषु सर्वदा ॥
अविद्वान् ब्राह्मणः कोऽपि नैव पूज्यः कदाचन ।
आहारादधिकं नैव देयं मूर्खाय कर्हिचित् ॥
न वा लोभात्त्वया पुत्र कर्तव्यं धर्मलङ्घनम् ।
अतः परं न कर्तव्यं क्वचिद्विप्रावमाननम् ॥
ब्राह्मणा भूमिदेवाश्च माननीयाः प्रयत्नतः ।
कारणं क्षत्रियाणां च द्विजा एव न संशयः ॥
अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥
तस्माद्राज्ञा विशेषेण माननीया मुखोद्भवाः ।
दानेन विनयेनैव सर्वथा भूतिमिच्छता ॥
दण्डनीतिः सदा कार्या धर्मशास्त्रानुसारतः ।
कोशस्य संग्रहः कार्यो नूनं न्यायागतस्य ह ॥

## कालिकापुराणम्

राज्ञो नित्यकृत्यानि

[१]कार्याकार्यविभागं च धर्मार्थे काम एव च ।
सततं प्रतिबुध्येत कुर्यादवसरेऽपि तत् ॥

( १ ) कालिका. ८७।३२–३३.

[२]रक्षणीयं सदा सत्यं सत्यमेकं परायणम् ।
क्षमां तेजस्वितां चैव प्रस्तावान्नृप आचरेत् ॥
[३]दण्ड्यांस्तु दण्डयेद्दण्डैरदण्ड्यान् दण्डयेन्न हि ।
अदण्डयन्नृपो दण्ड्यान्नदण्ड्यांश्चापि दण्डयन् ॥
नृपतिर्वाच्यतां प्राप्य चौरकिल्बिषमाप्नुयात् ॥
[३]न ब्राह्मणान्सदा राजा केनाप्यवमनीकृतान् ।
अवमन्य नृपो विप्रान् प्रेत्येह दुःखभाग्भवेत् ॥
न विरोधस्तु तैः कार्यः स्वानि तेषां न चाऽऽददेत् ।
कृत्यकालेषु सततं तानेव परिपूजयेत् ॥
नैषां निन्दां प्रकुर्वीत नाभ्यसूयां तथा चरेत् ।
एवं नृपो महाबुद्धिस्तत्तन्मण्डलसंयुतः ॥
अप्रमादी चारचक्षुर्गुणवान् सुप्रियंवदः ।
प्रेत्येह महतीं सिद्धिं प्राप्नोति सुखभोगवान् ॥
यैर्गुणैर्योजितश्चाऽऽत्मा तैः पुत्रानपि योजयेत् ।
नृपस्य च स्वतन्त्रत्वं सततं स्वं विनाशयेत् ॥
स्वतन्त्रो भूपतनयो विकारं याति निश्चितम् ।
निर्विकाराय सततं वृद्धांश्च परियोजयेत् ॥
भोजने शयने याने पुरुषाणां च वीक्षणे ।
नियोजयेत्सदा दारान् भूपः कामविचेष्टने ॥
अस्वतन्त्राः स्त्रियः कार्याः सततं पार्थिवेन तु ।
ताः स्वतन्त्राः स्त्रियो नित्यं हानये संभवन्ति हि ॥
तस्मात्कुमारं महिषीमुपधाभिर्मनोहरैः ।
शोधयित्वा नियुञ्जीत यौवराज्यावरोधयोः ॥
अन्तःपुरप्रवेशे तु स्वतन्त्रत्वं निषेधयेत् ।
भूपपुत्रस्य भार्याया बहिःसारे तथैव च ॥
अयं विशेषः संक्षेपान्नृपधर्मो मयोदितः ।
पुत्राणां गुणविन्यासे भार्याणामपि भूपते ॥
उशना राजनीतीनां तन्त्राणि तु बृहस्पतिः ।
चकारान्यान् विशेषांस्तु तयोस्तन्त्रेषु बोधयेत् ॥

( १ ) कालिका. ८७।४९.
( २ ) कालिका. ८७।१०७–१०८.
( ३ ) कालिका. ८७।११९–१३१.

एवं राजा महाभागो राजनीतौ विशेषताम् ।
कुर्वन्न सीदति सदा भूयसीं श्रियमश्नुते ॥

और्व उवाच–

[1]सदाचारेषु राजेन्द्र विशेषाञ्छृणु संप्रति ।
यानवश्यं नृपः कुर्यात्तान् मत्तः सकलाञ्छृणु ॥
साधवः क्षीणदोषाश्च सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तत्सदाचारः स उच्यते ॥
आगमेषु पुराणेषु संहितासु यथोदितान् ।
समुद्दिष्टसदाचारान् गृह्णीयात्तान् गृहस्थवत् ॥
ऋषीन् यजेद्वेदपाठैर्देवान् होमैः प्रपूजयेत् ।
श्राद्धैः पितॄंस्तर्पयेत्तु भूतानि बलिभिस्तथा ॥
मैत्रं प्रधावनं स्नानं दन्तधावनमञ्जनम् ।
सर्वं गृहस्थवत्कुर्यान्निषेकाद्यं विधिं तथा ॥
षट्कर्मसु नियुञ्जीत राजा विप्रान् समन्ततः ।
तथैव क्षत्रियादींश्च स्वे स्वे कर्मणि योजयेत् ॥
यः स्वधर्मं परित्यज्य परधर्मं समाचरेत् ।
तं शतेन नृपो दण्डं पुनस्तस्मिन्नियोजयेत् ॥
[2]कृपणस्य धनं राजा न गृह्णीयात्कदाचन ।
न द्विजानां तथा दद्याद्धनानि विपुलान्यपि ॥
नाऽऽरोहेत्कामुकोन्मत्तगजं राजा कदाचन ।
आरुह्य कामुकं तं तु परत्रेह विषीदति ॥
अनायुष्यं न कुर्यात्तु कर्म भूपः कदाचन ।
सततं चाऽऽयुषो वृद्ध्यै यतेत सकलैर्धनैः ॥
न क्रूरवारे नाष्टम्यां न षष्ठ्यां नृपसत्तमः ।
अञ्जनाभ्यञ्जने कुर्यात्ताम्बूलस्यापि भोजनम् ॥
अतिसूक्ष्मं तथा पूर्णं ग्रहणं चन्द्रसूर्ययोः ।
नाऽऽलोकयेत्स्वयं राजा रक्तं सूर्यं तथैव च ॥
उत्पातं जायते यत्तु दिव्यं भौमं च नाभसम् ।
नेक्षेत यत्नान्नृपतिर्दृष्ट्वा नाद्यात्त्र्यहं पुनः ॥
सर्वदा मङ्गलं रत्नं धारयेत्सह दूर्वया ।
अवस्त्राच्छादितं गात्रं न विप्रेभ्यः प्रदर्शयेत् ॥

(१) कालिका. ८८।१–७.
(२) कालिका. ९१।५३–६५.

न तोयेषु मुखं पश्येन्नाद्यान्मांसानि पर्वसु ।
नाऽऽरोहयेत्खरं चोष्ट्रं न वामामपि गुर्विणीम् ॥
एवं नरयुतो राजा चतुरङ्गं विवर्धयन् ।
आत्मानं सततं रक्षन् सदा वीर्यं विवर्धयेत् ॥
बीजक्षयकरं नित्यं भक्ष्यं भोज्यं च पानकम् ।
वर्जयेत्क्षारशाकाद्यान् बह्वम्लं बहुतिक्तकम् ॥
कांस्यराजतपात्रस्थं तोयं नद्याश्च वर्धनम् ।
मूत्रवृद्धिकरं वीर्यक्षयकारि विवर्जयेत् ॥
ताम्रायःस्वर्णशीसानां पात्रस्थं फलचर्मणोः ।
शुक्रवृद्धिकरं तोयं तदुपासीत यत्नतः ॥
सर्वमूलेषु कृत्येषु सदाचारेषु तिष्ठितः ।
भुक्त्वेह विविधान्भोगानैन्द्रं स्थानं व्रजेत्परम् ॥

## कामन्दकीयनीतिसारः

धर्मनिष्ठस्य महात्मनो राज्ञः विविधं वृत्तम्

[1]धर्माद्वैजवनो राजा चिराय बुभुजे महीम् ।
अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥

(१) तदेव दर्शयति– धर्मादित्यादिना । इन्द्रसेनो नाम राजा सगरवंशेऽभूत् । स किल देवीमृतुमतीमेवापरिशुद्धामेवाभिगम्याऽऽचारभ्रंशगतो भ्रष्टाचारत्वात् ब्रह्मराक्षसं ददर्श । तेन चोक्तम्– ' अधुना भक्षणीयोऽसि मे राजन्, नो चेदधर्मेण प्रजां योजयसि, येन भयं मत्तो न भवेत्' इति । स च तां भयादधर्मे प्रवर्तयन् नचिरादेवाधर्मेणाभिभूतो विननाश । तत्पुत्रपौत्रादयोऽपि तथैव राक्षसचोदितां पूर्वां स्थितिमनुवर्तमानाश्चिरं जीवितं न लेभिरे । क्रमेण च वैजवनः प्रजामधर्मप्रवृत्तां दृष्ट्वा श्रुत्वा च मन्त्रिभ्यो यथावस्थितां तां धर्म एव प्रावर्तयत् । ततोऽसौ राक्षसचोदितोऽप्यनुपजातभयोऽत्यन्तं धर्मपरो बभूव । तदुपबृंहितश्च तमवधूय चिरं पृथिवीं बुभुजे । अधर्मान्नहुष इति । ब्रह्महत्याभयात् सरः प्रविश्य बिसतन्तौ स्थिते शक्रे देवलोकोऽराजक इति देवद्विजैरनुमतो मर्त्यराजो नहुषः शाक्रं पदमासाद्य दर्पात् पत्नीत्वेन शचीमर्थितवान् । तया च बृहस्पत्युपदिष्टया विहस्येद-

(१) कानी. १।१६; नीम. ३२ द्वैजवनो (द्वै यवनो) चिराय (विधाय) महीम् (भुवम्).

मुक्तम्– 'यदि भवान् मय्यर्थी तदा यानमपूर्वमारुह्याऽऽगच्छतु'। इति संदिष्टः स विमृश्य ब्राह्मणयानेनाऽऽगच्छन् 'सर्प सर्प' इत्यभिदधत् पथि महर्षिणाऽगस्त्येन शप्तः 'सर्पो भव' इत्यजगरीभूतो रसातलमविशत्। जम.

(२) एतदेव दृष्टान्तभूताभ्यामितिहासकथाभ्यां दर्शयन्नाह– धर्मादिति। धर्मात् शास्त्रोक्तात् हेतुभूतात् वैजवनः चिराय चिरकालं महीं पृथिवीं बुभुजे। इत्यत्र कथा– सगरान्वये इन्द्रसेनो राजा रजस्वलया स्वदेव्या सह संगत इति राक्षसेनात्तुमारब्धः। उक्तश्चैवं तेन– 'त्वं यदि सर्वाः प्रजा अधर्मे नियोजयसि तदा न भक्षयामि'। इत्युक्तः स प्राणभयात् तथैवानुष्ठितवान्। इत्यधर्मादचिरेणैव क्षयं गतः। तदनन्तरं तद्वंशजा अपि राक्षसवचनादचिरेणैवाधर्मात् विनाशं प्राप्ताः। ततश्च तत्संततौ एव वैजवनो बभूव। तेन राक्षसवचनमनादृत्य भयं त्यक्त्वा सर्वाः प्रजा धर्मे नियोजिताः। स्वयमपि च स धर्मपरो बभूव। अतः शास्त्रविहितानुष्ठानाद्वैजवनो राजा चिराय महीं बुभुजे। इत्यनेन न्यायप्रवृत्तेः फलं दर्शितं भवति। अधर्माच्चैव नहुषाख्य ऐन्द्रपदस्थोऽपि शचीमभिलषन् यानवाहिना अगस्त्येन शप्तः सर्पीभूतः सशरीर एव रसातलं नरकं प्रतिपेदे। उनि.

[१]तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय भूपतिः।
धर्मेण वर्धते राज्यं तस्य स्वादु फलं श्रियः॥

(१) मन्वादिप्रणीतं पालनं धर्मः। अर्थायेति त्रिवर्गार्थाय, स ह्यर्थ्यत इति कृत्वा। धर्मेण वर्धते राष्ट्रम्। अन्यथा तदर्जितमपि नहुषस्येव न भवेत्। तस्येति प्रवृद्धस्य राष्ट्रस्य फलं श्रियः द्विविधाः– ऐहलौकिक्यः पारलौकिक्यश्च। तत्र पूर्वा विशिष्टविषयोपभोगाः, इतराश्चाश्वमेधादिप्रापिताः। तदुभयमपि स्वादु, विशुद्धत्वात्। जम.

(२) एवं चान्यायप्रवृत्तेः फलं प्रदर्श्य अनुष्ठेयपक्षं प्रदर्शयितुमाह– तस्मादिति। तस्मात् धर्मं न्यायं पुरस्कृत्य प्रधानं कृत्वा यतेत यत्नं कुर्यात्। अर्थाय भूम्यादिविभवाद्यर्थम्। भूपतिः विजिगीषुः। कुत इत्याह– धर्मेण वर्धते राज्यमिति। यस्मात् धर्मेण पुरःसरेणोपार्जितं राज्यं वर्धते। राज्येनोपार्जितेन किं फलम्? इति चेत्, तस्य राज्यस्य स्वादु फलं मिष्टं फलं श्रियः विभूतयः, सत्पात्रप्रतिपादनात्। उनि.

[१]स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्।
एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम्॥

(१) किं तद्राज्यमित्याह– स्वामीत्यादि। एतावद्राज्यमिति। राज्यं राजत्वम्, यत् राजेत्यभिधानप्रत्यययोः प्रवृत्तिनिमित्तम्। तच्च स्वस्वसंपदुपेतं प्रकृतिसप्तकमेव भवितुमर्हति। सत्त्वबुद्धिव्यपाश्रयमिति। सत्त्वं व्यसनेऽभ्युदये च यदविकारकम्। बुद्धिः शुश्रूषादिलक्षणा। तदुभयमाश्रयो राज्यस्य, ताभ्यां प्राधान्येन लाभपालनयोगात्। जम.

(२) 'धर्मेण वर्धते राज्यम्' इत्युक्तम्, तस्य राज्यस्य स्वरूपमभिधातुमाह– स्वामीति। स्वामी शेषाङ्गानाममात्यादीनामीश्वरः प्राणभूतः। अमात्य इति। अमाशब्दः सहार्थे। अमा राज्ञा सह अतन्ति चरन्ति सर्वेषु कार्येषु इत्यमात्याः मन्त्र्यादयः। राष्ट्रं जनपदः। दुर्गं दुःखेन गम्यते इति पर्वतादि। कोशः कुश्यते अर्थिभिराद्रियते इति (हिरण्यादिः)। बलं हस्त्यश्वरथपत्तिस्वरूपं चतुरङ्गम्। सुहृदिति मित्रम्। एतावदिति एतावत्संख्याकम्। उच्यते अभिधीयते। राज्यमिति राज्ञः भावः, सत्स्वमात्यादिष्वङ्गेषु राजा भवतीति। सत्त्वमिति व्यसनेऽभ्युदये च यदविकारि। बुद्धिरिति शुश्रूषाद्यष्टगुणा प्रज्ञा। सत्त्वं च बुद्धिश्च सत्त्वबुद्धी, ते व्यपाश्रयः बलाधायकः अवष्टम्भः यस्य राज्यस्य तत् तथोक्तम्। उनि.

[२]आलम्ब्य बलवत्सत्त्वं बुद्ध्यालोचितनिर्गमः।
सप्ताङ्गस्यास्य लाभाय यतेत सततोत्थितः॥

(१) कथमाभ्यां लभत इत्याह– आलम्ब्येत्यादि। बलवत् अत्यर्थं महद्वा सत्त्वम्। बुद्ध्यालोचितनिर्गमः

---

(१) कानी. १।१७; जम. राज्यं (राष्ट्रं); नीम. ३२ भूपतिः (पार्थिवः) राज्यं (राष्ट्रं).

(१) कानी. १।१८; नीम. ३२.

(२) कानी. १।१९; उनि. लोचित (लोकित).

प्रज्ञया निरूपितनयमार्गः । सततोत्थितः नित्योद्युक्तः, अलसस्याकिंचित्करत्वात् । जम.

(२) धर्मं पुरस्कृत्यार्थाय यतेतेत्युक्तम्, तच्च कथमित्यभिधातुमाह– आलम्ब्येति । आलम्ब्य अवष्टभ्य । बलवत् अदुर्बलम् । सत्त्वं व्यसनेऽभ्युदये च यदविकारि, येनोत्तमबुद्धिरित्युच्यते । तथा च सुभाषितम्– 'प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥' (नीतिशतकम् २७) इति । अतः प्रारब्धनिर्वहणाख्यं सत्त्वं विवक्षितम् । तद्बलवत्सत्त्वमुच्यते । बुद्ध्येति अष्टगुणया प्रज्ञया आलोकितः निर्णीतः निर्गमः निर्वाहः येन राज्ञा स तथोक्तः । सप्ताङ्गस्यास्य अनन्तरोक्तस्य राज्यस्य लाभाय प्राप्त्यै यतेत यत्नं कुर्यात् । सततोत्थित इति सर्वदोद्यमयुक्तः । न हि राज्ञां राज्यलाभादन्योऽर्थो विद्यत इति । ननु स्वामी चेल्लाभार्थं यतेत तदा राज्यस्य सप्ताङ्गता हीयेत । (कर्तुश्च) कार्येष्वन्तर्भावः क्वचिदपि न दृष्टः । न चात्र स्वामिनं विहाय कर्तृत्वमपीष्यते । इति विरुद्धमेतत् । नैतद्विरुद्धम् । अत्र स्वामिप्रकृतेरवस्थाद्वयम् – कुमारत्वं आत्मसंपन्नता च । क्षत्रियकुमारो यदा शास्त्रप्रज्ञादिकयाऽऽत्मसंपदा संपन्नो भवति तदा स्वामी इत्युच्यते । तथा चाऽऽत्मसंपदवाप्त्या, तया चाऽऽत्मा संपद्यते इति सप्तप्रकृतित्वं न हीयते । एतदुक्तं भवति– राजा प्रथममात्मलाभार्थं यतेत, तदनन्तरममात्यादिषट्प्रकृतिलाभार्थमित्यनवद्यम् । उनि.

[1]न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा ।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥

(१) लब्धराज्यस्य तु स्वराज्यं दण्डेन पालयतश्चतुर्विधं वृत्तमित्याह– न्यायेनेत्यादि । न्यायः धान्यषड्भागादिः । अर्जितस्य रक्षणं स्वेभ्यः परेभ्यश्च । वर्धनं वाणिज्यादिभिः स्फीतीकरणम् । सत्पात्रप्रतिपत्तिः अश्वमेधादौ गुणवति पुत्रे च विनियोजनम् । जम.

(२) राज्ञोऽनुष्ठानं लाभार्थमेव इत्येतन्न, किंतु चतुर्विधमित्येतद्दर्शयितुमाह– न्यायेनेति । न्यायेन शास्त्रोक्तेन अर्जनं अलब्धलाभादिकं अर्थस्य भूम्यादेः । रक्षणमिति पालनम् । वर्धनमिति लब्धस्योपचयः । तथेति तेनैव प्रकारेण । सत्पात्रप्रतिपत्तिश्चेति । सत्पात्राण्यत्र त्रिविधानि– धर्मपात्राणि अर्थपात्राणि कामपात्राणीति । सत्त्वं उत्तमत्वं च, तेषां यदुद्दिश्य प्रतिपाद्यते तस्यार्थस्य बहूकरणात् । तत्र धर्मपात्राणि सदनुष्ठाना ब्राह्मणास्तपस्विनश्च । अर्थपात्राणि मन्त्रिपुरोहितादयो वार्ताकर्तारश्च । कामपात्राणि कमनीयाः स्त्रियः । तेषु प्रतिपादनार्थमेव राजवृत्तं विजिगीषोरनुष्ठानं चतुर्विधं चतुष्प्रकारं भवति । उनि.

[1]दण्डं दण्डीव भूतेषु धारयन् धरणीसमः ।
प्रजाः समनुगृह्णीयात्प्रजापतिरिव स्वयम् ॥

(१) एवं भूतेषु दण्डं धारयन् प्रजाः समनुगृह्णीयात्, यथैताः प्रजापतिमिव राजानमभिमन्यन्ते । तस्मात् तत्संग्रहार्थमाचारव्यवस्थापनमस्मिन् सर्गेऽभिधीयत इति प्रकरणक्रमः । तमेवाऽऽद्यश्लोकेन दर्शयति– दण्डमित्यादि । धरणीसमः, शत्रौ मित्रे च तुल्यवृत्तित्वात् । जम.

(२) दण्डमाहात्म्यप्रदर्शनाद्दण्डस्य तैक्ष्ण्यप्राप्तिर्मा भवत्विति सदाचारस्थापनमभिधातुमनन्तरसर्गेण संबन्धं दर्शयन्नाह– दण्डमिति । दण्डं यथोक्तलक्षणं दण्डीव धर्मराज इव भूतेषु वर्णाश्रमेषु धारयन् तुलया धृतमिव न्यूनाधिकत्वाभावात्, धरणीसमः क्षान्त्या, प्रजाः वर्णाश्रमस्वरूपाः समनुगृह्णीयात् विनयापादनेन प्रजापतिरिव स्रष्टेव । तथा चोक्तम्– 'प्रजापतिर्हि प्रजाः सृष्ट्वा तासां स्थितिनिबन्धनं त्रिवर्गस्य शासनमध्यायानां शतसहस्रेण' इत्यादिना । प्रजापतिः कारुणिकः सृष्टेरनन्तरं प्रजानां स्थितिमकल्पयदिति । तद्वत् विजिगीषुरपि स्वयं प्रजाः समनुगृह्णीयादिति । उनि.

वाक् सूनृता दया दानं दीनोपगतरक्षणम् ।
इति सङ्गः सतां साधु हितं सत्पुरुषव्रतम् ॥

---

(१) कानी. १।२० ; नीम. ३२.

(१) कानी. ३।१–५.

(१) आचारः सद्वृत्तम् । किं तदित्याह– वागित्यादि । सूनृता मधुरा वाक् । दया करुणा दीनेषु । दानं देशकालापेक्षया सत्पात्रे । दीनोपगतरक्षणं दीनस्य आश्रितस्य च पालनम् । ननु तत् दयाकार्यत्वात् तयैव सिद्धम् । सत्यम् । दयाया द्वैविध्यज्ञापनार्थम् । दया ह्युत्कृष्टाऽनुत्कृष्टा च । तत्र या पूर्वा तया दीनोद्धरणम्, इतरया दीनोपगतरक्षणम् । इति सङ्गः सतामिति । सुजनसंगम इत्यर्थः । इतिशब्दः पश्चात्संबन्धनीयः । एतच्चतुर्विधं पञ्चविधं वा सद्वृत्तं प्रजासंग्रहोपायः । तच्च साधु, तदात्वे लोकेन प्रशस्यमानत्वात्, हितम्, आयत्यामभ्युदयफलत्वात् । जम.

(२) सत्पुरुषव्रतं दर्शयन्नाह– वागिति । वाक् वाणी सूनृता प्रिया सत्या च, 'प्रियं सत्यं च सूनृतम्' इति वचनात् । दया अनुकम्पा । दानं प्रकृतत्वादापन्नत्राणार्थम् । दीनाः अनुग्राह्याः, परैः पीड्यमाना ये उपगताः शरणमागताः, तद्रक्षणमिति । तथा सङ्गः सतां सद्व्रतानां च संबन्धः । तदेतत्साधु शुभतरं सत्पुरुषव्रतम् । एतच्च उभयलोकसाधकत्वात् हितमिति । उनि.

**आविष्ट इव दुःखेन तद्गतेन गरीयसा ।**
**समन्वितः करुणया परया दीनमुद्धरेत् ॥**

(१) इदानीमपि सद्वृत्तस्य कार्यानुष्ठापनद्वारेण व्यवस्थापनमुच्यते । तत्र प्राधान्यात् दयामधिकृत्याऽऽह– आविष्ट इत्यादि । परवशः इव, तद्दुःखदुःखितत्वात् । परया प्रकृष्टया, यद्वशाद्दीनं दुःखार्णवात् उद्धरेत् । जम.

(२) यथा दण्ड्येषु दण्डो धार्यते इत्येवमनुग्राह्येष्वनुग्रहो विधेय इति दर्शयन्नाह– आविष्ट इति । प्रजासु ये दुःखिता व्याधिक्षुधादिभिः, तद्गतेन गरीयसा दुःखेन आविष्टः इव जातावेगः इव तद्दुःखमात्मन एवेति मन्यमानः करुणया परया समन्वितः दीनमुद्धरेत् जीमूतवाहनः इवेति । उनि.

**न तेभ्योऽभ्यधिकाः सन्ति सन्तः सत्पुरुषव्रताः ।**
**दुःखपङ्कार्णवे मग्नं दीनमभ्युद्धरन्ति ये ॥**

(१) तदेव प्राधान्यं कार्यद्वारेण दर्शयन्नाह– न तेभ्य इति । अन्यैः सद्वृत्तैर्युक्ता अपि न तेभ्योऽधिकाः, दीनोद्धरणाभावात् । जम.

(२) एतदेव द्रढयितुमाह– नेति । तेभ्योऽभ्यधिका न सन्त्यन्ये, दुःखपङ्कार्णवे मग्नं दीनमुद्धरन्ति ये त एव सन्तः त एव सत्पुरुषव्रता इति । उनि.

**दयामास्थाय परमां धर्मादविचलन्नृपः ।**
**पीडितानामनाथानां कुर्यादश्रुप्रमार्जनम् ॥**

(१) तस्मादात्मानमधिकमिच्छन् उत्कृष्टां दयामास्थाय दीनमुद्धरेदिति स्थिरीकुर्वन्नाह– दयामित्यादि । धर्मादिति । यस्मिन् वर्णे आश्रमे वा स्थितः तस्माद्धर्मादविचलन् । पीडितानां अश्रु दुःखम्, कार्ये कारणोपचारात् । तस्य प्रमार्जनं अपनयनम् । जम.

(२) भूयोऽपि दीनोद्धरणप्रकारमाह– दयामिति । दयां अनुकम्पां आस्थाय अङ्गीकृत्य । परमां निर्व्याजाम् । धर्मादविचलन्निति क्षत्रधर्मात् । यद्यपि परमदययाऽधिष्ठितस्तथापि शत्रुविषये दाहलोपादौ कर्तव्ये यदि दयया तन्न करोति तदा विजिगीषुधर्माच्चलितो भवति । एवं च दयालुता विषयविभागेन कर्तव्येति भावः । पीडितानां चौरादिभिः । अनाथानां त्राणसमर्थनाथरहितानाम् । कुर्यादश्रुप्रमार्जनम् । पीडापनयनादश्रूणि प्रमार्जितानि भवन्ति । वर्णाश्रमसाधारणोऽपि पुनरुच्यते आदरप्रदर्शनार्थम् । उनि.

**[1]आनृशंस्यं परो धर्मः सर्वप्राणभृतां मतः ।**
**तस्माद्राजाऽऽनृशंस्येन पालयेत्कृपणं जनम् ॥**

(१) इतरां दयामधिकृत्य दीनोपगतरक्षणं सप्तभिः श्लोकैर्निर्दिशति– आनृशंस्यमित्यादि । आनृशंस्यं करुणा । सा चानुत्कृष्टाऽपि परो धर्मः, परहितप्रवृत्तेर्दुर्लभत्वात् । पालयेत्कृपणं जनम् । उपगतमिति शेषः । जम.

(२) नॄन् शंसतीति 'शसु हिंसायाम्' इति पाठात् नृशंसः हिंस्रः । तद्विपरीतः अनृशंसः, तस्य भावः

(१) कानी. ३।६ ; नीम. ३४ मतः ( यतः ).

आनृशंस्यं दयालुत्वमेव परः उत्कृष्टः धर्मः सर्वप्राणभृतां मतः अनुमतः । यत एवं तस्माद्राजा आनृशंस्येन पालयेत् कृपणं दीनम्, न तु शत्रुमित्यर्थः । उनि.

**[1]न हि स्वसुखमन्विच्छन् पीडयेत्कृपणं नृपः ।**
**कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवम् ॥**

(१) न तु स्वसुखलोभात् पीडयेत्, दोषवत्त्वादित्याह– न हीत्यादि । मन्युना दुःखप्रभवेन क्रोधेन । जम.

(२) कृपणपीडने दोषं दर्शयन्नाह– न हीति । यथा कश्चित् व्याध्याद्युपशमेन सुखमन्विच्छन् मनुष्योपहारं देवताभ्यः प्रयच्छति, एवंप्रकारैरन्यैरपि कारणैः कृपणं जनं हि स्फुटं न पीडयेत् । हि यस्मात्कारणात् कृपणः पीड्यमानो जनः मन्युना पीडाजनिताक्रोशशोकरुदितेन हन्ति विनाशयति पार्थिवं नृपम् । उनि.

**[2]को हि नाम कुले जातः सुखलेशोपलोभितः ।**
**अल्पसाराणि भूतानि पीडयेदविचारयन् ॥**

(१) अनभिजातस्यायं धर्मः यत् कृपणपीडनं इति भावः । अल्पसाराणि कृपणानि । अविचारयन्निति । यद्यपराधं प्राप्नोति तदा यथापराधं पीडयेदेव, राज्ञो व्यवस्थाकारित्वात् । जम.

(२) एतदेव दर्शयन्नाह– को हीति । को नाम हि स्फुटं कुले विशुद्धे जातः सुखलेशोपलोभितः अल्पसाराणि दुर्बलानि भूतानि प्राणिनः पीडयेत् क्लेशं प्रापयेत् अविचारयन् दोषविचारमकृत्वैव । यस्तु पीडयेत्स कुलीनो न भवतीति भावः । उनि.

**[3]आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।**
**को हि नाम शरीराय धर्मापेतं समाचरेत् ॥**

(१) यस्य च शरीरस्य कृते कृपणपीडनं तत् दोषबहुत्वादस्थिरमित्याह– आधीत्यादि । आधिः इष्टवियोगादिप्रभवा चित्तपीडा । धर्मापेतं अविचार्य कृपणपीडनम् । जम.

(२) एतदेव द्रढयितुमाह– आधीति । आधयः मनःपीडाः, व्याधयः ज्वरादयः, तैः परीताय आसमन्तात् व्याप्ताय । एवं चाद्य श्वो वा विनाशिने विनश्वराय को हि नाम विवेकी शरीराय शरीरसुखसंपादनार्थं धर्मापेतं अधर्मिष्ठं समाचरेत् अविवेकिवदाचरेदिति । उनि.

**आहार्यैर्नीयमानं हि क्षणं दुःखेन हृद्यताम् ।**
**छायामात्रकमेवेदं पश्येदुदकबिन्दुवत् ॥**

(१) यदाऽपि संस्कारैर्हृद्यतां नीयते तदाऽपि बहिःशोभामात्रमस्येत्याह– आहार्यैरिति । स्नानानुलेपनादिभिः क्षणमिति क्षणमात्रं हृद्यतां नीयमानं दुःखेन प्रयासेन छायामात्रकमिदं शरीरं पश्येत् अतितुच्छत्वात् जलबुद्बुदवत् । तस्मात् तदर्थं दुर्बलं न पीडयेदिति भावः । जम.

(२) भूयोऽप्यकार्यनिषेधाय वैराग्यभावनामुपदिशन्नाह– आहार्यैरिति । आहार्यैः असहजैः सुगन्धालेपनवस्त्रालंकारादिभिः स्वभावादहृद्यं पूतिगन्धासुखस्वेदाद्युपेतं क्षणं दुःखेन हृद्यतां मनोहरतां नीयमानं हि स्फुटं छायामात्रकमिव शङ्क्वादिच्छायामात्रावस्थिति, न चिरस्थायि इत्यर्थः, इदं जगत् उदकबिन्दुवत् नश्येत् क्षणादेवादर्शनं यातीति । उनि.

**महावाताहतिभ्रान्तमेघमालातिपेलवैः ।**
**कथं नाम महात्मानो ह्रियन्ते विषयारिभिः ॥**

(१) किंच, विषयैः प्रेर्यमाणा अल्पसत्त्वा एव कृपणं पीडयन्ति, नेतर इत्याह– महावातेत्यादि । महतः वातस्य आहननेन भ्रान्ता या मेघमाला तद्वत् अतिपेलवैः अचिरस्थायिभिः कथं ह्रियन्ते ? यद्धर्मापेतमाचरिष्यन्ति । जम.

(२) विषयाणामपि निःसारतां दर्शयितुमाह–महेति । महावाताहत्या भ्रान्ताया मेघमालायाः खण्डशः कृतांशास्तद्वत् अतिपेलवैः निःसारैः शाल्मलीवृक्षवदित्यर्थः । कथं नाम इति आश्चर्ये । महात्मानः विवेकिनोऽपि ह्रियन्ते

---

(१) कानी. ३।७ ; उनि. नृपः ( जनम् ) ; नीम. ३४.

(२) कानी. ३।८ ; नीम. ३४ लोभितः (बृंहितः).

(३) कानी. ३।९–१२.

वशीक्रियन्ते विषयारिभिः स्पर्शादिविषयशत्रुभिः । विषया एवारयः अहितकारकत्वात् शत्रवः इति । उनि.

**जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् ।**
**तथाविधमिति ज्ञात्वा शश्वत्कल्याणमाचरेत् ॥**

( १ ) तस्मान्महात्मा राजा जीवितमनित्यं ज्ञात्वा दीनमुपगतं रक्षेदित्याह– जलान्तरित्यादि । देहिनां जीवितं जलान्तश्चन्द्रचपलमिति ज्ञात्वा इति संबन्धः । तथाविधं कल्याणमाचरेत् दीनोपगतरक्षणं कुर्यादित्यर्थः । जम.

(२) भूयोऽप्यनित्यतां दर्शयन्नाह– जलेति । जलान्तश्चन्द्रः चन्द्रप्रतिबिम्बम्, तद्वत् चपलं अस्थिरं देहिनां प्राणिनां खलु निश्चयेन जीवितम् । तत् तथाविधमिति सम्यग्ज्ञात्वा शश्वत् अनवरतं कल्याणमिति तद्धेतुत्वाद्धर्ममाचरेदिति । उनि.

[1]**जगन्मृगतृषा तुल्यं वीक्ष्येदं क्षणभङ्गुरम् ।**
**सुजनैः संगतिं कुर्याद्धर्माय च सुखाय च ॥**

( १ ) सत्संगतं त्रिभिः श्लोकैर्निर्दिशति– जगदित्यादि । मृगतृषा मृगतृष्णया तुल्यम्, क्षणभङ्गुरत्वात् । धर्माय च सुखाय चेति चशब्दादर्थाय च । जम.

( २ ) एतदेव द्रढयितुमाह– जगदिति । जगत् विश्वं इदं दृश्यमानलक्षणं मृगतृषा मृगमरीचिकया तुल्यं समानं वीक्ष्य ज्ञात्वा क्षणभङ्गुरं आशुविनाशि । तत्र सुजनैः सत्पुरुषैः विद्यावृद्धैः इत्यर्थः । संगतं कुर्यात् सदा । संगतं धर्माय च धर्मार्थम्, सुखाय च सुखार्थम् । सुजनसंगतेन विनीतो भवति, विनीतस्य सुखम्, व्यसनाभावादिति । उनि.

[2]**सेव्यमानस्तु सुजनैर्महानतिविराजते ।**
**सुधालिप्त इव श्रीमान्प्रासादश्चन्द्ररश्मिभिः ॥**

( १ ) तदेव दर्शयन्नाह– सेव्यमान इत्यादि । विराजत इति धर्मार्थोपचितः, सुजनैर्हि धर्मार्थोपदेशदायिभिः सेव्यमानस्य धर्मार्थोपचयोपपत्तेः । अन्यथा तत्सेवामात्रेण कथं विविधप्रकारेण दीप्यते ? न हि चन्द्ररश्मिभिरनुपक्रियमाणः सौधः प्रासादः भाति । जम.

( २ ) सुजनसंगतस्य फलं दर्शयन्नाह– सेव्यमान इति । सुजनैः उक्तलक्षणैः सेव्यमानः महान् विजिगीषुः अतिविराजते अत्यर्थं विराजते । यथा सुधालिप्तः सुधाधवलः महान् प्रासादः चन्द्ररश्मिभिः । सदाचारत्वाच्छुद्ध एव राजत इति । उनि.

[1]**हिमांशुमाली न तथा नोत्फुल्लकमलं सरः ।**
**आनन्दयति चेतांसि यथा सज्जनचेष्टितम् ॥**

( १ ) आनन्दयति सुखयति । जम.

(२) तदेव समर्थयन्नाह– हिमांशुमालीति । हिमांशुमाली शरदिन्दुः न तथा, न चोत्फुल्लाम्बुजं सर आनन्दयति चेतांसि, यथा सज्जनचेष्टितं सदाचाररूपमिति । उनि.

[2]**ग्रीष्मसूर्यांशुसंतप्तमुद्वेजनमनाश्रयम् ।**
**मरुस्थलमिवोदग्रं त्यजेद्दुर्जनसंगतम् ॥**

( १ ) इदानीं सुजनसंगतदार्ढ्यार्थं दुर्जनसंगतदोषं षड्भिः श्लोकैर्निर्दिशति– ग्रीष्मेत्यादि । उदग्रं महत् । मरुस्थलविशेषणमेतत् । जम.

( २ ) यथा सुजनैः संगतं कुर्यादेवं दुर्जनैः संगतं त्यजेत् दोषदर्शनात् इति दर्शयन्नाह– ग्रीष्म इति । ग्रीष्मे सूर्यांशवोऽतितीव्रा भवन्ति । तैः सम्यक्तप्तमत एव उद्वेजनं अनाश्रयं मरुस्थलम्, वीरुल्लताद्यभावात् । दुर्जनसंगतेष्वाश्रयो नास्तीति, स्थितेरभावात् । तदिव उदग्रं उच्चम्, तदतीवोष्मग्राहि भवतीति । त्यजेत् दुर्जनैः संगतं संबन्धम् । कौटिल्येनाप्युक्तम्– ' अनार्यजनसंसर्गं त्यजेत् ' इति । उनि.

---

( १ ) कानी. ३।१३ ; जम. संगतिं ( संगतं ) ; उनि. जमवत् ; नीम. ३४ सुजनैः संगतिं ( स्वजनैः सज्जनैः ) उत्त.

( २ ) कानी. ३।१४; नीम. ३४ सुजनै (स्वजनै) पू.

( १ ) कानी. ३।१५ ; नीम. ३४ नोत्फुल्लकमलं ( न चोत्फुल्लोत्पलं ) चेष्टितम् ( चेष्टितः ).

( २ ) कानी. ३।१६ ; उनि. ग्रीष्म ( ग्रीष्मे ) ; नीम. ३४.

[1]श्रुतशीलोपसंपन्नमकस्मादेव दुर्जनः ।
अन्तः प्रविश्य दहति शुष्कवृक्षमिवानलः ॥

(१) अन्तः प्रविश्य दहति, मर्मविघट्टनात् । जम.

(२) दुर्जनस्वरूपमभिधातुमाह- श्रुतेति । श्रुतं आन्वीक्षिक्यादिशास्त्रम्, शीलं सुस्वभावता, तत्संपन्नान् सुजनान् अकस्मादेव कारणं विनाऽपि अन्तः प्रविश्य विश्वासप्रदर्शनादात्मभावं गत्वा हृदयं प्रविश्य दहति दाहं करोतीत्यर्थः, शुष्कं वृक्षमिवानल इति । उनि.

[2]निःश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः ।
वरमाशीविषैः सङ्गं कुर्यान्न त्वेव दुर्जनैः ॥

(१) वरमाशीविषैः सङ्गमिति । ते हि तदानीमेव भस्मसात्कुर्वन्ति, दुर्जनास्तु प्रतिक्षणं दहन्ति । जम.

(२) आशीविषेभ्योऽतिदौष्ट्यं दर्शयन्नाह- निःश्वासेति । निःश्वासेन सह उद्गीर्णैः हुतभुग्धूमैः धूम्रीकृतानि आननानि येषां तैः वरं आशीविषैः सर्पैः संगतं कुर्यात्, न त्वेव दुर्जनैः । सर्पा अप्युपकारिणं न व्यभिचरन्ति, दुर्जनास्तु व्यभिचरन्तीति । उनि.

[3]दीयते स्वच्छहृदयैः पिण्डो येनैव पाणिना ।
मार्जार इव दुर्वृत्तस्तमेव हि विलुम्पति ॥

(१) तमेव विलुम्पतीति कृतघ्नतां दर्शयति । जम.

(२) उपकारिष्वप्यपकारी दुर्जन इति दर्शयन्नाह- दीयत इति । स्वच्छहृदयैः अकलुषचित्तैः सुजनैः पिण्डः शुभाहारमयः येनैव पाणिना दीयते, मार्जार इव दुर्वृत्तो जनः तमेव पाणिं दौष्ट्यात् विलुम्पति । उनि.

[4]असाध्यं साधुमन्त्राणां तीव्रं वाग्विषमुत्सृजत् ।
द्विजिह्वं वदनं धत्ते दुष्टो दुर्जनपन्नगः ॥

(१) असाध्यं वाग्विषमुत्सृजत् वदनमिति संबन्धः । साधुमन्त्राणां सामोक्तीनाम् । द्विजिह्वं वदनं धत्त इति सूचकतामाह । जम.

(२) दुर्जन एव पन्नगः द्विजिह्वं वदनं धत्ते । अग्र एका जिह्वा पृष्ठतश्चैकेति दुर्जनस्य द्विजिह्वं वदनम् । पन्नगस्य द्विजिह्वं वदनमिति प्रतीतम् । वाग्विषमुत्सृजन्निति । वागेव तीव्रं विषम् । साधुमन्त्राणां गारुडोक्तानां साध्यं पन्नगविषम्, वाग्विषं तु साधूनां ये पञ्चाङ्गमन्त्रास्तेषामसाध्यमिति । दौष्ट्यादेवंविधो दुर्जनपन्नगः सुदूरतः परित्याज्य इति भावः । उनि.

[1]क्रियतेऽभ्यर्हणीयाय सुजनाय यथाऽञ्जलिः ।
ततः साधुतरः कार्यो दुर्जनाय शिवार्थिना ॥

(१) अभ्यर्हणीयाय पूजनीयाय । ततः साधुतरः कार्य इति साम्नैव साध्यो दुर्जन इति दर्शयति । जम.

(२) प्रसङ्गादागते दुर्जने विधेयमाह- क्रियत इति । क्रियते अभ्यर्हणीयाय पूज्याय सुजनाय यथाऽञ्जलिः प्रश्रयदर्शनार्थम्, ततोऽपि साधुतरः सविशेषप्रश्रययुक्तः दुर्जनाय कार्यः शिवार्थिना पुरुषेण । आराधनादुपकारिबुद्धिरप्यस्य भवत्विति । उनि.

[2]ह्लादिनीं सर्वसत्त्वानां सम्यग्जनजिहीर्षया ।
भावयेत्परमां मैत्रीं विसृजेल्लौकिकीं गिरम् ॥

(१) सूनृतां वाचं सप्तभिः श्लोकैर्निर्दिशति- ह्लादिनीमित्यादि । जनजिहीर्षया लोकं हर्तुमिच्छया । भावयेत् मैत्रीमुत्पादयेत् । लौकिकीं व्यावहारिकीम् । जम.

(२) जनानुरागार्थं सदाचारविशेषमभिधातुमाह- ह्लादिनीमिति । आनन्दकारिकां मधुरामित्यर्थः । तथा च दण्डी- ' मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः । येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥ ' । एवंभूतां सर्वभूतानामानन्दकारिकां वाचं विसृजेत् दद्यादित्यर्थः ।

---

(१) कानी. ३।१७.
(२) कानी. ३।१८ ; नीम. ३५.
(३) कानी. ३।१९ दीयते ( नीयते ) ; उनि.
(४) कानी ३।२० ; उनि. त्सृजद् ( त्सृजन् ).

(१) कानी. ३।२१ ; नीम. ३५ शिवा ( हिता ).
(२) कानी. ३।२२.

सम्यगिति सूक्तत्वेन जनजिहीर्षया जनचित्तापहारार्थे परमां मैत्रीं सर्वत्र भावयन् विसृजेत् लौकिकीं गिरं लोके व्यावहारिकीं वाचमिति । उनि.

[1]नित्यं मनोपहारिण्या वाचा प्रह्लादयेज्जनम् ।
उद्वेजनीयो भवति क्रूरवागर्थदोऽपि सन् ॥

(१) क्रूरवाक् परुषवाक् । जम.

(२) दुष्टवाक्ये दोषं दर्शयन्नाह– नित्यमिति । सदा मनोपहारिण्या चित्ताह्लादकारिण्या वाचा प्रह्लादयेत् आनन्दयेत् जगत् भुवनम् । क्रूरवाक् परुषवाक् उद्वेजनीयो भवति अर्थदोऽपि धनं प्रयच्छन्नपि । उनि.

[2]हृदि विद्ध इवात्यर्थं यया संतप्यते जनः ।
पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥

(१) पीडितोऽपि दुःखाभिभूतोऽपि न परुषवाक् स्यात् । जम.

(२) क्रूरवाङ्निषेधार्थमाह– हृदीति । हृदि विद्ध इव मर्मोद्घाटनप्रायया अत्यर्थं अतिशयेन यया वाचा संतप्यते जनः तां वाचं पीडितोऽपि हि मेधावी बुद्धिमान् नोदीरयेत् न ब्रूयादित्यर्थः । उनि.

[3]तीव्राण्युद्वेगकारीणि विसृष्टान्यशमात्मकैः ।
कृन्तन्ति देहिनां मर्म शस्त्राणीव वचांसि च ॥

(१) विसृष्टानि प्रयुक्तानि । अशमात्मकैः तीक्ष्णैः । जम.

(२) क्रूरवाचां स्वरूपमभिधातुमाह– तीव्राणीति । दुःसहानि उद्वेगकारीणि संतापजननानि विसृष्टानि उदीरितानि अशमात्मभिः उपशमरहितैः कृन्तन्ति छिन्दन्ति देहिनां मर्म शस्त्राणि च तत्समानगुणानि वचांसि चेति । उनि.

[1]प्रियमेवाभिधातव्यं सत्सु नित्यं द्विषत्सु च ।
शिखीव केकामधुरः प्रियवाक् कस्य न प्रियः ॥

(१) द्विषत्सु चेति । तेऽपि तथा विश्वासिताः सूच्छेदा भवन्ति नापकुर्वन्ति वा । केकामधुरः केकाशब्देन हृद्यः । जम.

(२) प्रियवचसां गुणं दर्शयन्नाह– प्रियमिति । प्रियमेव श्रुतिसुखमेव अभिधातव्यं सत्सु सुहृत्सु नित्यं द्विषत्सु द्विष्टेषु च । शिखीव मयूर इव केकाभिः कलरवैः मधुरः रमणीयः, प्रियवाक् कस्य न प्रियः ? अपि तु सर्वस्यापि प्रिय इत्यर्थः । उनि.

[2]अलंक्रियन्ते शिखिनः केकया मदरक्तया ।
वाचा विपश्चितोऽत्यर्थं माधुर्यगुणयुक्तया ॥

(१) मदरक्तया मदकलयेत्यर्थः । विपश्चितः विद्वांसः । जम.

(२) शिखिनः मयूराः । केकया कलस्वरवत्या । मदरक्तया मयूरस्य मदात् मधुरया । विपश्चितः विवेकिनः वाचा वाण्या अत्यर्थं अतिशयेन तथैवालंक्रियन्ते । माधुर्यगुणयुक्तया माधुर्यगुणप्रचुरया । विपश्चितां मधुरा वागेवालंकारो भवतीति भावः । उनि.

[3]मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः ।
हरन्ति न तथा वाचो यथा साधु विपश्चितः ॥

(१) यथा साध्विति । यथा शोभनं हरन्ति वाचः इति संबन्धः । जम.

(२) मदेन रक्तस्य रागबहलध्वनेः हंसस्य तथैव कोकिलस्य शिखण्डिनश्च हरन्ति न वाचः कूजितगिरः । चित्तमिति वाक्यशेषः । तथा तेन प्रकारेण, यथा साधु शोभनप्रकारेण विपश्चितः । विवेकिनां सौम्यस्वरा ह्लादयन्ति चित्तम् । एवं च विपश्चिता मधुरवचनेन भवितव्यमित्युपदिष्टं भवति । उनि.

---

(१) कानी. ३।२३ ; उनि. ज्जनम् (ज्जगत्) ; नीम. ३५ ज्जनम् (ज्जगत्) उत्तरार्धे (उद्वेजयति भूतानि क्रूरवाग्धनदोऽपि सन् ॥).

(२) कानी. ३।२४ ; नीम. ३५ यया (यथा).

(३) कानी. ३।२५ ; उनि. मात्मकैः (मात्मभिः).

(१) कानी. ३।२६ ; नीम. ३५ (प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु वा । शिखीवं केकां मधुरां वाचं ब्रूते जनप्रियः ॥).

(२) कानी. ३।२७.

(३) कानी. ३।२८ ; नीम. ३५ श्रितः (श्रिताम्).

[1]गुणानुरागी स्थितिमान् श्रद्दधानो दयान्वितः ।
धनं धर्माय विसृजेत्प्रियां वाचमुदीरयन् ॥

(१) दानमधिकृत्याऽऽह— गुणानुरागीत्यादि । दानस्य वागप्यङ्गमिति तदनन्तरं दाननिर्देशः । अयं श्रोत्रियो वेदपारगो वेति गुणानुरागी । स्थितिमान् स्वयमप्याचारवान् । अन्यथा स्वाचारभ्रष्टादस्मात् कः प्रतिगृह्णीयात्? श्रद्दधानः । श्रद्धापूर्वकं हि दीयमानमुत्कृष्टफलं भवति । दयान्वित इति गुणरहितेष्वपि दीनेषु विसृजेदिति दर्शयति । प्रियां वाचमुदीरयन्निति । तया वाचा यया प्रतिग्रहीता तुष्यति । एवं चोभयानुग्राहित्वाल्लोके देववत् वन्द्यते । जम.

(२) दानक्रममभिधातुमाह— गुणेति । पात्रगुणेष्वनुरागवान् इत्यनेन गुणवद्भ्य एव धनं विसृजेत्, नान्यथा । स्थितिमान् यस्य यावत्प्रतिज्ञातं तदनतिक्रमेण निर्वहणं स्थितिः, तद्युक्तः । श्रद्दधानः दानादनन्तं पुण्यमस्तीति श्रद्धान्वितः । दयान्वितः दीनानाथेष्वपि कारुण्यात् प्रवृत्तदानः । धनं धर्माय विसृजेत्प्रियां वाचमुदीरयन् । उक्तं च— 'उद्वेजनीयो भवति क्रूरवागर्थदोऽपि सन्' (कानी. ३।२३) इति । दानं प्रियवाक्सहितमेव कर्तव्यमिति भावः । उनि.

[2]ये प्रियाणि च भाषन्ते प्रयच्छन्ति च सत्कृतम् ।
श्रीमन्तो वन्द्यचरणा देवास्ते नरविग्रहाः ॥

(१) यदाह— ये प्रियाणीत्यादि । सत्कृतं पूजापूर्वकम् । जम.

(२) अस्यैवार्थस्य प्रशंसामभिधातुमाह— य इति । ये श्रीमन्तः प्रियाणि भाषन्ते, प्रयच्छन्ति च सत्कृतं सत्कारसहितम्, ते वन्द्यचरिताः नरविग्रहाः पुरुषशरीराः देवा एवेति । उनि.

[3]शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा ।
देवतावद्गुरुजनमात्मवच्च सुहृज्जनम् ॥

(१) एवं पञ्चविधं सद्वृत्तं प्रजासंग्रहोपायं निर्दिश्येदानीं विषयभेदेनान्यदाह— शुचिरित्यादिना श्लोकत्रयेण । शुचिः बाह्याभ्यन्तरशौचयोगात् । आस्तिक्यं भावितपरलोकता । पूजयेद्देवताः अभिमुखीकरणार्थम् । जम.

(२) गृहस्थाचारमभिधातुमाह— शुचिरिति । बाह्याभ्यन्तरशौचयुक्तः । बाह्यं मृज्जलादिभिः, आभ्यन्तरं सर्वसत्त्वानुग्रहबुद्ध्या । आस्तिक्यपूतात्मा । आस्तिक्यं अस्ति वेदोक्तं समस्तं इति मन्यते यः स आस्तिकः, तस्य भावः आस्तिक्यम्, तेन पूतः आत्मा यस्य सः । पूजयेद्देवताः इष्टाः सदा नित्यम् । देवतावद्गुरुजनं मातृपितृुपाध्यायादिकम्, आत्मवच्च सुहृज्जनं बन्धुवर्गं आत्मसमं कृत्वा पूजयेदिति । उनि.

[1]प्रणिपातेन हि गुरून् सतोऽनूचानचेष्टितैः ।
कुर्वीताभिमुखान् भूत्यै देवान् सुकृतकर्मणा ॥

(१) तेषां या यस्य पूजा तामाह— प्रणिपातेनेत्यादिना । गुरून् पित्रादीन् । सतः विद्यावृद्धान् । अनूचानः प्रवचने साङ्गेऽधीती । सुकृतकर्मणा यागादिपुण्यकर्मणा गन्धपुष्पधूपोपहारादिना च । जम.

(२) प्रत्येकमाराधनमभिधातुमाह— प्रणिपातेनेति । गुरून् आचार्यान् प्रणिपातेन प्रणत्या अभिमुखान् कुर्वीतेति सर्वत्र वर्तते । सतः सत्पुरुषान् अनूचानचेष्टितैः सप्रश्रयैरनुष्ठानैः । देवान् देवताविशेषान् सुकृतकर्मणा पुण्येनानुष्ठानेन अभिमुखान् भूत्यर्थं कुर्यात् । देवाः सुकृतकर्मणाऽभिमुखा भवन्ति, न प्रणाममात्रेणेति भावः । उनि.

(३) अनूचानः श्रोत्रियः, तस्य चेष्टितानि तत्क्रिया इत्यर्थः । नीम. ३५

[2]सद्भावेन हरेन्मित्रं संभ्रमेण च बान्धवान् ।
स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतराञ्जनान् ॥

---

(१) कानी. ३।२९.

(२) कानी. ३।३०; नीम. ३५ पूर्वार्धे (ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति तत्कृतम् ।) चरणा (चरिता).

(३) कानी. ३।३१; नीम. ३५.

(१) कानी. ३।३२; नीम. ३५ मुखान् (मतान्).

(२) कानी. ३।९३; उनी. संभ्रमेण च (सद्भावेनैव) राञ्जनान् (रं जनम्); नीम. ३५ संभ्रमेण (सद्भावेन) दानाभ्यां (मानाभ्यां) राञ्जनान् (रं जनम्).

(१) सद्भावः विश्वासः । बान्धवान् उभयकुल-संबद्धान् । स्त्रीभृत्यानिति । स्त्रियः प्रेम्णा, न सद्भावेन । तथाऽऽहुः– ' स्त्रीष्वविश्वासः ' इति । भृत्यान् दानेन, तत्प्रतिबद्धत्वात् तेषाम् । दाक्षिण्यं आनुकूल्यम् । इत-रान् जनान् बाह्यान् । जम.

(२) उक्तेतरजनाराधनमभिधातुमाह– सद्भावेनेति । परमार्थस्नेहेन हरेत् आराधयेत् मित्रं मित्रतामुपगतम् । सद्भावेनैव बान्धवान् हरेत् । स्त्रीभृत्यान् भार्यानुजीवि-वर्गं प्रेमदानाभ्यां स्नेहेन दानेन च, न प्रेम दानरहितं न दानं प्रेमवर्जितं स्त्रीभृत्यानाराधयेदिति । दाक्षिण्येन स्निग्धभावेन इतरं उक्तव्यतिरिक्तं जनं हरेदिति । उनि.

'अनिन्दा परकृत्येषु स्वधर्मपरिपालनम् ।
कृपणेषु दयालुत्वं सर्वत्र मधुरा गिरः ॥

(१) इदानीमुक्तमनुक्तं च सद्वृत्तं विषयभेदेन दर्शयति– अनिन्देत्यादिना श्लोकचतुष्टयेन । कृत्यं परिणयनादिकर्म । स्वधर्मपरिपालनम् । यस्मिन् वर्णे आश्रमे वा स्थितस्तद्धर्ममात्मनः पालयेदित्यर्थः । सर्वत्र लोकव्यवहारेषु मधुरा गिरः उत्कृष्टेषु निकृष्टेषु वा सर्वेषु । जम.

(२) एतदेव द्रढयितुमाह– अनिन्देति । परवृत्तेषु भिन्नदर्शनाद्यनुष्ठानेषु निन्दा न कार्या । स्वधर्मपरिपालनं शास्त्रोक्तस्य स्वधर्मस्यानुष्ठानम् । कृपणेषु दीनानाथादिषु दयालुत्वं अनुकम्पापरत्वम् । सर्वत्र सर्वस्मिञ्जने मधुरा एव गिरः, नियमात् वाच्या इति शेषः । उनि.

'प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे ।
गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता ॥

(१) अव्यभिचारिणे इति मित्रभाविने । उक्तं च– ' एकार्थानर्थसंबन्धमुपकार्यविकारि च । मित्रभावि भवत्येतन्मित्रमद्वैध्यमापदि ॥ ' (कौ. ७।९) इति । गृहागते तस्मिन्नन्यस्मिन् वा सज्जने परिष्वङ्गः संभाषणा-दिना, शक्त्या दानं तस्मिन्नन्यस्मिन् वा समागतें, सहिष्णुता लोकोपक्रोशादिदितितिक्षा । जम.

(२) प्राणैरप्युपकारित्वं स्वप्राणदानेनापि उपकारित्वं मित्रायाव्यभिचारिणे, युक्तमिति शेषः । गृहागते जने परिष्वङ्गः सर्वथा स्नेहः कार्यः , ' सर्वस्याभ्यागतो गुरुः ' इति वचनात् । शक्त्या सामर्थ्येन दानम् । सहिष्णुता यदि गृहागतो वाक्पारुष्यादिकमपि करोति तत्रापि सहिष्णुतैव, कार्येति शेषः । उनि.

'स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सरः ।
नान्योपतापि वचनं मौनव्रतचरिष्णुता ॥

(१) अनुत्सेकः अविकारिता । भद्रं कल्याणम् । मौनव्रतचरिष्णुतेति वाचालताप्रतिषेधः । जम.

(२) स्वसमृद्धिषु अनुत्सेकः दर्परहितत्वम् । परवृद्धिषु अमत्सरः असूयारहितत्वम् । परोपतापिवचने मौनव्रता-चरणशीलता, कार्येति शेषः । उनि.

'बन्धुभिर्बद्धसंयोगः सुजने चतुरश्रता ।
तच्चित्तानुविधायित्वमिति वृत्तं महात्मनाम् ॥

(१) बद्धसंयोग इति उपगमादिना बन्धुभिरविश्लिष्ट-संबन्धः । सुजने चतुरश्रता अवक्रता । तच्चित्तानुविधा-यित्वं तन्मतेन प्रवृत्तिः । इति वृत्तं महात्मनामिति । एतत्सर्वं शिष्टानुमतत्वात् विशिष्टफलयोगाच्च सद्वृत्त-मित्युच्यते । जम.

(२) उपसंहरन्नाह– बन्धुभिरिति । भ्रात्रादिभिः बद्धसंयोगः सुघटितसंबन्धः सुजने सत्पुरुषजने चतुरस्रता वाङ्मनःकायकर्मादिभिस्तदाराधनतत्परता, तच्चितानुविधा-यित्वं सुजनचित्तस्य अनु तदनन्तरमेव अनुष्ठायित्वं इति एवंप्रकारं वृत्तं अनुष्ठानं महात्मनां महापुरुषाणामिति । उनि.

---

(१) कानी. ३।३४ ; उनि. कृत्येषु (वृत्तेषु).
(२) कानी. ३।३५ ; नीम. ३५.

(१) कानी. ३।३६ ; जम. वृद्धिष्व (भद्रेष्व) ; उनि. नान्योपतापि वचनम् (परोपतापिवचने) ; नीम. ३५ वृद्धिष्व (भद्रेष्व) पू.
(२) कानी. ३।३७ ; उनि. रश्र (रस्र) ; नीम. ३५ बद्ध (बन्धु) सुजने चतुरश्रता (स्वजने चतुरस्रता).

¹सनातने वर्त्मनि साधु तिष्ठता-
मयं हि पन्था गृहमेधिनां मतः ।
अनेन गच्छन्नियतं महात्मना-
मिमं च लोकं परमं च विन्दति ॥

(१) तदेव दर्शयति– सनातन इत्यादिना । स्वस्मिन् स्वस्मिन् मार्गे तिष्ठतामिति शिष्टतानुकथनम् । साध्विति तिष्ठतिक्रियाविशेषणम् । अयं पन्थाः यथोक्तं सद्वृत्तम् । आश्रमाणामिति वक्तव्ये गृहमेधिनामिति वचनं प्राधान्यख्यापनार्थम् । तथाहि– 'आश्रमाणां गृहस्थो योनिरप्रजनत्वादितरेषाम्' (गौध. ३।३) इति गौतमः । महात्मनां लोकम्, नान्येषां क्षुद्राणाम्, यस्मादिह लोकद्वयमपि संभवति । विन्दति लभते । जम.

(२) महात्मनां व्रतानुष्ठानान्महाँल्लाभ इति दर्शयन् सर्गान्ते भिन्नवृत्तमाह– सनातन इति । शाश्वते वर्त्मनि मार्गे साधु यथा भवति तथा तिष्ठतां अवस्थितिं कुर्वतां गृहमेधिनां गृहस्थानां महात्मनां रामयुधिष्ठिरादीनां मतः उक्तलक्षणः पन्थाः अनुष्ठानमार्गः अभिमतः उपदिष्टो मन्वादिभिः । अनेन पथा गच्छन्न्योऽपि नियतं निश्चयेन इहलोकं परमं च लोकं विन्दति लभते इत्यर्थः । उनि.

²इति पथि विनिवेशितात्मनो
रिपुरपि गच्छति साधु मित्रताम् ।
तदवनिपतिमत्सराद्दते
विनयगुणेन जगद्वशं नयेत् ॥

(१) प्रकरणार्थानुष्ठानफलमाह– इतीत्यादिना । रिपुरपि, किमुत स्वजनः ? साधु मित्रताम् । तदिति तस्मात् । अवनिपतिमत्सराद्दत इति । राज्ञः मात्सर्यं गर्वः किमनेन संगृहीतेनेति, तदपास्य विनयगुणेन सद्वृत्तेन वशं नयेत् स्वीकुर्यात् । जम.

(२) सनातनवर्त्मनि तिष्ठतः स्वामिन उपकारान्तरं दर्शयन्नाह– इतीति । इति एवंप्रकारे साधुसेविते पथि विनिवेशितात्मनः विजिगीषोः रिपुरपि गच्छति साधु मित्रताम् । तदवनिपतिः अस्तमत्सरः विक्षिप्तदोषः विनयगुणेन जितेन्द्रियतया जगत् वशं नयेत् । न ह्येवंविधमन्यत् वश्योपायनमस्ति यथा विनयगुण इति । उनि.

¹क्व च नरपतिवर्गः संग्रहः क्व प्रजानां
मधुरवचनयोगाल्लोकमभ्याददीत ।
मधुरवचनपाशैरायतालानितः सन्
पदमपि हि न लोकः संस्थितेर्भेदमेति ॥

(१) मात्सर्ययोगात् प्रजासंग्रहोऽनुपपन्न इति दर्शयन्नाह– क्व चेत्यादि । मधुरवचनयोगात् सद्वृत्तादिति शेषः । सूनृतया वाचा युक्तादित्यर्थः । सद्वृत्तादिति वक्तव्ये मधुरवचनग्रहणं संग्रहोपायेषु सूनृता वाणी प्रधानमिति दर्शनार्थम्, सर्वत्रोपयुज्यमानत्वादस्याः । पाशा इव पाशाः, मधुरवचनपाशैः सद्वृत्तैः आयतालानितः अत्यर्थं संबद्धः पदं स्तोकं न संस्थितेर्भेदमेति । राज्ञि कृतावस्थानाः प्रजा न परैर्भिद्यन्त इत्यर्थः । जम.

(२) सदाचारस्थापनामध्ये मधुरवचनप्रशंसोक्ताऽपि पुनरुच्यते, गर्वमाधुर्ययोरेकत्रावस्थितेर्दुर्घटत्वात् । तथापि गर्वमपहाय वचसां माधुर्यमेव विधेयमिति दर्शयन्नाह– क्वेति । नरपतीनां अविनीतराजानां गर्वः अहंकारदर्पः क्व ? संग्रहः प्रजानामर्जनं क्व ? दुर्घटमित्यर्थः । तथापि मधुरवचनयोगाल्लोकमभ्याददीत । लोकादाने संग्रहे राज्ञो राजत्वम्, अन्यथा आभिगामिकगुणानां कुलशीलादीनामेकविंशतिसंख्यानामनर्थकत्वं स्यात् । मधुरवचनान्येव पाशः, तेन आयतः आलानितः सुबद्धः सन् पदमपि न लोकः संस्थितेः न्यायमार्गावस्थितेः भेदं व्यभिचारं एति । न्याय्यदण्डः सामसहायः कार्यसाधको भवतीति भावः । उनि.

---

(१) कानी. ३।३८ ; नीम. ३५ परमं (च परं) उत्त.

(२) कानी. ३।३९ ; उनि. पतिमत्सराद्दते (पतिरस्तमत्सरो).

(१) कानी. ३।४० ; उनि. वर्गः (गर्वः) पाशैरायता (पाशेनाऽऽयता).

*[1]कोष्ठागारेऽभियुक्तः स्यात्तदायत्तं
हि जीवितम् ।
नात्यायं च व्ययं कुर्यात्प्रत्यवेक्षेत चान्वहम् ॥
कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् ।
खन्याकरो वनादानं शून्यानां च निवेशनम् ॥
अष्टवर्गमिमं साधु स्वस्थवृत्तं विवर्धयेत् ।
जीवनार्थमिहाऽऽजीव्यैः कारयेत्करणान्वितैः ॥
बृहस्पतेरविश्वास इति शास्त्रार्थनिश्चयः ।
विश्वासी च तथा च स्याद्यथा संव्यवहारवान् ॥
विश्वासयेदविश्वस्तं विश्वस्तं नातिविश्वसेत् ।
यस्मिन् विश्वासमायाति विभूतेः पात्रमेव सः ॥
प्रादुर्भवन्त्यर्थसमं यस्माच्चित्तान्यनुक्षणम् ।
तस्माद्योगीव सततं तानि पश्येत्समाहितः ॥
[2]अन्वीक्षणं च विद्यानां सद्वर्णाश्रमरक्षणम् ।
ग्रहणं शस्त्रशास्त्राणां युद्धमार्गोपशिक्षणम् ॥

(१) स्वामिकर्माऽऽह– अन्वीक्षणं आलोचनम् । सद्वर्णाश्रमरक्षणमिति । स्वकर्मसु ये स्थिता वर्णाश्रमाः ते सन्त उच्यन्ते । ग्रहणं शस्त्रशास्त्राणां अध्ययनं धनुर्वेदानाम् । युद्धमार्गोपशिक्षणमिति शास्त्रज्ञानेऽपि योद्धुं न जानातीति तद्विन्यासशिक्षणम् । जम.

(२) स्वामिप्रकृतेः कर्माऽऽह– अन्वीक्षणमिति । 'इतिवृत्तं महीपतेः' इति अष्टपञ्चाशत्तमश्लोकेनान्वयः । विद्यानां त्रयीवार्तादण्डनीतिप्रभृतीनां अन्वीक्षणं समालोचनम् । स्ववर्णाश्रमरक्षणं ब्राह्मणादिवर्णानां ब्रह्मचर्यप्रभृत्याश्रमाणां च रक्षणम् । शुद्धशस्त्राणां विषस्पर्शादिरहितशरादीनां ग्रहणम् । युद्धमार्गेऽपि शिक्षणं धर्मयुद्धस्य कूटयुद्धादेरपि अभ्यासः । अन्वीक्षणमित्यत्र अन्वीक्षणे इति, [ स्ववर्णाश्रमरक्षणमित्यत्र सद्वर्णाश्रमरक्षणमिति सद्धर्माश्रमरक्षणमिति च पाठान्तरम् । उनिसा.

[1]व्यायामः शास्त्रविज्ञानं वर्मणां लक्षणानि च ।
गजाश्वरथपृष्ठेषु यथावत्संप्रवर्तनम् ॥

(१) व्यायामः प्लवनलङ्घनादिः । वर्मणां लक्षणानि तद्द्रव्याणां परिज्ञानानि । गजाश्वरथपृष्ठेषु यथावत् संप्रवर्तनं गजादिवाहिकाकौशलमित्यर्थः । जम.

(२) व्यायामः परिश्रमाभ्यासः । शस्त्रविज्ञानं शस्त्राणां लक्षणादिकज्ञानम् । कर्मणां लोहाकरपरिज्ञानादिकर्मणां कवचावरणादीनां च लक्षणानि । गजाश्वरथपृष्ठेषु यथावत् यथारीति संप्रवर्तनं उपवेशनमित्यर्थः । उनिसा.

[2]नियुद्धकौशलं माया परचित्तप्रवेदनम् ।
धूर्तता शाठ्ययुक्तेषु सत्सु सद्वृत्तदर्शनम् ॥

(१) नियुद्धकौशलं मल्लयुद्धशिक्षणम् । माया तत्प्रवर्तनमिति । मायामुपायविकल्पे वक्ष्यति । परचित्तप्रवेदनं इङ्गिताकारैः । धूर्तता शाठ्यम् । सत्सु सज्जनेषु । जम.

(२) नियुद्धं मल्लयुद्धम्, तत्र कौशलं कुशलता । नियुद्धकुशलमिति मुद्रितपाठे स एवार्थः । मायया कौशलेन परेषां चित्ते हृदये प्रवेशनम्, सर्वेषां मनोविज्ञानमित्यर्थः । तथा चोक्तम्– 'यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥' इति । शाठ्ययुक्तेषु शठेषु धूर्तता । तथा चोक्तम्– 'शठे शाठ्यं समाचरेत्' इति । सत्सु साधुषु सद्व्रतदर्शनं साधुव्यवहारप्रकाशः । तथा

---

* 'कोष्ठागारेऽभियुक्तः स्यात्' इत्यारभ्य 'तानि पश्येत्समाहितः' इत्यन्तस्य श्लोकषट्कस्य व्याख्यानसंग्रहः 'स्वाम्यनुजीविवृत्तम्' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(१) कानी. ५।७६–७८, ८८–९०. शेषः स्थलादिनिर्देशः 'स्वाम्यनुजीविवृत्तम्' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

(२) कानी. १४।४१ ; उनिसा. सद्वर्णा ( स्ववर्णा ) शस्त्रशास्त्राणां ( शुद्धशस्त्राणां ) मार्गोप ( मार्गेऽपि ). सर्वत्र उपाध्यायनिरपेक्षानुसारिणीकृताः पाठान्तरनिर्देशाः तस्यामेव द्रष्टव्याः ।

(१) कानी. १४।४२ ; उनिसा. शास्त्र ( शस्त्र ) वर्मणां ( कर्मणां ).

(२) कानी. १४।४३ ; उनिसा. प्रवेदनम् ( प्रवेशनम् ) सद्वृत्त ( सद्व्रत ).

चोक्तम्– 'सारल्यं सरलं कुर्यात्' इति । सद्व्रतदर्शन-मित्यत्र सद्वृत्तदर्शनमिति समीचीनः पाठः । उनिसा.

[1]मन्त्रोद्योगोऽनुमन्त्रत्वं तद्रक्षा तात्स्थ्यमेव च ।
उपेक्षा साम दानं च भेदो दण्डश्च साधनम् ॥

(१) मन्त्रार्थे ज्ञानवृद्धसंयोगः । मन्त्रिभिः सह संमन्त्र्य पश्चात् स्वयमेकैकस्य मन्त्रणं अनुमन्त्रत्वम् । तद्रक्षा मन्त्ररक्षा । तात्स्थ्यं मन्त्रतात्पर्यम् । उपेक्षा उपायविकल्पे वक्ष्यमाणा । साधनमिति उपेक्षादिपञ्चकस्य कर्मण उपायसाधनत्वात् । जम.

(२) मन्त्रोद्योगः मन्त्रिभिः सह मन्त्रस्य आरम्भः । अनुमन्त्रत्वं मन्त्रिभिः सह कृते मन्त्रे पश्चादपि मन्त्रणम् । तस्य मन्त्रस्य रक्षा रक्षणम् । स्वास्थ्यं सुस्थचित्तता । सामदानस्य उपेक्षा तस्मिन् उपेक्षाप्रदर्शनमित्यर्थः । भेदः शत्रूणां परस्परमनोभङ्गसाधनम् । दण्डस्य साधनं दण्ड्यानां दण्डकरणमित्यर्थः । उनिसा.

[2]प्रशास्तृसूतसेनानीमन्त्र्यमात्यपुरोधसाम् ।
सम्यक् प्रचारविज्ञानं दुष्टानां चावरोपणम् ॥

(१) प्रशास्ता बलाध्यक्षः । सूतः सारथ्यकर्मनियुक्तः । सेनानीः चतुरङ्गस्य नेता । मन्त्री बुद्धिसचिवः । अमात्यः संनिधातृसमाहर्त्रादिः । पुरोधाः पुरोहितः । प्रचारविज्ञानं स्वकर्म किं केनानुष्ठितमिति । दुष्टानामवरोपणं तेषां कर्मसु विकुर्वाणानां पदात् प्रच्यावनम् । जम.

(२) प्रशास्ता सैन्यप्रसाधकः । अध्यक्षः उक्तव्यतिरिक्तसेनानीः । सेनानां च (? सेनाश्च) । मन्त्री मन्त्रसहायः । अमात्यः मन्त्रस्य तत्कार्यस्य च सहायः । पुरोधाः पुरोहितः । तेषां च सर्वेषां सम्यक् प्रचारविज्ञानं तेषां मध्ये कः स्वामिहितकारी को वा तद्विपरीत इत्यस्य सम्यक् विज्ञानम् । दुष्टानां अहितकारिणां अध्यक्षाणां अपरोपणं स्वनियोगात् अपनयनम् । अपरोपणमित्यत्र अवरोधनमिति मुद्रितपाठे कारागारे अवरोध इत्यर्थः । उनिसा.

[3]गतागतपरिज्ञानं दूतसंप्रेषणानि च ।
प्रकृतिव्यसनापोहः क्रुद्धप्रशमनानि च ॥

(१) गतागतपरिज्ञानमिति । किमयं कारणादकारणात् वा गत आगतश्चेति । क्रुद्धप्रशमनानि कारणादकारणद्वा क्रुद्धानां सामादिभिः प्रशमनानि । जम.

(२) यः कारणात् अकारणात् वा गत आगतश्च तस्य परिज्ञानम् । दूतसंप्रेषणानि च । प्रकृतीनां अमात्यादीनां यत् व्यसनं व्यस्यति श्रेयो यत् तत् व्यसनम्, तस्य अपोहः निराकरणम् । क्रुद्धानां कुपितानां क्रोधप्रशमनानि च । उनिसा.

[2]गुरूणामनुवृत्तिश्च पूज्यानामनुपूजनम् ।
धर्मासनप्रतिष्ठानं राज्यकण्टकशोधनम् ॥

(१) गुरूणां सगन्धानामगन्धानां च । पूज्यानां विद्यावृद्धानाम् । धर्मासनप्रतिष्ठानं धर्माधिकरणप्रवर्तनं धर्मस्थैः । राज्यकण्टकशोधनं प्रदेष्टृभिः । जम.

(२) गुरूणां उपाध्यायादीनां अनुवृत्तिः अनुकूलत्वप्रवर्तनम् । पूज्यानां इष्टदेवतादीनां अभिपूजनम् । धर्मासनप्रतिष्ठानं विवादपदविचारार्थं धर्मासने प्रतिष्ठानं आस्थाने उपवेशनम् । राज्यस्य ये कण्टकाः दुष्टात्मानः चौरपारदारिकादयः, तेषां शोधनं अर्थदण्डेन वधदण्डेन वा दमनम् । 'पूज्यानां चाभिपूजनम्' इत्यत्र 'पूज्यानां चापि पूजनम्' इति पाठान्तरम् । उनिसा.

[3]भृताभृतपरिज्ञानं कृताकृतपरीक्षणम् ।
तुष्टातुष्टविचारश्च सर्वेषामनुजीविनाम् ॥

---

(१) कानी. १४।४४ ; उनिसा. तात्स्थ्य (स्वास्थ्य) साम दानं च (सामदानस्य) दण्डश्च (दण्डस्य).

(२) कानी. १४।४५ ; उनिसा. प्रशास्तृसूत (प्रशास्त्रध्यक्ष) चावरो (चापरो).

(१) कानी. १४।४६.

(२) कानी. १४।४७ ; उनिसा. नामनु (नां चाभि).

(३) कानी. १४।४८ ; उनिसा. भृताभृत (भूताभूत) जीविनाम् (जीवनम्).

(१) भृताभृतपरिज्ञानं भृत्यभरणीयेन। कृताकृतपरीक्षणं कर्मसु नियुक्तेन किं केन कृतमिति। (तुष्टातुष्टविचारः) भृत्यस्य तुष्टिरतुष्टिर्वेति विचारः। जम.

(२) 'सर्वेषामनुजीवनम्' इत्यत्र 'सर्वेषामनुजीविनाम्' इति समीचीनः पाठः। अर्थस्तु सुगमः। उनिसा.

[1]मध्योदासीनचरितज्ञानं तत्सिद्धिपालनम्।
प्रतिग्रहश्च मित्राणाममित्राणां च निग्रहः॥

(१) तत्सिद्धिपालनमिति मध्यमोदासीनयोः साधनं रक्षणं च। प्रतिग्रहः स्वीकरणम्। जम.

(२) मध्यानां मध्यवर्तिभूपानां उदासीनानां निरपेक्षभूपानां चरितस्य व्यवहारस्य ज्ञानं परिज्ञानम्। तत्सिद्धिपालनं तेन मध्योदासीनचरितज्ञानेन या सिद्धिः कार्यसिद्धिः, तस्याः पालनं साधनं दृढस्थापनं वा। तत्सिद्धिसाधनमिति पाठे मध्योदासीनभूपतिभिः संधिरक्षणमित्यर्थः। मित्राणां परिग्रहः संग्रहः। उनिसा.

[2]पुत्रदारादिगुप्तिश्च बन्धुवर्गपरिग्रहः।
खनिद्वीपवनादीनां स्ववृत्तीनां प्रवर्तनम्॥

(१) पुत्रदारादिगुप्तिः, पुत्राणां कर्कटकसधर्मत्वात् दाराणां चाऽऽसन्नवृत्तित्वात्। खनिद्वीपवनादीनामिति। आदिशब्दात् दुर्गसेतुवणिक्पथशून्यनिवेशद्रव्यवनपरिग्रहः। ता एव राज्ञो वृत्तयः। जम.

(२) पुत्रदारादिभिः सह गुप्तिः आत्मरक्षणम्। स्ववृद्धिरूपः आत्मोन्नतिरूपः पवनः आदौ मूले यासां तासां स्ववृत्तीनां निजधनागमानां प्रवर्तनम्। 'स्ववृद्धिपवनादीनाम्' इत्यत्र 'खनिद्वीपवनादीनाम्' इति पाठे खनिद्वीपवनादिषु अर्थागमस्य उपायनिर्धारणमिति भावः। उनिसा.

[3]असतां च परिक्षेपः सतां च परिगूहनम्।
अहिंसा सर्वभूतानामधर्माणां च वर्जनम्॥

(१) प्रज्ञाशौचशौर्यादियुक्ताः सन्तः, तद्विपर्ययेणासन्तः, तेषां परिक्षेपः दानमानव्यपरोपणम्। परिगूहनं पूजया स्वीकरणम्। अभूतहिंसा अप्रवर्तितपूर्वा। शास्त्रविगर्हिता अधर्म्या यज्ञादन्यत्र या हिंसा। जम.

(२) असतां दुर्वृत्तानां परिक्लेशः दण्डदानादिना क्लेशप्रदानम्। 'परिक्लेशः' इत्यत्र 'परिक्षेपः' इति पाठे परित्यागः इत्यर्थः। सतां साधूनां परिगूहनं परिरक्षणम्। 'अहिंसा सर्वभूतानामधर्माणां च वर्जनम्' इत्यत्र 'अभूतानां च हिंसानामधर्माणां च वर्जनम्' इति पाठे अभूतानां शास्त्रनिषिद्धानां हिंसानां च अधर्माणां च परिहारः इत्यर्थः। उनिसा.

[1]अकार्यप्रतिषेधश्च कार्याणां च प्रवर्तनम्।
प्रदानं च प्रदेयानामदेयानामसंग्रहः॥

(१) कार्यं करणार्हं इन्द्रमहादि। प्रदेयाः दानार्हाः क्षेत्रादयः। अदेयाः अदानार्हाः अश्रोत्रियादीनामर्थाः। तेषां असंग्रहः असाधनम्। जम.

(२) अदेयानां कुलधनादीनां राजचिह्नानां वा। उनिसा.

अदण्डनमदण्ड्यानां दण्ड्यानां चापि दण्डनम्।
अग्राह्याग्रहणं चैव ग्राह्याणां ग्रहणं तथा॥

(१) अदण्ड्याः फल्गुक्रीडादिष्वपि शिष्टाचाराः। दण्ड्याः चोरादयः। अग्राह्याः पूर्वविरोधिताः प्रकृतिविद्विष्टाः वा। ग्राह्याः प्रज्ञादियुक्ताः स्निग्धाः वा। जम.

(२) अदण्ड्यानां निर्दोषाणां देवद्विजादीनां अदण्डनं दण्डेन धनादीनामग्रहणम्। अग्राह्याणां देवद्विजभूम्यादिषु करादीनां अग्रहणं अनादानम्। उनिसा.

[2]अर्थयुक्तस्य करणमनर्थस्य च वर्जनम्।
न्यायतश्च करादानं स्वयं च प्रतिमोक्षणम्॥

---

(१) कानी. १४।४९ ; उनिसा. प्रति (परि).

(२) कानी. १४।५० ; उनिसा. गुप्तिश्च ब (भिर्गुप्तिर्ब) खनिद्वी (स्ववृद्धि).

(३) कानी. १४।५१ ; उनिसा. क्षेपः (क्लेशः).

(१) कानी. १४।५२–५३.

(२) कानी. १४।५४ ; उनिसा. च प्रति (वा प्रति).

(१) अर्थयुक्तं हीनविग्रहादि । अनर्थः बलवद्विग्रहादिः । न्यायतः पूर्वप्रसिद्ध्या । स्वयं प्रतिमोक्षणं धनानामनतिलोभेन । जम.

(२) अर्थयुक्तस्य त्रिवर्गाव्यपेतस्य । अनर्थस्य फलविवर्जितस्य । न्यायानुसारेण करग्रहणम्, अथवा प्रतिमोक्षणं शस्याभावादिदर्शनेन प्रजावात्सल्यात् स्वयं करादीनामग्रहणम् । उनिसा.

**[१]समर्थनं प्रधानानां निरस्यानां निराकृतिः ।**
**वैषम्याणां प्रशमनं भृत्यानां चाविरोधनम् ॥**

(१) समर्थनं गुणाध्यारोपणम् । प्रधानाः मुख्याः । निरस्याः दूष्याः । वैषम्या( णां प्रशमनं ) असमानां समीकरणम् । विरोधनं परस्परदोषाख्यानेन । जम.

(२) प्रधानानां प्रधानराजपुरुषाणां संवर्धनं पालनम् । समर्थनमिति पाठे समर्थकरणं परीक्षणमिति वाऽर्थः । निरस्यानां पदच्युतियोग्यानामपराधिनां च निर्हृतिः निर्धारणम् । वैषम्याणां दैवमानुषकृतानां व्याधिदुर्भिक्षमरकावरोधप्रभृतीनां प्रशमनं निवारणम् । भृत्यानां परस्परसख्यसंस्थापनं च । उनिसा.

**[२]अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः ।**
**आरम्भः कर्मणः शश्वदारब्धस्यान्तदर्शनम् ॥**

आरम्भः कर्मणः, अनारब्धस्येत्यर्थात् । अन्तदर्शनं समापनेन । जम.

**अलब्धलिप्सा न्यायेन लब्धस्य च विवर्धनम् ।**
**परिवृद्धस्य विधिवत्पात्रे संप्रतिपादनम् ॥**

लिप्सा अर्जनम् । संप्रतिपादनं यदि प्राक् परिरक्षितं भवति । तस्मादरक्षितस्य रक्षणं चेत्यर्थात् बोद्धव्यम् । जम.

**[३]अधर्मप्रतिषेधश्च न्यायमार्गेण वर्तनम् ।**
**उपकार्योपकारित्वमिति वृत्तं महीपतेः ॥**

(१) न्यायमार्गः धर्मशास्त्रविहितः । उपकार्योपकारित्वं उपकर्तव्येषूपकारिता । जम.

(२) एतत् सर्वं महीपतेः राज्ञः वृत्तं अवश्यमवलम्बनीयम् । 'उपकार्युपकारित्वं वृत्तमेतन्महीपतेः' इत्यत्र 'उपकार्योपकारित्वमिति वृत्तं महीपतेः' इति मुद्रितपाठः । उनिसा.

## शुक्रनीतिः

### अष्टधा राजवृत्तम्

**[१]दुष्टनिग्रहणं दानं प्रजायाः परिपालनम् ।**
**यजनं राजसूयादेः कोशानां न्यायतोऽर्जनम् ॥**
**करदीकरणं राज्ञां रिपूणां परिमर्दनम् ।**
**भूमेरुपार्जनं भूयो राजवृत्तं तु चाष्टधा ॥**

किं तत् स्ववृत्तमित्याह– दुष्टेति, करदीकरणमिति । राजवृत्तं अष्टधा यथा– दुष्टानां निग्रहणम्, दानम्, प्रजायाः परिपालनम्, राजसूयादेर्यज्ञस्य यजनम्, कोशानां धनानां न्यायतः यथान्यायं अर्जनम्, राज्ञां करदीकरणं करादानेन अधीनीकरणम्, रिपूणां शत्रूणां परिमर्दनं पराजयनम्, तथा भूमेः भूयः प्राचुर्येण उपार्जनम् । शुनीटी.

### निन्द्यो राजा

**न वर्धितं बलं यैस्तु न भूपाः करदीकृताः ।**
**न प्रजाः पालिताः सम्यक्ते वै षण्ढतिला नृपाः ॥**

यैः बलं सैन्यं न वर्धितम्, भूपाः नृपाः न करदीकृताः करादानेन न वशीकृताः, तथा सम्यक् प्रजाः न पालिताः, ते नृपाः षण्ढतिलाः नपुंसकतिलाः अकर्मण्याः इत्यर्थः । शुनीटी.

**प्रजा सूद्विजते यस्माद्यत्कर्म परिनिन्दति ।**
**त्यज्यते धनिकैर्यैस्तु गुणिभिस्तु नृपाधमः ॥**

प्रजा यस्मात् सूद्विजते अतिशयेन उद्वेगं प्राप्नोति, यत्कर्म यस्य कर्म परिनिन्दति च, तथा गुणिभिः गुणवद्भिः विद्वद्भिरित्यर्थः, धनिभिश्च यः त्यज्यते यत्संसर्गः न क्रियते इत्यर्थः, स नृपाधमः । शुनीटी.

---

(१) कानी. १४।५५ ; उनिसा. समर्थनं (संवर्धनं) निराकृतिः ( च निर्हृतिः ).

(२) कानी. १४।५६–५७.

(३) कानी. १४।५८ ; उनिसा. र्योपकारित्वमिति वृत्तं ( र्युपकारित्वं वृत्तमेतत् ).

(१) शुनी. १।१२४–१४१.

नटगायकगणिकामल्लषण्ढाल्पजातिषु ।
योऽतिसक्तो नृपो निन्द्यः स हि
शत्रुमुखे स्थितः ॥

यः नृपः, नटाः ताण्डवव्यवसायिनः, गायकाः संगीतजीविनः, गणिकाः वेश्याः, मल्लाः व्यायामिनः, षण्ढाः क्लीबाः, तथा अल्पा क्षुद्रा जातिर्येषां तादृशाः नीचजातय इत्यर्थः, तेषु अतिसक्तः अत्यासक्तः स निन्द्यः निन्दनीयः सन् हि निश्चयेन शत्रूणां मुखे स्थितः तिष्ठतीत्यर्थः । वर्तमाने क्तप्रत्ययः । शुनीटी.

बुद्धिमन्तं सदा द्वेष्टि मोदते वञ्चकैः सह ।
स्वं दुर्गुणं नैव वेत्ति स्वात्मनाशाय सो नृपः ॥

यः नृपः सदा बुद्धिमन्तं सुधियं द्वेष्टि, वञ्चकैः धूर्तैः सह मोदते आमोदं करोति, तथा स्वं दुर्गुणं दोषं नैव वेत्ति नावबुध्यते, स स्वात्मनाशाय निजदेहनाशाय भवतीत्यर्थः । सः अचिरात् भ्रश्यते इति भावः । शुनीटी.

नापराधं हि क्षमते प्रदण्डो धनहारकः ।
स्वदुर्गुणश्रवणतो लोकानां परिपीडकः ॥
नृपो यदा तदा लोकः क्षुभ्यते भिद्यते यतः ।
गूढचारैः श्रावयित्वा स्ववृत्तं दूषयन्ति के ॥
भूषयन्ति च कैर्भावैरमात्याद्याश्च तद्विदः ।
मयि कीदृक् च संप्रीतिः केषामप्रीतिरेव वा ॥
ममागुणैर्गुणैर्वाऽपि गूढं संश्रुत्य चाखिलम् ।
चारैः स्वदुर्गुणं ज्ञात्वा लोकतः सर्वदा नृपः ॥
सुकीर्त्यै संत्यजेन्नित्यं नावमन्येत वै प्रजाः ।
लोको निन्दति राजंस्त्वां चारैः संश्रावितो यदि ॥
कोपं करोति दौरात्म्यादात्मदुर्गुणलोपकः ।
सीता साध्व्यपि रामेण त्यक्ता लोकापवादतः ॥
शक्तेनापि हि न धृतो दण्डोऽल्पो
रजके क्वचित् ।
*ज्ञानविज्ञानसंपन्नो राजा दत्ताभयोऽपि च ॥

यदा धनहारकः परधनलुब्धः लोकानां प्रजानां परिपीडकः तथा प्रदण्डः तीक्ष्णदण्डः नृपः स्वदुर्गुणानां श्रवणतः श्रवणात् अपराधं प्रजानामिति शेषः, न क्षमते तदा लोकः क्षुभ्यते विरज्यते । अतः कारणात् नृपः यतः स्ववृत्तात् स्वचरित्रात् भिद्यते तत् स्ववृत्तं गूढचारैः गुप्तचरैः श्रावयित्वा के अमात्यादयः तद्विदः तज्ज्ञानन्तः सन्तः दूषयन्ति दूषितं कुर्वन्ति, तदिति शेषः । वा कैः भावैः भूषयन्ति प्रशंसन्ति ? तथा मम अगुणैः वा गुणैः केषां जनानां मयि कीदृक् संप्रीतिः अनुरागः केषां वा अप्रीतिः अननुरागः एतत् अखिलं समग्रं चारैः गूढपुरुषैः संश्रुत्य सम्यगाकर्ण्य लोकतः लोकपरंपरातश्च सर्वदा ज्ञात्वा राजा सुकीर्त्यै सुयशसे नित्यं सततं स्वदुर्गुणं निजदोषं त्यजेत् । प्रजाः नैव अवमन्येत । हे राजन्, लोकस्त्वां निन्दति इति चारैः संश्रावितः सन् यदि दौरात्म्यात् कोपं करोति तदा असौ नृपः आत्मनः दुर्गुणानां दोषाणां लोपकः लोपकारी अस्वीकारीत्यर्थः । आत्मनो दोषाच्छादनेनातिविरागभाजनं प्रजानामिति भावः । सति दोषे का कथा ? असत्यपि दोषे लोकापवादो निराकरणीय इत्याह— सीतेति । रामेण साध्वी अपि सीता लोकापवादतः त्यक्ता । शक्तेनापि रामेण क्वचित् कदाचित् रजके अपवादकारिणीत्यर्थः, अल्पोऽपि दण्डः न धृतः न कृत इत्यर्थः । यतः राजा रामः ज्ञानेन सामान्येन विज्ञानेन विशेषज्ञानेन च संपन्नः युक्तः, तथा दत्तं अभयं येन स दत्ताभयः, अपवादश्रवणेन स्वदोषसंशोधनसंभवादपवादिनि अभयं दत्तवानित्यर्थः । पुरा किल स्वां पत्नीं स्थानान्तरादागतां 'नाहं त्वां ग्रहीष्यामि, अहं रामो न, यः राक्षसगृहस्थितां सीतां परिजग्राह' इति कथयतः कस्यचिद्रजकस्य मुखात् गूढचारेण सीतापवादं श्रुत्वा रामाय कथितम् । रामेण च तच्छ्रवणात् सीता परित्यक्ता इति वार्ताऽत्रानुसंधेया । शुनीटी.

समक्षं वक्ति न भयाद्राज्ञो गुर्वपि दूषणम् ।
स्तुतिप्रिया हि वै देवा विष्णुमुख्या इति श्रुतिः ॥
किं पुनर्मनुजा नित्यं निन्दाजः क्रोध इत्यतः ।
राजा सुभागदण्डी स्यात्सुक्षमी रञ्जकः सदा ॥

* 'राजदत्ताभयोऽपि च' इति पाठं स्वीकृत्य अस्य श्लोकार्धस्य उत्तरश्लोकेनान्वयः समीचीनः प्रतिभाति ।

लोकः राज्ञः गुरु महदपि दूषणं भयात् समक्षं न वक्ति। हि यतः विष्णुमुख्याः नारायणप्रभृतयः देवाः वै अपि स्तुतिप्रियाः स्तवसंतुष्टाः, भवन्तीति शेषः। इति श्रुतिः वेदवचनम्। मनुजाः मानवाः किं पुनः? स्तवेनैव सर्वे संतुष्यन्ति, दोषवादेन नेति फलितार्थः। इत्यतः अस्मात् कारणात् नित्यं सततं क्रोधः निन्दाजः निन्दया जायते इत्यर्थः। अतः निन्दा नैव कर्तव्येति भावः। राजा सदा शोभनः सुनियतत्वात् सुन्दरः भागः विभागः यत्र तत्, सुव्यवस्थमिति यावत्, यथा तथा दण्डयतीति तथोक्तः। सुक्षमी अतिक्षमावान्। तथा रञ्जकः, लोकानामिति शेषः। स्यात् भवेत्। शुनीटी.

धर्मरतिकारणानि

**यौवनं जीवितं चित्तं छाया लक्ष्मीश्च स्वामिता।**
**चञ्चलानि षडेतानि ज्ञात्वा धर्मरतो भवेत्॥**

यौवनं तारुण्यम्, जीवितं जीवनम्, चित्तं मनः, छाया अनातपम्, लक्ष्मीः श्रीः, तथा स्वामिता ऐश्वर्यम्, एतानि षट् चञ्चलानि अस्थिराणि ज्ञात्वा धर्मरतः धर्मनिष्ठः भवेत्। शुनीटी.

प्रजया त्याज्यो राजा

**अदानेनापमानेन च्छलाच्च कटुवाक्यतः।**
**राज्ञः प्रबलदण्डेन नृपं मुञ्चति वै प्रजा॥**

प्रजा राज्ञः अदानेन अयथोचितदानेन दानराहित्येन वा, अपमानेन अवमाननया, छलात् कापट्यात्, कटुवाक्यतः दुर्वचसा, तथा प्रबलदण्डेन गुरुतरदण्डविधानेन नृपं मुञ्चति त्यजति। शुनीटी.

**विपरीतगुणैरेभिः सान्वयाऽऽरज्यते प्रजा।**
**एकस्तनोति दुष्कीर्तिं दुर्गुणः संघशो नु किम्॥**

एभिः विपरीतैः गुणैः पूर्वोक्तैः अदानादिभिर्दुर्गुणैरित्यर्थः। सान्वया सपुत्रपौत्रादिः प्रजा आरज्यते विरज्यते इत्यर्थः। अथवा एभिर्विपरीतगुणैः दानमानादिभिः रज्यते अनुरागमातनोतीत्यर्थः। एको दुर्गुणः दोषः दुष्कीर्तिं तनोति। नु भोः, संघशः समस्त इत्यर्थः, किं वक्तव्यमित्यर्थः। शुनीटी.

आनृशंस्यादयो धर्माः

**[1]आनृशंस्यं परो धर्मः सर्वप्राणभृतां यतः।**
**तस्माद्राजाऽऽनृशंस्येन पालयेत्कृपणं जनम्॥**

यतः सर्वेषां प्राणभृतां देहिनां आनृशंस्यं दया परमः धर्मः, उक्त इति शेषः, तस्मात् राजा आनृशंस्येन अनुकम्पया कृपणं दीनं जनं पालयेत्। शुनीटी.

**न हि स्वसुखमन्विच्छन् पीडयेत्कृपणं जनम्।**
**कृपणः पीड्यमानः स्वमृत्युना हन्ति पार्थिवम्॥**

स्वं निजं सुखं अन्विच्छन् कृपणं दीनं जनं न हि पीडयेत्। पीड्यमानः कृपणः दीनः स्वमृत्युना निजेन मृत्युना पार्थिवं राजानं हन्ति नाशयति। शुनीटी.

**सुजनैः संगतं कुर्याद्धर्माय च सुखाय च।**
**सेव्यमानस्तु सुजनैर्महानतिविराजते॥**

महान् जनः धर्माय सुखाय च सुजनैः साधुभिः संगतं संसर्गं कुर्यात्। सुजनैः सेव्यमानस्तु अतिविराजते अधिकं शोभते। शुनीटी.

**हिमांशुमाली च यथा नवोत्फुल्लोत्पलं सरः।**
**आनन्दयति चेतांसि तथा सुजनचेष्टितम्॥**

हिमांशुमाली चन्द्रः यथा नवानि उत्फुल्लानि उत्पलानि कुमुदानि यस्मिन् तादृशं सरः आनन्दयति शोभयति, तथा सुजनानां साधूनां चेष्टितं आचरितं चेतांसि मनांसि आनन्दयति। शुनीटी.

**ग्रीष्मसूर्यांशुसंतप्तमुद्वेजनमनाश्रयम्।**
**मरुस्थलमिवोदग्रं त्यजेद् दुर्जनसंगतम्॥**

ग्रीष्मे निदाघे ये सूर्यांशवः रविकिरणाः तै संततं उद्वेजनं भीतिजनकं अनाश्रयं आश्रयरहितम्, अनावृतमित्यर्थः, मरुस्थलमिव मरुभूमिमिव, उदग्रं अतिभयंकरं दुर्जनसंगतं असाधुसङ्गं त्यजेत्। शुनीटी.

**निश्वासोद्गीर्णहुतभुग्धूमधूम्रीकृताननैः।**
**वरमाशीविषैः सङ्गं कुर्यान्न त्वेव दुर्जनैः॥**

निश्वासेन उद्गीर्णः यः हुतभुक् अग्निः तस्य धूमेन धूम्रीकृतानि कृष्णलोहितीकृतानि आननानि मुखानि येषां

(१) शुनी. १।१५९–१८२.

तादृशैः आशीविषैः भुजङ्गैः वरं सङ्गं कुर्यात्, दुर्जनैः न त्वेव । सः विषधरसङ्गादपि दुर्जनसङ्गो भयावह इति भावः । शुनीटी.

**क्रियतेऽभ्यर्हणीयाय सुजनाय यथाऽञ्जलिः ।**
**ततः साधुतरः कार्यो दुर्जनाय हितार्थिना ॥**

अभ्यर्हणीयाय पूज्याय सुजनाय यथा अञ्जलिः क्रियते, यथा बद्धाञ्जलिना सुजनः सेव्य इत्यर्थः, हितार्थिना जनेन दुर्जनाय ततः तस्मादपि साधुतरः अञ्जलिः कार्यः, समधिकबद्धाञ्जलिना दुर्जनः सेव्य इत्यर्थः । चाटुवचनैः परितोष्य दुर्जनः परिहर्तव्य इति भावः । शुनीटी.

**नित्यं मनोपहारिण्या वाचा प्रह्लादयेज्जगत् ।**
**उद्वेजयति भूतानि क्रूरवाग् धनदोऽपि सन् ॥**

मनोहारिण्या मधुरया वाचा नित्यं सततं जगत् प्रह्लादयेत् संतोषयेत् । क्रूरा कर्कशा वाक् यस्य तादृशः जनः धनदः अर्थदोऽपि सन् भूतानि प्राणिनः उद्वेजयति तापयति । शुनीटी.

**हृदि विद्ध इवात्यर्थं यथा संतप्यते जनः ।**
**पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥**

जनः यया वाचा हृदि विद्ध इव अत्यर्थं अतिमात्रं संतप्यते, मेधावी बुद्धिमान् जनः पीडितोऽपि परैरभिहतोऽपि तां वाचं निष्ठुरां वाणीं न उदीरयेत् न कथयेत् । शुनीटी.

**प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु वा ।**
**शिखीव केकां मधुरां वाचं ब्रूते जनप्रियः ॥**

सत्सु बन्धुषु वा द्विषत्सु शत्रुषु अपि प्रियमेव, न तु अप्रियम् । एवकारोऽन्यव्यवच्छेदकः । नित्यं सततं अभिधातव्यं वक्तव्यम् । जनप्रियः लोकः शिखी मयूरः केकामिव मधुरां वाचं ब्रूते कथयति । शुनीटी.

**मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः ।**
**हरन्ति न तथा वाचो यथा वाचो विपश्चिताम् ॥**

विपश्चितां विदुषां वाचः यथा हरन्ति, मन इति शेषः, मदरक्तस्य हंसस्य कोकिलस्य तथा शिखण्डिनः मयूरस्य वाचः तथा न । शुनीटी.

**ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति सत्कृतम् ।**
**श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहाः ॥**

ये जनाः प्रियं सत्कृतं प्रशंसावादरूपं सत्कारं इच्छन्ति, प्रियाणि वचनानि प्रभाषन्ते वदन्ति । प्रियवादिनः प्रियसत्कारार्हाः इति भावः । ते नरविग्रहाः मानवदेहधारिणः श्रीमन्तः वन्द्यं चरितं येषां तादृशाः महनीयचरित्राः देवाः वक्तव्या इति शेषः । शुनीटी.

**न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।**
**दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥**

त्रिषु लोकेषु ईदृशं संवननं वशीकरणं न हि नैव विद्यते इत्यर्थः, यथा भूतेषु दया, मैत्री सौहार्दम्, दानम्, तथा मधुरा वाक् । शुनीटी.

**श्रुतिरास्तिक्यपूतात्मा पूजयेद् देवतां सदा ।**
**देवतावद्गुरुजनमात्मवच्च सुहृज्जनान् ॥**

आस्तिक्यपूतात्मा ईश्वरे भक्तिमान् सन् सदा देवतां देवतावत् गुरुजनान् तथा आत्मवत् सुहृज्जनान् बन्धून् पूजयेत् इति श्रुतिः, अस्तीति शेषः । शुनीटी.

**प्रणिपातेन हि गुरून् सतोऽनूचानवेष्टितः ।**
**कुर्वीताभिमुखान् देवान् भूत्यै सुकृतकर्मणाम् ॥**

अनूचानैः साङ्गवेदविद्भिः सुपण्डितैरित्यर्थः । 'अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः' इत्यमरः । वेष्टितः परिवृतः सन् प्रणिपातेन सतः साधून् गुरून् गुरुजनान्, तथा भूत्यै मङ्गलाय सुकृतकर्मणा शोभनेन कार्येण देवान् अभिमुखान् अनुकूलान् कुर्वीतेति । शुनीटी.

**सद्भावेन हरेन्मित्रं सद्भावेन च बान्धवान् ।**
**स्त्रीभृत्यौ प्रेममानाभ्यां दाक्षिण्येनेतरं जनम् ॥**

सद्भावेन बान्धवान्, प्रेममानाभ्यां प्रेम्णा संमानेन च स्त्रीभृत्यौ स्त्रीं भृत्यं परिजनवर्गम्, तथा दाक्षिण्येन औदार्येण इतरं जनं हरेत् वशीकुर्यात् । शुनीटी.

**बलवान् बुद्धिमाञ् शूरो यो हि युक्तपराक्रमी ।**
**वित्तपूर्णां महीं भुङ्क्ते स भूपो भूपतिर्भवेत् ॥**

यः भूपः बलवान् बुद्धिमान् शूरः प्रतापवान् तथा युक्तपराक्रमी युक्तं उचितं यथा तथा पराक्रमते इति

-तादृशः, भवेत् स भूपतिः समग्रपृथिवीपतिः सम्राडित्यर्थः, सन् वित्तपूर्णो महीं भुङ्क्ते। शुनीटी.

पराक्रमो बलं बुद्धिः शौर्यमेते वरा गुणाः।
एभिर्हीनोऽन्यगुणयुङ्महीभुक् सधनोऽपि च॥
महीं स्वल्पां नैव भुङ्क्ते *द्राव राज्याद्विनश्यति।
महाधनाच्च नृपतेर्विभात्यल्पोऽपि पार्थिवः॥
अव्याहताज्ञस्तेजस्वी एभिरेव गुणैर्भवेत्।
राज्ञः साधारणास्त्वन्ये न शक्ता भूप्रसाधने॥

पराक्रमः बलं बुद्धिः तथा शौर्यं एते वराः श्रेष्ठाः गुणाः। एभिर्गुणैः हीनः अन्यगुणयुक् महीभुक् राजा सधनोऽपि धनवानपि स्वल्पामपि महीं नैव भुङ्क्ते, प्रत्युत द्राव शीघ्रम्, द्रावेत्यव्ययम्, राज्यात् विनश्यति भ्रश्यति। यश्च राज्ञः एभिः पराक्रमादिभिः गुणैः उपलक्षितः अव्याहताज्ञः अस्खलितनिदेशः तथा तेजस्वी भवेत् सः अल्पोऽपि असमृद्धोऽपि पार्थिवः महाधनात् उक्तगुणहीनात् नृपतेः, अपेक्षार्थे पञ्चमी, विभाति शोभते। अन्ये साधारणाः सामान्याः जनाः भूप्रसाधने पृथिवीवशीकरणे न शक्ताः न समर्थाः। शुनीटी.

खनिः सर्वधनस्येयं देवदैत्यविमर्दिनी।
भूम्यर्थे भूमिपतयः स्वात्मानं नाशयन्त्यपि॥

इयं देवदैत्यविमर्दिनी सुरासुरविध्वंसिनी भूमिः। अस्या एव कृते बहुशः सुरासुरविमर्दो जातः इति भावः। सर्वधनस्य खनिः आकरः। भूमिपतयः राजानः भूम्यर्थे अस्या एव भूमेः कृते इत्यर्थः, स्वात्मानं स्वदेहं अपि नाशयन्ति। शुनीटी.

उपभोगाय च धनं जीवितं येन रक्षितम्।
न रक्षिता तु भूर्येन किं तस्य धनजीवितैः॥

येन उपभोगाय धनं जीवितं च रक्षितम्, किंतु भूः पृथिवी न रक्षिता, तस्य धनजीवितैः धनैः जीवनैश्च किम्? न किमपि प्रयोजनमित्यर्थः। शुनीटी.

* 'द्राव राज्यात्' इत्यत्र 'द्राक्स्वराज्यात्' इति 'द्रुतं राज्यात्' इति च पाठान्तरम्।

न यथेष्टव्ययायालं संचितं तु धनं भवेत्।
सदागमाद्विना कस्य कुबेरस्यापि नाञ्जसा॥

कस्यापि जनस्य संचितं धनं सदागमात् नित्यधनलाभं विना यथेष्टव्ययाय अलं समर्थं न भवेत्। कुबेरस्यापि अञ्जसा तत्त्वतः न। अन्यस्य किं पुनरिति भावः। यथेच्छव्यये सति संचितं धनं अचिरात् क्षीयते यादृग् व्ययः तादृशश्चेत् सर्वदा आगमो न स्यादिति फलितार्थः। शुनीटी.

पूज्यस्त्वेभिर्गुणैर्भूपो न भूपः कुलसंभवः।
न कुले पूज्यते यादृग्बलशौर्यपराक्रमैः॥

एभिः पूर्वोक्तैः पराक्रमादिभिः गुणैः उपलक्षितस्तु भूपः पूज्यः प्रशंसनीयः, कुलसंभवः राजवंशप्रसूतस्तु भूपः न पूज्यः। राजवंशप्रसूतत्वमेव न पूज्यत्वे निदानमिति भावः। बलशौर्यपराक्रमैः यादृक् पूज्यते, कुले कुलजातत्वे तादृक् न। शुनीटी.

कार्यस्थानगोपनम्

[1]कार्यस्थानानि सर्वाणि यामिकैरभितोऽनिशम्॥
नयवान् नीतिनतिवित्सिद्धशस्त्रादिकैर्वरैः।
चतुर्भिः पञ्चभिर्वापि षड्भिर्वा गोपयेत्सदा॥

नयवान् नीतिविचक्षणः, तथा नीतेर्नतिं अधोगतिं वेत्तीति तथोक्तः, अनयज्ञश्च इत्यर्थः, राजा अभितः सर्वतः सिद्धशस्त्रादिकैः शस्त्रास्त्रकुशलैरित्यर्थः, वरैः श्रेष्ठैः चतुर्भिः पञ्चभिः वा षड्भिः यामिकैः प्रहरिभिः सदा सर्वाणि कार्यस्थानानि गोपयेत् संरक्षेत्। शुनीटी.

तत्रत्यानि दैनिकानि शृणुयाल्लेखकाधिपैः।
दिने दिने यामिकानां प्रकुर्यात्परिवर्तनम्॥

तत्रत्यानि दैनिकानि प्रतिदिनसंजातानि कार्याणि लेखकाधिपैः प्रधानलेखकैः शृणुयात्। तथा दिने दिने यामिकानां प्रहरिणां परिवर्तनं विनिमयं कुर्यात्। शुनीटी.

गृहपङ्क्तिमुखे द्वारं कर्तव्यं यामिकैः सदा।
तैस्तद्वृत्तं तु शृणुयाद् गृहस्थभृतिपोषितैः॥

(१) शुनी. १।२८७–३२५.

यामिकैः प्रहरिभिः सदा गृहपङ्क्तिमुखे गृहस्थानां गृहश्रेण्यभिमुखे सदा द्वारं दौवारिकवदवस्थानमित्यर्थः, कर्तव्यम् । गृहस्थानां भृतिभिः वेतनैः गृहस्थदत्तैरित्यर्थः, पोषितः पालितैः तैः प्रहरिभिः तद्वृत्तं तेषां गृहस्थानां वृत्तं आचरितं शृणुयात् । शुनीटी.

**निर्गच्छन्ति च ये ग्रामाद्ये ग्रामं प्रविशन्ति च ।**
**तान् सुसंशोध्य यत्नेन मोचयेद्दत्तलग्नकान् ॥**

ये जनाः ग्रामात् निर्गच्छन्ति ये च ग्रामं प्रविशन्ति तान् यत्नेन सुसंशोध्य परीक्ष्य दत्तलग्नकान् दत्तः लग्नकः प्रतिभूः यैः तथाभूतान्, अथवा दत्तं लग्नकं शोधनपत्रं येभ्यः तान् कृत्वा मोचयेत् निर्गमप्रवेशौ कारयेदित्यर्थः । शुनीटी.

**प्रख्यातवृत्तशीलांस्तु ह्यविमृश्य विमोचयेत् ।**
**वीथिवीथिषु यामार्धैर्निशि पर्यटनं सदा ॥**
**कर्तव्यं यामिकैरेवं चोरजारनिवृत्तये ।**
**शासनं त्वीदृशं कार्यं राज्ञा नित्यं प्रजासु च ॥**

प्रख्यातवृत्तशीलान् सुख्यातचरित्रानित्यर्थः, तु पुनः अविमृश्य अविचार्य, अपरीक्ष्येति यावत्, विमोचयेत् । हिशब्दः अवधारणे । किंच, यामिकैः प्रहरिभिः चौराणां तस्कराणां जाराणां उपपतीनां निवृत्तये निराकरणाय निशि रजन्यां वीथिवीथिषु प्रतिपल्लीश्रेणिमध्येषु सदा यामार्धैः प्रहरमध्ये वारद्वयेनेत्यर्थः, पर्यटनं भ्रमणं कर्तव्यम् । राज्ञा प्रजासु ईदृशं उक्तप्रकारं शासनं नित्यं कर्तव्यम् । तुशब्दः अवधारणे । अवश्यमेव कर्तव्यमित्यर्थः । शुनीटी.

विशेषनियमानां शासनडिण्डिमैर्ज्ञापनं प्रजाभ्यः
राजशासनस्य चतुष्पथे लिखित्वा स्थापनं च

**दासे भृत्येऽथ भार्यायां पुत्रे शिष्येऽपि वा क्वचित् ।**
**वाग्दण्डपरुषं नैव कार्यं मद्देशसंस्थितैः ॥**
**तुलाशासनमानानां नाणकस्यापि वा क्वचित् ।**
**निर्यासानां च धातूनां सजातीनां घृतस्य च ॥**
**मधुदुग्धवसादीनां पिष्टादीनां च सर्वदा ।**
**कूटं नैव तु कार्यं स्याद्बलाच्च लिखितं जनैः ॥**
**उत्कोचग्रहणं नैव स्वामिकार्यविलोभनम् ।**
**दुर्वृत्तकारिणं चोरं जारं मद्द्वेषिणं द्विषम् ॥**
**न रक्षन्त्वप्रकाशं हि तथाऽन्यानपकारकान् ।**
**मातॄणां पितॄणां चैव पूज्यानां विदुषामपि ॥**
**नावमानं नोपहासं कुर्युः सद्वृत्तशालिनाम् ।**
**न भेदं जनयेयुर्वै नृनार्योः स्वामिभृत्ययोः ॥**
**भ्रातॄणां गुरुशिष्याणां न कुर्युः पितृपुत्रयोः ।**
**वापीकूपारामसीमाधर्मशालासुरालयान् ॥**
**मार्गान्नैव प्रबाधेयुर्हीनाङ्गविकलाङ्गकान् ।**
**द्यूतं च मद्यपानं च मृगयां शस्त्रधारणम् ॥**
**गोगजाश्वोष्ट्रमहिषीनृणां वै स्थावरस्य च ।**
**रजतस्वर्णरत्नानां मादकस्य विषस्य च ॥**
**क्रयो वा विक्रयो वाऽपि मद्यसंधानमेव च ।**
**क्रयपत्रं दानपत्रमृणनिर्णयपत्रकम् ॥**
**राजाज्ञया विना नैव जनैः कार्यं चिकित्सितम् ।**
**महापापाभिशपनं निधिग्रहणमेव च ॥**
**नवसमाजनियमं निर्णयं जातिदूषणम् ।**
**अस्वामिनाष्टिकधनसंग्रहं मन्त्रभेदनम् ॥**
**नृपदुर्गुणलोपं* तु नैव कुर्युः कदाचन ।**
**स्वधर्महानिमनृतं परदाराभिमर्शनम् ॥**
**कूटसाध्यं कूटलेख्यमप्रकाशप्रतिग्रहम् ।**
**निर्धारितकराधिक्यं स्तेयं साहसमेव च ॥**
**मनसाऽपि न कुर्वन्तु स्वामिद्रोहं तथैव च ।**
**भृत्या शुल्केन भागेन वृद्ध्या दर्पबलाच्छलात् ॥**
**आधर्षणं न कुर्वन्तु यस्य कस्यापि सर्वदा ।**
**परिमाणोन्मानमानं धार्यं राजविमुद्रितम् ॥**
**गुणसाधनसंदक्षा भवन्तु निखिला जनाः ।**
**साहसाधिकृते दद्युर्विनिगृह्याऽऽततायिनम् ॥**
**उत्सृष्टा वृषभाद्या यैस्तैस्ते धार्याः सुयन्त्रिताः ।**
**इति मच्छासनं श्रुत्वा येऽन्यथा वर्तयन्ति तान् ॥**
**विनिशिष्यामि दण्डेन महता पापकारकान् ।**
**इति प्रबोधयेन्नित्यं प्रजाः शासनडिण्डिमैः ॥**

* 'लोपम्' इत्यत्र 'लापम्' इति टीकाभिप्रेतः पाठः प्रतिभाति ।

इत आरभ्य 'शासनडिण्डिमैः' इत्यन्तं राजशासनं निर्दिशति– दास इत्यादि। राजा शासनडिण्डिमैः शासनार्थवाद्यभेदैः प्रजाः नित्यं इति वक्ष्यमाणप्रकारेण बोधयेत् ज्ञापयेत्। यथा मद्देशसंस्थितैः मदधिकारवर्तिभिः जनैः क्वचित् दासे किंकरे, भृत्ये पोष्यजने, अथवा भार्यायां पत्न्याम्, पुत्रे, अपि वा अथवा शिष्ये छात्रे वाग्दण्डपरुषं वाक्पारुष्यं दण्डपारुष्यं वा नैव कर्तव्यम्। तुलायाः शासनानि निर्णायकानि यानि मानानि परिमाणानि तेषाम्, क्वचित् कुत्रचित् वा नाणकस्य मुद्रायाः, निर्यासानां तरुलतानिर्गतरसानाम्, सजातीनां समानावयवानाम्, धातूनां स्वर्णरजतादीनाम्, घृतस्य, मधुदुग्धवसादीनाम्, पिष्टादीनां चूर्णविशेषाणां च सर्वदा कदापीत्यर्थः, कूटं कपटं बलात् बलात्कारेण जनैः लिखितं लेखनम्, भावे क्तप्रत्ययः, उत्कोचग्रहणं तथा स्वामिकार्येषु विलोभनं विशेषेण लोभप्रदर्शनं नैव कर्तव्यम्। दुर्वृत्तकारिणं दुराचारिणम्, चोरम्, जारम्, मद्द्वेषिणं मम प्रतिकूलं मन्निदेशमकुर्वाणमित्यर्थः, द्विषं शत्रुम्, ममेति शेषः, तथा अप्रकाशं गूढं यथा तथा अपकारकान् अनिष्टकारिणः अन्यान् जनान् न रक्षन्तु न गोपयन्तु। केऽपीति कर्तृपदमध्याहार्यम्। मातॄणाम्, पितॄणाम्, अन्येषां पूज्यानां गुरुजनानाम्, विदुषां पण्डितजनानाम्, तथा सद्वृत्तशालिनां सदाचाररतानां जनानां अवमानं न उपहासं च न कुर्युः। मदधिकृताः इति कर्तृपदमूह्यम्। एवमुत्तरत्र ज्ञेयम्। नृनार्योः स्त्रीपुंसयोः दंपत्योरित्यर्थः, तथा स्वामिभृत्ययोः भेदं परस्परमनोभङ्गं न जनयेयुः, किंच भ्रातॄणां गुरुशिष्याणां तथा पितृपुत्रयोः भेदं च न कुर्युः। वापी दीर्घिका, कूपः प्रसिद्धः, आरामः उपवनम्, सीमा उभयोर्विवादशान्त्यर्थं निर्णीतं स्थानम्, धर्मशाला धर्मानुशीलनार्थं स्थापितगृहम्, सुरालयः देवालयः, एतान् मार्गान् पथः, हीनाङ्गान् विकलाङ्गान् वा जनान् नैव प्रबाधेयुः नैव पीडयेयुः। राजाज्ञया विना नृपानुमतिमन्तरेण द्यूतं सपणदेवनम्, मद्यपानम्, मृगया, शस्त्रधारणम्, गवां गजानां अश्वानां उष्ट्राणां महिषीणां नृणां नराणां स्थावरस्य भूम्यादेः रजतस्य रौप्यस्य स्वर्णस्य रत्नस्य मणिभेदस्य मादकस्य मत्तताजनकद्रव्यस्य तथा विषस्य क्रयः विक्रयः वा, मद्यसंधानं सुराप्रस्तुतकरणम्, क्रयपत्रम्, दानपत्रम्, ऋणनिर्णयपत्रकं वा, चिकित्सितं चिकित्साव्यवसायः नैव कार्यम्। महापापाभिशपनं महापापकीर्तनेन अभिसंपातम्, निधेः अस्वामिकस्य धनस्य ग्रहणम्, तस्य राजलभ्यत्वादिति भावः, नवं नूतनं समाजनियमं सभाव्यवस्थाम्, निर्णयम्, अनिर्णीतस्य कस्यचित् विषयस्येति शेषः, तस्य राजनिर्णेयत्वादिति भावः, जातिदूषणं जातेः दोषकीर्तनम्, अस्वामिकस्य नाष्टिकस्य केनचित् हारितस्य वा धनस्य संग्रहम्, मन्त्रभेदनं गूढमन्त्रणाप्रकाशम्, तथा नृपस्य राज्ञः दुर्गुणा(? ण)लापं दुर्गुणालापरूपं दुष्कृतं कदाचन नैव कुर्युः। प्रजाः इति कर्तृपदमध्याहर्तव्यम्। स्वधर्महानिं निजधर्मक्षयम्, अनृतं अलीकवादम्, परदाराभिमर्शनं परस्त्रीगमनम्, कूटसाक्ष्यं कपटसाक्षित्वम्, कूटलेख्यं कपटलिखितम्, अप्रकाशप्रतिग्रहं अज्ञातेन परस्वग्रहणम्, निर्धारितस्य करस्य राजस्वस्य आधिक्यं करादायिभिः प्रजाभ्यः अतिरेकग्रहणम्, स्तेयं चौर्यम्, साहसं दस्युवृत्तिम्, तथा स्वामिद्रोहं प्रभोरनिष्टाचरणं मनसाऽपि न कुर्वन्तु। अत्रापि प्रजाः इति कर्तृपदमूहनीयम्। किंच, भृत्याः वेतनेन भरणेन वा, शुल्केन पण्यद्रव्याणां राजग्राह्यांशेन, भागेन वण्टनेन, वृद्ध्या कुसीदव्यवहारेण, दर्पात्, बलात्, छलात् व्याजाद् वा, सर्वदा कदापीत्यर्थः, यस्य कस्यापि जनस्य आकर्षणं पीडनं न कुर्वन्तु। अधिकृताः इति शेषः। परिमाणं भूम्यादीनां मानार्थं रज्ज्वादिकम्, उन्मानं घटकादिकम्, मानं आढकादिकं च राजविमुद्रितं राजचिह्नितं कृत्वा धार्यं व्यवहर्तव्यम्। निखिलाः समग्राः प्रजाः गुणसाधने गुणार्जने संदक्षाः सम्यक् निपुणाः भवन्तु। तथा साहसाधिकृते* बलात्कारादिदुष्कर्मापवादे सति आततायिनं तादृशमपराधिनं विनिगृह्य विशेषेण निगृह्य दद्युः। राजसमीपे इति शेषः। आततायिनश्च षड्विधाः यथा– 'अग्निदो

* 'साहसाधिकृते' इति पदमस्मिन् संदर्भे न सप्तम्यन्तम्, किंतु चतुर्थ्यन्तम्। जीवानन्दव्याख्यानं तु अतीव अस्वरसम्।

गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः ॥ ' इति । यैः जनैः वृषभाद्याः उत्सृष्टाः तैः ते उत्सृष्टाः वृषभाद्याः सुयन्त्रिताः सुनियमिताः धार्याः प्रतिपाल्याः इत्यर्थः । इति उक्तप्रकारं मच्छासनं मदीयनिदेशं श्रुत्वा ये जनाः अन्यथा वर्तयन्ति आचरन्ति, पापकारकान् राजाज्ञालङ्घनरूपपापकारिणः तान् महता प्रबलेन दण्डेन विनिशिष्यामि विशेषेण दण्डयिष्यामीत्यर्थः । शुनीटी.

**लिखित्वा शासनं राजा धारयीत चतुष्पथे ।**
**सदा चोद्यतदण्डः स्यादसाधुषु च शत्रुषु ॥**

राजा शासनं आदेशं लिखित्वा चतुष्पथे धारयेत् स्थापयेत् । सर्वेषां गोचरार्थमिति भावः । तथा असाधुषु दुर्जनेषु शत्रुषु च सदा उद्यतदण्डः दण्डधारी स्याच्च । शुनीटी.

मार्गसंरक्षणम्

**प्रजानां पालनं कार्यं नीतिपूर्वं नृपेण हि ।**
**मार्गसंरक्षणं कुर्यान्नृपः पान्थसुखाय च ॥**

नृपेण राज्ञा नीतिपूर्वं यथानीति प्रजानां पालनं कार्यम् । तथा नृपः पान्थानां पथिकानां सुखाय मार्गसंरक्षणं कुर्यात् । हिशब्दः अवधारणे । शुनीटी.

**पान्थप्रपीडका ये ये हन्तव्यास्ते प्रयत्नतः ॥**

ये ये जनाः पान्थानां पथिकानां प्रपीडकाः पीडनकारिणः ते प्रयत्नतः यत्नातिशयेन हन्तव्याः वध्याः । राज्ञा इति शेषः । शुनीटी.

आयस्य षोढा व्ययः

**त्रिभिरंशैर्बलं धार्यं दानमर्धांशकेन च ॥**
**अर्धांशेन प्रकृतयो ह्यर्धांशेनाधिकारिणः ।**
**अर्धांशेनाऽऽत्मभोगश्च कोशोंऽशेन स रक्ष्यते ॥**

किंच, वार्षिकस्य आयस्य त्रिभिः अंशैः तृतीयभागेनेत्यर्थः, बलं सैन्यं धार्यं रक्षितव्यम् । अर्धस्य आयार्धस्य अंशकेन चतुर्थभागेन, समुदायस्य अष्टमभागेनेत्यर्थः । दानं कर्तव्यमिति शेषः । पुनश्च अर्धांशेन पूर्ववत् समुदायस्य अष्टमभागेन प्रकृतयः प्रधानराजपुरुषाः, अपरार्धांशेन अधिकारिणः, रक्ष्याः इति शेषः। तथा अपरार्धांशेन उक्तया रीत्या समुदायाष्टमभागेन आत्मनः स्वस्य भोगश्च । संपादनीयः इति शेषः । अंशेन अवशिष्टेन भागेन स कोशः धनरक्षणस्थानं रक्ष्यते पूर्यते । संचयस्याऽऽवश्यकत्वादिति भावः । शुनीटी.

**आयस्यैवं षड्विभागैर्व्ययं कुर्यात्तु वत्सरे ।**
**सामन्तादिषु धर्मोऽयं न न्यूनस्य कदाचन ॥**

एवं उक्तप्रकारेण आयस्य षड्विभागैः षड्भिः विभागैः अंशैः, आयं षोढा विभज्येत्यर्थः, वत्सरे प्रतिवर्षं व्ययं कुर्यात् । सामन्तादिषु पूर्वोक्तेषु अयं धर्मः नियमः । अर्थव्ययस्येति भावः । व्यवस्थितः इति अध्याहार्यम् । न्यूनस्य सामन्ताद्यपेक्षया निकृष्टस्य कदाचन अयं धर्मो नेत्यर्थः । शुनीटी.

नित्योद्यमशीलता

**राज्यस्य यशसः कीर्तेर्धनस्य च गुणस्य च ।**
**प्राप्तस्य रक्षणेऽन्यस्य हरणे चोद्यमोऽपि च ॥**
**संरक्षणे संहरणे सुप्रयत्नो भवेत्सदा ।**
**शौर्यंपाण्डित्यवक्तृत्वं दातृत्वं न त्यजेत्क्वचित् ॥**
**बलं पराक्रमं नित्यमुत्थानं चापि भूमिपः ।**
**समितौ स्वात्मकार्ये वा स्वामिकार्ये तथैव च ॥**
**त्यक्त्वा प्राणभयं युध्येत्स शूरस्त्वविशङ्कितः ।**
**पक्षं संत्यज्य यत्नेन बालस्यापि सुभाषितम् ॥**
**गृह्णाति धर्मतत्त्वं च व्यवस्यति स पण्डितः ।**
**राज्ञोऽपि दुर्गुणान् वक्ति प्रत्यक्षमविशङ्कितः ॥**
**स वक्ता गुणतुल्यांस्तान्न प्रस्तौति कदाचन ।**
**अदेयं यस्य नैवास्ति भार्यापुत्रादिकं धनम् ॥**
**आत्मानमपि संदत्ते पात्रे दाता स उच्यते ।**
**अशङ्कितक्षमो येन कार्यं कर्तुं बलं हि तत् ॥**

राजा प्राप्तस्य लब्धस्य राज्यस्य, यशसः सुख्यातेः, कीर्तेः यशस्यकार्यस्य, धनस्य, गुणस्य सच्चरित्रस्य रक्षणे, तथा अन्यस्य अप्राप्तस्य, राजादेरिति शेषः, हरणे उद्यमः उद्यच्छति चेष्टते इति उद्यमः चेष्टावान् । उत्पूर्वकात् यच्छतेरच्प्रत्ययः । किंच, संरक्षणे सम्यक् रक्षणे संहरणे सम्यक् हरणे च सदा सुप्रयत्नः सम्यक् यत्नवांश्च भवेत् । भूमिपः क्वचित् कदाचिदपि शौर्यं

पाण्डित्यं वक्तृत्वं दातृत्वं वदान्यतां बलं पराक्रमं नित्यं सततं उत्थानं उद्योगं च न त्यजेत् । यः समितौ युद्धे, स्वात्मकार्ये निजदेहसंबन्धिनि कार्ये, तथा स्वामिकार्ये विषये प्राणभयं त्यक्त्वा अविशङ्कितः निःशङ्कः सन् यत्नेन युध्येत्, सः शूरः । यः पक्षं पक्षपातमित्यर्थः, संत्यज्य बालस्यापि सुभाषितं यत्नेन गृह्णाति, धर्मतत्त्वं व्यवस्यति यथायथं निरूपयति, सः पण्डितः । यः अविशङ्कितः सन् प्रत्यक्षं समक्षं राज्ञः अपि, का कथाऽन्येषामिति भावः, दुर्गुणान् दोषान् वक्ति कथयति, कदाचन तान् दुर्गुणान् गुणैः तुल्यान्, कृत्वेति शेषः, न प्रस्तौति प्रकटयति न प्रशंसतीत्यर्थः, सः वक्ता । यस्य भार्यापुत्रादिकं धनं अदेयं नैव अस्ति, यश्च आत्मानमपि पात्रे दानपात्रे संदत्ते ददाति, हरिश्चन्द्रवदिति भावः, स दाता उच्यते । येन गुणेन अशङ्कितं यथा तथा कार्यं कर्तुं क्षमः शक्तो भवति, जनः इति शेषः, तत् हि तदेव बलम् । शुनीटी.

**किंकरा इव येनान्ये नृपाद्याः स पराक्रमः ।**
**युद्धानुकूलव्यापार उत्थानमिति कीर्तितम् ॥**

येन गुणेन अन्ये नृपाद्याः राजप्रभृतयः किंकरा इव दासा इव, क्रियन्ते इति शेषः, सः पराक्रमः । सर्वेऽपि पराक्रान्ताधीना इति भावः । युद्धस्य अनुकूलः उपयोगी व्यापारः उद्यमः उत्थानमिति कीर्तितम् । विधेयप्राधान्यात् कीर्तितमिति नपुंसकत्वम् । शुनीटी.

दायादानामैकमत्यं श्रेयः, दायादानामधिकाराः

**[1]दायादानामैकमत्यं राज्ञः श्रेयस्करं परम् ॥**
**पृथग्भावो विनाशाय राज्यस्य च कुलस्य च ।**
**अतः स्वभोगसदृशान् दायादान् कारयेन्नृपः ।**
**अव्याहताज्ञः संतुष्येच्छत्रसिंहासनैरपि ॥**
**राज्यविभजनाच्छ्रेयो न भूपानां भवेत्खलु ।**
**अल्पीकृतं विभागेन राज्यं शत्रुर्जिघृक्षति ॥**

किंच, दायादानां भ्रातृप्रभृतीनां ऐकमत्यं एकमतावलम्बनं राज्ञः परं अत्यन्तं श्रेयस्करं शुभावहम्, अन्यथा राज्यहानिप्रसङ्गादिति भावः । पृथगिति । पृथग्भावः दायादानामनैक्यं राज्यस्य कुलस्य वंशस्य च विनाशाय भवति । अतः अस्मात् कारणात् नृपः अव्याहताज्ञः अप्रतिहतादेशः सन् छत्रसिंहासनैरपि राज्यशासनाधिकारैरेव संतुष्येत् । दायादान् भ्रात्रादीन् स्वभोगसदृशान् समानभोगिनः कारयेत् । तथात्वे सर्व एव संतुष्टास्तिष्ठेयुरिति भावः । राज्यविभागे दोषमाह— राज्येति । राज्यस्य विभजनात् विभागकरणात् भूपानां राज्ञां श्रेयः शुभं न खलु नैव भवेत् । खलुशब्दोऽवधारणे । यतः विभागेन अल्पीकृतं खण्डीकृतं क्षुद्रमित्यर्थः, राज्यं शत्रुः जिघृक्षति ग्रहीतुमिच्छति । अल्पस्य अनायासेनैव जेतुं शक्यत्वादिति भावः । शुनीटी.

**राज्यतुर्यांशदानेन स्थापयेत्तान् समन्ततः ।**
**चतुर्दिक्ष्वथवा देशाधिपान् कुर्यात्सदा नृपः ॥**
**गोगजाश्वोष्ट्रकोशानामाधिपत्ये नियोजयेत् ।**
**माता मातृसमा या च सा नियोज्या महानसे ॥**

नृपः तान् दायादान् राज्यस्य तुर्यांशदानेन चतुर्थांशप्रदानेन समन्ततः चतुर्दिक्षु स्थापयेत् । अथवा चतुर्दिक्षु सदा देशाधिपान् खण्डजनपदाधिपतीन् कुर्यात् । किंवा गवां गजानां अश्वानां उष्ट्राणां कोशानां धनानां च आधिपत्ये अधिकारकर्मणि नियोजयेत् नियुक्तान् कुर्यात् । किंच, माता जननी तथा या मातृसमा जननीतुल्या सा महानसे पाकक्रियाकर्तृत्वे इत्यर्थः, नियोज्या स्थाप्या । आहारदानेन शरीरपुष्टौ मातुर्यत्नातिशयादिति भावः । शुनीटी.

**सेनाधिकारे संयोज्या बान्धवाः श्यालकाः सदा ।**
**स्वदोषदर्शकाः कार्या गुरवः सुहृदश्च ये ॥**

बान्धवाः बन्धुवर्गाः श्यालकाः पत्नीभ्रातरश्च सदा सेनाधिकारे सैन्यकर्मणि संयोज्याः स्थाप्याः । ये च गुरवः गुरुजनाः सुहृदश्च ते स्वस्य आत्मनः राज्ञ इत्यर्थः, दोषदर्शकाः कार्याः । दोषदर्शनकर्मणि कस्मिन् दोषः ? किं कर्तव्यम् ? किमकर्तव्यम् ? इत्युपदेशकार्ये स्थाप्या इत्यर्थः । शुनीटी.

(१) शुनी. १।३४४–३५०.

वस्त्रालंकारपात्राणां स्त्रियो योज्याः सुदर्शने ।
स्वयं सर्वं तु विमृशेत्पर्यायेण च मुद्रयेत् ॥

स्त्रियः स्त्रीवर्गः वस्त्राणां अलंकाराणां पात्राणां भाजनद्रव्याणां च सुदर्शने सुपरीक्षणे तत्त्वावधाने च योज्याः स्थापनीयाः । स्वयं सर्वं विमृशेत् केन किं क्रियते न वेति परिदर्शनं कुर्यात् । पर्यायेण क्रमेण मुद्रयेत् सर्वं परिदृष्टं राजनामाङ्कितं कुर्यादित्यर्थः । शुनीटी.

अन्तर्वेश्मनि रात्रौ वा दिवाऽरण्ये विशोधिते ।
मन्त्रयेन्मन्त्रिभिः सार्धं भाविकृत्यं तु निर्जने ॥

रात्रौ दिवा दिवसे वा विशोधिते परिष्कृते निर्जने अन्तर्वेश्मनि गृहाभ्यन्तरे वा अरण्ये मन्त्रिभिः सार्धं भावि भविष्यत् कृत्यं मन्त्रयेत् । शुनीटी.

सुहृद्भिर्भ्रातृभिः सार्धं सभायां पुत्रबान्धवैः ।
राजकृत्यं सेनपैश्च सभ्याद्यैश्चिन्तयेत्सदा ॥

सभायां सुहृद्भिः मित्रैः भ्रातृभिः पुत्रबान्धवैः पुत्रैः बान्धवैः ज्ञातिभिः सेनपैः सेनाध्यक्षैः सभ्याद्यैश्च सदा राजकृत्यं चिन्तयेत् । एतत् प्रकाश्यविषयमिति बोध्यम् । शुनीटी.

अतिस्तवनं न श्रोतव्यम्

[1]सर्वस्मादधिको दाता शूरस्त्वं धार्मिको ह्यसि ॥
इति वाचं न शृणुयाच्छ्रावका वञ्चकास्तु ये ।
रागाल्लोभाद्भयाद्राज्ञः स्युर्मूका इव मन्त्रिणः ॥
नताननुमतान् विद्यान्नृपतिः स्वार्थसिद्धये ॥

विचार्या कार्यक्षमता गजाश्वरथपशुभृत्यादीनाम्

[2]गजाश्वरथपश्वादीन् भृत्यान् दासांस्तथैव च ॥
संभारान्सैनिकान्कार्याक्षमान् ज्ञात्वा दिने दिने ।
संरक्षयेत्प्रयत्नेन सुजीर्णान् संत्यजेत्सुधीः ॥

त्वं सर्वस्मात् अधिकः दाता वदान्यः, शूरः विक्रान्तः, धार्मिकश्च असि इति वाचम्, चाटुकाराणामिति शेषः, न शृणुयात् । ये श्रावकाः कार्यार्थिनां कार्यश्रावणकारिणः, वञ्चकाः प्रतारकाः, तथा ये मन्त्रिणः रागात् कार्यार्थिनां केषुचित् अनुरागात् स्नेहादित्यर्थः, लोभात् तूर्णींभावे धनप्राप्तिर्लोभात्, वा भयात् यथार्थकथनेन यस्य हानिः तस्मात् भीताः मूका इव स्युः भवेयुः, तान् स्वार्थसिद्धये स्वकार्यस्य राजकार्यस्य सिद्धये अनुमतान् न विद्यात् तेभ्यः राजकार्याभिमतं न गृह्णीयादित्यर्थः । सुधीः सुबुद्धिः नृपः दिने दिने गजान्, अश्वान्, रथान्, पश्वादीन्, भृत्यान् पोष्यवर्गान्, दासान् किंकरान्, संभारान् प्रयोजनद्रव्याणि, तथा सैनिकान् कार्याक्षमान् ज्ञात्वा विचार्य प्रयत्नेन संरक्षयेत् । कार्यक्षमान् कर्तुमिति शेषः । सुजीर्णान् अन्त्यताक्षमानित्यर्थः, संत्यजेत् । शुनीटी.

दूरस्थवार्ताग्रहणं भृत्यशिक्षणं च

अयुतक्रोशजां वार्तां हरेदेकदिनेन वै ।
सर्वविद्याकलाभ्यासे शिक्षयेद्भृतिपोषितान् ॥

अयुतक्रोशजां दशसहस्रक्रोशस्थितां वार्तां संवादं एकदिनेन हरेत् । वैशब्दोऽवधारणे । यथा एकेन दिनेन तथाभूता वार्ता प्राप्यते प्रेर्यते वा तथा उपायं कुर्यादित्यर्थः । तथा जनान् भृतिपोषितान् भृत्या वेतनादिना पोषितान् सर्वविद्यानां कलानां च चतुःषष्टिप्रकाराणां नृत्यगीतादीनां अभ्यासे शिक्षयेत् । शुनीटी.

समाप्तविद्यं संदृष्ट्वा तत्कार्ये तं नियोजयेत् ।
विद्याकलोत्तमान् दृष्ट्वा वत्सरे पूजयेच्च तान् ॥

तेषु समाप्तविद्यं सुशिक्षितमित्यर्थः, संदृष्ट्वा सम्यक् परीक्ष्य । संदृष्ट्वेत्यार्षः प्रयोगः । तत्कार्ये तद्विद्यानुशीलनकार्ये वा तदध्यापनकार्ये तं नियोजयेत् । तथा तान् छात्रानित्यर्थः, विद्यासु कलासु च उत्तमान् उत्कृष्टान् दृष्ट्वा परीक्ष्य वत्सरे प्रतिवत्सरमित्यर्थः, पूजयेत् पुरस्कारादिना संमानयेत् । शुनीटी.

विद्याकलावर्धनं शूरनियोजनं देशनिरीक्षणं इत्यादीनि कर्तव्यानि

विद्याकलानां वृद्धिः स्यात्तथा कुर्यान्नृपः सदा ।
पृष्ठाग्रगान् क्रूरवेषान्नतिनीतिविशारदान् ॥
सिद्धास्त्रनप्रशस्त्रांश्च भटानारान्नियोजयेत् ।
पुरे पर्यटयेन्नित्यं गजस्थो रञ्जयन् प्रजाः ॥

(१) शुनी. १।३६२-३६४.
(२) शुनी. १।३६५-३७८.

नृपः सदा यथा विद्याकलानां वृद्धिः उन्नतिः स्यात् तथा कुर्यात् । तथा क्रूरवेषान् भीषणवेषधारिणः नतिनीतिविशारदान् नतौ प्रणतौ नीतौ च विशारदान् विचक्षणान् सिद्धास्त्रान् नग्नशस्त्रान् शस्त्रधारिणः भटान् वीरान् आरात् समीपे पृष्ठाग्रगान् पश्चात्संमुखवर्तिनः नियोजयेत् रक्षेत् । स्वयं च गजस्थः गजारूढः सन् प्रजाः रञ्जयन् नित्यं पुरे नगरे पर्यटयेत् परिभ्रमेत् । स्वार्थे णिजन्तोऽयं परिपूर्वोऽटधातुर्बोध्यः । शुनीटी.

**राजयानारूढितः किं राज्ञा श्वा न समोऽपि च ।**
**शुना समो न किं राजा कविभिर्भाव्यतेऽसा ॥**

श्वा कुक्कुरः राजयानारूढितः राजयोग्यवाहनारोहणात् राज्ञा समः तुल्यः किं न ? अपितु राजतुल्य एवेत्यर्थः । तथा राजा तादृशपरिच्छदपरिजनविहीन इति शेषः, शुना कुक्कुरेण समः कविभिः विद्वद्भिः किं न विभाव्यते बुध्यते ? अपितु बुध्यत एव । सर्वथा सर्वदा अपरिच्छदपरिजनेन राज्ञा (न) भाव्यमिति भावः । शुनीटी.

**अतः स्वबान्धवैर्मित्रैः स्वसाम्यप्रापितैर्गुणैः ।**
**प्रकृतिभिर्नृपो गच्छेन्न नीचैस्तु कदाचन ॥**

अतः कारणात् नृपः स्वस्य राज्ञ इत्यर्थः, साम्येन तुल्यतया प्रापितैः जनितैः गुणैः, उपलक्षितैरित्यर्थः । उपलक्षणे तृतीया । स्वबान्धवैः, मित्रैः सुहृद्भिः, तथा प्रकृतिभिः संभ्रान्त( ? )वर्गैः सह गच्छेत् । कदाचन नीचैः नतः सन् अपरिच्छदपरिजनः सन्नित्यर्थः, न गच्छेदित्यर्थः । शुनीटी.

**मिथ्यासत्यसदाचारैर्नीचः साधुः क्रमात्स्मृतः ।**
**साधुभ्योऽतिस्वमृदुत्वं नीचाः संदर्शयन्ति हि ॥**

मिथ्यासत्यसदाचारैः क्रमात् नीचः साधुश्च स्मृतः कथितः । मिथ्याभूतसदाचारैः नीचः, सत्यभूतसदाचारैः साधुर्भवतीति भावः । नीचाः साधुभ्यः अतिशयेन स्वमृदुत्वं निजमार्दवं संदर्शयन्ति । हिशब्दः अवधारणे । शुनीटी.

**ग्रामान् पुराणि देशांश्च स्वयं संवीक्ष्य वत्सरे ।**
**अधिकारिगणैः काश्च रञ्जिताः काश्च कर्षिताः ॥**
**प्रजास्ताः साधुभूतेन व्यवहारं विचिन्तयेत् ।**
**न भृत्यपक्षपाती स्यात्प्रजापक्षं समाश्रयेत् ॥**

राजा वत्सरे प्रतिवर्षे स्वयं ग्रामान् पुराणि नगराणि देशांश्च संवीक्ष्य सम्यक् दृष्ट्वा, तथा अधिकारिगणैः राजपुरुषैः काः प्रजाः रञ्जिताः, काश्च कर्षिताः पीडिताः ? ताः संवीक्ष्य साधुभूतेन याथातथ्येन व्यवहारं विचिन्तयेत् कार्यदर्शनं कुर्यात् । भृत्यानां अधिकारिणां पक्षपाती न स्यात् । प्रजापक्षं समाश्रयेत्, यथा प्रजानामनुरञ्जनं स्यात् तथा कुर्यादित्यर्थः । शुनीटी.

**प्रजाशतेन संदिष्टं संत्यजेदधिकारिणम् ।**
**अमात्यमपि संवीक्ष्य सकृदन्यायगामिनम् ॥**
**एकान्ते दण्डयेत्स्पष्टमभ्यासापकृतं त्यजेत् ॥**

प्रजाशतेन बहुभिः प्रजाभिरित्यर्थः, संदिष्टं दत्तदोषमित्यर्थः, अधिकारिणं स्वनियुक्तं राजकर्मचारिणं संत्यजेत् । तथा अमात्यमपि सचिवमपि सकृत् एकवारं अन्यायकारिणं संवीक्ष्य एकान्ते निर्जने दण्डयेत् । प्रधानपुरुषस्य सर्वसमक्षमवमानस्य सामान्यापराधे अकर्तव्यत्वादिति भावः । अभ्यासापकृतं पुनःपुनरपराधिनं स्पष्टं प्रकाशं दण्डयेत् त्यजेच्च । शुनीटी.

अन्यायवर्तिराज्ञां राज्यहरणम्

**अन्यायवर्तिनां राज्यं सर्वस्वं च हरेन्नृपः ॥**
**जितानां विषये स्थाप्यं धर्माधिकरणं सदा ।**
**भृतिं दद्यान्निर्जितानां तच्चरित्रानुरूपतः ॥**

किंच, नृपः अन्यायवर्तिनां अपथसंस्थितानां भृत्यानां अन्येषां च राज्यं भूमिं सर्वस्वं सर्वमस्थावरं द्रव्यं च हरेत् । जितानां पराजितानां राज्ञां विषये राज्ये सदा धर्माधिकरणं विचारालयः स्थाप्यम् । तेषां भाविदुर्नयदण्डनार्थमिति भावः । तथा निर्जितानां निःशेषेण पराजितानां सर्वस्वच्युतानामित्यर्थः, तच्चरित्रानुरूपतः तेषां व्यवहारानुसारेण भृतिं भरणोपयुक्तां वृत्तिं दद्यात् । शुनीटी.

आपद्वृत्तं राज्ञः

[1]न संत्यजेच्च स्वस्थानं नीत्या शत्रुगणं जयेत् ॥

स्वस्थानं निजस्थानं न संत्यजेत् । स्थानस्थितः कापुरुषोऽपि सिंह इति भावः । तथा नीत्या नीतिकौशलेन शत्रुगणं जयेत् वशं नयेत् । शुनीटी.

**स्थानभ्रष्टा नो विभान्ति दन्ताः केशा नखा नृपाः ।**
**संश्रयेद्गिरिदुर्गाणि महापदि नृपः सदा ॥**

दन्ताः केशाः नखाः तथा नृपाः स्थानभ्रष्टाः स्थानच्युताः नो विभान्ति न राजन्ते । नृपः महापदि महत्यां दुर्निवारायामित्यर्थः, आपदि सदा गिरिदुर्गाणि पर्वतरूपदुर्गमस्थानानि संश्रयेत् । शुनीटी.

**तदाश्रयाद्दस्युवृत्त्या स्वराज्यं तु समाहरेत् ।**
**विवाहदानयज्ञार्थं विनाऽप्यष्टांशशेषितम् ॥**
**सर्वतस्तु हरेद्दस्युरसतामखिलं धनम् ।**
**नैकत्र संवसेन्नित्यं विश्वसेन्नैव कं प्रति ॥**

तस्य गिरेः आश्रयात् गिरिमाश्रित्येत्यर्थः, दस्युवृत्त्या दस्युव्यवहारेण तु पुनः स्वराज्यं समाहरेत् आददीत विवाहदानयज्ञार्थं वैवाहिकं दानीयं यज्ञीयं च धनं विना । दस्युः दस्युभूतो नृप इत्यर्थः, अष्टांशावशेषितं अष्टमांशावशिष्टं असतां असाधूनां अखिलं समग्रं धनं सर्वतः सर्वैः प्रकारैः हरेत् । अष्टमांशस्तु तेषां वृत्त्यर्थं रक्षणीय इति भावः । नित्यं एकत्र न संवसेत् । तथा कं प्रति नैव विश्वसेत् । शुनीटी.

**सदैव सावधानः स्यात्प्राणनाशं न चिन्तयेत् ।**
**क्रूरकर्मा सदोद्युक्तो निर्घृणो दस्युकर्मसु ॥**
**विमुखः परदारेषु कुलकन्याप्रदूषणे ।**
**पुत्रवत्पालिता भृत्याः समये शत्रुतां गताः ॥**

सदैव सावधानः अवहितः, क्रूरकर्मा निष्ठुरव्यापारः, सदा उद्युक्तः, दस्युकर्मसु निर्घृणः, किंतु परदारेषु परस्त्रीषु तथा कुलकन्यानां कुलकुमारीणां प्रदूषणे बलात्कारादिकर्मणि विमुखः पराङ्मुखः भवेत् । तथा ये पुत्रवत् पालिताः भृत्याः समये दुःसमये शत्रुतां गताः *तेषां प्राणनाशं न चिन्तयेत् अकर्तव्यतया न भावयेत् । तेषां प्राणनाशोऽपि करणीय इति भावः । शुनीटी.

**न दोषः स्यात्प्रयत्नस्य भागधेयं स्वयं हि तत् ।**
**दृष्ट्वा सुविफलं कर्म तपस्तप्त्वा दिवं व्रजेत् ॥**

प्रयत्नस्य उद्योगस्य न दोषः स्यात् । विफलत्वे इति भावः । हि यतः तत् स्वयं भागधेयं भाग्यमित्यर्थः । भाग्यवशात् उद्योगे विफले को दोष इति भावः । कर्म उद्योगमित्यर्थः, सुविफलं सर्वथा विफलं दृष्ट्वा शेषे तपस्तप्त्वा दिवं स्वर्गं व्रजेत् । शुनीटी.

**उक्तं समासतो राजकृत्यं मिश्रेऽधिकं ब्रुवे ।**
**अध्यायः प्रथमः प्रोक्तो राजकार्यनिरूपकः ॥**

समासतः संक्षेपेण राजकृत्यं उक्तम् । मिश्रे अस्य ग्रन्थस्य मिश्राख्ये चतुर्थाध्यायप्रकरणे अधिकं अस्य विस्तारं ब्रुवे कथयामि । राजकार्यनिरूपकः राजकार्यप्रदर्शकः प्रथमः अध्यायः प्रोक्तः कथितः । शुनीटी.

दायादसंबद्धकर्तव्याकर्तव्यचिन्ता

[1]सुदुर्वृत्तास्तु दायादा हन्तव्यास्ते प्रयत्नतः ।
**व्याघ्रादिभिः शत्रुभिर्वा छलै राष्ट्रविवृद्धये ॥**

दायादाः अपरे ज्ञातयः सुदुर्वृत्ताश्चेत् ते प्रयत्नतः व्याघ्रादिभिः शत्रुभिर्वा छलैः कौशलैः राष्ट्रविवृद्धये राज्योन्नतये हन्तव्याः वध्याः । शुनीटी.

**अतोऽन्यथा विनाशाय प्रजाया भूपतेश्च ते ।**
**तोषयेयुर्नृपं नित्यं दयादाः स्वगुणैः परैः ॥**
**भ्रष्टा भवन्त्यन्यथा ते स्वभागाज्जीवितादपि ॥**

अतः अस्मात् वधरूपादुपायात् अन्यथा ते दायादाः प्रजायाः भूपतेश्च विनाशाय, भवन्तीति शेषः । ततः दायादाः परैः केवलैः श्रेष्ठैर्वा स्वगुणैः निजगुणैः

(१) शुनी. १।३८०–३८७.

* 'प्राणनाशं न चिन्तयेत्' इत्यस्य इमं व्यवहितान्वयं प्रकल्प्य व्याख्यानं तु अतीव असमीचीनम् । 'पुत्रवत् पालिताः' इत्यादिश्लोकार्धस्य तु 'न दोषः स्यात्' इत्याद्युत्तरश्लोकेनान्वय एव सामञ्जस्यमातनोति । 'प्राणनाशं न चिन्तयेत्' इति तु स्वतन्त्रं वाक्यम् ।

(१) शुनी. २।२८–३०.

नृपं नित्यं सततं तोषयेयुः । अन्यथा ते दायादाः स्वभागात् स्वप्राप्यांशात् जीविताद‍पि जीवनाच्च भ्रष्टाः भवन्ति । शुनीटी.

गुणिजनपोषणम्

[1]तपस्विनो दानशीलाः श्रुतिस्मृतिविशारदाः ।
पौराणिकाः शास्त्रविदो दैवज्ञा मान्त्रिकाश्च ये ॥
आयुर्वेदविदः कर्मकाण्डज्ञास्तान्त्रिकाश्च ये ।
ये चान्ये गुणिनः श्रेष्ठा बुद्धिमन्तो जितेन्द्रियाः ॥
तान् सर्वान् पोषयेद् भृत्या दानैर्मानैः सुपूजितान् ।
हीयते चान्यथा राजा ह्यकीर्तिं चापि विन्दति ॥

ये जनाः तपस्विनः तपोनिष्ठाः, दानशीलाः वदान्याः, श्रुतिस्मृतिविशारदाः वैदिकाः स्मार्ताश्च, पौराणिकाः पुरावृत्तविदः, शास्त्रविदः शास्त्रज्ञानरताः, दैवज्ञाः गणकाः, ये च मान्त्रिकाः सर्पगारुडादिमन्त्रज्ञाः, आयुर्वेदविदः वैद्यकशास्त्रज्ञाः, कर्मकाण्डज्ञाः वेदस्मृतिविहित-कर्मानुष्ठानविदः, तथा तान्त्रिकाः शैवधर्मशास्त्रपारगाः, ये च अन्ये अपरे गुणिनः गुणवन्तः, श्रेष्ठाः महान्तः, बुद्धिमन्तः प्रज्ञाशालिनः, तथा जितेन्द्रियाः लोभमोहादिभिरनभिभूताः, तान् सर्वान् दानैः मानैश्च सुपूजितान् कृत्वेति शेषः, भृत्या मासिकादिवृत्तिविधानेन पोषयेत् पालयेत् । अन्यथा एतेषामपालने राजा हीयते राज्यात् भ्रश्यति, अकीर्तिं अयशः विन्दति लभते च । हिशब्दः अवधारणे । शुनीटी.

युगप्रवर्तको राजा

[2]युगप्रवर्तको राजा धर्माधर्मप्रशिक्षणात् ।
युगानां न प्रजानां न दोषः किंतु नृपस्य हि ॥

राजा धर्मस्य अधर्मस्य च प्रशिक्षणात् शिक्षादानात् युगप्रवर्तकः सत्यादियुगानां प्रवर्तयिता, अतः युगानां न, प्रजानां च न दोषः, किंतु नृपस्य हि राज्ञ एव दोष इत्यर्थः । शुनीटी.

---

(१) शुनी. २।१२२-१२४.
(२) शुनी. ४।१।६०-६९.

प्रसन्नो येन नृपतिस्तदाचरति वै जनः ।
लोभाद्भयाच्च किं तेन शिक्षितं नाऽऽचरेत्कथम् ॥

राजा येन कर्मणा प्रसन्नः प्रीतः भवति, जनः प्रजा लोभात् भयाच्च तत् आचरति वै करोत्येव । तेन राज्ञा शिक्षितं उपदिष्टं किं किमपीत्यर्थः, कथं न आचरेत् ? अपि तु आचरेदेवेत्यर्थः । शुनीटी.

सुपुण्यो यत्र नृपतिर्धर्मिष्ठास्तत्र हि प्रजाः ।
महापापी यत्र राजा तत्राधर्मपरो जनः ॥

यत्र नृपतिः सुपुण्यः धार्मिकः तत्र प्रजाः धर्मिष्ठाः हि । यत्र तु राजा महापापी तत्र जनः अधर्मपरः अधार्मिकः । शुनीटी.

न कालवर्षी पर्जन्यस्तत्र भूर्न महाफला ।
जायते राष्ट्रह्रासश्च शत्रुवृद्धिर्धनक्षयः ॥

तत्र अधार्मिके राजनि सतीत्यर्थः, पर्जन्यः मेघः न कालवर्षी यथासमये न वर्षतीत्यर्थः । भूः पृथ्वी न महाफला । भवतीति शेषः । राष्ट्रस्य राज्यस्य ह्रासः शत्रुवृद्धिः धनक्षयश्च जायते । शुनीटी.

सुराप्यपि वरो राजा न स्त्रैणो नातिकोपवान् ।
लोकांश्चण्डस्तापयति स्त्रैणो वर्णान् विलुम्पति ॥
मद्यप्येकश्च भ्रष्टः स्याद् बुद्ध्या च व्यवहारतः ।
कामक्रोधौ मद्यतमौ सर्वमद्याधिकौ यतः ॥

राजा सुरापी सुरापायी अपि वरः प्रशस्यः, स्त्रैणः स्त्रीपरतन्त्रः न, अतिकोपवान् च न वर इति शेषः । तथाहि चण्डः अतिकोपनः लोकान् प्रजाः तापयति नितरां पीडयति । स्त्रैणः स्त्रीकामुकः वर्णान् ब्राह्मणादीन् विलुम्पति व्यभिचारेण संकरजात्युत्पादनेन दूषयतीत्यर्थः । मद्यपी सुरापायी एकश्च एक एव बुद्ध्या व्यवहारतश्च भ्रष्टः स्यात्, प्रजाः न भ्रंशयेदिति भावः । कामक्रोधौ मद्यतमौ मद्यादधिकौ, यतः तौ सर्वेषां मद्यानां मादकानां वस्तूनां अधिकौ श्रेष्ठौ । शुनीटी.

धनप्राणहरो राजा प्रजायाश्चातिलोभतः ।
तस्मादेतत्त्रयं त्यक्त्वा दण्डधारी भवेन्नृपः ॥

राजा अतिलोभतः लोभातिशयात् प्रजायाः, जातावेकं वचनम्, प्रजानामित्यर्थः, धनप्राणहरः भवति ।

तस्मात् नृपः एतेषां कामक्रोधलोभानां त्रयं त्यक्त्वा दण्डधारी दमनकारी भवेत् । शुनीटी.

**अन्तर्मृदुर्बहिः क्रूरो भूत्वा स्वां दण्डयेत्प्रजाम् ।**
**अत्युग्रदण्डकल्पः स्यात्स्वभावा हितकारिणः ॥**

राजा अन्तर्मृदुः कोमलान्तःकरणः किंतु बहिःक्रूरः बाह्यकर्कशः भूत्वा स्वां प्रजां दण्डयेत् शासयेत् । अत्युग्रदण्डकल्पः बाह्ये अतितीक्ष्णदण्डसदृशः स्यात् । किंतु स्वभावाः हितकारिणः, भवेयुरिति शेषः । शुनीटी.

**राष्ट्रं कर्णेजपैर्नित्यं हन्यते च स्वभावतः ।**
**अतो नृपः सूचितोऽपि विमृशेत्कार्यमादरात् ॥**

कर्णेजपैः जनैः स्वभावतः नित्यं राष्ट्रं राज्यं हन्यते परस्परमनोभङ्गजननेन उच्छेत्तुं चेष्ट्यते । अतः नृपः सूचितः तेषां परामर्शेन दूषितोऽपि आदरात् यत्नतः कार्यं विमृशेत् विचार्य कुर्यादित्यर्थः । शुनीटी.

**आत्मनश्च प्रजायाश्च दोषदर्श्युत्तमो नृपः ।**
**विनियच्छति चाऽऽत्मानमादौ भृत्यांस्ततः प्रजाः ॥**

उत्तमः नृपः आत्मनः स्वस्य प्रजायाश्च दोषदर्शी भवति । अतः राजा आदौ अग्रतः आत्मानं ततः भृत्यान् राजपुरुषान् ततश्च प्रजाः विनियच्छति विशेषेण नियमयतीत्यर्थः । शुनीटी.

[1]**स्वस्वधर्मपरो लोको यस्य राष्ट्रे प्रवर्तते ।**
**धर्मनीतिपरो राजा चिरं कीर्तिं स चाश्नुते ॥**

यस्य राष्ट्रे लोकः स्वस्वधर्मपरः निजनिजानुष्ठान-तत्परः प्रवर्तते चलति सः राजा धर्मनीतिपरः, भवतीति शेषः । चिरं कीर्तिं च अश्नुते लभते । शुनीटी.

**भूमौ यावद्यस्य कीर्तिस्तावत्स्वर्गे स तिष्ठति ॥**

यस्य भूमौ पृथिव्यां यावत् यावत्कालं कीर्तिः, तिष्ठतीति शेषः, सः तावत् तावत्कालं स्वर्गे तिष्ठति । शुनीटी.

( १ ) शुनी. ४।४।९-११.

**अकीर्तिरेव नरको नान्योऽस्ति नरको दिवि ।**
**नरदेहाद्विना त्वन्यो देहो नरक एव सः ॥**

अकीर्तिः अयशः एव नरकः दुर्गतिकारणम् । दिवि परलोके अन्यः अपरः अकीर्तिभिन्न इत्यर्थः, नरकः न अस्ति । नरदेहात् विना अन्यो यो देहः सः नरक एव । शुनीटी.

**महत्पापफलं विद्यादाधिव्याधिस्वरूपकम् ।**
**स्वयं धर्मपरो भूत्वा धर्मे संस्थापयेत्प्रजाः ।**
**प्रमाणभूतं धर्मिष्ठमुपसर्पन्त्यतः प्रजाः ॥**

आधिः मानसी व्यथा, व्याधिः शरीरपीडा, तयोः स्वरूपकं तत्तद्रूपमित्यर्थः, महत् पापस्य फलं विद्यात् । अतः राजा स्वयं धर्मपरः धर्मनिष्ठः भूत्वा प्रजाः धर्मे संस्थापयेत् । अतः धर्मसंस्थापनात् प्रजाः प्रमाणभूतं निदर्शनस्वरूपं धर्मिष्ठं राजानं उपसर्पन्ति अनुवर्तन्ते । शुनीटी.

**देशधर्मा जातिधर्माः कुलधर्माः सनातनाः ।**
**मुनिप्रोक्ताश्च ये धर्माः प्राचीना नूतनाश्च ये ॥**
**ते राष्ट्रगुप्त्यै संधार्या ज्ञात्वा यत्नेन सन्नृपैः ।**
**धर्मसंस्थापनाद्राजा श्रियं कीर्तिं प्रविन्दति ॥**

सनातनाः चिरं प्रचलिताः ये देशधर्माः, जाति-धर्माः, कुलधर्माः, तथा मुनिभिः प्रोक्ताः कथिताः प्राचीनाः नूतनाश्च ये धर्माः नियमाः, सन्नृपैः साधुभिः राजभिः ते धर्माः ज्ञात्वा राष्ट्रस्य गुप्त्यै रक्षायै यत्नेन संधार्याः पालनीयाः । राजा धर्मसंस्थापनात् तत्तद्धर्म-प्रतिपालनात् श्रियं लक्ष्मीं कीर्तिं च प्रविन्दति प्रकर्षेण लभते । शुनीटी.

[1]**स्त्रीविप्राभ्युपपत्तौ च गोविनाशेऽपि ब्राह्मणैः ।**
**प्राप्ते युद्धे क्वचिन्नैव भवेदपि पराङ्मुखः ॥**

स्त्रीणां विप्राणां च अभ्युपपत्तौ अनुग्रहार्थम्, तथा ब्राह्मणैः सह गोविनाशे गोब्राह्मणविनाशे इत्यर्थः, उपस्थिते इत्यर्थः, प्राप्ते युद्धे आपतिते संग्रामे क्वचित् कदाचित् पराङ्मुखः नैव भवेत् । शुनीटी.

( १ ) शुनी. ४।७।२००-२०२.

युद्धमुत्सृज्य यो याति स देवैर्हन्यते भृशम् ॥

यः युद्धं उत्सृज्य याति पलायते सः देवैः भृशं अत्यर्थं हन्यते । शुनीटी.

समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ।
न निवर्तेत सङ्ग्रामात्क्षत्रधर्ममनुस्मरन् ॥

प्रजाः पालयन् राजा समैः समानैः उत्तमैः उत्कृष्टैः वा अधमैः शत्रुभिः आहूतः सन् क्षत्रधर्मं अनुस्मरन् सङ्ग्रामात् न निवर्तेत । शुनीटी.

राजानं चावियोद्धारं ब्राह्मणं चाप्रवासिनम् ।
भूमिरेतौ निर्गिलति सर्पो बिलशयानिव ॥

सर्पः बिलशयान् गर्ते शयानानिव भूमिः अवियोद्धारं युद्धविमुखं राजानं अप्रवासिनं ब्राह्मणं च एतौ निर्गिलति नाशयतीत्यर्थः । शुनीटी.

[1]मित्रमापद्गतं दृष्ट्वा सहायं न करोति यः ।
अकीर्तिं लभते सोऽत्र मृतो नरकमृच्छति ॥

यः मित्रं आपद्गतं विपन्नं दृष्ट्वा सहायं साहाय्यं न करोति सः अत्र इहलोके अकीर्तिं लभते मृतश्च नरकं आप्नोति । शुनीटी.

विश्रम्भाच्छरणं प्राप्तं यः संत्यजति दुर्मतिः ।
स याति नरके घोरे यावदिन्द्राश्चतुर्दश ॥

यः दुर्मतिः विश्रम्भात् विश्वासात् शरणं प्राप्तं जनं संत्यजति सः यावत् चतुर्दश इन्द्राः, तिष्ठन्तीति शेषः, तावत्कालमित्यर्थः, घोरे नरके याति गच्छति । शुनीटी.

[2]सत्कृतान्नियमान्सर्वान् यदा संपालयेन्नृपः ।
तदैव नृपतिः पूज्यो भवेत्सर्वेषु नान्यथा ॥

नृपः यदा सत्कृतान् शोभनान् सर्वान् नियमान् संपालयेत्, तदैव नृपतिः सर्वेषु जगत्सु पूज्यः भवेत्, अन्यथा न । शुनीटी.

यस्यास्ति नियतं कर्म नियतः सद्ग्रहो यदि ।
नियतोऽसद्ग्रहत्यागो नृपत्वं सोऽश्नुते चिरम् ॥

(१) शुनी. ४।७।३३०–३३१.
(२) शुनी. ४।७।४१०–४१२.

यस्य नियतं सततं कर्म कार्याभिनिवेशः, तथा यदि नियतः सत्सु विषयेषु ग्रहः आदरः, तथा असत्सु विषयेषु ग्रहत्यागः अनादरः नियतः, सः चिरं नृपत्वं राजत्वं अश्नुते प्राप्नोति । शुनीटी.

यस्यानियमितं कर्म साधुत्वं वचनं त्वपि ।
सदैव कुटिलः सख्युः स्वपदाद्द्राग्विनश्यति ॥

यस्य कर्म साधुत्वं तथा वचनं अनियमितं अस्थिरम्, सदैव कुटिलः सः सख्युः सुहृदः स्वपदाच्च द्राक् झटिति विनश्यति भ्रश्यति । तस्य बन्धुविच्छेदो राज्यनाशश्च स्यादिति भावः । शुनीटी.

[1]हीनराज्यो रिपुभृत्यो न सैन्यं धारयेद्बहु ।
कोशवृद्धिं सदा कुर्यात्स्वपुत्राद्यभिवृद्धये ॥

हीनं राज्यं यस्य सः, तथा रिपुः शत्रुः भृत्यः यस्य तादृशः नृपः बहु सैन्यं न धारयेत् । स्वस्य आत्मनः पुत्रादीनां अभिवृद्धये अभ्युदयाय सदा कोशवृद्धिं धनवृद्धिं कुर्यात् । शुनीटी.

क्षुधया निद्रया सर्वमशनं शयनं शुभम् ।
भवेद्यथा तथा कुर्यादन्यथाऽऽशु दरिद्रकृत् ॥

सर्वं अशनं भोजनं शयनं च यथा शुभं भवेत् तथा कुर्यात् । अन्यथा कर्तुः क्षुधया निद्रया च आशु शीघ्रं दरिद्रकृत् दारिद्र्यजनकं भवेदित्यर्थः । शुनीटी.

दिशाऽनया व्ययं कुर्यान्नृपो नित्यं न चान्यथा ।
धर्मनीतिविहीना ये दुर्बला अपि वै नृपाः ।
सुधर्मबलयुग्राज्ञा दण्ड्यास्ते चौरवत्सदा ॥

नृपः अनया दिशा रीत्या नित्यं व्ययं कुर्यात्, अन्यथा न । ये नृपाः दुर्बलाः तथा धर्मेण नीत्या च विहीनाः ते सुधर्मबलयुजा राज्ञा सदा चौरवत् दण्ड्याः । अपिवैशब्दः पादपूरणार्थः । शुनीटी.

सर्वधर्मावनान्नीचनृपोऽपि श्रेष्ठतामियात् ।
उत्तमोऽपि नृपो धर्मनाशनान्नीचतामियात् ॥

नीचनृपोऽपि सर्वेषां धर्माणां अवनात् रक्षणात् श्रेष्ठतां इयात् प्राप्नुयात् । तथा उत्तमोऽपि नृपः धर्मनाशनात् नीचतां इयात् । शुनीटी.

(१) शुनी. ४।७।४१८–४२२.

धर्माधर्मप्रवृत्तौ तु नृप एव हि कारणम् ।
स हि श्रेष्ठतमो लोके नृपत्वं यः समाप्नुयात् ॥

नृप एव धर्मस्य अधर्मस्य च प्रवृत्तौ कारणं हि । यः नृपत्वं समाप्नुयात् लोके जगति स हि स एव श्रेष्ठतमः । शुनीटी.

अन्यनृपेऽविश्वासः कार्यः

[1]विश्वस्तान्यनृपस्यापि न विश्वासं समाप्नुयात् ।
नैकान्ते न गृहे तस्य गच्छेदल्पसहायवान् ॥

विश्वस्तस्यापि अन्यनृपस्य प्रतिकूलनृपतेः विश्वासं न समाप्नुयात् । शत्रौ नृपे नव विश्वसेदित्यर्थः । तस्य प्रतिनृपस्य गृहे वा एकान्ते निर्जने देशे अल्पसहायवान् न गच्छेत् । शुनीटी.

स्ववेशरूपसदृशान् निकटे रक्षयेत्सदा ।
विशिष्टचिह्नगुप्तः स्यात्समयेऽन्यादृशो भवेत् ॥

सदा निकटे स्वस्य आत्मनः वेशेन परिच्छदेन रूपेण च सदृशान् जनान् रक्षेत् । तथात्वे व्यक्तिग्रहो न स्यादिति भावः । स्वयं विशिष्टं अन्यविलक्षणं चिह्नं राजचिह्नमित्यर्थः गुप्तं यस्य तथाभूतः स्यात् । तथा समये समयविशेषे इत्यर्थः, अन्यादृशः सामान्यजनसदृशः भवेत् । शुनीटी.

स्त्रीपुत्रभृत्यादिषु सावधानता

[2]क्षणं नासावधानः स्याद्भृत्यस्त्रीपुत्रशत्रुषु ।
जीवन्सन्स्वामिता पुत्रे न देयाऽप्यखिला कचित् ॥
स्वभावसद्गुणे यस्मान्महानर्थमदावहा ।
विष्ण्वाद्यैरपि नो दत्ता स्वपुत्रे स्वाधिकारता ॥

जीवन् शक्त इत्यर्थः, सन् क्षणमपि भृत्यस्त्रीपुत्रशत्रुषु भृत्येषु स्त्रीषु पुत्रेषु शत्रुषु च असावधानः न स्यात् । किंच, स्वभावसद्गुणेऽपि पुत्रे कचित् कदाचित् अखिला संपूर्णा स्वामिता प्रभुता न देया । यस्मात् सा महानर्थमदावहा महान्तं अनर्थं मदं च आवहतीति तथोक्ता महानर्थकारिणी मदवर्धनी च । तस्मात् विष्ण्वाद्यैः विष्णुप्रभृतिभिरपि स्वपुत्रे स्वाधिकारता स्वस्य अधिकारः तस्य भावः स्वस्वाम्यमित्यर्थः, नो दत्ता । शुनीटी.

पुत्रे राज्यभारन्यासकालः

स्वायुषः स्वल्पशेषे तु सत्पुत्रे स्वाम्यमादिशेत् ।
नाराजकं क्षणमपि राष्ट्रं धर्तुं क्षमाः किल ।
युवराजादयः स्वाम्यलोभचापलगौरवात् ॥

स्वस्य आत्मनः आयुषः जीवनकालस्य स्वल्पशेषे अत्यल्पावशेषे सति सत्पुत्रे सुपुत्रे स्वाम्यं आदिशेत् अर्पयेत् । युवराजादयः स्वाम्यलोभेन यद्यत् चापलं चाञ्चल्यं तस्य गौरवात् आतिशय्यात् अराजकं राजरहितं राष्ट्रं क्षणमपि धर्तुं ग्रहीतुं शासितुमित्यर्थः, न किल नैव क्षमाः शक्ताः भवन्ति । शुनीटी.

राजपुत्रस्य राज्ञः पूर्वामात्येषु पुत्रवद्वृत्तिः

प्राप्योत्तमं पदं पुत्रः सुनीत्या पालयन् प्रजाः ।
पूर्वामात्येषु पितृवद्गौरवं संप्रधारयेत् ॥

पुत्रः उत्तमं पदं राजपदं प्राप्य सुनीत्या प्रजाः पालयन् पूर्वामात्येषु पुरातनेषु अमात्येषु पितृवत् गौरवं गुरुभावं भक्तिमित्यर्थः, संप्रधारयेत् सम्यक् कुर्यादित्यर्थः । शुनीटी.

तस्यापि शासनं तैस्तु प्रधार्यं पूर्वतोऽधिकम् ।
युक्तं चेदन्यथा कार्यं निषेध्यं काललम्बनैः ॥

तैः पूर्वैः अमात्यैः तस्य राजपुत्रस्यापि शासनं चेत् यदि युक्तं तदा पूर्वतः पूर्वस्मात् अधिकं यथा तथा प्रधार्यं प्रतिपालनीयम् । अन्यथा अयुक्तत्वे इत्यर्थः, काललम्बनैः कालाश्रयिभिः सद्भिः समयान्तरे एतत्प्रतिपालनीयमिति वादिभिरित्यर्थः, कार्यं राजशासनीयं कर्म निषेध्यं निवारणीयम् । शुनीटी.

तदनीत्या न वर्तेयुस्तेन साकं धनाशया ।
वर्तन्ति यदनीत्या ते तेन साकं पतन्त्यरात् ॥

धनाशया अर्थलोभेन तेन नवेन राज्ञा साकं सह तस्य अनीत्या दुर्नयेन न वर्तेयुः न तिष्ठेयुः । ते इति शेषः । यत् यदि ते अनीत्या वर्तन्ति तदा तेन राज्ञा साकं सह अरात् शीघ्रं पतन्ति । शुनीटी.

कुलभक्तांश्च यो द्वेष्टि नवीनं भजते जनम् ।
स गच्छेच्छत्रुसाद्राजा धनप्राणैर्वियुज्यते ॥

---

( १ ) शुनी. ५।१३–१४.
( २ ) शुनी. ५।१७–४८.

यः कुलभक्तान् कुलक्रमेण अनुरक्तान् भृत्यान् द्वेष्टि, नवीनं जनं भजते च, स राजा शत्रुसात् गच्छेत् शत्रोरधीनो भवेत् धनप्राणैः वियुज्यते च। शुनीटी.

**गुणी सुनीतिर्नव्योऽपि परिपाल्यस्तु पूर्ववत्।**
**प्राचीनैः सह तं कार्ये ह्यनुभूय नियोजयेत्॥**

नव्योऽपि नवीनः अपि जनः गुणी गुणवान् तथा सुनीतिः सुनयसंपन्नश्चेत् पूर्ववत् प्राचीनवत् परिपाल्यस्तु प्रतिपालनीय एव। अनुभूय तच्चरित्रं परीक्ष्य इत्यर्थः, प्राचीनैः पुरातनैः भृत्यैः सह कार्ये नियोजयेत्। शुनीटी.

साधवो मायाविनश्च भृत्याः

**अतिमृदुस्तुतिनतिसेवादानप्रियोक्तिभिः।**
**मायिकैः सेव्यते यावत्कार्यं नित्यं तु साधुभिः॥**

**प्रत्यक्षं वा परोक्षं वा सत्यवाग्भिर्नृपोऽपि च।**
**याथार्थ्यतस्तयोरीदृगन्तरं खभुवोर्यथा॥**

मायिकैः कापटिकैः जनैः यावत् कार्यं आत्मन इति शेषः, तावत् अतिमृदुभिः स्तुतिभिः नतिभिः सेवाभिः दानैः प्रियोक्तिभिः प्रियवचनैश्च नृपः सेव्यते। सत्यवाग्भिः सत्यवादिभिः साधुभिस्तु नित्यं सततं आत्मकार्याभावेऽपीत्यर्थः, प्रत्यक्षं वा परोक्षं वा याथार्थ्यतः तत्त्वतः सेव्यते इत्यर्थः। खभुवोर्यथा आकाशभूम्योरिव तयोः मायिकसाध्वोः ईदृक् अन्तरं प्रभेदः। शुनीटी.

**मायाया जनका धूर्ता जारचोरबहुश्रुताः।**
**प्रतिष्ठितो यथा धूर्तो न तथा तु बहुश्रुताः॥**

जारः उपपतिः, चोरः तस्करः, बहुश्रुतः बहुशास्त्रज्ञः, ते मायायाः कापट्यस्य जनकाः धूर्ताः। यथा धूर्तः प्रतिष्ठितः प्रतिपन्नः तथा बहुश्रुता न। शुनीटी.

**परस्वहरणे लोके जारचोरौ तु निन्दितौ।**
**तावप्रत्यक्षं हरतः प्रत्यक्षं धूर्त एव हि॥**

लोके जगति जारचोरौ परस्वस्य परधनस्य हरणे विषये निन्दितौ। किंतु तौ अप्रत्यक्षं यथा तथा हरतः परस्वमिति भावः। धूर्तस्तु प्रत्यक्षमेव हरतीत्यर्थः। शुनीटी.

**हितं त्वहितवच्चान्ते अहितं हितवत्सदा।**
**धूर्ताः संदर्शयित्वाऽज्ञं स्वकार्यं साधयन्ति ते॥**

ते धूर्ता जनाः अज्ञं जनं हितं अहितवत् तथा अहितं हितवत् दर्शयित्वा अन्ते अनन्तरं सदा स्वकार्यं साधयन्ति। शुनीटी.

**विश्रम्भयित्वा चात्यर्थं मायया घातयन्ति ते॥**

ते धूर्ताः अत्यर्थं विश्रम्भयित्वा विश्वास्य पश्चात् मायया छद्मना घातयन्ति। शुनीटी.

मायया वर्तनम्

**यस्य चाप्रियमन्विच्छेत्तस्य कुर्यात्सदा प्रियम्।**
**व्याधो मृगवधं कर्तुं गीतं गायति सुस्वरम्॥**

यस्य अप्रियं अन्विच्छेत् अभिलषेत् सदा तस्य प्रियं कुर्यात्। व्याधः मृगवधं कर्तुं सुस्वरं गीतं गायति, सुमधुरगीतेन मृगं आनन्दयतीत्यर्थः। शुनीटी.

**मायां विना महाद्रव्यं द्राङ् न संपाद्यते जनैः।**
**विना परस्वहरणान्न कश्चित्स्यान्महाधनः।**
**मायया तु विना तद्धि न साध्यं स्याद्यथेप्सितम्॥**

जनैः मायां कापट्यं विना द्राक् झटिति महाद्रव्यं बहुधनं न संपाद्यते न संचीयते। परस्वहरणात् विना कश्चित् जनः महाधनः न स्यात्। मायया विना यथा यत् ईप्सितं तत् न हि नैव साध्यम्। शुनीटी.

परस्वहरणविचारः

**स्वधर्मं परमं मत्वा परस्वहरणं नृपाः।**
**परस्परं महायुद्धं कृत्वा प्राणांस्त्यजन्त्यपि॥**

नृपाः परस्वहरणं परधनहरणं परमं उत्कृष्टं स्वधर्मं मत्वा परस्परं महायुद्धं कृत्वा प्राणानपि त्यजन्ति। शुनीटी.

**राज्ञो यदि न पापं स्याद्दस्यूनामपि नो भवेत्।**
**सर्वं पापं धर्मरूपं स्थितमाश्रयभेदतः॥**

यदि राज्ञः पापं न स्यात् तदा दस्यूनामपि पापं नो स्यात्। आश्रयस्य भेदतः भेदात् सर्वं पापं धर्मरूपं

स्थितम् । दस्युषु परस्वहरणं पापम्, परं राजनि धर्म एवेति आश्रयभेद इति भावः । शुनीटी.

धर्मार्थकाममोक्षाः

बहुभिर्यः स्तुतो धर्मो निन्दितोऽधर्म एव सः ।
धर्मतत्त्वं हि गहनं ज्ञातुं केनापि नोचितम् ॥

यः व्यापारः बहुभिः स्तुतः प्रशंसितः सः धर्म एव । यस्तु बहुभिः निन्दितः सः अधर्म एव । धर्मतत्त्वं गहनं दुर्ज्ञेयमित्यर्थः । हिशब्दः अवधारणार्थः । केनापि ज्ञातुं न उचितं न शक्तमित्यर्थः । शुनीटी.

अतिदानतपःसत्ययोगो दारिद्र्यकृत्त्विह ।
धर्मार्थौ यत्र न स्यातां तद्वा कामं निरर्थकम् ॥

इह जगति अतिदानं तपः सत्ययोगश्च दारिद्र्यकृत् । अतिदानेन दारिद्र्यं प्रसिद्धम् । तपसा धर्मानुष्ठानरूपेण अर्थव्ययात् धनागमस्य मायासाध्यत्वात् सत्ययोगे तदभावाच्च दारिद्र्यमित्यनुसंधेयम् । यत्र यस्यां वाचि धमार्थौ धर्मः अर्थश्च न स्यातां तद्वाक् सा वाणी कामं सम्यक् निरर्थिका निष्फला । शुनीटी.

अर्थे वा यदि वा धर्मे समर्थो देशकालवित् ।
निःसंशयो नरः पूज्यो नेष्टः संशयिता सदा ॥

अर्थे वा धर्मे वा समर्थः धर्मानुसारेण अर्थागमकौशलज्ञ इत्यर्थः, देशकालवित् स्थानसमयानुसारेण कार्यज्ञ इत्यर्थः, निःसंशयः संशयरहितश्च नरः पूज्यः । सदा संशयिता संशयानः नरः न इष्टः न संमतः । शुनीटी.

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
अतोऽर्थाय यतेतैव सर्वदा यत्नमास्थितः ।
अर्थाद्धर्मश्च कामश्च मोक्षश्चापि भवेन्नृणाम् ॥

पुरुषः अर्थस्य दासः, अर्थस्तु न कस्यचित् दासः । अतः अस्मात् कारणात् यत्नमास्थितः यत्नवान् सन् सर्वदा अर्थाय यतेत एव । अर्थात् धनात् नृणां धर्मश्च कामश्च मोक्षश्च भवेत् । शुनीटी.

सहायसंपत्

शस्त्रास्त्राभ्यां विना शौर्यं गार्हस्थ्यं तु स्त्रियं विना ।
ऐकमत्यं विना युद्धं कौशल्यं ग्राहकं विना ।
दुःखाय जायते नित्यं सुसहायं विना विपत् ॥

शौर्यं शस्त्रास्त्राभ्यां विना, गार्हस्थ्यं स्त्रियं भार्यां विना, युद्धं ऐकमत्यं योद्धॄणामेकतां विना, कौशल्यं नैपुण्यं ग्राहकं बोद्धारं विना, तथा विपत् सुसहायं विना नित्यं सततं दुःखाय जायते । शुनीटी.

न विद्यते तु विपदि सुसहायं सुहृत्समम् ॥

विपदि सुहृदा समः सुसहायः न विद्यते । शुनीटी.

अविभक्तधनान् मैत्र्या भृत्या भक्तधनान् सदा ।
मित्रं स्वसदृशैर्भोगैः सत्यैश्च परितोषयेत् ॥

मैत्र्या सौहृद्येन अविभक्तधनान् एकान्नवर्तिनः ज्ञातीनित्यर्थः, भृत्या मासिकादिवृत्तिविधानेन भक्तधनान् पृथक्स्थान् दायादान्, तथा स्वसदृशैः आत्मतुल्यैः भोगैः सत्यैश्च मित्रं परितोषयेत् । शुनीटी.

नृपसंबन्धिस्त्रीपुत्रसुहृद्भृत्यादिदस्युभिः ।
अतो विभागं दत्त्वैषां भुङ्क्ते यस्तु स्वकं धनम् (?) ॥

त्यक्त्वा तु दर्पकार्पण्यमानोद्वेगभयानि च ।
कुर्वीत नृपतिर्नित्यं स्वार्थसिद्ध्यै तु नान्यथा ।
विशेषभृतितो भृत्यं प्रेममानाधिकारतः ॥

नृपतिः दर्पं कार्पण्यं कृपणतां मानं उद्वेगं भयं च त्यक्त्वा स्वार्थसिद्ध्यै स्वकार्यसिद्धये विशेषभृतितः विशिष्टया भृत्या तथा प्रेम्णा मानेन अधिकारतः अधिकारप्रदानेन नित्यं सततं भृत्यं कुर्वीत नियुञ्ज्यात् । अन्यथा स्वार्थसिद्ध्यै इत्यर्थः, न । शुनीटी.

ब्राह्मणाग्निजलैः सर्वैर्धनवान् भक्ष्यते सदा ।
स सुखी मोदते नित्यमन्यथा दुःखमश्नुते ॥

धनवान् जनः सर्वैः ब्राह्मणाग्निजलैः सदा भक्ष्यते । ब्राह्मणेभ्यः दानात् अग्निसाध्ययज्ञानुष्ठानात् पथिकानां श्रान्तिनिवारणार्थं पानीयशालाविधानाच्च धनक्षयादिति भावः । सः ब्राह्मणाग्निजलसात्कृतधन इत्यर्थः, सुखी सन्

नित्यं मोदते आनन्दमनुभवति । अन्यथा दुःखमश्नुते लभते । शुनीटी.

**दर्पस्तु परह्रासेच्छा मानोऽहं सर्वतोऽधिकः ।**
**कार्पण्यं तु व्यये दैन्यं भयं स्वोच्छेदशङ्कनम् ।**
**मानसस्यानवस्थानमुद्वेगः परिकीर्तितः ॥**

परस्य ह्रासेच्छा खर्वीकरणाशयः दर्पः । अहं सर्वतः सर्वेभ्यः अधिकः इत्येवं बुद्धिः मानः । व्यये दैन्यं कातर्यं कार्पण्यम् । स्वस्य स्वात्मनः उच्छेदशङ्कनं उच्छेदाशङ्का भयम् । तथा मानसस्य चित्तस्य अनवस्थानं अस्थिरता चाञ्चल्यमित्यर्थः, उद्वेगः परिकीर्तितः । शुनीटी.

**लघोरप्यपमानस्तु महावैराय जायते ।**
**दानमानसत्यशौर्यमार्दवं सुसुहृत्करम् ॥**

लघोः क्षुद्रस्यापि जनस्य अपमानः मानहानिः महावैराय जायते प्रभवति । दानं मानः सत्यं शौर्यं मार्दवं च सुसुहृत्करं सौहार्दविधायकं भवति । शुनीटी.

**सर्वानापदि सदसि समाहूय बुधान् गुरून् ।**
**भ्रातॄन् बन्धूंश्च भृत्यांश्च ज्ञातीन्**
**सभ्यान् पृथक् पृथक् ।**
**यथार्हं पूज्य विनतः स्वाभीष्टं याचयेन्नृपः ॥**

नृपः विनतः विनीतः सन् आपदि सदसि सभायां सर्वान् बुधान् पण्डितान् गुरून् भ्रातॄन् बन्धून् भृत्यान् ज्ञातीन् तथा सभ्यान् सभानियुक्तान् पुरुषान् समाहूय पृथक् पृथक् यथार्हं पूज्य पूजयित्वा । पूज्येति ल्यप्प्रत्यय आर्षः । स्वस्य अभीष्टं याचयेत् प्रार्थयेत । शुनीटी.

**आपदं प्रतरिष्यामो यूयं युक्त्या वदिष्यथ ।**
**भवन्तो मम मित्राणि भवत्सु नास्ति भृत्यता ॥**

याच्ञाप्रकारमाह– आपदमिति । आपदं प्रतरिष्यामः यथेति शेषः, यूयं तथा युक्त्या वदिष्यथ उपदेक्ष्यथ । भवन्तः मम मित्राणि सुहृदः । भवत्सु भृत्यता किंकरता नास्ति । शुनीटी.

**न भवत्सदृशास्त्वन्ये सहायाः सन्ति मे ह्यतः ।**
**तृतीयांशं भृतेर्ग्राह्यमर्धं वा भोजनार्थकम् ।**
**दास्याम्यापत्समुत्तीर्णः शेषं प्रत्युपकारवित् ॥**

भवतां सदृशाः अन्ये मम सहाया न सन्ति हि नैव विद्यन्ते इत्यर्थः । अतः इदानीं भृतेः वृत्तिरूपस्य वेतनस्य तृतीयांशं वा अर्धं भोजनार्थकं अन्नार्थं ग्राह्यम्, भवद्भिरिति शेषः । आपत्सु बहुव्ययसंभवात् समग्रदाने अशक्तेरिति भावः । अतः आपदः समुत्तीर्णः अत एव प्रत्युपकारवित् कृतज्ञः सन्नित्यर्थः, शेषं अवशिष्टं दास्यामि । शुनीटी.

**[1]जडान्धबालद्रव्याणां दद्याद्वृद्धिं नृपः सदा ॥**

नृपः जडानां अन्धानां बालानां शिशूनां च यानि द्रव्याणि धनानि, राजनि न्यस्तानीति भावः, तेषां सदा वृद्धिं दद्यात् । शुनीटी.

कार्याकार्यविचारः

**[2]नोपदेशं विना सम्यक् प्रमाणैर्ज्ञायतेऽखिलम् ।**
**बाल्यं वाऽप्यथ तारुण्यं प्रारम्भितसमाप्तिदम् ॥**
**प्रायो बुद्धिमतो ज्ञेयं न वार्धक्यं कदाचन ।**
**आरम्भं तस्य कुर्याद्धि यत्समाप्तिं सुखं व्रजेत् ॥**

उपदेशं विना प्रमाणैः अखिलं समस्तं सम्यक् न ज्ञायते । बुद्धिमतः विदुषः बाल्यं वा तारुण्यं यौवनं प्रारम्भितसमाप्तिदं ज्ञेयम् । बाल्ये यौवने वा यत् प्रारभ्यते तत् समाप्यते इत्यर्थः । कदाचन वार्धक्यं न प्रारम्भितसमाप्तिदम् । वार्धक्ये यत् प्रारभ्यते तत् न समाप्यते इत्यर्थः । तस्मात् तस्य कार्यस्य आरम्भं कुर्यात् यत् सुखं अक्लेशं यथा तथा समाप्तिं व्रजेत् गच्छेत्, समाप्तं भवतीत्यर्थः । शुनीटी.

**नारम्भो बहुकार्याणामेकदैव सुखावहः ।**
**नारम्भितसमाप्तिं तु विना चान्यं समाचरेत् ॥**

एकदैव युगपदेव बहूनां कार्याणां आरम्भः न सुखावहः । तस्मात् आरम्भितस्य आरब्धस्य कार्यस्य

( १ ) शुनी. ५।६५.
( २ ) शुनी. ५।६९–७५.

समाप्तिं विना अन्यत् कार्यं न समाचरेत् आश्रयेत् । शुनीटी.

**संपाद्यते न पूर्वं हि नापरं लभ्यते यतः ।**
**कृती तत्कुरुते नित्यं यत्समाप्तिं व्रजेत्सुखम् ॥**

यतः युगपत् बहुकार्यारम्भात् पूर्वं प्रथमं आरब्धमित्यर्थः, हि अपि । अत्र हिशब्दोऽप्यर्थः । न संपाद्यते न निष्पाद्यते । अपरं द्वितीयं च न लभ्यते न समाप्यते । तत् तस्मात् कृती कार्यकुशलः जनः सततं तत् कुर्यात् यत् सुखं यथा तथा समाप्तिं व्रजेत् । शुनीटी.

**यदि सिध्यति येनार्थः कलहेन वरस्तु सः ।**
**अन्यथाऽऽयुर्धनसुहृद्यशोधर्महरः सदा ॥**

येन कलहेन यदि अर्थः सिध्यति सः कलहः वरः श्रेष्ठः । अन्यथा अर्थासिद्धौ इत्यर्थः, आयुषः धनस्य सुहृदः धर्मस्य च हरः नाशकः भवति । शुनीटी.

**ईर्ष्या लोभो मदः प्रीतिः क्रोधो**
**भीतिश्च साहसम् ।**
**प्रवृत्तिच्छिद्रहेतूनि कार्ये सप्त बुधा जगुः ॥**

ईर्ष्या विद्वेषः, लोभः लालसा, मदः गर्वः, प्रीतिः प्रणयः, क्रोधः कोपः, भीतिः भयम्, साहसं निर्भीकता च एतानि सप्त कार्ये प्रवृत्तेः छिद्रस्य दोषस्य च हेतूनि सर्वशास्त्रदर्शिनः बुधाः पण्डिताः जगुः गायन्ति स्म । शुनीटी.

**यथाऽच्छिद्रं भवेत्कार्यं तथैव हि समाचरेत् ।**
**अविसंवादि विद्वद्भिः कालेऽतीतेऽपि**
**चाऽऽपदि ॥**

यथा कार्यं अच्छिद्रं छिद्ररहितं निर्दोषमित्यर्थः, भवेत्, विद्वद्भिः अविसंवादि विसंवादरहितं अविरुद्धमित्यर्थः, तथैव कार्यं कालेऽतीतेऽपि आपदि अपि समाचरेत् कुर्यात् । शुनीटी.

धनिककृषीवलोद्धारः

[1]**सत्याचारास्तु धनिका व्यवहारे हता यदि ।**
**राजा समुद्धरेत्तांस्तु तथाऽन्यांश्च कृषीवलान् ॥**

सत्याचाराः सत्यपथावलम्बिनः धनिकाः यदि व्यवहारे वाणिज्यादौ हताः विनष्टाः क्षतिग्रस्ता इत्यर्थः, भवेयुः तदा राजा तान् तथा अन्यान् तथाविधान् कृषीवलान् कृषिजीविनश्च समुद्धरेत् । शुनीटी.

## योगयात्रा

राज्ञः पञ्च यज्ञाः

[2]**दैवज्ञमन्त्रिसुहृदाप्तवचांसि राजा**
**यो नाऽऽद्रियेत मतिचेष्टितदुष्टबुद्धिः ।**
**सोऽग्रेसरेण रहितोऽन्ध इवाचिरेण**
**हास्यत्वमेति पतितो विषये रिपूणाम् ॥**

[3]**अनाश्रितः ख्यातगुणः परोऽपि**
**शूरोऽथवा साधुजनप्रशस्तः ।**
**संपूजनीयो जनसंग्रहार्थं**
**ममेति देशोपगतो विचिन्त्य ॥**

[4]**दुष्टस्य दण्डः सुजनस्य पूजा**
**न्यायेन कोशस्य च संप्रवृद्धिः ।**
**अपक्षपातोऽर्थिषु राष्ट्ररक्षा**
**पञ्चैव यज्ञाः कथिता नृपाणाम् ॥**

[5]**आचारस्थः सागरान्तां धरित्रीं**
**भुङ्क्ते दीर्घं कालमुत्खातशत्रुः ।**
**यत्राऽऽचारस्तत्र धर्मस्य वृद्धिः**
**धर्माद्भोगान् देहभेदेऽपि भुङ्क्ते ॥**

## नीतिवाक्यामृतम्

लोभप्रमादविश्वासाः वधवञ्चनाकारणानि

[6]**लोभप्रमादविश्वासैर्बृहस्पतिरपि पुरुषो वध्यते वञ्चयते ( ? ऽच्यते ) वा ॥**

---

( १ ) शुनी. ५।८८.
( २ ) योया. २।९.
( ३ ) योया. २।१८.
( ४ ) योया. २।३३; नीम. ३८.
( ५ ) योया. २।३६. ( ६ ) नीवा. २६।१–१८.

बलवता सह वर्तनरीतिः

**बलवताऽधिष्ठितस्य विदेशगमनं तदनुप्रवेशो वा श्रेयानन्यथा नास्ति क्षेमोपायः ॥**

अविरोधेन यत्कर्तव्यं तदाह— बलवताऽधिष्ठितस्येति । बलवता अधिष्ठितस्य गृहीतस्य विदेशवासः परदेशगमनं श्रेयः श्रेयस्करं भवति । अथवा तदनुप्रवेशः तेन सह संधानं श्रेयस्करमिति । तथा च शुक्रः— 'बलवान् स्याद्यदारांसस्तदा देशं परित्यजेत् । तेनैव सह संधिं वा कुर्यान्न स्थीयतेऽन्यथा ॥' । नीवाटी.

**विदेशवासोपहतस्य पुरुषकारः को नाम येनाविज्ञातस्वरूपः पुमान् स तस्य महानपि लघुरेव ॥**

अथ परदेशस्य दोषमाह— विदेशवासोपहतस्येति । विदेशवासोपहतस्य दूषितस्य पुरुषस्य को नामाहो तदिह पुरुषकारः ? कस्मात् ? येन पुरुषेण न ज्ञायते स महानपि तस्याधमस्यापि लघुर्भवति, नारातमाप्नोतीत्यर्थः (?) । तथा चात्रिः— 'महानपि विदेशस्थः स परैः परिभूयते । अज्ञानमानैस्तद्देशमाहात्म्यं तस्य पूर्वकम् ॥' । नीवाटी.

**अलब्धप्रतिष्ठितस्य निजान्वयेनाहंकारः कस्य न लाघवं करोति ॥**

अथालब्धप्रतिष्ठितस्य यद्भवति तदाह— अलब्धेति । नाहंकारं करोति, अहं उत्तम एवं एवं संजातः वदति, पापाचारो भवति, स इत्थंभूतोऽहंकारोऽयः कं न विद्वांसं परिभवति ? अपि तु समस्तं जनम् । तथा च भारद्वाजः— 'जलप्रमाणं कुमुदस्य नालं कुलप्रमाणं पुरुषस्य शीलम् । कुशीलवान् शंसति चेत्स्ववंशो अयेवमन्यं(?) स करोति मन्दः ॥' । नीवाटी.

**आर्तः सर्वोऽपि भवति धर्मबुद्धिः ॥**

अथाऽऽर्तस्य स्वरूपमाह— आर्त इति । आर्तः व्याधिग्रस्तः सर्वोऽपि जनो धर्मबुद्धिर्भवति, न च नीरोगः । तथा च शौनकः— 'व्याधिग्रस्तस्य बुद्धिः स्याद्धर्मस्योपरि सर्वतः । भयेन धर्मराजस्य न स्वभावात्कथंचन ॥' । नीवाटी.

**स नीरोगो यः स्वयं धर्माय समीहते ॥**

सः पुरुषः नीरोगः कथ्यते यः स्वयमप्रेरितोऽपि केनापि समीहते वाञ्छापरो भवति । कस्मै ? धर्माय । तथा च हारीतः— 'नीरोगः स परिज्ञेयो यः स्वयं धर्मवाञ्छकः । व्याधिग्रस्तोऽपि पापात्मा नीरोगोऽपि स रोगवान् ॥' । नीवाटी.

**व्याधिग्रस्तस्य ऋते धैर्यान्न परमौषधमस्ति ॥**

अथ व्याधिग्रस्तस्य यदौषधं भवति तदाह— व्याधिग्रस्तस्येति । नास्ति न विद्यते । किं तत् ? औषधम् । किंविशिष्टम् ? परमं( ? परं ) उत्कृष्टम् । ऋते मुक्त्वा । कस्मात् ? धैर्यात् दृढत्वात् । कस्य ? व्याधिग्रस्तस्य । व्याधिग्रस्तो यः पुरुषो भवति तस्य धैर्यमौषधम्, नान्यदेव । तथा च धन्वन्तरिः— 'व्याधिग्रस्तस्य यद्धैर्यं तदेव परमौषधम् । नरस्य धैर्यहीनस्य किमौषधशतैरपि ॥' । नीवाटी.

**स महाभागो यस्य न दुरपवादोपहतं जन्म ॥**

अथ महाभागः पुरुषो यथोच्यते तदाह— स इति । सः पुरुषः अत्र जगति महाभाग उच्यते । किं तस्य ? दुरपवादोपहतं कुत्सितदोषोपहतं जन्म न भवति । तथा च गर्गः— 'आजन्ममरणान्तं च वाच्यं यस्य न जायते । सुसूक्ष्मं स महाभागो विज्ञेयः क्षितिमण्डले ॥' । नीवाटी.

**पराधीनेष्वर्थेषु स्वोत्कर्षसंभावनं मन्दमतीनाम् ॥**

अथ मन्दमतीनां यद्भवति तदाह— परेति । मन्दमतीनां दुष्टबुद्धीनां पुरुषाणां स्वोत्कर्षसंभावनं भवति निजाह्लादोत्कर्षो भवति । केषु ? अर्थेषु प्रयोजनेषु । किंविशिष्टेषु ? पराधीनेषु । यो मूर्खो भवति स आत्मीयानि तानि मन्यमानस्तुष्टिं याति । तथा च कौशिकः— 'कार्येषु सिध्यमानेषु परस्य वशगेषु च । आत्मीयेष्विव तेष्वेव तुष्टिं याति स मन्दधीः ॥' । नीवाटी.

**न भयेषु विषादः प्रतीकारः किंतु धैर्यावलम्बनम् ॥**

अथ भयेषु यथा प्रतीकारो भवति तदाह— नेति । न भयेषु भयस्थानेषु प्रतीकारः उपकारकः भवति । कोऽसौ ?

विषादः हृदयक्षोभः । तर्हि उपकारकः को भवति ? धैर्यावलम्बनं भवति धैर्यावस्थितिः । तथा च भृगुः— 'भयस्थाने विषादं यः कुरुते स विनश्यति । तस्य तज्जयदं ज्ञेयं यच्च धैर्यावलम्बनम् ॥' । नीवाटी.

**स किं धन्वी तपस्वी वा यो रणे मरणे शरसंधाने मनःसमाधाने च मुह्यति ॥**

अथ धानुष्केण तपस्विना च यत्कर्तव्यं तदाह— स इति । स किं धन्वी धानुष्कः ? यस्य किम् ? यस्य मनो मुह्यति । कस्मिन् ? शरसंधाने शरयोजने । कस्मिन् काले ? रणे सङ्ग्रामे युद्धकाले । यस्य शरसंधाने मनो मुह्यति स धानुष्को न भवति, लगुडायुध इत्यर्थः । तथा यस्य तपस्विनो मनो मुह्यति । कस्मिन् ? मनःसमाधाने आत्मावलोकने । कस्मिन् ? मरणे प्राणावसाने । स तपस्वी योगी न भवतीत्यर्थः । तथा च नारदः— 'व्यर्था यान्ति शरा यस्य युद्धे स स्यान्न चापधृक् । योगिनो ह्यन्तकाले न स्मृतिः स न च योगवान् ॥' । नीवाटी.

**कृते प्रतिकृतमकुर्वतो नैहिकफलमस्ति नाऽऽमुत्रिकं च ॥**

अथ यस्य पुरुषस्यैहिकं फलं भवति तदाह— कृत इति । नास्ति न विद्यते । किं तत् ? फलम् । किं विशिष्टम् ? ऐहिकं इहजन्मसंभवम्, आमुत्रिकं पारलौकिकं च । कस्य ? पुरुषस्य । किं कृतवतः ? अकुर्वतः । किम् ( कृत् ? ) कृते प्रतिकृतम् । यः कृते शुभे वस्तुनि केनचिच्छुभं न करोति, पापे कृते तस्यानिष्टं न करोति । तथा च हारीतः— 'कृते प्रतिकृतं नैव शुभं वा यदि वाऽशुभम् । यः करोति च मूढात्मा तस्य लोकद्वयं न हि ॥' । नीवाटी.

**शत्रुणाऽपि सूक्तमुक्तं न दूषयितव्यम् ॥**

अथ शत्रुणाऽपि सूक्ते उक्ते यत्कर्तव्यं तदाह—शत्रुणाऽपीति । न दूषयितव्यम् । किं तत् ? सूक्तं शुभवचनम् । कथंभूतम् ? उक्तम् । केन ? शत्रुणाऽपि वैरिणाऽपि । तथा च नारदः— 'शत्रुणाऽपि हि यत्प्रोक्तं सालंकारं सुभाषितम् । न तद्दोषेण संयोज्यं ग्राह्यं बुद्धिमता सदा ॥' । नीवाटी.

**कलहजननमप्रीत्युत्पादनं च दुर्जनानां धर्मं ( न ? ) सज्जनानाम् ॥**

अथ दुर्जनानां सज्जनानां यादृग्वचनं तदाह— कलहजननमिति । दुर्जनानां यद्वचनं तत् किंविशिष्टम् ? कलहजननं युद्धं करोति, अप्रीत्युत्पादनं च अस्नेहजननं च ( असज्जनानाम् ? ) । यत्पुनः सज्जनानां वचनं तत् धर्मं श्रेयस्करमित्यर्थः । तथा च भारविः— 'खलो वदति तद्येन कलहः संप्रजायते । सज्जनो धर्ममाचष्टे यच्छ्रोतव्यं क्रिया तथा ॥' । नीवाटी.

असंतोषः श्रियो मूलम्

**श्रीर्न तस्याभिमुखी यो लब्धार्थमात्रेण संतुष्टः ॥**

अथ यादृक्पुरुषस्य लक्ष्मीः संमुखी न भवति तत्स्वरूपमाह— श्रीरिति । तस्य पुरुषस्य लक्ष्मीः कदाचिदपि संमुखी न भवति । यो भवति । किंविशिष्टः ? संतुष्टः । केन ? अर्थेन द्रव्येण । किंविशिष्टेन ? लब्धार्थमात्रेणापि स्तोकेनापीत्यर्थः । तथा च भागुरिः— 'अल्पेनापि प्रलब्धेन यो द्रव्येण प्रतुष्यति । पराङ्मुखी भवेत्तस्य लक्ष्मीर्नैवात्र संशयः ॥' । नीवाटी.

वैरप्रशमनम्

**तस्य कुतो वंशवृद्धिर्यो न प्रशमयति वैरानुबन्धम् ॥**

अथ यस्य वंशवृद्धिर्न भवति तमाह— तस्येति । तस्य पुरुषस्य कुतो वंशवृद्धिः कुतः संतानवृद्धिः ? यो न प्रशमयति नोपशमं नयति । कम् ? वैरानुबन्धम् ( परमवृत्ति वैरानुबन्धम् ? ) । तस्मात्पुरुषेण सर्वोपायैर्वैरं नाशं नेतव्यम् । तथा च शुक्रः— 'सामादिभिरुपायैर्यो वैरं नैव प्रशामयेत् । बलवानपि तद्वंशो नाशं याति शनैः शनैः ॥' । नीवाटी.

अभयदानम्

**भीतेष्वभयदानात्परं न दानमस्ति ॥**

अथ यदुत्कृष्टं दानं सर्वेषां दानानां मध्ये भवति तदाह— भीतेष्विति । नास्ति न विद्यते । किं तत् ?

परं उत्कृष्टं दानं यद्दीयते । केषु ? भीतेषु भयत्रस्तेषु । ( कस्मात् ? अभयदानात् । ) अभयदानं रक्षासंज्ञमित्यर्थः । तथा च जैमिनिः– ' भयभीतेषु यद्दानं तद्दानं परमं मतम् । रक्षात्मकं किमन्यैश्च दानैर्गजरथादिभिः ॥ ' । नीवाटी.

उत्साहमहिमा

**स्वस्यासंपत्तौ न चिन्ता किंचित्काङ्क्षितमर्थं दुग्धे किंतूत्साहः ॥**

अथोत्साहवतः पुरुषस्य यद्भवति तदाह– स्वस्येति । दुग्धे जनयति । कोऽसौ ? उत्साहः । कम् ? अर्थं द्रव्यम् । किंविशिष्टम् ? काङ्क्षितं वाञ्छितम् । पुनरपि किंविशिष्टम् ? किंचित् अपूर्वम् । एवं ज्ञात्वा चिन्ता न कार्या असंपत्तौ । कस्य ? ( स्वस्य ) वित्तस्य । एतज्ज्ञात्वा चिन्ता न कार्या, केवलमुत्साहः समाश्रयणीयः, सोऽपि सर्वं जनयति । तथा च शुक्रः– ' उत्साहिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति । दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ' । नीवाटी.

मूलधनं वर्धनीयम्

**[१]स सदैव दुःखितो यो मूलधनमसंवर्धयन्ननुभवति ॥**

अथ सदा दुःखितः पुरुषो यथा भवति तदाह– स इति । सः पुरुषः सदैव दुःखितो भवति । यः किं करोति ? अनुभवति व्ययं करोति । किं कुर्वन् ? असंवर्धयन् । किं तत् ? मूलधनं पितृपैतामहं नाम । ( कथमसंवर्धयन् ? केवलम् ? ) । केवलं भक्षयन् न वृद्धिं नयति, सदा दुःखितो दरिद्रो भवतीत्यर्थः । तथा च गौतमः– ' न वृद्धिं यो नयेद्वित्तं पितृपैतामहं कुधीः । केवलं भक्षयत्येव स सदा दुःखितो भवेत् ॥ ' । नीवाटी.

मूर्खादिभिः संगतिर्वर्ज्या

**मूर्खदुर्जनचाण्डालपतितैः सह संगतिं न कुर्यात् ॥**

अथ मूर्खदुर्जनपतितैः सह सङ्गेन यद्भवति तदाह– मूर्खेति । न कुर्यात् विदधीत । काम् ? संगतिं मैत्रीम् । कथम् ? सह सार्धम् । कैः ? मूर्खदुर्जनपतितचाण्डालैः । तथा च– ' मूर्खदुर्जनचाण्डालैः संगतिं कुरुतेऽत्र यः । स्वप्नेऽपि न सुखं तस्य कथंचिदपि जायते ॥ ' । नीवाटी.

**किं तेन तुष्टेन यस्य हरिद्राराग इव चित्तानुरागः ॥**

अथ क्षणिकचित्तानुरागलक्षणमाह– किमिति । किं तेन पुरुषेण तुष्टिं गतेन ? यस्य किम् ? यस्य चित्तानुरागो हरिद्राराग इव क्षणमात्रम् , सततं न भवति । तथा च जैमिनिः– 'आजन्ममरणान्ते यः स्नेहः स स्नेह उच्यते । साधूनां यः खलानां च हरिद्रारागसंनिभः ॥ ' । नीवाटी.

युक्तिमहिमा

**स्वात्मानमविज्ञाय पराक्रमः कस्य न परिभवं करोति ॥**

अथाऽऽत्मानमजानन् यः पराक्रमं करोति तमाह– स्वात्मानमिति । कस्य पराभवं न करोति ? अपि तु सर्वस्यापि जनस्य । कोऽसौ ? विक्रमः पराक्रमः । किं कृत्वा ? अविज्ञाय । किं तत् ? आत्मानम् । तस्मादात्मानं विज्ञाय शत्रोरुपरि विक्रमः कार्यः । तथा च वल्लभदेवः– ' यः परं केवलो याति प्रोन्नतं मदमाश्रितः । विमदः स निवर्तेत शीर्णदन्तो गजो यथा ॥ ' । नीवाटी.

**नाऽऽक्रान्तिः पराभियोगस्योत्तरं किंतु युक्तेरुपन्यासः ॥**

पराभियोगस्य यदुत्तरं भवति तदाह– नाऽऽक्रान्तिरिति । न उत्तरं न्यक्कारम् । कोऽसौ ? आक्रान्तिः आक्रमणम् । कस्य ? पराभियोगस्य शत्रुनिग्रहस्य । किं तु तर्हि ? युक्तेरुपन्यासः युक्तिकरणं येन तस्य निग्रहो

---

( १ ) नीवा. २६।२०–३६.

भवतीति । तथा च गर्गः— 'नाऽऽक्रान्त्या गृह्यते शत्रुर्यद्यपि स्यात्सुदुर्लभः( ? बलः ) । युक्तिद्वारेण संग्राह्यो यद्यपि स्याद्बलोत्कटः ॥' । निवाटी.

कोपसंयमः

**राज्ञोऽस्थाने कुपितस्य कुतः परिजनः ॥**

गतार्थमेतत् । नीवाटी.

शोकादिषु विवेकः, विविधानि राजकर्तव्यानि

**न मृतेषु रोदितव्यमश्रुपातसमा हि किल पतन्ति तेषां हृदयेष्वङ्गाराः ॥**

अथ मृतेषु विषयेषु यत्कर्तव्यं तदाह— नेति । मृतेषु पुरुषेषु पाश्चात्यैर्न रोदितव्यम्, यतो निपतन्ति तेषां मृतानां हृदयेष्वङ्गाराः । किंविशिष्टाः ? अश्रुपातसमाः अश्रुपाततुल्याः । किलेति कोमलामन्त्रणे । एतज्ज्ञात्वा मृतेषु विषये न रोदितव्यम्, यदि स्नेहो भवति तदूर्ध्वदैहिकद्वारेण रोदितव्यमिति । तथा च गर्गः— 'श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतो यशः ( ? ऽवशः) । तस्मान्न रोदितव्यं स्यात् क्रिया कार्या प्रयत्नतः ॥' । नीवाटी.

**अतीते च वस्तुनि शोकः श्रेयानेव यद्यस्ति तत्समागमः ॥**

अतीते च वस्तुनि यथा शोकः श्रेयस्करो भवति तदाह— अतीत इति । अतीते अतिक्रान्ते वस्तुनि पदार्थे योऽसौ शोकः क्रियते स श्रेयान् भवति । क्रियतास्ति दोषः ( ? ) । यदि किं स्यात् ? यदि तत्समागमो भवति शोकेन कृतेन तस्य वस्तुनः । अन्यथा दोष एव । तथा च भारद्वाजः— 'मृतं वा यदि वा नष्टं यदि शोकेन लभ्यते । तत्कार्यो नान्यथा कार्यः केवलं कायशोषकृत् ॥' । नीवाटी.

**शोकमात्मनि चिरमनुवासयंस्त्रिवर्गमनुशोषयति ॥**

अनुशोषयति उद्वासयति । किम् ? त्रिवर्गं धर्मार्थकामलक्षणम् । किं कुर्वन् ? अनुवासयन् धारयन् । क ? आत्मनि निजशरीरे । कथं धारयन् ? चिरं प्रभूतकालम् । कम् ? शोकम् । शोकमात्मनि धारयंस्त्रिवर्गं नाशयतीति । तथा च कौशिकः— 'यः शोकं धारयेद्देहे त्रिवर्गं नाशयेद्धि सः । क्रियमाणं चिरं कालं तस्मात्तं दूरतस्त्यजेत् ॥' । नीवाटी.

**स किंपुरुषो योऽकिंचनः सन् करोति विषयाभिलाषम् ॥**

अथ कापुरुषस्य स्वरूपमाह— स इति । स किंपुरुषो (न ?) भवति पशुरेव । किंविशिष्टः ? अकिंचनः दरिद्रः सन् विषयाभिलाषं इन्द्रियसुखं अनुभवितुमिच्छति । तस्मात्पुरुषेण धनोपार्जनमादौ कार्यम्, ततश्च विषयसौख्यमनुभवनीयम् । तथा च नारदः— 'दरिद्रो यो भवेन्मर्त्यो हीनो विषयसेवने । तस्य जन्म भवेद्व्यर्थं प्राहेदं नारदः स्वयम् ॥' । नीवाटी.

**अपूर्वेषु प्रियपूर्वं संभाषणं स्वर्गच्युतानां लिङ्गम् ॥**

अथ स्वर्गायातस्य पुरुषस्य चिह्नमाह— अपूर्वेष्विति । स्वर्गविमुक्तानां मर्त्यलोकमुपागतानां पुरुषाणां लिङ्गं चिह्नं ज्ञायते । कथम् ? अपूर्वेषु लोकेषु दृष्टेषु प्रियपूर्वं मधुरं प्रथमं संभाषणं जल्पनम् । यः पुरुषोऽपूर्वं जनं दृष्ट्वा प्रियालापैरालपयत्यसौ स्वर्गादवतीर्णो ज्ञेयः । तथा च गुरुः— 'अपूर्वमपि यो दृष्ट्वा संभाषयति वल्गु च । स ज्ञेयः पुरुषस्तज्ज्ञैर्यदोषो त्यागतो ( ? ) दिवः ॥' । नीवाटी.

**न ते मृता येषामिहास्ति शाश्वती कीर्तिः ॥**

अथ मृता अपि पुरुषा ये जीवन्त इव ज्ञायन्ते तानुद्दिश्याऽऽह— नेति । ते पुरुषाः जीवन्तो ज्ञेया मृता अपि, येषामस्ति कीर्तिः । किंविशिष्टा ? शाश्वती अविनाशिनी प्रासाददेवकुलादिलक्षणा । तथा च नारदः— 'मृता अपि परिज्ञेया जीवन्तस्तेऽत्र भूतले । येषां संदिश्यते कीर्तिस्तडागाकरपूर्विका ॥' । नीवाटी.

**स केवलं भूभाराय जातो येन न यशोभिर्धवलितानि भुवनानि ॥**

अथ भूभारस्वरूपभूतस्य लक्षणमाह— स इति । सः पुरुषः केवलं भूभाराय पृथिवीभाराय जातः । यस्य किम् ? यस्य न धवलितानि न शुक्लीकृतानि । कानि ? भुवनानि । कैः ? यशोभिः । तस्य जन्म पृथिवीभाराय केवलमिति । तथा च गौतमः— 'भुवनानि

यशोभिर्नो यस्य शुक्लीकृतानि च । भूमिभाराय संजातः स पुमानिह केवलम् ॥ ' । नीवाटी.

**परोपकारो योगिनां महान् भवति श्रेयोबन्ध इति ॥**

अथ योगिनां यः परोपकारो भवति तत्स्वरूपमाह– परोपकार इति । श्रेयोबन्धो भवति कल्याणबन्धो भवति । किंविशिष्टः ? महान् । कोऽसौ ? परोपकारः । केषाम् ? योगिनां महापुरुषाणाम् । तथा च जैमिनिः– ' उपकारो भवेद्योऽत्र पुरुषाणां महात्मनाम् । कल्याणाय प्रभूताय स तेषां जायते ध्रुवम् ॥ ' । नीवाटी.

**का नाम शरणागतानां परीक्षा ॥***

अथ शरणागतानां परीक्षामाह– का नामेति । गतार्थमेतत् । नीवाटी.

**अभिभवनमन्त्रेण परोपकारो महापातकिनां न महासत्त्वानाम् ॥**

अथ पातकिनां महासत्त्वानां च स्वरूपमाह– अभिभवनमन्त्रेणेति । अभिभवनमन्त्रेण अभिलाषमन्त्रेण परोपकारः । केषाम् ? महापातकिनाम् , न महासत्त्वानाम् । ये महासत्त्वाः तेषामुपकारोऽभिलाषरहितः । तथा च शुक्रः– ' महापातकयुक्ताः स्युस्ते निर्यान्ति वरं बलान् । अभिभवनमन्त्रेण न सद्बाढं कथंचन ॥ ' । नीवाटी.

**तस्य भूपतेः कुतोऽभ्युदयो जयो वा यस्य द्विषत्सभासु नास्ति गुणग्रहणप्रागल्भ्यम् ॥**

अथ यस्य भूपतेः शत्रुसभासु गुणग्रहणं न क्रियते तस्य यद्भवति तदाह– तस्येति । तस्य भूपतेः कुतोऽभ्युदयः ? कथं वाऽपि जयः स्यात् ? यस्य द्विषत्सभासु नास्ति न विद्यते । किं तत् ? गुणग्रहणप्रागल्भ्यं गुणग्रहणप्राचुर्यम् । तथा च शुक्रः– ' कथं स्याद्विजयस्तस्य तथैवाभ्युदयः पुनः । भूपतेर्यस्य नो कीर्तिः कीर्त्यतेऽरिसभासु च ॥ ' । नीवाटी.

* अतः परं शरणागतपरीक्षाविषयकं सूत्रं परिभ्रष्टमिति भाति ।



'प्रतिपाद्यानुरूपं वचनमुदाहर्तव्यम् ॥
ऐश्वर्यानुरूपः प्रसादो विधेयः ॥
स पुमान् सुखी यस्यास्ति संतोषः ॥
रजस्वलाभिगामी चाण्डालादप्यधमः ॥
सलज्जं निर्लज्जं न कुर्यात् ॥
स पुमान् सवस्त्रोऽपि नग्न एव यस्य नास्ति सच्चरित्रमावरणम् ॥
स नग्नोऽप्यनग्न एव यो भूषितः सच्चरित्रेण ॥
सर्वत्र संशयानेषु नास्ति कार्यसिद्धिः ॥
न क्षीरघृताभ्यां परं भोजनमस्ति ॥
परोपघातेन वृत्तिरभव्यानाम् ॥
वरमुपवासो न पराधीनं भोजनम् ॥
स देशोऽनुसर्तव्यो यत्र नास्ति वर्णसंकरः ॥
स जात्यन्धो यः परलोकं न पश्यति ॥
व्रतं विद्या सत्यमानृशंस्यमलौल्यता च ब्राह्मण्यं न पुनर्जातिमात्रम् ॥
निःस्पृहाणां का नाम परापेक्षा ॥
कं पुरुषमाशा न क्लेशयति ॥
संयमी गृहाश्रमी वा यस्याविद्यातृष्णाभ्यामनुपहतं चेतः ॥
शीलमलंकारः पुरुषाणां न देहखेदावहो बहिराकल्पः ॥
कस्य नाम नृपतिर्मित्रम् ॥
अप्रियकर्तुर्न प्रियकरणात्परममाचरणम् ॥
अप्रयच्छन्नर्थिनो न परुषं ब्रूयात् ॥
स स्वामी मरुभूमिर्यत्रार्थिनो न भवन्ति प्राप्तकामाः ॥
प्रजापालनं हि राज्ञो यज्ञो न पुनर्भूतानामालम्भः ॥
प्रभूतमपि नानपराधसत्त्वव्यापत्तये नृपाणां बलं धनुर्वा किंतु शरणागतरक्षणाय ॥

( १ ) नीवा. २६।४३, ४५–६७.

लेखमहिमा

[1]न कस्यापि लेखमवमन्येत, लेखप्रधाना हि राजानस्तन्मूलत्वात्संधिविग्रहयोः सकलस्य जगद्व्यापारस्य च ॥

अथ लेखस्य सामान्यदत्तस्य विषये यत्कर्तव्यं तदाह–नेति । कस्यापि सामान्यस्यापि भूभुजा लेखो नावमन्तव्यः नावज्ञया द्रष्टव्यः । कस्मात् कारणात् ? लेखप्रधाना हि राजानः । हि यस्मात् कारणात् लेखप्रधाना राजानो भवन्ति । सामान्योऽपि कश्चित् तत् लिखति येन शत्रुचेष्टितं विज्ञायत इति । तथा तन्मूलत्वात् लेखमूलत्वात् संधिविग्रहयोः सकलस्य जगद्व्यापारस्य । यत्र लेखप्रचारो भवति तत्र संधिविग्रहयोर्निश्चयो भवति तथा जगद्व्यापारस्य स्थितिर्जायते । तस्मात् कारणात् कस्यापि लेखो नावमन्तव्यः । तथा च गुरुः– 'लेखमुख्यो महीपालो लेखमुख्यं च चेष्टितम् । दूरस्थस्यापि लेखो हि लेखोऽतो नावमन्यते ॥' ।

नीवाटी.

## मानसोल्लासः

बान्धवसंमानः

[2]पितृपक्षसमुद्भूता मातृपक्षसमुद्भवाः ।
आत्मसंबन्धिनो ये च बान्धवास्ते प्रकीर्तिताः ॥

( १ ) नीवा. ३२।२९.
( २ ) मासो. १।३०१-३०२.

बन्धूनां मधुरं वाच्यं यथायोग्यं सहासनम् ।
संविभागश्च कर्तव्यः सुवर्णाम्बरभूषणैः ॥

शरणागतरक्षणम्

[1]व्याघ्रसिंहगजैश्चौरैः शत्रुभिश्चापि विद्रुतः ।
भयाच्छरणमायातः शरणागत उच्यते ॥
रक्षेच्छरणमायातं प्राणैरपि धनैरपि ।
स यशो महदाप्नोति जनः सर्वैः प्रपूज्यते ॥
क्रतवो विधिसंयुक्ता भीतसत्त्वस्य रक्षणम् ।
तुलया तोलितं तत्र प्राणत्राणं विशिष्यते ॥

आत्मनः स्वास्थ्यस्य रक्षा

[2]भाव्यं पथ्याशिना नित्यं नीरुजो जायते ततः ।
व्याधिभिर्वर्जितो राजा राजकार्यक्षमो भवेत् ॥
वलिभिः पलितैर्युक्तो रूपेण रहितो भवेत् ।
स्त्रीजनैर्भृत्यवर्गैश्च भूपतिश्चावमन्यते ॥
तस्माद्रसायनान् योगान् यत्नात्सेवेत पार्थिवः ।
दृढगात्रो भवेत्तेन वलीपलितवर्जितः ॥
जीवेच्च सुचिरं कालं राजा रोगविवर्जितः ॥

## अनिर्दिष्टकर्तृकवचनम्

सद्यः कार्यनिर्वर्तनम

[3]यथा चोत्पादितं कार्यं संपश्येन्नोऽभितापयेत् ।
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वाऽपि जायते ॥

( १ ) मासो. १।३०५-३०७.
( २ ) मासो. २।१०–१३.
( ३ ) मेधा. ७।२२३.